# ॥ प्रस्तावना ॥

## श्री व्यासोक्ताष्टादश पुराणान्तर्गत श्री स्कान्दमहापुराणे शंकरसंहितायां शिवरहस्यखण्डः ।



कैलासवासी श्रीपरमेश्वरः ज्ञानदातेति — ज्ञानमिच्छेन्महेश्वरादिति — शास्त्रमुपदिशति । ज्ञानादेवतु कैवल्यमिति च । तादृशज्ञानदातुः पार्वतीकान्तस्य महिमातावदस्मिन्ग्रन्थे विशेषेणानुवर्ण्यते । तदात्मजस्य ज्ञानरूपस्य स्कन्दस्य अवतारादि चरित्रं विभूतिमहिमा स्कन्देन क्षेत्राटनं तारकादि शूरपद्मान्तानां असुराणां वधः नित्यकल्याणप्रद वल्लीदेवसेना परिणयः एकादश कोटि रुद्रैः श्रीमध्यार्जुन क्षेत्रे श्रीमहालिङ्गाराधनं, श्रीदाक्षायणी तपश्चरणं, शिवदर्शनं, दक्षेण शिव निन्दा, दधीचि महर्षीणा शिवमहिमानुवर्णनं, श्रीशिव कारुण्य वर्णनं, विभूतिरुद्राक्ष महिम प्रतिपादनं, पञ्चाक्षर महिमा, महाप्रदोष व्रतं, शिवालय जीर्णोद्धारणं, शिवलिंगप्रतिष्ठा, शिवपूजा, भैरव व्रतं, सोमवार व्रतं, शिवनाम वैभवः, शिवार्चन, पुष्पवाटिकानिर्माणादि बहूनि आश्चर्यकराणि महापापनिवर्तकानि महामंगलप्रदानि अन्यानि बहूनि चरित्राणि अस्मिन् शिवरहस्य खण्डे सन्ति ॥

कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च ।
भक्तश्च यः कार्तिकेये काकुत्स्थभुवि मानवः ॥
आयुष्मान् पुत्रपौत्रैश्च स्कन्द सालोक्यतां व्रजेत् ॥

इति श्रीमद्रामायणे अभिहितं ॥ किञ्च जातकवशात्, अंगारकः दोषयुक्तश्चेत् रक्तदोषः ऋणबाधादिकं ज्ञातिकलहः द्रव्यनाशश्च भवेदिति ज्योतिश्शास्त्रे अभिहितः । तद्वत्, सूर्य बृहस्पत्यादि ग्रहाः दोषयुक्ताः यदिस्युः तदा शिवापचारः मान्द्य रोगः उदररोगः पुत्रोत्पत्ति प्रतिबन्धकादयः बहवो दोषाभवेयुः इत्यप्यभिहितः ॥ एतद् पुराण पठनेन, तादृशदोषाः सर्वेपि विनश्येरन् मंगलप्राप्तिश्च ध्रुवं भवेदेव ॥ तस्मादास्तिकवराः सर्वेपि ग्रन्थमिमं पठित्वा सर्वां आशिषः प्राप्नुवन्त्विति श्रीभगवन्तं पार्वतीनाथं श्रीवल्लीदेवसेनापतिञ्च प्रार्थयामि ॥

एषोयं सप्तति वर्षेभ्यः प्राक् दक्षिणदेशप्रसिद्ध ग्रन्थाक्षरेण मुद्रापितः । इदानीं स कोशोपि नोपलभ्यते । उपलब्धोपि कोशः जीर्णपत्रयुक्तः हस्ते गृहीत्वा पठितुमपि नार्होस्ति । तस्मात् देवनागरलिप्या मुद्रापयित्वा आस्तिकानां उपकाराय प्रकाशीकृतः ।

देवनागरी द्राविडाक्षर श्लोकयुक्तं द्राविड भाषानुवादसहितं एतदेव शिवरहस्यखण्डात्मकं पुस्तकं मया इदानीमेव मुद्राप्य प्रकटीकृतमस्ति ।

इत्थं
शेङ्गालिपुरं अनन्तरामदीक्षितः

25, North Maravaneri,
SALEM-7.

# विषयसूचिका

## ॥ संभवकाण्डम् ॥

## ॥ आसुरकाण्डम् ॥



## ॥ वीरमाहेन्द्रकाण्डम् ॥



## ॥ युद्धकाण्डम् ॥

## ॥ देवकाण्डम् ॥



## ॥ दक्षकाण्डम् ॥

## ॥ उपदेशकाण्डम् ॥

॥ श्री महा गुरुभ्यो नमः ॥ ॥ अविघ्नमस्तु ॥ ॥ श्री विघ्नेश्वराय नमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
# ॥ संभवकाण्ड प्रारम्भः ॥



मङ्गलं दिशतु मे विनायको मङ्गलं दिशतु मे षडाननः ।
मङ्गलं दिशतु मे महेश्वरी मङ्गलं दिशतु मे महेश्वरः ॥ १
ओंकारनिलयं देवं गजवक्त्रं चतुर्भुजम् । पिचण्डिलमहं वन्दे सर्वविघ्नोप शान्तये ॥ २
सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्नराजो विनायकः ॥ ३
धूमकेतुर्गणाध्यक्षः फालचन्द्रो गजाननः । वक्रतुण्डः शूर्पकर्णः हेरंबः स्कन्दपूर्वजः ॥ ४
षोडशैतानि नामानि यः पठेत् शृणुयादपि । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ ५
संग्रामे संकटे चैव विघ्नस्तस्य न जायते । सुब्रह्मण्यं प्रणम्याहं सर्वज्ञं सर्वगं सदा ॥ ६
अभीप्सितार्थ सिद्ध्यर्थं प्रवक्ष्ये नाम षोडश । प्रथमो ज्ञानशक्त्यात्मा द्वितीयो स्कन्द एव च ॥ ७
अग्निभूश्च तृतीय स्यात् बाहुलेयश्चतुर्थकः । गांङ्गेयः पञ्चमो विद्यात् षष्ठः शरवणोद्भवः ॥ ८
सप्तमः कार्तिकेयः स्यात् कुमारस्याद्यष्टकः । नवमः षण्मुखश्चैव दशमः कुक्कुटध्वजः ॥ ९
एकादशः शक्तिधरः गुहो द्वादश एव च । त्रयोदशो ब्रह्मचारी षाण्मातुरश्चतुर्दशः ॥ १०
क्रौञ्चभित्पञ्चदशकः षोडशः शिखिवाहनः । एतत् षोडश नामानि जपेत् सम्यक् सदादरम् ॥ ११
विवाहे दुर्गमे मार्गे दुर्जये च तथैव च । कवित्वे च महाशास्त्रे विज्ञानार्थी फलं लभेत् ॥ १२
कन्यार्थी लभते कन्यां जयार्थी लभते जयम् । पुत्रार्थी पुत्रलाभं च धनार्थी लभते धनम् ॥ १३
आयुरारोग्य वश्यं च धनधान्य सुखावहम् । पुरा काञ्च्यां चतुर्वक्त्रः तताप परमं तपः ॥ १४
चतुराननः प्रजाः सर्वाः कृपया परमेशितुः । तस्मिन् महेशचरण परिचर्या परायणे ॥ १५
मुनयः कतिचित् पुण्ये स्थित्वा गार्हस्थ्य उत्तमे । वैखानसाश्रमे तन्तुं तपस्तपत मानसाः ॥ १६
*प्राप्तुंस्त्विकट स्रष्टुं तदर्हं स्थानमुत्तमम् । ततस्तमभिवाद्यैतेऽपृच्छन्प्राञ्जलयो विधिम् ॥ १७*
देव कुत्र वयं स्थित्वा वानप्रस्थ परायणाः । तपः कुर्मोवदैतत्वं नमस्ते प्रपितामह ॥ १८
इति तेषां समाकर्ण्य वचनं वारिजासनः । ध्यात्वा मुहूर्तमादाय कुशकूर्चमनोव्यधात् ॥ १९
नानालोकयाङ् यच्चारः शीर्यते विजने वने । तद्वनं वः क्षमं कर्तुं तप इत्यनुशास्यतान् ॥ २०
विससर्ज तदा ब्रह्मा शिवं ध्यात्वा शिवामपि । ततस्तु नेमिस्तस्याप्यपि चारु श्लक्ष्ण शिलातले ॥ २१
शीर्णातैरन्यितारण्ये तद्वन तेन नैमिशम् । गङ्गा हिमवतो यत्र चन्द्रमण्डल निःसृता ॥ २२
अवतीर्णाऽवनीमार्गे भगीरथ पदानुगा । शम्भोः कपर्दविलसत्कृतमाला सुगन्धिनी ॥ २३
तया तन्नैमिशं पुण्यं सर्वलोकैक पावनम् । नानामुनिगणाकीर्णं नानामृगसमाकुलम् ॥ २४

नानापक्षिगणालाप मुखरीकृतपादपम् । स्निग्धच्छाया तरुलता संछन्न पृथिवीतलम् ॥ २५
अच्छाच्छ स्वादु पानीयं अतिस्निग्ध तरच्छदम् । तदासीत्तपसस्तेषां उचितं नैमिशं तदा ॥ २६
तप्त्वा तपश्चिरं सर्वे प्रीतये पार्वतीपतेः । ततस्सत्रं समारब्धं सहस्रसम संज्ञितम् ॥ २७
इच्छद्भिरैश्वरीं तुष्टिं परैः ब्राह्मणपुंगवैः । तत्र सत्रे समाकर्ण्य समारब्धं मुनीश्वरैः ॥ २८
मुनेः सत्यवतीसूनोः अन्तेवासी तपोनिधिः । सूतः पौराणिकः श्रीमान् पुरारि चरणप्रियः ॥ २९
संप्राप तरसा तेषां मुनीनां भाग्यगौरवात् । तं दृष्ट्वा ते मुनिश्रेष्ठाः प्रीतिकण्ठकितत्व चः ॥ ३०
सपर्यया तदा सूतं ते सर्वे पर्यपूजयन् । निर्दिष्टमासनं भेजे तत्पूजा मुदितान्तरः ॥ ३१
सूतः पौराणिकः श्रीमान् स्मयमान मुखाम्बुजः । तदा तमनुकूलाभिः वाग्भिस्ते वाग्विदां वरम् ॥ ३२
प्रीतं विधाय तेऽपृच्छन् कथाः पौराणिकीः शुभाः । मुनयः — वयं नैमिशमासाद्य कृतार्था वचनाद्विधेः ॥
तदिदानीं यदस्माकं स्कन्दस्य चरितं महत् । उत्पत्तिस्तेजसस्तस्य शाम्भवाज्ज्वलनाद्धृतात् ॥ ३४
कथं कथय सर्वज्ञ तदा शरवणान्तरात् । किं वीर्यं किं कृतं तेन पार्वती येन संयुगे ॥ ३५
के वा दनु सुतास्तेन निहता वीर्यशालिना । रथ नाग तुरङ्गेभ्यः कथं वर्हीस्य वाहनम् ॥ ३६
कुक्कवाकुः करे तस्य शक्ति वज्रादि हेतिभिः । अलंकरोति हस्ताब्जं भार्ये के वनिते उभे ॥ ३७
श्रवणादस्य वीर्याणां किं श्रेयः संभवेद्भुवि । वद तस्य महाभाग विक्रमश्चो यथा तथम् ॥ ३८

सूतः —

मुनयो हे महाभागाः शृणुध्वं संशितव्रताः । श्रेयसामपि सर्वेषां निदानमिदमुत्तमम् ॥ ३९
धर्मार्थ काममोक्षाणां इदमेकं हि साधनम् । श्रुत्वेदं महदाख्यानं वन्ध्यापि लभते सुतम् ॥ ४०
कन्यार्थी चाप्नुयात् कन्यां धनार्थी धनमाप्नुयात् । विद्यार्थी चाप्नुयात् विद्यां राज्यार्थी राज्यमाप्नुयात् ॥
नियमादिदमाख्यानं दंपती श्रद्धया पुनः । अनन्य मानसा भूत्वा शृणुयातामतन्द्रितौ ॥ ४२
एकवारेण तौकामं आप्नुयातामसंशयम् । अवश्यं श्रद्धयाभ्यर्च्य पुराणमिदमुत्तमम् ॥ ४३
जायापती यदि कथां अनपत्यावपि द्विजाः । शृणुयातां तथाधन्तं कुमारगतमानसौ ॥ ४४
सत्यं सत्यं पुनः सत्यं आप्नुयातां बहून् सुतान् । तस्मादभ्यर्च्य मुनयः सर्वे शृण्वन्तु सादरम् ॥ ४५
आख्यानैर्बहुभिर्युक्तं अभीष्ट फलसाधनम् । आदरेण मुनिश्रेष्ठाः शृणुध्वं कथयामि वः ॥ ४६

इति खिलं कथितं ते सूतपुत्रेण विप्राः श्रुतिसुखमनुभूय श्रोत्रपीयूष धाराम् ।
शिवसुत चरितं ते श्रोतुकामा विचित्रम् बहुतरमभणंस्ते साधु साधित्यमन्दम् ॥ ४७

श्रीमित्यादि महापुराणे श्रीस्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सूतमुनिसंवादो नाम प्रथमोऽध्यायः ॥

---

॥ द्वितीयोऽध्यायः ॥

अथ सूतो महादेवं ध्यात्वा सांबं सपुत्रकम् । व्यासं सत्यवतीसूनुं उवाच वचनं शुभम् ॥ १

श्री सूतः —

शौनकाद्या महात्मानः तपः क्षीणाघसंचयाः । शृणुध्वमृषयस्सर्वे गदतो मत्कथां शुभाम् ॥ २
स्कन्दस्य कीर्तिमतुलां कलिकल्मष नाशिनीम् । आदिकल्पे युगावृत्त्या द्वापरे समुपस्थिते ॥ ३
प्रजानामपि सर्वासां बुद्धिह्रासवशात्तदा । अभावत्वेदो वेदार्थः विद्यास्सर्वाश्च हे द्विजाः ॥ ४

तदा केचिज्जगद्धेतुं अन्नमाहुर्विमोहिताः । प्राणं मनोथविज्ञानं आनन्दमपरे जगुः ॥ ५
आदित्यमनिलं वह्निं अब्जजं कमलापतिम् । प्रकृतिं पुरुषं चान्ये कर्मकेवलमात्मनाम् ॥ ६
अन्यमन्यत्प्रशंसन्ति बौद्धचार्वाक लाकुलाः । बहुना किं मुनिश्रेष्ठाः ईशादन्यपरं जगुः ॥ ७
सर्वाधिकारे सन्दिग्धे तदैवं कालयोगतः । तदा विष्णुमुखा देवाः ब्राह्मणास्सर्व एव ते ॥ ८
कालस्य तु तदा दृष्ट्वा बुद्धिमोहकरीं कृतिम् । कैलासवासिनं देवं सर्वेशं सकलेश्वरम् ॥ ९
साक्षादेव परंब्रह्म संसारामय भेषजम् । दिव्य सिंहासनारूढं देव्या सह शिवाख्यया ॥ १०
समासाद्य महादेवं प्रणम्याग्रे व्यजिज्ञिपन् । भगवन् प्राणिनस्सर्वे ब्राह्मणाद्या द्विजातयः ॥ ११
बुद्धेस्त्रासमनुप्राप्य कालेन किल देवप । नाधीयतेद्यवेदान् अनन्तत्वान्मतिभ्रमात् ॥ १२
अन्यान्यपि च शास्त्राणि न पठन्त्यत्र बालिशाः । कर्तारं जगतां त्वत्तः ब्रुवते ते विमोहिताः ॥ १३
ब्रह्माणमपरे विष्णुं इन्द्रं मित्रं परेऽनिलम् । त्वां ब्रह्मपरमं नैव जानन्ति हि विमोहिताः ॥ १४
सर्वाधिकारे सन्दिग्धे धर्ममार्गे बहिर्गते । गुरुशिष्यक्रमे नष्टे लोभमोहसमावृते ॥ १५
निःस्वाध्यायवषट्कारे जगत्यस्मिंश्चराचरे । वर्णाश्रमाश्रमस्थानां का गतिस्त्वदृते विभो ॥ १६
इति विज्ञाप्य देवेशं देवा विष्णुपुरोगमाः । बहुमानेन देवेशं अपृच्छन् जगतां हितम् ॥ १७
तानुवाच महादेवः प्रभुर्गम्भीरया गिरा । विष्णो विधे युवां भूमौ द्वापरे द्वापरेयुगे ॥ १८
व्यासो मनुष्य संभूय वेदशास्त्रे उभे युवाम् । संक्षिप्य कुरु तं सम्यक् अनन्ते ते यथा नृणाम् ॥ १९
अधिकर्तुं क्षमेबुद्धि विहीनानां कलौ युगे । धर्मब्रह्मविधातॄणां शास्त्राणां सूत्रवर्त्मनाम् ॥ २०
ऋषिभिस्सहितावन्यैः शीघ्रं कुरुतमाचिरम् । देवाश्च मुनयश्चान्ये तिर्यक्षाणां हितायवै ॥ २१
शास्त्राणि च पुराणानि संक्षिप्यन्तु ममाज्ञया । इति देवाज्ञया देवाः विष्ण्वाद्या ब्राह्मणाद्विजाः ॥ २२
व्यासादि संज्ञया जन्म संप्राप्य पृथिवी तले । वेदानपि पुराणानि धर्मशास्त्राणि कृत्स्नशः ॥ २३
विभृण्वन्तीह संक्षेपात् ईशाज्ञाहि गरीयसी । मुनयोस्मिन्युगावर्ते कृष्णद्वैपायनो मुनिः ॥ २४
भूत्वा नारायणो व्यासः सत्यवत्यास्सुतो महान् । संक्षिप्य चतुरो वेदान् समुनिर्बादरायणः ॥ २५
पैलादिभ्यो विभज्यैमान् पृथक् पृथगसंगरम् । दशधाचाष्टधा कृत्वा पुराणानि मुनीश्वरः ॥ २६
मह्यं करुणया प्रादात् गुरुस्सत्यवती सुतः । ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ २७
भविष्यन्नारदीयं च मार्कण्डेयमतः परम् । आग्नेयं ब्रह्मकैवर्तं लैङ्गं वाराहमेव च ॥ २८
स्कान्दं च वामनं चैव मात्स्यं कौर्मं च गारुडम् । ब्रह्माण्डं चेति पुण्योयं पुराणानामनुक्रमः ॥ २९
तत्र शैवानि शैवं च भविष्यञ्च द्विजोत्तमाः । मार्कण्डेयं तथा लैङ्गं वाराहं स्कान्दमेव च ॥ ३०
मात्स्यमन्यत्तथा कौर्मं वामनं च मुनीश्वराः । ब्रह्माण्डं च दशेमानि त्रीणि लक्षाणि संख्यया ॥ ३१
ग्रन्थानां महिमासर्वैः शिवस्यैव प्रकाश्यते । असाधारणयामूर्त्यां नाम्ना साधारणेन च ॥ ३२
वदन्ति शिवमेतानि शिवस्तेषु प्रकाश्यते । विष्णोर्हि वैष्णवं तद्वत् तथा भागवतं तथा ॥ ३३
नारदीय पुराणं च गारुडं वैष्णवं विदुः । ब्राह्मं पाद्मं ब्रह्मणो द्वे अग्नेराग्नेयमेककम् ॥ ३४
सवितुर्ब्रह्म कैवर्तं एवमष्टादशस्मृतम् । चत्वारि वैष्णवानीश विष्णोस्साम्य पराणि वै ॥ ३५
ब्रह्मादिभ्योऽधिकं विष्णुं प्रवदन्ति जगत्पतिम् । ब्रह्म विष्णु महेशानां साम्यं ब्राह्मे पुराणके ॥ ३६
अन्येषामधिकं देवं ब्रह्माणं जगतां पतिम् । प्रवदन्ति दिनाधीशं ब्रह्मविष्णु शिवात्मकम् ॥ ३७
मातर्मध्याह्न सायाह्न समयेषु ब्रवीतिहि । अग्निं वैश्वानरं साक्षात् आत्मानं त्रिगुणात्मकम् ॥ ३८
आग्नेयं ब्रह्मकैवर्तं अपि तौ जगदीश्वरौ । शिवात्मानौ विशेषेण वदतोऽस्य तनू उभे ॥ ३९
ग्रन्थ संख्या पुराणानां चतुर्लक्षं प्रमाणतः । यथा शास्त्रेषु वेदेषु विश्वाधिक उमापतिः ॥ ४०
पुरुषः परमः साक्षात् पतिः पाश विमोचकः । परं ब्रह्म परं धाम परं ज्योतिरनाकुलम् ॥ ४१

मङ्गळ मङ्गळानां च पावनाना च पावनम् । सर्वमङ्गल्योपेत उतरच्छ सुमङ्गळ ॥ ४२
आगमान्त शिरो नित्य ह्यमृत प्रवदन्ति हि । तद्वदेव पुराणानि शिव साम्ब शिवप्रकम् ॥ ४३
स्वतन्त्रमेकमद्वैत प्रवदन्ति निरङ्कुशम् । तत्र स्कान्त प्रवक्ष्यामि पुराणेषु त्रयोदशम् ॥ ४४
संहिताभि तथा षड्भि लक्षैर्ग्रन्थैर्विराजितम् । दश चैव पुराणानि सात्विकानि विदुर्बुधा ॥ ४५
श्रद्धेयानि द्विजवरै तेषा धर्मास्तु तन्मयत् । सत्त्व शुक्ल समाधिश्च सुज्ञानास्पद तु यत् ॥ ४६
विद्योपदेश योगिभ्य शुद्धस्फटिक सनिभ । न निद्राति शिव चापि ब्राह्मणाधिपति श्रुत ॥ ४७
ब्रवत्येव पुराणानि ब्राह्मणाना कथा शुभा । दश चैव पुराणानि हिंसा दोष पराङ्मुखम् ॥ ४८
वैष्णवानि च चत्वारि तामसानि मुनीश्वरा । क्षत्रियाणा श्रुता धर्मा तेषु तद्देवता हरि ॥ ४९
तम कृष्णमुदासीन कूटस्थस्य विशारदम् । निद्रालस्य प्रमादाद्या तद्गुणा परिकीर्तिता ॥ ५०
कृष्णो विष्णु स्मृत शेष शायी भक्त विमोहन । तेषु च क्षत्रियाणा च धर्मा विप्रैरुदाहृता ॥ ५१
ब्राह्मेतु राजसे वैश्य सेव्ये सर्वत्र समते । दु खास्पद रक्तवर्ण चञ्चल च रजो मतम् ॥ ५२
गुणत्रय समायुक्त आग्नेय सौरमेव च । तस्माच्छैवानि विप्राणा पुराणानि हितानि हि ॥ ५३
तेष्वपीद मुनिश्रेष्ठा स्कान्द सुखदमुत्तमम् । सर्ववेदान्तसारस्व पञ्चाशत् खण्डमण्डितम् ॥ ५४
आद्या सनत्कुमारीया द्वितीया सूतसंहिता । ब्राह्मी तु संहिता पश्चात् तुरीया वैष्णवी मता ॥ ५५
पञ्चमी शाकरीज्ञेया सौरी षष्ठी तु संहिता । आद्या तु पञ्च पञ्चाशत् सहस्रै श्लोककैर्युता ॥ ५६
द्वितीया संहिता विप्रा षट्सहस्रैरलङ्कृता । त्रिसाहस्रैर्युता ब्राह्मी पञ्चभिर्वैष्णवीयुता ॥ ५७
त्रिंशत्भिश्शाकरीयुक्ता खण्डैर्द्वादशभिस्तथा । षष्ठी तु सौरी सयुता सहस्रेणैक केवला ॥ ५८
ग्रन्थलक्षैर्युत स्कान्द पञ्चाशत् खण्डमण्डितम् । तदद्यसम्प्रवक्ष्यामि युष्मभ्य विप्रपुगवा ॥ ५९
तत्रयासंहिता प्रोक्ता शाकरी वेदसमता । त्रिंशत् सहस्रैर्ग्रन्थाना विस्तरेण सुविस्तृता ॥ ६०
आदौ शिवरहस्याख्य खण्डमद्य वदामि व । त्रयोदश साहस्रै सप्तकाण्डरलङ्कृतम् ॥ ६१
पूर्व सम्भवकाण्डाख्य द्वितीयस्त्वासुर स्मृत । माहेन्द्रस्तु तृतीयो हि युद्धकाण्डस्तत स्मृत ॥ ६२
पञ्चमो देवकाण्डाख्य दक्षकाण्डस्तत परम् । सप्तमस्तु मुनिश्रेष्ठा उपदेश इति स्मृत ॥ ६३
तत्र सर्व गुहस्यैव चरित वर्णित पुरा । विक्रम तस्य सेनान्य व्यासेन मुनिना द्विजा ॥ ६४
इदमिह विबुधाना आर्तिमोहापनोदम् प्रकटित षट्भाव कीतयन्त्येव नित्यम् ।
श्रुतिपुटमधुभूयो भूप एवाद्रियन्ते भुविसुत पशुपत्नी बन्धुमित्रैरमन्ते ॥ ६५

इत्यादि महापुराणे स्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे द्वितीयोऽध्याय ॥

---

॥ तृतीयोऽध्याय ॥

कैलास शिखरे पूर्व शकर लोकशंकरम् । देवी दक्षस्य दुहिता देवदेवमुवाच सा ॥ १
देवाति लङ्घ्य वचन अह गेह पितुर्गता । अनुभूतस्तत सम्यक् अवमान सुदु सह ॥ २
सोऽपि वीरेण जनक शिक्षित सप्ततन्तुना । तथापि जनता देवा सदादाक्षायणीति माम् ॥ ३
तदह नैव शक्तास्मि सोढु त्रिभुवनेश्वर । तदद्य मे वर देहि कुत्र चित् जनिरस्तु मे ॥ ४
इति देव्यार्थितो देव स्मितपूर्वमभाषत । आर्ये दाक्षायणीच्छा चेत् आहिता हृदये दृढा ॥ ५
तर्हैव कुरु महाश्चर्य हिमवन्त गुरु गिरिम् । सत्वामेव सुताप्राप्तु तपस्या तनुते भृशम् ॥ ६
ध्यायमानौ त्रिशुभ्र ते पितृणा मानसी च सा । तौ कुरुष्व कृतार्थौ त्वं भवापत्य तयो प्रिये ॥ ७
अथ जन्मोत्सुकायान्तु तस्या तत्र हिमाचल । तापसीं तनुमादाय तताप परम तप ॥ ८

जटाभिरावृतो मूर्ध्नि लताभिरिव पर्वत । मौर्ञ्जीं च मेखलां तन्वीं दधानो रौरवीं त्वचम् ॥ ९
भस्माश्रम दृतिर्भस्म रुद्राक्ष विलसत् तनु । शान्तो दान्तो जितक्रोध मनसा परदेवताम् ॥ १०
ध्यायमानोऽखिलेशानीं तामेव मनसा शिवाम् । फल पर्णाम्बु पवनै भावयन् वृत्तिमात्मन ॥ ११
शुचौ पञ्चाग्नि मध्यस्थ सूर्ये विन्यस्त लोचन । प्रावृषेषु दिनेष्वेष केवल व्योम सवृत ॥ १२
हैमन्ते हिमसपीत हिमवानेव पूर्ववत् । शैशिरे जलमध्यस्थः वसन्ते रवि समुख ॥ १३
अधीयान सदा देवी सूक्त मन्त्र पराङ्मुख । भार्या च तस्य शुश्रूषा निरता योगिनी च सा ॥ १४
अन्ववर्तत सा नित्य छायेव सुचिर मुदा । तस्यैव तप्यमानस्य नीहार पृथिवी भृत ॥ १५
व्यतीयाय महान्काल प्राससाद शिवा तदा । तस्मिन्सरसि सप्राप्ते मानसे स्नातुमद्रिपे ॥ १६
देवी बालेव सजाता स्वेच्छयेवोत्पलोपरि । ता दृष्ट्वा हिमवानीश पामार्द्धा जगतोरणिम् ॥ १७
चतुर्भुजा त्रिनयना चन्द्रबिम्ब निभाननाम् । सुकपर्दा मृगाकार्धं विलसन्ती शुचिस्मिताम् ॥ १८
दृष्ट्वा हृष्टमना राजा निधिं लब्ध्वेव निर्धन । प्रणम्य ता समादाय जगाम भवन मुदा ॥ १९
तत्र मेनास्य महिषी निवृत्त तपसो वनात् । प्रत्युज्जगाम सहसा पाद्यमादाय सादरम् ॥ २०
प्रणम्यालोक्य तद्धस्ते बाला त्रैलोक्य मातरम् । अथादायात्म हस्ताभ्या अकमारोप्य ता मुदा ॥ २१
सा भवद्वत्सला तस्या पय पूर्णावुरो भुवौ । अधयच्च तदा देवी मुखमुद्वीक्ष्य तत्स्तनौ ॥ २२
तदानीं मातृवृन्दाना अभूत्सानन्दमान्तरम् । ववृषु पुष्पवर्षाणि खेचरास्सिद्ध चारणा ॥ २३
दिव्याना दुन्दुभीना च नादो बधिरयद्दिश । ननृतुर्मुनयस्सर्वे दण्डानुत्क्षिप्य तत्क्षणम् ॥ २४
आसन्मनासि यमिना आनन्द विवशानि च । आखण्डलाग्निशमन निशाचर जलेश्वरा ॥ २५
समीर राज राजेश ब्रह्माच्युत दिगीश्वरा । स वधूकास्सहगणै मातेनुस्ते महोत्सवम् ॥ २६
मेना हिमाद्रिराजौ तौ मेनाते कृतिनावुभौ । तदा तुष्टुवतुस्तौ ता मज्ञातामिवात्मजाम् ॥ २७
कृताञ्जलिपुटौ भूत्वा सप्रश्रयमिमाममूः । स्तुती राज हृतुर्देव्यै जनित्र्यै जगता तदा ॥ २८
या ध्यपि प्रथमासेय आदौ ब्रह्ममहेशितु । अविनाशी चरत्येका तस्यै अस्तु नमस्त्विदम् ॥ २९
या शक्तिर्देव देवस्य शरीरमधिदैवतम् । ज्ञानमिच्छाक्रियासव मनस्तस्यै इद नम ॥ ३०
यया शुभमङ्गळश्शम्भु सर्वमङ्गळधाभवत् । तामजामाततावावा सर्वमङ्गळदायिनीम् ॥ ३१
श्रिय लक्ष्मीमैवलागा अविका विजया जयाम् । षष्ठीमाहुस्तयाद्धयेया आर्याभावा स्व आश्रितौ ॥ ३२
ते समन्ताज्जगत्यस्मिन् तेषामेव धनानि च । तेषा यशासि ये देवी प्रपन्नाश्शरण शिवाम् ॥ ३३
अन्तोरळीके धात्रायान्यक्षराण्यशिवानितु । न्यस्तानि यत्प्रसादेन विलीयन्ते तु तान्युत ॥ ३४
यदीय चरणाम्भोज युग्मासक्तमनाजन । न जातु लभते दु ख ता त्वा स्वशरण गतौ ॥ ३५
इति स्तुवन्तौ तौ देवी प्रोवाच जगदम्बिका । शृणु त वचन माता पितरौ स्थो युवा मम ॥ ३६
शक्तिरीशस्य वामाग निलयाह पुरातनी । ब्रह्मणाभ्यर्थि तासाहं ईशात्रावशवर्तिनी ॥ ३७
विभेदे घाऽभवं तस्मात् दक्षस्य दुहिता सति । स तु दैवहतो दक्ष शिवद्रोह परोभवत् ॥ ३८
तदीया तनुमुत्सृज्य पितरावर्थितायुवाम् । युवाभ्यामर्थितासाह तपोध्यान समाधिभि ॥ ३९
इत्युक्त्वा सञ्जहाराशु तयो स्वविषया स्मृतिम् । बभूव द्विभुजा देवी द्विनेत्रोत्पल सप्रभा ॥ ४०
उत्पलाक्षु पलाशोवा नीलोत्पल सुकेशिनी । मेना च हिमवाश्चोभौ मेना ते स्व सुता तदा ॥ ४१
तन्मायापहृतज्ञानौ तया सञ्जातवत्सलौ । जातकर्म तदा चक्रे सचिवैस्सपुरोधसा ॥ ४२
तदोत्सवो महानासीत् पुरे सर्वत्र सर्वदा । पौरजानपदाना च कौतुक शुभदस्तदा ॥ ४३
नामचास्यै द्वादशेहि सकार गिरि भूमिप । षष्ठेऽन्नप्राशनमासि सप्तमे निष्क्रम तदा ॥ ४४
रेजेदेवी वपु कान्त रत्न शाणशित यथा । दिने दिने वर्धमाना रेखा चान्द्रमसी यथा । ४५
अपुषद्गुणो वृद्धि मान इव पितुस्सह । पर्वतापत्यता प्राप्ता पार्वतीत्यभिधान्दधे ॥ ४६
पूर्णे तु पञ्चमे वर्षे तस्या आसीत्तपो रति । मातापितृभ्यामपि साऽभ्यर्थयत्स्वमभीप्सितम् ॥ ४७

मात्रोमेति निषिद्धायत् उमाख्या प्रणवात्मिका। अस्या आहार्य सकल्प अवगम्य हिमान्यग ॥ ४८
सखीभि प्रययामास तपसे तान्तदा मुदा। सा तत्रैव हिमान्यद्रौ गौरी शिखरमाश्रिता ॥ ४९
चचार ससखी बाला तपस्यामतुला मुदा। एतस्मिन्नन्तरे देव कैलासे रजताचले ॥ ५०
सनकादि मुनीन्द्रेभ्य त्रिपदार्थार्थसमितम्। रहस्यमागमान्तारव्य सिद्धान्त कथयन् स्थित ॥ ५१
हिरण्यगर्भसकल्प सभयास्त मुनीश्वरा। पित्रानियुक्तास्ते स्रष्टौ जगत किल ते पुनन् ॥ ५२
वय भ्रातरि मे सर्वे नागीकुर्मा शुभा मतिम्। अगस्त्यौ मुमुक्षूणा ईशोपास्तिर्हि शर्मदा ॥ ५३
तपोऽतपन्निति धिया सर्वे सभूय योगिन। अथापयामास विभु आविर्भूयमलानिमान् ॥ ५४
न्यग्रोधमूलमाश्रित्य दक्षिणामूर्तिरव्यय। अधीत्य विधिवद्वेदान् सरहस्यान् शिवात्तत। ५५
न ते प्रतिष्ठितज्ञाना अभवन्नीश मायया। ते सभूय चिर भूय प्रष्टुकामा उमापतिम् ॥ ५६
कैलासशिखर प्रापु कलधौतशिलातलम्। तत्र भोगपुरे शम्भो अमितानन्द निर्भरे ॥ ५७
स्मरणान्मोक्षद दिव्य भवन विधिशुभ्रुभम्। शैलादिनेशमासाद्य प्रणम्य प्रार्थयन् प्रभुम् ॥ ५८
जगत्सृजस्यवसति चानुगृह्णासि लीलया। तिरोभवसि सर्वेश चोवेचि त्वा कृपानिधे ॥ ५९
आसाद्य जन्तुयस्याङ्घ्रि राजीव रज एककम्। अयेतिवार्धि दुस्तार ससार मृत्युमप्यसौ ॥ ६०
भवन्त शरण प्राप्ता नमन्ति विबुधादय। ताम्रस्पृशन्ति पापानि ब्रह्महत्यादि कान्यपि ॥ ६१
एतेवयमुमाकान्त ससार भय भीरव। त्वा प्रपन्ना अधीयानर ब्राह्मणा ब्राह्मणाधिपम् ॥ ६२
चिरायाजातमेक त्वा बन्धमोक्षकर प्रभुम्। पशूना पतिमीशान पशवस्म प्रभो तव। ६३
स्तुत्वैव स्तुतिभि स्तुत्य अर्थमप्रार्थयन्निदम्। अध्यापयामास भवान् अस्मानाद्यौ वटाश्रित ॥ ६४
आगमानखिलान् वेदान् शैवोपपद्म भूषितान्। तत्र यानि त्वयोक्तानि वेदार्थानि कृपा बलात्। ६५
स्वानुभूति प्रसिद्धानि वेदसिद्धान्त रूपत। प्रतिभिन्नानि मैतानि विस्तरत्वान्महेश्वर ॥ ६६
इदानीं कृपयाऽस्मभ्य वद सक्षिप्य विश्वप ॥ ६६½

विभुरिति सनकाद्यैर्विश्वकर्तायिनस्सन् तदनुकरुणयैभ्य सम्यगध्यापयिष्यन्।
गुरुरखिल गुरूणा कोटिसूर्याशुतेजा वचनमथ समापे,नन्दिकेश विलोक्य ॥ ६७

इत्यादि महापुराणे स्कान्द शकरसहिताया शिवरहस्यखण्डे
सभवकाण्डे तृतीयोऽध्याय ॥

---

॥ चतुर्थे अध्याय ॥

सूत —

ततश्शैलादिमालोक्य भगवान् भगनेत्र हा। शशासेति मुनिश्रेष्ठा सर्वकर्ता जगत्पति ॥ १

ईश्वर —

शैलादेयावदेतेभ्य शर्मद ज्ञानमुत्तमम्। कथयिष्ये रहस्य तत् तावन्महाक्य गौरवात् ॥ २
एकोपि न प्रवेष्टव्य यो वा को वा स्मरादते। इत्युक्त्वा द्वारि नन्दीश मस्थाप्यैतैस्सहाविशत् ॥ ३
स्वविशा तन्निशाधीश कलाकलित शेखर। अलङ्कृत्यैव तत्राशु वीरासनमुदारधी ॥ ४
प्राहुच्चर्या क्रियायोग निष्णातेभ्य कृपानिधि। दक्षिणामूर्तिमास्थाय चित्तैरैभ्यश्च मुद्रया ॥ ५
चिन्मुद्रया तया सेपा छिन्नारसर्वेपि ससाया। एतावाञ्श्रावभवन्देव दृष्ट्वा इन्दिन्दुशेखरम् ॥ ६
वीरासने समासीन व्याघ्रचर्मोपरिप्रभुम्। अङ्कानोपरि विन्यस्त दक्षिणाङ्घ्रिसरोरुहम् ॥ ७
तस्योपरि लसद्दाम योगपट्टमनोरमम्। ब्रह्मेन्द्र विष्णुयोगीन्द्र विबुधागोचर शिवम्। ८

शुद्धस्फटिकसंकाशं त्रिनेत्रं चन्द्रशेखरम्। भासयन्तं जगद्भासा स रवीन्दुकृशानुकम्॥ ९
तदन्तरेऽमरास्सेन्द्राः साशापाल पुरोधसः। शूरपद्मभयात्रस्ताः कैलासमगमाययुः॥ १०
शान्तौ तपश्चरन्त्यान्तु चिन्मुद्रावति तत्पतौ। सर्वेषां न मनांस्यासन् शान्त्यानि मतो भुवः॥ ११
ततोऽपि दुःख भूयिष्ठं विश्राणा स्वान्तरं सुराः। उवाह चित्तं वृत्रारेः इन्द्राण्यामरतिं तदा॥ १२
ब्रह्मणोऽपि तदा वाचि विष्णोरपि रमोपरि। उपद्विरक्तमभवत् चेतना चेतनात्मकम्॥ १३
प्रजाश्च न व्यवर्धन्त पीडा वृद्धाऽऽसुरीतराम्। एषामुपद्रवानांस्तान् ईशानेति निवारणी॥ १४
उत्कण्ठयेवमासाद्य कैलासं धाम शूलिनः। नालभन् सन्निधिं शंभोः स्थान निरुद्ध ते भृशम्॥ १५
तत्रातपत्सुरैरिन्द्रः तप उग्रतरं महत्। असुरोपप्लुतं लोकं आत्मना परिरक्षितुम्॥ १६
तदर्तौ कुसुमास्त्रोऽपि समाः शतमताकुलः। तापसं वेषमास्थाय रत्यां रतिपराङ्मुखः॥ १७
विनिवृत्ताधिकारत्वात् हृदिकृत्वा शिवे रतिम्। सनकादिमुनीन्द्राणां शिवो ब्रह्ममुखं तदा॥ १८
हृदिस्थमाच्छिनन्मोहं कृपया प्रभुरात्मवान्। तपसा महता चापि विबुधाश्च बुधाश्रमाः॥ १९
व्यजिज्ञपन् प्रणम्येमे शालंकाय न जन्मने। आत्मागमनमादिष्टाः तेनायं समयो नवः॥ २०
नस्यात्तदयं गिरावत्र विसृष्टा इति तेन ते। जग्मुः सुरालयवरं तत्र ब्रह्म दिदृक्षवः॥ २१
मनोवती पुरी तत्र धातुः परमशोभना। विचित्रोपवनैर्युक्ता दीर्घिका निर्झरावृता॥ २२
सर्वर्तुसुमनोरम्या द्रुमसंचारितातपा। कपित्थाश्वत्थहिन्ताल तमालापलकासनैः॥ २३
विभीतकरसालाढ्य न्यग्रोधोदुंबरप्लक्षैः। जंबूप्लक्षधवाङ्कोल तिन्त्रिणी लिकुचार्ककैः॥ २४
निपतिन्दुक खर्जूर बदरीलवपर्णकैः। अशोककाश्मर्यपूग पनसश्रीफलद्रुमैः॥ २५
भद्रश्रीपाटलीवृक्ष भल्लातनगरुन्मदैः। एवमादिभिरन्यैश्च शोभते सा पुरी सदा॥ २६
भवनानि मनोज्ञानि यस्यामाश्चर्यवन्ति च। नानामणिमयूखानां निकरैरुज्ज्वलानि च॥ २७
यत्रस्थितिर्निरागस्य क्रोधलोभादि विद्विषाम्। तत्रास्ते भगवान् ब्रह्मास्तूयमानो मरुद्गणैः॥ २८
भारत्या प्रियया वेदवर्णाकल्पमनोज्ञया। दिव्यसिंहासनवरे त्रिदशास्तं पितामहम्॥ २९
आसीनं मघवांस्तत्र त्रिदशैः सहसादरम्। प्रणम्य परया भक्त्या प्राञ्जलिः पार्श्वतोऽभवत्॥ ३०
देवाश्च तुष्टुवुर्देवं दिग्वस्त्रं वारिजोद्भवम्। प्रणम्य वाक्पति देवं वाचस्पति पुरोगमाः॥ ३१

देवाः —

त्वं माता त्वं पिता देव त्वं गुरुस्त्वं पितामहः। त्वं भ्राता त्वं सखात्वश्रीः अस्माकमधिदैवतम्॥ ३२
समष्टिस्त्वं तथा व्यष्टिः आत्मनामात्म नायकः। त्वं सत्यं तत्त्वविद्यासि तत्त्वातीतः परात्परः॥ ३३
स्रष्टा त्वं जगतां धातः ह्वतात्वमपसिस्फुटम्। यदुपक्रम ओंकारः त्रिभिर्न्यायैरुदीरणम्॥ ३४
मन्युः कर्मगतिर्नाकः ते ते मुखानमुद्भवाः। नमस्त्रिमूर्तये तुभ्यं सर्गस्थित्यन्तहेतवे॥ ३५
ब्रह्मा त्वं सृजसीशान विष्णुस्त्वं विश्वरक्षकः। हरस्त्वं हरसि क्षिप्रं जगदेतच्चराचरम्॥ ३६
नमस्ते विश्वनाथाय नमस्ते विश्वमूर्तये। नमस्ते विश्वनिर्माणे शर्व सर्वस्य हेतवे॥ ३७
यदन्तरं सर्वमिदं यस्यान्तस्थितमद्भुतम्। यस्य यद्रूपाणि भूतानि तेऽस्तु नित्यमिदं नमः॥ ३८
इति स्तुतः सुरश्रेष्ठः सुरश्रेष्ठैर्निजाश्रितैः। प्रसादाभिमुखो भूत्वा प्राह स करुणानिधिः॥ ३९

इत्यादि महापुराणे स्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चतुर्थोऽध्यायः॥

---

॥ पञ्चमः अध्यायः ॥

ब्रह्मा —

किमिदं किमिदं वत्साः यूयं सम्भूय सादरम्। विषण्णवदना देवाः शरणं मां समागताः ॥ १
ब्रूत यूयं हृतस्वास्थ्या इव दीनाननाभृशम्। मघवान् प्रथमं तावत् कुलिशं शिथिलं वहन् ॥ २
उवाह भग्नशृङ्गस्य बलीवर्दस्य दैन्यताम्। पावकोऽपि सदा धूमं धूम्रवर्णोऽति खिन्नधीः ॥ ३
विवृणोति सदा कालं आधिजामातुरीं व्यथाम्। कालदण्डेन विलिखन् यमोऽपि पृथिवीतलम् ॥ ४
अवाक्शिरास्तु सततं आतङ्कं विवृणोति मे। अय पुण्यजनाधीश काङ्क्षेयं वरोऽद्य किम् ॥ ५
कुण्ठितं धीद्विजिह्वस्य विदण्स्याप दुर्दशाम्। पाशहस्तोऽपि वाहुभ्यां पाशमभ्याहत क्वचित् ॥ ६
वहन्नेति निजप्राणान् यशोदैन्यं सदा मत। वायुर्गृहीतवद्विस्सन् येतोगतवटस्स स ॥ ७
अकिञ्चनस्य वै भिक्षां अटतो दैन्यमास्थित। धनदो निधिमुत्सृज्य शङ्खपद्माभिधादिकम् ॥ ८
प्राणत्राणपरो भाति सप्राश इव साम्प्रतम्। ईशानस्त्रिशिखं हस्ते कुण्ठिताग्रं दधन् बभौ ॥ ९
नरेन्द्रकर निष्पिष्टक्ष्वेळदन्त इवाहिराट्। मरुतस्सप्त किं ब्रूत चलन्त इतरेतरम् ॥ १०
महाचल निरुद्धौघ निम्नगा समधर्मिणः। अष्टौ तु वसवोऽशामी नष्टभासो भयाकुलाः ॥ ११
दृष्टतार्क्ष्यभयत्रस्त कृष्णसर्पसधर्मिणः। एकादशानां रुद्राणां हृदयानि मुखानि च ॥ १२
गताहन्तानि शंसन्ति सुम्लाना सुतरामम्। आदित्या द्वादशैते किमत्यन्तातिहतप्रभाः ॥ १३
दिवाहस प्रभानां हि दीपानां दैन्यमाश्रिताः। ब्रूत किं वा सुरा यूयं साध्ये भ्रमण इवाश्रयात् ॥ १४
ब्रूत मह्यमहं यच्चिमं प्रतीकारं विचार्य च। श्रुत्वैवं वचनं धातुर्देवेषु मुखरेष्वथ ॥ १५
निवार्य मघवान्सर्वान् वाचस्पतिमुवाच स। भो जीव जीवसंघानां अधुना भयमासुरम् ॥ १६
प्रसह्यस्थितमस्माकं महर्षीणां च सर्वशः। इत्युक्तो धिषणो राज्ञा सुराणां सन्निधौ विधेः ॥ १७
उत्थाय साञ्जलिकरः प्रणम्योवाच वेधसे। यदात्थ भगवन्नेवं सुराविप्रकृतास्तराम् ॥ १८
असुरेणातिशूरेण शूरपद्मेन पद्मज। सिंहवक्त्रेण नाम्नाऽपि तारकेणेभमूर्तिना ॥ १९
भ्रातृभ्यामुत्थितो दैत्यैः धूमकेतुरिवात्मनाम्। सर्वात्मना त्वमात्माऽसि कथं नैतत्तु बुध्यसे ॥ २०
काश्यपिस्सतु मायायो वरलाभान्महेशितुः। निर्जितास्तेन देवेन्द्रप्रमुखा युधि भो पितः ॥ २१
अनाथास्त इमे देवा बहुधा तमुपासते। मघवाऽन्त्यहस्तस्य गृहान्तःसम्मार्जनम् ॥ २२
मुक्ताभिरम्बुदैरद्भिः अभिषिञ्चति गोमयैः। पावकोऽपि प्रदहत्यस्मा बद्धदीपकरोऽन्वहम् ॥ २३
चत्वारिंशद्भिरेकोनैः सहपाश्च नमुञ्चति। यमो गदैस्सहाम्भीयैः राजयक्ष्मादिभिर्मुदा ॥ २४
अगदङ्कारतामेत्य सामस्याभ्या चिकित्सति। रक्षोराजस्सभामध्ये खड्गचर्मधरोऽन्वहम् ॥ २५
एकवीरत्वमासाद्य मेनश्च कृतिना परम्। प्रचेतास्तस्य शृण्वे प्रचेताः प्रियभाषणे ॥ २६
अजिरं निबिडं दैत्यैः आदरात्सम्मुञ्चति। वायुस्सम्मार्जनादीनां दैतेयानान्तु कर्मणाम् ॥ २७
अध्यक्ष वेऽभिषिक्तोऽसौ तेनगन्धवह कृतः। कुबेरत्वात् कुबेरोऽसौ निशान्ताधिपतिः कृतः ॥ २८
समुच्चतिसदा पाश्च सौविदल्लोऽस्य योषिताम्। अप्रार्थितोऽस्य चेशान नानाभोगसुखप्रदः ॥ २९
अन्वास्ते त्वन्वहं द्वास्थैः गणपैः सह सर्वदा। पद्मबन्धुः पद्महस्तः शूरपद्मस्य विष्टिपः ॥ ३०
विकासयति पद्मानि तावन्मात्रातपस्सदा। चन्द्रोऽपि सर्वदा पूर्णः शारदीं श्रियमुद्वहन् ॥ ३१
सचिवः कामतन्त्रस्य युवतीरनुरञ्जयन्। वसवोऽष्टावपि श्रद्धा भक्तिभाव समन्विताः ॥ ३२
महाधनस्य कोशस्य रक्षां कुर्वन्ति सततम्। एकादशापि रुद्रास्ते तस्य प्राणाभिरक्षकाः ॥ ३३

जाग्रत्यस्य निशान्ते ते घण्टाहस्ता निशास्वपि। आदित्या द्वादशाप्यस्य तत्र तत्रग्रहाङ्कणे ॥ ३४
तमोनिरस्य कुर्वन्ति दीपमाला दिनेदिने। अन्येतु लेखा भृत्यस्य तत्तत्कार्यङ्कृतस्सदा ॥ ३५
गोग्रास हरणोद्युक्ता केचित्तद्रक्षणोद्यता। पलालोद्धाततिरता पलसपादनोद्यता ॥ ३६
क्षणवेषु च सर्वत्र अपाहरणतत्परा। आराधितोऽपि तैरेतै शूरपद्म सुरेतर ॥ ३७
जगद्विभक्तरो येव बलाभ बलोद्धत। अपकारै खलो यद्वय नोपकारशतरपि ॥ ३८
बन्दीहृताश्च देवाना रमण्योऽनेनमायिना। मुञ्चन्ति दीर्घनिश्वास चिर काराग्रहाङ्कणे ॥ ३९
गन्धर्वा उरगा यक्षा राक्षसाश्च पिशाचका। सर्वे तद्भृत्यभृत्याना द्वारि तिष्ठन्ति नित्यश ॥ ४०
अन तस्सर्पराजश्च तक्षकश्च महाबल। कार्कोटक महानाग कम्बलाश्वतरादय ॥ ४१
धृतराष्ट्रश्च शङ्खश्च गुलिकश्च महोरग। तस्य सिंहासनस्याधो पादुका मणिमौळय ॥ ४२
आसत्यमाच पातालमण्डानामसुराधिप। अष्टोत्तरसहस्राणा चाधलेऽस्ताविति तिष्ठति ॥ ४३
अनेकयुगपर्यन्त अस्यशूरस्य साम्प्रतम्। अतकत्व विधेह्यस्य विधे विविधकर्मण ॥ ४४
गुरुवाक्य गुरुविधौ श्रुतौ कुर्वेति वृत्रहा। आदद्दे वचन भूप कमलासनसन्निधौ ॥ ४५
यदुक्त गुरुणा तेन तारकाग्रभुव प्रभो। जगत्पीडासहस्राक्ष सहस्राक्ष तदीश्वर ॥ ४६
इयत्तया परिच्छेत्तु अशक्य तत्प्रपीडनम्। अस्माभिरस्य शान्त्यर्थं उपाया परिकल्पिता ॥ ४७
निवृत्तामेयजानीव विकारैस्सान्निपातिके। आवृण्या सोऽसुरोऽण्डाना द्विशतानिपृथक्पृथक ॥ ४८
विभज्यपादाल् स्वपञ्चाष्टाधिकपर शतमन्त्रशात्। सिंहास्यो द्विशताण्डाना शासक परिकल्पित ॥ ४९
तारकोद्विशतण्डाना मध्यगोऽण्डच्च शास्त्यसौ। दिगाराम्रमविश्रान्त जगत्सस्सुरमानुषम् ॥ ५०
तदीयैः पुरुषैरेतत् पीड्यते हन्तसाम्प्रतम्। तस्मात्त्वमेव जेष्यामो नशूरचान्यमेवथा ॥ ५१
मयाकाष्ठाधिपैः सार्धं अस्यशाधासहिष्णुभि। आदावेव समारम्भि मृधोऽस्यर्थमनेकश ॥ ५२
कान्दिशीकेषुसर्वेषु चक्रमस्मैमपेरितम्। कुण्ठिताश्च वमत्क्ष्वेल तिर्यगग्र पपातह ॥ ५३
पावकस्य तथा शक्ति दण्डो दण्डधरस्यवै। कौक्षेयक पलादास्य पाश पाशभृतस्तथा ॥ ५४
यष्टिमात्राशशिप्रोऽय ध्वजोवायोस्तु सयुगे। गदासोमस्य सम्भिन्ना गदभङ्गाङ्कपष्टिवत् ॥ ५५
शूल शूलभृतोस्योर खातु किञ्चिन्नपारयत्। चक्र चक्रभृत कण्ठे तस्य निष्कमियापितम् ॥ ५६
ततोऽस्मानागता भीति मानसेतारकोद्भवा। स्तुतिभिस्तोषयामोऽद्य मानोपायनवाणय ॥ ५७
इत पर तद्गतौव नशक्तम इमे विधे। यद् बुद्धिमतोऽस्माक आसहावहतिस्समाम् ॥ ५८
शतमन्युरेवमभिधाय विधिं विररामसंसदि सुमेरु गिरे।
बहुधा श्वसन्मुहुरथास्यगिर प्रतिदध्वने द्विगुणमेवसद ॥ ५९

इत्यादि महापुराण स्कान्दे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे पञ्चमोऽध्याय ॥

---

॥ षष्ठोऽध्याय ॥

अथ ब्रह्मा विनिश्चस्य विचार्यमनसा बहु। जगाम विबुधै सार्धं वैकुण्ठ माधवालयम् ॥ १
तत्रासेदुर्हरेर्धाम नानामणिविराजितम्। सहस्रहैमप्रासाद गोपुराङ्कणमण्डितम् ॥ २
हिरण्मय महाद्वार कवाटाति मनोहरम्। वैष्णवैर्नैकपैर्जुष्ट तच्चिह्नपरिचिह्नितै ॥ ३
नपरत्नविचित्राढ्य राजवीथिविराजितम्। नानामणिप्रभाजाल निर्मीरितदिगन्तरम् ॥ ४

मत्तवारणिकायुक्तं विद्रुमद्वारतोरणम्। अभ्रान्तपरिसंहृद्यं अक्षणां प्रसरतरकरम् ॥ ५
वासुदेवस्य ये भक्ताः शान्तास्तद्गतमानसाः। यद्गत्वा न निवर्तन्ते तत्पदं वैष्णवं सुराः ॥ ६
संप्रापुर्वैष्णवं तूर्णं दिव्यं प्राकारसंवृतम्। रक्षितं रक्षिभिर्दिव्यैः अकुतोभयमच्युतम् ॥ ७
तत्र भोगिपतेर्भोगं अधिष्ठाय मनोहरम्। शयानं त्रिदशाधीशं नीलमेघसमत्विषम् ॥ ८
पद्माङ्घ्रिं पद्मनयनं पद्मास्यं पद्मकोमलम्। पद्मामृदुकराम्भोजस्पर्शरक्ताङ्घ्रि पङ्कजम् ॥ ९
भूमिवामलमार्वेशं परमैश्वर्यवल्लभम्। भावयन्तं सदा शंभुं योगनिद्रासमाधिना ॥ १०
अस्तुवन् स्तुतिभिः स्तुत्यं आनम्र शिरसो मुहुः। अच्युतं तमजं विष्णुं अव्यक्तमजकारणम् ॥ ११

सुरा.—

नमस्ते पद्मनाभाय पयोर्धिपतये नमः। पद्मबंधुनिशानाथ लोचनाय परात्मने ॥ १२
पद्माकरनिवासाय भक्तचित्तनिवासिने। नारायणाय नाथाय नमो वेदान्त वेदिने ॥ १३
ध्यानादिगम्यवपुषे योगिनां योगदायिने। भोगिनां भोगदात्रे तु भुजङ्गपरशायिने ॥ १४
नमः परमकल्याणगुणरत्नाकराय ते। वासुदेवाय शान्ताय महते विष्णवे नमः ॥ १५
यदा यदा जगत्कृत्स्नं उपप्लुतमदोऽसुरैः। तदा तदाऽवतीर्य त्वं हंसि धर्मस्य संभ्रमम् ॥ १६
रक्ष रक्ष सदेशं त्वं अतोऽस्मानसुरार्दितान्। स्तुत्वैवं नेमुरीशं तेऽस्मात्सर्वेऽब्जभूमुखाः ॥ १७
अथ देवोऽनयास्तुत्या प्रीतः प्रोवाच तान् स्मयन्। भो विधे पृषदन्तस्त्वं पतिः सहमदन्तिकम् ॥ १८
किमर्थमागतास्त्वद्य क्रियतां वा मयाऽद्य किम्। दिवामीत इवात्यर्थं गुहामासाद्य मेरवीम् ॥ १९
स्वपामि निर्भयो नित्यं स्वप्ने तथापि तद्भयात्। पर्यटित्वा जगत्सर्वं प्रबुद्धो निर्भयः पुनः ॥ २०
शूरेतिशब्दश्रवणात् आशु मे कंपते मनः। मेरुरसाकमीशेन परित्राणाय कल्पितः ॥ २१

द्विजाः —

कथं सूतमहाबुद्धे महामेरुस्सुरालयः। अगम्योऽसुरमुख्यैश्च कथमीशेन कल्पितः ॥ २२

सूतः —

पुरैकस्य विधेःकल्पे कदाचित् कालगौरवात्। देवासुराणामभवत् संग्रामो भीमदर्शनः ॥ २३
तदाऽसुरबलैस्त्रस्ताः विबुधा दुद्रुवुर्भयात्। मेरोरुपरि ते देवा। शङ्करं शरणं ययुः ॥ २४
तथापि ते बलोत्तुङ्गाः प्रवृत्ता बाधितुं सुरान्। ह्रीश्वरस्तु प्रकुद्धो दैतेयानशपत् प्रभुः ॥ २५
यतो यूयं दुरात्मानो मदीयान् शरणार्थिनः। प्रवृत्ता बाधितुं दैत्याः हतायातपराभवम् ॥ २६
स्वभावादुग्रकर्माणो यज्ञभागोनवोऽस्तुयत्। निन्दिताश्चस्वभावेन ब्राह्मणैश्चमहत्तरैः ॥ २७
अयंचमेरुर्नैवस्यात् ऊर्ध्वभागोनगोचरः। दृष्टोऽपियोऽस्तु मनसस्सदोपेक्षाधिरोहणे ॥ २८
भवप्रभृत्ययं शैले दैत्यदानवरक्षसाम्। ऊर्ध्वस्त्वगम्योभागो वो ममाज्ञापरमाहृता ॥ २९
त एव मुख्या लोकानां यज्ञभागभुजश्चते। यजन्तु होमैः सततं वेदैर्विष्णुमुखास्सुराः ॥ ३०
विक्रमन्तां भुवं देवा। अभिमातिजितश्चते। गायत्रैरेव छन्दोभिः अन्तरिक्षंच ते पुनः ॥ ३१
अभिशास्त जयेनैव त्रिष्टुभाछन्दसादिवम्। अरातिविजयेनैव जागतेनैव छन्दसा ॥ ३२
विक्रमन्तां दिशश्चामी शत्रून् जित्वा ममाज्ञया। असुरेष्वपि यः कश्चित् अस्मानाराध्य भक्तितः ॥ ३३
माज्ञयास्तु सदैव जेता मान्यये स्यादचिरैर्ष्वपाः। तस्मात्ते मैरवीमद्य निवसन्ति सुरालये ॥ ३४

सूतोक्तिमेतामधिगम्य कर्णे मुनीश्वरा नैमिशकाननीयाः ।
शशंसुरेनं कृतिनां वरिष्ठं वाचामनोभिर्विनयेन सूतम् ॥ ३५

इत्यादि महापुराणे स्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे षष्ठोऽध्यायः ॥

---

॥ सप्तमोऽध्यायः ॥

सूतः —

आह नारायणो देवः सुरानालोक्य विश्वपाः । अद्य ब्रह्मन् विदित्वाऽहं दैवागमनमात्मना ॥ १
गुहां विहाय वेगेन वैकुण्ठं प्राप्तवानहम् । यदा यदाऽसुरोद्वेगो बलाभादुमापतेः ॥ २
तदा तदा सदाऽस्माभिर्निवासो मेरुरादृतः । तस्मादस्माभिरमरैः जेतुं शक्यास्तेऽसुराः ॥ ३
स एव जगतामीशः शंकरो लोकशंकरः । त्रीनप्येतान् व्यधात् पूर्वं त्रिपुरान्तकः स्मृतः ॥ ४
हसन् सघृणयाऽस्मासु हालाहलगराशनः । तस्मात्ते शूरपद्मस्य सिंहवक्त्रस्य पापिनः ॥ ५
तारकस्य च दुष्टस्य हर्ताकोऽन्यो जगत्त्रये । तमीशं सर्वभूतैकदमनं संश्रयामहे ॥ ६
तपसा सादरं देवाः तीव्रेणापि गरीयसा । इति नारायणस्सर्वैः सह देवैः पिनाकिनम् ॥ ७
आराधयितुमद्दता नियमेन जपादिभिः । कृष्णाजिनोत्तरासंगो मौञ्जीकाञ्चयचिताकृतिः ॥ ८
रुद्राक्षमालिकाक्लृप्त भूषणो विमलाकृतिः । भस्मनासजलेनैव भावितेन त्रियंबकैः ॥ ९
त्रियायुषेण तारेण पंचाक्षरसमन्वितैः । त्रिपुंड्रावलिभिर्दीप्तः शतरुद्रीय तत्परः ॥ १०
जजापैकमनाध्यायन् शिवं सर्वजगत्पतिम् । ब्रह्मा च मघवानग्निः आशापालास्सुराश्च ते ॥ ११
ऋषयश्च तथा तेपुः ध्यायन्तः शिवमव्ययम् । ध्यायतां सुचिरं तेषां एवं कालो महांस्तदा ॥ १२
व्यतीयाय तदा देवः शिवः प्रादुरभूत्स्वयम् । नन्दीश्वरकरालम्बी दन्तिवल्गमलांबरः ॥ १३
दृष्ट्वा देवं पशुपतिं देवा विष्णुपुरोगमाः । तुष्टुवुः प्रणतास्तं हृष्टसर्वतनूरुहाः ॥ १४
नमः शिवाय देवाय नमः शिवतरायते । सर्वेशाय महेशाय शर्वरीश्वरमौळये ॥ १५
नित्याय नीलकण्ठाय सत्याय भवते सते । ऋतापानृतदूराय सत्यानृत विधायिने ॥ १६
सर्वेशाय वरेण्याय शंभवेऽस्तु मयोभवे । नमस्ते शङ्करायास्तु नमो भूयोमयस्कर ॥ १७
शूलिने मालिने नित्यं हारिणेऽस्तु किरीटिने । कालकालायकालाय नमः कालाग्नये सताम् ॥ १८
सतामवनशीलाय सदसद्वपुषे नमः । नमोऽष्टमूर्तये तुभ्यं इष्टिप्राय यमारये ॥ १९
कामदायात्मभक्तानां नमः कामारयेऽस्तु ते । सर्वाधिकाय शर्वाय नमः सर्वस्य साक्षिणे ॥ २०
विश्वाधिकाय रुद्राय वेदान्तानां महर्षये । वेदान्तगम्यविज्ञानसुनिश्चितधियां सताम् ॥ २१
सन्यासिनां विरक्तानां मुक्तिदाय नमो नमः । परामृताय भवते भक्तिगम्याय ते नमः ॥ २२
परात्पराय देवाय धात्रेऽस्माकं जगद्गुहाम् । इत्थं भवेऽरिलाण्डानां पित्रे नेत्रे नमोनमः ॥ २३

नमः शिवाय प्रभवे सुराणां विध्वंसकाय त्रिपुरान्तकाय ।
महेश्वरायास्त्वखिलात्मभाजां हितप्रदायास्तु नमो नमस्ते ॥ २४

स्तुवत्स्वेवं हरिब्रह्म प्रमुखैस्त्रिदशैर्हरः । स्मितज्योत्स्नाहतध्वान्तः पद्मोऽभणद्वचः ॥ २५
हरेविधे महेन्द्राद्याः शासनं त्वं किमुच्यताम् । माऽप्यदादनानीद तपांसि सुचिरं सुराः ॥ २६
मद्दर्शनममोघं हि सर्वस्य जगतस्सदा । इति वादिनि देवेशे हर्षेण महता सुराः ॥ २७

जयेशान जयेशेति सर्वे हरहरेतिच । अथ सर्वान्निवार्याह विष्णुर्विश्वाधिकं प्रभुम् ॥ २८
देवदेव वयं दैत्यैः शूरपद्ममुखैस्तराम् । बाधितास्सततं देव त्वत्तो लब्धवरोल्बणैः ॥ २९
तदिदानीं गतिं त्वत्तो नान्यां विद्म विभो वयम् । शूरश्च सिंहवक्त्रश्च तारकश्च महासुराः ॥ ३०
अस्मान् विजित्य स्थानानि जह्रुस्सर्वाणि तेजसा । तद्भयाद् शरणं प्राप्तान् रक्षास्मान् करुणाबलात् ॥ ३१
ऋतेत्वां विद्महे तस्य जेतारं त्रिदशोप्यमी । इति शृण्वन्वचः शंभुर्वैष्णवं त्रिदशप्रियम् ॥ ३२
प्राह मौलिगतस्येन्दोर्धर्षयन् दशनत्विषा । हरेविधे त्यज भयं देवास्सर्वेपि सांप्रतम् ॥ ३३
उत्पाद्य गुहमद्याहं संहरिष्येऽसुरान् क्षणात् । अचिरेणैव कालेनेत्यंतर्धानं गतः शिवः ॥ ३४
ततस्तु ते हरिप्रेष्ठाः नमस्कृत्य महेश्वरम् । चित्तमित्थाथयन्नेवं तद्भयादमराः क्षणात् ॥ ३५
तत्र संभूय ते सर्वे सुरास्सब्रह्मकास्तदा । नारायणमपृच्छंस्ते कथंकार्यं प्रभो वद ॥ ३६
प्रसन्नेऽपि शिवेऽस्माकं दैवभाग्यं किमीदृशम् । अदृष्टपरिपाकोऽयं कृतार्थास्तेऽसुरास्तराम् ॥ ३७
अतः परं हरेऽस्माकं क उपायोऽवधार्यते । हरात्कुमारो येनाशु जातो दैत्यान् हनिष्यति ॥ ३८
तदुपाश्रित्य वचनं वैबुध मधुसूदनः । विचिन्त्यालोच्य विधिना बभाषे सुरसंसदि ॥ ३९
यदा प्रभृतिशर्वाणी हित्वा दाक्षायणीं तनुम् । अभजत्पर्वतश्रेष्ठं जन्मने जननीशिवा ॥ ४०
तत आरभ्य सन्निधः सर्वेशो जगतांपतिः । नियम्य करणग्रामान् संस्तभ्यात्मानमात्मना ॥ ४१
योगिभ्यस्सनकादिभ्यः स्वस्वरूपं सुदुर्ग्रहम् । उपदेष्टुमनामूलं कैलासे वटभूरुहः ॥ ४२
संश्रित्य दक्षिणामूर्तिं सर्वेशो गुरुरात्मनाम् । चिन्मुद्राङ्गुलिरध्यास्ते छिंदन् तेषांच संशयम् ॥ ४३
तन्मयत्वाच्च जगतः चरस्याप्यचरस्यच । विरक्तं सर्वभोगेभ्यो विषया विषसन्निभाः ॥ ४४
येषुयेषुचलोकेषु येव आत्मान आसते । स्त्रीपुंभावो न तेषां हि तन्मयत्वाच्चराचरे ॥ ४५

ओमित्यादि महापुराणे श्रीस्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सूतमुनिसंवादो नाम सप्तमोऽध्यायः ॥

---

॥ अष्टमोऽध्यायः ॥

विष्णुः—युष्माकं हि मतांस्यासन् निर्विकाराणि सांप्रतम् । आशापाला अपि स्वासु निराशा लसतामहो ॥ १
पौलोमीरतिराहित्यं मनोवृत्ररिपोर्गतम् । अयं पितामहश्चापि विरज्य गिरिनिस्पृहः ॥ २
मम मास्तु मनोमासे वदतीति दिवानिशम् । नपुंसकत्वं लोकेषु मनसां यन्मतं सताम् ॥ ३
तद्यथार्थमभूदद्य न शरव्यं मनो भुवः । स्त्रीपुंस्त्वभावरहिते जगत्यस्मिंश्चराचरे ॥ ४
कथं स्रष्टुर्भवेत्सृष्टिरक्षाकार्या मयाद्य का । ककुभामधिपानां च कोऽधिकारो विरज्यताम् ॥ ५
वैश्वानरेष्टिर्या पुत्रे जाते कार्याऽत्र यज्वभिः । तयाहीने जगत्यस्मिन् का तृप्तिस्त्रिदशात्मनाम् ॥ ६
तेजस्विता का जन्तूनां अभावश्चेन्द्रियोचिता । तस्मात्सर्वजगत्सृष्टिः मैथुनेन नचान्यथा ॥ ७
तदत्र सर्वे संभूय वयमाहूय मन्मथम् । सन्तोषयित्वा विविधैः उपायैरुचितैस्तराम् ॥ ८
विधातुं शिवयोरैक्यं विधेयो यत्न उत्तमः । इति निश्चित्य तैस्साकं सस्मार स्मरमच्युतः ॥ ९
आविरासीदथाऽप्यत्र सन्निधौ दनुजद्विषाम् । साकं रत्याच मधुना सशरं कार्मुकं वहन् ॥ १०
विधाय प्रणतिं तेभ्यः बभाषे सस्मितः स्मरः । किमर्थमत्रभो देवाः स्मृतोऽहं जगदीश्वरैः ॥ ११
हरेविधेऽमराधीश नियुङ्ध्वं मां स्वकिंकरम् । जगत्त्रयेऽस्ति यः कार्यं यत्तद् ब्रूताविशंकितम् ॥ १२

साधयिष्यामि तत्सर्वं कृपयायोऽहमच्युत । १२½

विष्णुः — साधुकाममहाबुद्धे संप्रादेको विराजसि ॥ १३

भूतस्यापि च भव्यस्य संमतं कुरु सांप्रतम् । देवकार्ये जगत्यस्मिन् स्त्रीपुंभावेन योजय ॥ १४
न ते योजयितुं शक्यं जगदेतच्चराचरम् । यावदेतद्विपुक्तं यत् मिथुनं कृष्णपिङ्गलम् ॥ १५
सव्यासव्यात्मकं ह्येतत् भागद्वयमुमापतेः । द्वयं ह्येतद्धि जगतां जननीजनकात्मकम् ॥ १६
तवैकजननीभूतं भूत्वा गिरितनूजताम् । तपश्चरति तत्रैव भूधरे प्रीतये विभोः ॥ १७
कल्पमूलं समाश्रित्य न्यग्रोधस्याचलोत्तमे । कैलासे योगिवर्येभ्यः ज्ञानमास्ते ददत्सुखम् ॥ १८
तयोरैक्यं त्वया चेत्स्यात् कृतं स्वस्थं जगत्त्रयम् । तथाप्यतीव जगति वीर्यवत्ता महत्तरा ॥ १९
श्लाघनीयतमोसि त्वं अप्रयत्नेन सांप्रतम् । कुसुमानीषवो यस्मात् तैरेवाभ्यर्चनं विभोः ॥ २०
प्रीतये सर्वलोकेषु कृतीत्यमत एव हि । माधवेऽस्य यदर्थेयमाददे वचनं स्मरः ॥ २१
ओमच्छृणु वचो विष्णो सत्यं यत्सन्निधौ विधे । अहं सर्वत्र विजयी कृपया येन कल्पितः ॥ २२
तस्मै यतमातिष्ठन् स्वामिद्रोही न संशयः । स्वामिद्रोहवतां पुंसां न स्वर्गो नरको ध्रुवम् ॥ २३
आमुष्मिकीगतिश्चात्र मास्तु तिष्ठतु संप्रति । ईशोधक्ष्यति मां क्षिप्रं कोपात् गुग्गुलुधूलियत् ॥ २४
भवद्भिरर्चनातुल्यं उक्तं पुष्पेषु मोचनम् । पुष्पं प्रियतरं वापि क्षीरं वा भाववर्जितम् ॥ २५
नाङ्गीकरोति देवेशः चन्द्रखण्डशिरोमणिः । भावपूतेन यद्दत्तं तृणगुल्म शिलादिकम् ॥ २६
महान्तमपि सर्वेशः प्रतिगृह्णाति धूर्जटिः । भावहीनाभिरत्यर्थं गोभिर्मुक्तं पयः पुरा ॥ २७

अप्रियं तदभूत्तस्य। तासां दाहैक कारणम् ॥ २७½

सूतः — श्रुत्वैतद्वचनं तेन स्मरेण परिभाषितम् ॥ २८

पप्रच्छुरमरा विप्राः कथमेतदिति स्मरम् ।

मारः — पुरामन्दरशैलेन्द्रे चन्द्रमौलिर्जगत्पतिः ॥ २९

दाक्षायण्या सहाप्यास्ते सेव्यमानो मरुद्गणैः । नन्दिभृङ्गि महाकाल स्कन्द विघ्नेश संवृतः ॥ ३०
हासोपचारकुशलरुद्रकन्याप्सरोगणैः । अतिसंबाधसविधः मधुमाधव संभृतैः ॥ ३१
सुमनोभिस्सुमनसां नायको नायको विभुः । स्वलंकृत्यात्मदयितां मातरं जगतां शिवाम् ॥ ३२
अतिहृष्टमनास्तस्थौ आसने सैंह उत्तमे । तदन्तरे मुनिश्रेष्ठः काश्यपो ब्रह्मनन्दनः ॥ ३३
प्रजापतिस्स्वयंसाक्षात् गव्यं स्वादु पयोऽस्तु नः । पत्नीभ्यां प्रार्थितश्चैवं दित्याऽदित्या च सादरम् ॥ ३४
क्रियासमभिहारेण जगाम यत्नान्तिकम् । अप्रार्थयच्च तं पुत्रं दिशगास्त्वं पयस्विनीः ॥ ३५
वितीर्णोऽस्य पुनस्तेन बह्वयो दोग्ध्र्यस्तु धेनवः । प्रजापतिस्तु ताः स्त्रीभ्यां दण्डमादाय चालयन् ॥ ३६
प्रतस्थे जगलोकाय प्रहृष्टेनान्तरात्मना । नयान्वितद्ध्रशेताश्च जग्मुर्व्योम्नि यदृच्छया ॥ ३७
यत्रयत्राभिजग्मुस्ताः तत्रतत्र धरोपरि । नदीनदतटाकाश्च तासांक्षीरैः प्रपूरिताः ॥ ३८

क्रमेणसञ्चरन्त्यस्ताः धावंत्यस्त्यक्ततर्णकाः ॥ ३८½

मुनिरपि सहसा तादण्डमादाय ताभ्यां सह निजयुवतीभ्यां अन्वधावत्त्वराघान् ।
बहुतरमतिखेदादुच्छ्वसन् शुष्कतालुः चिरमपिसमभूवापारयन् धावितुंताः ॥ ३९½

इतिमहापुराणे श्रीस्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे अष्टमोऽध्यायः ॥

---

## ॥ नवमोऽध्याय ॥

### ॥ मन्मथस्य श्रीशिवसमीप गमनम् ॥

सूत —

मदन पुनराहस्म तान् सुरान माधवादिकान् । मन्दरोपरि जग्मुस्ता क्षीरधपमुच क्षणात् ॥ १
न्यपतन् क्षीरवर्षाणि सोमस्योपरि तद्गवाम् । अवलोकितश्चास्मिन् अवमानेन वै नभः ॥ २
भस्मसादभवन् गावो यद्वयस्तास्तत्क्षणादहो । क्षीराभिषेकमीशस्य वदन्ति मुनय प्रियम् ॥ ३
अश्पादस्पतर चापि गव्यान्यपि च पञ्चवा । पशूना पतिरप्येष ददाह कथमन्यथ ॥ ४
भावहीनपशुस्पृष्ट तस्मादस्यनतत्प्रियम् । भावपूतेन मनसा दण्डकोदण्डताडनम् ॥ ५
अपिदेवार्चन नून विभेम्यसादहसुरा । पञ्चाना कौसुमेषूणा कथ लक्ष्य करोमितम् ॥ ६
इयुवुध्या यदिकरोम्येव वुध्या जगत्पते । अहमनखिलानामस्मि महेनाथ्र नमस्यः ॥ ७
अतोऽस्मि कर्त्तानैवाह वचनस्य हरे तव । श्रुत्वा भूयानवस्त्वेतत् आत्मभूगदद्देवच ॥ ८
आहूय सविधे मार उवाच परिसान्त्वयन् । सुरा। प्रार्थयितारस्ते काय त्रिजगतामपि ॥ ९
ईशाज्ञाहि तथैव हि जगत्सृष्टथभिवृद्धये । तस्मात्तुभ्यमथ नैव कुप्येदीश ससर्ववित् ॥ १०
अहो वत हृदस्तेऽद्य काठिन्यमयसोऽधिकम् । देहीतिवचन शृण्वन् अपि देवमुखेरितम् ॥ ११
नवार्द्रमभवच्चित्त चित्र चित्तभुवोऽपि यत् । ईदृशाया विधेर्याचा प्रददावुत्तर स्मर ॥ १२
यथात्थ विश्वसृट सर्व तत्तथानात्र संशय । ईशाज्ञयैव सर्वत्र प्रवृत्तिर्मम नान्यथा ॥ १३
जयीति वममाख्यापि जगत्त्रयजयादभूत् । विशिखा ननिवर्तन्तेऽसिद्धार्थां ससुरासुरे ॥ १४
अण्डजातेऽण्डजस्वेदजोद्भिजेषु जरायुजे । सध वत्तिष्ठतु पुरा त्वामह स्वस्तुतोपरि ॥ १५
यद्राग त्वकाव तच्चकिं विस्मृत विभो । महर्षीन् दारुविपिने मायावामोहमाधवे ॥ १६
मोहितान् पादपतितान् तवकार किमाश्रमे । जलधरकुटुम्बि या वृन्दाख्या विष्टरश्रवा ॥ १७
काराग्रहगतोप्येव चकमे मच्छरार्दित । अवरीषसुतारागात् साक्षाद्विष्णुमतीहरिः ॥ १८
वञ्चयित्वा जहारैना नारद पर्वतवतम् । वसुदेवसुतत्वेऽपिनन्दगोप गृहेवसन् ॥ १९
गोपिका अपि तारेमे विद्ध खलु मयाशरैः । इन्द्रोऽपि गौतमसतीं चकमे मच्छरार्दितः ॥ २०
चन्द्रस्यापि गुरोर्भार्यां वशनीतमनोमया । छायामपि रविस्सक्षाधियारेमे शतसमा ॥ २१
वरुणस्य तथा पत्नीरपोऽश्विक्षकमेमया । नारदोऽपिमया विद्धोहरिष्यामाश्रयद्रतिम् ॥ २२
पराशरस्सत्यवतीं दाशकन्यामकामयत् । विश्वामित्रस्य तपसो मेनका विघ्नमाचरत् ॥ २३
देवासुर मनुष्येषु मद्बाणवशवर्तिन । कतिवाकतिवालोके नसन्ति परिमोहिता ॥ २४
ऋते कृशानुरेतस्क ईशान कृत्तिवाससम् । अन्येषामामनामस्मि महत्ता कुसुमायुधे ॥ २५
सघक्ष्यतिजगत्कृत्स्न भलीकनयनाग्निना । कर्त्ता सएव जगता हर्त्ता भर्त्ता नियामकः ॥ २६
तमज शाश्वत रुद्र चेकितान पर प्रभुम् । प्रतीपयेत् कोऽनुलोके आत्मज्ञानविशङ्कित । २७
नाह बिभेमि सर्वत्र बिभेम्यस्मान्महेश्वरात् । तस्मायुय सुरवरा मानियुङ्ध्व नचेश्वरे ॥ २८
न शृणोत्ययमस्माक वच इत्याशये व्यथा । नवोभवतु भोब्रह्मन क्षमस्वेत्यवदत् स्मर ॥ २९
ततो ब्रह्माऽवदत् क्रुद्धः कन्दर्प वाक्प्रतीपगम् । धिक धिक त्वा यद्धि त लोके न शृण्वन्ति हित जना ॥
न लज्जा हृदये तेषा हति लोके वच खलु । तथात्व किमुवक्तव्य प्रथमोसि रिपूनृणाम् ॥ ३१
उपकारपरालोके कीर्तिदेह विराजिता । तिष्ठन्ति पूर्वे पूर्वेते यावदा भूतसंप्लवम् ॥ ३२

अर्थितस्तु पुरा देवैः अस्थीनिस्वांगजान्यपि । ददौ दधीचो मदनव्याचनिर्वज्रमायुधम् ॥ ३३
शिबिश्चन्द्रपतिश्रेष्ठः कपोतार्थे दयार्द्रधीः । स्वशरीरास्थि मांसानि विदाश्य समनाकुलः ॥ ३४
कानीनोरविसंभूतः कवचं सहजं मुदा । इन्द्रायाभ्यर्थिने प्रादाच्छक्तिमादाय तद्गताम् ॥ ३५
कद्यंसत्वादृशो लोके नभूतो नभविष्यति । अहोऽस्य मौर्ख्यं पश्येति कंपयन्मौलिमात्मनः ॥ ३६
हस्तेन हस्तं सन्ताड्य जहास कमलासनः । त्रिदशाश्च पुनस्सर्वे भूयोभूयस्तमार्थयन ॥ ३७
ऊचे नारायणश्चैनं तवेदं सदृशन्नु किम् । सर्वेषां वर्तसेत्वग्रे सतांबंधुस्तथा सताम् ॥ ३८
अबंधुरितिसर्वत्र श्रुतोऽसि रतिवल्लभ । अतोमहेशमुमया संयोज्य सुकृतीभव ॥ ३९
तौ च भीतौ तथास्वर्थं दद्यातामिग्रमीश्वरौ ।
कामः — अहं सर्वात्मना नैव गमिष्यामि शिवान्तिकम् ॥ ४०
अन्यदत्रोत्र कर्तव्यं करिष्ये तत्क्षणादहम् । यो युष्मान् बाधतेऽजस्रं तं शूरमपिदानवम् ॥ ४१
सम्रालुकं शल्यं तं करोमि रतिकीलवत् । सतिष्ठतुचिरं कालं वशेवामदृशां सदा ॥ ४२
नाहं सर्वगुरुं शंभुं भुवनानामभिध्ययम् । सर्वज्ञं सर्वकर्त्तारं करोमि शरलक्ष्यताम् ॥ ४३
अथोत्थाय पुनर्ब्रह्मा तं कोपस्फुरिताधरः । बभाष वचनं रूक्षं कटुकर्णपुटस्यतत् ॥ ४४
दुरात्मानममुं किंवाऽनुसरस्यच्युतासुरम् । असुरं स्ववशं नीत्वा सुरदारापहारकम् ॥ ४५
शपामि क्षणमात्रेण नकरोस्यवचयवचम् । देवकार्यं खलो नूनं दंडसाध्यो नसांत्वनैः ॥ ४६
ततः कोलाहलो दिक्षु जजृंभे विबुधेरितः । बधिरौ रचयन् कर्णौ जितसागरवारिदः ॥ ४७
ब्रह्मशापभयात्त्रस्तः चिन्तामाप परंस्मरः । किंकरोमीति बहुधा रत्या साकं निजेप्रया ॥ ४८
साऽवदत् स्मरमुद्वीक्ष्य नगन्तव्य त्वया प्रिय । ईशागारममुष्य त्वा शापः किंवा करिष्यति ॥ ४९
अवसानोऽस्ति शापस्य शिवद्रोहस्य न क्वचित् । दहेच्च सहसाऽधीशः त्रिजगत् स्मितलेशतः ॥ ५०
वनितोक्तिरधिक्षेप इवभाति भवादृशे । नैवावमानविषया वागेषा हितकारिणी ॥ ५१
नैशं कुरुशाल्व्यतं मानवस्य जगत्पतिम् । अवमानकृतो लोके नश्यन्ति क्षिप्रमंहसा ॥ ५२
निशम्य वचनं रत्याः मन्मथः प्रत्युवाचताम् । यथार्थवचनं सुभ्रु संशयो नतथैवतत् ॥ ५३
उपपन्नमुमाकान्तात् वरमस्तोऽन्तकान्तकात् । अल्पायुरपि चान्यस्मात् अल्पायुरिवतन्मतम् ॥ ५४
प्रार्थयन्ति हि मां ह्येते जगतां प्रभवस्सुराः । माप्रतीपवचाभूयाः शापोमय्यपि भामिनि ॥ ५५
सांत्वयित्वेति तां पश्चात् समुत्थाय कृताञ्जलिः । यथाक्रमं प्रणम्याह देवान् विष्णुपुरोगमान् ॥ ५६

इत्यादि महापुराणे स्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकांडे नवमोऽध्यायः ॥

---

॥ अथ दशमोऽध्यायः ॥

॥ मन्मथस्य शिवदर्शनम् ॥

मन्मथः — अहं गमिष्ये देवेन योद्धुं त्रिपुरविद्विषा । संयोजयिष्ये तं देव्या मात्रा त्रिजगतांशिवम् ॥ १
विजयोऽस्तु ममाधीशाः युष्मदाशीर्भिरंजसा । वितरंत्वद्ययूयं ते मह्यं तांबूलमुत्तमम् ॥ २
योऽस्तु कार्यमविघ्नेन यतिष्ये स्वव्ययात्वपि । ततः प्रीतमना ब्रह्मा श्रुत्वा वाक्यं तथाविधम् ॥ ३
मराशंसस्रजं दत्वा तस्मै स्वांगगतां तदा । हरिश्च निष्कमत्यर्थं नवरत्नविराजितम् ॥ ४

वासवः पारिजातात्तपरिकर्माणि चादरात् । दिशामधीशाश्च ददुः नानोपायनमद्भुतम् ॥ ५
अस्तुवन्मुनियोगीन्द्राः आशीर्भिश्चाभ्यवर्धयन् । स्मरोऽप्यभूत् प्रीतमनाः दृष्ट्वा तेषां तु संभ्रमम् ॥ ६
रतिस्तु विमनास्तत्र वेपमानान्वतिष्ठत । ब्रह्मविष्णू तमाश्लिष्य प्रेषयामासतुर्मुदा ॥ ७
तौ प्रणम्य तदासाकं रत्यादेवान् परीत्य च । प्रतस्थे तत्क्षणादेव जयशब्दादिमंगळैः ॥ ८
रथः प्रादुरभूत्तस्य मलयश्वसनात्मकः । रथ्यैः शुकगणैस्तस्य दिशः शाड्वलतां ययुः ॥ ९
इषवः पञ्चकुसुमान्यामोदमधुरात्मताम् । पौण्ड्रेऽस्यचापमभवत् ज्यानिनादोऽप्यजृंभत ॥ १०
सन्नह्य कक्ष्यां कौसुंभकषायैरतिलोहिताम् । चूळिताः स्वशिखाः स्निग्धाः सुगंधिस्रगलंकृताः ॥ ११
कौसुम्भेनैव ताम्रारुवस्त्रेणावेष्ट्यशृंगिणा । कुण्डलीकवचीमाली भद्रश्रीपंकचर्चितः ॥ १२
भूषितो भूषणैर्दिव्यैः पुरुहूततरूद्भवैः । तदा मनांसि सर्वेषां दृष्ट्वा लावण्यवारिधिम् ॥ १३
शमीपूर्तिसापत्न्यं तदङ्गाश्लेष वांछया । ततः प्रतस्थे मदनो रथमारुह्य तादृशम् ॥ १४
जिगीषया महेशस्य सविधं धृतकार्मुकः । अर्णवानां च सप्तानां भेरीभावमुपेयुषाम् ॥ १५
जजृंभे निनदैस्सार्धं परभृत्काहळध्वनिः । पाटलीसुमनोभाग स्वरपङ्क्तिध्वनानुगः ॥ १६
मल्लिकाशङ्खनिनदो जजृंभे मधुपावृतः । निन्यूरथं क्षणेनैव कैलासं शुकपङ्क्तयः ॥ १७
ध्वजमीनमुखग्रस्त पयोमुक्पयसोज्वलम् । सदृष्ट्वा रजताद्रीशं अवतीर्य रथादयम् ॥ १८
नमश्चकार सरतिः तं कामः कामितार्थदम् । सिद्धचारणगन्धर्व यक्षकिन्नरसंकुलम् ॥ १९
नानातरुलताषण्डमंडितं मण्डनं भुवः । दर्पणोदरसङ्काशं त्रिदशश्रीमुखश्रियम् ॥ २०
ऋतुभिः सेवितं षड्भिः सिंहव्याघ्रमृगाकुलम् । गिरिं प्रदक्षिणीकृत्य चारुरोह रतिप्रियः ॥ २१
पद्भ्यां विनयसंपन्नः रत्या तादृशया सह । चापल्यादथ सन्धाय धनुष्यस्त्रं सकौसुमम् ॥ २२
मुमोच वृक्षषण्डेषु नानामृगगणेष्वपि । अस्त्रेण मोहयंस्तत्र विना भाववतो मृगान् ॥ २३
गतमंत्रं नभस्तूष्णीं नन्दीशाशासनेन वै । चकंपिरे न वृक्षाश्च चञ्चूर्भृंगा न झंकृतिम् ॥ २४
कामोपि स्वममोघन्तत् मोघं दृष्ट्वाऽस्त्रमद्भुतम् । प्रभावान्नन्दिकेशस्य वेपमानस्वरान्वितः ॥ २५
सहसाऽभ्येत्य नन्दीशं प्रणिपत्य व्यजिज्ञपत् । भगवन् शृणु शैलादे देवा विष्णुपुरोगमाः ॥ २६
दूरपन्नभयत्रस्ताः विध्वाधिकमुपाश्रयन् । श्रुत्वा स्वामी न विज्ञप्तिं आर्तिस्मोऽभ्यन्तरश्च तान् ॥ २७
शृण्वन्तु वचनं देवाः शूरपद्माऽसुरोऽत्रमाम् । आराध्य स भावेन चिरकालमनन्यधीः ॥ २८
प्रसेदिवानहं तस्मै प्रादां वरमनुत्तमम् । भव पूज्योऽसुराणां त्वं अण्डानां च सहस्रकम् ॥ २९
शाधि चाष्टोत्तरं दैत्य निस्सपत्नं ममाज्ञया । उभाभ्यामनुज्ञाभ्यां त्वं वरमन्यद् वृणुष्वमत् ॥ ३०
यदिष्टमद्य तस्माद् दास्यामि सकलं तव । उक्ते मयि पुनश्चायं प्रणम्य दनुसंभवः ॥ ३१

अपृच्छदहमन्यच्च भावयुक्तेन चेतसा ।
असुरः— देव देव महादेव करुणाकर शंकर ॥ ३२

यदानेक शौण्डस्त्वं महादेव दयानिधे । स सुरासुर लोके यत् आधिपत्यं प्रदास्ति यः ॥ ३३
स्वामिनस्तारकपालध्वं नान्यथा पुष्टिवर्धन । अचिप्रदोऽसि भगतां नमनामर्पितांह्रिभो ॥ ३४
ये भूता ये च भव्याश्च वर्तमानाश्च ये सुराः । जाते तवांगसंभूतात् भवप्योल भवाम्यहम् ॥ ३५
योदास्पदं तस्य मां च महेदीनाश्च स च । एवमादीनि संमन्त्र्य मया वरवरश्च सः ॥ ३६
तस्मादुपाय भो देवाः स्वामिनं जगतां गुरुम् । कुमारं सुकुमाराभं निहनिष्येऽसुराधमम् ॥ ३७

इत्युक्त्वाऽन्तर्हिते देवे मेरौ विबुधसत्तमाः । मां समाहूय संभूय प्रार्थयन्ति स्म ते सुराः ॥ ३८
शिवया योजयेशानं जगतामृद्धयेऽधुना । तपश्चरति सा देवी शैले देवाकलिन्दया ॥ ३९
स देवो राजते शैले दक्षिणामूर्तिं रूपधृक् । विवृणोति मुनीन्द्रेभ्यः सदार्थं वेदमूर्धगम् ॥ ४०
तयोरैक्य त्वया कार्यं अस्मद्रक्षाविधित्सया । आदिष्टोऽहं सुरैरेवं आगतोऽस्म्यनयाऽधुना ॥ ४१
त्वमेव कर्ता नन्दीश त्वं पिता त्वं पितामहः । गुरुस्त्वं करुणामूर्ते यद् बुद्धिं ममाधुना ॥ ४२
सूत. — गदित सुकुमारेण मारेण मुनिसत्तमाः । श्रुत्वा स्मृत्वा विभो राज्ञां नन्दीशो लोकवन्दित. ॥ ४३
व्याददे वचन भूयः मार सस्तिमादरात् । मत्तोपि त्व महाभाग मारैएतमर्हसितु' ॥ ४४
तत्प्रविश्य त्वमेवाशु कुरु कार्यं दिवौकसाम् । किन्तु तेद्य हित वक्ष्ये सावधानो भवात्वरः ॥ ४५
प्रविश्य पश्चिमद्वार मार्गेण प्रभुसन्निधिम् । यथेष्ट सुरकार्यं त्व कृत्वा स्वारश्रमवाप्नुहि ॥ ४६
इत्युक्तो नन्दिकेशेन रत्नाकामो महामना. । विलङ्घ्य दक्षिणद्वार पश्चिमद्वारमाश्रित. ॥ ४७
तस्यानुपदमभ्येत्य त्रिदशा दिवि सस्थिताः । तत्प्रविश्यालय मार. साक रत्याऽऽत्मजायया ॥ ४८
ददर्श देवमासीन दिव्ये वीरासने सुखम् । उपास्यमान योगीन्द्रैः योगिनं योगिवन्दितम् ॥ ४९
शुद्धस्फटिकसकाश भूषित भूषणै. शुभे । सिंहासनुत्तरासंग व्याघ्रचर्माम्बरावृतम् ॥ ५०
लोचनत्रयताराणा लक्षीकृतसमुन्नसम् । योगपट्टाभिरामं तं वेदवाचामगोचरम् ॥ ५१
निस्ताङ्कसमुद्भाभ नीलकण्ठ जगत्प्रभुम् । नित्याना नित्यमीशान चेतनानाच चेतनम् ॥ ५२
भासयन्तं सदाभासा' पावकेन्दुदिनाधिपान् । सर्वेज्ञं सर्वकर्तारं स्वतन्त्रमपराजितम् ॥ ५३
महतोऽपि महीयासं अणीयासमणोरपि । समस्त साक्षिण देवं परस्तात्तमसः स्थितम् ॥ ५४
सर्वैश्वर्येण संपन्न शम्भुमाद्य सनातनम् । अयुग्माक्षन्तताभूत अधृष्यं मनसापिवा ॥ ५५
आसन्नदेहपाऽतोय सनवाहु' सलाघसात् । नालक्षयच्छर चाप स्वहस्ताच्च्युतमात्मभू ॥ ५६
देवस्य महिमाद्येव एजन्ते येन जन्तव । रतिस्तमीशमालोक्य परां चिन्तामवाप सा ॥ ५७

इति महापुराणे स्कान्दे शङ्करसहिताया शिवरहस्यखण्डे
सम्भवकाण्डे दशमोऽध्याय. ॥

---

॥ एकादशोऽध्याय. ॥

रति — अहो धिगार्यपुत्रोऽयमनार्यकरणोद्यत । कथ गमिष्यति स्वस्ति भूयादस्मै महेश्वरात् ॥ १
किमर्थमागतो मौर्ख्यात् विलङ्घ्य वचन मम । क्षेमेणव निवृत्तश्चेद् मातासुतामुमर्चये ॥ २
नाकिश्वरोऽस्य निकटं गतो भूयो निवर्तते । देवदेवस्य देवस्य यमोऽपि किमुतापरे ॥ ३
अथ क्षणेन निर्मुक्तमोहः पञ्चशरस्तदा । पुनश्चादाय सदार वेपमानदशरासनम् ॥ ४
शनैर्निलिल्ये सन्निधे नमेरुतरुमण्डले । सज्ज कृत्वा सचकित धनुस्सम्मोहनाह्वयम् ॥ ५
सन्धाय तत्र त लक्ष्य अलक्ष्य योगिनामपि । कृत्यापि महतीं चिन्ता नाकिनो मा पिनाकिनि ॥ ६
किमर्थं प्रेषयामासु दुष्ट कर्म ममेदृशम् । वाम चक्षुश्च बाहुश्च मपहासि स्फुरत्यहो ॥ ७
कथ भविष्यति क्षेमं सयुगे त्रिपुरद्विष । तच्चिन्तु तथासर्व जीवामि यदि वा म्रिये ॥ ८
नेत्रानन्दकर देव नेत्राभ्यामैक्षिषि प्रभुम् । तस्माद्भाग्यवता मध्ये भाग्यवानहमेव हि ॥ ९

इति तस्मिन् प्रजपति संमोहनमहामनुम् । तत प्राञ्जलय सर्वे देवा विष्णुपुरोगमा ॥ १०
स्वस्तिकामाय कामाय स्वस्तीति मनसाऽजपन् । मण्डलीकृतकोदण्ड नमेरतरुषण्डगम् ॥ ११
सर्वेशस्य ततस्तस्य सर्वेशस्य दयानिधे । तृतीयाद्दक्षिणः कोणात् कीलो जात कृशानवणु ॥ १२
भस्मीचकार सहसा महिषाक्षाणुपुञ्जवत् । मोहेन सा रतिर्नैव विवेद पतिपञ्चताम् ॥ १३
अथ धूम समुद्भूत कपोतगळकर्बुर । ददृशे विविधद्वृन्दे दिवि दुर्गन्धदुस्सह ॥ १४
तदैव सर्वदेवाना जज्वाल जठरेऽनल । गिरा जयजयेतीश जजल्पुर्दिविसंस्थिताः ॥ १५
संमोहनास्त्र सहसा स्वयमेव धनुश्च्युतम् । देवस्यासह्यहुंकारात् निवृत्त गिरिजाप्रति ॥ १६
कैलासाद्धिमशैलेन्द्र क्षणेनगिरिजाप्रति । तामाक्षिणोऽदहद्दृढ विशीर्णवपुषोऽस्यतत् ॥ १७
शिवामुद्दिश्य तेनैतत् मुक्त यत्पुष्पधन्वना । तयोरेकतर स्पष्ट्वा ता दुरस्ता जघानतत् ॥ १८
पतत्सर्वमजानान किल देवो मुनीश्वरे । व्याख्यामुद्रालसद्बाहु आस्ते तूर्णी यथा पुरा ॥ १९
ततस्त्रिदशमुख्यास्ते शक्रविष्णुपुरोगमा । अवरुह्य गिरेश्शृङ्गे कैलासस्यास्तुवन्विभुम् ॥ २०
प्रणम्य सर्वेश्वर सर्वज्ञ सर्वकारणम् । बद्ध्यन्तोऽञ्जलिं मूर्ध्नि कामारिं कामितार्थदम् ॥ २१

देवा —

यतो जाता इमे येन जाता जीवन्ति जन्तव । यस्मिन् प्रजन्ति विलय यस्तु न तनुते स्मृतिम् ॥ २२
अनुगृह्णाति तान् सर्वान् तस्मै तुभ्यमिद नम । यतो वाचो निवर्तन्ते मनसा न्यैस्तु धीन्द्रियै ॥ २३
यदानन्दोऽपि तत्तादृक् ईशायेत नमोऽस्तु ते । असिद्धार्थानि यस्येमान्यायुधानि जगत्त्रये ॥ २४
स्मर्तव्यात्माऽस्तो येन मारस्तसाहृदनम । य आनन्दमयोऽभ्यासात् आनन्दप्रचुरो यत ॥ २५
आनन्दानन्दविन्नैव बिभेत्यस्माद नमः । त्रयीमूल त्रयीचक्र त्रयीमण्डलमध्यग ॥ २६
त्रयीसार नमस्तुभ्य नीलग्रीवाय ते नम । यतो जन्मलयौ यस्मिन् येनानन्दि जगत्त्रयम् ॥ २७
ततस्सखलुरैश्वर्य सर्वोरुद्रो नमोऽस्तु ते । इद सदेवसोम्याग्रे यदीयलक्षणाश्रुति ॥ २८
महएवेति तत् ब्रह्मपुरुष सन्महो नम । सत्य ज्ञानमनन्त च ब्रह्मेतियद्विशाश्रुति ॥ २९
सैवर्त सत्यमित्याह यमस्ताक नमोऽस्तु ते । चिदचिद्विश्वजगदस्य शरीर यन्नियामकम् ॥ ३०
विश्वाधिकाय पतये जगता प्रभवे नम । नम परमकल्याणनिधये परमात्मने ॥ ३१
हार्दाय सर्वजन्तूना तुभ्य भूमाय ते नम । त्वयि वाराशिधौ देव शीकरा स सुरासुरा ॥ ३२
रक्ष रक्ष सदासाम्ब प्रसीद सतत प्रभो । स्तुवत्सु विबुधेष्वेव अ त पुरगत शिव ॥ ३३
नन्दिन सविध प्राप्त समालोक्येदमब्रवीत् । कोऽय कोलाहलो नन्दिन् केनवा समुदीरित ॥ ३४
किमर्थमिति सपृष्टो नन्दी प्रोवाच साञ्जलि ।
नन्दिकेश्वर — भगवन् विबुधास्सेन्द्रा सब्रह्ममधुसूदना ॥ ३५
असुरैरर्दितास्तूर्णं आगतास्त्वशरण प्रभुम् । चिराय जगतामीश दर्शनाकाङ्क्षिण प्रभो ॥ ३६
तत प्रोवाच त देव प्रवेशय सुरानिति । तच्छ्रुत्वा सहसा पुत्र शिलादस्य महामुने ॥ ३७
निर्गत्य सहसा देवान् आहूय सहसाऽऽविशत् । ते सर्वे सहसा देव प्रणेमु भक्तिभाविता ॥ ३८
तानालोक्य महादेव प्रोवाच वचन त्विदम् । सुप्रीतोऽस्म्यनया स्तुत्या वृणीध्व मनसीप्सितम् ॥ ३९
युष्माभिर्यत्कृत स्तोत्र इद हृद्यतम मम । ये पठन्ति च शृण्वन्ति मनुष्या वीतकल्मषा ॥ ४०
लभन्ता ते स्वर्द्धापि कामानपिच दुर्लभान् । पुत्रार्थी लभता पुत्र कन्यार्थी कन्यका शुभाम् ॥ ४१

पशुकामः पशूर्न्विद्याकामो विद्यामवाप्नुयात् । स्वर्गार्थी लभते स्वर्गं मोक्षार्थी मोक्षमाप्नुयात् ॥ ४२
महापातकिनोवापि शुद्धात्मानो भवन्ति ते । बहुनाऽत्र किमुक्तेन मत्प्रियास्ते न संशयः ॥ ४३
इत्येवं श्रुतिसुखमीश्वरस्य देवा विष्ण्वाद्या वचननवामृतं निपीय।
हृष्यन्तःकरणविकासिताननाब्जाः विश्वेशं पुनरपिते प्रणेमुरीशम् ॥ ४४

इति महापुराणे स्कान्दे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकादशोऽध्यायः ॥

॥ द्वादशोऽध्यायः ॥

रतिप्रलापः शिवेन पार्वतीपरीक्षा च ॥

ततस्त्रिदशवर्यास्ते सर्वे संभूय शङ्करम् । पूर्वप्रोक्तं कुमारस्य संभवं भीतिनाशनम् ॥ १
प्रार्थयामासुरानम्य भवं भवभयापहम् । ततः स्तवन्वचो देवो बभाष बहुमानतः ॥ २
उत्पत्स्यते वः कामोऽयं कश्चित्कालं प्रतीक्ष्यताम् । अचिरादिति तान् देवान् विससर्ज जगत्पतिः ॥ ३
एतस्मिन्नन्तरे कामवधूर्मोहवशं गता । नवेद क्षणमात्रं सा पतिं नेत्राग्निसात्कृतम् ॥ ४
हा नाथ जीवसीत्याशु प्रबल्योत्थितया तया । कणशः कणशो भस्म समालोकि नभःस्थले ॥ ५
ततः सा बहुशोकार्त्ता विलुठन्ती धरातले । विकीर्णमूर्धजाभाथ विललापाकुलेन्द्रिया ॥ ६
अयि नाथ विशालाक्ष तवांगमतिसुन्दरम् । । जगत्सु सुकुमाराणां उपमानं क्वागतम् ॥ ७
अहो विधे न जानासि मामनाथामनागसीम् । किमर्थं मामजीथाः किमयं बध्यते त्वया ॥ ८
माता न मे पिता नैव भ्राता नैव सुहृन्मम । का गतिर्मे वद विधे कुटुंबस्य त्वमेवहि ॥ ९
अयि मां क्व पराधीनजीवितां त्यक्तसौहृदः । विहाय विद्रुतोऽसित्वं निस्स्नेहवंधुजनंबुवत् ॥ १०
अपराद्धं मयाकिंते त्वया मह्यं नकिंचन । अकस्माद्दर्शनं मह्यं विलपन्त्यै नदीयते ॥ ११
वन्धनं मेखलादाम्ना त्वं गोत्रस्खलितेषु ते । नूनं स्मरसि सर्वतत् क्षमस्वाज्ञानतःकृतम् ॥ १२
क्षमस्व तच्च मे कान्त स्वकर्णोत्पलताडनम् । मम त्वं हृदये नित्यं वससीति मृषावचः १३
न सत्य यदि तत् सत्यं त्वयि दग्धे न मे क्षतिः । अस्माल्लोकादमुं लोकं प्रस्थितस्य तवाधुना ॥ १४
पदवीं प्रतिपद्येऽहं विधिना वंचिता मुधा । अथाहमनुयामि त्वा यदि कांत त्वया विना ॥ १५
स्थिता क्षणार्धंवा धिङ्मां वचनीयस्य भाजनम् । प्रतिपद्य वपुःकान्तं उत्थितः पुनरादिश ॥ १६
रतिदूत्ये परभृतो मधुरध्वनिपेशलान् । त्वया कृतमिदं मेऽङ्गे मण्डनं पौष्पमार्तवम् ॥ १७
दृश्यते न त्वमद्येत्य कथमीशेन शासितः । दारुणैर्विबुधैर्द्य प्रेषितोऽसि हरान्तिकम् ॥ १८
अन्यायेन चतुराः अगाधपरिशोधकाः । तदानीमेव बहुशो निषिद्धोऽसि मया प्रिय ॥ १९
श्रुतवानसि मे वाक्यं ब्रह्मशापभयात् किल । यत्र मूर्धा पतेद्यस्य तत्र पादो न गम्यते ॥ २०
जानाति नैव शकुनं स्त्रीमात्रवचनान्यपि । गणयन्त्येव नोमूढाः बलाद्दैववशानुगाः ॥ २१
इत्येवं लोकवादोऽत्र दृष्टः प्रत्यक्षतो मया । अथवा सर्वजन्तूनां शास्ता रुद्रो हृदिस्थितः ॥ २२
तत्संकल्पवशेनैव सर्वे धावन्ति जन्तवः । वात्यावायुवशेनेव तृणजातानि सन्ततम् ॥ २३
अनाथाया गतिर्मेऽद्य स एव जगतांपतिः । पिता पितॄणां मातॄणां माता मातामहोऽपि सः ॥ २४
तत्पादकमलद्वन्द्वं शरणं यामि सन्ततम् । एष देवो जगन्नाथो मन्मथेन गतांगतिम् ॥ २५

कृपया प्रापयेन्मां च कृपापारान्निधिः प्रभुः । अथवा भूय एवेशः पुनरुज्जीवयेत् स्मरम् ॥ २६
शक्तोऽसौ शक्तिमान्कर्तुमकर्तुमथवा प्रभुः । अन्यथाकर्तुमीशोऽसौ आत्मनां परमेश्वरः ॥ २७

सुस्वरं प्रलपंत्येव करोदोरः प्रहत्यसा । तस्याः शुश्राव देवेशः परिदेवनवर्णकान् ॥ २८
पप्रच्छ किमिदं चेति नन्दिनं कुलनंदिनम् । विज्ञापयामास तदा प्रश्रयेण स शंभवे ॥ २९
इदानीमागतः स्वामिन् कामस्साकं स्वभार्यया । योद्धुकामो जगद्वन्द्यं देवैस्संचोदितोऽधुना ॥ ३०
प्रभुं दृष्ट्वैव निर्दग्धः कर्मणा स्वेन शंकर । ततः सा तेन दुःखेन कुर्वन्ती परिदेवनम् ॥ ३१
कामपत्नी रुदत्यार्त्ता प्रसीद करुणानिधे । इति तां दर्शयामास शंभवे नंदिकेश्वरः ॥ ३२
सा प्रणम्य तदा देवं पितरं जगतां पतिम् । असंयोजितधम्मिल्ला वेपमानाश्रुलोचना ॥ ३३
दीनानना धूसराङ्गी निपतन्ती पदेपदे । प्रभुस्तां तादृशीं वीक्ष्य कृपया परयान्वितः ॥ ३४
उवाच सनकादीनां पश्यतां तत्र तां स्मयन् । मा त्वं वत्से शुचं गच्छ मत्वं द्रुहाति स्वत्पतिः ॥ ३५

यद्यप्यस्तु तवप्रीतः पतिनिमित्तेन सुव्रते । पतिमुज्जीवयिष्यामि कश्चित्कालः प्रतीक्ष्यताम् ॥ ३६
सांत्वयित्वेति तां भूयः सनकादिमुनीश्च तान् । भावयिध्वं सदा यूयं एवं मामधुनाह्यहम् ॥ ३७
गच्छामि देवकार्यार्थं इत्युक्त्वान्तर्दधे शिवः । एतस्मिन्नंतरे देवी पार्वती जगदंबिका ॥ ३८
तप उग्रं समास्थाय दध्यौ शिवमगात्मजा । तेनाशु दृष्टतपसा भक्तिं तस्याः परीक्षयन् ॥ ३९
ययौ जगदधीशानः तस्या आश्रममश्रमः । दधज्जीर्णं वपुर्विप्रं पलितापघनं घनम् ॥ ४०
सिराझर्झरितात्मांघ्रियुगळं प्रस्खलत्पदम् । अत्युन्नतस्तुपक्ष्योक च्युतवासोविलक्षकम् ॥ ४१
निम्ननाभीह्रदलसत् पिचण्डिल वलित्रयम् । उन्नतोरोलसल्लोल कंपमानपयोधरम् ॥ ४२
ब्रह्मसूत्रजटाकीर्णं लताभिरिव भूधरम् । धवलश्मश्रुलंविभ्रूवदनं सितपक्ष्मळम् ॥ ४३

शारदांभोद संवीत चन्द्रमण्डल सन्निभम् । सुनासंच सुवर्णश्च विदन्तास्यं चलच्छदम् ॥ ४४
अतिस्वल्पशिखं चारु पलितश्वेतमूर्धजम् । ईदृशं वपुरास्थाय भस्मपाण्डुरविग्रहः ॥ ४५
त्रिपुण्ड्रावळिभिर्दांतो रुद्राक्षस्रगलंकृतः । अवलंब्य दृढां यष्टिं वैणवीममलाशयः ॥ ४६
अधीयानस्सदा वेदं अत्युपतकळेवरः । वयोतिपात वातार्त्तकटिवाहूरुसन्निधकः ॥ ४७
प्रविश्योमाश्रमं वृद्धो मन्दं मन्दगतिः स्मयन् । तां तादृशीं तपस्यन्तीं मुनिर्ध्यापिच योगिषु ॥ ४८
दृष्ट्वा प्रणम्य दृष्टेषु निर्गतेषु शनैःशनैः । लब्धातिथ्येषु सर्वेषु स्वयं च परमेश्वरः ॥ ४९

वृद्ध त्वं वदतां सम्यक् वेदानामर्थमर्थयन् । वृद्धो विवेश शनकैः द्रष्टुकामः किलाद्रिजाम् ॥ ५०
पर्णशालागुमावेश्याः अपर्णायास्सखीजनम् । अपश्यत्तत्र ता वृद्धं पितरं मुनिपुङ्गवम् ॥ ५१
तूर्णं निश्युरुमादेभ्याः निशान्तं पत्रनिर्मितम् । प्रत्युद्गम्य तदा देवी पाद्यार्घ्याचमनीयकैः ॥ ५२
भक्त्या दत्तासनावृद्धं उपचारैरुपाचरत् । तालवृन्तानिलैस्तस्य श्रमांबु समुपाहरत् ॥ ५३
परिश्रमं विनीयैव वर्षीयान् क्षणमात्रतः । उमां सवचनं प्रेक्ष्य बभाण मुनिपुंगवः ॥ ५४
आर्ये सुवदनास्येषा त्वं दृष्टा वरवर्णिनी । अहो सर्वानवद्याङ्गी नगराजतपःफलम् ॥ ५५
कच्चित्ते कुशलं भद्रे कच्चित्ते कुशलं तपः । कच्चित्त्वदायस्त्या तपसि प्रकृष्टासि वरानने । ५६
शरीरं रक्ष कल्याणि धर्माणामेकसाधनम् । न शरीरं विना लोके किञ्चिदस्ति सुखं शुभे । ५७
जलान्यपि स्नानविधिक्षमाण्यपि शुभे वद । इदं सुमहदाश्चर्यं यदध्रुवमिदं वपुः ॥ ५८
दुर्लभं प्राप्य लोकेस्मिन् श्रेयो न कुरुते जनः । त्वं तु राजसुता बालाऽनवद्यांगी सुयौवना ॥ ५९

तथापि च तपोवृद्धा तपसा यथकर्थंह । धर्मवृद्धासि गिरिजे जगता जननी ध्रुवम् ॥ ६०
ऋषयस्त्वा नमस्यन्ति देवाश्च यमिनावरा । किं तु मे प्रतिभासित्व तपसा भावितात्मनः ॥ ६१
कमपि ध्यायसीयाश्च पुमांस प्रतिभातिमे । सत्य वद महाभागे सत्यसाराहि साधव ॥ ६२
अनन्य भाव विप्यन त्वाच द्रष्टुमिहागतम् । तदत्र स्वकलज्जा त्व यद सव यथा तथम् ॥ ६३
जयातिभानसम्भूतपलितेन मयाद्य यत् । पृष्ट तत्ररहस्य चेत् वद सुभ्रु क्षम यदि ॥ ६४

इति वाक्यमीशितुरुमापतेरवधार्य नम्रवदना निरीक्ष्य तम् ।
मुहुरेजमानहृदयास्यतेजसा न विवेद सा क्षपामनु स्वमप्यहो ॥ ६५

इतिश्रीस्कान्दे महापुराणे शाकरसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे द्वादशोऽध्याय ॥

---

॥ त्रयोदशोऽध्यायः ॥

वृद्धरूपिणा श्री शिवेन देव्या सह विवाद ॥

सूत —

ततश्चित्त समाधाय तस्मिंस्त प्रेमकातरम् । जयाच विजया सख्याचादिदेश दृशा मुदा ॥ १
युवां कथयत सख्यौ कारण तपसो मम । एष विप्रवर श्रीमान् नैकया कलयाऽन्वित ॥ २
एन विदितवृत्तान्त कुरुत महित द्विजम् । इति देवीदृशाऽऽज्ञप्त जयाच विजयाच ते ॥ ३
आज्ञायैव प्रसाधान्तेवासि यावित्र विष्टित । समुखीन मुख कृत्वा प्रक्रमेते निवेदितुम् । ४
शृणु तात द्विजश्रेष्ट पदन्ति त्वा कथ सुता । आवापौत्रियौ स्वभावेहि कृपा श्रृण्वत्र नौ वच ॥ ५
य कारणमिद दृष्या नीत कार्श्य वपुः शुभम् । सख्यौ — इय हिमगिरीन्द्रस्य तनया विदिता त्वया ॥ ६
रूपलावण्यसपन्ना शीलाचारगुणान्विता । त्रियवक जगद्वन्द्य सुगन्धि पुष्टिवर्धनम् ॥ ७
मृत्युञ्जयमनाद्यन्त सुमगळमज शिवम् । युवान पुरुषश्रेष्ठ सर्वमगळदायक ॥ ८
आत्मनोपि सखी सर्वमगळार्थमभीप्सति । पतिमाप्तुमुचाहेच्छा जगतापतिमात्मन ॥ ९
श्रुतागमपुराणैश्च त्वादृशेभ्य पितामह । पितुर्गेहेपु बालैषा ध्यायन्तीशाङ्घ्रिपकज ॥ १०
नशर्मलेभे य स्मृत्वा प्राप्नुवन्ति सुख जनाः । तन्नामजप्यनिरता तत्कथाश्रवणोन्मुखी ॥ ११
तन्मय च जगत्सर्व पश्यन्ती ध्यानचक्षुषा । औत्सुक्यमाप बहुळ उत्तरोत्तरमीश्वरे ॥ १२
दिवा वसन्ती सन्तापात् इय घारा गृहान्तरे । पल्लवास्तरणे रात्रौ जागर्त्येषा निर्पेदुर्षी ॥ १३
क्षणन्निद्रा गता बालाऽस्मरतारौ प्रतिक्षणम् । स्वप्ने दृष्ट्वा पति भूय प्रबुद्धा विललाप च ॥ १४
हे कान्त व्रजसि क्व इति गृह्णाति बाहुना । सर्वेऽपि च त्वा वेदान्ता रोदसी व्याप्यनिष्ठितम् ॥ १५
चिद्घनोऽपि पुरत्रांघा परिपूर्ण वदन्ति हि । कथ नवेत्सि भावस्थ जन जगदधीश्वर ॥ १६
अहो सुमहदाश्चर्य यदिमज्जनमीश्वर । नानुगृह्णाति जगता अनुग्रहकरः कथम् ॥ १७
इतीय काङ्क्षती शम्भो सगम चिरमद्रिजा । नैव लेभे यथा माता पितृभ्या विनिवेद्य सा ॥ १८
यथाविध सहासाभिः तपसेऽमु तदाश्रमम् । तपस्यन्त्याऽनया वृक्षा पृथुकायेऽधिरोपिता ॥ १९
तेऽपि सर्वे सदा पुष्पफलाढ्याः पृथुतागता । हरिणा पुत्रपौत्राद्यै आसन् बहुगुणान्विता ॥ २०
सर्वप्रभुस्तदा शम्भुः परिपूर्णस्सदाशिव । अस्यै नैवतु सान्निध्य चिंचाऽत्र कुरुतेऽद्भुतम् ॥ २१

कृपया प्रापयेन्मां च कृपावारान्निधिः प्रभुः । अथवा भूय एवेशः पुनरुज्जीवयेत् स्मरम् ॥ २६
शक्तोऽसौ शक्तिमान्कर्तुमकर्तुमथवा प्रभुः । अन्यथाकर्तुमीशोऽसौ आत्मनो परमेश्वरः ॥ २७
सुस्वरं प्रलपंत्येवं हरोद्देशे प्रह्वल्यसा । तस्याः शुश्राव देवेशः परिदेवनवर्णकान् ॥ २८
पप्रच्छ किमिदं चेति नन्दिनं कुलनंदिनम् । विज्ञापयामास तदा प्रश्रयेण स शंभवे ॥ २९
इदानीमागतः स्वामिन् कामस्साकं स्वभार्यया । योद्धुकामो जगद्वन्द्यं देवैस्संचोदितोऽधुना ॥ ३०
प्रभुं दृष्ट्वैव निर्दग्धः कर्मणा स्वेन शंकर । ततः सा तेन दुःखेन कुर्वन्ती परिदेवनम् ॥ ३१
कामपत्नी रुदत्यार्त्ता प्रसीद करुणानिधे । इति तां दर्शयामास शंभवे नंदिकेश्वरः ॥ ३२
सा प्रणम्य तदा देवं पितरं जगतां पतिम् । असंयोजितधम्मिल्ला वेपमानाश्रुलोचना ॥ ३३
दीनानना धूसराङ्गी निपतन्ती पदेपदे । प्रभुस्तां तादृशीं वीक्ष्य कृपया परयान्वितः ॥ ३४
उवाच सनकादीनां पश्यतां तत्र तां स्मयन् । मा त्वं वत्से शुचं गच्छ मह्यं द्रुह्यति त्वत्पतिः ॥ ३५
यद्यप्यस्तु तवप्रीतः पातिव्रत्येन सुव्रते । पतिमुज्जीवयिष्यामि कश्चित्कालः प्रतीक्ष्यताम् ॥ ३६
सांत्वयित्वेति तां भूयः सनकादिमुनींश्च तान् । भावयिध्वं सदा यूयं एवं मामधुनाह्यहम् ॥ ३७
गच्छामि देवकार्यार्थं इत्युक्त्वान्तर्दधे शिवः । एतस्मिन्नंतरे देवी पार्वती जगदंबिका ॥ ३८
तप उग्रं समास्थाय दध्यौ शिवमगात्मजा । तेनाद्भुततपसा भक्तिं तस्याः परीक्षयन् ॥ ३९
ययौ जगदधीशानः तस्या आश्रममश्रमः । दधज्जीर्णं वपुर्विप्रं पलितापघनं घनम् ॥ ४०
सिराझर्झरितात्मांघ्रियुगलं प्रस्खलत्पदम् । अत्युन्नतसुकक्ष्योरु च्युतवासोविलक्षणम् ॥ ४१
निम्ननाभीहृदलसत् पिचण्डिल वलित्रयम् । उन्नतोरोलसल्लोल कंपमानपयोधरम् ॥ ४२
प्रह्वस्त्रजटाकीर्णं लताभिरिव भूधरम् । धवलश्मश्रुलंबिभ्रूवदनं सितपक्ष्मलम् ॥ ४३
शारदांभोद संवीत चन्द्रमण्डल सन्निभम् । सुनासं च सुकर्णं च विदन्तास्यं चलच्छदम् ॥ ४४
अतिस्वल्पशिखं चारु पलितश्वेतमूर्धजम् । ईदृशं वपुरास्थाय भस्मपाण्डुरविग्रहः ॥ ४५
त्रिपुण्ड्रावलिभिर्दीप्तो रुद्राक्षस्रगलंकृतः । अवलंब्य दृढां यष्टिं वैणवीममलाशयः ॥ ४६
अधीयानस्सदा वेदं अत्युद्धतकलेवरः । कपोलिपात वातार्त्तकटिबाहुस्तनिचकः ॥ ४७
प्रविश्योमाश्रमं वृद्धो मन्दं मन्दगतिः स्मयन् । तां तादृशीं तपस्यन्तीं मुनिष्वपिच योगिषु ॥ ४८
दृष्ट्वा प्रणम्य हृष्टेषु निर्गतेषु शनैःशनैः । लब्धातिथ्येषु सर्वेषु स्वयं च परमेश्वरः ॥ ४९
वृद्ध त्वं वदतां सम्यक् वेदानामर्थमर्थयन् । वृद्धो विवेश शनकैः द्रष्टुकामः किलाद्रिजाम् ॥ ५०
पर्णशालामुमादेव्याः अपर्णायास्सखीजनम् । अपश्यत्तत्र ता वृद्धं पितरं मुनिपुङ्गवम् ॥ ५१
तूर्णं निन्युरुमादेव्याः निशान्तं पत्रनिर्मितम् । प्रत्युद्गम्य तदा देवी पाद्यार्घ्याचमनीयकैः ॥ ५२
भक्त्या दत्तासनावृद्धं उपचारैरपाचरत् । तालवृन्तानिलैस्तस्य श्रमांबु समुपाहरत् ॥ ५३
परिश्रमं विनीयैव वर्षीयान् क्षणमात्रतः । उमां सवचनं प्रेक्ष्य बभाण मुनिपुंगवः ॥ ५४
आर्ये सुवदनारवेषा त्वं दृष्टा वरवर्णिनी । अहो सर्वानवद्याङ्गी नगराजतपःफलम् ॥ ५५
कच्चित्ते कुशलं भद्रे कच्चित्ते कुशलं तपः । कच्चित्स्ववशवस्या तपसि प्रवृत्तासि वरानने । ५६
शरीरं रक्ष कल्याणि धर्माणामेकसाधनम् । न शरीरं विना लोके किञ्चिदस्ति सुखं शुभे । ५७
जलान्यपि स्नानविधिक्षमाण्यपि शुभे यद । इदं सुमहदाश्चर्यं यद्भुवमिदं वपुः ॥ ५८
दुर्लभं प्राप्य लोकेस्मिन् श्रेयो न कुरुते जनः । त्वं तु राजसुता बालाऽनवद्यांगी सुयौवना ॥ ५९

तथापिच तपोवृद्धा तपसा यश्चकर्षह । धर्मवृद्धासि गिरिजे जगतां जननी ध्रुवम् ॥ ६०
ऋषयस्त्वां नमस्यार्थे देवाश्च यमिनांवराः । किं तु मे प्रतिभासीयं तपसा भावितात्मनः ॥ ६१
कमपि ध्यायसीवाद्य पुमांसं प्रतिभातिमे । सत्यं वद महाभागे सत्यसारा हि साधवः ॥ ६२
अनर्घ्यं मां च विप्रं त्वां च द्रष्टुमिहागतम् । तदत्र त्यक्तलज्जा त्वं वद सर्वं यथा तथम् ॥ ६३
अधाक्रिमावसंभूतपलितेन मयाऽद्य यत् । पृष्टं तत्रहस्यं चेत् वद सुभ्रु क्षमं यदि ॥ ६४

इति वाक्यमीशितुरुमापतेरवधार्य नम्रवदना विलोक्य तम् ।
मुहुरेजमानहृदयास्यतेजसा न विवेद सा क्षणमनु स्वमप्यहो ॥ ६५

इतिश्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे द्वादशोऽध्यायः ॥

---

॥ त्रयोदशोऽध्यायः ॥

वृद्धरूपिणा श्री शिवेन देव्या सह विवादः ॥

सूतः —

ततश्चित्तं समाधाय तस्मिंस्तत्प्रेमकातरम् । जयांच विजयां सख्यावादिदेश दृशा मुदा ॥ १
युवां कथयतं सख्यौ कारणं तपसो मम । एष विप्रवरः श्रीमान् नैकया कलयाऽन्वितः ॥ २
एनं विदितवृत्तान्तं कुरुतं महितं द्विजम् । इति देवीदृशाऽऽज्ञप्ते जयाच विजयाच ते ॥ ३
आज्ञयेव प्रसादान्तेवासिन्याविव विप्रिते । संमुखीनं मुखं कृत्वा प्रक्रमेते निवेदितुम् ॥ ४
शृणु तात द्विजश्रेष्ठ वदन्ति त्वां कथं सुताः । आवांपौत्रियौ समाधेहि कृपां शृण्वद नौ वचः ॥ ५
यत्कारणमिदं देव्या नीतं कार्श्यं वपुः शुभम् । सख्यौ — इयं हिमगिरीन्द्रस्य तनया विदिता त्वया ॥ ६
रूपलावण्यसंपन्ना शीलाचारगुणान्विता । त्रियंबकं जगद्वन्द्यं सुगन्धि पुष्टिवर्धनम् ॥ ७
मृत्युंजयमनाद्यन्तं सुमंगलमजं शिवम् । सुधानं पुरुषश्रेष्ठं सर्वमंगलदायकं ॥ ८
आत्मनोपि सखी सर्वमंगलार्थमभीप्सति । पतिमाप्तुमुवाहेच्छां जगतांपतिमात्मनः ॥ ९
श्रुतागमपुराणेभ्य स्वादृशेभ्यः पितामह । पितुर्गेहेषु बालैषा ध्यायन्तीशांघ्रिपंकजं ॥ १०
नशर्मलेभे यं स्मृत्वा प्राप्नुवन्ति सुखं जनाः । तन्नामजप्यनिरता तत्कथाश्रवणोन्मुखी ॥ ११
तन्मयं च जगत्सर्वं पश्यन्ती ध्यानचक्षुषा । औत्सुक्यमाप बहुलं उत्तरोत्तरमीश्वरे ॥ १२
दिवा वसन्ती सन्तापात् इयं धारा गृहान्तरे । पल्लवास्तरणे रात्रौ आगत्यैषा निषेदुषी ॥ १३
क्षणनिद्रां गता बालाऽपररात्रौ प्रतिक्षपम् । स्वप्ने दृष्ट्वा पतिं भूयः प्रबुद्धा विललाप च ॥ १४
हे कान्त व्रजसि क्वत्वं इति गृह्णाति वाहुना । सर्वेऽपि च त्वां वेदान्ताः रोदसी व्याप्यनिष्ठितम् ॥ १५
विद्वांसोऽपि गुरवाचार्याः परिपूर्णं वदन्ति हि । कथं नवेत्सि भावस्थं जनं जगदधीश्वर ॥ १६
अहो सुमहदाश्चर्यं यदिमंजनमीश्वरः । नानुगृह्णाति जगतां अनुग्रहकरः कथम् ॥ १७
इतीयं कांक्षती शंभोः संगमं चिरमद्रिजा । नैव लेभे यथा माता पितृभ्यां विनिवेद्य सा ॥ १८
पयाविघं सहास्माभिः तपसेऽमुं तदाश्रमम् । तपस्यन्त्याऽनया वृक्षाः पृथुकायेऽधिरोपिताः ॥ १९
तेऽपि सर्वे सदा पुष्पफलाढ्याः पृथुतांगताः । हरिणाः पुत्रपौत्राद्यैः आसन् बहुगुणान्विताः ॥ २०
सर्वप्रभुस्तदा शंभुः परिपूर्णस्सदाशिवः । अस्यै नैवतु सांनिध्यं किंवाऽत्र कुरुतेऽद्भुतम् ॥ २१

त्वं तात परमेशान शीघ्रमस्मै प्रसीदतु । अनुगृहाण भो ब्रह्मन् सदक्षेन्दु यथार्हसि ॥ २२
उक्त्वोपरेमतुस्सर्वौ जयाच विजया च सा । ततः स भगवान् वृद्धः विहस्यास्फोटयत् करौ ॥ २३
उमामुग्र समालोक्य सत्यमेव वदाद्रिजे । परिहासमुताहोस्वित् भवत्या सख्युदीरितम् ॥ २४
श्रुत्वाऽस्य वचनं देवी वृद्धस्य जगतां गुरोः । अद्रिजा जगतां माता वृद्धं ब्राह्मणमब्रवीत् ॥ २५

देवी —

भो भो ब्राह्मण सर्वज्ञ तातवृद्धमहामते । इदमेव सुदुष्प्रापं प्रार्थयामि शिवं सुरैः ॥ २६
तत्प्राप्तिसाधनं ब्रह्मन् तपः किल भवेदिदम् । मनोरथोऽयमेवैष गतिरस्य न हन्यसे ॥ २७
अहं तु बालिशा बाला क्वासौ वाचामगोचरः । तथाऽपि भक्तवात्सल्यमीशस्येति जगुस्सुराः ॥ २८
अनुगृह्णीष्व मे शम्भुः प्रसीदेदिति भो द्विज । इति तस्या वचः शृण्वन् शिरः स्वं कम्पयन् मुहुः ॥ २९
अहोकष्टमहोकष्टमार्यापि गिरिसम्भवा । यद्द्रष्टुमनिर्देश्यं चकमे लोकनिन्दितम् ॥ ३०
ईदृशी बुद्धिरुत्पन्ना ननु ते केन चोदिता । अनुमन्तुमहं नैतद्दुःसहे मनसाऽपि वा ॥ ३१
त्वया च सर्वानवद्याङ्गी तथावै सर्वमङ्गलाम् । श्मशाननिलयं रुद्रं सर्पभूषं कपर्दिनम् ॥ ३२
त्वगस्थिभूषणं भीमं भूतप्रेतावृतं सदा । विचार्य सूक्ष्मया बुद्ध्या खिद्यते मे मनो भृशम् ॥ ३३
प्रथमं शृणु तन्वङ्गि दम्पती कोमलाकृती । भद्रासनार्हा त्वं तेन कथं स्यास्स्वपरस्मृतौ ॥ ३४
पट्टसूत्रप्रतिसर बन्धनार्हासि शोभने । सफूत्काराहिशीतांगबन्धनं सहसे कथम् ॥ ३५
सर्वासां क्रियते लोके हेम्ना माङ्गल्यतन्तुना । कण्ठे बध्नाति सुभगे शूलीकालाहि मङ्गलम् ॥ ३६
वधूर्दुकूलवसनं परिधत्ते वरार्पितम् । त्वं तु चर्मद्रवद्रक्तं सैभं वैयाघ्रमेव च ॥ ३७
परीतो दम्पती लोके हुत्वा लाजान् हविर्भुजि । त्वं तु तेन चितावह्नेः प्रदक्षिणकृतोत्तमा ॥ ३८

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे त्रयोदशोऽध्यायः ॥

---

॥ अथ चतुर्दशोऽध्यायः ॥

श्रीपार्वत्यै श्रीशिवेन निजरूपदर्शनम् ॥

मत्तवारणमारूढौ दम्पती द्विजपुङ्गवैः । स्वस्तिवाचनकैस्तूर्यैः स्तुवन्ति किल वन्दिनः ॥ १
युवा वृद्धोक्षमारूढौ भूतवेतालसेवितौ । निरीक्ष्य जनता लोके सैरयपना भविष्यति ॥ २
अन्यच्च शृणु चार्वङ्गि त्वदीयो निर्गुणो वरः । लौकिकं च न जानाति नग्नो विरतलक्षणः ॥ ३
श्मशाननिलयोऽत्यर्थं चर्मास्थ्युरगभूषणः । अपस्मारमधिष्ठाय विकीर्यैव जटाच्छटाः ॥ ४
विभ्रदग्निं च डमरुं नानर्ति प्रेतकानने । परेतं भूतवेतालं करतालं लयानुगः ॥ ५
इत्यान्येतानि नान्यस्मिन् लोके सन्ति वरानने । वरस्यन्य लोकेऽस्मिन् बन्धुलक्षणं शीलवान् ॥ ६
विद्याधनसमृद्धात्मा कुलीनो रोगवर्जितः । नविद्यते निम्नमप्यस्मिन् त्रिलोके पश्य सुन्दरि ॥ ७
न वच्मि भवतीमत्र वच्मि ते मातरं गुरुं । यौ त्वामयथा नैव निवारयत ईदृशीम् ॥ ८
किन्तु सर्वकलाभिज्ञ रुद्रोऽसौ विदितो मया । येनैतादृशमप्येव मुनयः पर्युपासते ॥ ९
सा त्वं च पतिता हस्ते तस्य माया विनोदतः । अहो सख्यौ किमितिवां सखीयं न निवार्यते ॥ १०
किन्तु वच्मि हितं तथ्यं रुद्राणो परोक्षम् । वृद्धोऽपि गुणवान् शीली सदाचारवतां मतः ॥ ११
सर्वविद्यासु लोकेऽस्मिन् संख्यायामैव भारदा । धर्माश्चर्येण सम्पन्नः नमस्तो विद्यते भुवि ॥ १२

तं त्वं प्रार्थयसे भ्रान्त्या प्रार्थये त्वामहं सदा । त्रियम्बकः सखा तूर्णीम् कुबेरस्य धनैरहम् ॥ १३
सखा सर्वस्य लोकस्य स्वाश्रितस्य यशस्विनि । दास्याम्यभीष्टमनिशं धनिनोऽपि धनी ह्यहम् ॥ १४
महास्यनिरतानां हि गेहे ताः कामधेनवः । तद्गृहारामनिलयाः स्वर्भूमिरुहपद्क्तयः ॥ १५
अतोऽत्र सर्वमालोच्य मां वृणीष्व वरानने । अहं तु तपसा नित्यः वृद्धोऽपि च युवाऽप्यहम् ॥ १६
मत्तोऽन्यं रुद्रमतवे न मानय गिरा गुणम् । उद्गत्यैक्षत मुखं देव्याः किंचित् स्मेराननो विभुः ॥ १७
इति वृद्धवचः श्रोत्रे कृत्वा कोपपरिप्लुता । कर्णौ पिधाय सहसा दृष्ट्वा तं पृष्ठतो द्विजम् ॥ १८
अयि वृद्धोऽसुरः कश्चिदागतो मत्तपोवनम् । अथवाऽऽगो मयापूर्वं कृतं किंवाऽन्यजन्मसु ॥ १९
तदिदं मूर्तमाहोस्वित् विघ्नोऽयं केन निर्मितः । निवार्यतामालिपुनः विवक्षुः वृद्धपुरुषः ॥ २०
च्युतात्मनाप्यनेनेशं एकं प्रति सुभाषितम् । गुणत्रयपथातीतः तमःपारे प्रतिष्ठितः ॥ २१
आदित्यवर्णो भगवान् निर्गुणः स त्वयेरितः । अस्तु सर्वं त्वयोक्तं यत् पिशाचाक्रान्तच्युतात्मना ॥ २२
ब्रह्मा विष्णुश्च भगवान् आद्यन्तं नोपलब्धवान् । यस्य सर्वेश्वरस्यास्य को वेद महिमालयम् ॥ २३
कथं वा ज्ञायते शंभुः त्वया वृद्धेन विभ्रमाः । निवार्यतामसावालि वृद्धः पलितमूर्धजः ॥ २४
पुनर्विवक्षुर्यत्किञ्चित् प्रस्फुरद्दशनच्छदः । क्वायं वृद्धो द्विजोऽविद्वान् क्व सर्वज्ञो महेश्वरः ॥ २५
भुवमेव पुरा शाप मध्यगो गौतमस्यदि । दधीचवदाप निर्दग्धस्त्वयथा नात्र संशयः ॥ २६
अथवाऽसौ तपो विघ्नः मूर्तिमान् सत्यमद्भुतम् । आत्मानात्मविवेकघ्नः वर्षीयानपि रोगवान् ॥ २७
1 न गच्छेत्साहसी वृद्धः वारितोऽपि पतिष्यति । इतो गमिष्याम्यधुना नास्याग्रे स्थातुमक्षमा ॥ २८
इति क्रुद्धतरा देवी गन्तुमैच्छत् पराङ्मुखी । ततः प्रसन्नो भगवान् स्मयमान मुखाम्बुजः ॥ २९
स्वं रूपमास्थितो देव्याः प्रादुरासीत् पुरः प्रभुः । नीलकण्ठो विरूपाक्षः नित्यो नित्यं मनोहरः ॥ ३०
देववृन्दकरोन्मुक्त पुष्पवृष्टि समुज्ज्वलः । प्रोवाचार्धोऽनवद्याङ्गि त्वदीय तपसा ह्यहम् ॥ ३१
क्रीतोऽस्मि वद किं तेऽद्य ददानि वरमुत्तमम् । इति वादिनि देवेशे शंकरे भवभेषजे ॥ ३२
अह्नाय सा नियमजं क्लेशमुत्सृज्य पार्वती । सकंपपरोमांच हर्षगद्गदया गिरा ॥ ३३
प्रणम्यांघ्रिपद्मयुगलं देवं तुष्टाव साञ्जलिः ।
देवी — यमाहुरेकं पुरुषं वेदान्तेषु . विचक्षणाः ॥ ३४
व्याप्य तिष्ठति यो रोदः कुहरं ते नमोनमः । यत् पादकमलद्वंद्व ध्याननिर्धूतकल्मषाः ॥ ३५
प्रापुर्निर्भया मुक्तिं तस्मै तुभ्यं नमोनमः । यत्कृपादृष्टि दृष्टानां न मोहो नापि दुष्कृतिः ॥ ३६
भवन्ति ते जगद्वन्द्याः तं त्वामीशं श्रितास्म्यहम् । यं विनिद्रा जितश्वासाः शान्ता भक्तिसमन्विताः ॥ ३७
ज्योतिर्मयं प्रपश्यन्ति तं त्वामीशं श्रितास्म्यहम् । अनुगृहाण देवेश त्वमङ्गीकृत्य मां प्रभो ॥ ३८
भक्तार्तिघ्नो महादेव प्रतीतो भुवनत्रये । भक्ता तेऽहं दयासिन्धो मां मदङ्गीकुरु प्रभो ॥ ३९
इति तत् स्तुतिसन्तुष्टः प्राह मुग्धेन्दुशेखरः । गृह्णामि तेऽद्रिजे पाणिं श्वस्समेत्य महोत्सवे ॥ ४०
त्वत्पितृभ्यामनुज्ञातः सुरसिद्धनिषेवितः । इति दत्वा वरं शंभुः कैलासमगमाद्ययत् ॥ ४१
तत्र सप्तऋषीनीशः सस्मार स्मरशासनः । स्वमेव सभाव्यतः मनसा मुनिपुंगवान् ॥ ४२
स्मरणाद्देवदेवस्य ते प्रापुः सन्निधिं विभोः । त्वरयाऽवतन्तस्ते दृष्ट्वा देवाधिनायकम् ॥ ४३
छायाकृत्यमज्ञानतः विवशेनान्तरात्मना । इदमूचुरनूचानाः गृणन्तो ब्रह्मशाश्वतम् ॥ ४४
किमिदं येन सृजसि येन पालयसि प्रभो । अत्सि येनानुगृह्णासि यदेतद्रूपमीश्वर ॥ ४५
निष्पापानक्रियस्त्वं हि कलावानपि निष्कलः । निरवद्योपि रूपस्थे नीलकण्ठो निरञ्जनः ॥ ४६

सदाशिवोऽसि नित्यत्वान्निर्मलत्वाच्च विश्रुत । त्वमेकोसि परब्रह्म नेह नानास्ति किञ्चन ॥ ४७
रुद्रस्त्वं भवसि ब्रह्मा त्वं विष्णुश्च प्रजापतिः । त्वं स्वाहा त्वं वषट्कारः त्वं यज्ञस्त्वं तनूनपात् ॥ ४८
जानीमो न विभो यत्त्वं नासि कालत्रयेष्वपि । विश्वाधिकोसि विदितो विश्वं भूतमनेकधा ॥ ४९
अतर्क्यैश्वर्यविभवे भवेभुवि महात्मना । अनुग्रहेण ते भक्तिः भवेदव्यभिचारिणी ॥ ५०
अधीतस्य सदाऽस्माभिः वेदस्यानुष्ठितस्य च । तपसश्च फलं भूरि यस्य स्मरणपात्रताम् ॥ ५१
इत्येवं कथयन्त ईशितुरिमे देवस्य शंभोः क्षणात् संप्रापुर्निलयं गिरौ गिरिवरे कैलासशैले द्विजाः ।
भक्तानुग्रहतत्परस्य सततं रुद्रस्य रुद्राक्षणात् नन्दीशः वरगोपुराङ्गणगतं नेमुः प्रहृष्टान्तराः ॥ ५२
मुनिवरगदितां स्तुतिं गृणन्तः शिवदयिताः श्रवणेन संपिबन्तः ।
भुविसुतदयिताः पशून् लभन्ते सकलमपि सुखं पुनश्च मुक्तिम् ॥ ५३
इति श्रीस्कान्दे महापुराणे शाङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे चतुर्दशोऽध्यायः ॥

---

॥ अथ पञ्चदशोऽध्यायः ॥

श्रीपरमेश्वरेण सप्तर्षि प्रेषणम् ॥

सूत —

ततस्ते सप्तमुनयः शंभोर्दर्शनकाङ्क्षिणः । को देवावसरोहीति प्रार्थयन्ति स्म तं द्विजाः ॥ १
लब्धानुज्ञोऽथ देवस्य शिलादमुनिसंभवः । प्रावेशयदमून् विप्रान् निकटं तस्य धूर्जटेः ॥ २
प्रणम्य ददृशुर्देवं आराद्देवं पिनाकिनम् । विराजमानं विप्रेन्द्राः युवानमतिकोमलम् ॥ ३
मण्डितं मण्डनैर्दिव्यैः विचित्रकुसुमोज्वलम् । प्रमोदविवशागास्ते हर्षाश्रुव्याकुलेक्षणाः ॥ ४
स तानिनाय शैलादिः मुनीन् सविधमीशितुः । ते विलोक्यातिनिकटे चेकितानमजं प्रभुम् ॥ ५
हृत्स्थेव मेनिरे सद्य पनमालोक्य मन्मथम् । व्रीळयानम्रता प्राप्ताः नाळीकेक्षणकीलया ॥ ६
नाळीकनेत्रोऽमुं वीक्ष्य नारीभावमुपागतः । नासिंश्चाकिमुनीन्द्राणां चित्रं पत्न्योऽपि मोहिताः ॥ ७
पुंसामपि मनास्येनं स्त्रीणां किमु जगत्त्रतौ । इत्येवं वीक्ष्य ते भूयो वीक्ष्य वीक्ष्याक्षियुग्मळैः ॥ ८
प्रणेमुर्भावितात्मानः भवं भवभयापहम् । तानुवाच महादेवः वाचा मधुरवर्णया ॥ ९

ईश्वर —

निषीदन्तु भवन्तोऽत्र भक्त्या मय्यतुलात्मनाः । आसनेषु महाभागाः यूयं मे हृदयङ्गमाः ॥ १०
इति वादिनि देवेशे सर्वे प्राञ्जलयस्तदा । निषेदुरासनेष्वेते यथा वृद्धपरंपरा ॥ ११
ततस्तेषां समुत्थाय वसिष्ठो वदतां वरः । व्यजिज्ञिपन्महेशाय प्राञ्जलिः प्रणतस्तदा ॥ १२
यन्मनःस्मरतीदं त्वां स तु धन्यतमाग्रणी । किमु देव स्मृतानां नो भविता भाग्यगौरवम् ॥ १३
तदिमाश्चाधि भगवन् किंकरास्तव शंकर । अथवा रक्ष रक्षास्मान् अनन्यान् भवसागरात् ॥ १४

सूत —

अथ देवोऽवदत् यूयं यदर्थमिह संस्मृताः । अहं मूर्तिभिरष्टाभिः अनुगृह्णामि सर्वदा ॥ १५
त मां विष्णुमुखा देवाः प्रार्थयन्ति स्म भूसुराः । अरिविप्रहतास्तेषां शां तपेऽस्त्यनूभवम् ॥ १६
सेनान्यं शान्तये तेषां मुनीन्द्रास्सुरविद्विषाम् । प्रतिज्ञातं च तेषान्तत् श्रोमित्येवं मयापि च ॥ १७

असुरैस्तैरिमिर्व्यापि पीड्यन्ते देवपुङ्गवाः । अहमुत्पाद्य सेनान्यं शूरपद्मं दुरासदम् ॥ १८
संहरिष्यामि सहजैस्त्रिपुराणीव पूर्ववत् । इति दत्ताभया जग्मुर्देवा विष्णुपुरोगमाः ॥ १९
सोऽहमद्यातुमिच्छामि दारानद्रीन्द्रसम्भवाम् । साऽपि शक्तिर्मदीयैव स्वेच्छाज्ञानक्रियात्मिका ॥ २०
अविभक्ता विभक्तेव भाति भानोरिव प्रभा । तथाऽपि मां समुद्दिश्य ततापं परमं तपः ॥ २१
तेनाहमस्या इच्छामि पाणिग्रहणमात्मनः । तदर्थमद्रिराजाय प्रष्टव्यो मुनिपुङ्गवैः ॥ २२
सपत्नीकैर्महाभागा युष्माभिर्मद्गिरा मुदा । ब्राह्मणानामयं धर्मो लोके नित्यो भविष्यति ॥ २३
अरुन्धती च कल्याणी आगत्य तत्र यातु सा । पुरन्ध्री भूधरेन्द्रस्य यथा न विवदेत्तथा ॥ २४
एवं विधेषु कार्येषु पुरन्ध्रीणां प्रगल्भता । यथा तस्याऽविसंवादि मनः सर्वप्रयत्नतः ॥ २५
तथा विधीयतां यत्नस्तत्रोपायैस्तथाविधैः । इति वेदान्तविज्ञानसुनिश्चितयतीश्वरे ॥ २६
परिग्रहोन्मुखे तेऽपि जहृषुर्मौल्ग्रा तथाभिधाम् । अथ ते मुनयस्सर्वे देवदेवं जगद्गुरुम् ॥ २७
सप्रणामं परिक्रम्य प्रस्थिता हिमभूधरम् । वियत्पथमतिक्रम्य तूर्णन्ते दक्षुर्गिरिम् ॥ २८
तत्र तेषां अगामाद्य पुरी शैलस्य दृक्पथम् । प्रसिद्धा ओषधिप्रस्थं नाम्ना लोकत्रयेष्वपि ॥ २९
यत्र नास्ति युगावस्था जरातङ्को गदो मदः । वयो न यौवनादन्यत् तामासेदुरमी द्विजाः ॥ ३०
क्रमेण तत्पुरस्यान्ते वेश्मराजसमासदन् । तत्र तानुपरि व्योम्नि हिमवान् पर्वतेश्वरः ॥ ३१
जगद्भासयतः सप्त ददर्शादित्यवर्चसः । समुत्तस्थौ क्रमादेते यावद्भूमिमवाप्नुयुः ॥ ३२
तावदर्घ्यं समादाय सदारो हिमवान्नगः । सतास्तत्र सपत्नीकान् विष्टरेषु कृतास्पदान् ॥ ३३
समभ्यर्च्यार्घ्यपाद्याद्यैर्मुदा परमया तदा । कृत्वाऽऽतिथ्यविशेषं च भक्त्या तुष्टाव हृष्टधीः ॥ ३४
ते तं सर्वे समप्राक्षुः क्षेमं भूधरपुङ्गवम् ।
मुनयः — कच्चित्ते कुशलं राजन् कुशलिन्यस्तथा प्रजाः ॥ ३५
माधिपत्यं धरेन्द्राणां कच्चिदव्याहतं क्वचित् । अमात्यबन्धुमित्राणां राग कच्चिद्दृढं त्वयि ॥ ३६
भवानन्यतमो लोके पूज्यो धन्यो महातपाः । आस्व राजन्ननीषाः स्थ मान्योऽस्माकं महीधर ॥ ३७
अथ सम्प्रश्नं तेषां आसीद्दुष्टलकातरः । गिरिशो वचनं प्राह साञ्जलिर्विनयान्वितः ॥ ३८
हिमवान् — अद्य धन्यः कृतार्थोऽस्मि कृतार्थोऽस्मि कृतकृती ।
सर्वे कुशलिनो युष्मत्कृपया मुनिपुङ्गवाः ॥ ३९
दर्शनेनाद्य युष्माकं सदाराणां महात्मनाम् । जातं मे जन्मसाफल्यं मनः तृष्णातुरं पुनः ॥ ४०
शुश्रूषामर्थते कर्तुं श्रेयो नित्यं यतात्मनाम् । किंपरेणाद्य युष्माकं मया कार्यं द्विजोत्तमाः ॥ ४१
कृतार्थयध्वं मां यूयं कृपया परयाऽधुना । इति तद्वाक्यमाकर्ण्य मुनयस्ते तपोधनाः ॥ ४२
प्रोत्युरङ्गिरसं सर्वे कथयेति कथाविदम् । अथ तेषां पुरश्शिमान् अङ्गिरा मुनिसत्तमः ॥ ४३
उवाच मधुरं वाक्यं सर्वभूधरनायकम् । शृणु राजन्निमे सर्वे यदर्थं वयमागताः ॥ ४४
तदहं संश्रवयामि सपत्नीकस्य ते गृहात् । समानयात्र महिषीं सहाप्तैश्च बन्धुभिः ॥ ४५
कल्याणं भविता पुंसा तपस्विना महीधर । ऊचिष्येयं मुनी तस्मिन् अङ्गिरान् प्रहृष्टधीः ॥ ४६
आदिदेशाथ सहसा निशान्तवरदर्शाः । मम पुरात् सर्वां स्वरक्षायामसंभवाम् ॥ ४७
आनयन्तु भवन्तोऽत्र महर्षीणां च सन्निधिम् । अथ सर्वत्वरान्तूर्णं महिषीमद्रिभूभुजः ॥ ४८
पार्श्वे सहितानिपुः मुदा कल्याणवेषया । पत्न्योऽद्रिभूभुजस्सर्वाः पुरस्त्र्यायामसंभवाम् ॥ ४९

भूषणैर्भूषयामासुः पुण्येऽहनि सुमङ्गलाम् । दुहिता च तदा ताभिः जननी जगतामुमा ॥ ५०
अलंकृता सा संरेजे शारदीवैन्दवीकला ॥ ५०½

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे पञ्चदशोऽध्यायः ॥

---

॥ अथ षोडशोऽध्यायः ॥

सप्त ऋषिभिः श्रीशिवाय पार्वती वरणम् ।

सूतः —

संप्राप जगतां साक्षात् जननी सविधं पितुः । मुनयस्तत्र ते सर्वे तदा गिरिवरात्मजाम् ॥ १
अरुन्धती च संप्रेक्ष्य प्रणेमुर्मनसा मुहुः । हिमवानात्मजां तत्र मन्दाक्षविलसन्मुखीम् ॥ २
वात्सल्यादङ्कमारोप्य मन्दस्मितमुखोऽब्रवीत् । मुनीश्वरा ब्रह्मविदः इयमुच्छ्वसितं मम ॥ ३
चक्षुः कनीनिका सर्वं एषा मे कुलभूषणम् । तमुवाचाङ्गिरा लोकमातेयं महिताकृतिः ॥ ४
शृणु मद्वचनं राजन् यदर्थं वयमागताः । य एको जगतां धाता विधाता वेधसामपि ॥ ५
कारणं कारणानां च नियतेश्च नियामकः । स्रष्टॄणामपि यस्स्रष्टा रक्षकाणां च रक्षकः ॥ ६
संहर्तॄणां च संहर्ता महाभासो महीधर । परमात्मा परंज्योतिः परंब्रह्म परात्परम् ॥ ७
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् । यस्मात्परं नाप्यपरं नाणीयान्नो महांस्तथा ॥ ८
येनादौ क्रियते विश्वं पाल्यते येन वध्यते । यस्मिन्नीश्वर इत्युच्चैः यथार्थो नौपचारिकः ॥ ९
नान्यगामी च शब्दोऽयं वर्तते चाणिमादिभिः । नित्यानां चैव यो नित्यः चेतनानां च चेतनः ॥ १०
कालः कालयतां चापि कालकालः कलाधरः । तस्मा इयं जगन्मित्रे पत्नी देया त्वयाऽनघ ॥ ११
न यत्पादौ वराहेण शक्यते द्रष्टुमद्भुतम् । विष्णुनाऽऽदौ मृगयता देयाऽस्मै कन्यका त्वया ॥ १२
पितामहेन हंसेन यन्मूर्धा न विलोकितः । तस्मै जगदधीशाय देया पत्नी त्वया सुता ॥ १३
यद्वीक्षणेन वृत्रारिः स्तम्भवज्रो जडीकृतः । तृणेनैकेन विबुधाः जयाहन्ताच्युताशयः ॥ १४
तस्मा इमां त्वं कल्याणीं प्रयच्छ पृथिवीपते । यद्भ्रूप्रणिहिता लक्ष्मीः देवासुरनरात्मनाम् ॥ १५
यद्दानत्यात्मनां मुक्तिः तत्पत्नी तव पुत्रिका । सभार्येण त्वया देया जगतामिच्छता हितम् ॥ १६
अस्यामीशात्मजो भावि शूरादीनां खलात्मनाम् । संहर्ता भविता लोके सुकुमारो महाभुजः ॥ १७
धन्योऽसि कृतकृत्योऽसि कुलीनानां त्वमुत्तमः । पूज्योऽसि यस्य ते शंभुः जामाता जगतां गुरुः ॥ १८
इत्युक्त्वोपरते तस्मिन् मुनयो हृष्टमानसाः । प्रशशंसुः तदा सर्वे हिमवन्तं महागिरिम् ॥ १९
पत्नी च पत्न्यो भूभर्तुः मुनीनां मुदिताननाः । मेनामभ्यर्यां तदा राज्ञो महिषीं मुनियोषितः ॥ २०
तदा कण्टकितान्यङ्गान्यामोदानिभृतान्यमुः । जंगमत्वोचितानीव कण्टकैरेव सर्वदाः ॥ २१
आनन्दाश्रुजलापूर्णनयनो गद्गदस्वरः । सुतामालिङ्ग्य वात्सल्यात् उवाच स मुनीनमून् ॥ २२
इयं मे जगतां माता कन्यका पद्मलेक्षणा । अनयाऽहं कृतार्थोऽस्मि कृतो युष्माभिरद्य वै ॥ २३
यूयं रक्षत मामद्य कृपया केवलं द्विजाः । विज्ञाप्य देवदेवाय पूरयध्वं मनोरथम् ॥ २४
शुभस्य शीघ्रमितिहि लोके सर्वत्र विश्रुतः । उत्थाय सर्वानद्रीन्द्रः प्रणनाम पुनः पुनः ॥ २५
साधु साध्विति तं सर्वे प्रशशंसुर्मुनीश्वराः । अथाङ्गिराः पुनश्चाह महिषीः सचलेशितुः ॥ २६

सर्वासां यो महीभर्तुः पत्नीनामस्तु सम्मतिः । मातृणामेव सम्मत्या कन्या देया कुटुम्बिभिः । २७
ओमित्युक्तासु सर्वासु मेना किंचित् वचोऽब्रवीत् । ब्रवंतु स्थावराः प्रायोऽचेतना विदितागमैः ॥ २८
रागद्वेषादयो दोषाः विशेषेणाविवेकिनाम् । दृष्टा लोकत्रये देवतिर्यङ्मानुजभोगिषु ॥ २९
ध्यत्यासाश्च भवन्त्येव वचसामखिलात्मनाम् । विशेषाश्चात्र संबन्धः संबन्धिभ्यामहर्निशम् ॥ ३०
वाग्व्यत्यासो भवेल्लोकेऽनिवार्यः सर्वदा भवेत् । सतस्समानयोरेव संबन्धस्सुखदो भवेत् ॥ ३१
चूर्णानि गजरूढाय गजारूढेन सर्वशः । देयानि किल लोकेऽस्मिन् इति सर्वजनश्रुतिः ॥ ३२
एष देवो जगद्धाता महादेवो महेश्वरः । महाग्रासो जगन्मृत्युः भवो मृत्युञ्जयो हरः ॥ ३३
तत्रास्तां पुनरस्येह चरित्रं दुर्विभावनम् । ब्रह्मादयो न जानन्ति दण्डिताश्च सुराऽसुराः ॥ ३४
ब्रह्मणश्च शिरश्छिन्नं नखेनानेन लीलया । विष्णोरपि नृसिंहाद्याः अवताराश्च शासिताः ॥ ३५
प्रभूणां तादृशं कर्म किमस्माकं विचार्यते । श्वशुरोऽस्य तु यो दक्षः यजमानो द्विजाग्रणीः ॥ ३६
वाग्व्यत्यासवशेनैव छिन्नमूर्धा स चोरवत् । ऋत्विजो मुनयस्सर्वे सर्वे सभ्याश्च देवपैः ॥ ३७
यज्ञो यज्ञपतिर्यज्वा माधवो यज्ञरक्षकः । यज्ञोऽपि मृगरूपेण सह वीरेण दण्डितः ॥ ३८
इयं च नस्सुता बाला यथाऽस्माश्चैव शोचति । बालाशोकासहिष्णूनां अस्माकं च भवेत्सुखम् ॥ ३९
तथा विचार्य युष्माभिः दत्ताहत्वो विधीयताम् । किंचास्य देवदेवस्य नो माता नापिवा पिता ॥ ४०
न भ्राता न सुहृद्बन्धुः न कुलं नापि किंचन । एकएवह्यसौ रुद्रः न द्वितीयाय तस्थिवान् ॥ ४१
इति संस्मृत्य संस्मृत्य महिमानं च तं विभोः । भीतं मम मनो भीतं द्वेधा भवति कातरम् ॥ ४२
इत्युक्तवत्यां तस्यां तु वचांसि प्रथिताभुवि । अरुन्धती वसिष्ठस्य भार्याऽऽह्वार्यां गिरेस्सतीम् ॥ ४३

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे षोडशोऽध्यायः ॥

---

॥ अथ सप्तदशोऽध्यायः ॥

कल्याणमण्टप निर्माणम् ॥

अरुन्धती —

शृणु मेने न माताऽस्य न पिताऽसौ जगत्पिता । राजाधिराजस्सर्वेषां राजराजसखान्वसौ ॥ १
सर्वैश्वर्येण संपन्नः नाम्ना सर्वेश्वरेश्वरः । शास्ताऽशेषस्य जगतः भीषास्माद्वर्तते जगत् ॥ २
दण्ड्या न दण्डिता राज्ञा मध्यस्थेन महीयसा । शूले मत्स्यानिवाधार्क्षुः दुर्बलान् बलवत्तराः ॥ ३
तस्माद्राजसु ये द्रोहं आचरन्ति मनस्विनि । दण्ड्यास्ते सहसा भूपैः सपुत्रपशुबान्धवाः ॥ ४
एष दक्षोऽस्य श्वशुरः सतीमात्माङ्गसंभवाम् । अग्रे दृष्ट्वाऽपि मूढात्मा निनिन्द बहुधा शिवम् ॥ ५
अकस्मादेव द्वेषं अज्ञाताशेषदूषणम् । बहुधाऽनेन पापेन ऋत्विग्भिस्सह दण्डितः ॥ ६
ब्रह्मादयोऽपि ते देवाः सदोषा एव दण्डिताः । तस्मात्ते मे दृशी भूयात् बुद्धिरद्धा महेश्वरे ॥ ७
वार्तासु चास्मदीयासु संशयं मा कृथास्शुभे । सदाशिवे महादेवे शंकरे लोकशंकरे ॥ ८
मृडे शुभङ्कले शंभौ माकृथास्संशयं वृथा । मेने त्वां योगिनीं श्रेष्ठां मेनेऽहं वरवर्णिनि ॥ ९
धन्याऽसि कृतकृत्याऽसि दत्वा रुद्राय कन्यकाम् । एते तु सप्तविख्याताः मुनयो ब्रह्मवादिनः ॥ १०
तद्रूपस्या भावितात्मानः तमेव शरणं गताः । नमस्कुरुध्व तानेतान् प्रार्थयस्व दयापरान् ॥ ११

ततश्चेयं मया देया त्रिर्वाचा शूलिने मुदा । अरुन्धतीगिरा मेना शिवं त्रिदशवन्दितम् ॥ १२
ज्ञात्वा विगतसन्देहा मुनीनत्रिमुखांस्तदा । प्रणम्य प्रार्थयामास भगिनी योऽहमत्र यत् ॥ १३
अज्ञानन्त्या मयोक्तं तत् क्षमध्वं मुनिपुङ्गवाः । पाणिं गृह्णातु मत्पुत्र्याः यथा देवो महेश्वरः ॥ १४
तथा सम्यगनुष्ठेयः उपायोऽत्र मुनीश्वरैः । प्रणमन्तीं प्रियामद्रेः मेनामेवं मुनीश्वराः ॥ १५
प्रशशंसुर्महीपालं प्रोचुश्च मृदुभाषिणः ।

मुनयः — भो भो भूधरराजेन्द्र फलं गृह्णातु पार्वती ॥ १६
आरोपयैनामात्माङ्कं अचलाधिप सांप्रतम् । अरुन्धती च पत्न्यश्च मुनीन्द्राणां तथोचिरे ॥ १७
अथाद्रिराजे कल्याणीं अङ्कमारोप्य तस्थुषि । अरुन्धती फलान्यस्यै सह स्त्रीभिर्द्विजन्मनाम् ॥ १८
हस्ताभ्यां हस्तयोर्दत्वा नेमे तत्पादपङ्कजम् । इयं हि जगतां माता शर्वाणी सर्वमङ्गला ॥ १९
अनन्यसुकरं शम्भोः अङ्कमेषाऽधितिष्ठतु । अनया भगवानीशः गृही तेन गृहिण्यसौ ॥ २०
एताभ्यां चित्रकृत्याभ्यां जगत्सृष्टं च रक्षितम् । ततस्स हिमवान् सर्वान् अभिवाद्य कृताञ्जलिः ॥ २१
आह स हे मुनिश्रेष्ठाः को मुहूर्तश्शुभावहः । कालः को वा मुहूर्तार्हः चन्द्रतारादिशोभनः ॥ २२
दैवस्य चोभयोरस्याः चानुकूल्यं किमस्ति वा । राशिनक्षत्रयोनीनां ब्रूत सम्यग्विचार्य नः ॥ २३
ततस्ते मुनिशार्दूलाः प्रोचुः भूधरपुङ्गवम् । श्वो मुहूर्तश्शुभोऽस्त्यन्तं फल्गुन्योरुत्तराख्ययोः ॥ २४
राशौ जामित्रसंशुद्धे देया देवाय पार्वती । सर्वानुकूल्यमस्त्येव सर्वबन्धोर्महेशितुः ॥ २५
संभार्यास्सर्वसंभाराः यैरलं सत्कृतेस्तराम् । महोत्सव दिदृक्षूणां आगतानां गिरीश्वर ॥ २६
स्वस्तितेऽस्तु गमिष्यामः श्वः कल्याणं महेशितुः । उक्त्वैवं ते मुनिश्रेष्ठाः देवदेवान्तिकं ययुः ॥ २७
गतेषु तेषु हिमवान् बन्धुदारसुतावृतः । चिन्तामवाप महतीं महोभावी श्व ईशितुः ॥ २८
कथं चेति मया शम्भुः अनिन्द्योऽभ्येति मेनया । नविवेदास्य कृपया सर्वमेतच्चराचरम् ॥ २९
सुस्वीर्यं प्राप्य निश्शङ्कं इति नीहारसानुमान् । अवकाशः कथं भावी दिदृक्षूणां महोत्सवम् ॥ ३०
अथोवाचास्य वै पुत्रः मैनाकः पर्वतेश्वरम् । शीघ्रं त्वष्टारमाहूय महान् कल्याणमण्टपः ॥ ३१
कार्यस्सर्वेश्वरार्होऽत्र मा विलम्बस्व भोः पितः । इति तेनोदिते सर्व भूभृतां नायको मुदा ॥ ३२
आजुहाव स तक्षाणं स्वर्गिणां शिल्पिपुङ्गवम् । त्वष्टाऽऽविरासीदाश्वग्रे पर्वतेन्द्रस्य साञ्जलिः ॥ ३३
तं स्वागतासनार्घाद्यैः संभाव्य नगनायकः । उवाच च गिरिश्रेष्ठः विश्वकर्माणमादरात् ॥ ३४
त्वं स्वर्गशिल्पिनां नाथः नाथाय जगतां मया । देया श्वः पार्वती कन्या शिवाय शिवदायिने ॥ ३५
अतस्त्वयाऽत्र कल्याणमण्टपः परमाद्भुतः । सुविशालो विचित्राढ्यो भूरिशालस्सचित्रकः ॥ ३६
कुत्राप्यनीदृशश्शीघ्रं निर्मितव्यः प्रयत्नतः । इति संभावयामास वस्त्रमाल्यानुलेपनैः ॥ ३७
ततः प्रीतमनाश्शिल्पी विश्वकर्माऽथ संभ्रमात् । चकार मण्टपं क्षिप्रं मनसा मणिपेशलम् ॥ ३८
योजनाशतसाहस्रविस्तारायाम सुप्रभम् । अनेकशतशालाभिः विशालाभिर्विराजितम् ॥ ३९
सहस्रभौमप्रासादैः लेलिहानमिवाम्बरम् । क्वचिज्जलनिभैः स्थलैः सन्निवेश विशेषतः ॥ ४०
तरङ्गकुलसंबाध सरितांपतिसन्निभम् । क्वचिद्भूमिभ्रमकर जलाशयसमाकुलम् ॥ ४१
क्वचित् द्वारभ्रमकर कुड्यमध्यमनोहरम् । कुड्यदेशनिभैः क्वापि द्वारपङ्क्तिभिरावृतम् ॥ ४२
आकाशप्रतिमं कुड्यं क्वचित्कुड्यनिभं नभः । क्वचित्स्तम्भनिभाकार व्योमपङ्क्तिसमुज्ज्वलम् ॥ ४३
क्वचिद्व्योमनिभैस्स्तंभैस्सर्वतः समलङ्कृतम् । अनेकरत्नस्तम्भाढ्य मण्टपैरुपशोभितम् ॥ ४४
मुक्तामणिगवाक्षाढ्य विद्रुमद्वारतोरणम् । वज्रकल्पितसोपानं स्वच्छस्फटिकवेदिकम् ॥ ४५

अत्युच्छ्रितपताकाभिरुद्ध दिनकृत्पथम् । महावृषभसंबाध प्राकाराग्रमनोहरम् ॥ ४६
त्वष्टेदं विचित्राढ्यमण्टपं मनसा मुदा । कृत्वा सन्दर्शयामास गिरिराजाय सादरम् ॥ ४७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सप्तदशोऽध्यायः ॥

---

॥ अथ अष्टादशोऽध्यायः ॥

पार्वत्याः भूषणैरलङ्कारः ॥

हिमवान् स विलोक्याथ पुत्र्या कल्याणमण्टपम् । तदा संभाव्य तं दिव्यभोगैस्त्वष्टारमद्भुतैः ॥ १
महोत्सवार्थं श्वोभूते समागच्छेति तं मुदा । विसृज्य सहसा गौरीं दिव्यमाल्यानुलेपनैः ॥ २
अलंकुर्वन्तु तरसा सुमङ्गल्योऽन्वशादिति । अथ तस्याज्ञया सर्वाः स्त्रियस्तामरसेक्षणाः ॥ ३
मङ्गलाभरणैश्शीघ्रं अलंचक्रुस्सुमङ्गलाम् । गायन्त्यस्सन्निवेश्यैनां भद्रपीठेऽद्रिसंभवाम् ॥ ४
अभ्यङ्गं कारयामासुः प्राङ्मुखीमायतेक्षणाम् । शङ्खश्रृङ्गमृदङ्गानां दुन्दुभीनां च निस्वनैः ॥ ५
अभ्यषिञ्चन् विशालाक्षीं अंबिकामुष्णवारिभिः । शालीचूर्णनिशारेणु मुद्गपिष्टरसैश्शुभैः ॥ ६
सुगन्धिशीतलैस्तोयैः सुकेशीममलैश्शुभैः । गाङ्गेयैर्यामुनाद्यैश्च चतुरर्णव सम्भवैः ॥ ७
सर्वतीर्थजलैर्देवीं चन्द्रबिंबनिभाननाम् । जजपुर्ब्राह्मणा वृद्धाः देवीसूक्तानि सूरयः ॥ ८
सर्वेषामेव लोकानां मङ्गलान्यभवंस्तदा । मुनीनां पत्नयश्चैव देवानामपि पत्नयः ॥ ९
अदितिश्च दितिश्चैव सुपर्णा सुरसा तथा । स्वाहा स्वधाऽनसूया च गार्गी साक्षादरुन्धती ॥ १०
सर्वास्तास्सर्वलोकेशीं सर्वलोकैकमातरम् । शनैश्शनैरभ्यषिञ्चन् काञ्चनैः कलशैश्शुभैः ॥ ११
ततश्शुद्धेन मृदुना सुकेशीं वाससा शनैः । उद्वर्तयन्ति स्म तदा शीघ्रमंभोजलोचनाम् ॥ १२
परिधाप्य ततः पट्टदुकूले शुभलक्षणे । अलंचक्रुर्मुदा दक्षाः पादाद्याकेशमंबिकाम् ॥ १३
नवयावकपङ्केन पादौ कमलकोमलौ । ररञ्जुः सहसा देव्या मङ्गलार्थमतन्द्रिताः ॥ १४
ऊचुश्च गिरिजामार्या इमौ कमलकोमलौ । निधेहि चन्द्रकलया सह मौलौ जगत्पतेः ॥ १५
तास्तदा गिरिजा सर्वाः स्मितपूर्वमुदैक्षत । शयान चारविन्देन ता बधूरद्रिसंभवा ॥ १६
हंसकौ रत्नखचितौ घघन्नुर्नूपुरे शुभे । सुमध्यमायास्संरेजे मध्यः काञ्चीगुणान्वितः ॥ १७
ईशाक्षिखञ्जरीटानां जिघृक्षुरिव पाशवत् । बाहुद्वयं विशालाक्ष्याः विविधाभरणाञ्चितम् ॥ १८
कण्ठपाशौ महेशस्य सृष्टौ मकरकेतुना । विविधाभरणैर्भाति तन्वङ्ग्यास्तनुरुज्वला ॥ १९
धौरियाखण्डलधनुः खण्डमण्डलमण्डिता । पद्मकोशनिभौ देव्याः वक्षोजौ हारसंभृतौ ॥ २०
तन्मध्यनीलमणिकपनीलाग्राविव रेजतुः । अनेकनिष्कसंछन्नं उरो देव्या बभौ नभः ॥ २१
सेन्द्रचापं महावृन्दं वामुंचामिव कालजम् । सुपक्वबिंबताम्राभः बभौ देवीरदच्छदः ॥ २२
सन्ध्याभ्रशकलोपेत इव शीतांशुमण्डलः । नासाग्रमञ्चितं देव्याः शुभमौक्तिकशालिना ॥ २३
सौवर्णेन विचित्रेण भूषणेनातिपेशलम् । कर्णयोर्वालिकासूक्तताटङ्कानां श्रिया मुखम् ॥ २४
अपुष्यात्कान्तिमतुलां अंबिकायास्तदा तराम् । चूलीयन्थश्शुभो देव्याः सुमनोदाममण्डितः ॥ २५
ललाटमलकोद्भासि मुक्तादामविभूषितम् । नेत्राभ्यां भ्रूयुगं भाति साञ्जनाभ्यां मनोहरम् ॥ २६
कामस्य सशरं चारु धनुर्गोरिव तद्द्वयम् । आकेशमानखाग्रं तु मणिभूषणमण्डितम् ॥ २७

भूषणस्य वपुदन्याः भूषण नास्यभूषणम् । सर्वास्तदा तामालोक्य सर्वावयवसुन्दरीम् ॥ २८
ईशोपहृतवैदेशेन गृहिणीव जगत्त्रये । एनयोस्सदृशावेतौ दम्पती इति मेनिरे ॥ २९
ततस्ता गिरिराजाय भूषिता ता न्यवेदयन् । ततस्स हिमवाञ्छम्भो गन्तु देवान्तिक मतिम् ॥ ३०
आहूय दीयते कन्या विवाहे प्राह्य इत्यत । उत्तरायणमार्गेण भानोस्सत्यस्मादरात् ॥ ३१
कैलास कालकण्ठस्य प्रिय हिमनगोत्तमः । तत्र भोगपुरे रम्ये रत्नप्राकारमण्डिते ॥ ३२
सहस्रभौमप्रासाद मण्टपैरुपशोभिते । राजाधिराजस्वर्येषा राजते यत्र शङ्कर ॥ ३३
तत्र कक्ष्या समासाद्य प्रथमा प्रमथाधिपम् । शालङ्कायनयोगीन्द्रपौत्र नन्दीश्वर प्रभुम् ॥ ३४
प्रणम्य सन्निधौ तस्मै व्यजिज्ञिपद्गणाधिप । भगवन्नद्रिकेशान प्रार्थनैषा मम प्रभो ॥ ३५
ब्राह्मेणैव विवाहेन ब्राह्मणप्रभवेऽधुना । पुत्री देया महेशाय पुरुहूताय शम्भवे ॥ ३६
तत्प्रभोर्दर्शनाकाङ्क्षी त्वामस्मि शरण गत । ततस्स भगवान् नन्दी प्राप्यानुज्ञा महेशितु । ३७
समापयदगाधीश जगदीशान्तिक क्षणात् । तत्राद्रिरद्रिधनुष आसीन परमासने ॥ ३८
जगत्त्रितयसरक्षाजागरूक श्रियश्श्रम् । सनकादिमहायोगिसवीतसविध प्रभुम् ॥ ३९
प्रणम्य परया भक्त्या प्रास्तौषीत् स्तुत्यमीश्वरम् ।
अद्रि — जय देव परानन्द भुवनानामधीश्वर ॥ ४०
सुरासुरेन्द्रसभाव्यपादपद्म परात्पर । आपन्नार्तिनिदाघैकवारिदागम धूर्जटे ॥ ४१
त्वा प्रसाद्य जगत्यस्मिन् प्राप्तैश्वर्यास्सुरासुरा । अनर्चितास्त्रिणश्चास्ते येवै दुर्गतिभागिन ॥ ४२
अमङ्गला जना एते सुमङ्गल पराङ्मुखाः । अह त्वामखिलेशान प्रपन्नश्शरण शिवम् ॥ ४३
दातार सर्वलोकाना सर्वाभीष्टानि सन्ततम् । अर्थी त्वा प्राप्तवानद्य महान्तमनभ्ययम् ॥ ४४
याच्ना मे पूरयाशु त्वमर्थितादधिकप्रद । प्रणमन्त तथेशानः पुन पुनररिन्दमम् ॥ ४५
प्राह गभीरया वाचा प्रभुलक्षणयुक्तया ।
ईश्वर — उत्तिष्ठोत्तिष्ठ भद्र ते गिरीन्द्र वरदोऽस्मि ते ॥ ४६
वर वरय यत्तेऽद्य वाञ्छित ब्रूहि सत्वर ॥ ४६½

इति श्री स्कान्दे महापुराणे शङ्करसहितायां शिवरहस्यखण्डे
सम्भवकाण्डे अष्टादशोऽध्याय ॥

---

॥ अथ एकोनविंशोऽध्याय ॥

नन्दिना कल्याणाय देवाद्यानयनम् ॥

हिमवान् —

तुभ्यमिच्छाम्यह कन्या मदीया दातुमीश्वर । प्रतिग्रहाण तामद्य श्व प्रातर्दिविषद्गणै ॥ १
सहमाधववेधोभ्या सर्वैरपि मुनीश्वरै । ओषधिप्रस्थमभ्येत्य पुर पुररिपो मम ॥ २
इति प्रार्थयते तस्मै प्रतिश्रुत्योमिति प्रभु । प्रसन्नेनैव मनसा प्रेषयामास भूधरम् ॥ ३
अथ तस्मिन् गतेऽद्रीन्द्रे नन्दीश पुरतस्स्थितम् । अब्रवीद्रूपपान् सर्वान् अस्मदीयान् गणाग्रणी ॥ ४
अण्डेषु वर्तमानास्तान् अनन्तानमितद्युतीन् । देवान् साध्यान् सविश्वांश्च सर्वानपि मुनीश्वरान् ॥ ५
शीघ्र ममाज्ञया नन्दिन् अद्यैवाह्वय तान् क्षणात् । इतीशाज्ञा समादाय नन्दी शङ्करवल्लभ ॥ ६
स्थित्वा मुहूर्तमेकाग्र सस्मार गणपान्मुदा । देवान्सेन्द्रान् सवरुणान् सदिक्पालान्प्रजापतीन् ॥ ७

रुद्रानेकादशादित्यान् द्वादशाष्टौ वसूनपि । विश्वानपि च वै देवान् साध्यांश्चैव तथा पितॄन् ॥ ८
नारायणं च लोकादिं अवतारांश्च तस्य वै । साक्षाच्चतुर्मुखं देवं ब्रह्माणं परमेष्ठिनम् ॥ ९
पाताळवासिनश्चापि सर्वानपि च दानवान् । अष्टावपि महानागान् काद्रवेयान्महाबलान् ॥ १०
अनन्तं वासुकिं चापि कार्कोटक महोरगम् । कंबळाश्वतरौ चापि तक्षकं फणिपुंगवम् ॥ ११
शंखपालं महापद्मं सस्मार गणपुङ्गवः । विरोचनं च बलिनं नमुचिं बलमेव च ॥ १२
महाजंभंच जंभंच हयग्रीवंच दानवम् । दितिजान् दनुजांश्चान्यान् पाताळतलवासिनः ॥ १३
पाताळस्थान् गणांश्चान्यान् हाटकेश्वरसम्मतान् । कूश्माण्डगणमुख्यांश्च भानुकंपं महाबलिम् ॥ १४
वीरभद्रं जगद्भद्रं भद्रकाळीमनोहरम् । भूतेशान् प्रमथेशांश्च सर्वानपि गणाधिपान् ॥ १५
महाबलं महाबाहुं मधुपिङ्गंच पिङ्गळम् । चतुर्थश्चलंच भूतेशान् प्रमथेशांश्च कोटिशः ॥ १६
करणं वाहुकं चापि पंचाक्षं शतमन्युकम् । सुरेशं काष्ठकूटंच वृषं मेघभूतं तथा ॥ १७
विश्वरूपं विरूपाक्षं तालकेतुं शताननम् । असंख्यातान् गणांश्चान्यान् सस्मार गणनायकः ॥ १८
आज्ञया देवदेवस्य कल्याणार्थं शिलादजः । कलामुहूर्ताः काष्ठाश्च दिनानि तिथिपक्षकान् ॥ १९
अर्धमासांश्च मासांश्च ऋतूनब्दांश्च कोटिशः । गङ्गाद्याश्च नदीस्सर्वाः समुद्राश्च सरांसि च ॥ २०
यच्च किंचिज्जगत्यस्मिन् दृष्टं चानुमितं श्रुतम् । तत्सर्वं देवदेवस्य कल्याणार्थं शिलादजः ॥ २१
समाजुहाव मनसा सद्यएव जगत्पतिः । तदन्तरे- महानादः शंखवाद्यसमुद्भवः ॥ २२
विजृंभेऽम्बरं शंभोः देवानां कथयन्निव । समाकर्ण्य ततो नादं देवा विष्णुमुखास्तदा ॥ २३
समाजग्मुर्मुदाऽत्यर्थं द्रष्टुकामा महोत्सवम् । आरूढो गरुडं साक्षात् छन्दोरूपं महाभुजं ॥ २४
आजगाम गणैस्सार्धं अर्णवाङ्गभुवा हरिः । आदिमौ दंपती द्रष्टुं आदरेण जनार्दनः ॥ २५
आगाजनो हंसवरं अधिरुह्य जगन्मयः । वाण्यातु परया साकमेणीसद्यानेत्रया ॥ २६
विश्वसृग्भिस्तथाऽन्यैश्च नवभिश्च महत्तरैः । वेदागमैर्मूर्तिमद्भिः विद्याभिस्सहितो गणैः ॥ २७
उद्वाहश्शिवयोर्वेत्ति सन्निधिं प्राप शूलिनः । इन्द्रोऽधिरुह्य सुश्वेतं तदा द्विरदं शुभम् ॥ २८
साकं पुलोमसुतया स्वयोभिरलंकृतः । तथैव द्वादशादित्यैः नासत्याभ्यामलंकृतः ॥ २९
एकादशाभिर्विविधैः अश्वैरभिनन्दितः । विश्वैर्देवैस्ससाध्यैश्च मुनिभिर्ब्रह्मवादिभिः ॥ ३०
समागच्छत्सहस्राक्षः द्रष्टुं दाम्पत्यमैश्वरं । एवमग्निर्यमोरक्षः नायको वरुणो मरुत् ॥ ३१
गुह्यकाधिपतीशानौ सर्वे जग्मुश्शिवान्तिकम् ॥ ३१½

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकांडे एकोनविंशोऽध्यायः ॥

---

॥ अथ विंशोऽध्यायः ॥

गणाधिपानां नामानि ॥

आगमानश्चापि ते सर्वे अन्तरात्मान एव च । परमात्मानं आजग्मुः चरस्थिरमयात्मनाम् ॥ १
असुराश्च महावीर्याः षट्पञ्चाशतकोटयः । नागाश्च ये च पातालतलेषु समवस्थिताः ॥ २
कालाग्निरुद्रो भगवान् सर्वाधारोऽमितद्युतिः । अनन्तकोटिगणपैः आत्मतुल्यबलोद्धवैः ॥ ३

रुद्राण्या सह संप्राप देवदेवस्य सन्निधिम् । हाटकेशो महाबाहु अर्बुदायुतकोटिभि ॥ ४
आत्मनस्सदृशाकल्पै आवृतो गणपैर्ययौ । कूश्माण्डगणपश्श्रीमान् कोटिकोटिगणावृत ॥ ५
सप्राप सन्निधिं शम्भो द्रष्टुकामो महोत्सवम् । अभ्यगाद्रक्तवर्णश्च गणकोट्यर्बुदैस्सह ॥ ६
दशभिः केसराक्षश्च न्यर्बुदानाच कोटिभि । सप्राप सन्निधिं शम्भो महोत्सव दिदृक्षया ॥ ७
वेद्युतोऽप्यभिरसलै समुद्राणाच कोटिभि । मुक्तात्मभिश्च गणपै मुदोत्सवमवाप स ॥ ८
विशाखस्स्वगणैस्सार्द्धं समस्तक्लेशवर्जितै । कोटिकोटिमहापद्मै संप्राप शिवसन्निधिम् ॥ ९
पारियात्रोऽत्र भगवान् न्यर्बुदै प्रमथैश्शतैः । प्रापशसविध श्रीमान् प्रसन्नात्मा तदात्मना ॥ १०
सर्वाननदशतगणै समुद्रशतकोटिभि । सर्वेशसन्निधिं प्राप सर्वेशस्सर्वभावित ॥ ११
विकृतास्योऽपि विविधैः वीतरागैर्निर्मत्सरै । अनेक कोटिगणपे सविध प्राप शूलिन ॥ १२
लोकालोकाचलावासी ज्वालाकेशो महाभुज । शूललोलभुजैर्दैवै देवदेवान्तिक ययौ ॥ १३
समदोऽपि महाभाग समदैरात्मसैनिकै । सह चन्द्रार्धचूडस्य ससद सहसाऽऽप सः । १४
दुन्दुभिर्दुन्दुभिश्रेणी निनदैर्जितसागर । असख्येरात्मनस्सैन्यै अनन्तस्याप सन्निधिम् ॥ १५
कपालीशो महाभाग कपालस्रगलङ्कृत । कापालि सविध प्राप परार्धगण संवृत ॥ १६
सहस्रवक्त्रश्वेरीनाशभूषणस्याप सन्निधिम् । शतकोटिपरार्द्धस्थैः गणपैर्मुक्तकिल्बिषै ॥ १७
रुद्राणा कोटिभि पद्मै अण्डको रुद्रसन्निभ । रुद्रस्य सन्निधिं प्राप तदा सर्व जगत्पते ॥ १८
कुम्भक कोटिकोटीना अभयैरनुतैर्गणैः । सन्निधिं प्राप देवस्य शम्भोरक्लजशासिन ॥ १९
मथकाख्यो महाभाग प्रमथाधिपतिर्विभुः । मदनारिमनुप्राप शतकोटि गणावृत ॥ २०
सप्तावृश्च गणश्रेष्ठ गणकोटि परार्द्धकै । गौरीकल्याण सेवार्थ गिरीश प्राप सत्वर ॥ २१
आवेशनिश्च भगवान् भगनेत्रहराऽन्तिकम् । अयुतायुतकोटीना गणैस्सप्राप सादरम् ॥ २२
अपचपत्रो महाकेश वीरपर्वतकश्च ते । सहस्रकोटिगणपैः सविध धूर्जटेर्ययु ॥ २३
पिप्पल काकपादश्च सन्तान गणकाग्रणी । सर्वेश्वरमसेवेता असख्यातैर्गणोत्तमै ॥ २४
मधुपिङ्गोऽथ नीलश्च महाबल गणाग्रणी । मन्मथारिमनुप्रापु महोत्सव दिदृक्षया ॥ २५
पूर्णभद्रश्चतुर्वक्त्र भुवनानामधीश्वरौ । पुरारिं पुरसैन्यैस्स्वैः पुरुषार्थदमभ्ययु ॥ २६
एते भूतगणास्सर्वे प्रमथाश्च महत्तरा । करुण प्रमथाधीश कारुण्याम्बुधिमीश्वरम् ॥ २७
शरण प्राप सहसै आत्मनोऽनेक सैनिकै । बाहुकश्च महाभाग प्रमथानीकसंवृतः ॥ २८
प्राप देवाधिदेवस्य पार्श्वमङ्गजशासिन । पञ्चाक्ष पञ्चपञ्चाशन्न्यर्बुदप्रमथावृत ॥ २९
पञ्चेषुमथनस्यास्य समीप परमागत । शतमन्युस्सदा मन्यु शतमन्युसमन्वित ॥ ३०
शतकोटिगणैस्सार्द्धं समीपं प्राप शूलिनः । मेघमन्काष्टकूटश्च सुकेशो वृषभो बली ॥ ३१
प्रत्येक कोटिकोटीना प्रमथैरीशमाश्रयन् । शताननो विश्वरूप तालकेतुस्सचित्तक ॥ ३२
लोकान्तकश्च चैत्रश्च दीप्तात्मा लकुलीश्वर । एतेऽपि प्रमथैस्सार्द्धं अनन्तैरापुरीश्वरम् ॥ ३३
दैत्यान्तको मृत्युजिच्च कालजिच्च विषादन । कलिजिद्विग्जिच्चापि श्रीमान् भृङ्गिरिटि पर ॥ ३४
सूर्याचास्यदशनिष्ठाद्या प्रमथा लोकपालका । सहस्रसख्यै प्रमथै पार्वतीनाथमीश्वरम् ॥ ३५

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
संभवकाण्डे विंशोऽध्याय ॥

---

## ॥ अथ एकविंशोऽध्यायः ॥

### श्रीरुद्रसमाप्त्यनुवाकार्थवर्णनम् ॥

सूतः —

सहस्राणां सहस्राणि ये रुद्राः पृथिवीषदः । सहस्रयोजने लक्ष्यमेदिनस्समशरासनाः ॥ १
ते रुद्रास्त्रिदशश्रेष्ठाः त्रिणेत्रं संसिषेविरे । अस्मिन्महति सिन्धौ ये येऽन्तरिक्षे दिविस्थिताः ॥ २
नीलग्रीवास्त्रिणेत्रास्तेऽसंख्याताश्चापुरीश्वरम् । अधः क्षमाचराश्चान्ये सर्वे ते नीलकन्धराः ॥ ३
गिरीशायोऽस्तु कल्याणं सिषेविषव आपिरे । वृक्षेषु पिञ्जरा रुद्राः नीलकण्ठा विलोहिताः ॥ ४
भूतानां चाधिपतयः विकेशाश्च जटाधराः । सहस्रैरप्यसंख्याताः सायुधाः प्रापुरीश्वरम् ॥ ५
अन्नेषु ये विविध्यन्ति जनान् पात्रेषु भुञ्जतः । ये पथां पथि रक्षन्ति तीर्थानि प्रचरन्ति च ॥ ६
ये रुद्रा दिक्षु भूयांसः तिष्ठन्ति सततं च ते । गौरीकल्याणसेवार्थं गिरिशं समुपाश्रयन् ॥ ७
अथादितिर्दितिर्विश्वा दनुः कद्रूश्च कालिका । पुलोमा सरमा चैव सिंहिका विनता तथा ॥ ८
सिद्धिर्मेधा क्रिया दुर्गा देवी स्वाहा स्वधा च सा । सावित्री वेदमाता च रजनी दक्षिणा धृतिः ॥ ९
रतिर्बुद्धिर्मतिर्मेधा पुष्टिस्तुष्टिस्सरस्वती । राका कुहूस्सिनीवाली देवी चानुमतिश्च सा ॥ १०
धरणी धारणी वेला बाला नारायणी च सा । एताश्चान्याश्च देवानां मातरः पत्नयश्च ताः ॥ ११
उद्वाहश्शङ्करस्येति जग्मुस्सर्वा मुदान्विताः । नद्यस्समुद्रगास्सर्वाः ब्रह्माण्डोदरमध्यगाः ॥ १२
सर्वास्ता ललनावेषाः भूषामणिविराजिताः । चामरासक्तहस्ताब्जाः सहंसाब्जा इवाययुः ॥ १३
उरगा गरुडा यक्षाः गन्धर्वाः किन्नरा नराः । सागरा गिरयो मेघाः मासास्संवत्सराः कलाः ॥ १४
वेदामन्त्रास्तथा यज्ञाः स्तोमा धर्माश्च संयमाः । हुंकाराः प्रणवाश्चैव फट्कारा हिंकृतास्तथा ॥ १५
कोटिरप्सरसां दिव्याः तासां च परिचारिकाः । सुमङ्गलस्य तास्सर्वमङ्गळायाश्च मङ्गळम् ॥ १६
सद्योऽभ्युपागमन् सर्वाः द्रष्टुकामा महोत्सवम् । ततस्ते संगतास्सर्वे शिलादकुलनन्दनम् ॥ १७
अन्तःपुराधिपं शंभोः नत्वा भक्त्या व्यजिज्ञपन् । नन्दीश भगवन् स्वामिन् ज्ञानवारांनिधे गुरो ॥ १८
इमे सर्वे वयं शंभोः संसेवार्थमिहागताः । विज्ञापय सुरेशाय दर्शयास्मांश्च संगतान् ॥ १९
इति तेषां समाकर्ण्य वचो विबुधवन्दितः । नन्दी सविधमभ्येत्य चन्द्रमौळेस्ससंभ्रमः ॥ २०
न्यवेदयत्समायातान् आत्मनस्सकलानिमान् । एकद्वित्रिमुखानन्यान् मुकान् गणवरांश्च तान् ॥ २१
अधिकारपदस्थांश्च विधेशानमितद्युतीन् । एकैकशस्समायातान् अजिरं त्रिपुरद्विषः ॥ २२
प्रावेशयदमेयात्मा शासनादेव शूलिनः । अथ देवोऽपि सर्वेशः करुणारसवारिधिः ॥ २३
दिव्य सिंहासनारूढः जगतामीश्वरेश्वरः । अनुजग्राह तान् सर्वान् उत्सवार्थमिहागतान् ॥ २४
सर्वांस्तानजिरस्यैव देशे संस्थाप्य यत्नतः । असकृत् गणाधीशः नन्दीवेत्राग्रचालनैः ॥ २५
य आहूतस्स एवात्र समागच्छतु नापरः । तिष्ठन्त्ववचनास्सर्वे संभाष्यैवं शिलादजः ॥ २६
प्रत्येकं दर्शयामास प्रभवे नन्दिकेश्वरः । प्रथमं तस्य वेत्राग्रचलनादुत्थितः स्वयम् ॥ २७
कालाग्निरुद्रो भगवान् सहसा लोककालनः । प्रणम्य देवदेवाय प्राञ्जलिर्दूरसंस्थितः ॥ २८
तमेव नन्दी भगवान् निर्दिशन् वेत्रपाणिना । देव कालाग्निरुद्रोऽयं तव मूर्तिर्दयानिधे ॥ २९
संहर्ता जगतामन्ते सर्वाधारोऽमराग्रणीः । संप्राप्तश्शासनाद्य समानात्मगणैस्सह ॥ ३०
अनुग्रहाण तमिमं दृष्ट्या संभाव्य शान्तया । इति नन्दीशवचनात् इन्दुमौळिर्हरं हरः ॥ ३१

प्रसन्नयाऽनुगृह्णाह दृष्ट्या विश्वामरेश्वरः । सोऽपि मेने स्वमात्मानं कृतार्थमतयेशितुः ॥ ३२
कूश्माण्डमपि वीरेशं हाटकेशं गणाग्रणीः । दर्शयामास देवाय नन्दीशोऽन्यान् गणेश्वरान् ॥ ३३
अथ तस्याज्ञया विष्णु उदतिष्ठत्सहानुगः । अवतारैर्निजैस्सार्द्धं चतुर्भिस्सह मूर्त्तिभि ॥ ३४
तं चादर्शयदीशाय नन्दी तच्चरित ब्रुवन् । एष एव तवेशान विष्णुर्वामाङ्गसंभवः ॥ ३५
नियुक्तो जगतामीश पालने कृपया त्वया । यदनेनार्चितं लिङ्ग चाद्यत्रिन विमुक्तिदम् ॥ ३६
इन्द्रनीलमय तेन ह्युसंप्राप्तमिद पदम् । तवोत्सवामृतास्वादात् साफल्य रचयन् दृशो. ॥ ३७
तमेनं करुणामूर्त्ते सत्कुरुष्व निरीक्षणैः । परमेशस्तद्वाकर्ण्य वचन नन्दिनः प्रभु. ॥ ३८
अपाङ्गालोकमात्रेण कृतार्थमकरोद्विभु. । पितामहोऽथ नन्दीश्वरवेत्राग्रसंज्ञया ॥ ३९
सप्रजापतिको देवदेवं दृष्ट्वा कृताञ्जलि. । प्रणम्य दूरे देवेशं अतिप्रह्वितयान्वित ॥ ४०
निर्दिश्य तं ततो नन्दी वेत्राग्रेणाह शंकरम् । भगवन् देव सर्वेश दक्षिणाङ्गभवोह्ययम् ॥ ४१
नियुक्तो भवता ब्रह्मा सृजेति जगतां त्रयम् । इद धाम्नेन भगवन् पद ब्राह्म त्वदाज्ञया ॥ ४२
लिंग शैलं समभ्यर्च्य श्रद्धयाऽऽप्त तथाऽव्यय । त्वदंघ्रिपंकुजनिष्यन्द मकरन्द मधुव्रत. ॥ ४३
अनुग्रहाण तमिम कृपादृष्टिविलोकनैः । त च देवोऽपि तदनु समभावय दक्षिणा ॥ ४४
इतीश्वरे हरहरि वारिजासनान् अनुग्रह कुर्वति सर्वनायके ।
परानपि प्रमथपतिस्शिलादज यथाक्रम पशुपतये न्यवेदयत् ॥ ४५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे एकविंशोऽध्याय. ॥

---

॥ अथ द्वाविंशोऽध्याय' ॥

श्री शिवेन कल्याणमण्टपप्रवेश ॥

सूत —

ततो महेन्द्रप्रमुखान् दिक्पालानमितद्युतीन् । देवासुरमुनींश्चापि गन्धर्वोरगराक्षसान् ॥ १
अश्विनौ मरुतश्चापि वसुरुद्रानृषीनपि । पितॄन् सर्वांश्च वयस पिशाचानपि गुह्यकान् ॥ २
नदीनदसमुद्रांश्च भूधरांश्च वनानि च । कला मुहूर्तान् काष्ठाश्च मासत्वैयनवर्षकान् ॥ ३
क्रमेण नन्दी देवाय दर्शयामास सगतान् । देवोऽपि तांस्तान् क्रमश समभाजयदीक्षणैः ॥ ४
यथार्हमानुपूर्व्येण स्मयमानमुखाम्बुजा । उपायनानि देवाय ते ते स्वानि न्यवेदयन् ॥ ५
अथ पद्मासनो हैमपात्रेषु विनयान्वित । अग्रे निधाय देवस्य महार्हाभरणान्यसौ ॥ ६
प्रणम्य प्रार्थयामास भगवन्त महेश्वरम् । रूपं रूपवता श्रेष्ठ तवात्यद्भुतमीश्वर ॥ ७
आकल्पस्याप्याभरण उपमान वपुष्मताम् । प्रसाधनविधेश्चापि प्रसाधनमनूपमम् ॥ ८
अलंकुरु तथाप्येतै अनुगृह्णीष्व मा प्रभो । इति तत्प्रार्थनादीश स्मयमानमुखाम्बुज ॥ ९
कराग्रेण स्पृशन् तानि रूपमत्यद्भुत दधौ । कोटिकन्दर्पसंकाश पूर्णचन्द्रनिभाननम् ॥ १०
फुल्लपद्मविशालाक्ष बिम्बाधर मनोहरम् । कम्बुकण्ठलसल्लोल मनोज्ञमतिपेशलम् ॥ ११
विशालवक्षो विलसच्चारुहार चतुर्भुजम् । सर्वावयवसन्दीप्त सर्वाभरणभूषितम् ॥ १२
आकेशमानखाग्रान्त तत्तन्मण्डन मण्डितम् । लोकसम्मोहन रूप दधद्देवो दयानिधिः ॥ १३

ब्रह्माणमब्रवीदग्रे प्रणमन्तं कृताञ्जलिम् । अनेनाकल्पजातेन सर्वानपि ' दिवौकसः ॥ १४
आज्ञयाऽलंकुरु ब्रह्मन् मदर्थं य इहागताः । निदेशेनाथ देवस्य ब्रह्मा ब्रह्मविदां वरः ॥ १५
विभज्य देवसंघेभ्यः प्रददौ भूषणान्यसौ । ततस्त्रिदशमुख्येषु भूषितेषु च भूषणैः ॥ १६
नदत्सु शंखशृङ्गेषु काहलीषु महत्स्वपि । भेरीमुख्यतूर्येषु निस्साणेषु बहुष्वपि ॥ १७
डिण्डिमेषु च सर्वत्र जितार्णवरवेष्वपि । तथा मधुरवाद्येषु वीणा वेणुषु सर्वशः ॥ १८
नागस्वरेषु चान्येषु चिह्नेषु विविधेष्वपि । मुखानिलकृतापूरध्वनत्सु श्रोत्रमङ्गलम् ॥ १९
आरभ्य रजतं शैलं आहिमाद्रेर्निरन्तरम् । चामराण्यप्सरस्त्रीषु क्वणत्कङ्कण निस्वनैः ॥ २०
वीजयमानासु सर्वत्र तालवृन्तानि सादरम् । सुगन्धिषु मनोज्ञेषु संसिक्तेषु हिमांबुषु ॥ २१
कस्तूरीपङ्कलितेषु कर्पूरसिकतेषु च । मार्गेषु फेनिलांभोधिनिभच्छत्रावृतेष्वपि ॥ २२
पताका वैजयन्तीनां पङ्क्तिभिर्निचितेषु च । धूपितेषु च सर्वत्र धूपैरगरुसंभवैः ॥ २३
मुनीन्द्रेषु तथा वेदमुखरेषु द्विजातिषु । सुमङ्गलीषु योषित्सु शोभनोद्दामगीतिषु ॥ २४
जयशब्दपरेष्वेवं सूतमागधवन्दिषु । प्रमथेषु तथा वेत्रपाणिषूत्सारयत्सु च ॥ २५
रुद्रकन्यासहस्रेषु स्यन्दनेष्वचलेष्वथ । प्रनृत्यन्तिषु सर्वेषु बद्धाञ्जलिषु योगिषु ॥ २६
करं करेण संभाव्य नन्दिनश्चन्द्रशेखरः । आक्रम्य पादुके उभे सर्वरत्नोपशोभिते ॥ २७
सिंहासनाच्छनैस्तस्मात् अतिचभ्रामशोभनात् । कक्ष्यारक्षगणांस्तत्र तत्र संस्थाप्य रक्षकान् ॥ २८
द्वारदेशे ततः श्वेतं कलधौताचलप्रभम् । क्वणत्किङ्किणिसंघातैः बधिरीकृतदिङ्मुखम् ॥ २९
चामरावलिभिर्दीप्तं मणिपल्ययनाञ्चितम् । ककुदालंकृतं पीनस्कन्धं रक्तायतेक्षणम् ॥ ३०
अनुगृह्याग्रगणैकेन पृष्ठं कुंभोदरस्य वै । आरुरोहाद्रिसंकाशं महोक्षं रक्षकस्सताम् ॥ ३१
अभ्यगन् योगिनस्सिद्धाः तापसाश्च सुरेश्वराः । वैदिकानि च सूक्तानि जयशब्दादि मङ्गलैः ॥ ३२
अदितिश्च दितिश्चैव दनुः कद्रूररुन्धती । तुष्टिः पुष्टिश्च कीर्तिश्च स्वधा स्वाहा मतिर्धृतिः ॥ ३३
सरस्वतीच लक्ष्मीश्च सर्वा वै लोकमातरः । देवानां पत्नयश्चैव मुनीनां पत्नयस्तथा ॥ ३४
जगुस्तारसुस्वरं शम्भोः अपदानानि सर्वशः । गन्धर्वाः किन्नरास्सिद्धाः विद्याधर महोरगाः ॥ ३५
हाहा हूहूश्च महती तुम्बुरुर्नारदस्तथा । वैणिकीभिश्च ते सर्वे जगुः कर्माणि वीणया ॥ ३६
कुम्भोदरो गणाधीशः शंभोरन्तिकमाश्रितः । छत्रं शतशलाकाढ्यं चन्द्रमण्डल सन्निभम् ॥ ३७
दधार प्रेमसक्लिन्नहृदयोऽतिमहत्तरम् । तद्विपिमीकिचञ्चुभिः ययौ सर्वेश्वरेश्वरः ॥ ३८
उत्तमाङ्गे पतङ्गः इव पूर्णेन्दुमण्डलात् । खे खेलगामी तं देवं उवाह वृषभेश्वरः ॥ ३९
धुन्वन् मुहुः प्रोतयने विषाणे धृतचामरे । आससाद क्षणेनैव कैलासादचलेश्वरम् ॥ ४०
हिमवानपि शैलौघैः बन्धुभिः पुत्रपौत्रकैः । अभ्युज्जगाम नगरात् वितानध्वजमण्डितात् ॥ ४१
समीयतुस्तदाऽन्योन्यं ओघाविव समुद्रयोः । सैन्ये देवाधिदेवस्य पर्वतस्य च तत्क्षणात् ॥ ४२
मैनाकेन च पुत्रेण क्रौञ्चेन च हिमावतः । प्रणम्य देवदेवेशं प्रावेशयदसौ पुरम् ॥ ४३
औषधिप्रस्थमुत्तुङ्ग गोपुरप्रकराञ्चितम् । रथनागतुरंगौघ पदातिभिरसंकुलम् ॥ ४४
भेरीमृदंगमुरज ध्वनप्रतिविनादितम् । प्रासादं वनिताः प्रापुः ईशालोकनतत्पराः ॥ ४५
स्वकचायां गुहाऽस्वर्धं अर्धमण्डितविग्रहाः । उत्तरीयविस्रस्तं स्वयैवादाय चार्भकम् ॥ ४६
कायेन काञ्चित् रथया वालिता प्राप आलयम् । अन्या संमाज्य नयनं अञ्जनेन शलाकया ॥ ४७
अन्यत् विस्मृत्य नयनं आगतास्तं जगाम सा । परा विस्रस्तधम्मिल्ला प्रलापरजपिमूषणा ॥ ४८

वातायनपथ पुष्पै आतन्नोदञ्चित मुदा । अलक्तकेन सभाज्य पादमेकमथापरा ॥ ४९
निर्गत्य तावन्मार्गेण धर्मचक्रे तदञ्चितम् । पुरे पुरन्ध्रय प्रासादजालानि स्वैर्मुखाम्बुजै ॥ ५०
अम्भोजावरणानीव चक्रुरिन्दीवरेक्षणा । भर्ताऽपि प्राप जगता राजमार्गं सुरैस्सह ॥ ५१
ववर्षु पुष्पवर्षाणि लाजमध्यानि योषित । विलोक्य देवदेवेश आसामक्षाणि मानसै ॥ ५२
साक सर्वात्मना चक्षु प्रापतन् सुतरामिव । ऊचु परस्पर सर्वा जगदेतच्चराचरम् ॥ ५३
यस्य सकल्पकलित प्रवन्ति मुनियोगिन । प्रासादाज्ञ सवोऽस्यैव मुक्ति विन्दन्ति नान्यथा ॥ ५४
बालाऽपि देवदेवेश बालेन्दुकृतशेखरम् । चचारातो महद्गौरी तपो दुश्चरित चिरम् ॥ ५५
वयमद्य कृतार्थां स महतोऽपि महत्तरम् । कारण कारणाना च देवताना च दैवतम् ॥ ५६
आलोक्य चक्षुषा तेन योगिध्येय सता गतिम् । इति श्रोत्रसुखावाच देव शृण्वन् शनैश्शनै ॥ ५७
प्राप भूभर्तुरतुल भवन महदुन्नतम् । अवतीर्य वृषादाशु महतो जगताम्पति ॥ ५८
आक्रम्य पादुके नीते हरिणा रत्ननिर्मिते । आलम्ब्य ब्रह्मणो हस्त हरेरपि हर प्रभु ॥ ५९
अवाप महती कक्ष्या द्वारदेशे महीभृत । सर्वासामक्षिभिस्साक पुरन्ध्रीणा पुरामरि ॥ ६०
ततो वेत्रकरो नन्दी जगामाग्रे तदाऽऽदरात् । पठन् जयजयाधीश सावधानो भवातिकन् ॥ ६१
निम्नोन्नतप्रदेशौ त्व सावधानो विलोकय । पर्वतेन्द्रस्य सा पत्नी वरारोहा गिरीशितु ॥ ६२
प्रक्षाल्य पादौ पयसा गन्धेन च कृपानिधे । अष्टमङ्गळयुक्ताभि आनिनाय्यान्तरालयम् ॥ ६३
कल्याणमण्डप शम्भो कारित विश्वकर्मणा । नानामणिगणैश्चित्रै अनेकायामविस्तरम् ॥ ६४
रत्नस्तम्भसहस्राढ्य मत्तवारणिकावृतम् । तन्मध्ये नीलरत्नौघसमाकलितमुन्नतम् ॥ ६५
दिव्य सिंहासन चारु चतुस्तम्भैरलङ्कृतम् । अनेकादित्यसंकाश ब्रह्मणा प्रसरतस्करम् ॥ ६६
अलञ्चकार भगवान् भगनेत्रनिपातनः । कालाग्निरुद्रो रुद्रौघै गणेन्द्रैर्हाटकेश्वरः । ६७
प्रमथाभूतसंघास्ते परिवायापतस्थिरे ॥ ६७½

इति श्रीस्कान्दे महापुराणे शकरसहिताया शिवरहस्यखण्डे
सम्भवकाण्डे द्वाविंशोऽध्याय ॥

---

॥ अथ त्रयोविंशोऽध्याय ॥

श्री पार्वती विवाह ॥

सूत —

अथासनेषु चित्रेषु देवदेवेश्वराज्ञया । निषेदु परिवार्यैव शकर चन्द्रशेखरम् ॥ १
विष्णुश्च भगवान् ब्रह्मा मघवानपि भास्कर । अष्टौ च वसवो रुद्रा आदित्या द्वादशाश्विनौ ॥ २
महर्षयो वसिष्ठाद्या नारदाद्यास्सुरर्षय । योगिनस्सनकाद्याश्च सिद्धविद्याधरोरगा ॥ ३
मातरस्सप्तलोकाना देवाना पन्नपोऽमला । मुनीशा पन्नगस्सर्वा तथैवाप्सरसागणा ॥ ४
अदितिश्च दितिश्चैव सर्वास्ता दक्षसूनव । आवृत्यान्तर्महादेव अतिष्ठन्नासनेष्वमी ॥ ५
अथाद्रिराजो जननी जगता सहमेनया । पुरन्ध्रीभिश्च पौराणा अलचक्र सुमङ्गळाम् ॥ ६
सुगन्धितैलेनेशान्या चक्रुरभ्यगमगना । भद्रपीठे महादेवीं प्राङ्मुखीं धृतपङ्कजाम् ॥ ७
गौरीकल्याणवैभोग गायन्त्यश्च मुदान्विता । नानातीर्थैस्समानीतै अभिषेकमकुर्वत ॥ ८
नदत्सु शङ्खशृगेषु भेरीमुरजडिण्डिमे । अलङ्कृत्य ततो देवीं आनिन्युर्गिरिशान्तिकम् ॥ ९

रराज देव्या देवेश. दिव्यसिंहासने शिव । मेरोश्शिखर मारूढ. रोहिण्या चन्द्रमाइव ॥ १०
(तदाऽलङ्कारसयुक्ता नानारत्नैश्च शोभिताम् । सुगन्धिपुष्पमालाढ्या स्वर्णशृङ्खलया युताम् ॥ ११
डोला तत्र स्थिता दृष्ट्वा विष्णु प्रार्थितवान् शिवम् । भगवन् परमेशान डोलामारुह्य काञ्चनीम् ॥ १२
देव्या सह विनोद च कृत्वाऽस्माक प्रिय कुरु । विष्ण्वादिभि प्रार्थितैवं तथेत्युक्त्वाऽऽरुरोह स ॥ १३
हिमवानपि ता देवीं तत्र स्थाप्य च पार्श्वके । तुम्बुरुर्नारदश्चैतौ गायमानौ तदा मुदा ॥ १४
पश्चान्मङ्गळदीपैश्च पूजा चक्रुश्च लौकिकै । मेनाऽपि सहसा पश्चात् सपत्नीभिस्समागता ॥ १५
देव्या देवस्य पादौ च प्रक्षाळ्य पयसा मुदा । ईश्वरोऽपि तत प्राप कल्याणमण्टप च स ॥ १६
ब्राह्मणैर्वेदमन्त्रैश्च रङ्गमण्टपमाययौ ॥ ) ततो गिरिवराधीश सपुत्रगणबान्धव ॥ १७
पादौ प्रक्षाळ्य विधिवत् प्रभोस्सम्प्राश्य तज्जलम् । सम्प्रोक्ष्य मूर्धसु स्वेषु श्रद्धया सहमेनया ॥ १८
मधुपर्क महेशाय कृत्वा भक्त्या विधानत. । [ईश्वरस्य च वस्त्रादीन् देव्या धारणपूर्वकम् ॥ १९
माङ्गल्याभरणादीनि देव्या· कण्ठे बबन्ध स ॥ ] भृङ्गारजलमादाय सौवर्णात्सुरसंसदि ॥ २०
अभ्यर्च्य देवदेवेश वस्त्राभरणपूर्वकै । समन्त्रक ददौ देवीं धारापूर्वं शिवाय ताम् ॥ २१
[कन्या कनकसपन्ना सर्वाभरणभूषिताम् । दास्यामि शम्भवे तुभ्य सर्वमङ्गळशोभिताम् ॥ २२
प्रतिगृह्णीष्व देवेश मम सायुज्यदो भव । प्रतिजग्राह शम्भुस्ता सर्वलोकहिताय वै ॥ २३]
ततोत्सवो महानासीत् जयशब्दादिमङ्गळै । जग्राह पाणिं पत्न्या मुदा गौर्या महेश्वर ॥ २४
सर्वमासीत्ततो हृष्ट जगत्स्थावरजङ्गमम् । प्रणेमु पार्वतीं देवा परमेश च भक्तित ॥ २५
मुनयश्च गणाधीशा आत्मनो ज्ञानयोगिन । ततो मही महाभारभुग्ना सा दक्षिणोन्नता ॥ २६
अतिनीचोत्तरा भूय जातसम्पूर्णनाहृदि । अथ भीतास्सुरा प्रोचु अध पतनशङ्कया ॥ २७
प्रणम्य शूलिने शश्वत् मुनयश्च तपोधना । शम्भो जय दयासिन्धो महीयास्यधरोत्तरा ॥ २८
न पतेयुरिमे क्षिप्र यथा देव विधीयताम् । आज्ञया तव देवेश समीकुरु महीमिमाम् ॥ २९
एव संप्रार्थितो देवै स्मित कृत्वा शिव स्वयम् । अगस्त्यमात्मजस्तुल्य प्राहिणोद्रोहिणीशधृत् ॥ ३०
चक्रे त दक्षिणाशेश अधीशस्सुधिय मुनिम् । कल्याणवेष तत्रैव तस्मै सन्दर्शयन्निव ॥ ३१
सोऽप्याज्ञयाऽस्य दुःखेन सपत्नीको मुनीश्वर । वियन्मार्गेण संप्राप मलयाद्रिकुपत्यकाम् ॥ ३२
शिवभावनया तुल्ये शिवस्य मुनिपुङ्गवे । मलय समनुप्राप्ते विषमाभूस्समाऽभवत् ॥ ३३
अथ विज्ञापयामास ब्रह्मा देव कृताञ्जलि । यद्वो कार्या महेशान क्रिया वैवाहिकी विभो ॥ ३४
लोकश्रेष्ठेन यत्कर्म समनुष्ठितमादरात् । अनुतिष्ठति तल्लोक श्रेष्ठस्त्वमसि यद्विभो ॥ ३५
तदाऽऽकर्ण्य वचस्तस्य स्मयमानमुखाम्बुज । ददावनुज्ञामीशोऽस्मै विधये विधिपूर्वकम् ॥ ३६
द्रव्यवाह स्वयमूर्त्ते विवाहाध्वरमण्टपे । साक्षिभावे प्रजज्वाल प्रणम्य शिवयोस्तदा ॥ ३७
बर्हिभिस्सपरिस्तीर्य परिधीन्परिधाय च । आज्य विलाप्य विधिवत् आज्यस्थाल्यांनिरूप्य च ॥ ३८
अङ्गारेषु प्रतिष्ठाप्य द्वे दर्भाग्रे निधाय च । उपर्युदीच्या प्रज्वाल्य पर्यग्निकरण तथा ॥ ३९
उदगुद्वास्य सर्पिस्तत् संयोज्याघारमग्निना । अग्नि तज्जुहवाञ्चक्रे दर्व्याऽऽसादितया विधि ॥ ४०
समिद्राज्यमरुल्लाजान् दम्पत्यो प्रीतिवृद्धये । पादमीशोऽपि पाणिभ्या भवान्याश्शानकै स्पृशन् ॥ ४१
पदानि सप्त समाप्य दृषदग्रे न्यवेशयत् । [एकमिषे विष्णुस्त्वान्वेतु मन्त्रेणचरेवप ॥ ४२]
परीयतु पावक त दम्पती तौ मुदान्वितौ । [ब्राह्मणेभ्याशिष प्राप्य सन्तुष्टौ लोकदम्पती ॥ ४३]
दर्शासनगतौ पश्चात् दर्शन ददतु प्रभू । प्रथम प्रमथेन्द्राणा कालाग्न्यादिकेशितु ॥ ४४

हरिब्रह्ममहेन्द्राग्निप्रमुखानां च योगिनाम् । मुनीन्द्रोरगसिद्धानां सर्वासां सुरयोषिताम् ॥ ४५
वाचा संभावयामास कालाग्नि द्वारपेश्वरम् । गणेन्द्रानपि तान् सर्वान् स्मितेन मधुसूदनम् ॥ ४६
आलोकनेन ब्रह्माणं ईषदालोकनैस्सुरान् । कंपेन तापसान् मूर्ध्नः समाधनमथाचरत् ॥ ४७
अत्रान्तरे कामपत्नी वृन्दारिप्रमुखैस्सह । अप्रार्थयन्महेशानं भर्तारं मुहुरातमनः ॥ ४८
हैमवत्या तदालोकि तिरश्चीनदृशा शिवः । हरिणा ब्रह्मणाचापि स्वसंभोगोपपत्तये ॥ ४९
कर्ताऽपि तत्र तत्सर्वं दृष्ट्वा हृष्टमनाः स्वयम् । प्रोवाच रतिमालोक्य रतयेऽस्तु पतिस्तव ॥ ५०
आत्मनामपि सर्वेषां अनंगोऽङ्गी तवैव सः । कामारिराख्ययाऽस्म्यहप्रभृत्यस्मिन् जगत्त्रये ॥ ५१
अनंगीकृत्य तं भद्रे सोऽहमंगीकरोमि च । तवैव सोऽङ्गवान् कामः त्वां चैवाङ्गीकरिष्यति ॥ ५२
इति वादिनि देवेशे प्रयाणाभिमुखे सति । हिमवान् सहपुत्राभ्यां प्रणम्य प्रभुमग्निधौ ॥ ५३
मधुपर्कस्य शेषस्य विनियोगं व्यजिज्ञिपत् । अर्थिनस्तस्य ते देवाः हरिब्रह्ममुखा विभोः ॥ ५४
भद्राक्षुस्तुमाघाय शिरस्यञ्जलिमञ्जसा । अवेत्यतद्भवल्लेपां विभजस्वेति चादिशत् ॥ ५५
ततोऽहमहमित्येवं निर्माल्यं निर्मलाद्दतम् । अमराः स्वात्मशुद्ध्यर्थं स्वीकृत्यासन् सुनिर्मलाः ॥ ५६
अनुगृह्य ततोऽद्रीन्द्रं प्रभुरद्रीन्द्रकार्मुकः । ककुद्मन्तं समारुह्य कैलासं गिरिजासखः ॥ ५७
प्रतस्थे गणपैस्साकं देवैस्सह महर्षिभिः । संप्राप्येशः क्षणार्धेन तत्र भोगपुरे शुभे ॥ ५८
स्थित्वाऽश्मसद्मनद्वाश्शंभुः द्वारदेशे वृषोपरि । विससर्ज सुरान् सर्वान् कालाग्निप्रमुखानपि ॥ ५९
ऋषीनपि वसिष्ठादीन् आत्मनश्च चराचरान् । भ्रूसंज्ञयैव भूतेशः वृषादुत्तीर्य च क्षणात् ॥ ६०
नन्दिहस्तमथालम्ब्य स्वं निशान्तमथाविशत् । अन्तरंगगणैस्सार्धं देव्या शीतांशुशेखरः ॥ ६१
इतीदं परमेशस्य कल्याणं गिरिराड्भुवः । नित्यं पठति यो भक्त्या शृणुयाद्वा समाहितः ॥ ६२
नारीवाथ नरोवापि योवा कोवा द्विजोत्तमाः । कल्याणाध्यायमीशस्य हैमवत्याश्च सादरम् ॥ ६३
शृणोति सम्यगभ्यर्च्य वक्तारं विदुषांवरम् । कन्यार्थी लभते कन्यां पतिकामा पतिं शुभम् ॥ ६४
विद्यार्थी लभते विद्यां जयकामो जयं लभेत् । पुत्रार्थी लभते पुत्रान् आयुष्कामो वयोऽमितम् ॥ ६५
इदं पुरा मुरारातिः श्रुत्वा श्रद्धापुरस्सरम् । लक्ष्मीमापामृतोद्भूतां साऽपितं पुरुषोत्तमम् ॥ ६६
यात्र ब्रह्मा पुरा श्रुत्वा साऽपितं चतुराननम् । पुलोमजां महानिन्द्रः महत्या देवसंपदा ॥ ६७
गौतमोऽपि तथाऽहल्यां अन्येऽपि मुनयोऽमलाः । अस्याध्यायस्य पठनात् स्वंस्वमिष्टमथाप्नुवन् ॥ ६८
तस्मात् सर्वप्रयत्नेन कल्याणाध्यायमुत्तमम् । शृणुयुश्च पठेयुर्वा स्वस्वाभीष्टस्य सिद्धये ॥ ६९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे त्रयोविंशोऽध्यायः ॥

---

॥ अथ चतुर्विंशोऽध्यायः ॥

ब्रह्मादिभिः श्री शिवं प्रति वायुप्रेषणम् ॥

सूतः —

ततः प्रविश्य भवनं नवरत्नोपशोभितम् । अलंचकार भगवान् आसनं हैमवतीश्वरः ॥ १
नवोढया हिमाद्रीन्द्र सुतया स तयोमया । तदानीं सा शिवाभिख्याभिता योषितांमतम् ॥ २
व्रीळानम्राननाऽस्यर्थं नानाननगणाधिपैः । आलोक्य सुमुदे चेष्टां आदृतां मातृभिस्तथा ॥ ३

जह्नौ व्रीळां नवोढा सा कालेनैव शनैश्शनैः । एवं गते बहुतिथे काले शूलिनि खेलति ॥ ४
उद्यानेषु विचित्रेषु तत्रतत्र तया सह । जगत्स्वपि च सर्वत्र स्त्रीपुम्भावो व्यजृम्भत ॥ ५
सकामोऽपि सकामस्सन् रत्या पत्या जगत्त्रयम् । पञ्चानां पुष्पबाणानां वशाश्रिन्ये प्रयत्नतः ॥ ६
अथ देवा हरिमुखाः ऋषयश्च तपोधनाः । उत्सवान्ते विसृष्टास्ते स्वं स्वं लोकं त्रिशूलिना ॥ ७
अत्रान्तरेऽनुवृत्तसंभूय शूरपद्मभयात्तदा । महामेरुगुहां प्राप्य मन्त्रयामासुरञ्जसा ॥ ८
बृहस्पतिरिव भर्तारं गिरोमापाञ्च साञ्जलिः । उवाच भगवान्विष्णो पितामह जगच्चिरम् ॥ ९
शूरपद्मवधे शम्भुः सुब्रह्मण्यं स्वमात्मजम् । उत्पाद्य समुत्पाद्य प्रतिज्ञामकरोदिति ॥ १०
सत्यस्य सत्यवाचोऽस्य प्रतिज्ञा विळम्बते । अस्माकं किं करोतीशः दुरदृष्टैर्विजृम्भितम् ॥ ११
अहो किमिति हा कष्टं भाग्यवन्तश्च तेऽसुराः । शिवैकशरणा दैत्याः तमेवमनसागताः ॥ १२
एवमेव दिशामीशाः चिखिदुर्मुनयश्च ते । ततो ब्रह्माऽब्रवीत् वाक्यं संप्रेक्ष्य विबुधांस्तदा ॥ १३
ईशोऽस्माभिरुपास्यो हि पुनरेव दयानिधिः । असुराश्च सुराश्चान्ये जगत्स्थावरजङ्गमम् ॥ १४
जगन्मयस्य देवस्य तुल्या एव विचारणे । अथवा किं करोतीति विचार्यो जगतांपतिः ॥ १५
अन्तःपुरे सदा देव्या हैमवत्या सुरोत्तमाः । कोवाऽद्य प्रेषणीयस्स्यात् समीपं त्रिपुरद्विषः ॥ १६
विचार्यं तेन वृत्तान्तं बालचन्द्रशिखामणेः । ततः परन्तु यच्छक्यं तत्कर्तव्यं प्रयत्नतः ॥ १७
साध्वमन्यत गोविन्दो विधिवाक्यं दिवस्पतिः । देवाश्च सर्वे दिक्पालाः बह्वमन्यन्त सादरम् ॥ १८
अनुमत्या सुरेन्द्राणां विष्णोश्च बलवैरिणः । परमेष्ठी समाहूय पवनं गगनोद्भवम् ॥ १९
संभाव्य वाचा बहुधा सर्वेषामेव सन्निधौ । इदमाह महाबाहुः बहुमानेन वाक्पतिः ॥ २०
ब्रह्मा — वायो वयममीसर्वे कायमात्रावरोपिताः । हृतस्वा हृतलोकास्सो बहुकालं महासुरैः ॥ २१
नियन्तारं न पश्यामस्तेषां स्कन्दादृते किल । स्कन्दश्च शूलिनोत्पाद्यः शर्वाण्यामूर्ध्वरेतसा ॥ २२
पञ्चकृत्यपरेणैव प्रपञ्चस्यास्य कृत्स्नशः । चिरमीशेन वै देव्या दिव्यान्तःपुरवासिना ॥ २३
क्रियते किमिति प्रेत्य जानीहि त्वं सदागते । प्राणोऽसि प्राणिनां लोके देवस्यापि वपुर्महत् ॥ २४
अप्रगोह्वि श्रुतो वेदे मत्वा शीघ्रं कुरु प्रियम् । सुराणामपि सर्वेषां त्रैलोक्यस्यास्य मारुत ॥ २५
पवमानस्तु तच्छ्रुत्वा त्वरमाणोऽब्रवीद्वचः । नाहमस्मि विधे शक्तः सोममन्तःपुरे शिवम् ॥ २६
नापि चान्ये पुरा मारो यत्तःश्रुत्वाऽमृतान्वसाम् । रत्या वैधं समासाद्य भस्मासीद्विदितं न वः ॥ २७
प्रभञ्जनवचः श्रुत्वा पुनरुक्तं स्वयंभुवा । ब्रह्मा — उपदेशपरं शंभुं वटमूलनिवासिनम् ॥ २८
युयोज निजया पत्न्या तदेनस्तद्विनाशकृत् । अष्टमूर्तेर्भवाम्मूर्तिरिष्टा शिष्टसुपूजिता ॥ २९
सुरकार्ये महत्यस्मिन् त्वामेव वयमाश्रिताः । प्रत्याख्यानं न कर्तव्यं विळम्बमपि माकुरु ॥ ३०
गच्छ सन्तु शिवा नित्यं पन्थानः पवमान भोः । अप्रार्थयन् सुराश्चैवं विप्रा ब्रह्मर्षयोऽमलाः ॥ ३१
संप्रार्थितो मतिं चक्रे कथञ्चित्कथमाशुगः । आमंत्र्याभिमतस्थै तानचलं राजतं मरुत् ॥ ३२
कौसरोऽपि ततः पूर्वो दक्षिणः पश्चिमः क्षणात् । दक्षिणोऽपि च मन्दस्सन् पुरमीशितुराश्रितः ॥ ३३
गोपुरेण पुरं प्राप्य स्वामिनो वासमासदत् । दिव्यमणिचयखचितं दृष्टिप्रसरतस्करम् ॥ ३४
अनेकादित्यसंकाशं अभ्रंलिहगृहान्वितम् । अतीतकक्ष्यो गणपैर्द्वास्स्थैर्मरैरलक्षितः ॥ ३५
अन्तःपुराधिपस्यापि नन्दिनो निलयगतः । वायुस्वरूपवांस्तत्र तेनाबोधि समीरणः ॥ ३६
उक्तश्च स मुधा याहि साहसी त्वं प्रभञ्जन । विशसित्वं प्रभोस्ताचत् किमर्थं सदनं वद ॥ ३७
निशागतं चन्द्रचूडस्य मद्यं लोकशाश्च चोरवत् । नन्दीशवचनं श्रुत्वा निवृत्तगतिरप्रतः ॥ ३८

सदागतिः प्रणम्याथ शैलादेः प्राञ्जलिःपुरः । आतोऽस्मि देवकार्यार्थमाविष्टोऽस्मि सुरैर्मुहुः ॥ ३९
अपराधो महानस्ति क्षम्यतां क्षम्यतां त्वया । विज्ञाप्य प्रभवे यूयं प्रवेशयत मां प्रभो ॥ ४०
नन्दी प्रोवाच तं क्रुद्धो निवर्तस्व समीरण । समयो नैव तस्येशः माविर्ज्ञर्मनोजयत् ॥ ४१
विषोऽथ वायुर्देवोपस्था किंकरोमीति चिन्तयन् । इदं वियुधमुख्येषु निवेदिष्ये कथंचन ॥ ४२
तैरेवात्रोचितं यत्तदनुष्ठेयं च देवपैः । इति निश्चित्य मनसा मनोवेगं समास्थितः ॥ ४३
स्तत्सानुं अगामाशु गुहामपि सुराश्रिताम् ॥ ४३½

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चतुर्विंशोऽध्यायः ॥

---

॥ अथ पंचविंशोऽध्यायः ॥

देवैः श्री स्कन्दोत्पत्तिप्रार्थना ॥

सूतः —

तं विलोक्य सुरास्सर्वे प्रहर्षमतुलं गताः । तमपृच्छन् स्थितं पार्श्वे प्रणम्यानतचेतसम् ॥ १
ब्रूहि वायो महाभाग महादेवस्सतांगतिः । करोति किं भगेदानीं पार्वत्या परमेश्वरः ॥ २
तेषामिति वचःश्रुत्वा प्रसन्नमनसां तदा । वायुराह च तान् प्रेक्ष्य सर्वानिवेदमञ्जसा ॥ ३

वायुः —

न मया विदितस्तत्र वृत्तान्तदशिवयोस्सुराः । क्रुद्धेन नन्दिनादिष्टो नायं योऽवसरस्सुराः ॥ ४
इति श्रुत्वा निवृत्तोऽस्मि प्रभूणामेवसन्निधि । अतः परममी यूयं समाचरत यद्धितम् ॥ ५
इति वायौ वदत्येते खिन्नास्सब्रह्मकास्सुराः । सनारायणकास्सर्वे मन्त्रयित्वा चिरं पुनः ॥ ६
निर्गत्य मेरुकुञ्जाच्च प्रापुः कैलासमंजसा । आसेदुस्तत्र ते शंभोः पुण्यमायतनं महत् ॥ ७
तत्र देवाधिदेवस्य द्वारदेशं समाश्रिताः । सुचिरं प्रेक्षते कालमास्मामासुरन्तिताः ॥ ८
ततस्सर्वे सुराधीशाः नन्दिनं गणपुङ्गवम् । सेवितं गणैस्सर्वैस्सिद्धगन्धर्वकिन्नरैः ॥ ९
अनिच्छया बहिर्द्वारमाश्रितं समये तदा । आलोक्य मुदमापुस्ते धनं लब्ध्वेव निर्धनाः ॥ १
सन्तानकप्रसूनैस्तं समभ्यर्च्यामृतान्धसः । प्रदक्षिणनमस्कारै र्भक्तिभावसमन्विताः ॥ १
सन्तोष्य विविधैस्स्तोत्रैरग्रे प्राञ्जलयोऽब्रुवन् । त्वया धन्यतरो लोके शालंकायनसंभव ॥ १
शिलादो भगवान् साक्षात्त्रैलोक्यगुरुरीरितः । सुखदायो भवानद्य सुराणाममितद्युते ॥ १
विज्ञाप्य देवदेवाय संप्राप्तास्स्मदुःखितान् । समुद्धर जगन्मग्नं शोकाब्धौ च महार्णवे ॥ १
श्रुत्वेति वैबुधं वाक्यं श्रीमान्नन्दी शिवप्रियः । प्रविश्य देवनिकटं ज्योतिः पुञ्जाञ्चितं मुदा ॥ १
उपस्थाय तदा देवौ जगतां पितरौ कृती । सत्वेङ्गितेन तच्चित्तं चित्तजन्मरिपोः पुनः ॥ १६
न्यजिवपत्सुरान् प्राप्तान् सेवायै विनयान्विताः । आतानुक्तस्सुरान् पश्चात् प्रापयद्देवतेशितुः ॥ १७
तत्र देवोऽपि देवानां साकं देव्या जगत्प्रभुः । दिव्यसिंहासनारूढो दर्शनं प्रददौ स्मयन् ॥ १८
ते देवास्तमथालोक्य प्रीतिकण्ठकितवचः । अस्तुवन् स्तुतिभिः स्तुत्यमवशेनान्तरात्मना ॥ १९

देवाः —

ओं नमः प्रणतार्तिघ्न शिवायाघुम्मोचक । कल्याणदाय भवते कामदायिनमोऽस्तु ते ॥ २०

कामघ्नाय पुरघ्नाय कलिप्रमथनाय ते । सोमसूर्याग्निनेत्राय नमस्सोमार्धधारिणे ॥ २१
अघघ्नाय मखघ्नाय सुखप्राप्त्यैकहेतवे । शंभवे शङ्करायास्तु सर्वेशाय त्रिशूलिने ॥ २२
यमघ्नाय विषघ्नाय शत्रुघ्नाय सतांसदा । अस्माकं प्रभवे तुभ्यं लोकानां प्रभवे नमः ॥ २३
आर्तिरार्तिघ्न सर्वेषामात्मनामसुरोद्भवा । सेनान्यमाशु संपाद्य नोदानोद्य दयालुना ॥ २४

सूतः —

प्रार्थितः प्रभुरत्यर्थं दिविषद्भिर्दयानिधिः । बभूव वदनैः षड्भिः अलंकृततनुस्तदा ॥ २५
आसीनामासने साङ्गमंबिकामंबिकापतिः । व्यलोकयदमेयात्मा साकांक्षं षड्भिराननैः ॥ २६
तत्क्षणान्नयनैः षड्भिः लालाटैरूर्ध्वरेतसः । निरगात्कोटिसूर्याभं तेजः कालाग्निसन्निभम् ॥ २७
षोढा तेन जगत्सर्वं व्याप्तं सर्वं चराचरम् । अमरास्तेजसा तेन दुद्रुवुस्सर्वतो दिशः ॥ २८
तत्रतत्र समुद्वीक्ष्य तत्तेजश्शांभवं सुराः । अतिभीता इवाभीता इतिसर्वे विलिल्यिरे ॥ २९
अप्राप्तशरणाः दिक्षु प्राप्तास्ते सत्वरं पुनः । अनन्यशरणा भूयः शरणं प्रापुरीश्वरम् ॥ ३०
भीतिकंपितसर्वाङ्गाः निश्वसन्तो मुहुर्मुहुः । शरणं शरणं देव शरणन्नो भवाव्यय ॥ ३१
सर्वेज्ञ सर्वलोकेश सर्वशक्तिसमन्वित । सर्वार्थसाधनोपाय सर्वजीवदयापर ॥ ३२
रक्षास्मांस्तेजसाऽनेन सन्निरुद्धेक्षणान् क्षणात् । इति तत्प्रार्थनातुष्टः सांबस्सर्वेश्वरेश्वरः ॥ ३३
दयानिधिरतो भूयः तेजः प्रसारचेतसा । तत्तेजःस्मृतिमात्रेण पितोः प्रापान्तिकं क्षणात् ॥ ३४
सूक्ष्मीभूतं पुनष्षोढा स्थितं शान्तं तदञ्जसा । ततो देवः कृपामूर्तिः अमरानवलोक्य च ॥ ३५
वह्निवायू समाहूय वचनं चेदमब्रवीत् । युवामिदं मद्वहते वायो षोढा स्थितं पुनः ॥ ३६
आमरीमापगामाशु संप्रापयत माचिरम् । अन्ते शरवणस्यैतत् आज्ञया मम लीलकैः ॥ ३७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे पञ्चविंशोऽध्यायः ॥

---

॥ अथ षड्विंशोऽध्यायः ॥

श्री स्कन्दावतारः ॥

द्विजाः —

सूतैतदद्भुतं लोके शंभोरमिततेजसः । ऊर्ध्वरेतस्त्वमाश्चर्यं नेत्राल्लालाटिकाद्गतम् ॥ १
तदेतदैश्वरं तेजः स्कंदतामाप तत्कथम् । कथयस्व महाभाग कथां नो विस्मयावहम् ॥ २
सर्वज्ञोऽसि भवानेव जगत्यस्मिन् चराचरे । त्वया न विदितं नैव रोमहर्षण विद्यते ॥ ३
कथयास्मभ्यमखिलं सुब्रह्मण्यसमुद्भवम् । इति संप्रार्थितोविप्रैः व्यासशिष्यो महत्तमः ॥ ४
संप्रेक्ष्य कथयामास सर्वमेव यथातथम् । सूतः — शृण्वन्तु मुनयस्सर्वे सुब्रह्मण्यसमुद्भवम् ॥ ५
व्यासेन कथितं पूर्वं अस्मभ्यं करुणाबलात् । तदिदं संप्रवक्ष्यामि श्रेयसामेकसाधनम् ॥ ६
ईशेन तौ समादिष्टौ वह्निवायू महाबलौ । तेजसो वहने तस्य शरारण्यान्तमंजसा ॥ ७
देवं प्रणम्य तौ भक्त्या ब्रूतां भीतौ कृतांजली । आवां क्व च भवत्तेजः सर्वलोकाभिभावि भोः ॥ ८
शक्तिश्च कीदृशी वोढु आवयोरंबिकापते । श्रुत्वा तयोर्वचः शूली स्मयमानमुखांबुजः ॥ ९
प्रोवाच वचनं वह्ने वायो मच्छासनाद्बलम् । अस्तु तेजस्समुद्धारे भजेदेतच्चलाघवम् ॥ १०
देवाश्च वेधसासार्धं अनुयान्तुपुरारिणा । इति ब्रुवन्नन्तरधात् ईशो परमयाऽभया ॥ ११

पावक पावमेदातत् शीतल तेजसाज्वलत् । समूह षड्विध मूर्धा कियद्दूर श्रमगत ॥ १२
पचमानोऽपि चान्योन्य श्रम प्राप्य पुन पुन । कथ कथञ्चिद्गङ्गाया अन्ते शरवणम्यच ॥ १३
यत्नेन महता ताभ्या निक्षिप्त तमतद्विश्वम् । पद्मखण्डे पद्मनिभ पद्मकान्तारसौरमम् ॥ १४
तेन पीतप्रलागस्य तेजसा तनुतागता । मध्ये शरतटाकस्य पद्ममध्य निभाय सा ॥ १५
सहस्रसूर्यप्रतिम तत्र तच्छाभव महः । षड्वक्त्र द्वादशभुज द्विपाद सुमनोहरम् ॥ १६
वपु पुपोष जगता मङ्गलापुण्यवर्धनम् । कुमार सुकुमाराणा निदर्शनमभूत् क्षणात् ॥ १७
पुष्पवृष्टिरभूत्तत्र दिव्यदुन्दुभि निस्वनै । ननृतुश्चाप्सरस्सघा सर्वे लास्यकलाकुला ॥ १८
दिशा प्रसेदुर्मरुतो ववुश्च सुखमात्मनाम् । वृन्दारकगणेन्द्राणा भुवनेष्वतिशोभनम् ॥ १९
ऐन्द्र ज्योतिस्सुरास्सर्व प्रथम सुमनोहरम् । कुमाररूपमुद्वीक्ष्य हृतहृत्वा ववन्दिरे ॥ २०
मेनिरे स्वस्वमैश्वर्य यथापूर्व वय पुन । मोक्ष्यामहेऽसुरेन्द्रेभ्य पुनरानीय वैभवात् ॥ २१
सेव्यतास्येति तत्सेवा सादर मधुरलसा । ररक्षुरस्य परितो दिशो वज्रिमुखास्सुरा ॥ २२
एव परिचरत्स्वेषु विष्णुर्दैत्यनिषूदनः । षट्कृत्तिका समाहूय स्तन्यमेनमपाययत् ॥ २३
प्रत्यह कृत्तिका यूय भवताऽस्यमातर । इति विष्णुवच श्रुत्वा कृत्तिका षट् च ता पुन ॥ २४
मुख्ययोग वहन्त्यस्त प्रस्नुतस्य पय स्तने । आगत्य प्रीतिसयुक्ता स्तन्यमेनमपाययन् ॥ २५
आसपास्यागतास्वासु समीप सोऽपि शाभव । तासामनुग्रहार्थाय षोढामूर्तिरभूत् क्षणात् ॥ २६
ता वीक्ष्य सुकुमार त कुमार पुष्करोपरि । प्रत्येकमेकमादाय प्रहृष्टान्तरात्मना ॥ २७
प्रस्नुतस्तन्यश्च तास्सर्वा जिघ्रिरे मुखमाननै । अथयस्ते स्तनौ बाला तासामास्यावलोकका ॥ २८
क्रमशः पाययित्वा तान् कृत्तिका स्तन्यमात्मनः । पर्वेषु शाययित्वातु लालयन्त्यस्तदोषिरे ॥ २९
निद्राति स्म तत कश्चित् जहासान्यो मुहुर्मुहु । अरोदीदपरोऽत्यर्थ पर प्रोणातिभर्त्सित ॥ ३०
अहासच्च करोदारात् निद्रापरवशो मुहु । पादाङ्गुष्ठं स्वमास्येनाकरेण निदधेरुदन् ॥ ३१
अञ्जलिं स्वास्यदेशेऽन्य करयो सन्निवेशयत् । पुन क्षणान्तरेणान्य चचारस्योरसापर ॥ ३२
जानुभ्या चैव हस्ताभ्या किचित् किञ्चिच्चालह । पद्भ्या द्वित्राणि चाप्यन्यो जगाम च पपात च ॥ ३३
अपरस्तु कियद्दूर अभिव्याप्य मेदिनीम् । मातु करावलम्बेन महीमन्यो जगाम च ॥ ३४
उत्पतन्निपतन्नन्यो बभ्राम शिवसभव । पुन क्षणान्तरेणैव परो मुहुरुपाप्लुवत् ॥ ३५
अथ पादचरोऽत्यर्थ एकपादगति पर । मल्लव मेषवच्चान्यो मस्तकेनाप्रदर्भकम् ॥ ३६
परस्पर समाश्लिष्य बाहुयुग्मपरस्परौ । परप्रौरमतनोत् बालभावमुपागतम् ॥ ३७
षोढाविभक्तमिवतत् निविश क्रीडयारसम् । चेष्टितानि शिशूना ता विचित्राणि विलोकयन् ॥ ३८
विस्मयन्त्य पराप्रीतिं तेषु सर्वेषु चक्रिरे । विष्णुमुखाद्यै देवास्ते दृष्ट्वा हृष्टतनूरुहा ॥ ३९
चरित्राणि विचित्राणि कृतकृत्यास्तदाऽभवन् । ईशितेकोर्थितोऽस्माभिरधिका पञ्चऽजज्ञिरे ॥ ४०
षड्भिरेतैस्समुद्धर्तु शक्यावै लोककण्टका ॥ ४०½

इतिविविधमभीष्ट चिन्तयित्वा महेन्द्रा मनसि शिवकुमारान् षट्च कान्ताननान् तान् ॥
सुखमधिकमवापु मोक्षसाम्राज्यलक्ष्म्या किमिव जगति न स्यात् सौख्यमीशे प्रसन्ने ॥ ४१½

इति श्री स्कान्दे महापुराणे शङ्करसहिताया शिवरहस्यखण्डे
संभवकाण्डे षड्विंशोऽध्याय ॥

---

॥ अथ सप्तविंशोऽध्यायः ॥

नववीराणां उत्पत्तिः ॥

सूतः —

यदा तेजांसि देवाक्षिसमुद्भूतानि वीक्ष्य वै । अमरा दुद्रुवुर्भीताः तत्रा देव्यपि पार्वती ॥ १
अङ्कमीशं परित्यज्य संभ्रान्तहृदयाऽद्रवत् । प्रस्खलत्पादकमला निशान्ताभिमुखीमुहुः ॥ २
स्खलतोः पादयोर्वेगात् मञ्जीरखचितानि वै । रत्नानि मार्गपर्यन्ते नवापि व्यगळन् क्षणात् ॥ ३
तेजस्सु सूक्ष्मतनुषु निर्भयेषु सुरेषुच । देवी विदितवृत्तान्ता देवांस्तानशपत् क्रुधा ॥ ४
यस्माद्भयात् सुरा यूयं मामकादात्मसंभवम् । नसहध्वेऽस्य तद्यूयमनपत्या भविष्यथ ॥ ५
शप्त्वैवंसहसा देवान् देवी हिमगिरीन्द्रजा । पुनरंकमुमाभर्तुः आससाद शुचिस्मिता ॥ ६
रत्नेषु विनिकीर्णेषु मार्गस्योभयपार्श्वयोः । संक्रान्तप्रतिमा गौरी दशधा विरराज सा ॥ ७
ता दृष्ट्वा प्रतिमाश्शंभुः रत्नेभ्यः सहसाऽह्वयत् । समादधति देवेशे सर्वा रत्नपरिष्कृताः ॥ ८
तत्तद्रत्नाभदीप्तांग्यः तत्तद्रत्नसमाह्वयाः । उपतस्थुर्महादेवं देवींच हिमशैलजाम् ॥ ९
प्रेक्षन्तेस्म महादेवं प्रेमनिर्भरमानसाः । मुखकमलपत्राक्षं सुनास चारुकुण्डलम् ॥ १०
अकळङ्कशरच्चन्द्र कान्तमन्दस्मितोज्ज्वलम् । पिबन्तीनामभूद्गर्भो जठरेषुशिवाननम् ॥ ११
तासां मरीचिभिर्भानोः कालिकानां क्षणादहो । आलोक्य देवी तासां तत् भावमारक्तलोचना ॥ १२
गर्भंच जठरे भूयः मन्युप्रस्फुरिताधरा । माभूत्सूर्ध्वं सगर्भाश्च चिरं भवत कन्यकाः ॥ १३
इति देव्याभिशापानां रक्तानांयोषितांमुहुः । स्वेदोद्गमो महानङ्गे मुक्तामणिरिवाबभौ ॥ १४
आसन्नासन् गणश्रेष्ठाः नियुत खड्गपाणयः । शूरा.स्वेदोद्गमादस्मात् चर्महस्ताः महौजसः ॥ १५
भगाक्षिहन्ता भगवान् तान् कुमारानकल्पयत् । गौर्या शापात्तु वैगर्भे निवसन्ति महौजसः ॥ १६
ते शिवं जगतामीशं ऊपुश्चित्ते निधायवै । शुश्रूषमाणास्ताश्चापि पार्वतीमीशशासनात् ॥ १७
महाभारेण गर्भस्य दु.खितास्तास्तु नित्यशः । तत्र कालेन महता परिचर्यापराश्चुच ॥ १८
तासु सर्वासु यत्नेन शंकरेच प्रसेदुषि । परिचर्याप्रसन्नायां पार्वत्यां परमेश्वरः ॥ १९
तासामनुग्रहार्थं तु तामप्रार्थयदीश्वरः । स्वय प्रसन्ना शर्वाणी प्रतिशापाश्चतास्सती। ॥ २०
अनुजग्राह । गर्भाणां अवतारोऽनुमूतये । जगतामिति तास्वेव नव जाताः महौजसः ॥ २१
वीरा.वीरवराः लोके मातृणा वर्णपेशला । रक्तवल्लीति या रक्तरत्नजा वनितोत्तमा ॥ २२
तस्यामाविरभूद्वीरः वीरबाहुः प्रतापवान् । अन्या तरळवल्लीति मुक्तामणिसमुद्भवा ॥ २३
सर्ववीरवरः श्रीमान् तत्पुत्रो वीरकेसरी । पुष्यरागसमुद्भूता पोपीवल्लीति या स्मृता ॥ २४
तस्यां वीरमहेन्द्रोऽभूत् सर्ववीरवराग्रणीः । गोमेदकमणेर्जाता गोमेदतिलकास्मृता ॥ २५
तत्सुतोऽभूत् जगत्ख्यातः साक्षाद्वीरमहेश्वरः । वैडूर्यसंभवायास्तु पुत्रो वीरपुरन्दरः ॥ २६
याऽभूद्वज्रमणेर्वल्ली तत्सुतो वीरराक्षसः । श्रीमन्मरकताज्जाता तद्वल्ली विबुधै स्मृता ॥ २७
तत्सुतोवीरमार्ताण्डः शत्रुपङ्क्ति प्रतापनः । प्रवाळवल्ली या देवी तस्यां वीरान्तकस्सुतः ॥ २८
इन्द्रनीलमणेर्याऽभूत् नीलवल्लीतिसंज्ञया । वीरधीरस्सुतस्तस्याः ते वै नवमहौजसः ॥ २९
सर्वे ते दानवैस्तासां नाभिमार्गविनिर्गता । भयं भवानीसहितं प्रणेमु. प्रणतार्तिहम् ॥ ३०

पार्श्वं समाश्रयन् पित्रोः विनयेन महौजसः ॥ २०॥

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सप्तविंशोऽध्यायः ॥

---

॥ अथ अष्टाविंशोऽध्यायः ॥

## कुमारेण सह श्रीपार्वतीपरमेश्वराभ्यां कैलासगमनम् ॥

सूतः —

तानाह सर्वान् सर्वेशः सर्वेशो जगतांपतिः । भविष्यति हि हे वत्सा युष्माकं प्रभुरव्ययः ॥ १
पार्वतेयो महाबाहुरमरारिनिषूदनः । अनुशास्यैवमेतेषां कृत्वा नामानि शङ्करः ॥ २
उत्सुकोऽभूदुमादेव्याः पुत्रवक्त्रांबुजेक्षणे । आभाष्य भूधराधीशपुत्र्यासह महेश्वरः ॥ ३
प्रतस्थे वृषमारुह्य प्रणतार्तिहरः शिवः । पुत्रालोकनसञ्जात कौतूहलकृतादरः ॥ ४
प्रास्थानिको महानादः प्रमथैस्समताड्यत । पटहा भेर्यश्शङ्खाः काहल्यः कलनिस्वनाः ॥ ५
निर्ययुर्गणपश्रेष्ठा नानाशस्त्रास्त्रपाणयः । रथनागतुरङ्गेषु पत्तयश्च महाबलाः ॥ ६
सहस्राणि सहस्राणां रुद्रकन्या मनोरमाः । तथैवाप्सरसां संघा अनुगम्ये महेशितुः ॥ ७
सूर्याचन्द्रमसौ शंभोरार्यायाश्च पृथक् पृथक् । श्वेतच्छत्रे बभरतुः पार्श्वयोर्भक्तिभावितौ ॥ ८
हालास्यसुन्दरोऽस्यर्थमन्तरंगोऽन्तिकंगतः । कुमारनिकटस्थाये मुरारिप्रमुखास्सुराः ॥ ९
निर्याणध्वनिसंहृष्टा भक्त्या प्रतिययुः प्रभोः । प्राप क्षणेन भगवान् देवैस्शरवणं मुदा ॥ १०
तदानीमेव पद्मेषु पित्रोरीक्षणतत्परः । षोढोपविष्टस्ताश्चैनं परिवेदश्च कृत्तिकाः ॥ ११
भवोऽपि सहसा व्योम्नि भवान्यासह संस्थितः । मरुद्गणैर्गणेन्द्रैश्च मातृभिस्सह पुत्रकम् ॥ १२
मेने निरीक्ष्य तद्वक्त्रं सफलं लोचनत्रयम् । आहस सादरं देवी आर्ये पश्य मनोरमम् ॥ १३
आत्मजं बहुधासीनं सरोजेष्वासनेष्वमुम् । अनेन वीरसूस्त्वंहि जगतामार्तिहारिणा ॥ १४
इति वादिनि गौरीशे वृषादुत्तीर्य च क्षणात् । आलिंग्य देवी तानेतानेकधा मूर्ध्निजिघ्रति ॥ १५
गाढं स्तनान्तरे कृत्वा चकारैकं षडप्यमून् । द्विपादं द्वादशभुजं षड्वक्त्रं त्रिषडीक्षणम् ॥ १६
ददौ स्तन्यं स्नुतपयाः स्वर्णपात्रेण शोभनम् । बालोऽपि लीलयाङ्कस्थः पपौ षड्भिः पयोमुखैः ॥ १७
विद्यामयं ज्ञानमयं पावनं मातुरात्मजः । आलोकयन् मुखं तस्या अपाङ्गैरंबुजप्रभैः ॥ १८
पिबत्यस्मिन् पयोमातुः प्रस्कन्ना बिन्दवस्ततः । पतितान् सलिले पीत्वा शफरास्तान्मुनेस्सुताः ॥ १९
शापात्पराशरस्यासन् मात्स्यभावमुपागताः । पीतमन्त्रेण तेषां तत् पूर्वरूपत्वमागतम् ॥ २०
अथ देवी कुमारेण शिवांकं वृषभोपरि । प्राप दुन्दुभिनिर्घोषैर्जयशब्दादिमङ्गलैः ॥ २१
पुष्पवृष्टिरभूत्तत्र पित्रोर्मूर्ध्नि दिविच्युता । ननृतुर्मुनयस्सिद्धा दण्डहस्ता जटाधराः ॥ २२
आरोप्य वृषमीशोऽपि सकुमारां हिमाद्रिजाम् । आलोक्य कृत्तिकाः प्रादात् प्रीतो वरमुमापतिः ॥ २३
युष्माभिर्वर्धितो बालः स्तन्येन यदसौ चिरम् । युष्माकं संज्ञयालोके कार्तिकेयो भवत्वयम् ॥ २४
अद्य प्रभृति लोकेऽस्मिन् दिने युष्मासु मानवाः । प्रीतयेऽस्य चरिष्यन्ति व्रतं चिरकृतादराः ॥ २५
तेषामिष्टानि पुत्रोऽयं सद्यो दास्यत्यसंशयम् । पुत्रार्थी लभते पुत्रान् स्त्रियं स्त्रीकाम आप्नुयात् ॥ २६
धनार्थी धनंभूरि पशुकामः पशून् बहून् । विद्यार्थी लभते विद्यां निष्कामो मोक्षमाप्नुयात् ॥ २७

कुमारसंभवाध्यायं या शृणोति कृतादरा । वन्ध्यापि लभते पुत्रं कुमारसदृशं ध्रुवम् ॥ २८
सूतः — वरमिति करुणाब्धिः कृत्तिकाभ्यो वितीर्य स्वयमपि सहदेव्या पुत्रमादाय दोर्भ्याम् ।
पुनरपि भवनं स्वं प्राप भूतेन्द्रसंघैर्हरि विधिसुरयोगिवृन्द संभावितांघ्रिः ॥ २९.

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे अष्टाविंशोऽध्यायः ॥

---

॥ अथ एकोनत्रिंशोऽध्यायः ॥

श्री स्कन्दस्य बाललीलाः ॥

सूतः — अथ कश्चिदेव शिवयोरसविधेगमयन्मकाल मुपलालयतोः ।
शिशुता विनोदपरिशीलरसैर्हरसूनुरंगमभिमण्डि मुदा ॥ १
पदयोरमहंसकयुगेन पुनर्मणिनूपुरद्वयदलद्ध्वनकैः ।
कटिसूत्रकिङ्किणिमणिकणितैरुरसोल्लहारमणजातगुणः ॥ २
बहुनिष्ककाञ्चनमणिप्रवरैरधिकण्ठमद्भुतविभूषणकैः ।
रुरुचे भुजान्तरमनुष्यनभः पितृमातृ पीतमिव तारकितम् ॥ ३
मुखपङ्क्तयः श्रवणमण्डनकम्रमणिकुण्डलद्युति विकासभृतः ।
धृतपट्टलपि मणिदामलसत्स्वललाटसाम्य शशिमण्डलकाः ॥ ४
सुकिरीट पट्कमणि रश्मिलसत्ककुभोऽस्य मूर्धततयो विततः ।
बभुरद्भुतं सुरगिरिवासगिरेर्मणिसानुसन्ततिसमानरुचः ॥ ५
इति सच्चिदेशममित वचसां मनसामगोचरमनन्तसुखम् ।
शिशुभावमेत्य समलंकृतिमत्समलवकार शिवयोस्सविधम् ॥ ६
अथ सानुगो जगति खेलधिया पितरौ प्रणम्य परिगम्य मुहुः ।
निरगाच्छिशुस्सततमेव जगज्जनानां मनांसि भृशमुत्कथति ॥ ७
प्रथमं नृप पशुपतेः पुरतो निवसन्तमस्य ककुदंकरजैः ।
गतकण्डुकाममिविधाय तदा व्यलुठत्क्षणं प्रतिधर्षौव ततः ॥ ८
गणपान्विलोक्य बहुधा विहतान्प्रहसन्गणैस्सह मनोज्ञवपुः ।
निकटं समेत्य मुहुरङ्गुलिभि. स्वमुखं च वक्त्रमधिकं विदधे ॥ ९
सहसा प्रविश्य गृहमेकमतो निरगात्सनिष्कुटपथेन पुनः ।
गणपैरदृष्टगतिरन्यगृह नपथा विवेश तत एव बहिः ॥ १०
गगनाद्वनं सुमनसां महितं सहसा प्रविश्य तरुषण्डयुतम् ।
अधिरुह्य कश्चिदपि भूमिरुहं फलजातमस्य सविधयनुनः ॥ ११
परमेत्य सुनमपचित्य ततः परमेत्य वृक्षमपरं च ततः ।
धृतपल्लवप्रसवजातरतिः फलभक्षणाहितसुखप्रकरः ॥ १२
ततएव भौममपि लोकमितस्ततो विलोड्य विमनजातरतिः ।
पयसां निधीनपि च सततटान्प्रविमिद्य पादकमलेन शिशुः ॥ १३

सहसैकतामभिनिधाय मुदा मकरास्तिमीनपि ममर्दतराम् ।
कुलपर्वतानपि च कुन्तकरश्शतधा विभिद्य सह केसरिभिः ॥ १४
विललास पादयुगलेन तरूनसगिरेर्गिरिं गुरुरनन्तगुण ।
क्रमशो लतादिषु विहृत्य गणैर्भुजगालयेषु मणिभूमिषु स ॥ १५
वियदुत्पपात शशिभूपसुतो घनदन्तिदतुरमभगारति ।
स तु तत्र कार्मुकयुगं घनतः प्रतिगृह्य बाहुयुगलेन दृती ॥ १६
उडुवृन्द पिण्डशत कोटिशतैर्निरपातयत्त्रिदशकोटिमणीन् ।
सवितुश्च सप्तविशदापघनान् हरितो हरीनपनियाह्यबली ॥ १७
अधिरुह्य लोकविपदार्तिहरो बहुधागतीरगमयत्स्वरत्या ।
शशिनो रथ पुनरगाश्च तान् बहुलासुतो विबुधलोकनुत ॥ १८
विचचार दिक्ष्वपि दशास्यदनप्रसरत्परस्थिरकरीवचरस ।
सतमप्यपास्य गजमैन्द्रमत शिखिनोयमस्य निकते पयसाम् ।
अधिपस्य सोमसुतोऽश्च गजान् गमयाञ्चकार विविधे क्रमणे ॥ १९
ज्योतिश्चक्र ध्रुवकरगत वातरश्मिप्रणद्ध छित्वा बाल प्रथितमहिमास्वानुगाना कराग्रै ।
दिक्षवणासु स्वयमपि दधन्धारयन्व्योमगङ्गां नक्रान् बध्वा व्यसृजदभिसभावयपाथ पुनस्तान् ॥ २०
पश्चादूर्ध्वं महरपि जनस्तत्तपस्सत्यलोक गत्वा गत्वा तदधि वसतीन्विश्वसाध्यामरेन्द्रान् ।
लीलालोलो नवच कलयन्वेधसो भीमभूतान् लोकालोक गिरिमपि मुदा प्राप चिक्रीड बाल ॥ २१
सत्ये साक्षाच्छतधृतिमसौ चक्रपङ्क्ति कराग्रै स्पृष्ट्वा स्पृष्ट्वा तदुरसि सितान् ब्रह्मतन्तून् विकीर्णान् ।
ब्रह्मन्यब्रह्मन्डिउरसि शिखया चान्यथा लोकभर्ता वैकुण्ठ एव मुररिपुपद प्राप सर्वाधिनाथ ॥ २२
तत्र सविधे गरुडमद्भुतपक्षत्र तच्छयनशयमहिमस्य मुरशत्रो ।
युद्धमयमारचयति स शिखिजन्मा पत्र फणयो प्रहरतोऽश्च मुमुदे च ॥ २३
एकाकी सन् कचिदपि युवा मोहयन्वामनेत्रा वामाचारो चतुरपि महा वामलीलाविनोद ।
वेधादीनामपि च भुवनान्याश्रय तत्र भूय स्वामी क्रीडामहह विदधे सूरि संभाविताग्नि ॥ २४
अटवीमुपेत्य महतीमिह मेपसिह्ममन्यो यतः करयुगेन तदीयकण्ठम् ।
आदाय युद्धमयमारचयन्विलासी कासारमध्यमपि कारयति स युद्धम् ॥ २५
भूचाऽर्भक पुनरसौ पुरुहूतवध मात्रेव लोकवनिता घटया गृहीत ।
तत्रापि लोलदव सोऽङ्गमलञ्चकार ब्रह्मापि तच्छुति शिर स्थिरमेव वालाम् ॥ २६
वृद्ध कचित्पलितमौळिरतीव मन्द दण्डिधृतिः करतलादतयपि मुष्टि ।
लोकाननुग्रहपरो विचचार बाल लेखानुमाग भव एष सता सुबन्धु ॥ २७
नरेन्द्रसुतगत्त कचित्समधिरह्यमेष विभुः विचित्रमणिकिंकिणी निनदकण्ठमिरावतं ।
चिरेल हरसभय बहुविधैक धारागति सदश्वमहिमाधिक सकलदेव चूडामणि ॥ २८
मृगेन्द्रमपि सुरुचिकर नखाग्र दन्तावळिम् सिताग्र पृथुकेसर महितबालधी पेशलम् ।
उदग्रमधिरुह्य त भ्रमयति स गत्वा गतै वियत्यपि च भूतले गिरिसुतात्म भूरुद्रुतम् ॥ २९

विहगमपतिं क्वचित् क्वचिदपीह दुर्मं खग मृग च हरिण क्वचिच्छरभराजशार्दूलकौ ।
पयांसि च बहून्यपि समधिवह्य मार्गे भ्रमन् विकारमधिक भजन् मदसुधाब्धिचन्द्रो बभौ ॥ ३०

चचार वापीषु बहुष्वपीह तटाककोटीषु महेशपुत्र ।
नदीषु सर्वासु विहारशीलो मुद मनस्यात्मगणस्य कुर्वन् ॥ ३१

जगौ वीणापाणि क्वचिदपि चिर सुस्वरमय तदुन्नादाद्नानाविधरणततानेप कलयन् ।
मृगानप्यामीलन्नयनयुगलाञ्चीत तृणकान घनाक्रान्त व्योम व्यरचयदशेषाधिवामन ॥ ३२

क्वचिद्धस्ते वेणुं स सुषिरमुपाश्राय करयो निघृण्वन्तद्रन्ध्र पिदधदपि वैवाङ्गुलिमुखै ।
मनस्सर्वस्यैत्य मनसिजवशा लोकवनिता अनस्यात्स्वान प्रकटमधमद्ब्रह्मपरमम् ॥ ३३

यत्नाक्षराभ्यासपराद्विजेन्द्रपुत्रा स्वय बालवपुस्महेषि ।
अपीपठद्द्राविडमान्ध्रमन्यत् कर्नाटकाश्मागरदेवमाषे ॥ ३४

अद्यैनमद्यवेषु वर्णिवर्गेष्वसौ गृहद्ब्रह्मवटुर्महात्मा ।
वेदानधीते सकलातिशायी शिवागमेऽजाच्युत गीतकीर्त्ति ॥ ३५

इति हरशिशिनेत्र ज्योतिषोद्भूतमूर्त्तिर्बहिरपि परमण्डाद्दण्डकोटीषु चैवम् ।
चिरमपि स विहृत्य सानुगैरात्ममेरुदिशिपरमपि च तस्था जीगणचत्र तिष्ठन् ॥ ३६

इति श्री स्कान्दे महापुराणे शङ्करसहितायां शिवरहस्यखण्डे
समवकाण्डे एकोनत्रिंशोऽध्याय ॥

---

॥ अथ त्रिंशोऽध्याय ॥

श्री स्कन्दस्य इन्द्रादिभि युद्धम् ॥

अथ तत्र स्थिते तस्मिन् हरसूनौ जगत्पतौ । स्वलवानौ विहरति त्रिदशा विस्मय गता ॥ १
ते मेनिरे भूधराणा सन्तानममरौकसाम् । भीताश्च भृशमुद्विग्ना किंभवेज्जगतीतले ॥ २
त्रिरेकादशदेवाता रुद्राणा द्वादशा मनाम् । गणावसूना मरुता ससद्धाश्विनौ तथा ॥ ३
सहाद्यापतिभिस्सर्वे निष्ठौजसमुपागमन् । अजितिपिश्चहृदये क्रीडा बालस्य शूलिन ॥ ४
तदाते ऽपहतज्ञानास्सुब्रह्मण्यस्य मायया । अज्ञात्वा तेन सम्भूय वृत्रारिमिदमब्रुवन् ॥ ५

देवा —

मघवन् कस्य पुत्रोऽय बाल कश्चिज्जगत्त्रयम् । विलोडयामास चिर सर अकलमयत्कृती ॥ ६
उिन्नभिन्नाश्चतेनैव बालेन कुलपर्वता । एकत्वं सागरा नीता द्वीपाश्मत विमर्दिता ॥ ७
विक्षिताद्दिग्गजादूर भ्रामयित्वा मुहुर्मुहु । इत्थ विप्रकृते लोके काऽस्थितिर्वैदनोहरे ॥ ८
श्रुत्वेति मघवास्तस्य दृष्ट्वा विक्रममुत्तमम् । मायया तमविज्ञाय मनस्यैवमचिन्तयत् ॥ ९
अय को वा न जानीमो बालोऽत्यद्भुतविक्रम । अनेन लीलया सर्वं जगत्भवति भस्मसात् ॥ १०
विज्ञाप्यास्य प्रतीकार ब्रह्मणे तनुमो वयम् । आलोच्य विबुधैरेव मारुह्यकरिपुङ्गव ॥ ११
देवैर्गच्छन् सहस्राक्षो मेरुशृङ्गा दिगीश्वरै । शृङ्गाणि मेरोरेकैक तुङ्गानि करलीलया ॥ १२
विक्षिपन्त समुपाश्य कुमारपथि शूलिन । दृष्ट्वाक्रुद्धोऽमरै रसाक्त तमहर्तुं प्रचक्रमे ॥ १३
सोऽपिलीलापरोप्येन देवै कुप्यत्महात्मने । प्रहर्तुमुपचक्राम प्रभुस्सर्वैश्च समव ॥ १४

शरादैर्वै सहस्राक्ष प्रमुखै र्धनुषो मुहुः । प्रहितास्तंप्रति क्रुद्धैर्व्यंशन्पुष्पवृष्टयः ॥ १५
तस्योपरि कुमारस्य पादयोश्च विशेषतः । तूष्णीमास्ते कुमारोऽपि स्मयमानमुखांबुजः ॥ १६
पुनश्चवृत्रहाक्रुद्धः स्थितश्चैरावत मूर्धनि । प्राहिणोद्दक्षिणे तस्मै परस्मै वज्रमुज्ज्वलम् ॥ १७
तद्वज्रं प्रतिवज्रेण संघट्टितमिव क्षणात् । स्खलद्वह्निकणं शीर्णं धूलिपुञ्जमिवाभवत् ॥ १८
ततोऽधिकं तु संक्रुद्धो वज्रघातेन वज्रिणे । शरं धनुषि सन्धाय मुमोचैरावतोपरि ॥ १९
तेन बाणेन निहतो मस्तके गजपुङ्गवः । पपातव्यसुरत्यन्तं वज्राहत इवाचलः ॥ २०
मरुत्वान् पुनरुत्प्लुत्य जग्राहादाय कार्मुकम् । मुमोचशरवर्षाणि वर्षाणीव बलाहकः ॥ २१
कुमारोऽपि महाबाहुरेकं सन्धाय कार्मुके । शरंतेनाशुगासारमवग्रह इवाहनत् ॥ २२
चकर्त कार्मुकंचास्य तदद्भुत मिवाभवत् । वज्री पुनर्महाद्भुतशक्तिं तस्मै शितां भृशम् ॥ २३
मुमोच सहसा तस्मिन् ज्वलन्तीं ककुभोदश । पतितासा कुमारेऽस्मिन् यवसस्यदशां दधौ ॥ २४
यावन्मुञ्चति वृत्रारिः पुनश्शरमथापरम् । तावदेकेन मकुटं शरेणेन्द्रस्य पातयत् ॥ २५
ध्वज चैकेन शिखिजस्तस्याशनिसमुद्भवम् । पुनरेकेन कवच माच्छिनद्रत्नमुज्ज्वलम् ॥ २६
निचखानोरसि शरं तेन मूर्छामवाप सः । पतितेऽत्र बलारातौ विबुधाः क्रोधमूर्छिताः ॥ २७
परिवार्य शिशुं शंभोः मज्जुहुश्शरवृष्टिभिः । निवार्य वृष्टिं महतीं कुमारश्शरसंभवः ॥ २८
शरैरेव तदा शीघ्रं तान्प्रत्येकं जघान ह । यमस्योपरि पञ्चश्रेणीश्चत्वारि पाशिने ॥ २९
धनपेद्वौ रवेस्त्रीणि सोमायैकं पृथक् पृथक् । शरवृन्दं समुच्चैवं पातयामास लीलया ॥ ३०
दिक्पालानपरानेव मनेकानेक मेकतः । क्षणेन पातयामास शरेण शरसंभवः ॥ ३१
हतावशिष्टा विबुधा दुद्रुवुस्सर्वतो दिशम् । एतत्सर्वमशेषेण देवर्षिर्नारदस्तदा ॥ ३२
विलोक्यवीर्यं वीरस्य हृष्टरोमा मुहुर्मुहुः । बृहस्पतिं समभ्येत्य त्वरयोवाच गीष्पतिम् ॥ ३३

नारदः —

जीवायं जीवभूतोऽसि पुरोधास्त्रिदिवौकसाम् । तेसर्वेशिशुनैकेन मृधे विनिहतास्सुराः ॥ ३४
इदानीं रक्षितं शेषं तदाचरगुरोचिरात् । तदुपश्रुत्य धिषणो वाक्यं नारदभाषितम् ॥ ३५
ज्ञात्वा ज्ञानाक्षिणा देवैश्शिशवे यदनुष्ठितम् । स्कन्दाय जगतां भर्त्रे महासेनाय दक्षिणे ॥ ३६
गुहान्तराद्विनिर्गत्य गुहं शरणमाप सः । आसीनं शिखरे रम्ये स्वाधीनं जगतां प्रभुम् ॥ ३७
समेत्यास्तौ त्समस्तेश प्रणम्य शिरसामुहुः । बृहस्पतिः - ओंनमोऽनन्तमहिमापार सरित्तां पते ॥ ३८
स्कन्दाय दन्तिवक्त्रस्य सोदरायादरायते । षड्वक्त्रायैकवक्त्राय नमस्साक्षात्पिनाकिने ॥ ३९
द्विषड्भुजाय सौम्याय स्वार्चकेष्टप्रदायिने । उमाशङ्करयोरेक प्रेमभाजनमूर्तये ॥ ४०
अनन्तमूर्तये तुभ्यमनन्ताद्भुतहेतवे । अनन्तज्योतिषे तुभ्यमनन्ताय नमोनमः ॥ ४१
नविदुर्यद्बलं देवा मायया यस्य सर्वकाः । गुहं तमह मीशानप्रभुं त्वां प्रणमाम्यहम् ॥ ४२
जगत्यवनमुद्दिश्य द्विधाभूतेशमाश्रये । यन्मायापहृतज्ञाना विबुधा अबुधामताः ॥ ४३
अर्चयंमासाद्य वैरेण शिक्षितास्तं नमाम्यहम् । स्तुवन्तमिति संप्रेक्ष्य नमन्तं पादयोर्मुहुः ॥ ४४
गतुजमाह भगवानांबिकेयो बृहस्पतिम् । उवाच वरयाभीष्टं मनसा यदभीप्सितम् ॥ ४५
आदरेण गुरोर्भक्तः स्मयमानमुखांबुजः । श्रुत्वैवं वचनं शंभुसूनोराङ्गिरसोगुरुः ॥ ४६
प्रणम्याञ्जलिमाधाय वव्रेवरमनुत्तमम् । भगवन्देव सर्वज्ञ सुब्रह्मण्य दयानिधे ॥ ४७

त्वन्मायामोहिता देवास्त्वयायोद्धुं समुद्यताः । शिक्षिता भवतातेन यथादोषं सुरेश्वर ॥ ४८
छिन्ना भिन्नाश्च विद्धाश्च हतशिष्टाश्च दुद्रुवुः । अस्मानाचरितं सर्वं सोढव्यं भवताविभो ॥ ४९
यथापूर्वंभवन्त्वेते कृपया सासवस्सुराः । प्रत्यासक्तानिसन्त्वीश तेषामङ्गानिसर्वशः ॥ ५०
कुर्वनुग्रह दृष्ट्याऽस्मद्रक्षणेमतिमीश्वर । सर्वदापाहि सर्वेश प्रसन्नोभवसर्वदा ॥ ५१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे त्रिंशोऽध्यायः ॥

---

॥ अथ एकत्रिंशोऽध्यायः ॥

श्री स्कन्दस्य विश्वरूप दर्शनम् ॥

सूतः —

इत्येवं प्रार्थितः स्कन्दः सुरलोकपुरोधसा । प्रसन्नः प्रार्थनामस्य प्रददौ परया मुदा ॥ १
ततः सर्वे समुत्तस्थुः सुप्तोत्थितसधर्मिणः । प्रणेमुश्च ततः सर्वे देवा विष्णुपुरोगमाः ॥ २
तेषां देवोऽपि दयया मायामज्ञानरूपिणीम् । व्यपोह्य करुणामूर्तिः ददौ भक्तिं स्वपादयोः ॥ ३
प्रोवाच च पुनर्देवान् वेत्थ मां शिशुमज्ञवत् । पश्यताद्याशु मद्रूपं परं यत् पारमेश्वरम् ॥ ४
दिव्यं ददामि वश्चक्षुः मद्रूपालोकनक्षमम् । इत्युक्त्वाऽदर्शयत्तेभ्यो विश्वरूपं जगद्गुरुः ॥ ५
सप्तपातालपादं तत् सप्तद्वीपोर्विजंघकम् । सप्तार्णवपरीधानं दिग्बाहु व्योमनाभितत् ॥ ६
द्युशिरश्चन्द्रसूर्याग्नि नयनत्रयपेशलम् । परं जलदकेशंतत् ताराकुसुमगुंभितम् ॥ ७
शिवश्चात्मा मतिर्गौरी वामपार्श्वे जनार्दनः । दक्षिणे भगवान् ब्रह्मा भारती वैदिकीचवाक् ॥ ८
लक्ष्मीर्लक्ष्मीश्च पवनः प्राणादि दश भेदभाक् । मन्युः कालाग्निरुद्रोऽग्निः जाठरः समुदाहृतः ॥ ९
अनन्तादि महानागाः पादनूपुरहंसकाः । रोमाण्योषधयो भूरि यूकाण्डान्यण्डकोटयः ॥ १०
तत्कोटिसूर्यसङ्काशं कोटिशीतांशुशीतलम् । कोटिकालाग्नितेजस्कं परमं रूपमद्भुतम् ॥ ११
भवर्ण्यप्रमेयात्मा ब्रह्मण्यो हरसम्भवः । तेजसा तस्य देवानां चक्षूंष्यंधीकृतान्यहो ॥ १२
विनिद्रानिमिषाण्येव विषयाशाभिपेदिरे । किंपुनः तत्प्रकाशेऽस्मिन् महतोऽपि महत्तरे ॥ १३
मनांसि देवसंघानां क्षणं ज्योतिषिलिल्यिरे । सह पञ्चेन्द्रियैरीशे परेऽस्मिन् परमेश्वरे ॥ १४
लब्धसंज्ञाः क्षणेनैव देवा विष्णुपुरोगमाः । चक्षूंषि प्रार्थयन् देवं द्रष्टुं तं बाह्यचक्षुषा ॥ १५
प्रणम्यांजलिहस्तास्ते सुब्रह्मण्यमरिन्दमम् । देवाः – देवदेव जगन्नाथ शाङ्करे सकलेश्वर ॥ १६
अद्भुतं ते परं रूपं वीक्षितुं नैव शक्नुमः । देहि चक्षूंषि नो ब्रह्मन् दययेश दयानिधे ॥ १७
इति तत्प्रार्थनातुष्टः शंभुसूनुररिंदमः । देवां मन्दस्मितं कृत्वा देवानां दर्शनक्षमम् ॥ १८
दिव्यं चक्षुर्ददौ शीघ्रं स्वरूपालोक नक्षमम् । नमांस चक्षुषा शक्यं द्रष्टुं रूपमिति ब्रुवन् ॥ १९
ततस्ते विबुधेन्द्राद्याः ब्रह्मविष्ण्वादयस्सुराः । तत्तेजोमण्डलस्थैते सहस्रांशमलोकयन् ॥ २०
व्याप्तस्य सकलं तस्य जानुदेशगतं कियत् । देवाश्चातितरां तस्मात् उद्विग्नमनसो मुहुः ॥ २१
तस्मिन् तेजसि ते देवाः वैश्वरूपे जगन्मयम् । कोटिब्रह्मांडपिण्डानां महावपुषि रोमसु ॥ २२

यूकाण्डानीव कोटीनि चैकैकस्मिन् सहस्रशः । तत्तदावरणैः सार्धं तत्रस्थैर्भुवनैः जनैः ॥ २३
भूतैर्भव्यैर्भविष्यद्भिः ब्रह्मविष्ण्वादिभिःसुरैः । जानुप्रदेशमात्रेऽस्य दृष्ट्वा विस्मयमागताः ॥ २४
भीतभीताः प्रणम्यास्मै उपजह्रुः स्तुतीर्मुदा । वेदवेदान्तसंभूतैः वाग्भिर्वाचामधीश्वरम् ॥ २५
अप्रीणयन् प्रियं शंभोः आनन्दघनमद्भुतम् । देवाः – यतो जातानि विश्वानिभुवनानि यदन्तरा ॥ २६
येन जातानि जीवन्ति यत्प्रयन्ति विशन्ति च । तत् ब्रह्मपरमं साक्षात् सुब्रह्मण्यमुपास्महे ॥ २७
यन्मायामोहितात्मानः सच्चिद्रूपं परात्परम् । अज्ञात्वाऽर्थं जडं कर्तृ प्रवदन्ति नतास्तम् ॥ २८
त्रयीमयो यस्सवितुर्वरेण्यो मण्डलेस्थितः । हिरण्यश्मश्रुराकेशो आनखाग्रं हिरण्मयः ॥ २९
विनिद्र पुण्डरीकाक्षयुगलो जगतांपतिः । तं त्वामनन्यशरणाः प्रपन्नाश्शरणं गुहम् ॥ ३०
यस्यानन्दलवाः प्रोक्ता ब्रह्मादीनां मनीषिणाम् । पूर्णानन्दाब्धिमतुलं भजामहे उमासुतम् ॥ ३१
आद्यमिन्द्रं हरं विष्णुं ब्रह्माणममरान्तरम् । आहुर्यन्मायया मूढाः तमीशतनुजं नुमः ॥ ३२
मनश्चाप्येव तद्बुद्धिं इन्द्रियाण्यपरे विदुः । यत्कृपारहिताः लोके तद्ब्रह्मपरमं नुमः ॥ ३३
उक्तमेतत्समस्तं यत् शरीरं चिदचित् द्वयम् । नियामकं च सर्वेषां वयं तमुपास्महे ॥ ३४
अवस्थात्रयनिर्मुक्तं अवस्थात्रयसाक्षिणम् । प्रेरकं जीववृन्दस्य मोचकं तमुपास्महे ॥ ३५
ज्ञात्वेति यं जनः शान्तिं याति भूतिप्रदायकम् । शक्त्यायुधं सर्वशक्तिसमृद्धं तमुपास्महे ॥ ३६
सर्वमन्यत् परित्यज्य शिवाद्विप्रः शिवङ्करात् । ध्यात्वायन्मुक्तिमाप्नोति त्वां ब्रह्म समुपास्महे ॥ ३७
चर्मवन्मनुजो व्योम वेष्टयेद्यदि बाहुना । शिव यं त्वामविज्ञाय दुःखान्तं यातितंनुमः ॥ ३८
त्वयि दृष्टे जगन्नाथ सुब्रह्मण्य परावरे । भिद्यास्यात् हृदयग्रंथिः छिन्नाः स्युस्सर्वसंशयाः ॥ ३९
वपुषोऽस्मात् समुत्थाय परंज्योतिस्स्वरूपिणम् । प्राप्य स्वं रूपमाप्नोति तं त्वां वन्दामहे वयम् ॥ ४०
शताधिकसुनाड्यात्वां संप्राप्य त्वदुपासकाः । त्वदनुग्रहहृष्टापुः वैद्युतेन परंजनाः ॥ ४१
पुनर्विशन्ति संसारे त्वद्भक्तास्तां न देवप । तस्मात् त्वमेव सर्वेषां संसारार्णवतारकः ॥ ४२
त्वमेव गतिरस्माकं त्वदृते विद्महे परम् । परंब्रह्म परंधाम परंज्योतिः सईश्वरः ॥ ४३
परं रूपं पराशान्तिः परात्परमुपास्महे । स्तुत्वैवं प्रार्थयामासुः विश्वरूपस्थितं प्रभुम् ॥ ४४
भीता भवाम ते रूपं अत्युग्रं द्रष्टुमक्षमाः । दिवांधाइव सावित्रं जगतामधिनायक ॥ ४५
तदस्माकं यथापूर्वं अनुग्रहपरो भव । सौम्यं षड्वक्त्रमतुलं भुजद्वादशभूषितम् ॥ ४६
संपत्प्रदं सदा साक्षात् अस्माकमखिलेश्वर । गृहाण रूपमात्मेश कृतार्थाः वयमीश्वर ॥ ४७
एवं संप्रार्थितो देवैः ब्रह्माद्यैर्ब्रह्मणस्पतिः । कोटिकन्दर्पसंकाशं स्वरूपं परमास्थितः ॥ ४८
अब्रवीच्चामरेन्द्रान् तान् कार्तिकेयो महाप्रभुः । अनेन स्तोत्रवर्येण स्तुवतां भुवनत्रये ॥ ४९
यद्यदिष्टमहं दाता तेषामिति न संशयः । भूयोऽपि च वरानिष्टान् वृणीध्वमवि शंकिताः ॥ ५०
ततस्ते विबुधास्सर्वे ब्रह्मविष्णुपुरोगमाः । स्कन्दस्येति वचः श्रुत्वा प्राशावसरमार्थयन् ॥ ५१
प्रणम्य बहुमानेन ब्रह्माद्याः देवपुंगवाः । प्रार्थयामासुरीशस्य पुत्रं मित्रं सतां प्रभुम् ॥ ५२
देवदेव महासेन वरार्हा यदि वा वयम् । वरदो यदि वा त्वं भोः प्रसन्नो वा त्वमीश्वर ॥ ५३
अस्माकमधिराजस्त्वं अभिषिक्तो मुनीश्वरैः । शाश्वदमव्ययं प्राप्य पदं जगदधीश्वर ॥ ५४
सेनानीर्वै भवत्विन्द्रः त्वमिन्द्रोऽस्माकमव्यय । भूत्वा जहि सुरारातीन् शूरपद्मादिकान् प्रभो ॥ ५५
सुरबन्दीः स्ववीर्येण तत आनीय पूर्ववत् । भुङ्क्ष्व भोगान् यथाकामं त्रैलोक्यभयनाशन ॥ ५६
इति तत्प्रार्थनातुष्टः पार्वतीनन्दनः प्रभुः । प्रसादसुमुखो भूत्वा प्रोवाच विबुधोत्तमान् ॥ ५७

इन्द्र एव भवत्विन्द्रो युष्माकं त्रिदशेश्वराः । अहमेवास्य सेनानीः भूत्वा त्रैलोक्यकण्टकम् ॥ ५८
शूरपद्मासुरं शीघ्रं निहत्य सहबन्धुभिः । तद्भ्रातॄनपि पुत्रांश्च चतुर्विध चमूगणैः ॥ ५९
संहृत्य क्षणमात्रेण लोकबाधापरानहम् । धीरश्रिया सह क्षिप्रं आनयिष्ये सुरश्रियम् ॥ ६०
वदन् स्मृतः पितुः पार्श्वं प्रतस्थे रजताचलम् । अनुजग्मुश्च ते सर्वे विधातृप्रमुखास्सुराः ॥ ६१
प्राप्य कैलासमचलं तत्रैकं शिखरं श्रिताः । तत्राराधयितुं देवं सेनापत्येऽभिषिच्यतम् ॥ ६२
मतिं दधानास्सहसा विश्वकर्माणमब्रुवन् । त्वष्टः क्षिप्रमुमासूनोः अभिषेकार्थमीशितुः ॥ ६३
पुरं रचय रत्नाढ्यं रत्नप्राकारमण्डितम् । लब्धानुज्ञेन तेनाशु चक्रे पुरमनुत्तमम् ॥ ६४
अभ्रंलिहाग्रप्रासाद गोपुराट्टालमण्डितम् ॥ ६४½
इति विविधमणीनां दीपिताशं प्रभाभिः पुरमिदमभिवीक्ष्य स्कन्दगिर्याश्रयश्रृङ्गे ।
हरिविधिबलवैरिप्रष्ठविश्वामरेन्द्राः स्थपतिमभिशशंसुः विश्वकर्माणमग्र्यम् ॥ ६५½

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकत्रिंशोऽध्यायः ॥

---

॥ अथ द्वात्रिंशोऽध्यायः ॥

स्कन्द पट्टाभिषेकः ॥

अनेकयोजनायाम विस्तारमतिपेशलम् । नाम्ना स्कन्दपुरं तत्र सर्वभाग्यसमृद्धिमत् ॥ १
उच्छ्रायिग्रहमालाभिः वीथिकाभिरलंकृतम् । अत्युन्नतपताकाभिः आलीढाण्डान्तभित्तिकम् ॥ २
तन्मध्ये निहितच्छत्रं भवनं सुमनोहरम् । निर्ममे तत्र राजार्हं सूर्यकोटिसमप्रभम् ॥ ३
मण्डपं तत्र रत्नाढ्यं मण्डितं स्तंभकोटिभिः । जलस्थलभ्रमकरैः द्वारकुड्यमतिप्रदैः ॥ ४
कुड्यद्वारनिभैश्चापि मणिभिश्च विराजितम् । तत्र सिंहासनं चाग्र्यं सर्वरत्नोपशोभितम् ॥ ५
सहस्रायुतकोट्यर्क समद्युतिभिरन्वितम् । तत्र संस्थाप्य देवस्य तनुजं त्रिपुरद्विषः ॥ ६
संभृताशेषसंभाराः सर्वैर्मुनिगणैः सह । सब्रह्मकास्ससाध्याश्च सनारायणकास्सुराः ॥ ७
महाण्डोदर मध्यस्थ तीर्थतोयैर्जगद्गुरुम् । मुनयोऽभिषिषिचुस्तं वसिष्ठप्रमुखा द्विजाः ॥ ८
ब्रह्मविष्ण्वादि सेनानां सेनापत्ये जगद्गुरुम् । वैदिकैर्विविधैर्मन्त्रैर्वेद वेदान्तपारगाः ॥ ९
देवदुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः । निस्साण तिमिला ढक्का वीणा पणव डिण्डिमाः ॥ १०
शङ्ख शृङ्ग मृदङ्गाश्च चिह्नकाहलिकामुहुः । समुद्रकल्पसन्नादा निनेदुः श्रुतिहारिणः ॥ ११
तदा मधुरवाद्यानि वीणावेणुक्वणस्वनैः । किन्नरा गरुडा सिद्धा विद्याधरगणा जगुः ॥ १२
साङ्गना अमितानन्दा स्तथा किंपुरुषोत्तमाः । हाहाहूहूश्च गन्धर्वा श्चित्रसेनमुखाश्च ते ॥ १३
अभिषिच्य जगद्बन्धुं सेनापत्ये हरात्मजम् । वस्त्रमाचमनं चैव गन्धयज्ञोपवीतकम् ॥ १४
धूपं दीपं च नैवेद्यं चक्रुस्सर्वोपचारकैः । देवा विष्णुमुखास्सेना अस्माक जगतांपतिः ॥ १५
देवसेनापतिः स्वामी महासेनो जगद्गुरुः । देवं ददृशुरित्येवं नानोपायनपाणयः ॥ १६
दृष्ट्वा च दर्शनं तेषां देवानां हरसंभवः । विसृज्य सहसा सर्वान् विजहारातुलप्रभ ॥ १७
अथास्मिन्नन्तरे कश्चिन्नारदो नाम वै द्विजः । महात्मा ऋषिमुख्योऽसौ यष्टुकामोऽध्वपद्य त ॥ १८
तस्यैवं यजतस्सम्यग्यज्ञे वै बहुदक्षिणे । आलभ्यस्य पशोस्तस्मिन्नृत्विग्विपण्डिते ॥ १९

विशसत्याशु संभूतदञ्जागरसर्वाङ्गपेशलः । अत्युन्नत प्रभाश्रृङ्ग मण्डलो रक्तलोचनः ॥ २०
दीर्घश्मश्रुलसद्वास्य पूर्वापरविराजितः । कर्णस्तनयुगभ्रान्ति निरस्तारित घनावलिः ॥ २१
दीर्घजङ्घ चतुष्पादः खुराग्रनिहतावनिः । हृष्टपुष्टतनुः पुच्छसमुल्लिखिततारकः ॥ २२
लंबितस्थूलवृषणो मदगन्धकटुःपटुः । लसन्मणिगणाकीर्णे क्वणन्नूपुरहंसकः ॥ २३
क्षुद्रघण्टालसत्कण्ठ घण्टास्वनमनोहरः । शौर्ये जवेच विजितगरुडानिलविक्रमः ॥ २४
बभ्राम भृशदर्पाढ्यो जगदप्रतिमल्लकः । दुद्रुवुर्दिग्गजास्तस्य मदगन्धानिलाहताः ॥ २५
पलायतोऽतिवेगेन प्रत्येत्याशु मनोजवः । जघान मूर्ध्नि सिंहस्य मूर्धातुल्येनचाशनैः ॥ २६
तेनाभ्रमुपतिर्भ्रान्तलोचनो भ्रममापसः । पुण्डरीकोऽपि नाम्नाऽन्यो वनं प्राप भयात्ततः ॥ २७
वामनो वामनोऽतीव बभूव भयवेपितः । कुमुदोऽपि कुमुज्ज्ञे गतो नेत्रमथाञ्जनः ॥ २८
पुष्पदन्तस्य शान्तिस्तत् पुरतः स्थितिहेतुकी । सर्वां भूमिं गतो येन सार्वभौमस्तदादिशः ॥ २९
प्रसाद्य प्रतिहस्तेऽस्य सुप्रतीकोऽपि दुद्रुवे । इत्थं छागेन चैकेन शोकसूदुर्गजादिशाम् ॥ ३०
निर्जित्याशागजानेको रसायास्तलमाप सः । बलेस्तत्र गृहेनागा ये स्थिताविषसाधकाः ॥ ३१
विलोलयामास जयी बलं तेषां मदोद्धतः । उपर्यपितलान्येवं कलयामास भोगिनः ॥ ३२
सप्तापिच तलानेको मेषो निर्जित्यलीलया । आलोकालोकमवनिं मनुष्यमृगपक्षिणः ॥ ३३
सागरान्तर्जलचरैर्युयोधमहतौजसा । मेघपङ्क्तिमसौ व्योम्नि प्रभञ्जन इवापरः ॥ ३४
बभञ्ज तरसा सर्वान् क्षणार्द्धार्धेन गर्वितः । अनुदुद्राव सवितुर्ज्योतिषां शशिनो रथान् ॥ ३५
नाकिनो नाकनिलया नवाघतमदालसः । विश्वनाथ महद्देवान् जने साध्यांस्तपस्यथ ॥ ३६
योगिनो सनकश्रेष्ठान् सत्ये साक्षाच्चतुर्मुखम् । सगणं सर्वकर्त्तारमभीपयद्दर्पं बली ॥ ३७
वैकुण्ठलोकमासाद्य तीर्त्वाच विरजां नदीम् । वैष्णवानपि तत्रत्यान् बाधमाने मखोद्भवे ॥ ३८
नारदेनामरास्सेन्द्रा यजमानेन सर्त्विजः । यज्ञवाटं परित्यज्य विपरीतफलप्रदम् ॥ ३९
कालकूटा दिवनत्ता नीलकण्ठं सदाशिवम् । कैलासगिरिमापुस्ते शैलराजं शिवप्रियम् ॥ ४०
तत्र देवगृहद्वारे क्रीडापरवशाशयः । वीरबाहु प्रभृतिभिर्वीरो दृष्टोऽग्निभूर्गुहः ॥ ४१
देवैरिन्द्रादिभिर्देवसेनानी रखिलेश्वरः । ते तमेत्य जगन्नाथं सर्वार्तिहरमव्ययम् ॥ ४२
व्यजिज्ञपन्महासेनं हरसूनुं प्रणम्यते । देवाः — देवदेव महासेन महादेवांगसंभव ॥ ४३
प्रसीदास्मत्प्रभो शंभो विज्ञप्तिश्श्रूयतामियम् । अयं मुनिवरोऽस्त्यर्थे परमेशाग्निवल्लभः ॥ ४४
ईजे यज्ञेन यज्ञेशं सोमं सोमार्धभूषणम् । भतारतं नारदोऽयं नारदेनसमो महान् ॥ ४५
तस्यास्य यज्ञे वितते छागालंभेसतिप्रभो । छागो महान् समुत्पन्नो दैवयोगादरिन्दम ॥ ४६
जगत्त्रयं तेन देव दुर्वृत्तेनाकुलीकृतम् । कालकूटादतितरां क्रूरेण महताधुना ॥ ४७
निगृह्य रक्षसि नचेत् जगद्ध्वंसं भविष्यति । त्वत्तोऽन्यो नैवशक्तोऽस्ति देवोवादानवोऽपिवा ॥ ४८
तदाशु रक्षरक्षास्मान् जगच्च सचराचरम् । संप्रार्थितोऽयं त्रिदशैर्निग्रहेऽजस्य देवपः ॥ ४९
करं करेण सन्ताड्य वीरबाहोर्विहस्य सः । समादिदेश भगवान् तमस्यानयने त्वरन् ॥ ५०
आज्ञया तस्य सहसा वीरबाहुररिन्दमः । मेषस्यान्वेषणेऽयत्नः विचिन्त्य भुवनत्रयम् ॥ ५१
आरसातलमारभ्य ब्रह्माण्डावधिसत्वरम् । तदाजो विष्णुभवने विप्रकुर्वन्विलोकितः ॥ ५२
कोलाहलेन तत्रैव जनस्य महता तदा । वीरबाहुरमेयात्मा गृहीत्वैनं विषाणयोः ॥ ५३

निनाय त्वरया देव निकट प्रकट बली । मेष पूषसहस्राभ मनोनिलमहाजवम् ॥ ५४
दृष्ट्वा हृष्टमनास्स्कन्दः तमध्यारुरोहस । पार्ष्णिघात कशाघातैस्तस्य दर्पमपाकरोत् ॥ ५५
यत्नेन स्ववश नीत्वा तमश्ववदरिन्दम । धारागतीरमु स्वामी चालयामास वीर्यवान् ॥ ५६
भ्रामयामास सहसा वातयवायुमनोरमम् । भुवनान्यपि सर्वाणि त्वभ्रामाधिकसंभ्रम ॥ ५७
बहुलोकगुरु मेषो महान्त विगतस्मय । श्रान्त श्रमजलाकीर्णो विवृतास्योऽतिफेनिल ॥ ५८
हतदर्पस्त्वोऽत्यर्थं प्रकम्पिततनुस्तराम् । कशयाऽभिहतोत्यर्थमपि निर्बलता गत ॥ ५९
अथेदृशस्समेषोऽपि लोकानामपि बाधक । प्रभुणानुगृहीतोऽसौ दयथैव दयालुना ॥ ६०
छागोपि तेन तत्वज्ञो भूत्वाऽस्तौषीदुमासुतम् । प्रणाममपि देवाय प्रसन्नमनसाकरोत् ॥ ६१
तेनाप्यतितरा प्रीतो वाहन तमकल्पयत् । छागस्यास्य जगत्कर्ता दुष्प्रापमहतात्मनाम् ॥ ६२
चकारानुग्रह ह्येव भक्तस्यान्यस्य किंपुन । अग्निभूरग्निषन्मेषवाहनोऽभूत्तदादि स ॥ ६३
नारदोऽपि तदोत्सन्न यज्ञो देवैर्महर्षिभि । देवसेनापतिं मूर्ध्ना प्रणिपत्योपतस्थिवान् ॥ ६४
वीक्ष्य त छागवाहोथ देवैस्सह मुनीश्वरै । यज्ञान्तरायदु खार्तमिद वचनमब्रवीत् ॥ ६५

इति श्री स्कान्दे महापुराणे शाकरसहिताया शिवरहस्यखण्डे
संभवकाण्डे द्वात्रिंशोऽध्याय ॥

---

॥ अथ त्रयस्त्रिंशोऽध्याय ॥

ब्रह्म कारागृह प्रवेश ॥

सूत — इति देवाशसभूतो देवसेनापति प्रभु । प्रणत प्राञ्जलिं पार्श्वे नारद मुनिमब्रवीत् ॥ १
महर्षे तव यत्नेन ममाभूद्वाहन महत् । तनान्तरायो मैवास्तु पूर्तिमेतु पुनर्मख ॥ २
गच्छ देवैर्यथापूर्व ऋत्विग्भिर्यज्ञमाशुतम् । दक्षिणाभिर्यथोक्ताभि स्समाप्यावभृयाप्लुत ॥ ३
मम वाहनदानेन शतयज्ञफल लभेत् । ये लोके मनुजामह्य यत्किंचिदपिभक्तित ॥ ४
प्रयच्छन्ति फल तेषा सर्वयज्ञतपोऽधिकम् । इत्यादिश्य विसृष्टस्ते नारदाद्यास्सुरर्षय ॥ ५
यथोक्त प्रभुणा चक्रुस्सुखमापच वै मुनि । सोऽपि तत्रैव कैलासे विजहार यथारति ॥ ६
एतस्मिन्नन्तरे ब्रह्मा सहसाध्यैर्मरुद्गणै । सत्यलोकादुमाकान्त समाराद्धुमुपागत ॥ ७
कैलासशिखरे रम्ये शङ्करस्य शिवालये । मोदन्ते देवतास्तत्र मुक्तिभाजस्तदाश्रयात् ॥ ८
स तत्र विनयेनैव प्रविश्य विबुधैस्सह । अतीत्य विविधा वीथीरत्युन्नत पताकिका ॥ ९
आससाद महच्चित्रमालय परमेशितु । ददर्श द्वारि जगता विहरन्त गुरु गुहम् ॥ १०
शिवयोस्सखिभि पुनर्मर्त्यमजर शिशुम् । तदा तस्य विनोदाय सुब्रह्मण्यो विधेर्मतिम् ॥ ११
जहार तेन त ब्रह्मा नैवाजानात् परप्रभुम् । प्रविवेश शिशु मत्वा शिवावसथमद्भुतम् ॥ १२
चिर तत्र महादेव समुपास्य ससादरम् । साध्यैस्साक विसृष्टोऽसौ सत्यलोकाय निर्गत ॥ १३
तदानीमपि दयस्य कुमारो मारसुन्दर । तत्राखेलत् बहिर्द्वारि सवयस्यैर्हरात्मज ॥ १४
तस्यैव दीप्यतोऽभ्याशे गच्छन्वाग्विभ्रसंभव । अकृतानतिराहूय पृष्ट कस्त्वमितिक्रुधा ॥ १५

ऊचे पद्मात्प्रणम्यैनं प्राञ्जलिर्विनयान्वितः । ब्रह्माहमिह संप्राप्तस्सुब्रह्मण्य दयानिधे ॥ १६
सेवार्थे शिवयोरद्य सत्यलोकाज्जगद्गुरो । साध्यैस्साकं सुरैरेभिः कृतेशोपास्तिरस्मि ते ॥ १७
कृपाया पात्रभूतोऽद्य समाहूतो यदृच्छया । कृतार्थोऽहं गमिष्यामि सत्यलोकं विभुश्रमाम् ॥ १८
गच्छन्तमितिधातारं नमन्तमपि पादयोः । विनोदायाभणत्स्वामी विहस्य सस्मितं क्षणम् ॥ १९
ब्रह्मन् तव कृतिः का वा कासु विद्यासु पाटवम् । जिज्ञासुरहमद्यात्र पृच्छामि न परीक्षक ॥ २०
मा कृथाः कोपमधुना वद ब्रह्मन् त्वमञ्जसा । तदुपश्रुत्य वचनं गम्भीरमतिपेशलम् ॥ २१
भीतः प्रीतमना प्रादादुत्तरं चतुराननः । देवासुरमनुष्याणां स्रष्टास्मि जगतां प्रभो ॥ २२
नान्योऽस्ति मत्समो लोके चराचरकृते पटुः । अष्टादशासु विद्यासु पटुरस्म्यहमेव भो ॥ २३
वेत्ति धात्वर्थभूतानां विद्यानामहमाश्रयः । श्रुत्वैव विधौ भूयः प्रत्याचष्टेऽग्निभूरमुम् ॥ २४
मुग्धोपलालयंस्तस्य गिरां वचनमादरात् । स्कन्द -अहो पटुरहो वेत्ता महांस्त्वं महतोऽधुना ॥ २५
तासु विद्यासु त्वाद्यायास्तदा वद कियत्पदम् । सन्तोषो ह्यस्मदादीनां शिक्षा वृद्धभाषणे ॥ २६
तदाद्यावक्ष्व सविधे विधे सर्वं शृणोम्यहम् । सखिभिर्दै सखायोऽस्य शृणुध्वं गदतो गिरः ॥ २७
रूपमेवास्य सर्वेषां महिमानं वदत्यलम् । श्रुत्वाचष्ट ततो ब्रह्मा श्रुतिमाद्यामृगात्मिकाम् ॥ २८
स्वरमादौ पपाठैष बिन्दुनादैस्त्रयोद्भवाम् । तावन्मात्रेण सेनानीस्सशिरः कम्पमात्मनः ॥ २९
हस्तेन तिष्ठ तिष्ठेति भूयस्तमभाषत । गुह -अर्थोऽस्य वर्ण्यतामाशु समञ्जसमिह त्वया ॥ ३०
यथासाकं मनो गच्छेत् संशयं नैव संप्रति । विधिः -प्रकृतश्चाहमेवार्थो विधिरस्येति विब्रुवन् ॥ ३१
मुष्टिना घाटचट्येन मुखरीकृतदिङ्मुखः । कारागृहं स्कन्दगिरौ नीतोऽद्य वीरबाहुना ॥ ३२
जगत्सृट् च देवेन स्कन्देन सचराचरम् । ततो दीर्घेण कालेन साध्याश्च मुनियोगिनः ॥ ३३
तपसा प्राप्य देवेशं शङ्करं चन्द्रशेखरम् । प्रार्थयन्ति स्म विबुधा ब्रह्मणो मोक्षमादरात् ॥ ३४
देवो विदितवृत्तान्तो विबुधान्प्रति शङ्करः । प्रेषयामास नन्दीशं सुब्रह्मण्यान्तिकं प्रभुः ॥ ३५
गच्छ नन्दीश पुत्रस्य सविधं मम सम्प्रतम् । मद्गिरा देवसेनान्यं प्रीणयित्वा मदाशया ॥ ३६
विमोचय विधातारं सृष्टिमत्यूहशान्तये । स्वामिना यद्यथाज्ञप्तं तत्तथेति शिलादजः ॥ ३७
जगाम त्वरया स्कन्दगिरिं नन्दी तदाज्ञया । तत्र स्कन्दं समाराध्य सन्तोष्य विविधैः स्तवैः ॥ ३८
प्रणम्याञ्जलिहस्तोऽग्रे ब्रह्मा स्वामिन् गिरा पितुः । विमोच्यो भवता लोकसृष्टिर्भूयाद्यथापुरा ॥ ३९
विज्ञाप्येति स्थिते तस्मिन् नन्दिकेशे कृताञ्जलौ । तत्र क्रुद्धो महासेनो भर्त्सयन्नन्दिनं मुहुः ॥ ४०
आगतोऽसि यथा येन तेन गच्छ नचेच्चिरम् । ब्रह्मणा सह वासोऽस्तु तव कारागृहेऽथवा ॥ ४१
ब्रुवत्युग्रतरं स्कन्दे प्रणिपत्य शिलादजः । जगाम त्वरया देवं पुरारिं पुरुषेषु ॥ ४२
शशंस सान्निधौ तत्र वृत्तान्तं स्वामिनो गणः । सस्मितं सशिरःकम्पमीशो विस्मितमानसः ॥ ४३

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे त्रयस्त्रिंशोऽध्यायः ॥

॥ अथ चतुस्त्रिंशोऽध्याय ॥

प्रणवार्थज्ञानफलम् ॥

सूत —

अथ स्कन्दगिरिं प्राप स्कन्ददर्शनलालस । अनुकम्पावान्त पुरस्थायै पार्वत्यै परमेश्वर ॥ १
तत्र क्रीडापर पुत्र रुद्रस्त्रिभिरपीक्षणै । पिबन्नापिययौ तृप्तिं चिर सखिलमाजगम् । २
त्वरयाभ्येत्य बाहुभ्या समादायात्मसम्भवम् । सस्वजे गाढमास्यत्र जिघ्रे मुहुरनन्यधी ॥ ३
सपित्रा सपरिष्वक्त कुमार प्रीतमानस । अभ्यासासामास देवासे भक्त्या विनयशीलया ॥ ४
तदा देवोऽमितानन्दोऽप्यगस्पर्शामृताम्भसि । आनन्दसिन्धोस्सत्सूनोरगाधे निममज्जह ॥ ५
दिव्ययानमथारूढस्सुकुमार वपुश्शिशो । प्रतिप्रतीकपस्पर्श पद्मकोमलपाणिना ॥ ६
ततो मन्दस्मित प्रेक्ष्य समाघ्रायानन शिशो । सान्त्वपूर्वमिदं वाक्य बभाष जगदीश्वर ॥ ७
वत्स मुञ्च विधातारमाज्ञया मम पुत्रक । जगत्सृष्टिरविघ्नैषा भूयाद्दात्रा क्रियाद्य न ॥ ८
साक्षाद्धपि मुदाच्छभोदश्रुत्वा वाक्य षडानन । अमुञ्चन्नैव धातारमथेम मन्युराविशत् ॥ ९
वात्सल्यकोपयोरासीन्मध्यस्थ मनईशितु । पूर्वस्यमपि वात्सल्य मन्युरागन्तुको बली ॥ १०
निगृह्य देवमीशानमपि स्ववशमातनोत् । तेन प्रोवाच देवस्त्व विहस्यालोक्य पुत्रकम् ॥ ११
वत्स किंचिद्विज्ञानीषे स्मरार मुञ्च मद्गिरा । प्रख्यापयति पुरानन्दी मदाज्ञापरिपालक ॥ १२
प्रत्याख्यात नकर्तव्य मुच्यतामात्मभूस्त्वया । यदतोऽस्याभिवीक्ष्येयमानन शूलिनो गुह ॥ १३
आनीय गणपैरग्रे मोचयामास वेधसम् । तत प्रीतमनादेव पुनरालिंग्य वात्सलात् ॥ १४
अङ्के संस्थाप्य पप्रच्छ विधे कोपस्य कारणम् । कारामहे सम्यदधा किमर्थ सृजतो जगत् ॥ १५

स्कन्द —

अभिनाद्यात्मपितर प्राञ्जलिर्विनयान्वित । प्रोवाच वचन स्कन्द प्रीतियुक्तेन चेतसा ॥ १६
अहो पितरि हास्खेल सवयोभिर्पर्यारति । अनादृत्य तु मा दर्पाद्यातायात चकार स ॥ १७
मया पृष्ट तत कस्त्व कृत्य ते किं च वास्थिति । किमधीत त्वया ब्रूहीत्यधिक्षेप कृतो मया ॥ १८
ऋग्वेदपत्ततो मह्यं स्वय कृत्यच कौशलम् । वैदुष्यमात्मनश्चापि विद्यास्वगदशास्वपि ॥ १९
पुन पृष्टश्च वेदाना स्वमोचन तस्य च । अर्थध्यानेन यत्किंचिन्नयथाथाऽनुवर्णित ॥ २०
ततोऽस्पष्टार्थवक्तार प्रणवस्य महात्मनो । न्यषेधायमह कारागृहमप्य प्रजापतिम् ॥ २१
तत प्रीतमना शम्भु पुनराघ्राय गण्डयो । पप्रच्छाग्र मनोरथं देवानामात्मसम्भवम् ॥ २२
प्रोवाचच पुन स्कन्द प्रणिपत्य जगद्गुरुम् । रहस्यभूतमत्यर्थमर्थममे कथ पित ॥ २३
कथयानिच देवानामग्र विश्वजगद्गुरो । गुरु प्रकटयेद्धीमान् मन्त्र यत्नेन गोपयेत् ॥ २४
प्रकाशनाप्रकाशाभ्या रौरव नरक व्रजेत् । आक्षेपामवतोऽएषा लोकेनापि सुरासुरैं ॥ २५
गदन्तमिति त पुत्र मुहुराघ्राय मूर्धनि । अङ्कं निधायचालिंग्य कर्णे कथय पुत्रक ॥ २६
ममेति व्याहरत्पुत्र मन्त्रार्थमितिसस्पृहम् । ततोऽभिनाद्य मनसा पितर परया मुदा । २७
मर्थमाहस सेनानी प्रणवस्य रहस्यथ । यद्दैवानुगृहीतोऽसौ पिता तेन मुनीश्वरा ॥ २८
श्रुत्वा शम्भु सरस्यार्थं पवमेव नसंशय । सुब्रह्मण्यो स्वरस्यार्थंस्वचाहच सदाशिवोम् । २९
इति जानन्ति ये लोके ते यान्ति मम तुल्यताम् । सर्ववेदान्तविज्ञानसुनिश्चितधिया सताम् ॥ ३०

यतीनां शुद्धसत्वानां ब्रह्मप्राप्त्यैकसाधनम् । ऊचिवानिति तत्प्रीत्या भक्तवत्सलयोर्भृशम् ॥ ३१
पुत्र पुत्र मनोऽर्थौ वर्णितो यन्महांस्त्वया । अधिकारमलग्रस्तः कथं वेत्ति चतुर्मुखः ॥ ३२
योगिनोऽपि न जानन्ति ध्याननिर्धूतकल्मषाः । मद्भक्तास्त्वथ जानन्ति ममैवानुग्रहात् सुत ॥ ३३
ममात्माऽसि यतो नूनं वेत्सि पुत्रार्थमद्भुतम् । अस्याधिकारिणोऽगस्त्यादयस्सन्ति नयोगिषु ॥ ३४
तस्मै कथय सम्यक्त्वं अमुमर्थं महाशया । एवं परंपरामाता विद्योच्छित्तानवैभवेत् ॥ ३५
सोऽन्तेवासी तवात्यर्थं शासितं पुत्र पुत्रवत् । अनुशास्यात्मजं देवः संप्राप भुवनं पुनः ॥ ३६
तत्र देवीं समाहूय निशान्ते जगतांपतिः । आश्लिष्योपचरन्तीं तां अङ्के संस्थाप्य शैलजाम् ॥ ३७
कथयामास वृत्तान्तं सुब्रह्मण्यस्य वेधसः ॥ ३७½

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चतुस्त्रिंशोऽध्यायः ॥

---

॥ अथ पंचत्रिंशोऽध्यायः ॥

श्री अम्बया श्री शिवं प्रति श्री स्कन्दमहिमवर्णन प्रार्थनम् ॥

श्रुत्वा देवी कुमारस्य मुखादीशस्य वैभवम् । अंगैः कदंबकल्पैः स्वैः आहस्तालोकयनायकम् ॥ १
आश्चर्यं ते प्रभो सूनोरतिलौकिकमद्भुतम् । शैशवे प्राप्तलोकान् लीलयैव तवात्मजः ॥ २
अस्य कीदृक्प्रभोरूपं किं वीर्यंकतमोह्ययम् । विभूतिश्चास्य का ब्रूहि पृच्छाम्ये महामीश्वर ॥ ३
इति संचोदितश्शंभु स्त्रज्ञस्तमनार्दनः । हृष्टः प्रोवाच वचनं देवीं देववरोहरः ॥ ४

ईश्वरः —

हन्त ते कथयिष्यामि रहस्यं शृणु सुन्दरि । शिवोऽहं निष्कलः पूर्णशक्तिस्त्वमनपायिनी ॥ ५
प्रकृतिप्रत्ययाकारतयावां शब्दार्थकौमतौ । त्वंशब्दोऽर्थोऽस्म्यहं भद्रे जगत्वं पतिरस्म्यहम् ॥ ६
पञ्चकृत्यपरश्चाहं पञ्चवक्त्रस्सदाशिवः । एकवक्त्रासि बहुधा भिन्नापि परमेश्वरी ॥ ७
त्वन्मयो मन्मयो यस्मात् षड्वक्त्रः परिकीर्तितः । पञ्चकृत्यपरोऽप्ययंच प्रपञ्चस्यास्य लीलया ॥ ८
षट्कृत्तिका मुख्यरूपा ददुः स्तन्यं यदस्यवै । यथैव तासां येनायं कार्तिकेयस्तवात्मजः ॥ ९
पार्वती त्वं गिरेः पुत्री पुत्रोऽयन्ते त्वदाख्यया । पार्वतीनन्दनो लोके प्रोच्यते वेदवादिभिः ॥ १
आकाश्यच यतोऽस्कन्दद्विक्रमेण जगत्त्रयम् । तेन स्कन्दोऽयमाख्यातश्श्रुतस्ते गिरिसंभवे ॥ १
अज्ञत्वयामि यद्भक्तानहमग्निरितीरितः । अग्नेर्मदाविरभवदग्निभूरात्मजस्तव ॥ १
मदूर्ध्वरेतसो यस्माल्ललाटाक्षाद्विनिस्सृतः । अथवाऽभूदयं यस्मादग्निभूर्भुवनेश्वरी ॥ १
अथवाऽग्निर्यतोवाह वायुनामग्नियोगतः । अग्निभूरिति पुत्रस्ते सुभ्रूस्सूरिभिरीरितः ॥ १
गुहेति दहराकाशो वेदान्तेषुहि पठ्यते । तन्निष्ठोऽयं गुहः प्रोक्तः सर्वेहृत्कमलासनः ॥ १
यपोपहतपाप्माहि विरजामृत्युवर्जितः । विशोको विचिकित्सश्च विपिपासुः कुमारकः ॥ १
सत्यकामस्तथासत्यसंकल्पोऽयं महेश्वरी । ऋतं च सत्यं पुरुषो विश्वो विश्वाधिकश्च सः ॥ १५
शराणां वह्ने जातस्सोऽयं शरवणोद्भवः । वनं जलं शरास्तस्यतदाक्स्य तदन्तरे ॥ १८
पद्मे पद्माभवदमस्तंबभूवाथनेच्छया । तेनायं जगतां नाथः पुत्रश्शरवणोद्भवः ॥ १९

ब्राह्मणानामहं देवस्सुतरां मत्सुतः प्रिये । सुब्रह्मण्यस्समाख्यातः सुरासुरनमस्कृतः ॥ २०
आमनन्त्यात्मना यस्मान्महासेनात्मसंहतिः । सासेना यदधीनोऽयं महासेनस्सुतस्तव ॥ २१
गङ्गायामुदभूद्बालस्तेन गाङ्गेय ईरितः । देवा विष्णुमुखा लोके यस्यसेनाः प्रकीर्तिताः ॥ २२
दुःखान्तमनयत्तासां सेनानीः परिकीर्तितः । अनन्तानि च नामानि सन्ति पुत्रस्य तेऽनघे ॥ २३
कीर्तितानि मया शश्वन्मुक्तिदान्यखिलात्मनाम् । एकमप्येन केनापि नामस्कन्दस्य कीर्त्यते ॥ २४
तस्य सिध्यति लोकेऽस्मिन् पुरुषार्थ चतुष्टयम् । तत्स्पृशन्ति पापानि ब्रह्महत्यादिकान्यपि ॥ २५
रूपमस्य सुतस्यार्यें वर्ण्यमानं मया शृणु । सच्चिदानन्दरूपस्य निष्कळस्य गिरीन्द्रजे ॥ २६
रूपमस्य सुतस्यार्यें वर्ण्यमानं मया शृणु । तद्भासा भाति सूर्योऽपि नचन्द्रो नैव तारकाः ॥ २७
महश्च महसामीशे परंज्योतिरनूपमम् । भाति सर्वं प्रसादेन तस्य मुक्तिर्नचान्यथा ॥ २८
नेमाश्च विद्युतः कास्मिन् कुतोऽग्निस्तस्यतेजसि । पुत्रेण ते पुराणेन पूर्णचन्द्र निभानने ॥ २९
ओतं प्रोतंच निखिलं सूत्रे मणिगणाइव । अन्यत्तद्भुवनाकारं मूर्धाद्यौर्नाभिरंबरम् ॥ ३०
स्वाभाविकमिदं रूपं रूपमस्यचराचरम् । दिशोऽस्य वाहवः प्रोक्ता रोमाण्योषधयश्शुभे ॥ ३१
सप्तपातालपादंतदक्षीण्यग्निश्शशीरविः । शब्दादयस्समाख्यातास्सर्वानुग्राहकस्यवै ॥ ३२
इन्द्रियाण्यस्य भूतानि महान्ति विषयाश्चते । अनुग्रहाय लोकानां रूपमङ्गीकृतं शुभम् ॥ ३३
षड्वक्त्रं द्वादशभुजमष्टादशविलोचनम् । इदं रूपं परं तस्य ये ध्यायन्ति वरानने ॥ ३४
परेण ब्रह्मणा तेन सुस्मिते शुभलोचने । अस्यांघ्रियुग्मयोर्भक्ता ये मर्त्या धरणीतले ॥ ३५
ते धन्यास्ते जगद्वन्द्यास्तैः पूता वसुधातराम् । महिमानमुमे वक्ष्ये कुमारस्य महात्मनः ॥ ३६
त्रिदशैरपि ,ते वन्द्या मत्प्रियास्त्वत्प्रियाश्च ते । आयक्षादिभिरादाय ज्योतिश्चक्रादिकं शुभे ॥ ३७
आज्ञया वायुरायाति दधाति भुवनान्यपि । भीषास्माद्वेवसूर्योऽपि प्रकाशयति पार्वति ॥ ३८
प्राणादिभिश्च भेदैः स्वैः प्राणिनश्च तदाज्ञया । हव्यं वहति देवानां कव्यं कव्याशिनामपि ॥ ३९
लोकचक्षुर्लोकमिमं सर्वलोकैरलंघ्यया । वैश्वानरोऽग्निर्भूतानां जाठरं समुपाश्रितः ॥ ४०
पाकञ्च कुरुते वह्निर्देवि त्वत्सूनुशासनात् । मृत्युश्च शासनादस्य पापिनां व्याधिपीडनैः ॥ ४१
प्राणापानसमायुक्तः पचत्यन्नं चतुर्विधम् । चतुर्मुखोऽपि भूतानि सृजत्यस्यैव शासनात् ॥ ४२
जीवतां यातनाभिश्च मृतानामपि धावती । नारायणो महायोगी नरमूतजलाशयः ॥ ४३
नवभिश्च तथान्यैश्च प्रजापतिभिरादरात् । मत्स्यकूर्मवराहादि भृगुशापनियन्त्रितः ॥ ४४
करोति रक्षां जगतष्षण्मुखस्यैव शासनात् । संहरत्यसतोस्यैव शासनादसुरानपि ॥ ४५
भवतारमनुप्राप्य धर्मसंस्थापनोद्यतः । सर्वं जगदिदं काले सुब्रह्मण्यस्य वेधसः ॥ ४६
कालाग्निरुद्रो भगवान् संहरत्येव शासनात् । सर्वे कालस्य वशगाः सकालोऽस्य वशे स्थितः ॥ ४७
कालस्सृजति भूतानि कालस्संहरति प्रजाः । आकाशास्तवपुत्रस्य शासनेन गरीयसा ॥ ४८
भवकाशमशेषाणां भूतानां संप्रयच्छति । अविलंघ्याहि सर्वेषामाज्ञा तस्य गरीयसी ॥ ४९
सञ्जीवयन्त्यशेषाणि भूतान्यापस्तदाज्ञया ।

आज्ञावशास्तस्य धरास्थितेयं धराधरावारिधरास्समुद्राः ।
ज्योतिर्गणा विष्णुमुखाश्चदेवास्सर्वं जगत्स्थावरजङ्गमंच ॥ ५०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे पंचत्रिंशोऽध्यायः ॥

---

॥ अथ षट्त्रिंशोऽध्याय ॥

श्री स्कन्दविभूति वर्णनम ॥

देवी —

विभूतिं तव पुत्रस्य ब्रूहि त्वं पुत्रिणांवर । विज्ञाताया विभो यस्या मुक्तिं विन्दन्ति मानवा

ईश्वर —

हन्त ते कथयिष्यामि विभूतिं शरजन्मन । सर्वलोकोपकाराय निबोध वरवर्णिनि।
सर्वदेवात्मकस्स्कन्द सर्वलोकात्मकस्तथा । सर्वभूतात्मकश्चाय साक्षाद्ब्रह्मसनातनम्।
यद्यद्विभूतिमत्सत्व श्रीमदूर्जितमद्रिजे । तत्तद्विद्धि सुतस्यार्ये भूतिलेशविजृम्भितम्।
आत्मैव पुत्रतामेति दीपाद्दीपान्तर यथा । दीपान्तरस्य माहात्म्याद् दीपो भवति यन्महान्।
एवमेवमहानेष मत्तो भवति पुत्रक । विभूतिलेशास्तस्यार्ये तत्र तत्र विजृम्भित ।
अनन्तानाञ्च रुद्राणा अय कालाग्निरद्रिजे । सदा विष्णुश्च विष्णूना शङ्खचक्रासिधारिणाम्।
वासुदेवश्च मूर्तीना चतसृणामय शिवे । अवतारेषु तस्यैव रामदशरथभूताग्र ।
वृष्णीना वासुदेवोऽय पाण्डवाना धनञ्जय । प्रजापतीना सर्वेषा ब्रह्माऽय ब्रह्मणस्पति ॥
मनूनामपि सर्वेषा मनुस्स्वायम्भुवोह्ययम् । इन्द्रोऽय सर्वदेवानामग्निस्तेजस्विनामयम् ।
पितॄणाञ्च यमश्चाय रक्षसा निरृति प्रिये । यादसा वरुणश्चाय बलीना वायुरेव च॥
गन्धर्वाणा चित्ररथो निधीना धनदोह्ययम् । ईशानोऽय दिगीशाना भोगदोऽय प्रकीर्तित ॥
ऐरावतो गजेन्द्राणा स्रोतसामेव जाह्नवी । रुद्राणा शङ्कर स्कन्दो वसूनामपि पावक ॥
आदित्यानामय विष्णु भिषजामयमश्विनौ । प्रह्लादश्चैव दैत्याना सर्पाणामपि वासुकि ॥
मृगाणाञ्च मृगेन्द्रोऽसौ गरुड पततामपि । ब्रह्मर्षीणा वसिष्ठोऽय देवर्षीणाञ्च नारद ॥
अश्वत्थस्सर्व वृक्षाणा हिमवानपि भूभृता । यत्र यत्र जगत्यस्मिन् देवतिर्यङ्नरादिषु ॥
वीर्यं श्रीरधिका कान्तिविद्याज्ञानादिक प्रिये । तत्सर्वमस्य रूपाणि विभूतिरिति निश्चितम् ।
सङ्क्षिप्योक्ता विभूतिस्ते पुत्रस्य भुवनेश्वरि । नशक्य विस्तराद्वक्तु वर्षकोटिशतैरपि ॥
इयमार्ये विभूतिस्ते पुत्रस्य परिकीर्तिता । प्रसङ्गात्कथित पूर्वं त्वया तदपि विस्मृतम ॥ १
अथवा लोकरक्षार्थ पुनः पृच्छसि पार्वति । सूत — इतीदृश प्रमथात्मा कुमारस्यास्य वैभवम् ॥ २
कथयामास पार्वत्यै लोकानुग्रहकाम्यया । समालिङ्ग्य पुनर्देवीमन्त पुरमुपाविशत् ॥ ३
इतीशकथित लोके प्रसिद्धिमगमत्तराम् । तत्र तत्र सुरेन्द्राणा भुवनेषु विशेषत ॥ २
वैकुण्ठे विष्णुभवने वैष्णवीभिरुदीरितम् । कामिनीभिस्सदाकाल विपञ्चीभिर्विचित्रितम् ॥ १
तदन्तर उपेन्द्रस्य कन्ये द्वे नयनोद्भवे । नासैकाऽभूनवल्याख्या परासौन्दर्यवल्लिका ॥ ४
वर्ण्यमान शुश्रुवतुर्महिमान सुलोचने । स्कन्दस्य तत्र तत्रैते सौकुमार्यञ्च निस्पृहा ॥ २
चकमाते उभे कन्ये पतीत्व तस्य दुर्लभम् । ईषतुश्च तप कर्तुं तत्प्रीत्यै श्रद्धयासह ॥ २
ते शुभे सुकुमाराङ्गे रूपेणाप्रतिमे भुवि । मेनातेस्वानुरूपत जगत्यस्मिंश्चराचरे ॥ ४
श्रुत्वा श्रुत्वास्य चरित वैणिकीभिर्महीयस । स्मरार्तेनाळमेताते प्रधाळशयने सुखम् ॥ २
श्रवणे तच्चरित्रस्य कौतुकाक्रान्तमानसे । विनिद्रनयने नित्यमतिदीर्घासु रात्रिषु ॥ २
शरकान्तारमभ्येत्य तटाकतटमुन्नतम् । नियताहारनिरते मुनिव्रतपरायणे ॥ २
अपास्य काञ्चीं रत्नाढ्या मौञ्जीमाबध्यमेखलाम् । आच्छाद्य रौरवीं मेध्या त्वचमानीय कोमलाम् ॥ ३

विभ्राणे वल्कले रम्ये विसृष्टक्षौमवाससी । भूतिभूषितसर्वाङ्गे रुद्राक्षाभरणांचिते ॥ ३२
षडक्षरमहाजप्यपरे तद्ध्यानमानसे । एवं चिरगते काले तयोरग्रे सनातनः ॥ ३३
प्रादुरासीन्महासेनश्चारुहासमुखांबुजः । तं दृष्ट्वाऽमृतवल्येनमारात्सुन्दरवल्यपि ॥ ३४
रोमांचितप्रतीकेते प्रेमविस्फारितेक्षणे । प्रणम्याञ्जलिमाधाय तस्थतुः पार्श्वयोर्द्वयोः ॥ ३५
स्वप्नेऽप्यदृष्टपूर्वं तं अभ्यवेत्येशपुत्रकम् । महसैवातिमहता सर्वलोकातिशायिना ॥ ३६
आलोक्यते जगत्स्वामी स्मितपूर्वमभाषत । युवां भद्रेऽद्य शृणुतं यदिष्टं हृदिसंस्थितम् ॥ ३७
करिष्ये युवयोर्वाक्यं कांक्षितं करवाणिकिम् । तदुपश्रुत्य संप्रीतहृदये वव्रतुर्वरम् ॥ ३८
जगद्वन्द्य जगन्नाथ शिवयोर्हृदयंगम । गृह्णीष्व पाणीनौ स्वामिन् प्रसन्नो यदि विश्वप ॥ ३९
आवां चिराय पत्नीत्वमभिकांक्षावहे विभो । सूतः — इतितत्प्रार्थनातुष्टः पुनरेव षडाननः ॥ ४०
अथ कालेन युवयोः पूरयिष्येऽभिकांक्षितम् । एकाऽमृतलते तिष्ठ जिष्णवभ्याशे मदाज्ञया ॥ ४१
देवलोकेऽपराभूमौ त्वं सुन्दरलते प्रिये । भूमौ शिवमुनौ तिष्ठ समये विवहे त्वहम् ॥ ४२
व्याहृत्यैवं विशालाक्ष्यौ स्तुत्वा पित्रोः पदं प्रभुः । अलंचकार सविधं पित्रोः कैलासपर्वते ॥ ४३
प्रणम्य पादयोः पित्रोस्सुब्रह्मण्यो मुनीश्वराः । बद्धांजलि पुटोऽतिष्ठद्वीक्षमाणो मुखं तयोः ॥ ४४
तौ तदा संपरिष्वज्य जिघ्रातेमुखपङ्कजम् । प्रत्येकं तं समाघ्राय नतृप्तिमधिजग्मतुः ॥ ४५
स्वं स्वांके समारोप्य लालयामासतुश्चिरम् । स्थापयामासतुर्मध्ये तमीशौ जगतां मुदा ॥ ४६
तदा तयोश्च तस्यापि दर्शनेन गणेश्वराः । मेनिरे मोक्षसांम्राज्य सुखमात्मनश्वरम् ॥ ४७
इदानीमपि यो सोमं सस्कन्दं जगदीश्वरम् । ते धन्या धरणीभागे ते धन्या विबुधैरपि ॥ ४८
एवमेव शिवे सांबे ससुते तिष्ठतीश्वरे । कैलासमचले प्रापुर्विबुधानिस्स्थितिगताः ॥ ४९
विज्ञातसमया विप्रा माहरोद्धुरतंश्रिताः । ते प्राप्य भवनद्वारमप्राप्यमकृतात्मभिः ॥ ५०
ईशितुः सर्वलोकस्य देवा विष्णुपुरोगमाः । तत्र द्वारि समालोक्य नन्दीशं सगणं सुराः ॥ ५१
सनारायणकास्सेन्द्राः प्रजापतिपुरोगमाः । समभ्यर्च्याग्रिमस्यादादरात्सुमनोहरैः ॥ ५२
मस्तकन्यस्त हस्ताब्ज मुकुळालक्षिताक्षरम् । स्तुत्यं संस्तुत्य बहुधा नम्रदेहा व्यजिज्ञपन् ॥ ५३

देवाः —

नन्दीश्वर जगत्स्वामिन् सर्वदाशासदागमम् । विज्ञाप्यार्तिं त्वमस्माकं प्रशमय्य शमंकुरु ॥ ५४
विज्ञापितस्सुरैरेवं शिलादमुनिसंभवः । ज्ञातकालस्सदा नन्दी शिवयोश्चिन्तकस्तयोः ॥ ५५
प्रोवाच विबुधानेवं त्रिलोकपान्तःपुराधिपः । युष्माकमाशसेयार्थं नैवास्त्यवसरस्सुराः ॥ ५६
इदानीं तिष्ठतात्रैव समयेस्त्वीशदर्शनम् । ऊचुरेवं गिरा सूनोश्शिलादस्य शिलोच्चये ॥ ५७
कैलासेऽथ गते काले पुनरप्रार्थयन्सुराः । दर्शनं देवदेवस्य दयासिंधोरुमापतेः ॥ ५८
शालङ्कायनपौत्रं तं समभ्यर्च्योपतस्थिरे । अन्तःपुरं प्रविश्याथ नन्दी पुनरुमापतेः ॥ ५९
प्रणम्य पादौ देवस्य व्यजिज्ञपदिदं वशी । आदिश्य देव सर्वेश दूरपश्चहतौजसः ॥ ६०
आगत्य द्वारि तिष्ठन्ति चिरकालमतन्द्रिताः । कांक्षन्ते देवदेवस्य दर्शनं हरिणासुराः ॥ ६१
कुर्वनुग्रहमेतेषु कुमारानुचरेषु ते । इति विज्ञापितः स्वामी जगतामखिलात्मनाम् ॥ ६२
सोमस्ससूनुर्भगवान् ददावनुमतिं दृशा । प्रवेशने सुरेन्द्राणां मुनीन्द्राणां च योगिनाम् । ६३
लब्धानुज्ञोऽथ नन्दीशः सर्वानेव सुरोत्तमान् । अजिरं देवदेवस्य निन्ये धन्यतपो वशी ॥ ६४
फलेन महता देवाः नचिराल्लब्ध सन्निधिम् । ते प्रणम्य महादेवं सांबं ससुतमव्ययम् ॥ ६५

सर्वेशं सर्वकर्तारं सर्वलोकमहेश्वरम् । गीर्भिरर्थ्याभिरथ्याभिस्तुष्टुवुस्तमुपानयन् ॥ ६६

नन्दी दन्तावलत्वग्वसनपरिसरं मन्दमन्दं समेत्य
स्वामिन् सर्वज्ञ शम्भो त्रिपुरहर विभो देवदेव त्रिशूलिन् ।
देवास्सेन्द्रास्ससाध्यास्सकलमुनिगणा विष्णुपद्मासनाद्या
स्त्वत्पादाम्भोजयुगप्रणतिमधिगतास्तेऽद्य धन्याः कृतार्थाः ॥ ६७

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
सम्भवकाण्डे षट्त्रिंशोऽध्यायः ॥

---

॥ अथ सप्तत्रिंशोऽध्यायः ॥

श्री स्कन्देन तारकपुरी गमनम् ॥

अथ देवा महादेवमम्बिकापतिमव्ययम् । कृताञ्जलिपुटास्सर्वे मुनयश्च व्यजिज्ञपन् ॥ १

देवाः —

भगवन् देव सर्वेश भग्नेत्रनिपातन । चिरं विप्रकृतास्स्मान् असुरैस्सुरार्दन ॥ २
शूरपद्मादिभिस्त्वेतान् रक्ष रक्ष कृपाबलात् । कुमारेण तवानेन घातयैनान् सुरद्विषः ॥ ३
विज्ञाप्यैव विभोस्तस्थुः सन्निधौ विबुधा मुदा । ततो देवः प्रसन्नात्मा सर्वेषां च दिवौकसाम् ॥ ४
परित्राणाय जगतामालोच्य धिया मुहुः । सुब्रह्मण्यमुवाचेदं चालिङ्ग्याघ्राय मूर्धनि ॥ ५
संहराद्य सुरारातीन् सुब्रह्मण्य मदाज्ञया । शूरपद्मं दुरात्मानं सिंहवक्त्रं च तारकम् ॥ ६
सपुत्रमित्रसम्बन्धिज्ञातिभिस्सर्वदानवैः । सर्वत्र तेऽस्तु विजयः कश्चिद्वा न पराभवः ॥ ७
आदिदेशामुमाकान्तः कुमारायैवमात्मनः । रौद्रायैकादशात्मीयान्यस्त्राण्यस्मै विधाय च ॥ ८
शक्तिं च मनसा चैकां सर्वशत्रुनिबर्हणीम् । ददौ द्वादश देवेशो द्वादशादित्यवर्चसे ॥ ९
तोमरध्वजखड्गांश्च कुलिशं चापमुद्गरौ क्रमात् । घण्टाकमलकोदण्डांस्तथा प्रासपरश्वधौ ॥ १०
रौद्राण्यस्त्राणि शक्त्यैका द्वादशास्यायुधानि वै । ददौ देवः प्रसन्नात्मा सहस्रादित्यसन्निभम् ॥ ११
शार्ङ्गं सर्वशस्त्राढ्यमयुताश्वसुसंयुतम् । अभेद्यं कवचं हैमं नानारत्नविभूषितम् ॥ १२
अक्षय्यसायकापूर्णाविषुधी जगदीश्वरः । तस्यादिं महामात्रं सर्वशत्रुनिबर्हणम् ॥ १३
दत्त्वेयमस्त्रसम्पन्नमालिलिङ्गे हृष्टमव्ययम् । आघ्रायास्यालनाम्भोजं मुहुर्मुहुरनङ्गहा ॥ १४
विससर्ज कृतार्थीस्स विश्वाधीशोऽमराग्रणीः । सापि साक्षाज्जगन्माता सर्वलोकमहेश्वरी ॥ १५
समालिङ्ग्यात्मनः पुत्रं सर्वाङ्गैरभिसंवृतम् । आघ्राय मूर्धन्याशीभिरभिसम्भाव्य हृष्टधीः ॥ १६
जहि पुत्र सुरारातीनिति सा विससर्ज ह । सोऽपि सेनापतिः स्वामी सुरकार्यकृतोद्यमः ॥ १७
कृतप्रदक्षिणस्तोत्रः श्रद्धया जगतीपतिम् । पितरावभिवाद्यास्ते प्राञ्जलिर्निरसादह ॥ १
निपुणं गणनाथेन वीरबाहुमुखानपि । पाहिमौ द्विमाहात्म्य भूतराजप्रमदाम् ॥ १
सेनापतीनां वीराणामष्टोत्तरशतं शिवः । संयोज्य सुरसेनार्यै सुप्रसन्नेन चेतसा ॥ २
विबुधानिदमादेशो विष्णुब्रह्मादिकान् प्रभुः । असौ जेष्यति युद्धाय महार्थं क्षणमात्रतः ॥ २
पश्यध्वं सुरा अस्य पश्यत ब्रह्मवादिभिः । मुनिभिर्योगिभिस्सिद्धैः सार्धं गच्छत निर्भयाः ॥ २
आदित्यास्त्विमापश्च सह गौर्यां गतिहृष्टधीः । ततो विष्णुमुखा देवाः षण्मुखं भगवन्मुखाः ॥ २

प्रसाद्यानेकधा स्तोत्रैः प्रणम्यानुययुस्सुखम् । ततो विष्णुर्महात्मा वायुमाहूय माधवः ॥ २४
मनोजवस्य देवस्य शतांगस्य महीयसः । नियुतानांच धुर्याणां युतं चक्रे सुरारिहा ॥ २५
देवदुन्दुभयो नेदुर्दिविसंकुलनिस्वनाः । ववर्षुः पुष्पवर्षाणि सरसुलांजजालकम् ॥ २६
ननृतुर्मुनयस्सर्वे दण्डहस्ता जटाधराः । जगुः किंनरगन्धर्वास्तथा किंपुरुषांगनाः ॥ २७
ब्रह्मर्षयो वसिष्ठाद्याः नारदाद्यास्सुरर्षयः । अपठन् स्वस्तिमन्त्रांस्ते कौमारान् विजयप्रदान् ॥ २८
मातरस्सर्वलोकानां मुनीनां पत्नयस्तथा । कन्याश्च मुख्यनागानां जगुः कल्याणचेतसः ॥ २९
ब्रह्मा च भगवान्विष्णुस्वयञ्च सुरतक्षकः । वीराणां वीरसैन्यानां वीरबाहुमुखात्मनाम् ॥ ३०
रथान्नानाविधाकाराञ्नानाधुर्याननेकशः । आयुधानिच दिव्यानि वर्माणिच वितेनिरे ॥ ३१
सिंहयुग्यरथाः केचिद्गजयुग्यरथाः परे । व्याघ्रयुक्तरथाः केचिद्व्यालियुक्तरथाः परे ॥ ३२
भूतवाहारथास्तद्वद्वेतालगणसंयुताः । सर्पयुग्यरथाश्चान्ये सदश्वविधृताः परे ॥ ३३
निर्मिता यद्वकद्याश्च सुरथास्तु धृतायुधाः । ततस्सर्वे सुसन्नद्धा नादयन्तो दिशोदश ॥ ३४
प्राचीं पूर्वं विनिष्क्रम्य दक्षिणाभिमुखाः पुनः । चेलुस्सर्वां दिशस्तेन समुत्थैः पांसुभिर्गणाः ॥ ३५
तुलयन्तो रथोद्भूतैर्गजवाजिपथोद्धतैः । सैन्यघोषेणमहता निर्जितांभोधिनिस्स्वनाः ॥ ३६
प्रापुः कुलाचलं शीघ्रं गन्धमादनभूधरम् । अग्रे स्कन्दस्य वै जग्मुः प्रतापास्तदनन्तरम् ॥ ३७
सैन्यदुन्दुभिनिस्साणातिमिलानकगोमुखैः । काहळीशङ्खश्रृङ्गाणां निर्जितांबुधिनिस्स्वनाः ॥ ३८
रथनागाश्वपादाताश्चक्रपाद खुराद्भिभिः । समुद्धतं रजोवृन्दमरुधत्सूर्यमण्डलम् ॥ ३९
पदातयोऽश्वाजविनो गजभिन्नमदांभसः । रथिनो महितास्तद्वन्मणिकाञ्चनभूषणाः ॥ ४०
सैन्यानामुग्रवीर्याणामष्टोत्तरशतं ततः । नियुतंच गणेन्द्राणां शूराणां बलशालिनाम् ॥ ४१
आवृत्य देवसेनान्यं सुब्रह्मण्यं जगत्पतिम् । वीरबाहुमुखा वीरा अनुजग्मुर्महारथाः ॥ ४२
पश्चाद्विष्णुमुखा देवास्ततो मुनिगणाश्च ते । देवानांच मुनीन्द्राणां पत्नयश्च ततःपरम् ॥ ४३
क्षणेन प्रापुरद्रीन्द्रं हेमकूटंच संयुताः । समालोक्य गिरिं क्रौञ्चं देवास्सब्रह्मकास्तदा ॥ ४४
समाधवेन्द्रदिक्पाला भीतिकम्पितमानसाः । तत्र मायापुरीं तां च तारकासुरपालिताम् ॥ ४५
परिवव्रुर्भयोद्विग्नास्सुब्रह्मण्यं जगत्पतिम् । ततो मुनिवरः श्रीमान् वैणिको वल्लभो विभोः ॥ ४६
व्यजिज्ञिपत् प्रणम्याग्रे प्रांजलिः प्रभवेऽन्तिके ॥ ४६½

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सप्तत्रिंशोऽध्यायः ॥

---

॥ अथ अष्टत्रिंशोऽध्यायः ॥

श्री स्कन्देन युद्धाय वीरबाहु प्रेषणम् ॥

नारदः —

पार्वतीनन्दन स्वामिन् प्रणतार्तिप्रभञ्जन । स्कन्द सेनापतेऽस्माकं सुराणां प्रीतिवर्धन ॥ १
अयं क्रौञ्चो महारौद्रः पूर्वमासीन्महासुरः । अगस्त्यस्य मुनेश्शापादद्रिभावमुपागतः ॥ २
तमेवमतिमात्रांगं सर्वलोकभयंकरम् । हन शत्रुं दुरात्मानं देवानां देवनायक ॥ ३
अन्तिकेऽस्य पुरी या सा इन्द्रपतेऽतिभयङ्करी । अनुजोऽस्यां महारौद्रस्तारकाख्यस्य दुर्मतेः ॥ ४

तारको वसति स्वामिन् गजवक्त्रो महासुर । अनेकरथहस्त्यश्वपदातिपृतनापतिः ॥ ५
कण्टकोऽयं महाधीरः करुणालेशवर्जितः । सुराणां भूसुराणाञ्च द्रोहशीलो दिवानिशम् ॥ ६
इष्टापूर्तापहर्तारं दुष्टं जुष्टं दुरात्मभिः । सैन्यैश्च महासेन संहरैनं दुरासदम् ॥ ७
प्रार्थितः प्रभुरेवं तैः नारदेनच देवपः । तारकासुरसंहारे मतिं चक्रे कृपालयः ॥ ८
आह्वाहिणोऽच महावीरं वीरबाहुमरिन्दमम् । विभज्याधं च वाहिन्या वीरबाहुपदानुगम् ॥ ९
चतुःपञ्चाशता मुख्यैस्सन्दिदेश हरात्मजः । अष्टोत्तरञ्च नियुतं गणनाथान् महाजवान् ॥ १०
वीरबाहुं महाबाहुं सन्दिदेश हरात्मजः । मायापुरीं महासैन्यैर्वीरबाहो महत्तर ॥ ११
क्रौञ्चेन सह दुष्टेन रुणद्धि गिरिणा रवरन् । तारकञ्च दुरात्मानं शूरपद्मानुजं रिपुम् ॥ १२
ससैन्यं युधि सामात्यं निगृहाण दुरासदम् । अस्माकममरास्सेना देवा विष्णुमुखा यतः ॥ १३
कुतोऽपि भीतिरेतेषां स्थितेष्वस्मासु सन्निधौ । सेहेऽपराधमस्मभ्यं येन केनाप्यनुष्ठितम् ॥ १४
तत्रास्माकं नकोऽप्यस्ति भारः परपुरक्षये । नसहेऽप्यभुजद्वन्द्वभाजां ये दुःखकारिणः ॥ १५
देवानां दानवा लोके शास्यास्ते सततं मया । वीरबाहो महाबाहो शीघ्रमग्रे ममाज्ञया ॥ १६
ससैन्यपरिवारस्त्वं रुणद्धि पुरमद्रिणा । आदत्स्व कलहं दैत्यस्तद्वैरविचारयन् ॥ १७
अहञ्चानुपदं सैन्यैरायास्यामि त्वरान्वितः । इति पूर्वं महाबाहुं वीरबाहुं सुरारिहा ॥ १८
विसृज्य शनकैरग्रे जगामामरनायकः । तदानीमेव देवानां हृदयान्निर्गतं भयम् ॥ १९
हर्षो महानभूत्तेषां जयाह हृदयतराम् । अथासुराणामुत्पाता महाघोरा पुरे पुरे ॥ २०
सबभूवुस्तदा शश्वदसुनाशावधिक्षमाः । ववर्षुरुधिरं मेघा घना करभनिस्वनाः ॥ २१
शिखराण्यसुरेन्द्राणां प्रासादेभ्यो निपेतिरे । अनन्ताहिफणा रणे हर्षादिव ननर्तभूः ॥ २२
अकस्मादुत्थितो लोके येन केनाप्यलक्षितः । ग्रामपल्लीः पुराण्यग्निर्ददाह मरुता सह ॥ २३
दिशश्च सर्वास्तेनाशु नाशमापुर्महाग्निना । ववृषुः पांसुवर्षाणि वायुनुन्ना बलाहकाः ॥ २४
अमेघस्तनितं घोरमनर्गळमजृम्भत । पेतुरुल्का महादीप्ताश्शासिन्यस्सुमहद्भयम् ॥ २५
तारानक्षत्ररूपाणि निपतन्तिस्म सर्वशः । आविर्बभूव सुमहान् धूमकेतुर्नभस्थले ॥ २६
आपश्चुक्षुभिरे सर्वास्समुद्रा भृशफेनिलाः । क्रोशन्तिस्म शिवा रौद्रमशिवा रविसम्मुखम् ॥ २७
निपतन्तिस्म दैत्यानां छत्रलासदिशारस्वपि । गृहे गृहेऽसुरेन्द्राणां कूर्मास्सजज्ञिरे तदा ॥ २८
ददृशुरात्मनो बिम्बमशिरस्कञ्च दर्पणे । अगस्माद्रथमुख्याश्च तेषां पतुरधोमुखाः ॥ २९
मुमुचुश्चाश्रुवर्षाणि तेषामश्वाश्च सर्वदा । रथेषु दैत्यराजानां गृध्राः कङ्काश्च शिश्रिरे ॥ ३०
तस्थुस्तपामकस्माच्च गजास्तूर्णमधोमुखाः । काञ्चनानपि तं वृक्षान् कलयामासुरक्षिणाः ॥ ३१
ददृशुश्चापमैन्द्रं ते जलेषु दितिसम्भवाः । ततः क्षणेन रुरुधुश्चक्रस्कन्दस्य सत्वरम् ॥ ३२
मायापुरीं महासाळां तारकासुरपालिताम् । महता सिंहनादेन बधरीकृतदिङ्मुखाः ॥ ३३
मारुतनामाङ्किता तस्य रक्षन्ती तं चमावृतम् । इति एष महोत्पातदशूरपद्मासुरानुजः ॥ ३४
तारकोऽपि श्रुताशेषवृत्तान्तो विधिचोदितः । सैन्येन महता तत्र निर्जगाम युयुत्सया ॥ ३५
रथमारुह्य भञ्जाश्च सर्वास्त्र भरसम्भृतम् । सन्नद्धैर्युधश्चातैस्सन्दनैर्गजवाजिभिः ॥ ३६
तदानीं तत्र सर्वत्र पुरे सन्नाहघोषकाः । श्रूयन्ते ध्वनयस्तेषां निरसाणानां निरन्तरम् ॥ ३७
निर्गत निर्गत राजा युद्धायामरपुङ्गवैः । अजृम्भे महती वार्ता शूराणां गन्तुमिच्छताम् ॥ ३८
पुरान्निरीयुस्सर्वत्र द्वारेभ्य ऋणनास्तदा । निपतन्तिस्म सेनायां पतङ्गा इव पावके ॥ ३९

प्रत्युज्जगाम सा सेना वीरबाहोर्महात्मनः । दुरात्मनस्तु ता सेना समुद्र इव निम्नगा ॥ ४०
समीयतुर्बलेतस्य वीरबाहोश्च ते क्षणात् । पूर्वापरौ वारिनिधी युगान्त इव निस्तटौ ॥ ४१

इति जगदभिरक्षणाय तत्र सुररिपुभिस्सततं सुरातिहन्तुः ।
अभियुयुधे पृतनाद्दरात्मजस्य प्रबलतरापि च वीरबाहुमुख्या ॥ ४२

इति श्री स्कान्दे महापुराणे शाङ्करसंहितायां शिवरहस्यखण्डे
संभवकाण्डे अष्टत्रिंशोऽध्यायः ॥

---

॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

वीरबाहु तारकयो युद्धम् ॥

सूत —

अथाभवत्प्रतिद्वन्द्व तुल्ययुद्धं महत्तरम् । पत्ति पदातिमयुधत् सादी सादिनमध्वयो ॥ १
गजाधीशो गजारूढ रथीच रथिन बली । युद्ध तुल्यप्रतिद्वन्द्वि बभूव तुमुल महत् ॥ २
शस्त्राण्यस्त्राण्यनेकानि प्रासयष्टींश्च तोमरान् । नगा नगान् महासारान् ववर्षुश्चासुरागणा ॥ ३
अन्योन्यमभिनिघ्नन्तस्त्यक्तप्राणा जयार्थिन । ततो गणवरैः क्रुद्धैरसुरास्ते च संहता ॥ ४
युध्यतोरेवमन्योन्यं सैन्ययोरुभयोरपि । जयो नैवतयोस्यासीन्नैव चासीत्पराजय ॥ ५
रथनेमिसमुद्धूत क्षुण्णमश्वखुराग्रजैः । पदाति पदनिर्दिष्ट गजकर्णावलोडितम् ॥ ६
भूमे रजो दिशो व्याप्य सवितार समावृणोत् । अन्धकारावृते लोके सुभटाना महो सधे ॥ ७
जज्ञे परस्पर सैन्य धनुषा गुणगुम्फितैः । विपाठभल्लहस्ताना शूराणा बलशालिनाम् ॥ ८
शिरस्तो निर्गतासृग्भिश्शमिते पांसुदुर्दिने । ममथुरसुरान् सेना भूताना बलशालिनाम् ॥ ९
अभिपाश्च तदा तेषामाहवेष्वनिवर्तिन । शरैरस्त्रैर्महाघोरै प्रळयानिलसन्निभै ॥ १०
मथ्यमान महाभूतैस्तारको बलमात्मन । विशीर्णं दिक्षु सर्वासु पुरो-मुखममर्षण ॥ ११
समुद्वीक्ष्य रुषा शीघ्र रथादुत्तीर्य भीषण । निर्मितामयसाभारैरनेकैर्महती गदाम् ॥ १२
वज्रकाञ्चनपट्टाभ्यामर्चिता सुमनोभरै । आदाय भ्रामयन्नेनामक्रुध्यदैरनुक्षणम् ॥ १३
दन्तदष्ट्रै कर्परै प्रळयाम्बुदसध्वनि । दशाधरोष्ठ दुष्प्रेक्ष्यो भ्रूभङ्ग विकृतानन ॥ १४
वाहिनीना सहस्राणि भूताना पृतनापतिन् । ममन्थ गदया भीमो मत्तवारणसन्निभ ॥ १५
पादाभ्या चैव हस्ताभ्या महाद्विरदविक्रम । मथ्यमान तदानीं च भूताना नियुत गणा ॥ १६
दद्रुवाभ्यपतत्तूर्णं तोयदा इव कालजा । ववर्षुस्तारक सर्वंदहर्दरदाशीविषोपमे ॥ १७
गदया तच्छरानाशु वभञ्ज द्विरदानन । कोपन च जघानाशु महीं गुर्व्यां तयाऽसुर ॥ १८
गदाप्रहारनिर्भिन्ना महीध्ररसना द्विधाऽभवत् । ववर्ष सिंहनादेन सत्त्वेनाभयज्जगत् ॥ १९
ते च सर्वे पुन क्रुद्धा दिव्यास्त्राण्यभिसन्दधु । आवृत्य च शिरासर्पा ववर्षुर्दानवोपरि ॥ २०
संहारकाले जलदा इव पर्वतमुन्नतम् । तानि सर्वाणि गदया व्यर्थयन् भीमविक्रम ॥ २१
अमर्दद्रथवृन्दानि तेषामश्वैर्महासुरः । स्वताश्च शुण्डादण्डेन समुद्रं माहिणोद्रुषा ॥ २२
अमर्षात्स समुत्थाय वचिरसर्वं विलिल्यिरे । पतत्त्रिसत्तरे साक्षात् केसरीवामितद्युति ॥ २३
तारक प्रतिजग्राह गजास्यं वीरकेसरी । दारयंश्च संव्याप्ती मातृमीपावरूपमः ॥ २४

तयोः समभवद्युद्धं वृत्रवासवयोरिव । प्रवृत्तेऽस्मिन् महायुद्धे रजोऽन्धतमसे तदा ॥ २५
तयोस्समभवद्युद्धं स्मरशंबरयोरिव । शरैराच्छादयामास तं रुषा वीरकेसरी ॥ २६
तिष्ठतिष्ठेति निर्भर्त्स्य धून्वन्धनुरनुक्षणम् । ज्यानिनादेन महता बधिरीकृत दिङ्मुखः ॥ २७
तारकोऽपि महाधीरो लघुहस्तः प्रतापवान् । शरवृष्टिं निरस्याशु वीरकेसरिमेघजाम् ॥ २८
मुमोच सपुनर्बाणान् स्वर्णपुङ्खान् शिलाशितान् । स्वनामचिह्नितान्दीप्तान् आशीविषनिभाननान् ॥ २९
सिंहनादं चकाराशु पुनःपुनरनेकधा । ततस्त्वपमयस्सर्वानाशुगान्वीरकेसरी ॥ ३०
छित्वार्धमार्गे सहसा कणशो वीरकेसरी । क्रोधेन महता भूयो विहस्यारक्तलोचनः ॥ ३१
जहार दशभिर्बाणैः किरीटं तारकस्य सः । करं करेण सन्ताड्य जहासच पुनःपुनः ॥ ३२
तस्मिन् पपात वै वृष्टिर्दिवि देवकरच्युता । झङ्कारैष्षट्पदाळीनां मुखरीकृतदिङ्मुखा ॥ ३३
तारकः क्रोधताम्राक्षो गदया बलगर्वितः । जघानोरसि वेगेन वीरकेसरिणो रुषा ॥ ३४
ततः किलकिलाशब्दमूर्ध्वबाहुश्चकार सः । सतु तेन प्रहारेण मुमोह भृशताडितः ॥ ३५
तं दृष्ट्वा विक्रमं तस्य तारकस्य दुरात्मनः । वीरबाहुरमेयात्मा वीरवृन्दावृतो रथी ॥ ३६
तारकं प्रतिसम्प्राह सर्वासुरविमर्दनः । भर्त्सयन् बहुधा वाचा दानवान् रणमूर्धनि ॥ ३७
तिष्ठतिष्ठ महादुष्ट दुरात्मन् कुत्र गच्छसि । मम दृष्टिपथं प्राप्य चिरं जीवितवानसि ॥ ३८
मामुपेत्याधुना युद्धे जीवन् कुत्र गमिष्यसि । वदन्तमेवं संग्रामे भुवि वीरो महासुरः ॥ ३९
प्रत्युज्जगाम सहसा महेन्द्रमिव भूधरः । तयोस्समभवद्युद्धं मधुमाधवयोरिव ॥ ४०
यक्षगन्धर्वसिद्धेन्द्रैर्व्योम्नियुद्धं दिदृक्षुभिः । दिशः संछादितास्सर्वा विदिशश्चाप्सरोगणैः ॥ ४१
तारकोऽपि रथारूढो धनुरादाय वीर्यवान् । ज्यामारोप्य धनुष्कोट्यां ध्वनिना पूरयञ्जगत् ॥ ४२
ववर्ष शरवर्षेण वीरबाहुं रणाङ्गणे । बुधशुक्रसमीपेतु प्रावृषीव घनोदयः ॥ ४३
शरैराच्छादयामास वर्षैरिव महागिरिम् । ततश्शरचिते व्योम्नि तमसाच समावृते ॥ ४४
वीरबाहुरमेयात्मा विहस्य सहसा वशी । धनुरुद्धाय सुमहच्छैलं धनुरिवेश्वरः ॥ ४५
विस्फार्य करजाग्रेण विमृश्यज्यां महामनाः । चिच्छेद सहसा सर्वं चतुर्दशभिराशुगैः ॥ ४६
महता लाघवेनैव तदद्भुतमिवाभवत् । शरवृष्टौ निरस्तायां दुर्दिनेच तदुत्थिते ॥ ४७
प्रसन्नमभवत्सर्वं मनोभिस्सहनाकिनाम् । दृष्ट्वा तदद्भुतं कर्म वीरबाहोस्तु तारकः ॥ ४८
क्रोधेन महताविष्टस्त्रिशूलमतिभीषणम् । अर्चितं कुसुमैर्नित्यं घण्टाचामरमण्डितम् ॥ ४९
आदाय भ्रामयामास करेणैकेन लीलया । करस्थेन त्रिशूलेन ज्वलता दानवाधिपः ॥ ५०
कालाग्निरिव संरेजे ज्वालामालासमाकुलः । मुमोच तं महासत्वो लीलया वीरबाहवे ॥ ५१
अनिवार्यं महारौद्रं वीरबाहोस्तत्रोरसि । पपात शितधारं तत् असृग्ध्वंसेन सक्षणम् ॥ ५२
दृष्ट्वैतत् सप्तवीरेन्द्राः परिवव्रुर्महासुरम् । तारकं वीरमत्युग्रं रथैर्नानाविधायुधैः ॥ ५३
तेषामायुधवर्षाणि सतानां गजविक्रमः । शुण्डाधूतेन दण्डेन वारयामास वीर्यवान् ॥ ५४
गदया पुनरापत्य तान जघान रणेऽसुरः । पराजितेषु तेष्वेषु पलायनपरेषु च ॥ ५५
विधूय मूर्छां तज्जातिं वीरबाहुररिन्दमः । ववर्ष शरवर्षेण तारकं क्रोधमूर्छितः ॥ ५६
सोऽपितं धनुरास्फाल्य कृतज्याशब्दभीषणः । चिच्छेद बाणैः लाघवं संप्रदर्शयन् ॥ ५७
शरैराच्छादयामास वीरबाहुं रणाङ्गणे । सोऽपि तानपि चिच्छेद पथ्यर्धे प्राज्यविक्रमः ॥ ५८
संभर्त्स्य वाग्भिर्धीरामिरिस्सहवत् द्विरदाननम् । तिष्ठतिष्ठ पुरो न त्वं मम जीवन् गमिष्यसि ॥ ५९

यद्येवं वीरबाहौ महत्याह यथा स सः । अज्ञात्वा वीरबाहो त्वं अस्माकं कथसे बलम् ॥ ६०
अनेकादित्यसंकाशं विष्णुचक्रमरिन्दमम् । संयुगे युध्यता तेन प्रहृतं मुक्तं मया पुरा ॥ ६१
वृत्रारिकुलिशं शक्तिं अग्नेर्दण्डं यमस्य च । खड्गं च निर्ऋतेर्भस्तं विद्धि पाशं प्रचेतसः ॥ ६२
ध्वजं वायोः कुबेरस्य गदां शूलं त्रिशूलिनः । ब्रह्मास्त्रमपि मद्बाहुवीर्येणाशु निवारितम् ॥ ६३
पलायिताश्च ते युद्धे बहुवारं मया जिताः । इदानीं भूतसेनास्ते पश्यतोऽद्यैव सोदराः ॥ ६४
त्वामपि क्षणमात्रेण विद्रविष्येऽद्य संयुगे । तथापि माथं पश्चाद्य ग्रयिष्यामि बलैस्समम् ॥ ६५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकोनचत्वारिंशोऽध्यायः ॥

---

॥ अथ चत्वारिंशोऽध्यायः ॥

तारकेण मायायुद्धम् ॥

अथ गर्जन्तमेवं तं तारकं मदविह्वलम् । शुण्डाग्रग्रस्तदिक्चक्रकालचक्रं दुरासदम् ॥ १
वीरबाहुरमेयात्मा स्वनामपरिचिह्नितैः । नाराचैः स्वर्णपुङ्खाढ्यैः ज्वलत्पावकसन्निभैः ॥ २
शस्त्राढ्यैर्जगत्यस्मिन् छादयामास तं रुषा । तारकोऽपि रणश्लाघी सहस्रैरपि संयुगे ॥ ३
अप्राप्तान् पथि चिच्छेद नाराचैर्नामचिह्नितैः । लघुहस्तो वीरबाहुः पुनर्बाणान् शिलाशितान् ॥ ४
मुमोच तारकश्चापि तान् शितेन न्यवारयत् । शरैकस्मै रणेधन्वी तदद्भुतमिवाभवत् ॥ ५
पुनर्दशसहस्रेण ववर्ष युधि दानवः । तादृशैरेव तत्संख्यैः संख्ये सोऽपि न्यवारयत् ॥ ६
तद्दृष्ट्वा तारकः क्रोधात् वीरबाहुकलाघवम् । पुनर्दिदीपे सहसा युगान्ताग्निरिवापरः ॥ ७
आग्नेयमस्त्रं धनुषि सन्दधे तारको बली । तस्मिन् सन्दधति क्रुद्धे बाणमाग्नेयमद्भुतम् ॥ ८
ज्वालामालासहस्रेण लोकमावृत्य पावकः । दिदीपेऽण्डकटाहान्तं कृत्वा चटचटाध्वनिम् ॥ ९
दृष्ट्वाऽग्निना जगद्व्याप्तं देवा दिवि सकम्पिरे । वीरबाहुः स्वयश्चाशु मन्युनाथ परिप्लुतः ॥ १०
आग्नेयेनैव सहसा प्रत्यस्त्रेण न्यवारयत् । तदेतदद्भुतं लोके तृणमुष्णेन शाम्यति ॥ ११
प्रावृषीव जगत्सर्वमभ्रवृन्दावृतं क्षणात् ॥ १२
करीन्द्रवदनः क्रुद्धो वारुणं सन्दधे पुनः । प्रावृषीव जगत्सर्वमभ्रवृन्दावृतं क्षणात् ॥ १२
चञ्चलासन् चलाऽऽस्मिन् स्तनितैरनुनादितम् । पुरोवातप्रणुन्नानां मेघानां संभ्रमोऽभवत् ॥ १३
प्राचेतसमिदं वीरबाहुरालोक्य मन्युमान् । मन्युना संपरीताक्षो वायव्येन न्यवारयत् ॥ १४
तेन नुन्नं क्षणार्धेन मेघवृन्दं महत्तरम् । अथ प्रहसमाक्रान्तमिव शीर्णमभूत् क्षणात् ॥ १५
प्रसेदुश्च दिशस्सर्वाः प्रसन्नमभवन्नभः । सिद्धगन्धर्वयक्षाणां वृन्दादभ्रदिवामला ॥ १६
वीरबाहोः पपातानु पुष्पवृष्टिस्तथोपरि । तारकोऽपि पुनस्तीव्रं सौरमस्त्रं समाददे ॥ १७
सहस्रांशुसहस्राणि तथोदीयुस्समन्ततः । युगपद्युगपर्यन्ते यथा लोकदिधक्षया ॥ १८
वीरबाहुस्तदुद्वीक्ष्य वारुणास्त्रं समाददे । आविरासंस्ततो मेघास्तानाच्छाद्य दिवाकरान् ॥ १९
सोमास्त्रं तारकोऽमुञ्चत् तेनैतत्सोऽप्यवारयत् । ऐन्द्रमैन्द्रेण संहृत्य याम्यं याम्येनच क्षणात् ॥ २०
नैर्ऋतं नैर्ऋतेनैव वीरबाहुर्न्यवारयत् । महास्त्रं संदधे दैत्यः क्वचिदप्यनिवारितम् ॥ २१
आपपात नभस्येतद्दिग्देशपदविशालम् । वीरबाहुश्च तत्क्षिप्रं तेनैव प्रत्यवारयत् ॥ २२
पुनः क्रुद्धतरो दैत्यः प्राहिणोद्वीरबाहवे । नारायणास्त्रमत्युग्रः सर्वशत्रुनिबर्हणम् ॥ २३

तेनैतद्वीरबाहुश्च न्यवारयदयत्नतः । दृष्ट्वाथ विक्रमं तस्य वीरबाहोस्सुरेतरः ॥ २४
मायी मायाबलेनैव महता मन्युना पुनः । रजोऽन्धकारे महति दृष्टिमार्गं निरुंधति ॥ २५
रूपाणि बहुधा कृत्वा युयोध रणमूर्धनि । प्रत्येकं बहुधा दिव्यान्यस्त्राण्यपि च सन्दधे ॥ २६
तैरस्त्रैरावृतो वीरबाहुरायोधनक्षितौ । सन्दधे वीरभद्रास्त्रं सर्वशत्रुनिबर्हणम् ॥ २७
मायामयानि तान्याशु विनेशुस्तस्य दर्शनात् । अस्त्राणि च पुनर्मायी तारकस्संततान सः ॥ २८
युध्यन्निव रणाच्छीघ्रं अपायान्मायया क्षणात् । मोहयित्वा वीरबाहुमाशु तद्बिलमाविशत् ॥ २९
पलायनपरं हन्तुं नयुक्तमितिमानसे । प्रयुक्तं वीरभद्रास्त्रं पुनःप्रतिजहार च ॥ ३०
विवेशानुपदं तस्य वीरबाहुर्बिलं गिरेः । घोरं क्रौञ्चस्य दुष्प्रेक्ष्यं महारौरवसन्निभम् ॥ ३१
मायावी सगिरिर्वाचा तारकस्यासुरेशितुः । मायाभिर्मोहयामास वह्नीभिस्सुराधमः ॥ ३२
अन्धकारो महानासीत् अन्धन्तम इवान्धयन् । प्रथमं पुनराभान्ति मार्गाश्च बहुधा गिरेः ॥ ३३
पिहितास्तत्रतत्रैते बहुरूपा भयानकाः । तेषु सर्वेषु वीरोऽपि गत्वा गत्वा न्यवर्तत ॥ ३४
अदृष्ट्वा तारकं दैत्यं द्विजास्तस्यैवमायया । चिन्तामवाप महतीं वीरबाहुश्चिरं हृदि ॥ ३५
तादृशस्यापि वीरस्य यद्येवं मनसि व्यथा । त्रियेरन्नितरे लोके क्षणमात्रेणहि ध्रुवम् ॥ ३६
अहमन्योऽस्तु मोहोऽस्तु स्वप्नोवा विभ्रमोऽनु किम् । नमे हस्ताविमावन्यौ धनुरन्यत्तु मे शराः ॥ ३७
कुतथा शक्यते गन्तुं रुद्धे मार्गे समन्ततः । चिन्तयानस्य तस्यैवं मोहमाप मनोभृशम् ॥ ३८
तस्यानुपदमन्येऽष्टौ वीरकण्ठीरवादयः । भूतानि नियुतंचापि विविशुर्बलगर्विताः ॥ ३९
सतुर्भिस्सह पश्चाल्लक्षप्रधानाश्चाविचारतः । चिरायिते वीरबाहौ स्वकप्राणसुराशयाः ॥ ४०
प्रविष्टमात्रास्ते सर्वे मोहमापुररिन्दमाः । तेषामपि पुनर्मार्गं पिदधे दानवाधमः ॥ ४१
सतांश्च मोहितान्वीक्ष्य मेने विजयमात्मनः । इति क्रौञ्चबिले तेषु वीरेषु पिहितेषु सः ॥ ४२
बहिर्निर्गत्य दुष्टात्मा रथेन महताऽसुरः । गणवृन्दं महद्घोरं श्वासुराघहरं बली ॥ ४३
जिघांसुरति सन्नद्धो बभूव दनुजाधमः । सज्यं धनुस्त्वादाय तूणीसाक्षय्यसायकौ ॥ ४४
ययौ स रथमारुह्य गणसेनाविमर्दयन् । बभञ्ज सेनास्सेनान्यो वीरबाहु वशानुगाः ॥ ४५
युयुधुश्चापि तास्तेन नानाप्रहरणासृशम् । अनायका अपिचिरं तदद्भुतमिवाभवत् ॥ ४६
शिलाभिर्वृक्षषण्डैश्च पर्वतैश्च महत्तरैः । प्रजह्रुर्धैर्यमास्थाय शतशोऽथ सहस्रशः ॥ ४७
एकोनैकाभिरहितः तारको रणकोविदः । क्रोधेन महता युक्तश्शरपाषाणपर्वतान् ॥ ४८
महत्या सेनया मुक्तान् चिच्छेद कणशो रणे ॥ ४९½
ममन्थतां सुरपृतनेशवाहिनीं महामनास्सकल सुरेतराधिपः ।
सरोवरं सरसिजषण्डमण्डितं गजाधिपो मदकलितो यथा रुषा ॥ ४९½

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चत्वारिंशोऽध्यायः ॥

———

॥ अथ एकचत्वारिंशोऽध्याय ॥

श्री स्कन्दतारक सवाद ॥

अथ भग्ना महासेना घोरवाहोरनायका । अरक्ष्यमाणा हाहेति मन्दमाता भृशातुरा ॥ १
एकस्य पदवीमन्यो नभाप भयपीडित । प्रत्येक निशितैर्बाणैर्गर्जतानेन मर्दिता ॥ २
दिशश्च विदिशश्चापि प्राणत्राणपरायणा । देवाश्च विष्णुप्रमुखा भीतभीताश्चकम्पिरे ॥ ३
दृष्ट्वैतत्स्कन्दन तत्र देवानाच भय मुनि । नारदस्सहसाऽभ्येत्य देवसेनापति प्रभुम् ॥ ४
वृत्तान्तमेवमाचख्यौ सुब्रह्मण्याय सूरये । प्रणम्य परया भक्त्या प्राञ्जलिर्भीतमानस ॥ ५
भगवन्नद्य नस्सर्वे वीरबाहुमुखागणा । निज प्रविश मायाश्च नपुनर्निर्गता विभो ॥ ६
जीवन्ति वा नवेतीश जानीमोऽसुरमायया । सेनाश्च निविशुस्तस्य दिक्षुसर्वासु सर्वदा ॥ ७
देवाना दानवाद्भीतिर्हृदये द्विगुणीकृता । त्राहि नस्सर्वदा देव भयादस्मान्महत्तरात् ॥ ८
नारदोक्तमथाकर्ण्य देवदेवागसम्भव । उवाच क्रोधताम्राक्षो निर्दहन्निवतत्क्षणम् ॥ ९
महर्षिप्ये सकल कृत्स्न असुराणा दुरात्मनाम् । अधुना विबुधा भीति विमुञ्चन्त्वसुरोद्भवाम् ॥ १०
मामाश्रितानां लोकेऽस्मिन् कुतो भीति क्व च क्षति । भक्तानाच जगत्यस्मिन् कारय क्वचया गद ॥ ११
मद्भक्त द्वेष्टि यो मोहात् समाद्वेष्टि नराधम । न सहेऽह दुरात्मान सेद्धे मत्पराधिनम् ॥ १२
वध्यो मम जगत्यस्मिन् अपि शक्राभिरक्षितः । मद्भक्तपोषणाय पुष्णामि पृथिवी तले । १३
वीरबाहुमुखाश्चापि मौढ्यमायाविमोहितान् । क्षिप्रमेवोद्धरिष्यामि शीघ्र मित्यासुराधमम् ॥ १४
तारक संहराम्यादौ रणे दानवसत्तमा । स एवासुरसैन्यानां संयमिन्या दुरात्मनाम् ॥ १५
भ्रातो सिंहमुखस्यापि शूरपद्मस्य चोभयो । अवज्ञामशेषाणा आशु सपादयिष्यति ॥ १६
आश्वस्यान् चोदयाश्व समीरण समीरणे । सारथ्यस्यच सामर्थ्य सर्वदसन्दशयाधुना ॥ १७
इति सचोदितो वायुस्सुब्रह्मण्येन सादरम् । युग्याना तद्रथस्याग्याज्ञाश्वानामपुतद्वश ॥ १८
नेदुर्दुन्दुभयोदिव्याश्शङ्खाश्चह्नाणि सर्वदा । निस्साणमुरजाणाश्च डिण्डिमाना सहस्रश ॥ १९
देवाश्च ऋषिभिस्साकं जयशब्दादिमङ्गलम् । अपठन् वन्दिनस्सर्वे वैतालिकगणा जगुः ॥ २०
अपदानानि देवस्य षण्मुखस्यामितौजस । धैर्यवता गर्जता चैव वल्गतामनुवल्गताम् ॥ २१
पदातीना रथादिषु बहुधाच जजृम्भिरे । अश्वाना हेषितान्येव गजाना बृंहितानिच ॥ २२
कूजितानि रथागाना जितमागरनिस्वनम् । सेनापतेस्तदासेना दैत्यसेना समावृणोत् ॥ २३
साच ता प्रतिजग्राह सागर सागरो यथा । ततो युद्धमभूत्तत्र तुमुल रोमहर्षणम् ॥ २४
वीराणदानवेव प्रतिवीरैरजस्यमूत् । प्रतीच्छ प्रहरस्वाथ तिष्ठतिष्ठ क्वगच्छसि ॥ २५
संरम्भयाचस्तूणा तदा शुश्रुविरे भृशा । जिगाय सेना दैत्यस्य सेना शमुनसूनुव ॥ २६
ता पुनर्दैत्यसेना सा तथाभूयस्तथाबसा । पूर्वश्चात्मदुशा धार्येरिव महोर्मय ॥ २७
तदन्तरे समालोक्य तारकः गाम्यपर्तितम् । उवाच दूत कुशल सगृहीत्वा करेणसः ॥ २८
दूत कथयदायच काञ्चनाद्रिरिवाशर । मध्ये सेनासमुद्रस्य रथो नौरिव संस्थित ॥ २९
भाति नानामणिमयो विचित्रध्वजमण्डित । तस्मिन् कोऽयर्कसंकाशो भाभासितदिगन्तर ॥ ३०
दुर्धर्षयस्समरे साक्षात् कालाग्निरिव कस्तक । कोऽयं भूत्वा कुतोऽत्र वन्दितोऽम्लानविक्रम ॥ ३१

गूढचापैवदत्प्रेक्ष्य तारकं दानवप्रभुम् । प्रणम्याग्रे पिधायास्यं दूतो वाग्मी व्यजिज्ञपत् ॥ ३२
विज्ञप्तिं शृणु मे विद्वन् नप्रमत्तो मदीरिताम् । योयं शिवसुतः स्कन्दो लोकनेता दुरासदः ॥ ३३
सर्वेषामेव देवानां सोऽयं रक्षापरः प्रभुः । समग्रबलवीर्योऽसौ शरण्यश्शरणैषिणाम् ॥ ३४
शंभोस्साक्षात् जगद्भर्तुः सर्वेशादधिको बले । सत्ये धैर्येच सामर्थ्ये शरासनविकर्षणे ॥ ३५
सौभाग्यमस्य कन्दर्प दर्पविद्रावणौषधम् । कामान्तक पुरध्वंस दक्षाध्वरहरोऽहरः ॥ ३६
सोऽपि सोमावतंसोऽस्य संयुगे स्थातुमक्षमः । अन्ये के धन्विनो लोके मन्ये धन्यतरदिशवाः ॥ ३७
यः पुत्रमीदृशं लोके लेभे देवाभिरक्षकम् । दीपाच्छिवादुद्धदीप इवाभूद्देवदेशिकः ॥ ३८
प्रोक्तं दूतमुखादेवं वाक्यं श्रुत्वाथ तारकः । प्रोवाच सारथिं प्रेक्ष्य वाचा गंभीरनादया ॥ ३९
सारथे सूनुरीशस्य लोकनाथस्य शूलिनः । रथे कोट्यर्कसङ्काशस्सोऽयमेव विराजते ॥ ४०
तमेनं प्रति यत्किंचित् अस्ति वक्तव्यमद्य मे । तदप्रतिरथस्यास्य रथं प्रतिरथं मम ॥ ४१
प्रापयाशु ममादेशादविलंबं महामते । इति सञ्चोदितस्तस्य सारथिर्विनयान्वितः ॥ ४२
रथाश्वान् चोदयामास मनोमारुतरंहसः । प्रापयामासच क्षिप्रं सुब्रह्मण्यान्तिकं रथी ॥ ४३
निरूप्य तं रथे शंभु कुमारं मारकोमलम् । दृष्ट्वाश्चर्यमज्ञानानस्तारकः क्षणमोहितः ॥ ४४
कोटिसूर्यप्रतीकाशं कोटिशीतांशुशीतलम् । प्रसन्न षण्मुखांभोजमष्टादश विलोचनम् ॥ ४५
द्वादशायुधसंपन्न भुजद्वादश मण्डितम् । ततः प्रोवाच संवीक्ष्य सुब्रह्मण्यं सुरेतरः ॥ ४६
भोभोदायादधान् शंभोर्भुवनानामधीश्वरः । ईदृशो यस्य पुत्रस्त्वं लोकनेता जगत्पतिः ॥ ४७
तदास्तामधुना वाक्यं मदीयमिदमादरात् । क्षणमाकर्ण्य हे स्वामिन् पश्चात्कुरु यथामति ॥ ४८
सुरासुराणामन्योन्यं जन्मारभ्याधिकासुत । सिद्धं वैरमपाकर्तुं नशक्यमपि केनचित् ॥ ४९
वयं द्विनाम द्विषतस्तेप्यस्मान् बलशालिनः । तत्सर्वं चन्द्रचूडस्य प्रसादेन नचान्यथा ॥ ५०
यथा शिवस्तथा त्वंच तस्यात्मासि यतश्श्रुतः । पूज्योऽसि यद् कस्मात् त्वमस्माभिर्योद्धुमागतः ॥ ५१
देवा विष्णुमुखा हन्युरस्मान् हन्मो वयच तान् । त्वंहि साक्षात् परंब्रह्म शिवोद्भव शिवोऽसि नः ॥ ५२
श्रुत्वैतद्भाषितं तस्य दानवस्य विहस्य सः । प्रोवाच देवसेनानीस्तारकं प्रतिनिर्व्यथः ॥ ५३

स्कन्दः —

त्वमद्य कोपदासभ्यं दानवेषु रथे स्थितः । किमर्थं भेत्सि मामेत्य किंनाम किमिहागतः ॥ ५४
तारकस्तदुपश्रुत्य प्रत्युवाच हरात्मजम् । नाम्नास्मि तारको लोके शूरपद्मासुरानुजः ॥ ५५
युष्माभिश्च नचास्माकं कलहो न कदाचन । स्कन्दः-ईशोऽस्य जगतः कर्ता सुरासुरगुरुस्स्मृतः ॥ ५६
ईष्टे शक्तिभिरत्यर्थमीशानीभिरिदं जगत् । तत्रचेदीशिता कुर्याज्जगतः कथमीशिता ॥ ५७
एषामेधैवलोकानामसंभेदाय शङ्करः । सेतुवत्तास्ततस्सेतुर्मर्यादायाः प्रवर्तकः ॥ ५८
आदौ धर्मं द्विधा तेन विभक्तं विश्वमूर्तिना । विध्यात्मनेति कर्तव्यं एकमन्यन्निषेधतः ॥ ५९
न कर्तव्यमितीशाज्ञा नैव लंघ्या सुरासुरैः । निषेधवर्ती दुष्टात्मा शिष्टोऽन्यस्समुदीरितः ॥ ६०
आज्ञालंघनदुष्टो निग्रहार्हस्समीरितः । अनुग्रहस्य तच्छिष्टशिष्टदुष्टौ यतस्तुतौ ॥ ६१
यूयंच बहुधा लोके दुष्कर्मनिरतास्सदा । प्राणिपीडापरा नित्यमिष्टापूर्तविनिन्दकाः ॥ ६२
विश्वंच बहुधाजातं जायमानं जनिष्यति । सर्वो रुद्रो जगत्कर्ता विश्वाधिक इतिश्रुतिः ॥ ६३
जगच्च तच्छरीरं तच्छरीरी तेन शंकरः । तस्मादत्र जगत्यस्मिन् यस्य कस्यापि देहिनः ॥ ६४
अनिष्टमाचरन् लोके शिवानिष्टकरः स्मृतः । देवाश्च विष्णुप्रमुखास्तदाज्ञावशवर्तिनः ॥ ६५

तेषां जगत्त्रयस्यापि रक्षणार्थं जगत्पतिः । त्वयुद्क निग्रहार्थं नो मामसृजज्जनकश्शिवः ॥ ६६
वाहिन्याच महत्याथ बहुधा चतुरंगया । तदद्य योद्धुं युष्माभिरहमत्रागतः स्वयम् ॥ ६७
मामवेत्याद्विशिशुं मां त्वं सद्यो युध्यस्व तारक । प्रेषयेमंच वृत्तान्तं ज्येष्ठयोरद्य मा जडः ॥ ६८
भूयः प्राकारदुर्गाणि संरक्षस्व बलेरितः । नमे दृष्टिपथं प्राप्य जीवन्भूयो गमिष्यसि ॥ ६९
युष्मद्भिमर्दिता देवा विष्णुब्रह्मवृषादयः । चुक्रुशुर्देवदेवस्य सन्निधौ बहुधाभयात् ॥ ७०
तदद्य संहरिष्यामि दुष्टं युष्मत्कुलं क्षणात् ॥ ७०½

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकचत्वारिंशोऽध्यायः ॥

---

॥ अथ द्विचत्वारिंशोऽध्यायः ॥

श्री स्कन्देन तारकवध प्रतिज्ञा ॥

श्रुत्वैतत् तारको वाक्यं सुब्रह्मण्यस्य वै रुषा । स्फुरद्दशधरोष्ठश्रीर्भ्रुकुटी कुटिलेक्षणः ॥ १
पुनः प्रोवाच वचनं विनिश्वस्य मुहुर्मुहुः । तारकः – भवाञ्छिशुर्नजानाति कथं योद्धुमिहागतः २
वयं हि बलिनश्शूरास्समरेष्वनिवर्तिनः । असुरास्सर्व एवैते स्वभावात्क्रूरचेतसः ॥ ३
ईशाज्ञैवहि नस्साधु निषेधो विधिरासुराः । स्वधर्मो विगुणः श्रेयान् परधर्मात्स्वनुष्ठितात् ॥ ४
बाधन्ते ते सुरान्नित्यमस्मदीयास्सहस्रशः । सर्वेषामपि देवानां निगृह्य बलमुत्तमम् ॥ ५
इन्द्रोऽपि निर्जितस्संख्ये वज्रं निर्धूय सायकैः । आशापालाश्च ते सर्वे निराशाश्च कृता मया ॥ ६
ब्रह्मापि निर्जितस्तूर्णं ब्राह्ममस्त्रंच भक्षितम् । तत्सर्वं तिष्ठतु प्राप्तं विष्णुना यत्सुदर्शनम् ॥ ७
हरादप्यर्चनात्प्रीतात् सहस्रार्कसमप्रभम् । मिहिरं तिमिरस्यारेरविप्रकटविक्रमम् ॥ ८
संग्राममूर्ध्नि सहसा कान्दिशीकेन विष्णुना । मामुद्दिश्य विमुक्तं तन्मद्वक्षः परिघट्टितम् ॥ ९
पतितं कुण्ठितारं तन्मया भूयो धृतं बलात् । कण्ठे निष्कमिव प्रांशुकमलापतिरक्षकम् ॥ १०
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तस्सार्वभौमस्सुप्रतीकश्च दिग्गजाः ॥ ११
मच्छुण्डाहतिसंभिन्न मस्तका दिक्षुदुद्रुवुः । इदानीं कुरुते वीरबाहुरन्येऽनुशाध्यते ॥ १२
नियुतं निगृहीतास्ते गणाः क्रौञ्चबिलान्तरे । सहस्रवाहिनीसेना समरेमच्छरार्दिता ॥ १३
मुकुन्देशा महावीरा नम्रयोधमहापथा । नानादिक्षु विशीर्णासा पुनरावर्तिदुर्लभा ॥ १४
सर्वमेतत्समालोच्य स्वयमात्मनि सांप्रतम् । अपोहशास्त्रहीन सर्वसंग्रामकर्मणि ॥ १५
युष्मास्वस्माकमात्रेय कर्षैमपि विद्यते । वासो भवन्न जानाति वार्ता लोके महीयसी ॥ १६
तच्छ्रुत्वा सविधं विबोर्भूयस्सुखमवाप्नुहि । श्रुत्वेति वचनं तस्य तारकस्य हरात्मजः ॥ १७
विहस्योवाच सावज्ञं तं कोपस्फुरिताधरः । वृथा तारक दुष्टात्मन् कत्थसे चिरमीदृशम् ॥ १८
सर्वं तिष्ठतु ते वीर्यकथनं स्वयमात्थ यत् । विष्णुचक्रमुरस्यमे निष्कवत्वमितिस्मरन् ॥ १९
अहं तिष्ठामि गच्छामि योत्स्याम्यथ यथारति । तव संस्मृत्य सस्मृत्य वीरमापितमदम ॥ २०
भासि स्वस्तरोस्यर्थे शृणु मूलार्थमक्षमन् । विष्णुचक्रमपीतीद बहुमानपुरस्सरम् ॥ २१
अपि शास्त्रसपथा प्रोक्तः कविना वीर्यशालिना । तस्यैतच्छृणु चक्रस्य विक्रमं शत्रुदुस्सहम् ॥ २२
वीरभद्रे पुरामुक्तं दक्षाध्वरनाशनं । विष्णुना जिष्णुना चक्रमस्याहतमपि क्वचित् ॥ २३

तच्छिरोमुण्डमालायामेरेनैवतु भक्षितम् । भूतेनैकेनवपुरा गणमुख्येन खादितम् ॥ २४
तृणमुद्दिश्य देवानां सदोमध्ये मुरारिणा । विमुक्तं कुण्ठितास्त्रं तद्यक्षस्येव निरीक्षणात् ॥ २५
दधीचस्य मुनेः पूर्वमहास्थिपरिघट्टितम् । सद्रास्यमभयचक्रं त्वयैतद् बहुमन्यते ॥ २६
एतावत् भवतो वीर्यं यन्मदग्रे त्वयेरितम् । एवं विकत्थमानं त्वामद्य युद्धे क्षणान्तरे ॥ २७
छिनद्मि शक्त्या कृपाशद्रापे पादाब्जयोर्मम ॥ २८ ॥

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
संभवकाण्डे द्विचत्वारिंशोऽध्यायः ॥

---

॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

ब्रह्मास्त्रादिभिः स्कन्दप्रणामः ॥

उक्तमात्रे कुमारेण तारकः क्रोधमूर्छितः । धनुरादाय सुमहत् सज्यं कृत्वातिनिष्ठुरम् ॥ १
ज्यानिनादेन महता पूरयन् सदिशो दश । ववर्ष बहुधा बाणान् रथी शुक्रवांयुदः ॥ २
छादिताश्च दिशस्सर्वा मण्डलं सवितुः क्षणात् । निपेतुरुल्काश्च सर्वत्र ज्योतींषिव नभःस्थलात् ॥ ३
चुक्षुभुस्सागरास्सर्वे चकंपेव वसुन्धरा । स्कन्दोऽपि धनुरादाय ज्याशब्दमुखरं महत् ॥ ४
तद्बाणवर्षं घोरं च वारयामास सायकैः । सहस्राणां सहस्राणि शरानाशीविषोपमान् ॥ ५
मुमोच तारकः क्रुद्धः पुनरेव हरात्मजे । सतांश्च सहसा वीरो वारयामास तत् क्षणात् ॥ ६
सहस्राणां सहस्रैश्च सायकैर्नतपर्वभिः । पुनश्च दशभिर्बाणैः स्वनामपरिचिह्नितैः ॥ ७
जघान तारकः स्कन्दं क्षिप्रहस्तः स्मयन्निव । अचारयत्ततस्सोऽपि क्रीडन्निव रणांकणे ॥ ८
ततस्तु तारकः क्रुद्धस्सारथिं प्राह वीर्यवान् । सूताद्य हरपुत्रेण संयुगे योद्धुमिच्छता ॥ ९
करोमि समरक्रीडां चोदयाश्वान् ममाधुना । सव्यापसव्यमार्गेण सामर्थ्यं मे प्रदर्शय ॥ १०
तथेति सारथिस्तस्य चोदयामास सैन्धवान् । सव्यापसव्यमश्वाश्च वभ्रमुरतिवेगतः ॥ ११
स्कन्दोऽपि सारथिं वायुमाह स समितिंजयः । वायो रथं ममापि त्वं मंडलं भ्रामय क्षणम् ॥ १२
इतीशपुत्रवचसा वायुस्सारथिरात्मवान् । चोदयामास चाश्वानां लक्षाण्याशु मनोजवः ॥ १३
अपसव्ये सुररथे सव्ये सव्येऽप्यसव्यकम् । अन्योन्यं भ्रमतोरेवं रथयोस्स्वामिदैत्ययोः ॥ १४
सिद्धचारणगन्धर्वैर्यक्षैर्युद्धदिदृक्षुभिः । व्योम संछादितं क्षिप्रं पुष्पहस्तैरनेकशः ॥ १५
ववर्षतुस्ततोऽन्योन्यं स्वामितौ सुरवैरिणाम् । चापमादाय सहसा ज्याशब्द घनघर्घरम् ॥ १६
सचतं सचतं विप्राः क्षिप्रहस्तौ जयार्थिनौ । तारकः क्रोधताम्राक्षः शरैर्देवाभयप्रदम् ॥ १७
छादयामास सहसा द्यां च भूमिं च सर्वशः । तत्सर्वमपि देवस्य कुमारोऽपि कुशाग्रधीः ॥ १८
वारयामास वेगेन क्षिप्रहस्तः प्रतापवान् । पुनरेकेषुणा स्वामी तारकस्य शरासनम् ॥ १९
ददौ दाताऽर्थिनां भूरि तथाप्यर्थिनामपि । सपुनश्चापमुत्सृज्य भग्नमन्यत् दृढं धनुः ॥ २०
आदाय तरसा भूरि सहस्राणि शरान् बहून् । निरस्य शरजन्मापि क्षिप्रमेवाशुगैः पुनः ॥ २१
सपुनश्शतसाहस्रैश्छित्वा तद्धनुरद्भुतम् । तुतोद तारकं चापि मर्माणि प्रथितैश्शरैः ॥ २२
द्वयेनैवेषुणाशुण्डां विपाणे च स्वलाघवात् । चकर्त बहुधा बालो बालकेसरिविक्रमः ॥ २३
तेन क्रुद्धतरो दैत्यश्शरैराशीविषोपमैः । रथात् ध्वजं द्विधाचक्रे तदद्भुतमिवाभवत् ॥ २४

सोऽपि शंभुकुमारोऽपि शरैराशिविषोपमैः । धनुश्छित्वा सहस्रेण सारथिंचाप्यमारयत् ॥ २५
तारकस्सोऽथ बलवान् स्वयमेवाश्वचोदकः । चापमन्यत्समादाय पट्टकाञ्चनसंयुतम् ॥ २६
सायकानां सहस्रेण सारथिं षण्मुखस्यच । तुतोद धवमानंच तेन क्रुद्धो हरात्मजः ॥ २७
तारकं क्षिप्रहस्तस्सन् शतबाणैरवाकिरत् । जघानच ललाटेऽस्य नाराचानां सहस्रकम् ॥ २८
अमूर्छत्तारकस्तेन ललाटेऽभिहतो भृशम् । तंदृष्ट्वा सारथिस्तस्य रथं युद्धादपावहत् ॥ २९
क्षिप्रमेव ततस्तस्य येये वीरा महारथाः । रुरुधुश्च बलैरन्यैः गजैरश्वैस्सहस्रशः ॥ ३०
मुमुचुश्च शरान् भल्लान् विपाठांश्च क्षुरप्रकान् । नानाशस्त्राणि वृक्षांश्च शैलानपि महोच्छ्रयान् ॥ ३१
कुमारो देवदेवस्य सुकुमारोऽपि लीलया । निवार्य शरवर्षाणि दानवांभोदजान्यथम् ॥ ३२
चकार सर्वानपितान् कीनाशग्रहिणोऽतिथीन् । त्यक्तमूर्छो महामोहो दानवस्तावदुत्थितः ॥ ३३
उपालभ्यात्मनस्सूतं धिक्कृत्य क्रोधविह्वलः । हतसेनोऽपि सेनान्यमरुधत्सहसा बली ॥ ३४
अभिद्रुत्यात्मसेनायाः विनाशेनच संयुगे । मुमोच क्रोधताम्राक्षो ब्रह्मास्त्रं हरसूनवे ॥ ३५
अभ्याहतं कश्चिद्वापि मलयानिलसन्निभम् । शरासनात्समुद्धृत्य तारकस्य महद्यतत् ॥ ३६
पदे पदे चकाराशु प्रणामं हरसूनवे । निकटं प्राप्य तद्व्याप्तं तुष्टावच जगद्गुरुम् ॥ ३७
आग्नेयं वायव्यमैन्द्राख्यं वारुणं सौरमासुरम् । गान्धर्वं यक्षमतुलं संमोहनमरिन्दमम् ॥ ३८
तानिसर्वाणि देवस्य समीपं प्राप्य संयुगे । कृतांजलिपुटानीशं गुहंशुशिवपूजितम् ॥ ३९
सपुनर्मन्युना तानि धिग्धिगित्यभिधायच । मनसाऽभ्यर्च्य समरे दिव्यं पाशुपतं महत् ॥ ४०
सन्दधे धनुषि क्षिप्रं सर्वसंहरणक्षमम् । तदपीशकुमारोऽपि रौद्रमभ्याहतं क्वचित् ॥ ४१
ज्वालामालावृताण्डान्तर्भुवनं भुवनेश्वरः । दधौ हस्तेनचैकेन लीलयैव रणाजिरे ॥ ४२
अस्त्रेषु विफलीभूतेष्वाजमुख्येषु दानवः । क्रोधेन महताविष्टो जगाद रथसारथिम् ॥ ४३
सारथे काण्डशत्रुमं सेनानीकैकवत्सरः । आवृत्यस्याभिभूत्यर्थं दुर्जयस्य रणाजिरे ॥ ४४
सव्यापसव्यं सहसा भ्रामय स्यन्दनं मुहुः । पुनश्च पुरुहूतादि गर्वशान्त्यर्थमद्यमे ॥ ४५
मादेशाद्वस्य दैत्यस्य मायासूनोर्महारथम् । सारथ्यधर्मविक्षिप्रं चोदयामास वाजिनः ॥ ४६
काण्वर्धर्षिन वै क्षिप्रं बभ्राम भ्रमसंभ्रमम् । भ्रमन्नेवासुरदशीर्षं स्वर्णपुङ्खान्मनोरमान् ॥ ४७
पत्रिणस्तान् शितफलान् सुदृढान्नतपर्वणः । ववर्ष कोटिशः क्षिप्रं शरानाशीविषोपमान् ॥ ४८
किमादद्वाति तूणीरात् सन्दधाति धनुष्ययम् । किंवा विसृजति क्षिप्रमिति केनाप्यलक्षितः ॥ ४९
दृश्यन्ते केवलं हस्ते चापं प्रलयमेघवत् । छादिताश्शरवर्षेण दिशोऽथो व्योममण्डलम् ॥ ५०
कुमारस्यापि पवनस्यन्दनस्याग्मनोजवान् । शतसाहस्रमश्वांस्तान् चोदयामासमण्डलम् ॥ ५१
प्रचोदितोऽपि तत्पूर्वमसोर्मदहे यथा ॥ ५२

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे त्रिचत्वारिंशोऽध्यायः ॥

---

॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

॥ शम्भुतनयमोचकः तारकासुरस्य वधः ॥

सूतः —

अथादाय कुमारोऽपि महामेरुनिभंधनुः । सर्वंधन्वाऽय समरे ज्यानिनादेन पूरयन् ॥ १

ककुभोऽष्टौ बधिरयन् सत्यपातालकानपि । वृष्टिं निवारयामास तारकायुद्धसंभवाम् ॥ २
स्थितोरथवरे विप्रा भ्रमत्यतितरां हरी । अभूदनवकाशोऽसिन्नाकाशे युद्धसंभ्रमे ॥ ३
यक्षचारणगन्धर्वः सिद्धैर्युद्धदिदृक्षुभि । ततो युद्धमभूद्घोरं तुमुलं रोमहर्षणम् ॥ ४
अनूपममनिर्देश्य स्कन्दतारकयोरपि । स्कन्दतारकयोर्युद्धं स्कन्दतारकयोरिव ॥ ५
जयोनैकतरस्यासीद्द्वयोरपि वाऽऽसीत्पराजय । यदा विजयते स्कन्दस्तदा देवाश्शशासिरे ॥ ६
ववर्षुः पुष्पवर्षेन्च सिद्धगन्धर्व किन्नरा । यदा विजयतेऽन्योपि दानवास्त शशासिरे ॥ ७
शक्तोऽपि सर्वसंहारे क्षिप्रमेव हरात्मज । बालो लीलाविनोदाय प्रतिहन्त्यच दानवम् ॥ ८
युयोधासहशलोके कुर्वन्व खेलनाटयदम् । या चकर्त पुराशुण्डा दानवस्य हरात्मज ॥ ९
साच तानि विषाणानि वराद्धयोऽपि जज्ञिरे । तत क्रुद्धतरस्स्वामी पुनश्शुण्डा विपाणके ॥ १०
चकर्त सहसाभूयो भूयस्तान्याशुजज्ञिरे । हस्तेषु शुण्डादन्तेषु सेनान्या बहुधायुधि ॥ ११
मायावी मायया जेतु मतिचक्रे महासुर । क्षणादन्तर्हितो दैत्यस्सत्थ पश्यतोविभो ॥ १२
क्रौञ्चस्य च गिरेरन्तर्दुरात्मा लोककण्टक । क्रौञ्चेन सह सचक्र माया मायाविशारदः ॥ १३
कार्ष्णायसं राजतञ्च हैरण्य त्रिपुर गिरि । विद्युन्माली तारकाक्ष कमलाक्षो बभूवसः ॥ १४
ईशसूनु पुरारातिं भूत्वा भूरूपमास्थित । ददाह स्मितमात्रेण तदद्भुतमिवाभवत् ॥ १५
पुनर्मेघोऽभवत्क्रौञ्च सोऽशनिर्दानवाधम । महावायुरसौ भूत्वा बभञ्ज जगदीश्वर ॥ १६
समुद्रवपुषा शैल परिणाम जगामह । वडवाग्निरिवात्यर्थं दिदीपे त्रिदिवौकसाम् ॥ १७
आचचाम तमीशोऽपि चुळकोदकलीलया । चक्रवाळगिरिर्जज्ञे क्षिप्र क्रौञ्चो महागिरि ॥ १८
तारको लोक अभवदन्धकार इवापर । बिनाश्य लोकालोक तमन्धकारमुमासुतः ॥ १९
कोटिभास्करसङ्काशो दिदीपे लीलयास्वया । हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रकः ॥ २०
गन्धमादनशैलोऽन्यो हेमकूटो महागिरि । सप्तधैवमभूत्क्रौञ्चो मायया दानवाधमः ॥ २१
ऐरावत पुण्डरीको वामन कुमुदोऽञ्जन । पुष्पदन्तस्सार्वभौम सुप्रतीको बभूव स ॥ २२
तारको मोहयन् स्कन्द चकार कदन महत् । क्षिप्र रुद्रकुमारोऽपि वज्रमादाय वीर्यवान् ॥ २३
चिच्छेद भूधरान्सप्त करिणोऽष्टौच संयुगे । द्रावयामास वेगेन तदद्भुतमिवाभवत् ॥ २४
आग्निमारुतमत्युग्रमाददाते वपुश्च तौ । रूपमर्द्धक्षणार्धेन स्कन्दोऽप्यशमयद्द्वया ॥ २५
कालाग्निकोटिसदृश क्रौञ्चोऽवचपदैश्वरिम् । प्रळयार्कसहस्राभ तारकोऽपि रणाजिरे ॥ २६
तेजोभिस्तयोर्व्याप्ता दिशोदश जगत्त्रयम् । चकम्पे पृथिवी सर्वा सागरा क्वथिताम्बराम् ॥ २७
त्रिमूर्त्यधिपवस्सर्वे मुनयस्सिद्धचारणा । भूताना पतयश्चैव कान्दिशीका प्रदुद्रुवु ॥ २८
ततश्शरवणोद्भव सर्वशत्रुनिवर्हणीम् । शक्ति मूर्तामिवात्मीया सर्वयत्नेन संयुगे ॥ २९
मुमोचाशु विनाशाय तारकस्य च मायिन । क्रौञ्चस्यच गिरेरीशकुमार कृत्तिनावर ॥ ३०
सा व्याप्य गगन शक्तिस्सर्वा अपिदिश क्षणात् । जाज्वल्यमाना प्रभया भासयन्ती रराजह ॥ ३१
रसनेव युगान्ताग्नेर्लेलिहाना जगत्त्रयम् । विकिरती स्फुलिङ्गानि घण्टा चामरमण्डिता ॥ ३२
कालाम्तघनसघात शतकोटिसमस्वना । पश्यता सर्वदेवाना नाशयन्ती भय हृद ॥ ३३
भित्वा दैत्यशिलाभोर कान्चन निमिषार्द्धत । ता मायामपि संहृत्य सहसा विश्वमोहिनीम् ॥ ३४
युगपत्तस्य सेना ता हतशिष्टामपि क्षणात् । मोहितान्वीरबाह्वादीन् क्रौञ्चान्तर्मायया हृती ॥ ३५

वह्निर्निनाय सहसा कार्तिकेयः सुरारिहा । कृतनिद्रास्समुत्तस्थुरिवैते प्रकृतिं गताः ॥ ३६
समुत्तस्थुः क्षणात्तेपि प्रत्याप्तश्चांगसंघयः । यदिमं पठते नित्यं शृणुतेवा नरोत्तमः ॥ ३७
तारकक्रौञ्चसंहार मथाध्यायं सुशोभनम् । तं दृष्ट्वा शत्रवस्तस्य पलायंते भयंगताः ॥ ३८
श्रुत्वैनं माधवो दैत्यं हिरण्यं बलशालिनम् । हिरण्याक्षं महाक्रूरं सोमकंचाजयद्रणे ॥ ३९
बलभद्रोऽजयच्छ्कूतमिदाक्रणमंडले । इन्द्रोऽपि दैत्यान् पापिष्ठान् बहूनायोधमध्यगान् ॥ ४०

इति परमशिवाप्त्या तारकं दैत्यमुग्रं गिरिमपि बहुमायं क्रौंचमन्यांश्च दैत्यान् ।
रणभुवि बहुलीलस्संजहारांबिकेयः सुरमुनिनरभूत्यै पश्यतामेव तेषाम् ॥ ४१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे चतुश्चत्वारिंशोऽध्यायः ॥

---

॥ अथ पंचचत्वारिंशोऽध्यायः ॥

॥ देवगिरिवासस्वीकारः ॥

यदा वक्षस्सुराराते: प्रविश्य क्रमनिर्गता । अप्राप्तरुधिरा जज्ञे तदा शब्दो जितांबुधिः ॥ १
विदिता न च केनापि तारकान्तर्गता नया । तदैव विदितास्सर्वैः यदाऽसौ दानवाधमः ॥ २
उत्प्लुत्योत्प्लुत्य वियति बहुधाऽसुरनायकः । पतित्वा विससर्जासून् तदद्भुतमिवाभवत् ॥ ३
तारकं निहतं दृष्ट्वा शक्र्या देवा महर्षयः । मुदा परमया देवं ते पुष्पैस्समवाकिरन् ॥ ४
ननृतुर्मुनयस्सर्वे जगुः जय जयेतिच । वीरबाहुश्च तेऽष्टौच नियुतंच गणाधिपाः ॥ ५
चतुःपञ्चाशदपि से सेनापतय एवच । कृताञ्जलिपुटाः भूत्वा निकटं प्रापुरीशितुः ॥ ६
अग्रेऽस्य तस्थुरमितः प्रसन्नेन्द्रियमानसाः । तांश्च प्रोवाच सुप्रीतः सर्वानालोक्य शांकरिः ॥ ७
यूयं याता महावीरा व्यसनं दनुजाधमैः । दैवादद्य विनिर्मुक्ताः कृच्छ्रात्स्वान्महत्तरात् ॥ ८
स्वस्था भवत हे यूयं कृपया मम विश्वपाः । ते प्रत्यूचुः स्थितेऽस्माकं त्वयि साक्षाज्जगत्पतौ ॥ ९
काक्षतिः काव्यथा स्वामिन् कानोहानिर्दयानिधे । त्वत्पादकमलेप्सूनां किंवा दुष्करमीश्वर ॥ १०
अभिनन्द्येति वदतः सर्वानपि दयानिधिः । आहूय वीरबाहुं तममरारि निषूदनः ॥ ११
दिव्यं पाशुपतं मुक्तं तारकेण दुरात्मना । गृहीतमात्महस्तेन सुब्रह्मण्यो हरात्मजः ॥ १२
प्रादादव्याहतं लोके तस्मै तद्वीरबाहवे । पुष्पवृष्टिरभूत्तत्र कल्पवृक्षसमुद्भवा ॥ १३
देवदुन्दुभयो नेदुः दिवि संकुलनिस्वनाः । ननृतुर्मुनयस्सिद्धाः जगुः किन्नरयोषितः ॥ १४
मेनिरे विबुधास्सेन्द्राः शूरपद्मासुरं हतम् । तंच सिंहमुखं युद्धे कुमारेणैव लीलया ॥ १५
तेषामपि च सन्तोषं समालोक्य जगत्पतिः । युद्धभूमिं परित्यज्य हिमवन्तं गिरिं ययौ ॥ १६
तैस्साकममरैस्सर्वैः गणवैरपि सेनया । तत्र स्थित्वौषधिप्रस्थे तंच मातामहं गिरिम् ॥ १७
संभाव्य सहसा भूयस्तमामन्त्र्य नगाधिपम् । प्राप देवगिरिं देवसेनानीररिमर्दनः ॥ १८
तस्मिन्नवसरे मातुरस्तंप्राप तदाज्ञया । अनुग्रहमसौ कर्तुमिच्छन् देवगिरिं प्रभुः ॥ १९
सेनां निवेशयामास चतुरंगसमाकुलाम् । महारथो रथात्तस्मादवतीर्य हरात्मजः ॥ २०
उवास रजनीं तत्र कृतसायाह्निकः कृती । कृतातिथ्यस्स गिरिणा मुदा परमया युतः ॥ २१
देवाश्च तत्र देवेशं शाङ्करिं सर्वसिद्धिदम् । इदमूचुरनुप्राप्य प्रणिपत्य सुरा विभुम् ॥ २१

देवाः —

भगवन्नत्र देवेश स्कन्द सेनापते प्रभो । स्थातव्यमत्र देवेन त्वया रात्रिरियं प्रभो ॥ २३
वयमिच्छाम देवेश त्वदर्चाविधिजं प्रियम् । अनुजानीहि भगवन् अनन्तमहिमालय ॥ २४
ततः प्रसन्नो भगवान् तेषां त्रिदिवपदां तदा । ददावनुज्ञां स्वार्चायां भक्तवश्यो हरात्मजः ॥ २५
ततस्ते ब्रह्मविष्ण्वाद्या देवास्सर्वे जगत्प्रभोः । आहूय विश्वकर्माणं अतिशिल्प मनोरमम् ॥ २६
पुरं परमशोभाढ्यं पुरुहूतध्वजाकुलम् । अत्र देवगिरावेव विधेहि शिवसूनवे ॥ २७
आवासयोग्यमत्यर्थं अद्रिकूट निभालयम् । गणानां गणमुख्यानामावासक्षममद्भुतम् ॥ २८
राजाधिराजसूनोश्च राजवेश्म महोच्छ्रितम् । विचित्रचित्रशोभाढ्यं विविधालयसंकुलम् ॥ २९
विश्वकर्मन्विधेह्यत्र क्षिप्रमद्यासदाज्ञया । इति शिल्पी सुरेन्द्राणां लब्धानुज्ञः क्षणार्धतः ॥ ३०
निर्ममे पुरमेशस्य कुमारस्य प्रियं कृती । विचित्रहेमप्राकार मणिगोपुरमण्डितम् ॥ ३१
सहस्रभौमप्रासादं सर्वरत्नैरलंकृतम् । वीथीशतसहस्राढ्यं वितानकुसुमोज्ज्वलम् ॥ ३२
वापीकूपतटाकाद्यैः मणिसोपानमण्डितैः । मण्डितं पुण्डरीकाभं चंडभानुसहस्रभम् ॥ ३३
प्रावेशयन्महासेनं देवा देवेशसंभवम् । सर्वानपि च तान्वीरान् वीरबाहुमुखानपि ॥ ३४
देवदुन्दुभिसन्नाद शङ्खशृंगारवाकुलम् । गृहान् प्रविविशुस्सर्वे यथार्हं गणपुङ्गवाः ॥ ३५
मरीचिः काश्यपोऽत्रिश्च वसिष्ठो वदतांवरः । विप्रैर्वेदागमार्थज्ञैः पूर्णकुम्भकरैः परैः ॥ ३६
कृत स्वस्त्ययनास्सर्वे संगीतसविधासुखम् । हरात्मजं सह ब्रह्मविष्ण्वाद्यैस्त्रिदशोत्तमैः ॥ ३७
तदर्हरत्नभवनं प्रावेशयदरिंदमम् । आरुह्य पादुके चित्रे वीरबाहुकराहृते ॥ ३८
प्रविवेश गृहं स्वामी प्रसन्नेनान्तरात्मना । अलंचकार रत्नाढ्यं सिंहासनमनुत्तमम् ॥ ३९
तत्र देवाधिदेवस्य कुमारो जगतां पतिः । तस्मिन् सिंहासनं चारु समासेदुपि विश्वपे ॥ ४०
सर्वेशे जगतां वन्द्ये सर्वेशतनये सुराः । संतोष्य विविधैः स्तोत्रैः विधृताञ्जलिमस्तकाः ॥ ४१
अर्चयामासुरैशानिं अर्घ्याद्यैरुपचारकैः । वीरबाहुमुखान्वीरान् तस्यावरणदेवताः ॥ ४२
समभ्यर्च्य यथान्यायं सच्छास्त्रोक्त विधानतः । मन्यमानाः स्वमात्मानं कृतार्था विबुधोत्तमाः ॥ ४३
ऊपुस्सन्तोषमतुलं संप्राप्य सविधे विभोः । कुमारोऽपि जगद्वन्द्यः शिवयोश्चित्रकृत्ययोः ॥ ४४
आचासमात्मनश्चक्रे तदा गिरिवरं गुहम् । तदादि जगतामादिः कैलासमिव शङ्करः ॥ ४५
शिवयोरतिचित्र कृत्ययोः तनुभूरार्तिनिवारकस्सताम् ।
गिरिमावसथं चकार तं गणपैर्देवगणैश्च सादरम् ॥ ४६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे पञ्चचत्वारिंशोऽध्यायः ॥

---

॥ अथ षट्चत्वारिंशोऽध्यायः ॥

तारकपत्नीनां अनुमरणम् ॥

तारके निहते क्रूरे सबले बलिना युधि । कुमारेणामरेड्येन कुलिशायुधशालिना ॥
ततस्तस्य प्रिया नारी साक्षादिव रतिस्स्वयम् । तन्महिष्यस्तथैवान्याः युद्धभूमिमुपेत्यताम् ॥
रुरुदुर्भृशदुःखार्ता कुररं इव सुस्वरम् । हा नाथ नाथ दैत्येन्द्र त्रैलोक्यामितविक्रम ॥

विहाय क्वाद्य त्रिदशाः किमु कारणमद्य हो । वयमद्यैव तरसा वह्निमार्गमरिन्दम ॥ ४
समभ्येत्य तवास्माकं भवामः परिचारिकाः । अथ देवा निरातङ्काः शूरपद्मो हतोऽधुना ॥ ५
अथ सिंहमुखश्चापि सानुजोऽयो हतो ध्रुवम् । यस्योरसि हरेश्चक्रं प्रत्यहन्यत निष्ठुरे ॥ ६
कथं बालस्य साशक्तिः तद्भित्त्वाऽसूनभक्षयत् । अस्त्रं ब्रह्मशिरो यस्मिन् कुण्ठिताभिद्दतादभूत् ॥ ७
वह्निवज्रमभूत्कुण्ठं तद्वक्षः शिशुना कथम् । इति नार्यो बहुविधं विलप्य करुणस्वनम् ॥ ८
स्वांगे तदङ्गमारोप्य परिधार्य समाकुलाः । हृदयं शोकसंततं अश्रुवर्षैरवाकिरन् ॥ ९
विरुदन्तीषु तास्वेवं तत्पत्नीष्वासुरात् पुरात् । महत्या सेनया साकमसुरेन्द्रो सुतोऽस्य वै ॥ १०
नाम्नाऽसुरेन्द्रस्संप्राप गजवाजिरथैरथी । सिंहास्यनगराद्दैवात् सिंहविक्रान्तविक्रमः ॥ ११
यदृच्छयाऽऽगतस्तूर्णं पितरं द्रष्टुमुत्सुकः । वार्तां निशम्य स पितुर्मध्ये मार्गे हताशयः ॥ १२
तरसा पुरमभ्येत्य छिन्नमूल इव द्रुमः । पपात विलपन् द्वारि परिदेवनवर्णकैः ॥ १३
एकवासा निरानन्दो मुक्तकेशोऽवनौ लुठन् । हा तात हाऽसुराधीश कगवो लोकतापक ॥ १४
अहो बतेदृशं लोके नाश्चर्यं विद्यते परम् । यद्वक्षो विष्णुचक्रेण भूषितं कुलिशेन च ॥ १५
एतत्स्तनंधयस्यैव शक्त्या भग्नं किमीदृशम् । युद्धभूमिं शनैरेत्य सोऽपि ज्वाल समाकुलाम् ॥ १६
निहतं पितरं दृष्ट्वा तारकं पतितं भुवि । विललाप भृशं ताक्षं मातृणां जनयञ्छुचम् ॥ १७
अथाग्निस्सर्वदेवानां सम्यक् शान्तिमुपागतः । अथेन्द्रस्य शची भार्या स्वर्गिणामप्सरोगणाः ॥ १८
सुखिनोऽद्य सुरास्सेन्द्राः स्वर्गस्तेषां भवेत् पुरम् । अथ सिंहमुखश्चापि शूरपद्मश्च दानवः ॥ १९
निहताशौ हतप्रायौ भग्नो बाहुश्च दक्षिणः । विलप्य बहुधा दीनः प्रसमीक्ष्य दिशो दश ॥ २०
हस्तेन हस्तं संपीड्य दष्टदन्तोष्ठभीषणः । क्रोधरक्तेक्षणश्चाश्वद्दिहस्य च पुनः पुनः ॥ २१
भवत्विति वदन् भूयो भूयो वक्षोल्लसत्करः । चितामारोप्य पितरं गन्धचन्दनसंभृताम् ॥ २२
मातश्च तत्र संस्कृत्य गौर्याद्याः पतिदेवताः । और्ध्वदैहिकमस्यासां समाप्य विधिपूर्वकम् ॥ २३
निर्गत्य सहसा सार्धं सेनया चतुरङ्गया । भूयो वीरमहेन्द्राख्यं पुरमापाशु खिन्नधीः ॥ २४
पितुर्ज्येष्ठस्य तत्राशु शूरपद्मस्य पादयोः । पतित्वा भृशदुःखार्तो रुरोद बहुधा लपन् ॥ २५
रुदन्तं दीनवदनं लुठन्तमवनीतले । तं समुत्थाप्य बाहुभ्यां शूरपद्मस्सुरेतरः ॥ २६
उरसा संपरिष्वज्य माभैर्माभैरिति ब्रुवन् । किमिदं किमिदंचेति पुनः पुनररिन्दमः ॥ २७
परिमृज्य तदाश्रूणि पृष्टवान् शोककारणम् । कथयामास तत्सर्वं तारकस्य सुतो रुदन् ॥ २८
ततस्स तस्य वचनं असुरेन्द्रस्य दानवः । शूरपद्मोऽशनेस्तुल्य भ्रातुर्वधमनाकुलम् ॥ २९
नैवाद्रियत संस्मृत्य तारकस्य पराक्रमम् । असद्विषयभूतानां अण्डानां येऽधिपास्सुराः ॥ ३०
नते संपति मद्भ्रातुरग्रे स्थातुमलं भुवि । हतस्संपति मद्भ्राता सकथं हरसूनुना ॥ ३१
श्रोतव्यमस्ति पुत्रत्वं भ्रान्तोऽसि किमु बालक । स्वप्ने दृष्टोऽसि किंबाल माभैर्माभैर्ममात्मज ॥ ३२
असुरेन्द्रः — भ्रान्तिर्नमे पितः स्वप्नो नानुवृत्तः श्रुतोऽपिवा ।
संस्कृत्य पितरं साक्षान्मातृभिर्निहतं युधि ॥ ३३
कृतौर्ध्वदेहिको भ्रातुरहं प्राप्तस्त्वान्तिकम् । हरसूनुभयात्तत्र क्षणार्धमपि न स्थितः ॥ ३४
मत्पितुर्यो न सन्देहस्त्वया कार्यः प्रभोऽधुना । शपेऽहं तव पादाब्जे सर्वथा दानवोत्तम ॥ ३५
तावन्मात्रमिदं नैव भवेदरिनिषूदन । अस्माकमागतं विद्धि भयं तेन महौजसा ॥ ३६

वचनमिदममुष्य श्रीशशंकु स्सूनोस्सुरपतिरवेत्य स्वान्तरे शूरपद्मः ।
भयहृतपुरुषेपः स्वासन सिंहपादात् हाहितिभुवि पतित्वा हारुरोदेति हेति ॥ ३७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकांडे षट्चत्वारिंशोऽध्यायः ॥

---

॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

राजनीतिः ॥

अथानुजोऽस्य सिंहास्यश्छिन्नमूल इव द्रुमः । केशान्विकीर्य बहुधा धूलिधूसर विग्रहः ॥ १
कराभ्यां तं समुत्थाप्य समाश्लिष्योरसा शुचा । बहुधा विलपन् दीनो हाहतास्मो विधे त्वया ॥ २
हरोदेति मुहुर्दीनो हाहेति मुखरो मुहुः । मन्त्रिणश्च ततस्सर्वे सेनानां पतयश्च ते ॥ ३
पुरोधसश्च विद्वांसश्चिरविदुस्तेऽपि सर्वशः । शिरः प्रहृत्य दुःखेन शूरपद्मोऽवनौ भृशम् ॥ ४
मुमूर्छे बहुधा दीना विलप्य चिरमाभ्ययम् । ततस्सर्वे समुत्थाप्य चिरमाश्वास्य मन्त्रिणः ॥ ५
पुनरुज्जीवयामासुश्शनकैरुपचारकैः । शूरपद्मो महापद्मो गतमूर्छो रुषान्वितः ॥ ६
दष्ट दन्ताधरोष्ठश्श्वसन् दिशस्सर्वाविलोकयन् । संघट्य दन्तैर्दन्तान् स्वान् करावास्फोटयत्क्षणम् ॥ ७
निर्दहन्निवनेत्राभ्यां जगत्सर्वं चराचरम् । विहस्य दष्टदन्तोष्ठो महाशनिसमस्वनः ॥ ८
बभाण बहु हुंकृत्य कंपयन्निव मेदिनीम् । शपे मम पदद्वन्द्वे शृण्वन्तु वचनं मम ॥ ९
नसंहरेयं तं युद्धे यदि स्कन्दं सबान्धवम् । अवश्यं तेन युद्धाग्रे हतस्त्यक्ष्याम्यसून् क्षणात् ॥ १०
सन्नद्धा महती सेना युद्धाय चतुरंगिणी । निर्गच्छतु पुराद्द्य नायकैर्दृढधन्विभिः ॥ ११
वादित्राणिच सर्वाणि घोषयन्त्वाज्ञया मम । भेर्यस्सन्ताडयन्त्वद्य निस्साणैर्डिण्डिमैस्सह ॥ १२
आदिश्यैवं पुनः क्रोधादभिस्विन्नाननमण्डलः । आहूय सर्वाग्रणिधीन् अवादीद्रोषभीषणः ॥ १३
समाह्वयन्तु युद्धाय तं सूनुं त्रिपुरद्विषः । अद्यैव तरसाभ्येत्य स्वकरवा मीति ममाज्ञया ॥ १४
बालं ममानुजं मुग्धं वञ्चयित्वा रणाङ्गणे । अवधीरमरैस्सार्धं भांविकेयोऽधमे रिपुः ॥ १५
कथं निद्रासि भुङ्क्षेत्थं मयि जीवति सानुजे । वदन्तु विबुधानद्य भवन्तो वचनं मम ॥ १६
अद्य प्रभृत्यहं युष्मदुदरे वर्धयामिच । उक्त्वैवं मन्मुखाद्यूयं यात भूयो ममान्तिकम् ॥ १७
दूतानिति समादिश्य पुनरप्यतिकोपनः । समादिदेश सहसा सूतं साध्वभ्यवेदिनम् ॥ १८
सहस्रखरसंयुक्तं सारथे रथमानय । काञ्चनं सर्वरत्नाढ्यं सर्वायुधसमन्वितम् ॥ १९
अभेद्यं कवचं लौहं वारबाणं च हाटकम् । शार्ङ्गाणिच धनूंष्यन्यान्यायुधानि महान्तिच ॥ २०
अक्षय्याविषुधी दिव्ये शरपूर्णे समानय । संप्रेरयत्यधिकृतस्तस्मिन्नसुरनायके ॥ २१
अमोघाख्यस्तदा मन्त्री मंत्रज्ञो मतिमान्वशी । राजानं प्रेक्ष्य सदसि नीतिशास्त्रविशारदः ॥ २२
प्रोवाच स्वस्तभीर्देव राजनीतिर्महत्तरा । दुर्विज्ञेया जनैः कामं पामरैरमरैरपि ॥ २३
शक्तित्रययुताराज्ञा धार्या सर्वसुखप्रदा । उत्साहशक्तिरेकान्या मन्त्रशक्तिर्महत्तरा ॥ २४
प्रभुशक्तिरनन्तान्या त्वयि सर्वत्र सर्वदा । जानासिच गुणान् षड्वं सन्धि विग्रहमेवच ॥ २५
यानमासनमन्यच्च द्वैधीभावं समाश्रयम् । अङ्गानि सप्त भोदेव स्वाम्यमात्यबलादिकम् ॥ २६
तस्मात्त्वाद्य वक्तव्यं नास्त्यन्यत्सारयाम्यहम् । इदानीं शृणु यावाहो नायं रुद्राक्षसंभवः ॥ २७

बालोऽनभिज्ञो बलवान् शक्तिपाणिररिन्दमः । वैरमस्ति न चास्माकं शङ्करे लोकशंकरे ॥ २८
स एव शंकरस्साक्षात् स्कन्दस्तस्यात्मजो यतः । यदृच्छयाऽऽगतेनैव तेन युद्धं तवानुजः ॥ २९
अनभिज्ञश्चकाराशु निधनंप्राप संयुगे । अथवा नाकिभिः शंभुरसद्वैरिभिरर्थितः ॥ ३०
बालकं प्रेषयामास सवूपास्योसदादिभिः । अतःपरं मतेनात्र वैरं कार्यं त्वयाऽधुना ॥ ३१
इत्यमोघं वचः श्रुत्वा राजाऽमोघस्य धीमतः । शर्मं जगाम शनकै राज्ञोच्चैवं समात्मनि ॥ ३२
भूयोऽप्यासनमारुह्य तूर्णीभावमुपागतः । तस्थिवानासने रम्ये महस्यसुरनायकः ॥ ३३
शूरपद्मो वकं काकं मयूरं श्येनमेव च । चक्रवाकं शुकश्चान्यानेतवादीन्विचक्षणः ॥ ३४
समादिदेश संभाव्य वस्त्राभरण भोजनैः । कथयामास तेषांच कर्णे रहसि पार्थिवः ॥ ३५
यूयं गत्वा महात्मानस्सुब्रह्मण्यान्तिकं क्षणात् । स्वनामसदृशै रूपैस्सर्वैवै कामरूपिणः ॥ ३६
हरात्मजस्य किंरूपं किंवीर्यः कीदृशी मतिः । उद्योगोऽस्य पुनः कुत्र क्वा जिगमिषाऽस्यवै ॥ ३७
कियत्या सेनया साकं सर्वदा पर्युपास्यते । केवीरास्तेच किंरूपाः केवा तत्र महारथाः ॥ ३८
दिव्यैरस्त्रैरुपेताः के मंत्रालोचनतत्पराः । केऽस्यन्तरङ्गाः प्रभवः केषांवाच शृणोति सः ॥ ३९
गुणशक्तिश्चिवर्गाश्च परामर्शेषु कौशलम् । प्रस्थानश्च किमुद्दिश्य तत्सेनानामसागरे ॥ ४०
विचार्य सुचिरं सम्यक् पुनरायात सत्तमाः । ४०½

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे सप्तचत्वारिंशोऽध्यायः ॥

---

॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

श्री स्कन्देन श्री केदार श्री काशी श्रीशैल श्रीविरुपाक्ष श्रीकाळहस्ति श्रीवेङ्कटाचल
श्रीकाञ्ची श्रीतिरुवेण्णैनल्लूर् श्री अरुणाचल श्री वृद्धाचल श्री चिदम्बर
श्री मायूर श्री कावेरीसंगमस्थल श्री चेङ्गनूर इत्यादि
पुण्यस्थलयात्रा तत्तन्मूर्तिदर्शनं च ॥

चाराताविश्य भूयोऽपि सर्वैर्मन्त्रिभिरात्मवान् । उवास वासवारातितनुजं चिन्तयन् हृतम् ॥ १
ततो रात्र्यां व्यतीतायां तस्यां देवगिरौ सुधीः । देवैस्सह हरिब्रह्मप्रमुखैर्मुनि योगिभिः ।
महत्या सेनया साकं सूर्ये समुदयत्यसौ ॥ २
त्यक्त्वा देवगिरिं कुञ्जात् प्रियमावासमात्मनः । नभोगतिपथं प्राप्य नभोगविमनोजव ॥ ३
अगस्त्य चरितामाशामाशापालैररिन्दमः । प्राप्य देवगिरेस्तस्मात् स्थानानि परमेशितुः ॥ ४
अनुग्रहाय लोकानां कल्पितानि हरेणवै । भावपूर्णेन मनसा षकेऽसौ लोचनाऽतिथिम् ॥ ५
प्रथमं तत्र केदारे केदारं शिवयोश्शुभम् । पीत्वा यत्रोदकं जन्तुर्मोक्षमाप्नमनादरम् ॥ ६
नमातुः स्तन्यपानानां अभिज्ञो भवति ध्रुवम् । तत्र केदारनाथाख्यं लिङ्गमूर्तिं सदाशिवम् ॥ ७
पितरं जगतां साक्षात् आत्मनश्च जगद्गुरुम् । पूजयित्वाथ मनसा साकं मात्रा जगत्प्रभुम् ॥ ८
संप्राप काशीमीशस्य प्रकाशात्तेन काशिकाम् । श्रीपर्वतंच देवस्य विरूपाक्षमनुत्तमम् ॥ ९
श्रीमद्दक्षिणकैलास सुवर्णमुखरी तटे । नित्यं स्वाप्रासमहितं वेङ्कटाचलमद्भुतम् ॥ १०

॥ अथ पञ्चाशोऽध्यायः ॥

॥ श्री स्कन्दस्य शेन्तीपुर गमनम् ॥

ततस्ते मत्स्यरूपास्ते सर्वे मुनिकुमारकाः । तटाके शरवणान्तश्चेरुश्शफरलीलया ॥ १
इन्द्रः — एवं चिरगते काले कुमारत्वं यदा शम्भुः । शम्भोर्दयानिधेस्साक्षाच्छर्वाण्यां त्वं जगद्गुरुः ॥ २
तदा वीरजगन्माता वात्सल्यात् त्वा जगद्गुरो । अथापयत् स्तन्यमीशा साक्षादमृतमुत्तमम् ॥ ३
पिबति त्वयि देवेश किञ्चिन्तज्जलाशये । अवस्कन्दं दयावत्यास्स्तन्यं तत् मत्स्यरूपिणः ॥ ४
पपुस्ते तेन सहसा भूयः स्वं रूपमाप्नुवन् । संप्राप्य रूपमात्मीयं सर्वे ते मुनिपुत्रकाः ॥ ५
तत्रासीनं महादेवं त्वामंकेन्यस्य चांबया । तं प्रणम्य मुनिश्रेष्ठाः स्तवैरप्रीणयञ्छिवम् ॥ ६
अविमुक्तात्मसविधामशेषजननीमुमाम् । तानालोक्य सहस्रार्क शतकोटि समद्युतिः ॥ ७
शशास शास्ता सर्वेषामविलंघित शासनः । पराशर मुनेः पुत्रास्त्वकशापा ममाज्ञया ॥ ८
तपश्चरध्वमासाद्य परपर्वत शेखरम् । वर्तध्वं तत्र ते यूयं यावदागमनं सुरेः ॥ ९
सुब्रह्मण्यस्य देवस्य पादपद्मस्य सादरम् । तदा तमेत्य शरणं श्रेयः परमवाप्स्यथ ॥ १०
इतीशाज्ञां गतास्त्वेते मुनयस्संशितव्रताः । त्वां समासाद्य देवेश कृतकृत्या नसंशयः ॥ ११
इतीन्द्रस्य श्रुतौ कुर्वन् वचनं रुद्रनन्दनः । अनुजग्राह तत्रादीनमराणामधीश्वरः ॥ १२
साधु साध्विति संभाष्य सर्वानेव मुनीश्वरान् । सहैवागमनं तेषां अनुमेने तदात्मना ॥ १३
सर्वैस्सह विनिर्गत्य तारकारिररिन्दमः । श्रीमच्छेन्तिपुरं प्राप प्रताप विधुतासुरः ॥ १४
तत्रापि निर्मितं तस्य भवनं विश्वकर्मणा । विचित्रं महदत्युच्च रत्नगोपुरमण्डितम् ॥ १५
तत्प्रविश्य पुरं शेन्तिमध्यवर्ति गृहं महत् । रुद्रपुत्रस्तदा भेजे रत्नसिंहासनं महत् ॥ १६
यस्मौ सिंहासने तत्र साक्षादिव महेश्वरः । हाहाहूहूस्तुंबुरुश्च विश्वावसुरपि प्रभुम् ॥ १७
गन्धर्वाः किन्नराश्चान्ये वैणिका जग्मुरादरात् । आजन्मकर्मवृत्तान्तमतिदैविकमानुषम् ॥ १८
ववर्षुः पुष्पवर्षाणि महाविष्णुबलार्दनाः । असेविपुश्च मरुतश्चामरैस्सततशाङ्करिम् ॥ १९
अग्निश्च वरुणश्चोभौ छत्रं दधतुरद्भुतम् । व्यजनानि विचित्राणि समादाय सिषेविरे ॥ २०
अन्ये दिगीश्वरास्तत्र वीरंबाहुररिन्दमः । खड्गं कनकरत्नाढ्यं विचित्रमणिसत्सरुम् ॥ २१
बाहुभ्यां संपरिष्वज्य पट्टकोशमसेवत । अन्येऽष्टौ गणमुख्यानां नियुतं पृतनाधिपाः ॥ २२
अष्टोत्तरममी सर्वे यथायोग्यं सिषेविरे । षड्वक्त्रं द्वादशभुजं त्रिषण्णयन पंकजम् ॥ २३
स्मेरवक्त्रमुदारांगं विचित्र मकुटोज्वलम् । विराजमानं रत्नाढ्ये दिव्ये सिंहासनोत्तमे ॥ २४
मुनयस्तं समालोक्य चाक्षिमत्फलमापिरे । प्रसन्नो देवदेवेशस्तदा शरवणोद्भवः ॥ २५
समालोक्याह विबुधान् हरिब्रह्ममुखान् स्मयन् । श्रीस्कन्दः - असुरास्ते कियंतस्ते किंरूपाः कस्यतेसुताः
तेषां मुख्यतमः कोऽत्र ब्रूत सर्वं यथातथम् । श्रुत्वेति वचनं तस्य कुमारस्य, सुरोत्तमाः ॥ २७
परस्परं समालोच्य हरिणा ब्रह्मणा सह । बृहस्पतिं सवस्यूचुः कथयेति गिरांपतिम् ॥ २८
कुमारायास्मदीशाय पृच्छते शरजन्मने । वदत्स्वेवं सुरेन्द्रेषु नमस्कृत्य कृताञ्जलिः ॥ २९
वृत्तान्तमखिलं तेषां विनयेन बृहस्पतिः । असुराणां सुरेन्द्रार्तिहराय गुरवे नमः ॥ ३०
गुहायाकथयत्सर्वं छद्मुहस्याय योगिनाम् । सूतः – अयंतु संभवाख्योहि कांडो वेदार्थसंमितः ॥ ३१
कथितः श्रेयसामेष निदानं विदुषां सताम् ॥ ३१½

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे संभवकाण्डे पञ्चाशोऽध्यायः ॥

संभवकाण्डः समाप्तः ॥

श्रीरामजयम् ॥

श्री महागुरुभ्यो नमः ॥ श्री विघ्नेश्वराय नमः ॥ अविघ्नमस्तु ॥

श्री शरवणोद्भवाय नमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

# ॥ आसुरकाण्ड प्रारम्भः ॥



॥ आसुरकाण्ड प्रारम्भ मङ्गल श्लोकाः ॥

ओं शिवं शिवप्रियन्देवं देवानामादिदैवतम् । भजेहं विघ्नराजन्तं विघ्नहन्तारमव्ययम् ॥
कविं कवीनामीशानं गणानां गणनायकम् । वक्रतुण्डम्महाकायं विघ्नेशन्तमहम्भजे ॥
कार्तिकेयम्महासेनं कुमारं पुष्करस्रजम् । नमामि केकीकण्ठस्थ किङ्किणीनादमेदुरम् ॥

॥ अथ प्रथमोऽध्यायः ॥

शूरपद्मादीनां उत्पत्तिः ॥

ऋषयः —

भगवन् सूत सर्वज्ञ पुराणार्थविशारद । शूरस्य सिंहवक्त्रस्य तारकस्य महौजसः ॥ १
अन्येषामपि दैत्यानां उत्पत्तिञ्च तथाक्रियाम् । विस्तरेण वदास्माकं शुश्रूषा भूयसी च नः ॥ २

सूतः —

शृणुध्वमृषयस्सर्वे कुमारायामितौजसे । उक्तं गौरीपतिना पूर्वं तद्वो वक्ष्याम्यनुक्रमात् ॥ ३
अस्ति दैत्यगुरुः कश्चित् काश्यपाख्यस्तपोधनः । ब्रह्मसूनुर्जितक्रोधः सत्यवाग्धर्मतत्परः ॥ ४
सतु दैत्यान् बहून् पश्च षष्टिकोटि मितान् सह । दित्यां हि जनयामास महावीर्य पराक्रमान् ॥ ५
तेषामधिपतिश्श्रीमानसुरेन्द्रो महाबलः । सतु मङ्गलकेशिन्या युक्तः पुत्रीमजीजनत् ॥ ६
सुरसाख्यामसादृश्यां सर्वावयव सुन्दरीम् । सा तु दैत्यगुरुं शुक्रं पर्युपासदन्तिके ॥ ७
शुक्रस्तु भगवांस्तस्यै विद्यानानाविधान्तदा । उपदिश्य तथा नाम मायेति च चकार ह ॥ ८
देवतानां समृद्धिञ्च दैत्यानां संक्षयन्तथा । दृष्ट्वा तु मनसा स्मृत्वा शैलादेर्ब्रह्मणोऽध्वरे ॥ ९
शाप सप्तसप्तमनं देवतानां तदोशनाः । विचार्यागामि कार्यञ्च तामाह वचनं पुनः ॥ १०
मायेच देवैर्ऋषिभिः नाशिताश्च महासुराः । त्वत्पिताचासुरेन्द्रोयं नितरां खिन्नमानसः ॥ ११
त्वयेदानीं प्रतिष्ठाप्य रक्षणीयाश्च दानवाः । तस्मात्त्वं काश्यपं गत्वा पुत्रानुत्पाद्य नाम च ॥ १२
कृत्वा तेषां समृद्ध्यर्थं यागञ्चैव यतस्तथा । उपदिश्य सुराणाञ्च क्षयार्थन्त्वन्तपद्धर ॥ १३
तथेत्युक्त्वा च सा भूयः पितरञ्च व्यजिज्ञिपत् । निर्ययौ च तदुक्तेन साक्षान्मायाऽभवेच्च सा ॥ १४
यैर्यैस्संप्रेक्षिताचासौ तांस्तान् मोहयत्यमान । पथिहन्ता तदानीं सा काश्यपो यत्रतिष्ठति ॥ १५
तत्र गत्वा महोद्यानमण्टपाञ्चित्रमण्डितान् । वापीकूपांल्लतावृक्षानारामान् पुष्पशालिनः ॥ १६
क्रीडा पर्वत संघञ्च मायया निर्ममेक्षणात् । एतामर्वं तद्दृष्ट्वा ऋषिः काश्यपनामकः ॥ १७
किमिदं चित्रमाश्चर्यं मण्टपादि कृतं तया । ब्रह्मणा विष्णुना वाथ देवेनान्येन वा पुनः ॥ १८

स्वामिपुष्करणीतीरे विष्ण्वादिविबुधार्चितम् । श्रीमद्वटाटवीदेवं ऊर्ध्वताण्डव पण्डितम् ॥ ११
समाराध्यैव मनसा प्राप काञ्चीं प्रमेणसः । यत्र देवः स्वयं साक्षात् विष्णुमङ्गलपेशलम् ॥ १२
करोति सततं रक्षा ताण्डवं सकलात्मनाम् । तत्र देवीं समाराध्य पराकाशविलासिकाम् ॥ १३
वेदैकाम्रतरोर्मूले विश्वाधीशमजं ध्रुवम् । समाराध्य स्वयं साक्षात् सर्वलोकेश्वरेश्वरम् ॥ १४
कुमारगोष्ठमपर तत्राप्यावासमात्मनः । तत्र स्थानानि सर्वाणि शम्भोरमिततेजसः ॥ १५
भक्त्याऽऽराध्यच लिङ्गानि प्रसन्नेनान्तरात्मना । अरुणाचलमासाद्य तत्राप्येवमुपाचरत् ॥ १६
ततो जगाम सहसा पेण्णानद्गुरमात्मवान् । वृद्धाचलं समासाद्य चिदम्बरमलोकयत् ॥ १७
मन्यानिच शिवस्थानान्यवलोक्य नमस्स्थितः । तत्र मायूरकं रम्य गत्वा स्नात्वाच संगमे ॥ १८
उत्तरेणच कावेर्या मण्यारख्यामाप चापगाम् । तत्र , चास्तमितस्सूर्यः तिमिरैरावृतादिशः ॥ १९
नभस्तारामिरभितस्स्फुरिताभिस्समावृतम् । ऐन्द्रीमलंचकाराशु ककुभं कुमुदप्रियः ॥ २०
तमांसिच निरस्यात्मकिरणै रजनीकरः । मणिनद्यास्तटेऽत्रैव देवैस्सह शिखिध्वजः ॥ २१
इयेषवस्तु तां रात्रिं रात्रिं चरविनाशनः । त्वष्टात्रापि पुरीं रम्यां निर्ममेऽस्यात्वया शुभाम् ॥ २२
कुमारपुरमित्येव विश्रुत भुवनत्रये । तन्मध्ये राजभवन नवरत्न विचित्रितम् ॥ २३
तदध्युवास रजनीं भवतं भवनन्दनः । सर्वानपि सुराध्यायमनुमेने गृहान् प्रति ॥ २४
तेऽपि जग्मुर्यथा स्व स्व शिबिरं तदनुज्ञया । इन्द्रेतु शिबिर प्राप्य शयन समुपेयुषि ॥ २५
तदा कापापुरोद्यान देवता रजनीमुखे । निक्षिप्त माण्डमिन्द्रेण भूषणानां पुराकिल ॥ २६
समर्पितवती भूयः सन्निधौ रहसिस्वयम् । मघवानपि तद्दत्त माण्डमाभरणस्य तत् ॥ २७
उद्घाट्य तत्र प्रथम शच्या आलोक्य भूषणम् । सस्मार ता सहस्राक्षो विरहेणाकुलेन्द्रिय. ॥ २८
स्मरन्त्येवहि सर्वेऽपि दर्शनात् सहकारिणः । कामस्तु लब्धावसरस्ततश्चेन्द्र शरैश्शितैः ॥ २९.
कौसुमैरपि कन्दर्पो विदर्पमकरोद्धरिम् ॥ ३०
सुरपतिरतिक्षिप्रो भूषणानीह कामी परिजन वनितानां हस्त आदाय भूय. ।
निजजनपरिवारा नीत पुष्पाभिक्लृप्ते क्षणमपि निशिकल्प तद्वियोगाग्निनाय ॥ ३१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे अष्टचत्वारिंशोऽध्यायः ॥

---

॥ अथ एकोनपंचाशोऽध्यायः ॥

॥ स्कन्द पराचल गमनम् ,पराशर पुत्राणाम् शापात् मोक्षणं च ॥

उद्यानेषु तटाकेषु न लेभे सञ्चरन्नपि । चिरं शर्म हरिर्निद्रां इन्द्राण्या विरहाग्निना ॥ १
पल्लवास्तरणेष्वेव सर्वा तां रजनीं हरिः । निनाय युगसाहस्रकल्पां अल्पा तदा निशाम् ॥ २
कथं कथं चिन्मघवान् प्रभाते पुनरेव सः । संस्तभ्य धाम्नात्मानं मनसैव महामनाः ॥ ३
विक्रियामपि देहेऽखिलमदनायुधसंभवाम् । आच्छाद्य चन्दनैरेव सकर्पूरैः सकुङ्कुमैः ॥ ४
अथ देवैस्सहस्राक्ष. पुनस्स्कन्दाङ्घ्रिपङ्कजम् । सेवारसमना हृदस्सोमाप परया मुदा ॥ ५
कुमारोऽपि ततः कल्ये कृतपूर्वाह्णिकक्रियः । मातापित्रोः पदद्वन्द्व समाराधन तत्परः ॥ ६
स्वयमानर्च पितरं लिङ्गमूर्तिं सदाशिवम् । भक्तिपूर्णेन मनसा देवींच समुपाचरत् ॥ ७

तत्र विष्णुमुखा देवास्सेन्द्रास्सब्रह्मकास्तदा । साध्यैश्च विश्वैरपि तैस्सिद्धविद्याधरोरगैः ॥ ८
परिचक्रुर्दिशाचार्याः पुष्पसंभार तत्पराः । भक्त्या परमया तत्र श्रद्धया विधिपूर्वकम् ॥ ९
महाविभवविस्तारैः कृतपाशुपतव्रते । कुमारेऽर्चति तस्मिन् स्वं पितामाद्यासहोमया ॥ १०
प्रससाद गणेन्द्रैस्स्वैरधिष्ठाय महावृषम् । अनुजग्राह सेनान्यमस्त्रेण स्वेन शङ्करः ॥ ११
अन्यैरपि महास्त्रैस्स्वै रौद्र पाशुपतादिभिः । अन्तर्हितोऽथ भगवानंबया सह शंकरः ॥ १२
ततः प्रणम्य देवाय संप्रार्थ्य सुर सैन्यपः । रथमारुह्य सहसा देवैस्सह जगत्पतिः ॥ १३
निर्जगाम पुरात्तस्मात् ब्रह्मणा विष्णुना विभुः । प्रस्थानसमये चापि पुनरन्यानि शूलिनः ॥ १४
स्थानानि सुमनोज्ञानि चक्षुषाऽऽलोकयन्पितुः । गच्छंस्तदन्तरा क्वापि मरुभूमिमवाप सः ॥ १५
सातीव परुषा सर्वैरगम्या दावसन्निभा । तस्यां रवेरपि करास्सूर्यकान्त शिलोपरि ॥ १६
ज्वालाकणान्विमुञ्चन्तो विमुंचन्ति ततोऽधिकम् । शीतांशोरपि रात्र्यन्ते हैमनस्यापि रश्मयः ॥ १७
तां नैव शीतलां कर्तुं समर्थाः कालयापुनः । तत्र ये भूरुहारूढास्तुहिनप्रभूतयश्च ते ॥ १८
प्राप्नुवन्त्यपि शुचेरार्तिं भजन्ति यत किं पुनः । फणामणीनां दन्दशूकसर्पाणामतलौकसाम् ॥ १९
स्फुरितायां सदा यस्यां दृश्यते यत्र सन्ततम् । पशवः पक्षिणस्तत्र येचरन्ति यदृच्छया ॥ २०
अन्यतो यान्ति ते सर्वे क्षणप्लुष्टांग सम्पदः । सापि भूस्समये तस्मिन् अनुगृह्णति शांकरी ॥ २१
क्षुपदा सर्वजन्तूनां जाता जांगलसन्निभा । मरुभूमिमतीत्यैनां महादेवांग संभवः ॥ २२
संप्राप तरसा देवः परपर्वतमद्रिपम् । तत्रात्र पर्वते रम्ये मुनयश्च महौजसः ॥ २३
ततोऽनन्तश्च नन्दीच चतुर्मुख समादयः । चक्रपाणिश्च मालीच वदेते तपतां वराः ॥ २४
रुद्रांग संभवं साक्षात् जगद्द्रावणोद्यतम् । प्रणेमुरग्रतो दूरे बहुमानेन सादरम् ॥ २५
अत्रान्तरेऽमी देवाय प्रणिपत्य कृताञ्जलिः । तेषामिन्द्रस्तदेशाय कथयामास पौर्विकम् ॥ २६
वृत्तान्तं सर्वमानम्य कुमारायामराधिपः । इन्द्रः — एते व्यासात्मजाः पूर्वं पराशर मुनेस्सुताः ॥ २७
बुद्धिभ्रंशाच्छराचणे मत्स्यान् सरसि बालिशाः । गृहीत्वाऽऽश्वेषु सहसा रज्जुभीतानुपाहरन् ॥ २८
दृष्ट्वैवं खेलतः पुत्रान् पिता रोषवशंगतः । शशाप मत्स्या भवत यूयं पुत्रा वृथाधमाः ॥ २९
येन खेलत हा मोहाद् अत्र मत्स्यविहिंसकाः । इति शप्ताः ततस्ताः पित्रा साक्षात् तपस्विना ॥ ३०
प्रणम्य मे भयाविष्टाः पितरं मुनिपुङ्गवम् । धृताञ्जलिकरा मूर्ध्नि पप्रच्छुः शापमोचनम् ॥ ३१
तान् प्रत्युवाच स मुनिः पुत्रान् शापभयाकुलान् । यदा पर्वतराजेन्द्र पुत्रीतनयं ममात्मजाः ॥ ३२
युष्माभिः पीयमे संघस्तशापं विमुंचत ॥ ३३

इति मुनिप्रवरेऽत्र पराशरे समनुगृह्य गते मुनिपुत्रकाः ।
सपदि मिमतनुं समुपोज्झने निमिषदृष्टि पर्युष्य तदागमन् ॥ ३४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
संभवकाण्डे एकोनपंचाशोऽध्यायः ॥

इति चिन्तापरे तस्मिन् ऋषौ सर्वत्र पश्यति । ददृशे पर्वताग्रे सा रमणीयाङ्गयष्टिका ॥ १९
माया मन्मथ सर्वस्व निधिभूता तदाक्षणात् । उपसृत्य समीपं तामपश्यत् ऋषिसत्तमः ॥ २०
उवाच वचनं स्निग्धं चाटुयुक्तं रसार्थवत् । का त्वमेकाकिनी नारी किन्नाम कस्य वासिता ॥ २१
कोद्देशः कागतावाद्य वद सर्वाङ्गसुन्दरि । माया – अहमेकाकिनी नारी तिष्ठाम्यत्र च पर्वते ॥ २२
तपस्विनामिदं युक्तं किन्त्वया वचनं मम । मेरोस्समीपं सुकाशाऽहं गङ्गां स्नातुमिहागता ॥ २३
तिष्ठ त्वमत्र गच्छामि यन्मे मनसि वर्तते ।
काश्यपः — आनीयते त्वत्र गङ्गा स्थानानि च महान्त्यपि ॥ २४
तीर्थानि च तथा देवानद्भुतञ्चाममद्भुयम् । ददामि पुत्रान् दिव्यस्त्री सहस्रपरिचारिकाः ॥ २५
अङ्गीकुरु च मामत्र रहस्स्थाने मनोहरे । इत्युक्ता साऽतिचित्राङ्गी सायमानमुखाम्बुजा ॥ २६
अन्तर्हिता तदाक्षिप्रादचिरांशुलतेव सा । तस्यामन्तर्हितायां तु काश्यपस्तपतां वरः ॥ २७
पपात भूमावचिरान्मोहासक्तमना भृशम् । विललाप सुदुःखार्तो यथा कामहतो जनः ॥ २८
तादृशं तमृषिं दृष्ट्वा तत्रैवाविरभूत्क्षणात् । आविर्भूतां तु तां दृष्ट्वा मोहेनापगतो ह्ययम् ॥ २९
ननर्त बहुधा चैव स्मयमानमुखाम्बुजः । अकिञ्चनो यथा द्रव्यं लब्ध्वात्यन्तं सुखी भवेत् ॥ ३०
प्रणनाम च मायायाः पादयोः प्रणयान्वितः । सातु तं वचनं प्राह प्रेक्ष्य कामातुरं तदा ॥ ३१
काश्यपाद्य मया प्राप्तं यादृशं रूपमद्भुतम् । ग्रहीतुं तादृशं रूपं समर्थश्चेद्रमाम्यहम् ॥ ३२
इत्युक्तान्तादृशीं रम्यां काश्यपो योगिनां वरः । गृहीत्वा कामरूपं तां रमयामास मण्टपे ॥ ३३
कस्मिंश्चिद्विजने रम्ये भूयो भूयस्सुसादितः । जातस्तदानीं शूराख्यो दैत्यानामग्रणीर्महान् ॥ ३४
यामिन्याः "प्रथमे यामे" दैतेयानाञ्च वाहिनी । त्रिंशत्सहस्रं तु तदा तयोः स्वेदजलेन सा ॥ ३५
पुनश्च मण्टपे तस्मिन् सैंहं रूपञ्च तावुभौ । रमयामासतुः कृत्वा सिंहवक्त्रस्तदाभवत् ॥ ३६
सहस्रवक्त्रनिचयो द्विसहस्र करस्तथा । बभूव वाहिनी चान्या चत्वारिंशन्मिता तदा ॥ ३७
सहस्राणां महाघोरा तदङ्गस्वेदबिन्दुषु । सिंहवक्त्रा तथान्यस्मिन् मण्टपे चित्रमण्डिते ॥ ३८
तृतीये प्रहरे गत्वा गजरूपेण तावुभौ । रमनाञ्चक्रतुर्भूयस्तदा गजमुखोऽत्र वै ॥ ३९
तारको नाम दैत्येन्द्रस्समजायत पेशलः । चत्वारिंशत्सहस्रान्या वाहिनी गजरूपिणी ॥ ४०
बभूवमण्टपेन्यस्मिन् चतुर्थे प्रहरे च तौ । अजरूपं गृहीत्वातु क्रीडयामासतुः पुनः ॥ ४१
तदानीमजवक्त्राख्या बभूवासुरकन्यका । त्रिंशत्सहस्र गणिता वाहिन्यप्यजरूपिणी ॥ ४२
स्वेदबिन्दूद् सुजननमाप भीमाच साश्रवै । मण्टपे मण्टपे भूयः प्रभाते चक्रतुस्तदा ॥ ४३
सुरतं रूपमास्थाय तरक्षोऽस्तु तथाऽत्र तौ । व्याघ्राश्च मृगगो ऋक्ष वराहाणान्तथैव च ॥ ४४
लुलाय वृकखड्गानां रासभोष्ट्र वनौकसाम् । गोमायोश्चैवमादीनां मृगाणां रूपमास्थितौ ॥ ४५
तदा पत्तिसहस्राणां वाहिनी समजायत । तत्तद्रूपेण तान्प्रेक्ष्य द्विलक्षगणितांस्तदा ॥ ४६
असुरान् शूरसिंहास्य तारकानपि कश्यपा । विस्मयोत्फुल्ल हृदयो रूपञ्चप्राहतुः क्षणात् ॥ ४७
तदा तु पितरौ मत्वा शूरपद्मा महासुरः । किं कृत्यं पितरस्माकं ब्रूहि सर्वं यथा तथा ॥ ४८
मातुश्च सम्मतं किं वाचैव मुक्त्वाऽत्र संस्थितः । काश्यपः - शृण्वन्तु पुत्रास्सर्वेऽपि यन्मे मनसि वर्तते ॥
तपएव सदाकार्यं युष्माभिर्विजितेन्द्रियैः । तपसा देवताः पूर्वं देवतात्वं प्रपेदिरे ॥ ५०
ऋषयश्च तथा केचिज्जीवन्मुक्तिं गताः किल । त्रिपदार्थस्य विज्ञानं संपाद्य सर्वदाऽनघाः ॥ ५१
विज्ञानेन शिवप्राप्तिः लभ्या च सुखरूपिणी । धर्मोऽपि सर्वदा कार्यः पापविच्छित्तये तथा ॥ ५२

धर्मेण केचित्तपयस्तल्लोकं लेभिरे पुरा । कृपाच सर्वभूतेषु नित्यं कार्या विचक्षणैः ॥ ५३
एवमुक्तगुणोपेतैः युष्माभिर्वीतकिल्बिषैः । शम्भोरनुग्रहाच्चापि प्राप्यते नात्रसंशयः ॥ ५४
इहचामुत्र चाप्नोति सिद्धिं शम्भोरनुग्रहात् ॥ ५५ ॥

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्याय. ॥

शूरपद्मादीना तपश्चरणम् ॥

काश्यपः —

तपसा ब्रह्मविष्णिवन्द्र प्रमुखाश्च सुरोत्तमाः । शिवस्यानुग्रहं प्राप्य स्वं स्वं स्थानं ववापिरे ॥ १
ऋषयश्च पुरा केचित् तपः कृत्वा सुदुश्चरम् । शम्भोरनुग्रह प्राप्य स्वाभीष्ट च ध्रुवं गताः ॥ २
तस्मात्सर्वप्रयत्नेन युष्मानिमत्तपसा शिवम् । तोषयित्वात्र लब्धव्या भुक्तिर्मुक्तिपरैस्तव ॥ ३
अस्ति चात्र कथा पुण्या युष्माकं तां ब्रवीम्यहम् । पूर्वं तपः प्रभावेन कुत्सः कन्यां मृतामपि ॥ ४
पुनस्सञ्जीवयामास स्वापात् बुद्धामिव क्षणात् । तथान्यश्च गजस्यापि देवत्वं दत्तवान् खलु ॥ ५
तथा तपोमहिम्नैव मृकण्डु चाप्यजीजनत् । मृकण्डुश्च तथा पुत्रं ब्रह्मविष्णिवन्द्र पूजितम् ॥ ६
मार्कण्डेयं तु तपसा लब्धवान् परया मुदा । मार्कण्डेयस्तु तपसा प्रसाद्य परमेश्वरम् ॥ ७
मृत्युमप्यजयन्नित्यं पदमप्याप्तवान् खलु । इत्युक्त्वा मुनिवर्योऽयं तूष्णींभावं जगामहि ॥ ८
ततः प्रोवाच वचन मायापुत्रानवेक्ष्य च । यदाह वचनं युष्मत्पिता तत्तपतां वरः ॥ ९
महतां योगिनामेव युष्माक तद्वदाम्यहम् । ऐश्वर्यं शौर्यमायुश्च तथा कीर्तिः प्रथीयसी ॥ १०
प्रभुत्वमार्जनीयंवै युष्माभि. पौरुषार्थये. । वटद्वीपमितिख्यातमुदग्भागे क्षितेर्महत् ॥ ११
तत्र गत्वा वीरयागन्तु कुरुतेश्वर तुष्टये । अपेक्षितानि द्रव्याणि तानि तस्य ददाम्यहम् ॥ १२
तत्र प्रसन्ने गौरीशे लभ्यतां यन्मयोदितम् । इत्युक्त्वा वचनं पुत्रान् माया तेषां पुनश्च सा ॥ १३
तत्रैवैव तथा मन्त्रान् उपदिश्य व्यसर्जयत् । पुनश्चापि ऋषिं प्रेक्ष्य प्रोवाच 'वचनं तदा ॥ १४
मायेति नाम मम वै त्वां गता पुत्रकांक्षया । उत्पादितास्त्वया सम्यक् इमे पुत्रा महौजसः ॥ १५
गच्छाम्यहं तपस्त्वन्तुं इत्युक्त्वा सा ययौक्षणात् । तस्यां गतायांतु ऋषि. काश्यपस्तददर्शनात् ॥ १६
विललाप सुदुःखार्तो भृश मूढजना इव । तं तादृशमथालोक्य ब्रह्मा स्वयमिहागतः ॥ १७

ब्रह्मा —

किंवृथा काश्यपाद्य त्वं रोदिषीह यथाज्ञवत् । मास्तु ते रोदन पुत्र सुखीभव मदाज्ञया ॥ १८
तत्सर्वं हि तपस्त्वीश तद्दोष प्रशमाय वै । महेश्वरं समुद्दिश्य सर्वाघौघहरं परम् ॥ १९
इत्युक्त्वान्तर्हितो ब्रह्मा यथागतमनु क्षणात् । काश्यपस्तु तप.कर्तुं स्वाश्रमं प्रययौ तदा ॥ २०
तत्र मायाकृतानीव मण्डपादानि च क्षणात् । अदर्शनं गतान्येव तदानीं तान्यहो द्विजाः ॥ २१
अथ शूरो महासेनः प्रीतये परमेशितुः । भ्रातृभ्यां सहितः कर्तुं प्रतस्थे चाध्वरं तदा ॥ २२
तदा दैत्यगुरुर्दैवात् मार्गेमार्गे अगामवै । तान्वीक्ष्य नितरां श्रीमान् प्रीतिं संप्राप्तवानहो ॥ २३
अजाप यदर्थमेव तेषां सांगुण्य कारणम् । शूरस्य निकटे गत्वा युष्माकं गुरुरस्म्यहम् ॥ २४

इत्युक्त्वानघास्यायं पादयोरभिवन्दनम् । चकारासुरवर्योऽत्र विनयेनानतः स्थितः ॥ २५
शुक्रोऽपि दैत्यवर्याय शिवमन्त्रं तदा स्वयम् । यागविघ्नविनाशार्थं उपदिश्य क्षणाद्गतः ॥ २६
शूरस्ससैन्य सहजो वटद्वीपं द्रुतं ययौ । यागशालांच तत्रासौ निर्ममे दशयोजनैः ॥ २७
सहस्राणां तदा क्षिप्रं प्राकारित महीधराम् । परितश्च तदा सेनां नानायुध विभीषणाम् ॥ २८
स्थापयित्वाऽत्र मध्येऽयं योजनानां सहस्रतः । आयामागाधयुक्तंतु कुण्डं चाग्निश्चकार वै ॥ २९
परितश्च तथा तस्य कुण्डान्यष्टोत्तरं शतम् । ताभ्यामूलच कुंडानां सहस्राणि तथापि वै ॥ ३०
कृत्वा प्रधान कुण्डेऽस्य होतुं तत्र जगाम वै । तस्मिन् प्रधानकुण्डेऽयं महीं प्रोक्ष्यातिभीषणः ॥ ३१
उच्चाटयामास तदा पातालान्तं तथोक्षणात् । ततस्तु माया यागार्थं द्रव्याण्यपि ददाविमम् ॥ ३२
अर्कंचैव तथाऽश्वत्थं अपामार्गं पलाशकम् । निंबं वृक्षं तिन्त्रिणींच भूतावासं तथैवच ॥ ३३
एवमाद्यांच समिधं विषवृक्ष समुद्भवाम् । क्षीराज्यदधितैलानि मधूनिच बहून्यपि ॥ ३४
आढकंच तथा मुद्गं माषंचापि तिलं तथा । कुलुत्थं सर्षपचैव तण्डुलान् व्रीहिभिस्सह ॥ ३५
गोच्छागमहिषादीनां सहस्राणां शतं पुनः । रुधिराणिच मांसानि शतशोऽथ सहस्रशः ॥ ३६
कर्पूरं चन्दनं चैव सह कस्तूरिकारसैः । पुष्पाणि च विचित्राणि सुगन्धीनि बहून्यपि ॥ ३७
दर्भान् जुहूं प्रस्तरंच स्वधितिंच तथारणिम् । एवमादीनि भूयांसि यज्ञोपकरणानिच ॥ ३८
त्रिभिर्योजनमानैस्तु सहस्राणां ततार सा । ततस्तु शूरपद्मोऽसौ दुर्गां भैरवमेवच ॥ ३९
भद्रकाळीं तथा भूतं प्रेतं चापि पिशाचकम् । डाकिनी गणसंघं च चामुण्डीं दिश्यपूजयत् ॥ ४०
निर्मथ्याधारणिचासौ वह्निं प्रज्वलयन् घृतैः । कुंडमध्ये । प्रतिष्ठाप्य वज्रस्तंभमथादृकैः ॥ ४१
तिलैर्माषैस्तथा मांसैराज्यैस्तैलैर्जुहावसः । सहस्राणां दश तदा वर्षाणां शिवमन्त्रतः ॥ ४२
तथान्येषुच कुण्डेषु सिंहास्यस्तारकोऽपि च । क्रमेणाष्टोत्तरशते चाष्टोत्तर सहस्रके ॥ ४३
तदा जुहुवतुस्तौ द्वौ महावीरपराक्रमौ । न तथापि महादेवः प्रादुर्भावं जगामवै ॥ ४४
ततश्शूरस्तु संक्रुद्धो गगनेच समुत्थितः । स्थित्वा वर्षसहस्रंतु छित्वांगं संहृतास्तदा ॥ ४५
जुहाव रुधिरैर्मांसैर्मनसापि शिवं स्मरन् । एवं कृतेऽपि भगवान् यागे न प्रससाद वै ॥ ४६
पुनस्तु शूरपद्मोऽसौ उत्प्लुत्योर्ध्वं द्रुतं तदा । वज्रस्तंभोपरि पतन्यावत्तन्मूलमागतः ॥ ४७
कुण्डमध्ये तदा प्राणान् मुमोचासुरनायकः । ततस्तु हाहाकारश्च दैतेयानां महानभूत् ॥ ४८
देवानांतु तदात्यर्थं सन्तोषस्समजायत । अथ सिंहमुखश्चापि छित्वा मूर्ध्नोऽञ्जसा स्वकान् ॥ ४९
पुनर्भूयस्तथोत्पन्नानुत्पन्नान् संजुहाव सः । तारकोऽप्येवमन्येऽपि दैत्याः पेतुर्ज्वलीयसः ॥ ५०
तथापि स महादेवो यदा नाध्यक्षतांगतः । तत्रैव सिंहवक्त्रोऽपि प्राणान् हातुमियेष सः ॥ ५१
ब्रह्माण्डभित्तिपर्यन्तं अग्नेर्ज्वाला प्रधीयती । ऊर्ध्वंचैवमधश्चापि नागलोकं ददाह वै ॥ ५२
तदानीमीश्वरस्तत्र स्थविरत्वेन चागतः । दण्डं करेण गृह्णायं विष्णुपृष्ठास्थिना तदा ॥ ५३
इतस्ततस्स्खलत्पाद युगळो वेदपाठकः । सिंहासुरस्य निकटं गत्वा वचनमब्रवीत् ॥ ५४

वृद्धः —

केयूय कस्यचा पुत्राः किंवा युष्माभिरत्रवै । क्रियते मे वदाद्यैव यथावदनुपूर्वशः ॥ ५५

सिंहः —

शृणु तत् महाविद्वच्छ्रेष्ठ युष्मत्संदर्शनादहो । अस्माकं प्रीतिरत्यर्थं यथाच परमेशितुः ॥ ५६
वयं दैत्याः काश्यपस्य पुत्रावै वीरयागतः । प्रसाद्य परमेशानं राज्यप्राप्त्यर्थमागताः ॥ ५७

अप्रसादान्महेशस्य मद्भ्राता निधनं गतः । कुण्डमध्ये महावीरो वज्रस्तंभे पतन् किल ॥ ५८
तदिदानीमहंचापि देहत्यागे प्रवृत्तधीः । वृद्धः – मामार्षीर्वीर्युष्माकं अद्यदिष्टं भविष्यति ॥ ५९

इत्युक्त्वा चालयामास वृद्धो गङ्गां वियद्गताम्
अथ सा पृथुभिर्महीधरानमितैरूर्मिकरैः क्षणात् तदा ।
भृशताडित कन्दुकश्रियं विदधानेव समागताम्बधे ॥ ६०
आकाशगङ्गापयसा शशाम सर्वेषु कुण्डेषु समिद्धोऽग्निः ।
सिक्तास्तदा शुक्रमुखाश्च दैत्याः सर्वेऽपि ते वृद्धिमवापुरत्र ॥ ६१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे द्वितीयोऽध्यायः ॥

---

॥ अथ तृतीयोऽध्यायः ॥

श्रीशिवेन शूरपद्मादीनां वरप्रदानम् ॥

अथाविरासीद्भगवानंबया सहितः प्रभुः । लसत्कंकणकेयूरमुक्तादामविभूषितः ॥ १
कपर्दाबद्धचन्द्रार्धसमलंकृतमस्तकः । स्फुरज्जटातटोत्सर्पितटिनीपरिमण्डितः ॥ २
मन्दहासप्रथद्धिमांशुदन्तपङ्क्तिविराजितः । त्रिपुण्ड्रावलिभिर्दीप्तललाटादिस्थलोज्ज्वलः ॥ ३
भूतिभूषितसर्वांगो रुद्राक्षस्रग्भिरावृतः । आरुह्य शाक्वरं दिव्यं नानालंकारशोभितम् ॥ ४
विसतन्तुनिभैः स्वच्छैः चामरैरभिशोभितम् । कणत्किंकिणिकानाद बधिरीकृतदिङ्मुखम् ॥ ५
भोगिभोगप्रतिछन्दिहारदामालविराजितम् । कण्ठालंबिलसद्घण्टा ध्वनिध्वनितदिङ्मुखम् ॥ ६
महता ककुदा युक्तं महत्कंधरबंधुरम् । पादप्रभेदैरभितः ताडितेषु तदा भृशम् ॥ ७
गणैर्नानाविधैरन्यैः ब्रह्मविष्ण्वादिभिस्सुरैः । आवृतस्सर्वतो दिव्यस्त्रीशतैः परिवारितः ॥ ८
तादृशं तं महादेवं प्रेक्ष्य संफुल्ललोचनः । शूरपद्मा सहभ्रातृसेनाभिः प्रणनाम तम् ॥ ९
अस्तावीत् स्तोत्रवर्यैस्तु स्तुत्यं वेदान्तगुंभितैः । अथ तं परमेशानः प्रोवाच वचनं तदा ॥ १०
स्मयमान मुखांभोज मकरन्दरसास्पदम् । प्रीतोऽस्मि नितरां युष्मत्तपसाऽसुरपुङ्गवाः ॥ ११
यद्यन्मनसि वोऽभीष्टं वर्तते प्रथमेऽनघाः । ददामि तत्तत्सपदि ध्रुवमित्याह शंकरः ॥ १२

शूरः —

यदि प्रसन्नो भगवन् त्वद्भक्त्याऽनुष्ठितंमया । अष्टोत्तरसहस्राणां अण्डानां सार्वभौमताम् ॥ १३
शाश्वत्यकं तथास्माकं अविनश्वरतामपि । विष्ण्वादि दैवतान्सर्वा यथा मत्सन्निधानतः ॥ १४
पलायिष्यंति सुतरां दद तादृशमायुधम् । तेषु सर्वेषु गमनागमनञ्च प्रयच्छ नः ॥ १५
ततस्तु शूरपद्मं तं प्रेक्ष्य सर्वेश्वरो वचः । प्रोवाच कृपया युक्तो यदुक्तं तत्तथास्त्विति ॥ १६
अष्टोत्तरसहस्राणां अण्डानां सार्वभौमताम् । अष्टाधिकशतेष्वेव युगेष्वस्तु तवानघ ॥ १७
तथा विमानमैन्द्रं ते नानारत्नोपशोभितम् । सिंहवाहनमन्यच्च तथा पाशुपतास्त्रकम् ॥ १८
वज्रादीनि चास्त्राणि तत्तद्देवाङ्कितानि वै । वज्रदेहं तथाचाग्निकुण्डोद्भूताऽसुरान् बहून् ॥ १९
द्विकोटिसहस्रेण वाहिनीनां मितं तदा । चतुरंगबलंचात्र तवभृत्यास्तु भूरिशः ॥ २०
तवानुजानामन्येषां आयुधानि बहून्यपि । अष्टाधिक शतंचापि युगानामस्तु भूरशा ॥ २१

अपिवा समरं प्राप्य विना मच्छक्तिमव्ययाम् । अन्यैस्सुरगणैर्नाशो मास्तुयो मरणं ध्रुवम् ॥ २२
इत्युक्त्वाऽन्तर्दधे देवः सांबस्सर्वेश्वरेश्वरः । ततस्तु शूरपद्मादि दैतेयास्तुष्टिमापिरे ॥ २३
साट्टहासास्तथान्येऽपि ननृतुः स्वङ्गणावयः । इतस्ततः तथा केचित् धावन्तः किलिकिञ्चितैः ॥ २४
शूरपद्मः पुनः प्रेक्ष्य दैतेयानब्रवीद्वचः । इयन्तं कालमन्वीक्ष्य युष्माभिः स्थितमग्रवै ॥ २५
इत्यादि भूरिशस्तेषां उपचारं तदा जगौ । तेऽपि भूयस्तदा वाचं ऊचिरे विनयान्विताः ॥ २६
चतुरङ्गबलानांतु दत्तानां शंभुना तदा । सेनापतीन् विभजयाशु स्वामिनः कृतवान् खलु ॥ २७
जगाम काश्यपं तातं सहभ्रातृबलैस्तदा । नमस्कृत्यातु वचनं प्राहस प्रश्रयान्वित ॥ २८
ततस्सर्वेश्वरश्शंभुः सुप्रीतः मनुना मम । अण्डानामाधिपत्यञ्च दत्तवान् वरदा मुदा ॥ २९
इतःपरं मतिः कावा वद मेऽद्य दयायुतः । काश्यपस्तु विचिन्त्याथ देवानां विपदं तदा ॥ ३०
प्रोवाच वचनं युष्मद्गुरोस्सविधमेत्य च । श्रूयतां मतिरित्येवं तपोविप्रादिव श्रुतम् ॥ ३१
अथ सर्वेऽपि दैत्येन्द्राः संभूय भययुक्तदा । भार्गवं स्वहिते युक्तं सर्वशास्त्रार्थकोविदम् ॥ ३२
नत्वा बद्धाञ्जलिकराः वृत्तान्तंच व्यजिज्ञपन् । बुद्धिंच नोवदार्याशु कार्याकार्यस्वरूपिणीम् ॥ ३३
इत्युक्त्वा विनयानम्राः तस्थुस्ते परितस्तदा । शुक्रस्तु शूरपद्मानं एकमेवान्तमानयत् ॥ ३४
उवाच वाचा वाचालो हृद्यार्थानुविधायिनीम् । शिवस्तु मायामाश्रित्य ससर्ज विपदादिकम् ॥ ३५
तथा स्वांशं विभज्याथ जीवत्वेनावतिष्ठते । शरीरेंद्रिय संयुक्तो लीलामात्र प्रयोजनः ॥ ३६
भग्ने घटे घटाकाशो महाकाशे प्रलीयते । तद्वद्देहविनाशेन जीवस्तु शिवतां गतः ॥ ३७
तस्मात् पुण्यानि पापानि मिथ्यारूपाणि सत्यतः । मोक्षोऽप्येव ततस्त्वंतु स्वात्मानं ब्रह्मरूपिणम् ॥ ३८
मत्वा शोकं विमुञ्चाथ ब्रह्मविष्ण्वादि देवताः । परित्यज्य हृदि ध्यायन् शंभुमाकाशमध्यगम् ॥ ३९
इन्द्रादि देवतानांच भयमुत्पादयन्महत् । तेषां पदं प्रयच्छ त्व असुराणां महौजसाम् ॥ ४०
मारणं च तथा कार्यं दस्त्यापिच यज्वनाम् । चौर्यं प्रक्षेपणं चैवमादीनिच तथाकुरु ॥ ४१
अन्यथा त्वां नगणयेत् कोऽपि मर्त्यस्सुरोऽपिवा । सर्वेषुच तथाण्डेषु त्वदीयेषु प्रजानिशम् ॥ ४२
विचार्यैव विचार्यैव वृत्तान्तं सावधानतः । यत्रासिन्नण्डमध्ये त्वं सहभ्रातृगणैस्तथा । ४३
अण्डस्यच तथायाम विस्तारंच महीधरान् । समुद्रान् द्वीपजालंच लोकान् नानाविधान् तथा ॥ ४४
देवांश्चैव तथा लोकपालकान् दिग्गजान् मनून् । प्राणिनश्च तथा चैवमादींश्च सतद्राऽवदत् ॥ ४५
एवमण्डेषु सर्वेषु वसन्त्युक्ता यथाश ये । वक्तव्यंच पुनस्तेषां उक्त्वा तान् विससर्ज वै ॥ ४६
ततस्तु शूरपद्मोऽसौ प्रतस्थे तं प्रणम्य वै । आरुह्येन्द्रविमानं तत् सूर्यकोटि समप्रभम् ॥ ४७
तुरंगकोटिसंयुक्त नानारत्नविचित्रितम् । विनाशरहित चारुच्छत्रध्वजपरिष्कृतम् ॥ ४८
सिंहासनस्तथा यालिसहस्राणां सहस्रकैः । तुरगमानांच तथा भूतानां महतामपि ॥ ४९
सुयुक्त रथमारुह्य प्रतस्थे सहस्रावली ॥ ५०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे तृतीयोऽध्यायः ॥

॥ अथ चतुर्थोऽध्यायः ॥

तारकात् कुबेरादीनां पराजयः ॥

तारकोऽपि तथारुह्य स्यन्दनं सुमनोहरम् । संयुज्य तुरगाणां तु सहस्रैर्दशभिः क्षणात् ॥ १
तथान्ये रथिनश्चापि नानायुध परिष्कृताः । गजाश्ववाहाश्च परे सुकुमारांगयष्टयः ॥ २
सेनाच महती तद्वत् खरोष्ट्राश्च प्रतस्थिरे । काहळी भेरि पटहास्तुतरां नादितास्तदा ॥ ३
वाद्यभेदाः परितो मड्डुडिंडिमझर्झराः । जितांबुधिमहारावास्ताडिता भृशमत्रवै ॥ ४
खड्गहस्तास्तथा केचित् दण्डभीमकराः परे । खट्वांगपाणयः केचित् मुसलोद्धतपाणयः ॥ ५
छत्रिणां कोटयोऽनेकाः ध्वजिनां बहुकोटयः । इतस्ततश्च धावन्तः प्रासमादाय चापरे ॥ ६
साट्टहासास्तथान्योन्यं ताड्यमानकराः परे । एवं प्रचलतां विष्वक् सैन्यानां दैत्यभूपतेः ॥ ७
इयत्तया परिच्छेत्तुं अशक्यानां महौजसाम् । असंख्य चतुरंगाणां शफपादखुरोत्थिताः ॥ ८
पांसवश्च तदा सूर्यमार्गं पर्यन्तमुत्थिताः । चतुरंगबलेनैवं तदा योजनकोटिभिः ॥ ९
संबाधं प्रापिता भूमिस्तिसृभिः परितो भृशम् । एवं गत्वा सहभ्राता बलैश्शूरो महासुरः ॥ १०
अलकां तुंगसालेन प्रावृतां तु रुरोध सः । तदाकर्ण्य कुबेरस्तु दूतवक्त्रेण शीघ्रतः ॥ ११
विचार्य सुतरां त्रस्तो दैतेयानां वरं तदा । आशिषश्च प्रयुञ्जानस्सांजलिः प्रश्रयान्वितः ॥ १२
धनानि दिव्यवस्त्राणि भूषणानि बहूनि च । दत्वा प्रोवाच वचनं शूरपद्मं समीक्ष्य वै ॥ १३
त्वदीयोऽहं यक्षराडत्र रक्ष मां दययाऽधुना । विसृष्टस्तेन शूरेण कुबेरः स्वपुरं गतः ॥ १४
लुण्ठितं च पुरं तस्य तत्पूर्वमसुरैर्भृशम् । कुबेरस्तु तदाऽत्यर्थं दुःखं प्राप सुराङ्गणम् ॥ १५
जेतुकामस्तदैशानं प्रतस्थेऽसुरनायकः । मध्येमार्गं निशम्यास्य चिह्नमैश्वरमुज्ज्वलम् ॥ १६
त्रिणेत्राद्रिं विमुच्यैतं शूरपद्मः क्षणाद्बली । ऐन्द्रीं दिशं तथा जेतुं इन्द्रं शूरो जगाम वै ॥ १७
अरौत्सीत् तस्य नगरं अमरेशस्य चाद्भुतम् । वृक्षांश्चिच्छेद बहुशो नानादिक्षु व्यवस्थितान् ॥ १८
तदानीं मघवांस्तूर्णं पलायत वियत्स्थले । लुण्ठयामास तस्याशु पत्तनं सैनिकैस्तदा ॥ १९
सुरांगनाश्च शतशो बन्दीतां प्रापिता द्विजाः । इन्द्रस्य सदनं तूर्णं आवृत्यान्तःपुरस्थितम् ॥ २०
धनं बहु तदा प्राप भूमिं खात्वा सुविस्तरम् । एवं प्रतिगृहं गत्वा दग्ध्वा चास्य पुरं क्षणात् ॥ २१
सुरान्तश्शालीं भूयांसः दरं प्राप्ताश्च दुर्बलाः । अपलाय्य प्रमादाद्ये तदा गमनमास्थिताः ॥ २२
शूरस्य धावनेऽशक्ताः जिताश्चासन् क्षणाद्बली । लुण्ठितानि तदा तेषां उपरिस्थाप्य निष्ठुरः ॥ २३
दग्ध्वा पुरं शीघ्रं निर्ययौ दनुजाधिपः । महाबलैर्महाशूरैः धावद्भिः पुरतो भृशम् ॥ २४
अग्नेस्सेना तदा वह्नी प्रतस्थे योद्धुमाशु तान् । परस्परं तयोस्सेना युयुधे शस्त्रजालकैः ॥ २५
तारकस्य बलानां सा पुरतः स्थातुमक्षमा । पराभवं गता तूर्णं अग्नेरवशमागता ॥ २६
ततोऽग्निर्निर्ययौ तूर्णं क्रोधमूर्छितविग्रहः । कालाग्निरिव निर्दग्धुं ज्वालामालावृतो जगत् ॥ २७
अस्त्राणि च बहून्याशु मुमोचासुरसंहतौ । ततस्तु तारको धीमान् नानास्त्रकृत शिक्षकः ॥ २८
धनुरादाय सव्येन युयुजे पाणिनाऽज्यया । आस्फालयत्तदा ज्यां च प्रळयांबुद निस्वनम् ॥ २९
आलीढमार्गमाश्रित्य धनुर्द्रागायमेन सः । स्थापयत्तदा पशुपति अस्त्रं पाशुपतं महत् ॥ ३०
संधयामास धनुषा साक्षाद्रुद्र इवापरः । ततस्सर्वभ्रममना जातवेदा भयंगतः ॥ ३१

इदमत्रं पशुपतेः क्षणाल्लोकान् दहत्यहो । एतस्य लक्ष्यं किंवा स्यात् कालाग्नेर्मशकादिव ॥ ३२
केवा वयं हराग्ने तु दाहतोऽस्मीति चिन्तयन् । शरणं तं प्रपद्येऽद्य तारकं प्राणदायकम् ॥ ३३
इति निश्चित्य मनसा विमुक्तायुध सन्ततिः । तारकाभ्याशमभ्येत्य रक्ष रक्षेति च ब्रुवन् ॥ ३४
बद्धांजलिपुटो गत्वा त्वदीयोऽहं विमुञ्च माम् । इत्यमुक्त्वा स्थितस्तत्र भयकंपितविग्रहः ॥ ३५
ततस्तु तारकः प्रीतिमभ्येत्यासुरपालकः । समाश्वासयामास वचसा शीतलेन तम् ॥ ३६
यथापूर्वं पुरं गत्वा पालयाथ प्रजाध्रुवम् । मदाज्ञया पुरेतिष्ठ स्वकीये त्यक्तभीर्भृशम् ॥ ३७
इत्याहस ततो वह्निस्ताभेन विचेष्टितम् । मया क्षमस्व तत्सर्वं इत्युक्त्वा स्वां पुरीं गतः ॥ ३८
तत्पूर्वमेव तस्यापि लुण्ठितं पुटभेदनम् । असुरैर्बहुघोरुक्तै रंजसा चाभ्यवादकैः ॥ ३९
ततस्सूरस्तु शूराणां फलिंगं नाम सारथिम् । याम्यां दिशं प्रापयेति रथमाह विचक्षणः ॥ ४०
चोदितास्तुरगास्तेन रथमानीय तत्क्षणात् । फलिंगेन तदाभ्याशं धर्मराजपुरं गताः ॥ ४१
चतुरश्च पलंचापि चचालाब्धिरिवापरः । यमस्यच पुरं शीघ्रं काप्लुतं दनुजैर्भृशम् ॥ ४२
श्रुत्वा यमस्तदा रुद्धां पुरीं दूतमुखेन सः । कुबेरस्यापि चाक्रान्तं पुरमेतेन सर्वतः ॥ ४३
इन्द्रस्य नगरं दग्धं तथाग्नेर्लुण्ठितं भृशम् । इति चिन्तापरवशो जवेनास्यागतोऽन्तिकम् ॥ ४४
द्रव्यं बहु तथा वस्त्रं विचित्रं हारमेवच । तण्डुलांच तथा सूक्ष्मान् स्थितान् पर्वतमानतः ॥ ४५
मुद्गांस्तथा कुलुत्थांश्च तुवराम्माषकानपि । एवमादीनि भूयांसि दत्वा ह्येतानि तस्यवै ॥ ४६
त्वदाज्ञया त्वदीयोऽहं संयमिन्यां वसाम्यतः । असुराश्च महावीरा नगरं नाशयन्ति ते ॥ ४७
निवर्त्य तानाशु मां त्वं रक्षेत्याह यमः स्वयम् । निवर्त्य तान् तारकोऽयं दूतवक्त्रेण लुण्ठकान् ॥ ४८
धर्मं चाश्वास्य बहुधा संभाव्याशु पुरं प्रति ॥ ४९
प्रेषयित्वा तदा तूर्णं निर्ऋतेः ककुभं ययौ । गत्वा तस्यापिच पुरं स्वैरोपास्सुरनायकः ॥ ५०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे चतुर्थोऽध्यायः ॥

॥ अथ पंचमोऽध्यायः ॥

श्री विष्णुतारकयोर्युद्धम् ॥

ततस्तु निर्ऋतिश्शीघ्रं निर्ययौ नगरात् बहिः । अभ्येत्य तारकं शत्रुदारकं साञ्जलिस्तदा ॥ १
त्वद्बन्धुरहमत्रैव निवसामि त्वदाज्ञया । पालनीयं त्वयैवेदं ऐश्वर्यं बन्धुपुष्टये ॥ २
इत्युक्तवन्तं निर्ऋतिं बहुमानतया पुरम् । तारकः प्रेषयित्वाशु प्रतस्थे वारुणीं दिशम् ॥ ३
प्रस्थानमस्य श्रुत्वाथ वरुणः प्राप वारिधिम् । त्वरयाथ तदाभ्येत्य पुरीं सेना प्रथीयसीम् ॥ ४
इतस्ततश्च जग्राह पुरस्थानां तदा बहु । वस्त्रमाभरणं चान्यत् धावतां भृशमेवच ॥ ५
अलुण्ठयंश्च नगरं नानारत्नसुशोभितम् । तथा वायोः पुरं चापि क्षणात् प्राप ससैनिकैः ॥ ६
वायुस्तु तरसा लोकं तामिस्रं गतवान् द्विजाः । अलुण्ठत्तस्य नगरं तारकस्सर्वतोज्वलम् ॥ ७
एवं जित्वाथ पाताळं दिशश्चाष्टा सुरोत्तमाः । नागानां जयमुद्दिश्य सह सैन्यैरशिश्रयत् ॥ ८
सर्पाधिपतयस्तत्र युद्धे प्राप्ताः पराभवम् । ददुश्चास्य विचित्राणि रत्नानि सुबहूनि वै ॥ ९
पीत्वामृतं च सकलं असुरैस्तत्र संभवैः । पूजितः परया प्रीत्या दृष्ट्वा तत्सर्वमद्भुतम् ॥ १०

बिलद्वाराणि रम्याणि तथैकामवसत्तिथिम् । शूरपद्मा ततस्तूर्णं पुन प्राप महीतलम् ॥ ११
सैन्यैर्नानाविधैस्सार्धं सहजैश्च बलोत्कटै । गत्वा द्वीपानि रम्याणि नानारूपाणि सर्वत ॥ १२
आश्चर्याणिच सप्रेक्ष्य तत्रत्यानि बहून्यपि । क्षीराब्धिं प्राप तरसा यत्रशेते हरिस्स्वयम् ॥ १३
तत्र प्रविष्टास्सेनास्तास्सर्वा मत्तगजादय । क्षोळयामासुरमित पीत्वा पीत्वाच भूरिश ॥ १४
श्रीभूमीच निशम्याशु विष्णु पत्न्यौ तदारवम् । त्रस्ते विष्णोस्समीप ते गत्वाऽबोधयता हरिम् ॥ १५
शेषे किमद्य शेषे त्वमकाडे चागत भयम् । मुञ्च निद्रां विभो शीघ्रं पालयावां भयगते ॥ १६
ततस्तु मुक्तनिद्रोऽसौ यावत्कालेन चोत्थित । तावदेवासुरास्सर्वे चागतास्तत्समीपत ॥ १७
हरिरारुह्य गरुडमाप शूलवलान्तिकम् । कौमोदकीं नन्दकञ्च पाञ्चजन्य सुदर्शनम् ॥ १८
शार्ङ्गञ्च धनुरादाय बद्धकच्छस्सकञ्चुक । शरधिञ्च तथा बध्वा पृष्ठभागे विचक्षण ॥ १९
सव्येन पाणिना चापमानमय्य गुणेन तत् । दक्षिणेन तदा तूर्णं योजयामास वेगत ॥ २०
तारकस्य च सेनाया ववर्षास्त्राणि भूरिश । सेना ममार बह्वीसा तदा तद्बाण पातनात् ॥ २१
पलायिताश्च तत्रान्ये शरखण्डित विग्रहा । दैतेया भृशदुखार्तास्तारक शरण गता ॥ २२
ततस्तु तारकश्शीघ्रं प्रतस्थेच जनार्दनम् । योद्धुमादाय शस्त्राणि बहूनि सुमहान्त्यपि ॥ २३
गुणेन चाप सयोज्य व्याघात कृतधान् द्विजा । ववर्ष शरवृष्टिंच विष्णोरुपरि भूरिश ॥ २४
तार्क्ष्यस्यापि शरीरेऽस्य रक्तस्रावो यथा भवेत् । असुरारिर्महाक्रुद्धो निशितानि शराणि स ॥ २५
मुमोच तस्य गात्रेषु तारकस्य तदाभृशम् । पुनश्चान्यानि शस्त्राणि मुक्त्वाच्छित्वा रथ तदा ॥ २६
खण्डश खण्डशो भूमौ पातयामास सारथिम् । चापञ्च शतश कृत्वा मुमोच पुनरस्य वै ॥ २७
आरुह्य तारकस्तूर्णमन्यत्स्यन्दनमुज्ज्वलम् । चापमादाय सपुनश्चाट्टहास परो भृशम् ॥ २८
ववर्ष बहुधाचास्य शरीरे धर्ममेघवत् । शस्त्राणि निशितान्याशु तत्र तस्तार लीलया ॥ २९
शरीर चास्य विष्णोस्तद्रक्तजालपरिप्लुतम् । अभवत्तरसा मुक्तकञ्चुक तन्निपातनात् ॥ ३०
तत क्रोधेन महता ज्वलन्निव हरिस्तदा । नाराचैर्विव्यधे चास्य शरीर मर्ममेदिभि ॥ ३१
शूलैर्नानाविधैरस्त्रै पातयामासवै रथम् । चिच्छेदच पुनश्चाप तारकस्य सहस्रश ॥ ३२
तारकस्तरसाऽऽरुह्य रथमद्भुतमुत्तमम् । आदाय धनुरन्यच्च दृढ क्रोध विजृम्भित ॥ ३३
अमुञ्चदस्त्रजाल स स्वयमेव तदा हरौ । ततस्ससभ्रम विष्णुर्मायावी बहुरूपभाक् ॥ ३४
तत्र तत्र स्थितश्शीघ्रं अवर्षत्तारकोपरि । शतकोटि सहस्राणि शस्त्राण्यादाय शस्त्रवित् ॥ ३५
तारकोऽपि तदा तूर्णं मन्त्रमुन्त्र समुच्चरन् । प्रभिन्न शतशो विष्णु ज्ञानास्त्रैरमरयर्के ॥ ३६
एव द्वादश वर्षास्तौ युयुधाते परस्परम् । युद्धमल्लौ तदा विष्णुतारकौ भृशमुत्थितौ ॥ ३७
कौमोदकीं करेणाशु कैटभारिस्तदाऽसुरे । सभ्राम्य तत्क्षणेनैव चिक्षेप विभीषणाम् ॥ ३८
गदया ताडयामास गदा विष्णोस्तदा भृशम् । तारकस्तरसा हन्तु ख धृत्वान्ता महाक्रुधा ॥ ३९
ताड्यमाना तदा तेन ग्यपतद्खिलादय । पृथिव्या नन्दकोऽप्येव व्यर्थतामगमत्किल ॥ ४०
तारकस्तु तदा तूर्णं विष्णोरभ्याशमागत । भ्रामयित्वा गदा स्थूला यथोद्युक्त क्रुधा द्विजा ॥ ४१
अगत त महावीर अभ्याश प्रेक्ष्य माधव । ध्वनयश्च तदा शङ्ख प्रळयाम्बुदनिस्वनम् ॥ ४२
सुदर्शन महाघोर सर्वशत्रु निकृन्तनम् ॥ ४२½

इदमग्रं पशुपते। क्षणाल्लोकान् दहस्यहो । एतस्य लक्ष्यं किंवा स्यात् कालाग्नेर्मशकाइव ॥ ३२
केवा वयं हराक्षं तु दाहतोऽस्मीति चिन्तयन् । शरणं तं प्रपद्येऽद्य तारकं प्राणदायकम् ॥ ३३
इति निश्चित्य मनसा विमुक्तायुध सन्ततिः । तारकाभ्याशमभ्येत्य रक्ष रक्षेतिच ब्रुवन् ॥ ३४
बद्धांजलिपुटो गत्वा त्वदीयोऽहं विमुञ्च माम् । इत्थमुक्त्वा स्थितस्तत्र भयकंपितविग्रहः ॥ ३५
ततस्तु तारकः प्रीतिमभ्येत्यासुरपालकः । अग्निमाश्वासयामास वचसा शीतळेन तम् ॥ ३६
यथापूर्वं पुरं गत्वा पालयाग्ध प्रजाध्रुवम् । मदाज्ञया पुरे तिष्ठ सकीये स्वक्रभीर्भृशम् ॥ ३७
इत्याहस ततो वह्निज्ञानेन विचेष्टितम् । मया क्षमस्व तत्सर्वं इत्युक्त्वा स्वां पुरीं गतः ॥ ३८
तत्पूर्वमेव तस्यापि लुण्ठितं पुरभेदनम् । असुरैर्बहुघोरुक्ते रंजसा चाश्ववाहकैः ॥ ३९
तनदशूरस्तु शूराणां फाळिंगं नाम सारथिम् । याम्यां दिशं प्रापयेति रथमाह विचक्षणः ॥ ४०
चोदितास्तुरगास्तेन रथमानीय तत्क्षणात् । फाळिंगेन तदाभ्याशं धर्मराजपुरं गताः ॥ ४१
चतुरङ्ग बलंचापि चचालाद्धिरिवापरः । यमस्यच पुरं शीघ्रं आवृतं दनुजैर्भृशम् ॥ ४२
श्रुत्वा यमस्तदा रुद्धां पुरीं कृतमुखेन सः । कुबेरस्यापि चाक्रान्तं पुरमेतेन सर्वतः ॥ ४३
इन्द्रस्य नगरं दग्धं तथाग्नेर्लुण्ठितं भृशम् । इति चिन्तापरवशो जवेनाभ्यागतोऽन्तिकम् ॥ ४४
द्रव्यं बहु तथा वस्त्रं विचित्रं हारमेवच । तण्डुलांश्च तथा सूक्ष्मान् स्थितान् पर्वतमानतः ॥ ४५
मुद्गांस्तथा कुळुत्थांश्च तुवरान्माषकानपि । यवमादीनि भूयांसि दत्वा ह्येतानि सर्वशः ॥ ४६
त्वदाज्ञया त्वदीयोऽहं संयमिन्यां वसाम्यतः । असुराश्च महावीरा नगरं नाशयन्ति ते ॥ ४७
निवर्त्य तानाशु मां त्वं रक्षेत्याह यमः स्वयम् । निवर्त्य तान् तारकोऽयं दूतयन्त्रेण लुण्ठकान् ॥ ४८
धर्मं चाश्वास्य बहुधा संभाव्याशु पुरं प्रति ॥ ४९
प्रेरयित्वा तदा तूर्णं निर्ऋतेः ककुभं बलैः । गत्वा तस्यापिच पुरं रुरोधासुरनायकः ॥ ५०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे चतुर्थोऽध्यायः ॥

---

॥ अथ पंचमोऽध्यायः ॥

श्री विष्णुतारकयोर्युद्धम् ॥

ततस्तु निर्ऋतिश्शीघ्रं निर्ययौ नगरात् बहिः । अभ्येत्य तारकं शत्रुशारकं साञ्जलिस्तदा ॥ १
त्वद्नुग्रहमत्रैव निवसामि त्वदाज्ञया । पालनीयं त्वयैवेदं ऐश्वर्यं बन्धुपुङ्गवे ॥ २
इत्युक्तवन्तं निर्ऋतिं बहुमानतया पुरम् । तारकः प्रेरयित्वाशु प्रतस्थे वारुणीं दिशम् ॥ ३
प्रस्थानमस्य श्रुत्वाथ वरुणः प्राप वारिधिम् । त्वरयाथ तदाभ्येत्य पुरीं सेना प्रधर्षयत्सीम् ॥ ४
इतस्ततश्च जग्राह पुरस्थानां तदा वसु । चरत्नमाभरणं चान्यत् धावतां भृशमेवच ॥ ५
अलुण्ठयंश्च नगरं नानारत्नसुशोभितम् । तथा वायोः पुरं चापि क्षणात् प्राप ससैनिकैः ॥ ६
वायुस्तु तरसा लोकं तामिस्रं गतवान् द्विजाः । अलुण्ठत्तस्य नगरं तारकस्सर्वतोज्वलम् ॥ ७
एवं जित्वाथ पाताळं दिशश्चाष्ट सुरोत्तमाः । नागानां जयमुद्दिश्य सह सैन्यैरशिश्रयत् ॥ ८
सर्पाधिपतयस्तत्र युद्धे प्राप्ताः पराभवम् । ददुश्चास्य विचित्राणि रत्नानि सुबहूनि वै ॥ ९
पीत्वाऽमृतं च तत्रत्यं असुरैस्तत्र संभवैः । पूजितः परया प्रीत्या दृष्ट्वा तत्रत्यमद्भुतम् ॥ १०

विलद्वाराणि रम्याणि तथैकामवसत्तिथिम् । शूरपद्मा ततस्तूर्णं पुनः प्राप महीतलम् ॥ ११
सैन्यैर्नानाविधैस्सार्धं सहजैश्च बलोत्कटैः । गत्वा द्वीपानि रम्याणि नानारूपाणि सर्वतः ॥ १२
आश्चर्याणि च संप्रेक्ष्य तत्रत्यानि बहून्यपि । क्षीराब्धिं प्राप तरसा यत्रशेते हरिस्स्वयम् ॥ १३
तत्र प्रविष्टास्सेनास्तास्सर्वा मत्तगजा इव । लोळयामासुरभितः पीत्वा पीत्वाच भूरिशः ॥ १४
श्रीभूमीच निशम्याशु विष्णु पत्न्यौ तदारवम् । त्रस्ते विष्णोस्समीपं ते गत्वाऽबोधयतां हरिम् ॥ १५
शेषे किमद्य शेषे त्वमकांडे चागतं भयम् । मुंच निद्रां विभो शीघ्रं पालयावां भयंगते ॥ १६
ततस्तु मुक्तनिद्रोऽसौ यावत्कालेन चोत्थितः । तावद्दैत्यासुरास्सर्वे चागतास्तत्समीपतः ॥ १७
हरिरारुह्य गरुडमाप शूरक्लान्तिकम् । कौमोदकीं नन्दकंच पाञ्चजन्यं सुदर्शनम् ॥ १८
शार्ङ्गंच धनुरादाय बद्धकच्छस्सकंचुकः । शरधिंच तथा बध्वा पृष्ठभागे विचक्षणः ॥ १९
सव्येन पाणिना चापमानमय्य गुणेन तत् । दक्षिणेन तदा तूर्णं योजयामास वेगतः ॥ २०
तारकस्य च सेनायां ववर्षास्त्राणि भूरिशः । सेना ममार बह्वीसा तदा तद्बाण पातनात् ॥ २१
पलायिताश्च तत्रान्ये शरखंडित विग्रहाः । दैतेया भृशदुःखार्तास्तारकं शरणं गताः ॥ २२
ततस्तु तारकश्शीघ्रं प्रतस्थेच जनार्दनम् । योद्धुमादाय शस्त्राणि बहूनि सुमहान्त्यपि ॥ २३
गुणेन चापं संयोज्य ज्याघातं कृतवान् द्विजाः । ववर्ष शरवृष्टिंच विष्णोरुपरि भूरिशः ॥ २४
तार्क्ष्यस्यापि शरीरेऽस्य रक्तस्रावो यथा भवेत् । अम्बुराशिर्महाक्रुद्धो निशितानि शराणि सः ॥ २५
मुमोच तस्य गात्रेषु तारकस्य तदा भृशम् । पुनश्चान्यानि शस्त्राणि मुक्त्वाच्छिद्य रथं तदा ॥ २६
खण्डशः खण्डशो भूमौ पातयामास सारथिम् । चापंच शतशः कृत्वा मुमोच पुनरस्य वै ॥ २७
आरुह्य तारकस्तूर्णमन्यत्स्यंदनमुज्वलम् । चापमादाय सपुनश्चाट्टहास परो भृशम् ॥ २८
ववर्ष बहुधाचास्य शरीरे घर्ममेघवत् । शस्त्राणि निशितान्याशु तत्र तस्तार लीलया ॥ २९
शरीरं चास्य विष्णोस्तद्रक्तजालपरिप्लुतम् । अभवत्तरसा मुक्तकञ्चुकं तन्निपातनात् ॥ ३०
ततः क्रोधेन महता ज्वलन्निव हरिस्तदा । नाराचैर्विव्यधे चास्य शरीरं मर्ममेदिभिः ॥ ३१
शूलैर्नानाविधैस्तैः पातयामासवै रथम् । चिच्छेदच पुनश्चापं तारकस्य सहस्रशः ॥ ३२
तारकस्तरसाऽऽरुह्य रथमद्भुतमुत्तमम् । आदाय धनुरन्यच्च दृढं क्रोध विजृंभितः ॥ ३३
असृजच्छरजालं सः स्वयमेव तदा हरौ । ततस्ससंभ्रमं विष्णुर्मायावी बहुरूपभाक् ॥ ३४
तत्र तत्र स्थितश्शीघ्रं ववर्षे तारकोपरि । शतकोटि सहस्राणि शस्त्राण्यादाय शस्त्रवित् ॥ ३५
तारकोऽपि तदा तूर्णं मायामेनं समुच्चरन् । प्रभिन्नं शतशो विष्णुं जघानास्त्रैरसंख्यकैः ॥ ३६
एवं द्वादश वर्षांस्तौ युयुधाते परस्परम् । युद्धमल्लौ तदा विष्णुतारकौ भृशमुत्थितौ ॥ ३७
कौमोदकीं करेणाशु कैटभारिस्तदाऽसुरे । संधार्य तत्क्षणेनैव विचिक्षेप विभीषणाम् ॥ ३८
गदया ताडयामास गदां विष्णोस्तदा भृशम् । तारकस्तरसा हन्तुं स्वं बृहन्तां महाक्रुधा ॥ ३९
ताड्यमाना तदा तेन व्यपतद्दुःखिता इव । पृथिव्यां नन्दकोऽप्येवं व्यर्थतामगमत्किल ॥ ४०
तारकस्तु तदा तूर्णं विष्णोरभ्याशमागतः । भ्रामयित्वा गदां स्थूलां चचोरुक्तः क्रुधा द्विजाः ॥ ४१
आपतं तं महावीरं अभ्याशं प्रेक्ष्य माधवः । ध्वनयंश्च तदा शंखं प्रळयांबुदनिस्वनम् ॥ ४२
सुदर्शनं महाघोरं सर्वशत्रु निकृन्तनम् ॥ ४२३

मुमोच वज्रनिष्ठुरं तदास्य वक्षसि द्रुतम् । पतत्तदाप निष्फलतां विचित्रं तत्र भो द्विजाः ॥ ४३

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

शूरस्य परमेश्वरदर्शनम् ॥

ततस्तु तारके विष्णुस्तरसा शङ्खदारकम् । अभ्येत्याहस्स वचनं त्यक्तचक्रायुधः स्वयम् ॥ १
महोबलमहोधैर्य अहो सर्वास्त्रशिक्षता । नान्यत्रैतादृशं किंचिन्मुक्त्वा रुद्रं त्रियंबकम् ॥ २
त्वन्मात्रैवासुरश्रेष्ठ सत्यं पुत्रवती त्वया । बहुना किं ममागस्त्वं क्षमस्व परया मुदा ॥ ३
ततस्तु प्रीतमनसा विष्णुं दैतेयवल्लभः । संभाव्य बहुधा चैनं तारकस्तं निवर्त्य च ॥ ४
शूरस्य निकटं यातः साञ्जलिः प्रश्रयेण च । परिरेभे तदा शूरः प्रेम्णा चाघ्राय मस्तकम् ॥ ५
ततस्सर्वेऽपि संभूय चक्रवाळगिरिं ययुः । दृष्ट्वा तदद्भुतं दैत्याः स्वर्गलोकं प्रतस्थिरे ॥ ६
महेन्द्रस्तु तदाकर्ण्य भीतभीतस्तदा भृशम् । शच्या सह ययौ व्योम्नि पिक रूपेण शीघ्रतः ॥ ७
तस्य निर्गममार्गेण दैतेया दिवमागताः । आवृत्य सर्वतस्तांस्ते बध्वा देवान् विनिर्गतान् ॥ ८
लुण्ठयित्वा तदात्यर्थं महर्लोकं गताः खलु । तत्र स्थितैश्च ऋषिभिः प्रतस्थे पूजितस्तथा ॥ ९
जनोलोकं तपोलोकं प्रेक्ष्य शूरस्तु सेनया । सत्यलोकं गतस्तूर्णं विधात्रा समलंकृतम् ॥ १०
जगामाथ विधिस्सार्धं नवभिर्ब्रह्मभिः क्षणात् । अभ्येत्य शूरं प्रोवाच वाचा शीतळया भृशम् ॥ ११
पितामहोऽहं युष्माकं निवसाम्यत्र सर्वदा । त्वदैश्वर्यमिदं सर्वं ममैवासुरनायक ॥ १२
युष्मदागमनं चास्मान्मुरेऽप्येति मतिर्मम । तवानुजानां भूयांसि संविमान्यायुधानि वै ॥ १३
ब्रह्मास्त्रं स्यन्दनं रम्यं इत्युक्त्वाऽदात्तदा विधिः । ततस्तु वेधसं शूरस्संभाव्य सुतरां द्रुतम् ॥ १४
विष्णुलोकं जगामाथ सहसैन्यैस्सहस्रशः । श्रुत्वा तदागमं विष्णुर्भूरणुस्तं सहसागमत् ॥ १५
कृपया तव दैत्येन्द्र लोकेऽस्मिन्निवसे मम । द्रष्टव्यश्च त्वया लोकस्सम्यक् त्वत्सैनिकैर्मम ॥ १६
इत्युक्त्वा तु तदा दैत्यैरागमत्पत्तनं हरिः । तत्र तत्र विचित्राणि तेषां संदर्शयन्मुहुः ॥ १७
पुनश्चासुरवर्यस्य दत्वा द्रव्याणि भूरिशः । उपचारं तदात्यर्थं अवदन्मधुसूदनः ॥ १८
ततस्सुप्रीतमनसः शूरपद्मा हरिं तदा । प्रीणयित्वाऽतिरम्येण वचसा निर्ययौ क्षणात् ॥ १९
शिवलोकं तदारम्यं शुभ्रं रुद्रैस्सहस्रशः । गणनाथैस्तथा देवैर्मुनिभिश्च महात्मभिः ॥ २०
प्राकार गोपुराट्टाल वलभीभिस्समं ततः । सहस्रस्तंभयुक्तैश्च मण्टपैर्मण्डितं तथा ॥ २१
रुद्रकन्या सहस्रैश्च नानारत्न विभूषितैः । वीणा वेणु मृदङ्गाद्यैर्भेरी काहळिडिण्डिमैः ॥ २२
नाट्यवादित्र कुशलैर्गायकैः किंनरैस्तथा । वेदघोषैस्तथाश्चर्यैस्सर्वदा परिशोभितम् ॥ २३
दृष्ट्वा शूरस्तु तरसा दूरतस्सांजलिस्तदा । सेनां निवर्त्य सिंहास्यतारकाभ्यां समन्वितः ॥ २४
मन्दं मन्दं तदाऽभ्येत्य मनसा संस्मरन् शिवम् । महादेवालयं तत्र महाविभव विस्तरम् ॥ २५
नानारत्नैर्विचित्रैश्च चित्रितं सुमनोहरम् । प्राकारैः परितो रम्यैस्सुरम्यं द्रुतकाञ्चनैः ॥ २६
अश्वत्थपर्णैश्च तथा स्वर्णतोरण निर्मितैः । विलसद्वृषभैश्चापि नानादिक्षु व्यवस्थितैः ॥ २७
इतस्ततश्च सौवर्णमण्डपाण्डैरनेकशः । सोपानैश्च तथा कान्तं प्रवाळेन्द्रोपलैः क्रमात् ॥ २८

वीक्ष्य चक्षुष्मतामाप साक्षाद्दक्षिणां तदाऽसुरः । कृत्वा दण्ड नमस्कारान् भ्रातृभ्यां सह सौनतः ॥ २९
धृतत्रिपुंड्ररुद्राक्ष मालाभिः परिशोभितम् । नन्दीश्वरं तदा दूरात् प्रथमद्वारमाश्रितम् ॥ ३०
भूतिभूषितसर्वांगं रुद्राक्षपरिमण्डितम् । कर्णकुण्डलकाग्र्यांच शोभमानमुखांबुजम् ॥ ३१
धृतवेत्रकरं देवं द्वारपालधुरंधरम् । अनेककोटिगणपैरावृतं पार्श्वयुग्मतः ॥ ३२
महाभीमैर्महाक्रूरैर्महासंहारकारिभिः । मत्तोन्मत्तैर्महावीरैर्महाबलपराक्रमैः ॥ ३३
ब्रह्मांडपण्डं संहर्तुं भूतवेषैरिव स्थितैः । समुद्रांश्चुलुकोदेन पिबद्भिरिव हुंकृतैः ॥ ३४
सुरूपैश्च विरूपैश्च कुरूपैरपरूपकैः । द्विपादैश्च त्रिपादैश्च चतुष्पादैरपादकैः ॥ ३५
एकपादैस्तथा चान्यैरेकहस्तैर्द्विहस्तकैः । त्रिकरैश्च चतुर्हस्तैर्हंसहयवक्त्रैर्गजाननैः ॥ ३६
व्याघ्रवक्त्रैस्तथा चान्यैस्तरक्षुमुखभीषणैः । मृगाननैः खरास्यैश्च गोवक्त्रैर्महिषाननैः ॥ ३७
गोमायुवक्त्रकैश्चापि ऋक्षास्यैश्शशवक्त्रकैः । एकवक्त्रैर्द्विवक्त्रैश्च त्रिवक्त्रैर्बहुवक्त्रकैः ॥ ३८
दृष्ट्वा संफुल्लमनसा प्रणनाम तदा भृशम् । ततस्तु नन्दी प्रोवाच शूरपद्मानमीक्ष्य तम् ॥ ३९
महता क्रतुना पूर्वं शंभोः पूजा कृता खलु । त्वया प्राप्तममीष्टंच किमर्थश्चागमस्तव ॥ ४०

शूरः —

देवदेवं जगन्नाथं मन्नाथंच विशेषतः । नमस्कर्तुं ममैतस्मात् किंकार्यं वदमे प्रभो ॥ ४१
तस्मादवसरं प्रेक्ष्य सेवार्थं मानयाधुना । नन्दी ततः प्रविश्यान्तः पुरं ईशं व्यजिज्ञिपत् ॥ ४२
अनुज्ञातस्तदा तेन शंभुनाचागतोऽसुरः । ततस्तु शूरपद्मासौ नन्दिनान्तर्विवेशह ॥ ४३
तत्र तत्र स्थितान् द्वारे गणपान् संप्रणम्यच । कृतांजलिपुटो ध्यायन् भक्त्या चांतःपुरं गतः ॥ ४४
ददर्श देवमीशानं महादेवं त्रियंबकम् । सत्यज्ञानानंदमयं साक्षात् कैवल्यदायकम् ॥ ४५
ऋतं सत्यं परं ब्रह्म पुरुषं नीललोहितम् । ऊर्ध्वरेतसं विरूपाक्षं(?) अप्रमेयं परात्परम् ॥ ४६
अष्टाविंशतितंत्रैश्च कामिकाद्यैरभिष्टुतम् । वेदैश्चतुर्भिश्च सदा स्तूयमानपदांबुजम् ॥ ४७
रुद्रकन्यासहस्रैश्च नाट्यशैस्सुन्दरैस्तथा । मृणालसूत्रविलसच्चामरासक्तपाणिभिः ॥ ४८
शिञ्जन्मञ्जीरनिनदैर्नृत्यद्भिश्च समंततः । मुकुंदसरूपैश्च तथा त्रिणेत्रैः कालकन्धरैः ॥ ४९
कुम्भेन च निकुंभेन गणपैश्च महात्मभिः । सनकमुख्यैश्च ऋषिभिः सेवितं परमेश्वरम् ॥ ५०
प्रणनाम तदा प्रीत्या भक्त्या शूरस्सहानुजः । नमस्तेऽस्तु महादेव सृष्टिस्थित्यंतकारिणे ॥ ५१
भक्तवत्सल विश्वेश विश्वरूपाय शंभवे । शिवाय भीमरूपाय शान्तरूपाय शङ्कर ॥ ५२
सांबायते ससोमाय सपुत्राय नमोनमः । गङ्गाधराय भर्गाय साक्षात्कैवल्यरूपिणे ॥ ५३
शुद्धस्फटिकसंकाशमूर्तये ब्रह्मणे नमः । इति स्तुत्वा स्थितास्तत्र प्रश्रयेण तदासुराः ॥ ५४
ततस्तु देवदेवेशश्शैलादिं प्राह शंकरः । मद्भक्तश्शूरपद्मासौ दृष्ट्वाण्डानि निजानिसः ॥ ५५
मदाज्ञया गतस्तेषु पालकान् परिकल्प्य च । निवृत्तोऽस्मिन्नण्डमध्ये वसत्वत्र सहानुजैः ॥ ५६
इत्यादिष्टो भगवता नन्दी प्रोवाच तं द्विजाः । शूर गच्छ स्वकीयानि दृष्ट्वाऽण्डानिच पालकान् ॥ ५७
परिकल्प्य वसाण्डेऽस्मिन् ईश्वरश्चाज्ञाच शांभवी । शूरस्तु तरसा देवं शंकरं लोकशंकरम् ॥ ५८
प्रणम्यच पुनस्तार्कं भ्रातृभ्यां निर्ययौ क्षणात् । नंदीश्वरं नमस्कृत्य प्रथमद्वारमाश्रितम् ॥ ५९
अनुज्ञातस्तु तेनाशु सेनामाप निजां तदा ॥ ६०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे षष्ठोऽध्यायः ॥

---

॥ अथ सप्तमोऽध्यायः ॥

शूरपद्म नगरनिर्माणम् ॥

सेनया सहितश्शूरः प्रतस्थेऽण्डान्यवेक्षितुम् । ब्रह्माण्डभित्तिं तरसा प्राप रुद्रैश्च पालिताम् ॥ १
ततस्तु रुद्रास्तं दृष्ट्वा सेनया चागतं तदा । शिवाज्ञयाच तस्याशु मुमुचुः पदवीं निजाम् ॥ २
बहिर्ब्रह्माण्डस्य ते यातास्सर्वेऽपि किलिकिंचिलैः । तेषु तेषु तदा तूर्णं अण्डेष्वेते महौजसः ॥ ३
गत्वाचैवं विजित्यारीन पालकान् स्थाप्य तत्रच । भुक्त्वाच विविधान् भोगान निर्ययुस्सहसाऽसुराः ॥ ४
एतदण्डं तदा सर्वे क्षणादेवागताः किल । विज्ञाय चागमं तेषां रुद्रास्त्वंडाधिपास्तदा ॥ ५
ब्रह्मांडभित्तिं छित्वैव यथामार्गं ददुर्द्विजाः । ततस्तु शूरपद्मासौ अञ्जसा दिवमागतः ॥ ६
वक्त्रैर्नानाविधैरभ्रैर्धावद्भिश्च परस्परम् । अथासुरेन्द्रस्तरसा शुक्रेणैनं सहाप सः ॥ ७
मातामहः क्षीणबलो देवैः पूर्वं रणाङ्गणे । शुक्रेणच स्वबन्धुत्वमस्मै प्रोवाच पण्डितः ॥ ८
ततश्शूरस्तु दैत्यानां गुरुं दैत्येन्द्रमेवच । नत्वा संपूज्य बहुधा प्रीत्याच परया तदा ॥ ९
दिग्जयंच तथाण्डेषु गमनं चाब्रवीत्तयोः । ताभ्यांतु सहितस्तूर्णं भ्रातृभिश्च बलैश्च सः ॥ १०
जगाम भूतलं शूरपद्मासौ भृशमुज्वलः । तच्छ्रुत्वातु ततो देवा विष्णुलोकं भयान्विता ॥ ११
आजग्मुस्तरसा हरणा भृशमेतद्भयान्विताः । दृष्ट्वाच विष्णुं प्रोचुस्ते जनार्दनमरिन्दमम् ॥ १२
रक्षणीयास्त्वया देवा दैत्येभ्यो भीतमानसाः । इत्युक्त्वा प्रथया नम्रान् देवान् प्रोवाच माधवः ॥ १३
अहो देवा वृथा किं वा यद्यूयं मूढबुद्धयः । दक्षाध्वरे महादेवं राजानं चाध्वरस्य ते ॥ १४
हित्वा यूयं मया सार्धं हविर्भाजः स्थिताः खलु । तदानीमेव तत्पापं फलमस्माभिरेव च ॥ १५
भोक्तव्यं पुनरस्यच्च तत्पापस्य फलं ध्रुवम् । तस्माद्दैत्यवरश्शूरः प्रीणनीयो यथातथा ॥ १६
इत्युक्त्वा प्रययौ सार्धं त्रयस्त्रिंशद्भिरञ्जसा । कोटिदेवैस्तदा शूरं साक्षान्नारायणः स्वयम् ॥ १७
शूरपद्मानमभ्येत्य विष्णुर्भृशमुखैन्नोऽब्रवीत् । कुशलं तेऽसुरश्रेष्ठ भ्रातृभिस्सह सैनिकैः ॥ १८
रक्षितामितसंघाय शत्रूणां भीषणायच । एतावत्कालपर्यन्तं दययाते स्थितोऽस्म्यहम् ॥ १९
ततस्तु शूरपद्मासौ प्रीणयित्वा हरिंतदा । देवानां मध्यतो रुद्रान् बहून् दृष्ट्वामितौजसः ॥ २०
एते केवारुद्ररूपा बूहि मे माधवाधुना । त्रिणेत्रा नीलकण्ठाश्च किमर्थं देवमध्यगाः ॥ २१
इति तस्य वचः श्रुत्वा प्राह तं पुरुषोत्तमः । विष्णुः – पुरा ब्रह्मा रजोयुक्तो वृथाहंकारगर्वितः ॥ २२
अहमेव जगत्कर्ता संहर्ता पालकस्तथा । विस्मृत्य शिवलीलांसः महामायाविमोहितः ॥ २३
ततस्तु सृष्टिसामर्थ्यं गतमस्य शिवाज्ञया । अहो मूढेन मनसा मया किंवा विचेष्टितम् ॥ २४
शिवस्य माया दुर्लंघ्या सर्वसंमोहकारिणी । यस्माच्छिवं महादेवं मम कर्तारमव्ययम् ॥ २५
अविज्ञायाखिलोद्धारं सृष्ट्यादिकरणोद्यमम् । अहंकृतं मयात्यर्थं प्राप्तमेतत्फलं ध्रुवम् ॥ २६
इति चिन्तापरवशो भ्रूमध्ये सांबमीश्वरम् । त्रिणेत्रं नीलकण्ठंच प्रफुल्लाननपङ्कजम् ॥ २७
कुन्दमंदस्मितमुखं मुक्तादामविराजितम् । कोटिसूर्यप्रतीकाशं शुभ्रपीठासनेस्थितम् ॥ २८
ध्यायन्नास्ते भृशं शंभुं सच्चिदानन्दविग्रहम् । ततस्तु प्रीतमनसा रुद्रानेकादशेश्वरः ॥ २९
न्ययोजयत्तदारुद्रा भ्रूमध्ये ब्रह्मणः क्षणात् । प्रादुर्बभूवुस्तान् ब्रह्मा प्रणम्योवाच भक्तितः ॥ ३०
केयूयमागतास्सत्र किमर्थमिति विश्वसृक् । विनियुक्ता वयं रुद्रास्सृष्ट्यर्थं तेऽधुनाविधे ॥ ३१
शंभुना देवदेवेन प्राप्तास्तस्मात्तवान्तिकम् । ततस्तु रुद्रान् प्रोवाच ब्रह्मा रुद्रपरायणः ॥ ३२

युष्माभिरेव कार्या सा सृष्टिस्सर्वेश्वराज्ञया । तच्छ्रुत्वातु ततो रुद्रा ब्रह्मणो वचनं तदा ॥ ३३
अकुर्वन्रुद्रसृष्टिंते प्रत्येकं कोटिसंख्यया । रुद्रान् बहून् तदा दृष्ट्वा सृष्टान् रुद्रैर्महात्मभिः ॥ ३४
आवृतंतु जगज्जालं रुद्रैराह प्रजापतिः । अलमेषां महात्मानो रुद्राणां सृष्टिरीदृशी ॥ ३५
इतः परं मयैवेयं क्रियते युष्मदाज्ञया । इत्युक्त्वा सहतैर्ब्रह्मा रुद्रैकादशकैस्तथा ॥ ३६
तदुद्भूतैश्च रुद्राणां एकादशककोटिभिः । रुद्रलोकं जगामाशु नानाविभव विस्तरम् ॥ ३७
तत्र गत्वा महादेवं नन्दिद्वारा व्यजिज्ञपत् । नन्दिनातु समाहूतो विवेशान्तःपुरं विधिः ॥ ३८
तत्र दृष्ट्वा महादेवं लोकानुग्रह कारिणम् । प्रणम्य दण्डवद्भूमौ स्तुत्वाच बहुभिः स्तवैः ॥ ३९
स्थितस्तु देवदेवेन पृष्टस्स्रष्टा शिवेन सः । किमर्थमागतश्चेति प्राह वाचं भयान्वितः ॥ ४०
स्थानाशनदोषं रुद्राणां तत्सृष्टिं च शिवाज्ञया । रुद्रसृष्टिं च बह्वीं स तदानीमेवमादिकाम् ॥ ४१
ततस्तु तं महेशानः प्रेक्ष्यफुल्लांबुजाक्षिणा । अद्य प्रभृति सृष्टिं त्वं कुरु ब्रह्मन्मदाज्ञया ॥ ४२
मवलेपं विमुक्त्वैव यथापूर्वंच देहिनाम् । रुद्रानेकादश तदा भुवनं समचोदयत् ॥ ४३
सुरेष्वेकादश तथा कोटी रुद्रानकल्पयत् । तैस्सार्धं देवताः कोट्यस्त्रयस्त्रिंशन्मिताः खलु ॥ ४४
ब्रह्मातु देवमीशानं नमस्कृत्वा स्थितिंगतः । तइमे शूर शूराणां रुद्राः प्रोक्ता मयाऽधुना ॥ ४५
तच्छ्रुत्वा शूरपद्मासौ रुद्राणां सृष्टिमद्भुताम् । प्रीतिमापातुलं भ्रातृ सैनिकैर्मोघवेन सः ॥ ४६
ततस्तु शूरपद्माख्यं पुरं शुक्रेण चोदितः । लवणाब्धौ तदा रम्यां त्वष्ट्राऽकारयदद्भुताम् ॥ ४७
यस्येऽशीति सहस्रेण योजनानां विशालतः । शतयोजनविस्तारविनियुक्तामनेकशः ॥ ४८
प्राकार परिघाभ्यांच मेखलाभ्यामिवावृताम् । चतुर्द्वार्स्थं महोच्छ्राय गोपुरा मंडमानतः ॥ ४९
मण्डपश्च तदास्तूपाश्चतस्रो ददतीमिव । वापीकूपतटाकैश्च कासारैः परितो वृताम् ॥ ५०
चतुर्दिक्षु स्थितोद्यान षण्डकानन मण्डिताम् । नालिकेराम्रपनसपाटलैर्मधुकैस्तथा ॥ ५१
अशोकपूगहिंतालतालनारङ्गमातुलैः । जंबूप्लक्षनमेर्वश्शिशल्मलीपारिजातकैः ॥ ५२
कुद्दालवटमन्दारबकुलाश्वत्थनिंबकैः । जंबीरबीजपूराक्षलोध्रराजादनैस्तथा ॥ ५३
शिरीष श्रीफलांकोल हुलका गुरु चन्दनैः । तिंत्रिणीवरण द्रुक्षा ककुभा युग्म पत्रकैः ॥ ५४
तमाल तिलकाद्यैश्च शतशः परितो वृताम् । वलभ्यट्टाल हर्म्यैश्च सोपानावलि राजितैः ॥ ५५
अलिन्द देहली नीप जालकैश्च मनोहरैः । गृहैर्मणिमयश्चितैश्शतशोऽथ सहस्रशः ॥ ५६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे सप्तमोऽध्यायः ॥

---

॥ अथ अष्टमोऽध्यायः ॥

इल्वल वातापि जन्म कथनम् ॥

सूतः —

मध्येचास्य गृहं तस्य शतयोजन संख्यया । सहस्राणां तदा रम्य प्राकार परिखावृतम् ॥ १
चतुर्षु द्वारदेशेषु महागोपुर भूषितम् । अनेकाङ्गण संयुक्त प्रासाद सुमनोहरम् ॥ २
वेदिका शतसंघैश्च स्फाटिकोपल निर्मितैः । निश्रेणिकायुतैर्विविधैः नाना दिक्षु व्यवस्थितैः ॥ ३

भित्तौ नानाविधैश्चित्रैः चित्रितं सर्वतो भृशम् । क्रीडा पर्वत संघैश्च वापी जालैस्समंततः ॥ ४
कूपैरनेकशस्तद्वत् पृथुवापीभिरावृतम् । आरामवृन्दैश्च तथा सर्वर्तुकुसुमोज्ज्वलैः ॥ ५
प्रमदावनषण्डेन मण्डितं परितस्तथा । यागशालासहस्रेण राजितं सर्वदिक्ष्वपि ॥ ६
भोगशालाभिरभितो गानशालाभिरावृतम् । पाकशालाशतेनापि विशालेनसमंततः ॥ ७
भूषणानां च शालाभिर्युद्धशाला शतैस्तथा । मल्लशालाभिरभितो नृत्तशालाभिरावृतम् ॥ ८
विप्रभोजनशालाभिर्गजाश्वानां तथैव च । आस्थानमण्डपानांच राजिभिः परिशोभितम् ॥ ९
देवासुर भटानां च मन्त्रिणां मंटपैस्तथा । एकान्तमण्डपैश्चापि नानारत्न विचित्रितैः ॥ १०
मुक्ताविरचितैरन्यैर्मण्डपैस्सुमनोहरैः । प्रवालमण्डपैश्चापि चारुतेजोस्वर्णैस्तथा ॥ ११
वैडूर्यरत्नखचितैर्बहुभिर्मण्डपैरपि । पुष्परागैस्सुभैश्चापि रचितैश्शुभ्रमुज्ज्वलैः ॥ १२
पद्मरागैरनेकैश्च तेजोराशि विजृंभितैः । तथा मरतकैश्चावत्कान्तिजालपरिप्लुतः ॥ १३
इन्द्रनीलैश्च भूयोऽपि त्रासदोषविवर्जितैः । वज्रोपलैरनर्घैश्च कृतैरन्यैर्मनोहरैः ॥ १४
शुद्धस्फटिकसंघैश्च गोमेदकशिलाचितैः । हरिचन्दनवृक्षौघैस्सुगन्धैरपि चित्रितैः ॥ १५
पद्ममादिभिरन्यैश्च मण्टपैश्चारुमण्डितैः । इतस्ततश्च परितः कृतैस्सर्वश शोभितम् ॥ १६
अनेककोटिमाणिक्यखचितं तत्र तत्र च । पताकाभिर्गताकाशपदवीभिस्तदा भृशम् ॥ १७
व्यक्तचन्द्राकलोकस्य स्पर्धयैव समन्ततः । मुक्तामाणिक्यखचितकवाटैश्च सहस्रशः ॥ १८
नानादारु शिलाभ्यांतु तस्कराभ्यां जनाशयम् । कारयित्वाति रूपेण पुरोनाम चकार सः ॥ १९
वीरमाहेन्द्र शब्देन प्रथितं भुवनत्रये । पुराणि तस्याः परितः चित्राण्यष्टौ तदासुरः ॥ २०
हेमाख्यंच पुरातद्वद्देवाभिधमतः पुरम् । लंकापुरं तथान्यच्च नीलाख्यं श्वेतसंज्ञितम् ॥ २१
असुराणां पुरं तद्वद्रामाख्यंच महत्पुरम् । पद्माभिधं पुरं तद्वत्कारयामास पण्डितः ॥ २२
एवमुत्तरदिग्भागे समुद्रस्य तदासुरः । आसुराख्यां पुरीं रम्यां सर्वरत्न विचित्रिताम् ॥ २३
तथा दक्षिणतो मेरोर्द्वीपे जंबभिधे पुरम् । हेमकूटाद्रि निकटे मायाख्यं सुमहद्भृशम् ॥ २४
द्वीपे द्वीपेच नगरं अब्धावब्धौ च सर्वतः । कारयामास बहुशः शूरपद्मा महासुरः ॥ २५
ततस्तु वीरमाहेन्द्र पुरं प्राप तदाशु सः । दृष्ट्वा तत्र विचित्राणि क्रमेण गृहमाविशत् ॥ २६
तत्र गत्वाऽसुरश्रेष्ठस्सह विष्ण्वादि दैवतैः । भ्रातृभिश्च तदा तूर्णं सिंहासनमधिष्ठितः ॥ २७
ब्रह्मातु तस्य मकुटं शिवमादाय दत्तवान् । पट्टाभिषेकं च तदा चकार मतिमान्सुरैः ॥ २८
ततस्तु सर्वैर्दैत्येन्द्राः सन्तोषं प्रापुरञ्जसा । विष्णुमालोक्य शूरोऽयं प्राह सन्तोषतस्तदा ॥ २९
यदाहूतो मया विष्णो तदागच्छाधुना व्रज । दिक्पालांश्च तदेशानमेकादशक कोटिकान् ॥ ३०
रुद्रानेवं विमुच्यैवं सिंहास्यं तारकं तदा । निवेशयित्वा देवानां प्रत्येकं कार्यमाह सः ॥ ३१
ताम्बूलकरकपात्रंतु पुरुहूताय दत्तवान् । अग्नेर्यमस्यापि तथा पानीयत्वं समादिशत् ॥ ३२
भृङ्गारपात्रं निर्ऋतेर्व्यजनं वरुणस्यतु । वायोश्चामरकञ्चैव धनदस्य तथासुरः ॥ ३३
पूगभक्त्रां तथा चन्द्रसूर्ययोश्छत्रमेवच । असुरेन्द्रस्य खड्गंच दत्वातु सुमनोहरम् ॥ ३४
सिद्धविद्याधरगणैः किन्नरैर्गरुडैस्तथा । गीयमानश्च परितो नानागान विशारदैः ॥ ३५
रम्भोर्वशीमेनकाभिर्नृत्यन्तीभिर्निषेवितः । एवं सिंहासनारूढो देवांश्च परितः स्थितान् ॥ ३६
प्रेक्ष्य शूरो मरुत्वन्तं तदा प्राह सुरेश्वरम् । देवैस्सह मदीयैस्त्वं पुरुषैश्चोदितः कृषिम् ॥ ३७
कुरु नित्यं मयादेष विमुच्याहंकृतिं वृथा । अग्निमाह तदा शूरो दैत्यैः स्पृष्टोऽपि पाचक । ३८

मा दहेति तथा तेषां पाकं कृत्वा पुरे वस । यम त्वं शान्तरूपेण प्रेक्षयस्वर्यैर्दितेस्सुतैः ॥ ३९
निवसात्र तथा तेषां निधनञ्चाप्यकारयन् । वरुणेन त्वया शीतगन्धोदेनैव सेचनम् ॥ ४०
सदा कार्यं मदीयेऽस्मिन् पत्तने सावधानतः । मन्दं मन्दं त्वया वायो वातव्यं गन्धशीतलैः ॥ ४१
कुसुमांशु विन्दुभिर्नित्यं मुग्धनारी कुचे क्षिपन् । तथा संमार्जनं चापि कृत्वा भीतेन सर्वतः ॥ ४२
कुबेर त्वं दद द्रव्यं भटानां यदपेक्षितम् । शङ्ख पद्मनिधी हित्वा सर्वदा सावधानतः ॥ ४३
गोपुरद्वारदेशे त्वं स्थित्वा सूर्यातपं कुरु । अधर्मधर्मपूपता मूषयमङ्गना मम ॥ ४४
शीतांशुना त्वया पूर्णकलायुक्तेन सर्वदा । मनस्विनी मनोभिरवा कार्या मे नर्मदूतता ॥ ४५
वसत्या दिनशुद्धिश्च त्वया ग्रहन् विशेषतः । स ह पुत्रैश्च दशभिः प्रजापतिभिरन्नवै ॥ ४६
एवं नानाविधानां सः देवानां चतुरस्तदा । प्रोक्त्वा कार्यविशेषाणि स्वयं सिंहासने स्थितः ॥
शुक्रेण गुरुणा चापि प्रोक्षितस्सन् कुशोदकैः । ४७

प्रतिदिनमिति देवैरिन्द्रपूर्वैर्वरोऽयं दितितनुज समूहैस्शूरपद्माऽसपत्नः ।
कृतनिजहृपिसंधसस्ततं सार्वभौमस्समधिगतबहुश्रीर्भ्रातृभिर्भूसुरेन्द्राः ॥ ४८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे अष्टमोऽध्यायः ॥

---

॥ अथ नवमोऽध्यायः ॥

इल्वलवातापि जन्मकथनम् ॥

ततस्तु शूरपद्मोऽयं त्वष्टुः कन्यां मनोरमाम् । उदुवाह विशेषतः पद्मकोमळकां ततः ॥ १
चत्वारस्तनयास्तस्या बभूवुस्सुयलोकदाः । भानुकोपाभिधः कश्चित्तथा चाग्निमुखोऽसुरः ॥ २
हिरण्यनामाच परो वज्रबाहुस्तथेतरः । वैश्वकन्या तथा यक्षीरसुराणांच कन्यका ॥ ३
राक्षसीश्च तथा भूयो गन्धर्वाणांच कन्यकाः । सिद्धविद्याधराणांच नागानामपि कन्यकाः ॥ ४
[किंपुरुषाणां पततां किन्नराणांच कन्यकाः]
उद्वाह्य तदा पुत्रान् स्वासु वीर्यबलान्वितान् । त्रिसाहस्रमितान् शीघ्रं प्रजीजनदहो द्विजाः ॥ ५
सिंहाननं तारकंच कोटिद्वय बलैस्सह । प्रत्येकमाशु तौ वीरौ आसुराख्ये पुरेक्रमात् ॥ ६
मायापुरेच महति प्रेरयामास वीर्यवान् । तत्र गत्वातु सिंहास्यो यास्यां कन्यां विभूतिकाम् ॥ ७
उद्वाह पुत्रं तस्यां सः महाशूरमजीजनत् । एवं कन्या विवाहार्थं शतपुत्रानजीजनत् ॥ ८
तारकोऽपि तथा कन्यां निर्ऋतेस्सौरिवां तदा । असुरेन्द्राभिधं पुत्रं धर्मासक्ताशयं भृशम् ॥ ९
उवाच स्वपुरे रम्ये रममाणोऽयमत्तदा । पुनस्तु शूरपद्मायं प्रतिद्वीपं तथासुरान् ॥ १०
त्रिकोटिगणितांश्चैव वाहिनीः प्रैरयत्रिल । पाताळ भूमि नाकेषु वाहिन्यागणितांस्तदा ॥ ११
षट्कोट्या बहुधा विभ्रानसुरान् विन्यवेशयत् । वीरमाहेन्द्रपुर्यांस्तु परितोऽस्पुरेऽव्ययम् ॥ १२
गजाननं सुरद्वारं वाळिवक्त्र तथेतरम् । भल्लूकवक्त्रमपरं व्याघ्रवक्त्रं महाबलम् ॥ १३
वाराहमुखमन्यश्च सिंहवक्त्रं तथेतरम् । गणपान्यभिमानाढ्यान् महावीरान् महौजसः ॥ १४
अशीतिवाहिनीभिस्तान् सहस्राणां न्ययोजयत् । स्वपुरेऽपि तथा शूरो वाहिनीनाश्च लक्षकम् ॥ १५
बलं तथा गोपुरेषु प्राकारेष्वेवमादिषु । स्थापयामास शूरोऽयं बहुवीर्यपराक्रमान् ॥ १६

दुर्गुणं धर्मकोपंच दुर्मुखं शङ्खपालकम् । वज्रपालंच मर्मज्ञं मद्दिपाख्यञ्च मन्त्रिणम् ॥ १७
कृत्वा शूरस्तु तैस्सार्धं राज्यभारं तथावहत् । देवा देवेन्द्रमुख्याश्च ऋषयश्च तपोधनाः ॥ १८
शूरं सिंहासनं सद्द्वारकञ्च दिनेदिने । तत्पुत्रान्मन्त्रिणश्चापि दृष्ट्वा तैश्चोदिताः क्रियाः ॥ १९
कृत्वा तस्थुर्महाभीता गरुडं पन्नगा इव । कदाचिदमरानिन्द्रपूर्वान् प्रेक्ष्यासुरोत्तमः ॥ २०
आनेतव्याश्च बहवो मीना युष्माभिरञ्जसा । इत्यब्रवीत्तदा देवा भृशं दुःखित मानसाः ॥ २१
ओमित्युक्त्वाथ सर्वेऽपि संभूयाब्धिं गताः खलु । दक्षाध्वरकृतं दोषं स्मृत्वा स्मृत्वा भयद्रुताः ॥ २२
वरुणं प्राह देवेन्द्रस्त्वया मीनास्समुद्गताः । नेतव्या भूरिशस्तूर्णमित्येवंच भयान्वितः ॥ २३
ततस्तु वरुणश्शीघ्रं नळमीनान्बहूनपि । तिमिङ्गलानपि तदा तिमिङ्गिल गिलांस्तिमीन् ॥ २४
मकरादींश्च सहसा वारिधेरानयत्तटे । सूर्यस्तु शोषयामास यमः प्राणानपाहरत् ॥ २५
नागपाशेन बध्वा तान् शूरवेश्मापुरञ्जसा । स्थित्वाऽसुरस्तदा प्रेक्ष्य शूरो वाचमुवाच ह ॥ २६
एवं प्रतिदिनं देवा नेतव्यं मीनजालकम् । इति कृत्वा पुरा तस्थुर्वारं वारं भयान्विताः ॥
ऋषयः — अजामुखीति या प्रोक्ता पूर्वं सूतमहामते ॥ २७
तस्याश्चरित्रं किंवास्यात् सूत सर्वं यथातथम् । सूतः - शृण्वन्तु तस्याश्चरितं वदतो मे द्विजोत्तमाः ॥
महाक्रूरा महापापा महाकामवशं गता । धञ्चरनायत्तहृदया सर्वगा सर्वदाच सा ॥ २९
चतुर्दशसु लोकेषु सञ्चरन्ती निजेच्छया । तत्र तत्र स्थितान्विप्रान्नृपानन्यान् सुरानपि ॥ ३०
असुरांश्चैव रक्षांसि सुन्दरानपरानपि । यूनश्च धार्मिकानेवं यंवा यंवा परिस्थितम् ॥ ३१
सहस्रपुरुषानेवं धर्षयत्येकवासरे । तथा मार्गस्थिता रम्या बालाः प्रौढाश्च कन्यकाः ॥ ३२
बलात्कारेण बध्वा ता भ्रातृभ्यः स ददाति सा । यागानां तपसां चापि विघ्नं कृत्वैव तिष्ठति ॥ ३३
एवं स्थित्वा महाघोरं कर्म कृत्वा कदाचन । आसाद्य ऋषिवर्यं सा दुर्वाससमथाब्रवीत् ॥ ३४
पुत्रार्थं स्वामिनापन्ना दुर्वासस्तपसां वर । कर्तव्यश्च मया साकं संभोगस्त्वरयाधुना ॥ ३५
दुर्वासा वचनं तस्यास्त्वश्रुत्वात्यन्तं भयं गतः । गच्छ त्वं बालिशे सोऽहं अशक्तः खलु तापसः ॥ ३६
इति ब्रुवन्तं तं भूयो बलात्कारेण सा भृशम् । अधरं परिगृह्याशु चुचुंबोष्ठेन तस्यच ॥ ३७
उत्तानयित्वा सास्वथं रमयामास तं बलात् । तयोस्सुरतवेगेन जातौ पुत्रावरिन्दमौ ॥ ३८
इल्वलाख्यश्च वातापिः पितृ मातृ स्वरूपिणौ । दुर्वाससं कृशाचित्तौ पितरं प्रेक्ष्य दुर्जनौ ॥ ३९
तपोबलमिदं सर्वमावयोर्दीयतां तव । इत्यूचतुस्तदा क्रुद्धो दुर्वासास्तावपेक्ष्य सः ॥ ४०
भ्रान्तौ कथं दुरात्मानौ दातव्यं तपसः फलम् । एवमुक्त्वानपेक्ष्यैतौ दुर्वासास्तपसि स्थितः ॥ ४१
ततस्तु तावुपि हन्तुं प्रवृत्तौ पापिनौ तदा । तौ दृष्ट्वा मुनिशार्दूलस्तावुभौ क्रोधविह्वलः ॥ ४२
दुरात्मानौ युवामेवं दृष्ट्वा ऋषिषु दुष्क्रियाम् । यातं निधनमित्येवं शशाप ऋषिसत्तमः ॥ ४३
अथेल्वलदशकारासाधुद्दिश्य विधिमध्वरम् । नियमेन समायुक्त चिरकालं द्विजोत्तमाः ॥ ४४
सद्यः प्रसादलाभाय छित्वा वातापिमिल्वलः । हुतशाश्वतशश्चैव जुहावाग्नौ तदासुरः ॥ ४५
ततस्तु तरसा ब्रह्मा प्रादुरासीत् क्षणाद्दद्दो । प्रसन्नोऽस्मि तवाद्याहं दृष्टं यद्ब्रूहि सेऽनघ ॥ ४६
ददामि तद्वदाद्यैव सत्यमुक्तं मयाऽधुना । इल्वलः - वातापिमजरूपेण स्थितं दत्वा मृतं पुनः ॥ ४७
आह्वयामि यदाहं तं तदायातु स्वरूपवान् । तथेत्युक्त्वा पुनर्ब्रह्मा जगाम स्वपदं तदा ॥ ४८
ततस्तुतौ महावीरौ शूरपान्तमेत्य च । प्रणम्य परया प्रीत्या निजवृत्तान्तमूचतुः ॥ ४९

चिरकालमुषित्वात्र कुटकं देशमापतुः । तत्र गत्वा वने रम्ये पर्णशालां मनोरमाम् ॥ ४०
कृत्वान्यवसतां तत्र भुक्त्वा चैव यथेष्टतः । मार्गपर्यन्तभूस्थौ तौ पथिकान् ब्राह्मणान्नृपान् ॥ ४१
दृष्ट्वातु ऋषिरूपेण स्वयं गत्वा प्रणम्य तान् । अर्घ्यपाद्योदकञ्चापि दत्वाचासनमुत्तमम् ॥ ४२
निवेशयित्वा तत्रैतैश्चोदितस्सन् स्थितः स्थले । अस्मद्भाग्यवशाद्यूयं आगता ब्राह्मणोत्तमाः ॥ ४३
पितृ पूजा ममैतस्मिन् दिवसे कृत्वा भवेत् । इति चिन्तापरवशो निवसेऽद्य तपोधनाः ॥ ४४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे नवमोऽध्यायः ॥

---

॥ अथ दशमोऽध्यायः ॥

इन्द्रस्य इन्द्राण्यासाकं श्रीकापालनगरे निलीय अवस्थानम् ॥

इदानीं भूतलं चैतद्युष्माभिः समलंकृतम् । तस्माद्धन्यतमो लोके सोऽहं पुण्यप्रभावतः ॥ १
अङ्गीकारश्च कर्तव्यो युष्माभिर्भोजनाय वै । निमन्त्रयित्वा तानेवमित्वलः पापकर्मकृत् ॥ २
आहूय मेषरूपेण चरन्तं शाद्वलेष्वयम् । वातापिंच तदा हत्वा पक्त्वा पद्दौ तदा द्विजान् ३
आहूय भूरिदास्तेषामाकण्ठं भोजनं क्षणात् । दत्वातु पुनरभ्यैत्य पर्णशाला बहिः स्थलम् ॥ ४
आगच्छागच्छ वातापेऽस्यैवमुच्चैर्वदत्यसौ । ततस्ससंभ्रमं तूर्णं वातापिर्ब्राह्मणोदरम् ॥ ५
भित्वादाय तथा सप्त धातून्याति क्षणात् द्विजाः । एवं दिने दिने सोऽयं दुरात्मा ब्रह्मघातकः ॥ ६
स्थितस्तत्र यथाचेच्छा कर्मकृत्वा सुदुष्करम् । इत्युक्तमजपकथास्तस् चरित्रं ब्राह्मणोत्तमाः ॥ ७
अथ शूरस्य चरितं उच्यते पुनरेवच । इन्द्रलोकवधे शूरः स्थित्वाण्डेषु दिने दिने ॥ ८
गत्वा पातालमेकस्मिन्नामध्याह्न दिने स्थितः । पुनश्च शक्रावायाति वीरमाहेन्द्र पत्तनम् ॥ ९
तथा परस्मिन् दिवसे चामध्याह्नं भुविस्थितः । पुनर्गत्वा पुरं तद्भुवलोकं तथैव च ॥ १०
इन्दुमण्डलमप्याशु सौम्यमण्डलमेव च । शुक्रस्य मण्डलं तद्वत् सूर्यस्यापि च मण्डलम् ॥ ११
भूमारकस्यापि तथा गुरोरपि च मण्डलम् । सौरेश्च मण्डलं गत्वा ब्रह्मलोकं तथैवच ॥ १२
विष्णुलोकंच गत्वातु दृष्ट्वा तपस्य मद्भुतम् । मध्याह्नकाल पर्यन्तं तत्रतत्र दिने दिने ॥ १३
स्थित्वा स्थित्वा पुनर्याति रात्रिं रात्रिं तथाश्च । ततः कदाचिच्छूरोऽसौ शचीं रन्तुमना भृशम् ॥ १४
कामबाणेन सन्तप्तः स्वामात्यप्रमथादिशत् । इन्द्रं बध्वा तथेन्द्राणीं आनयाशु पुरं मम ॥ १५
आज्ञप्तश्च तदा भार्यो नवकोट्यः प्रतस्थिरे । तदागमनमाकर्ण्य शच्या साकं पुरन्दरः ॥ १६
पलायत पुराच्छीघ्रं भीतभीतमना भृशम् । ततस्तु साधितस्सिद्धैर्दैवलोकञ्जगाम सः ॥ १७
तत्र गत्वा सुरेन्द्रस्य निर्गमे दैवतैर्भृशम् । तादितैश्च सशूरवम् प्रापशूरंच महाबलः ॥ १८
वृत्तान्तं तन्मुखेनायं श्रुत्वा शूरो महाबलः । ततस्तु सर्वलोकेषु चारानाशु न्ययोजयत् ॥ १९
तदानीमपि देवास्ते भृशद्भुवगता द्विजाः । इन्द्रस्य विरहादेव देवलोके गतश्रियः ॥ २०
जयन्तं विष्णुलोकस्थं इन्द्रपुत्रं न्यजिज्ञिपन् । ऋषयः – किमर्थं सूतमुख्यायं जयन्तस्तु त्रिविष्टपम् ॥
विष्णुलोके स्थितस्तत्र वद नस्तपतावर । सूतः – द्विजाश्शृणुत सर्वेऽपि यूयं सावधानतः ॥ २२
पुरा दुरभयात्तस्तुनासीरेण सर्वतः । उपेन्द्र इन्द्रावाजो विष्णुलोक जगाम सः ॥ २३
जयन्तस्तु तदा यातो वीक्षितुं सहजं पितुः । विष्णुलोकं भयान्मुक्तं तत मारभ्य तिष्ठति ॥ २४

तमाहूय तदादेशात्तेन स्वर्गं प्रपेदिरे । जयन्तस्तु पितुश्शोकात् भृशकर्शितविग्रहः ॥ २५
देवलोके स्थितश्चैवं कृपिं कृत्वा तदासुरीम् । ततः कालवशेनैव नारदस्समपद्यत ॥ २६
स दृष्ट्वा ऋषिशार्दूलं प्रणम्योवाच भक्तितः । धन्योऽस्मि नितरां युष्मत्पादसेवा वशात्प्रभो ॥ २७
विनातु पितरौ शोको बाधते मां सुदारुणः । इत्युक्त्वा विनयानम्रं नारदो वाक्यमब्रवीत् ॥ २८
शोकं त्यज जयन्ताद्य युष्मदिष्टं भविष्यति । पित्रोश्च संगमो भावि कतिचित्कालमात्रतः ॥ २९
येन यत्र कृतं कर्म यथावत्सुरसत्तम । तेन तत्रैव तत्तावद्भोक्तव्यमिति निश्चयम् ॥ ३०
त्वत्पितातु शुनासीरो सार्कं देव्या भुवंगतः । असुराणां विनाशार्थं तपस्येव शिवं प्रति ॥ ३१
तस्मादिदानीं त्वं कृत्वा कार्यमिन्द्रद्विषोऽनिशम् । तिष्ठ सार्कं सुरैस्सर्वैरप्रमादेन बुद्धिमान् ॥ ३२
इत्युक्त्वा नारदस्तूर्णं आकाशं गतवान् द्विजाः । शुनासीरस्तु भूलोके चिदंबर समीपतः ॥ ३३
श्रीकापाख्यपुरे रम्ये महादेवं तदा भृशम् । पूजयित्वा स्थितस्तत्र ज्ञात्वा चाशान् तदीयकान् ॥ ३४
आरामवृक्षमध्येतु शच्या सार्कं पुरन्दरः । वैणवं रूपमाध्याय अतिप्रच्छन्न वेषभाक् ॥ ३५
अथमहवशाद्वृष्टिस्तदानीं नाभवत्किल । म्लानमापुस्तदा वृक्षास्तत्रत्या वृत्रघातिनः ॥ ३६
अहो दुष्कर्ममहिमा ब्रह्मणापि नलंघ्यते । मदागमनमात्रेण वृक्षास्संशोषिता यतः ॥ ३७
एवं चिन्तापरवशो मघवति भृशं तदा । शोकहारिण्यभूद्वाणी कल्याणी ह्यशरीरिणी ॥ ३८
मघवन्मुञ्च शोकं त्वं पश्यत्वत्र सरिद्वरा । कालेन कियता चैव वृक्षास्सर्वेऽपि पूर्ववत् ॥ ३९
पुष्टिमेष्यन्ति ते सम्यङ्मुक्तशीर्णपलाशकाः । श्रुत्वाऽशरीरिणीं वाणीं इत्येवं वृत्रहा तदा ॥ ४०
भृशं सन्तुष्टिमापायं मुक्तशोकस्तदा द्विजाः । एतस्मिन्समये शीघ्रं नारदो विन्ध्यमागतः ॥ ४१
आगतं तमृषिश्रेष्ठं प्रणम्याशु तदा गिरिः । अर्घ्यपाद्यादिकं दत्वा विष्टरे संन्यवेश्य तम् ॥ ४२
धन्योऽस्मि नितरां युष्मद्दर्शनादृषिसत्तम । एवमुक्त्वा स्थितं विन्ध्यं नारदो वाचमब्रवीत् ॥ ४३
कुशलं ते गिरीन्द्राय सत्कृताय महात्मभिः । इदानीं मेरुपर्यन्तादागतोऽस्मि तवान्तिकम् ॥ ४४
श्रुत्वा तेनोदितां वाचं ममाप्याश्चर्यमत्रवै । कथं वच्मि तथाप्येमां अप्रियां विन्ध्यसन्निधौ ॥ ४५
तथापि ते गुरुश्रद्धा वर्तते मयि यत्नतः । चोदयत्येव सात्यन्तं वक्तव्यमिति पर्वत ॥ ४६
चन्द्रसूर्यौ प्रतिदिनं सह नक्षत्र राशिभिः । प्रदक्षिणं सदा कृत्वा गच्छतो मां भयान्वितौ ॥ ४७
पुरंदरपितुश्शम्भोर्धनुर्भावं गतोऽस्म्यहम् । सर्वेऽपि देवा मय्येव वसन्ति श्रद्धया सह ॥ ४८
तस्मान्मत्सदृशो लोके महत्वेन महीधर । विन्ध्यः प्रोवाच वचनं स्फुरदोष्ठेन कोपतः ॥ ४९
शिवेनानमितः पूर्वं चापरूपेण नारद । श्लाघ्यत्वेन सुवर्णमेरुर्मूढोऽहंकारगर्वितः ॥ ५०
गाढं देवास्तथैवऽपि वासयन्ति भृशं दिनम् । मायामाव मात्रेण सुराणां शरमस्य सः ॥ ५१
नारसिंहं तदा हन्तुं मशानानि स्थितिं किल । तदा तत्पक्षघातेन सुतरां ताडितो गिरिः ॥ ५२
खद्योत इव सर्वत्र बभ्राम किल मन्दधीः । एवं विन्ध्यस्य वचनं निशम्यार्थाशीः प्रभुरव नः ॥ ५३
नारदः प्रययौ तूर्णं वियन्मार्गं तदा द्विजाः । विन्ध्यस्तु नितरां क्रुद्धो ववृधेऽण्डावधिरास्त ॥ ५४
सूर्येन्द्वो भ्रमणाभावाद्धूम्रमार्गवशात्तदा । एकत्र तिमिराक्रान्तमन्यत्र मिहिरावृतम् ॥ ५५
कालसंख्या विहीनत्वाद्भिन्नस्मस्मक्रियम् । जगत्सर्वमिदं जातं तदा देवा विचिन्त्यच ॥ ५६
तिष्ठित्य विरुपवरिलं भगवन्तं प्रापुरञ्जसा । मेरोर्गुहान्तरे तत्र दृष्ट्वा तमृषिसत्तमम् ॥ ५७
अगस्त्य तपतां वर्य सुरैरिदं हसागर । त्वया सुरक्षितं पूर्वं जगदेतद्दनेषधा ॥ ५८
विन्ध्यावलेपाद्धयापि विगतार्कं जगत्त्वित् । सार्धं मेरुत्र ततो निधिर्यचापि नध्यरम् ॥ ५९

यागायभयादस्माकं नितरां क्षुद्रत खलु । तस्माद्विन्ध्यावलेप त्व व्यपोह्य परिपालय ॥
अगदस्मान्विशेषेणेत्येवमूचुस्सुरास्तदा ॥ ६०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे दशमोऽध्याय ॥

---

॥ अथ एकादशोऽध्याय ॥

अगस्त्येन इल्वल वातापि मारणम् ॥

तथेति दैवतानेवं प्रेरयित्वा स्वयं मुनि । हृदयाम्भोजमध्यस्थं महादेवमचिन्तयत् ॥ १
प्रसन्नेच महादेवे प्राह वाचमृषीश्वर । भगवन् देव सर्वेश भक्तवत्सल शङ्कर ॥ २
भगवत्कृपावशादद्य बल भवतु मे प्रभो । विन्ध्यगर्वापहाराय लोकसरक्षणायच । ३
तीर्थंच मे प्रयच्छाशु गच्छतो दक्षिणा दिशम् । इत्युक्तो भक्तितो नम्र अगस्त्य परमेश्वर ॥ ४
भूयाद्दूरलं तवात्रार्थं कावेरीच सरिद्वरा । नेतव्या ऋषिशार्दूल कुण्डिकाया निधायसा ॥ ५
इति ब्रुवन्तमीशान कावेरी प्राह शंकरम् । कथं गच्छाम्यहं तेन पुरुषेण शिवाधुना ॥ ६
विमोक्ष्यति ऋषिस्त्वातु स्वयमेव वरे व्रज । इत्युक्त्वा योजयित्वैना अगस्त्येन तदेश्वर ॥ ७
अन्तर्धिमाप तरसा भक्तानामभयप्रद । तत प्रतस्थे तपतावरो विन्ध्याचल प्रति ॥ ८
मायापुरस्य निकटे ऋषिर्मार्गवशात्तदा । क्रौञ्चासुर महाक्रूर महासमोहकारिणम् ॥ ९
व्यत्यासकारिण साक्षात्पाताळ पृथिवीं दिवम् । पर्वतच जलवेन जल पर्वतरूपत ॥ १०
अप्येन मेदिनीं तद्वत्पृथिवीत्वेन वायलम् । नानारूपधर पाप कपटात् पृथिवीधरम् ॥ ११
मार्गमध्ये स्थित क्रूर मूर्खमापर्षिसत्तम । तस्योपरि तदा तूर्णं मार्गभ्रान्त्या जगामस ॥ १२
तत्र मार्गमहद्वैन क्षण तिष्ठति मोहित । पुनस्तु सूक्ष्मरूपण कश्चिन्मार्ग क्षणादसौ ॥ १३
दृष्ट्वा तेनापि गच्छन् स पुनस्तिष्ठति मोहित । इतस्ततस्तदा पश्यन् अदृष्ट्वा पदवीं पुन ॥ १४
धावत्येव तदा तूर्णं स्खलत्पादक्रमो भृशम् । दृष्ट्वातु मार्गमन्यच वीक्ष्य याति पुनश्च स ॥ १५
तत्रापि मोहितस्तिष्ठन् विचार्यैव व्रजत्यसौ । एव बहुविध चाय गत्वा गत्वा निवृत्यच ॥ १६
मार्गं कश्चित्तदा दृष्ट्वा वनमध्ये गत किल । तत्रास्य त तदावृष्टि स्थूणाकाराऽभवद्दृढा ॥ १७
मेघानामपि निर्घोष कल्पान्त इव भीषण । प्रतिक्षण तदा विद्युत्परिस्फुरणमुज्ज्वलम् ॥ १८
गाढान्ध तमसेनापि वृतमेतद्वन तदा । भीषण भीषणस्यापि मोहक मोहकस्यच ॥ १९
मृत्योर्मृत्युमद तद्वत्सर्वव्यामोहकारकम् । ससभ्रम तदागस्त्य किमेतदिति चिन्तयन् ॥ २०
ज्ञात्वा ज्ञानदृशा सद्यो माया क्रौञ्चासुरस्य स । सन्ताड्यैन तदा हस्तस्थितदण्डेन निर्भय ॥ २१
यस्मात् पर्वतरूपेण दुरात्मन् कपटेन माम् । अभ्रामयस्ततस्तूर्णं अद्रिरेव वै भवाधुना ॥ २२
षण्मुखस्यापि शक्त्या त्व भूयाद्भिन्नतनुर्भृशम् । जलमादाय हस्तेन क्रौञ्चमेव तदा ऋषि ॥ २३
शपित्वा त यथामार्गं प्राप्य काशीं जगाम स । तत्र गत्वा महादेव विश्वनाथ जगद्गुरुम् ॥ २४
तारकब्रह्ममन्त्रस्य दातार देहिना श्रुतौ । पूजयित्वा पुनश्चाथ निर्गतो विन्ध्यमाप स ॥ २५
विन्ध्य पर्वतराजेन्द्र ऋषिध्यासक्त मानस । प्रवर्तकस्त्व भूताना दययाच निवर्तय ॥ २६
दक्षिणस्या दिशि मम गन्तव्य किञ्चिदस्तिहि । त्वत्तो धृतिमतश्शीघ्र मुञ्च मार्ग ममाधुना ॥ २७

सांत्वेन वचसाचैव प्रार्थयामास तं द्विजाः । अब्रवीत्तपतां श्रेष्ठं विन्ध्याद्रिः प्रेक्ष्य तं वचः ॥ २८
कोवात्र मार्गो गन्तव्यं यथामार्गं त्वया ऋषे । भवान् किञ्चिन्नजानातीत्येवं गंभीरवागसौ ॥ २९
अगस्त्यस्तु ततश्शीघ्रं उन्नमय्य करं तदा । विन्ध्यस्योपरि विन्यस्य पीडयामास तं भृशम् ॥ ३०
तत्करापीडनवशात्पपात गिरिराडयम् । क्षोण्यामथ भयाविष्टो विन्ध्याद्रिः प्राह तं द्रुतम् ॥ ३१
अगस्त्य तपसां वर्य रक्ष रक्ष शिवप्रिय । क्षमस्व मन्तुमद्यत्वं अज्ञानेन विचेष्टितम् ॥ ३२
उन्नतिश्च यथापूर्वं कदा मह्यं भवेदियम् । इत्युक्त्वा विनयाभ्रं विंध्याद्रिं तमृपीश्वरः ॥ ३३
यदा पुनर्ममात्राद्रे भविष्यत्यागमस्तदा । त्यक्तभीर्भृशमौन्नत्यं भजेत्युक्त्वाशु निर्ययौ ॥ ३४
यत्रेल्वलश्च वातापिश्चैतौ पापकर्मिणौ । देशे तत्रागतोऽगस्त्यः क्षणादेव ऋषीश्वरः ॥ ३५
तं दृष्ट्वा तपतां श्रेष्ठं इल्वलः प्राह पूर्ववत् । भोजनाय तदा तस्य प्राप्यानुमतिमाशु सः ॥ ३६
वातापिश्च यथापूर्वं कृत्वा भोजनमुत्तमम् । आज्यक्षीरफलापूपैर्दधिमिश्रं यथेप्सितम् ॥ ३७
शुद्धान्नैः पायसान्नैश्च स्वादुयुक्तैस्सुपेशलैः । आकारणश्च कृतवान् वातापीतील्वलस्तथा ॥ ३८
ततस्तु तावत्कालेन कुक्षौ भ्रमणमाप्यभूत् । ज्ञात्वैतत्तावदेवायं अगस्त्योऽसुरवञ्चनम् ॥ ३९
करेण कुक्षिं स्पृष्ट्वाथ जजाप मनुमुत्तमम् । मंत्रप्रभावात्तस्यायं अजीर्यत्कुक्षिबाधकः ॥ ४०
वातापिंच तदा मत्वा भस्मीभूतं मृतं द्विजाः । हन्तुकामतया तूर्णमिल्वलोऽगस्त्यमागतः ॥ ४१
तमालोक्य तदागस्त्यः कुशेनैनममारयत् । मुक्त्वाथ देशं कुटकं कोङ्कदेशं तदाप सः ॥ ४२
अगस्त्यस्तु तदा ब्रह्महत्याभ्यां बाधितो भृशम् । तत्रापूजयदीशानं लिंगरूपं सदाशिवम् ॥ ४३
एतस्मिन् समये विप्राः प्रापेन्द्रं नारदः क्षणात् । प्राप्तं पुलोमजानाथस्तमर्घ्याद्यैर्भृशं तदा ॥ ४४
पूजयित्वा गिरं दीनां दीनो गोत्रभिदाहहि । कदावा मोचनं ब्रह्मन् भवेन्मम भयादितः ॥ ४५
स्वस्थानंच कदा प्राप्य निवत्स्यामि सुरैस्सह । शूरस्य चारसंचाराद्विणोर्वेषं यदाप्रहम् ॥ ४६
उद्यानवृक्षवाटीषु तदानीमेव हेद्रुमाः । प्रापुर्म्लानिं भृशं ब्रह्मन् वृष्ट्यभावाद्विनीरसाः ॥ ४७
तदाप्रभृति वृक्षाणां म्लानता बाधते मनः । तस्मात्कदा भवेद्वृष्टिर्वृक्षाणां पोषणाय च ॥ ४८
इत्युक्तवन्तं देवेन्द्रं नारदो वाचमब्रवीत् । त्यज दुःखं शुनासीर स्वर्गप्राप्तिः पुनस्ते ॥ ४९
कालेन कियताचैव भविष्यति सुरोत्तम । आनीताच सरिच्छ्रेष्ठा कावेरी कुम्भजन्मना ॥ ५०
मध्यतस्सर्वतीर्थानां कैलास तलवासिनाम् । नैतव्या वृक्षपुष्ट्यर्थं इदानीमपि सा नदी ॥ ५१
तिष्ठत्यदूरतस्सोऽपि देशे कोङ्काभिधेऽधुना । तस्मात् गणपतिं शीघ्रं पूजयाद्य पुरन्दर ॥ ५२
प्रसन्नस्तु कावेरीं आनयिष्यति शीघ्रतः । इत्युक्त्वा नारदस्तूर्णं आकाशं गतवांस्तदा ॥ ५३

तदनु ऋषिवचो निशम्य तूर्णं स्ववदमृनीयमशेष दुःखदग्ध ।
हतमतिरमरेश्वरस्तदानीं गजमुख संभजने बभूव विप्राः ॥ ५४
चकार पूजामथ तस्य पावनीं विशेष निर्दोषित दुष्कृतावलिम् ।
हरिस्तदाऽपूप पयो घृतोदनैस्समोदकैण्यमुरुं पूर्वजस्य सः ॥ ५५
दरेस्तदा गोचरतामवाप विलोचनानां विशदप्रकाशः ।
विनायको भक्तजनार्तिहारी विधूतभक्ताघ समूह एषः ॥ ५६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
माहुरखंडे एकादशोऽध्यायः ॥

॥ अथ द्वादशोऽध्यायः ॥

इन्द्रेण श्री विघ्नेश्वरप्रसादात् कावेर्यानयनम् ॥

आविर्भूतस्तु भगवान् विघ्नराजो हरिं तदा । प्रसन्नोऽस्मि तवाद्येन्द्र वृणु सर्वं त्वदीप्सितम् ॥ १
इत्युक्तवन्तं विघ्नेशं अब्रवीत् वचनं हरिः । तव प्रसादात् विघ्नेश वृक्षाणां पोषणाय हि ॥ २
भवन्तु भूयस्त्वंभांसीत्येतेषां भक्तवत्सल । इन्द्रस्य वचनं श्रुत्वा विघ्नेशः प्रत्युवाच तम् ॥ ३
अण्डस्थानि जलान्याशु तद्वद्ब्रह्मस्थितान्यपि । आकाशगङ्गा चान्यावा पाताळतटिनी तथा ॥ ४
पद्मादीनि लोकेऽस्मिन् वर्तन्ते येषु केषुचा । आनेतव्यं जलं किंवा वदेस्त्वाह विनायकः ॥ ५
इन्द्रस्तद्वचनं श्रुत्वा गंभीरं विशदाक्षरम् । विघ्नाधीश दयासिंधो कुम्भभूस्तपतां वरः ॥ ६
कावेरीं सरितां पुण्यां गृहीत्वा वर्ततेऽधुना । आरादेवाधुना गत्वा नेतव्या सा त्वया प्रभो ॥ ७
इत्युक्त्वा प्रश्रया नम्र तथेत्युक्त्वा जगाम सः । काकवेषं गृहीत्वाशु ऋषेर्निकटमद्भुतम् ॥ ८
अगस्त्यस्य तदा गत्वा स्थितोऽयं कुण्डिकोपरि । कुण्डिकास्थमृषिश्रेष्ठः काकं दृष्ट्वा त्वरायुतः ॥ ९
करेणोच्चाटयामास तदानीं द्विजसत्तमः । काकस्तु शीघ्रमुड्डीय पादाभ्यां तन्निपात्य च ॥ १०
प्रययौ शीघ्रमेवाथ कश्चिद्दूरं भयादिव । पतितां कुण्डिकां दृष्ट्वा हा शिवेति तदा वदन् ॥ ११
ऋषिरभ्येत्य काकोऽयं किमर्थमधुना गतः । इतः पुनः पुरस्ताच्च तिष्ठत्येषोऽसकृत् द्विजाः ॥ १२
येनकेनाप्युपायेन हन्तव्योऽयं मया बलात् । इत्युक्त्वाभ्याशमस्याप तदाऽगस्त्यः क्रुधान्वितम् ॥ १३
तत्र काकमदृष्ट्वाय किमेतदिति विस्मितः । इतस्ततस्तदापश्यत् उन्नमय्य मुखं मुनिः ॥ १४
दृष्ट्वा माणवकं कञ्चित् धृतयज्ञोपवीतिनम् । अयमेवेति निश्चित्य काकभ्रान्तिरभून्मम ॥ १५
प्रहर्तव्योऽयमधुना कुट्टनेन वटुर्भृशम् । इत्यधावत्तदाभ्याशं अगस्त्यस्तस्य वागयम् ॥ १६
ततस्ससंभ्रमं वर्णी भयाविष्ट इवद्रुतम् । किञ्चिद्दूरं तदा गत्वा स्थितस्तत्र पुनश्च सः ॥ १७
गत्वा तत्रापि तरसा यावत्कालेनचै ऋषिः । उच्चिक्षेप करं कोपात् कुट्टितुं वर्णिनं तदा ॥ १८
तावदेव पुनश्चाय करप्राह्य इव क्षणात् । प्रतारयित्वा शार्दूलमृषीणां पुरतो ययौ ॥ १९
अनेकवारमेव तं अप्रतारयदुज्ज्वलः । ततः स्ववेषं विघ्नेशो दर्शयामास तस्य सः ॥ २०
गणैर्नानाविधैरेव सेवितः परितस्तदा । तं दृष्ट्वा ऋषिवर्योऽयं गजवक्त्रं महोदरम् ॥ २१
शूर्पकर्णं प्रलंबोष्ठं सकळं कामरूपिणम् । गणानां त्वा गणपतिं कवीनांच कविं परम् ॥ २२
ब्रह्मणां ज्येष्ठराजञ्च प्रणमामि शिवं सदा । सर्वविघ्नप्रशमनं सर्वपापनिवारकम् ॥ २३
स्कन्दस्य पूर्वजं तद्वत् प्रणमामि विनायकम् । एवं स्तुत्वा गणेशानं प्रणनाम पुनः पुनः ॥ २४
अगस्त्य तपतां वर्य विन्ध्यगर्व निवारक । प्रसन्नोऽस्मि तवात्यर्थमधुना कांक्षितं वद ॥ २५
इत्युक्तवन्तं विघ्नेशमगस्त्यो वाचमब्रवीत् । क्षन्तव्यस्त्वपराधोऽयं मम भक्तदयानिधे ॥ २६
तव पादांबुजे भक्तिर्भूयादव्यभिचारिणी । कावेरीव सरिद्गीता वलये परमेशितुः ॥ २७
यस्मात्कुण्डिकायास्सा गजवक्त्रगता खलु । पूजार्थं परेशस्य भवितव्यं जलेन नः ॥ २८
यस्मात्भवन्तं पाणिभ्यां अहं कुट्टितुमागतः । ममैव कुट्टनं भूयादिति मूर्ध्नि स्वके तदा ॥ २९
एनमुष्टिकराभ्यां तु कृतवांस्तदहो द्विजाः । एवमुक्त्वा स्थितं भक्तमगस्त्यं कृत्यवेदिनम् ॥ ३०
प्राह गंभीरया वाचा सांत्वयन् वचनं तदा । इन्द्रेण प्रार्थितोऽस्यर्थं अगस्त्य ऋषिसत्तम ॥ ३१
वृक्षसंशोषणवशात् जलार्थमहमागतः । कमण्डलुश्च तेनैव पातितः कारणेनहि ॥ ३२

त्वया कृतमिदं सर्वं ममात्यन्तं प्रियं खलु । पूजार्थं च पुरारातेरिदं भवतु वै जलम् ॥ ३३
इति शुण्डामुखेनायं गृहीत्वाभ कण तदा । कावेर्यामथ विघ्नेशः कुण्डिकायामवाकिरत् ॥ ३४
तत्क्षणेनैव सात्यर्थं पूर्णा सर्वत्रवाप्लवत् । एवं बहुवरं दत्वा ययावन्तर्धिमाशु सः ॥ ३५
अगस्त्यस्तु ततश्शीघ्रं कुद्दालाख्यपुरं ययौ । तत्रत्या वैष्णवास्सर्वे दृष्ट्वैनमृषिसत्तमम् ॥ ३६
भूति भूषित सर्वाङ्गं रुद्राक्ष परिभूषितम् । शैवेनात्रत्वया विप्र नागन्तव्यं पुरंहि न ॥ ३७
इत्यूचिरे तदानीं ते तथेत्युक्त्वा पुराद्बहि । गत्वागस्त्यस्तु शीघ्रेण रूपं भागवत ऋषि ॥ ३८
गृहीत्वा मायया भूयो नगरं तद्विवेश सः । दृष्ट्वा भागवतं सर्वे वीथीस्था वैष्णवास्तदा ॥ ३९
प्रणम्य बहुमानेन प्रापयामासुरालयम् । विष्णोरथ चकाराय भाषणं भापयाच ते ॥ ४०
ततस्तु वैष्णवान् प्रेक्ष्य कार्या पूजाश वैष्णवी । मयेत्युक्त्वा तदागस्त्यो बहिस्तानप्यचोदयत् ॥ ४१
विष्णुं स्पृष्ट्वा करेणाथ शिवभावनयाभृशम् । अमर्दयत्तदा शीघ्रमभूद्विष्णुश्शिवाकृति ॥ ४२
अगस्त्यस्तु तदा शंभुं पूजयामास भक्तित । लिङ्गाकारं विधानेन प्रक्षितो वैष्णवैरपि ॥ ४३
अथ सर्वेऽपि संभूय प्रहर्तुं शीघ्रमागता । चुकोप दृष्ट्वा तानेव कुम्भभूरपि वैष्णवान् ॥ ४४
कोपाग्निना तदा सन्तास्तस्य ते दुद्रुवुर्भृशम् । आरोप्य शैवान् तत्राय अगस्त्यस्सहामागत ॥ ४५
दधीचकण्वशैलादि भृगूणा गौतमस्य च । गुरुदुर्वाससोऽपि स्मृत्वा शापं तदा ऋषि ॥ ४६
विप्रतीकारयुक्तोऽभूत् सतान् प्रति भृशं द्विजा । विप्राश्शृणुत कावेरी यथा याता कमण्डलो ॥ ४७
श्रीकाशाख्यपुरस्यैव वृक्षवाटीषु वाहिनी । तदानीमेव ते वृक्षा गतशीर्णपलाशका ॥ ४८
प्रादुर्भूताङ्कुरास्सर्वे नानापुष्पोपशोभिता । तादृशांस्तान्वलाराति दृष्ट्वा विगतदुर्मना ॥ ४९
प्रीतियुक्तस्तदात्यर्थं स्वदेव परिगृह्य स । पूजयामास विघ्नेशं शच्यासाकमरिन्दम ॥ ५०
पत्राणि च विचित्राणि सुगन्धिकुसुमान्यपि । हृत्वा हृत्वाच बहुशः दातुं न संयमोथम ॥ ५१
तत्रान्तरे दिविषदो दृष्ट्वा देवेन्द्रमागता । प्रणम्य देवास्सर्वे ते देवेन्द्रं वाचमूचिरे ॥ ५२
एकाकिना त्वया साकं शच्यात्रस्थीयते कथम् । मुक्त्वा देवान् त्वदीयांश्च छद्मना वनवासिना ॥ ५३
यथापूर्वममी देवा देवेन्द्राद्य कृपावलात् । पालनीया दिविस्थित्वा हृतासुरविचोदना ॥ ५४
एवमुक्त्वा स्थितान् देवान् दीनानत्यर्थमाह स । शृणुध्वममरास्सर्वे किं कर्तव्यं मयाऽधुना ॥ ५५
आनीता बहवो मीनाक्षशूरस्य वचनात्पुरा । मधुमासादिकं तद्वद्बहिर्त यद्दिकहिचित् ॥ ५६
एवं कृतेऽपि शूरोऽय इन्द्राणीं धर्षितुं बलात् । कारागृहे पातयितुमियेष किल मां तथा ॥ ५७
मानभग भयाद्भीतो वर्तेऽहमधुनाऽत्र हि । स्थित्वाप्यत्र महादेवमसुराणां क्षयावह ॥ ५८
पूजयामि भवन्तोऽपि यतोऽत्रच समागता । ततः कैलासशिखरं गमिष्यामोऽधुना वयम् ॥ ५९
तत्रगत्या महादेवं विज्ञाप्यैतद्यथाक्रमम् । यदुक्तं देवदेवेन तच्छ्रुत्वा वचनं वयम् ॥ ६०
तथैव सर्वं स्थाश्याम इत्युक्त्वा तानयं हरि । स्थापयित्वा शचीमाप निवेदयितुमाशु स ॥ ६१
तावैतदिङ्गिते नेव शुशोचोद्विग्न मानसा । शोकं त्यज प्रिये देवा सर्वेऽप्यत्र समागता ॥ ६२
गत्वा तैस्साकमाभ्येशं विज्ञाप्यच महेश्वरम् । कैलासवासिनं भूय आगमिष्यामि तेऽन्तिकम् ॥ ६३
पालकस्तव शास्तायं भवत्विति तदाब्रवीत् ।
इन्द्राणी – कोऽयं शास्ता वद स्वामिन् यो मां पालयतीश्वर ॥ ६४

पालकत्वंच सर्वेषां एतस्य कथमागतम् ॥ ६५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे द्वादशोऽध्यायः ॥

---

॥ अथ त्रयोदशोऽध्यायः ॥

श्री महाशास्तोत्पादनं, महाकाळेन अजामुख्याः हस्तच्छेदनं च ॥

इन्द्रः —

पुरा देवासुरास्सर्वे ममन्थुः किल वारिधिम् । पीयूषं यत्तदा जातं तेभ्यो दातुमिदं हरिः ॥ १
मोहिनीवेषमास्थाय मारयित्वाऽसुरांस्तदा । विभज्य देवांस्तरसा भोजयामास वै सदा ॥ २
तदानीमाविरासीद्धि तां द्रष्टुं च महेश्वरः । दृष्ट्वा तां मोहिनीं रम्यां लोलापाङ्ग समीक्षणाम् ॥ ३
स्फुरत्सौदामिनीरम्यां स्थिरत्वा प्रतियोगिनीम् । स्वच्छहारमनोहारि कुचाभ्यां नतमध्यमाम् ॥ ४
सुरतञ्च तदा कर्तुमियेष परमेश्वरः । उवाच वचनं चापि संभोगोऽत्र मया सह ॥ ५
कर्तव्य इतिमेऽत्यर्थं रागः खलु वराङ्गने । इत्युक्तवन्तमीशानं धर्षणोत्कं तदा तु सा ॥ ६
कथमीश मया साकं संभोगः क्रियतां त्वया । नारायणोऽहमधुना मोहिनीरूपमास्थितः ॥ ७
इत्युक्त्वा त्रीळया नम्रां पुनः प्रोवाच शंकरः । त्वमेवचतसृणां मध्ये शक्तीनां पुरुषाख्यया ॥ ८
शक्तिस्तथापुरा त्वांतु भुक्त्वाऽजं चाप्यजीजनम् । दारुकारण्यवने तद्वन्मोहिनी रूपमास्थितः ॥ ९
त्वमेव मां तदा रन्तुं ह्येयिथ किल प्रिये । रमिष्ये त्वामहं रम्ये तत्राद्येत्यवदं किल ॥ १०
तस्मान्मयात्र संरन्तुं त्वमर्हसि पुनः पुनः । एवमुक्तेऽपि विमुखां जवेनैव तदा हरः ॥ ११
गृहीत्वोत्तानयित्वाशु रेमेच सुमनोहराम् । सालवृक्षस्य निकटे जंबूद्वीपस्थितस्य सः ॥ १२
तस्योग्रसुरतोद्वेगमक्षमा सोढुमाशु सा । उद्गारयमास तदा भृशं खिन्नशरीरिणी ॥ १३
तज्जलंच शचीन्द्राणि गण्डकाख्याऽभवन्नदी । जायन्ते तत्र कीटाश्च वज्रदन्ताभिधास्तथा ॥ १४
ते सर्वे मृत्तिकास्सूक्ष्मास्स्वत्यावदनांबुना । कुलायमाकल्प्याशु मुमयोनिवसन्तिहि ॥ १५
यदा सरित्स्वतिला मरिष्यंति तदाचते । नदीप्रवाहे नीडानि गच्छन्त्येतानि भूरिशः ॥ १६
तमस्या मनुजाः केचित् जालं कृत्वाप्सु तानिते । कुलायमध्यस्वर्णंच गृहीत्वा विक्रयन्तिहि ॥ १७
साळग्रामाऽनि तान्येव कुळायानि प्रियेऽधुना । विष्णुद्वाराभिजातत्वाद्वैष्णवी प्रथिताशिला ॥ १८
तस्मादद्यापि लोकेऽस्मिन् शिवलिङ्गस्य सूरयः । शंसन्ति शक्तिपीठार्थं विशेषाद्गण्डकीं शिलाम् ॥ १९
एवं तयोस्सुजातत्वाच्छास्तापिच तथाऽभवत् । हरेर्हरस्यापि तथा पुत्रत्वमिति भावितम् ॥ २०
गत्वाऽयं तु महादेवं किंत्वं मम भोः पितः । एवमुक्त्वाथनम्रस्य भुवनेश्वरतां ददौ ॥ २१
सतु शास्ताकुमारोऽयं शम्भोस्त्वामभिरक्षतु । इत्युक्त्वाथ तदेन्द्रोऽप सस्मार जगतां प्रभुम् ॥ २२
शास्तारमेकचित्तेन शच्याः पुरत एव सः । तदानीमाविरासीद्धि शास्ता किं करवाण्यहम् ॥ २३
इति सुवर्णौघेन क्रूरेण परितो भृतः । शास्ता त्वयात्र संरक्ष्या शचीमे प्राणवल्लभा ॥ २४
गन्तव्योयं मया शंभोः कैलासाख्यो महीधरः । मदागमनपर्यन्तमित्युक्त्वा तां तदन्तिके ॥ २५
निवेशयित्वानुमतस्तथा तेनापि वृत्रहा । प्रतस्थे देवतैस्सार्धं कैलासं प्रतिशीघ्रतः ॥ २६
इन्द्राणीमपि शास्तायं रक्षितुं गणनायकम् । परिकल्प्य महाकालं स्वावासंच तदा ययौ ॥ २७

इन्द्रोऽपि देवतैस्साकं प्रस्थितो द्रुतमाप सः । कैलासमखिलाघौघतमस्काण्डरविप्रभम् ॥ २८
गत्वा तत्रच शैलादिं दृष्ट्वा तं सहसा सुरैः । प्रणम्य दूरतस्तिष्ठन् आहूतोऽभ्याशमागतः ॥ २९
किमर्थमधुनाचेन्द्र यदात्रागमनं तव । इति पृष्टस्तदा तेन व्याचष्ट भयकंपितः ॥ ३०
सेवार्थं परमेशस्य शैलादेऽद्यागतोऽस्म्यहम् । सह सर्वैस्सुरैस्सार्धं दया कार्या मयि प्रभो ॥ ३१
इत्युक्त्वाऽऽह नतं नन्दी गणानामग्रणीर्हरिम् । पुरन्दराधुना गच्छ सेवार्थं परमेशितुः ॥ ३२
नचतेऽवसरोऽस्त्यत्र सनकादेर्महेश्वरः । ज्ञानोपदेशं कृत्वायं आस्ते सर्वेश्वरस्स्वयम् ॥ ३३
शैलादेर्वचनं श्रुत्वा सहसैव सुरैस्तदा । प्रणम्य नन्दिनं भूयः प्रापाग्र्यं शिखरंच सः ॥ ३४
तत्र गत्वा महादेवं ध्यात्वा तैरवसत्सह । एतस्मिन्नंतरे विप्राः क्रूरा पापरताच या ॥ ३५
परिभ्रमन्ती चाण्डस्य विवरं क्षणमात्रतः । धर्षणी मार्गमध्यस्थान् पुरुषान् सुबहूनपि ॥ ३६
प्रापयन्ती परस्त्रीणां शूत्स्यानुदिनं तथा । स्वभावसुन्दरीणांच द्विलक्षं बलात् भृशम् ॥ ३७
श्रीकापाख्य पुरोद्यान वृक्षवाटीषु भीषणा । अजवक्त्रा गता सख्या दुर्मुख्या स्वैरिणीसह ॥ ३८
दृष्ट्वा शचीं रम्यां इन्द्रस्य प्राणनायिकाम् । कुतूहलेन युक्तासा प्रोवाच वचनं तदा ॥ ३९
तिष्ठस्यत्र किमर्थं त्वं त्वदर्थं चागतं मया । मद्भ्राता सार्वभौमोऽयं शास्ति विश्वमशेषतः ॥ ४०
त्वदुत्कतास्य महती वर्तते चाधुनां शचि । त्वमागता चेत्तस्यांतःपुरं शीघ्रं तदासुरः ॥ ४१
त्वामेव नायिकां कृत्वा त्वया साकं रमिष्यते । इन्द्रादि देवास्सर्वेऽपि भृतकास्तस्य दुर्बलाः ॥ ४२
तस्मात् त्वमद्य निर्गच्छ मुक्त्वैतत्स्थलमाशुहि । नोचेदहं बलात्कारादानयिष्यामि मानिनि ॥ ४३
इत्युक्त्वाभ्यागतां प्रेक्ष्य शची प्राह तदासुरीम् । समुन्नताः पुरा देवाः संपदा सुतरां तदा ॥ ४४
असुरा दुर्बला जाता यथा कर्मानुसारतः । दरिद्रो वा समृद्धो वा पतिर्यस्यास्स एव हि ॥ ४५
उल्लंघितुमशक्या हि नीतिरव्यभिचारिणी । बलात्कारेण नीत्वाहं गच्छास्युक्तमिति त्वया ॥ ४६
मद्रक्षकमविज्ञाय गणानां परमीश्वरम् । गच्छ गच्छाधुना मूर्खे किं जानासि दुरात्मनि ॥ ४७
इत्युक्तां तामसौ क्रोधात् पत्यास्येन विमोचकम् । तवेत्युक्त्वाऽऽसुरी शीघ्रं विचकर्ष किलद्विजाः ॥ ४८
ततश्चुक्रोश सात्यर्थं धूयमानकरा शची । हाहेतिच भयाविष्टा वेपमानाङ्ग यष्टिका ॥ ४९
उत्क्रोशनं तदा श्रुत्वा किमेतदिति विस्मितः । दृष्ट्वोत्थितो महाकालो वृक्षमूलात् शचीमिमाम् ॥ ५०
धावयामास शीघ्रेण तदा क्रुद्धोऽसुरीं प्रति । मुञ्च मूढेऽधुनेन्द्राणीं छित्वा हस्तं त्वदीयकम् ॥ ५१
पातयिष्यामि खड्गेनेत्युक्तवान् गणनायकः । प्राहैनमजवक्त्रा सा को भवानिति कोपतः ॥ ५२
यस्तु लोकं प्रशास्त्येतं श्वेतो यस्य गजोवरः । यद्राक्ष्यां पुरुषाख्यायां जातश्चन्द्रशिखामणेः ॥ ५३
भृत्यस्तस्याहमधुना किं त्वया मुञ्च मानिनीम् । एवमुक्ता तदा पापा शूलमादाय वेगतः ॥ ५४
चिक्षेप त महाकालो वेगेन शतधाऽच्छिनत् । पुनश्च शूलमन्यत्सा दुर्मुखीहस्तसंस्थितम् ॥ ५५
आदाय शीघ्रमिन्द्राणीं प्रापयित्वाच तत्करम् । अचिक्षिपत्तदा घोरं घोरायावत्यलादियम् ॥ ५६
तेनैतच्छतधा कृत्वा पातितं पूर्ववद्भुवि । ततस्तु पर्वतं शीघ्रं कश्चिदादाय सा भृशम् ॥ ५७
जघानैनं तदा भूयो महाकालस्तमच्छिनत् । खड्गोऽप्यस्य तदा भग्नः पर्वताघातवेगतः ॥ ५८
भग्नं दृष्ट्वातु सा खड्गं किं त्वयेति निरायुध । ब्रुवन्ती तां शचीं भूयो विचकर्ष किलद्विजाः ॥ ५९
अथ कोपवशादेनामेत्य वीरोऽसुरीं तदा । महाकालो महाकायो गृहीत्वास्याः करं तदा ॥ ६०
कटिबन्ध लसत्सूक्ष्म करवालेन भीषणः । चिच्छेदच करं तस्याः कठिनं निशितेन सः ॥ ६१

दुर्मुख्याश्च करं छित्वा पातयामास भूतले । इन्द्राणीं मोचयित्वाशु पृष्ठारामे स्थितः पुनः ॥ ६२

विललाप विकीर्णकेशपाशा वसुधालिंगन जातपांसुजाला ।
अथ वीक्ष्य करं द्विधाकृतं सा नितरां खिन्नमनास्तदा द्विजेन्द्राः ॥ ६३
जलधिं चुलुकीकरोम्यहं रविचन्द्रावधुनाऽथतारकाः ।
वियति द्रुतमेवमेदिनीं श्रितभुव्योम तथा जलादिकम् ॥ ६४

इत्युक्त्वा विलपन्तीं तां भूयोभूयो रसातलम् । करेणास्फाल्य वीक्ष्यान्यं छिन्नं ग्राहाय दुर्मुखी ॥ ६५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे त्रयोदशोऽध्यायः ॥

---

॥ अथ चतुर्दशोऽध्यायः ॥

अजामुख्या भ्रात्रे स्वदुःखनिवेदनम् ॥

किमर्थं रोदिषि सखि त्यज दुःखं त्वमीदृशम् । दक्षाध्वरे पुरा नार्यश्छिन्न नासागतस्तनाः ॥ १
छिन्नश्रोत्र कृता जाता वीरभद्रेण नाकिनाम् । मम चेदं भवेदित्थं दुःखं माकुरु मत्सखि ॥ २
क्षिपतेचेत् समुद्रादि चुलुकीकरणादिना । शूरस्यैव तदा हानिर्यत्साद्भिश्वं तदीयकम् ॥ ३
आश्वासितेत्थं दुर्मुख्या त्यक्त्वा रोदनमाकुला । महाकालमभिप्रेक्ष्य त्वत्प्रभुं पाकशासनम् ॥ ४
त्वांचापि शृङ्खलाबद्धं नकरिष्यामि यद्यहम् । वक्षोरुहौ तदामेतौ नभविष्यत इत्यमुम ॥ ५
उक्त्वा प्रतस्थे सहसा दुर्मुख्या सह सासुरी । एतत्सर्वं तदा विप्रा नारदः पाकशासनम् ॥ ६
निवेदयामास ततो गत्वा कैलासपर्वतम् । श्रुत्वैतच्च शुनासीरः प्राप्य दुःखं महत्तरम् ॥ ७
विज्ञाप्य नन्दिनं शीघ्रादाययौ सपुलोमजाम् । तया बोधित वृत्तान्तः स्वकं कर्म तदा स्मरन् ॥ ८
महाकालं प्रणम्याशु स्तुत्वा तं विससर्जह । प्रतस्थे समहामेरुं शच्या साकं पुरन्दरः ॥ ९
तप्त्वा तपः स्थितोऽप्यायं मासमेरु गुहान्तरः । प्रस्थिता साजवक्त्रोतु वीरमाहेन्द्र पत्तनम् ॥ १०
शूरेणाधिष्ठितं प्राप विलपन्ती पदेपदे । प्रेक्षितासुरनारीभिर्वीथीस्थाभिरशुचासह ॥ ११
यावद्बाल जनाकीर्णां कुलाकुलित पार्श्वगा । मेष कुक्कुट मल्लानां गजानां वाजिनां तथा ॥ १२
निवार्य युद्धशिक्षांच यद्वच्च तदासुराः । केनेदं कृतमेतस्याः किमेतदिति विस्मिताः ॥ १३
दुरोदररताः केचिद्रथारोहण तत्पराः । पचमाद्याश्च भूपांसः स्वकं कर्मविमुच्यते ॥ १४
रुद्रेण कृतमेतद्वा वीरभद्रेण वाथवा । भैरवेणाथ शास्त्रावा दुर्गया वेत्यचिन्तयन् ॥ १५
परस्परं कृतं वास्यात् इत्यनेकप्रकारतः । केचिच्चिन्तामवापुस्तां वीक्ष्य छिन्नकरां तदा ॥ १६
मातरं पितरं उपेक्षान् पुत्रान् जामातरस्तथा । स्मृत्वा स्मृत्याऽऽप शूरस्य तरसास्थानमण्टपम् ॥ १७
सहस्रयोजनायामं सहस्रस्तंभकोटिकम् । स्तम्भेषु यानि चित्राणि रत्नानि सुबहून्यपि ॥ १८
तैरेव निर्मितं चोर्ध्वं अधस्तिर्यक् तथैव हि । चित्रदर्पणवर्गैश्च चामरैः परिमण्डितम् ॥ १९
तत्र सिंहासनारूढं नानासामंत भूमिपैः । आवृमिश्च महामीमैश्श्रितपार्श्वस्थलद्वयैः ॥ २०
पुत्रैः पौत्रैर्महावीरैस्स्थानापतिभिरेव च । मन्त्रिभिश्चैव दूतैश्चैवामरासक्तपाणिभिः ॥ २१
तालवृन्तपरैस्त्वैः कालांजपासक्त पाणिभिः । वादीपर्दीपरैश्चापि छत्रध्वजकरैस्तथा ॥ २२
ऊर्वशी मेनका रंभा प्रमुखाभिस्तदा भृशम् । नृत्यद्भिरमितश्चैव सेवितं भीमरूपिणम् ॥ २३

नीराजनकराभिश्च दिव्यस्त्रीभिरनेकशः । विधात्रा तत्सुतैश्चापि वदद्भिर्दिनराशिकान् ॥ २४
मान्त्रिकैश्चैव दैवज्ञैर्महा ऋषिभिरेव च । सामुद्रिक परिज्ञातृगणैर्बाहटवेदिभि ॥ २५
एवमादिभिरन्यैश्च नानाशास्त्र विशारदैः । आवृत भूषणैश्चापि नानारत्न विचित्रितैः ॥ २६
हारकङ्कण केयूर किरीटैरङ्गुलीयकैः । तप्तकाञ्चनचित्रेण कटीसूत्रेण वेष्टितम् ॥ २७
नानाभरणसंयुक्त दिव्याम्बरधर वरम् । गायद्भि किन्नरवरैस्सिद्धविद्याधरादिभि ॥ २८
वन्दिभिर्मागधैश्चापि पठद्भिर्विविधान् गुणान् । स्तूयमान सुखासीन साक्षादुद्रमिवापरम् ॥ २९
दृष्ट्वा सा पुरुषव्याघ्र पपात भुवि विह्वला । क्व गत ते बल शूर जितस्त्वायोधने हरि ॥ ३०
त्वत्प्रताप प्रभा द्रष्टु उलूक इव भास्वत । अशक्तस्तु शुनासीरो गुहामाशु विवेश हि ॥ ३१
तदृश्येन कृत भ्रातर्ममैतत्क्रूर कर्मणा । द्विसहस्रभुजोपेतस्सहस्रै कन्धरैरपि ॥ ३१
सेन्द्रमैरावत व्योम्नि गृहीत्वोच्चिक्षिप किल । तादृश ते बल कुत्र गत सिंहमुखाधुना ॥ ३३
मधुद्विषा पुरा युद्धे क्षिप्त चक्र सुदर्शनम् । येन वक्ष प्रदेशेन धृत निष्कविशेषवत् ॥ ३४
तारकेण तथा येन शैशवे हित (जित) भानुना । बद्धो मञ्चविशेषोर्कों भानुकोपेन लीलया । ३५
अग्निवक्त्र हिरण्याख्या तथावै वज्रबाहुना । द्वित्रिदशशिरोभिश्च क्रमेणैव बलोत्कटैः ॥ ३६
दृश्यतेऽद्य ममावस्था युष्माभि कथमीदृशी । पूर्वं च मत्सुतौ वीरौ शुनासीरेण मारितौ ॥ ३७
अविज्ञाय स्थित तच्च युष्माभिर्बलवत्तरैः । हा तात मातर्हा पुत्रौ क्व गतौ बलवत्तरौ । ३८
एवमादि वच प्रोक्त्वा लुठन्तीं पतित क्षितौ । अश्रु शूरस्तु शूराणा स्फुरद्दशन वाससा ॥ ३९
यमन्कोपाग्निमत्यर्थ मब्रवीद्वचन द्विजा । केनवेद कृत वत्से ब्रूहि मुक्त्वाशु रोदनम् ॥ ४०
संहरिष्यामि त शत्रु सपुत्र सहबान्धवम् । इति ब्रुवन्त व शूर वीक्ष्योवाच सुदु खिता ॥ ४१
श्रीकायानगरस्याह वृक्षारामे पुलोमजाम् । अवोच वीक्ष्य सविध शूरस्यागच्छ सुन्दरि ॥ ४२
इत्युक्तमात्रेण तदा पालकोऽस्यास्तु शीघ्रत । खड्गमादाय हस्तेन कृतवानीदृश मम ॥ ४३
इति तस्या वच श्रुत्वा रोदनेन युत भृशम् । महाकोपेन युक्तस्सन् शूरोऽर्कादि नवग्रहान् ॥ ४४
पक्ष्वृतूंश्च तथाचाय देवास्तत्र स्थितानपि । आहूय शृङ्खलाभिस्तान् बध्वा वाचं च निष्ठुराम् ॥ ४५
उक्त्वा कारागृहे सर्वान् अपातयदहो द्विजा । भूक्षकासुराणाच विच्छेदहि शिरांसि स ॥ ४६
ब्रह्मणाच कर तस्या दापयामास शीघ्रत । अर्कादयो ग्रहास्सर्वे लोकसंरक्षणाय हि ॥ ४७
परिमोच्यास्तु तान् शूरो मुञ्चे युक्तथा तदा विधि । अमोचयत्तु शीघ्रेण प्रियमुक्त्वास्य भूरिश ॥ ४८
शूरमिन्द्र प्रतिक्रुद्ध भानुकोपो वचोऽब्रवीत् । ४९

इति श्रीस्कान्दे महापुराणे शाकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे चतुर्दशोऽध्यायः ॥

---

॥ अथ पञ्चदशोऽध्याय ॥

भानुकोपेन जयन्तादीना कारागृहे स्थापन, ऐरावतेन श्वेतवननाथपूजन च ॥

किमर्थं तात भवता क्रियते यत्न प्रति । तमिन्द्राख्यमहं गत्वा यत्रा स यत्र कुत्र चित् ॥ १
आनयिष्यामि शीघ्रेण दण्ड्या साकं तयान्तिकम् । यद्यदृष्टो मया विन्द्र पुरीं तस्यामरावतीम् ॥ २
दग्ध्वा देवाश्च बध्वाऽहं प्रापयिष्यामि तेऽन्तिकम् । इत्युक्त्वा प्राप्य तत्राज्ञा प्रतस्थेऽथ द्विजोत्तमा ॥ ३

ततस्तु शूरपद्माऽयं ब्रह्मविष्णू सुरानपि । प्रेरयित्वा स्वकं वेश्म स्वयमन्तःपुरं ययौ ॥ ४
भानुकोपेन सेनाच सहस्रगणिता तदा । वाहिनी प्रस्थिता चान्या तस्यास्स्यन्दन सन्ततीः ॥ ५
अश्वाश्चापि गजाश्चैवं प्रतस्थुर्वीर्यवत्तराः । अनेककोटिच्छत्राणि ध्वजानि सुबहून्यपि ॥ ६
एवमेतैश्च तरसा भानुकोपोऽप्यमुज्वलः । विंशत्यश्वसहस्रैश्च यद्धं स्यन्दनमुत्तमम् ॥ ७
आरुह्य सह दुर्मुखया श्रीकाम्यपुरमाप सः । वृक्षरामश्च तत्रत्यं वीक्ष्यायं चोदितोऽन्यया ॥ ८
अदर्शनेन चेन्द्रस्य वृक्षारामं तदाच्छिनत् । प्रस्थितश्च पुनर्भूमिं सेनया पर्यटन् द्विजाः ॥ ९
अदृष्ट्वा तत्र देवेन्द्रं इन्द्रलोकं जगाम ह । रुरोध पत्तनं तस्य च्छिन्नभूरुह सन्ततिः ॥ १०
तदाकर्ण्य जयन्तस्तु चिन्तयित्वा भृशं तदा । जन्याय कृतबुद्धिस्तु तरसा निर्ययौ पुरात् ॥ ११
आरुह्य चाभ्रमुवतिमैरावतगजं वरम् । धृतनानायुधश्चापि देवतैरमरैस्तथा ॥ १२
देवसेना तदा दृष्ट्वा युद्धाय कृतनिश्चयाम् । भानुकोपस्य सा सेना प्रापाशु बलगर्विता ॥ १३
सेनयोरुभयोश्चापि महद्युद्धं तदाभवत् । क्षिप्रात्तु देवसेना सा पलायत किल द्विजाः ॥ १४
पलायिताश्च तां सेनां पश्चात्तु तरसाऽसुराः । भानुकोपस्य सविधं आनिन्युर्भृशमीरिताः ॥ १५
दृष्ट्वैतच्च जयन्तस्तु विचिन्त्य सुतरां तदा । ववर्ष शरजालानि मारयामास वाहिनीम् ॥ १६
दानवंश्यां च सेनायां दैतेयानां महायशाः । ऐरावतश्च दैतेयानमारयदहो बहून् ॥ १७
नीलकेशाख्य दैतेयश्शस्त्राण्यथ ववर्षह । जयन्तस्योपरि क्रूरस्सुतरां बलवांस्तदा ॥ १८
तस्योपरि जयन्तोऽपि मुक्त्वा शस्त्राणि भूरिशः । चिच्छेद नीलकेशस्य कवचं सुदृढं क्षणात् ॥ १९
नीलकेशस्तु संक्रुद्धो मुक्त्वास्त्राणि बहून्यपि । अच्छिनद्धनुषो ज्यां च जयन्तस्य तदाऽसुरः ॥ २०
मायामन्त्रं ततो जप्त्वा नानारूपधरः पुनः । शरानस्योपरि भृशं जयन्तस्तु मुमोचहि ॥ २१
ततस्तु नीलकेशोऽयं किञ्चित् क्षीण बलोऽभवत् । अथ सोमासुरस्तूर्णं वरुणः पद्म एव च ॥ २२
मायावली च बलवान् वामश्चापि महासुरः । मागधो दण्डकश्चापि तथा मारुतवस्त्वपि ॥ २३
सुरकेसरि नामापि महाबल पराक्रमः । नीलकेशं क्षीणबलं दृष्ट्वा सर्वेऽपि शीघ्रतः ॥ २४
चक्रुर्युद्धं महाघोरं मायां दृष्ट्वास्य मोहिताः । तस्थुस्सर्वेऽपि वलितः किञ्चिद्भग्नमनोबलाः ॥ २५
तादृशांस्तान् ततो वीक्ष्य भानुकोपः स्ववल्ली । उक्त्वा स्ववीर्यं शस्त्राणि मुमोचाभ्येत्य तं द्रुतम् ॥ २६
जयन्तोऽपि स्वनामाय उक्त्वास्त्राणि ववर्षहि । पुनश्च सहस्रास्त्राणि सहस्राणि महान्त्यपि ॥ २७
मुक्तवास्य चापं चिच्छेद भानुकोपस्य कर्पतम् । आदाय चापमन्यच्च भानुकोपोऽपि कोपधृक् ॥ २८
छित्वा मुक्तानि तेनायं अस्त्राणि च तदाऽसुरः । ववर्षास्त्र सहस्राणि जयन्तस्योपरि द्विजाः ॥ २९
पुनश्च भानुकोपस्य रथश्चाभ्यान्यहून्यपि । मारयामास मुक्त्वायं सहस्राणि सहस्रशः ॥ ३०
भानुकोपस्तु वीर्येण तदारुह्य महारथम् । अन्यान्यादाय बाणानि ववर्षायेऽस्य भूरिशः ॥ ३१
तूणीरं चाच्छिनच्छीघ्रं गजमैरावतं तथा । निशितेनास्त्र जालेन चकार रुधिराप्लुतम् ॥ ३२
जयन्तस्तु पपातायं मूर्छितो नितरां तदा । ऐरावतस्तु सपदि भानुकोपरथं बली ॥ ३३
तिर्यक् दन्तप्रहारेण ताडयामास वेगतः । सारथिं च तदा हत्वा भानुकोपं भुजान्तरे ॥ ३४
आस्फालयच्च दन्ताभ्यां गण्डपाषाणनिष्ठुरे । तदाघातवशादस्य भग्नौ दन्तौ द्विजोत्तमाः ॥ ३५
भग्नदन्तं भानुकोप. कपोले ताडयद्द्रुतम् । तदा ताडनमात्रेण मूर्छामाप गजोत्तमः ॥ ३६
कोलाहलमकुर्वंस्ते दैतेयास्तु ततोऽद्भुतम् । प्रविश्य पत्तनं भूयो दग्ध्वा देवांश्च रोपितान् ॥ ३७

बध्वा देवाङ्गनाश्चापि जयन्तं च विमोहितम् । पूर्वं बद्धान् सुरांश्चापि गृहीत्वाशु तदासुरः ॥ ३८
शूरस्य निकटं प्राप भानुकोपस्सहासुरैः । वृत्तान्तं तस्य निखिलं अब्रवीत्सयथाक्रमम् ॥ ३९
ततस्तु शूरपद्मायं दृष्ट्वा देवांस्तदा क्रुधा । पुरतस्त्वजवपश्यास्तान् संताड्य सुभृशं द्विजाः ॥ ४०
चिच्छेद च करांस्तेषां पादांश्चासुरोत्तमः । उरुघांश्च तदा वीक्ष्य तान् श्रुत्वाऽमृतपानतः ॥ ४१
कारागृहं तदा देवान् प्रापयामास शीघ्रतः । जयन्तप्रमुखान् बध्वा शृङ्खलाभिरहोऽसुरः ॥ ४२
देवाङ्गनाश्च शुश्रूषां विधातुं दितिजन्मनाम् । कल्पयित्वा तदा पुत्रं भानुकोपं वचोऽब्रवीत् ॥ ४३
जयन्तप्रमुखानाञ्च देवतानां तथाधुना । बध्वा पुत्रात्रानयने को भारो भानुकोप हि ॥ ४४
पुरा त्वं शैशवे पुत्र शयानस्सूक्ष्म मञ्चके । गवाक्षरन्ध्रगैः पादैः स्पृशन्तं तं दिवाकरम् ॥ ४५
अबन्धो मञ्चपादे तं कोपेनैनं तदा किल । तदानीमाह मां ब्रह्मा मोचनीयो दिवाकरः ॥ ४६
इत्युक्तवन्तं ब्रह्माणं येनायं बन्धितो विधे । तेनैव भानुकोपेन मोच्य इत्युक्तवानहम् ॥ ४७
*विधाता त्वां समभ्येत्य प्रार्थयामास वै किल* । *ब्रह्मास्त्रादिकमादाय पश्चात् त्वं तं मुमोचिथ* ॥ ४८
तादृशं ते बलं वीर्यं जयन्तः कायमीदृशः । एवमादि वचः प्रोक्त्वा भानुकोपं निजात्मजम् ॥ ४९
स्वगृहं प्रेषयित्वाशु स्वयं चान्तःपुरं ययौ । ऐरावताख्यो नागेन्द्रो हित्वा मूर्छां द्विजोत्तमाः ॥ ५०
गत्वा श्वेतवनाभिख्ये पुरे पुण्ये सुशोभने । पूजयित्वा महादेवं दन्तौ लब्ध्वा मनोहरौ ॥ ५१
मेरुमाप तदा दन्ती यत्रास्ते बलसूदनः । यथेन्द्र प्रमुखा देवा बाधिता शूरपद्मना ॥ ५२
एवमेव हरिर्ब्रह्मा ऋषयश्च महात्मनः । शूरेण सिंहवक्त्रेण तारकेण तदात्मजैः ॥ ५३
बाधिताः पापिभिस्सर्वै दिवारात्रमतन्द्रितैः ॥ ५४

इति गदितमशेषं षण्मुखायासुराणां निखिलदुरितहन्त्रे देवपूज्येन सम्यक् ।
तदिदमहमिदानीमासुर्व्याश्चरित्रम् व्यपगतकलुषाणां वोऽवदं भूसुरेन्द्राः ॥ ५५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
आसुरकाण्डे पञ्चदशोऽध्यायः ॥

आसुरकाण्डसमाप्तः ।

---



उ
ஸ்ரீராமஜெயம்.

श्री महागुरुभ्यो नमः ॥ श्री विघ्नेश्वराय नमः ॥ अविघ्नमस्तु ॥

श्री शरवणोद्भवाय नमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

# ॥ वीरमाहेन्द्रकाण्ड प्रारम्भः ॥

॥ अथ प्रथमोऽध्यायः ॥

वीरबाहु दौत्यम् ॥

सूतः —

अथ वाचं निशम्यायं स्कन्दस्तां गुरुणोदिताम् । वीरधैर्येण करुणादृष्ट्या तिष्ठेत्याह तदा द्विजाः ॥ १
ततः प्रोवाच वचनं ब्रह्मविष्णु पुरोगमान् । देवानवेक्ष्य सेनानीर्हितार्थं श्रवणप्रियम् ॥ २
शृणुध्वममरास्सर्वे ब्रह्मविष्णुपुरस्सराः । शूरं सबान्धवं हत्वा स्थापयिष्यामि वो ध्रुवम् ॥ ३
प्रेष्यस्तदर्थं कोवास्यात् दूतस्तस्य बलाबले । उन्नतिं निम्नतां ज्ञातुं मर्मज्ञो वा विचक्षणः ॥ ४
तदाकर्ण्य वचस्सर्वे वीरबाहुं बलोत्कटम् । निश्चित्यानुमतिं लब्ध्वा स्कन्दस्यैनं सुरोत्तमाः ॥ ५
ऊचुस्सर्वेऽपि ते देवा वीरबाहुं महाबलम् । अमराणां हितार्थाय वीरबाहो त्वयाऽधुना ॥ ६
शूरस्य नगरं गत्वा विचार्यास्यानुपूर्वतः । वृत्तान्तं तत्त्वतः शीघ्रं आगन्तव्यं पुनश्च भोः ॥ ७
तारकारिस्ततो वाचं वीरबाहुं मनोहराम् । प्रोवाच वीरबाहो त्वं शूरस्याभ्याशमेत्य च ॥ ८
जयन्तप्रमुखान् देवान् मुक्त्वा त्यक्त्वा त्वहंकृतिम् । बहुमानेन तान् सर्वान् पालयित्वा निजे पुरे ॥ ९
वसान्वयाद्यमागत्य सानुजं सात्मजं द्रुतम् । त्वां हनिष्यामि शूराद्य स्कन्दस्योद्दर्शीतिच ॥ १०
निवेदयित्वा शीघ्रेण ज्ञात्वाऽऽत्मश्लाघ्यं मतिम् । इति स्कन्दवचः श्रुत्वा प्रणम्य विनयेन तम् ॥ ११
देवानां वचनं चापि चित्ते कुर्वंस्तथेति च । प्रतस्थे वीरबाहुस्तां पुरीं शूरेण पालिताम् ॥ १२
प्रस्थितस्सहसा विप्राः वीरबाहुर्महाबलः । गन्धमादनमारुह्य वपुषे पर्वतेऽभ्यगम् ॥ १३
ग्रहांश्चभित्तिपर्यन्तं घोररूपो भयङ्करः । ददर्श पत्तनं तस्य शूरस्य सुमनोहरम् ॥ १४
नानासुरसमाकीर्णं नानागोपुरशोभितम् । अनेकमण्टपौघेन मण्डितं तत्र तत्र च ॥ १५
नगरं रत्नभित्त्यापि परितः परिमण्डितम् । समुद्रान् पर्वतान् रम्यान् नानादेशाननेकशः ॥ १६
दृष्ट्वाऽथ चिन्तयामास नगरं सासुरं महत् । निजहस्ततलायामं हन्योऽस्त्याद्यमीदृशम् ॥ १७
करेण पीडयिष्यामि तिलानि तिलयन्त्रवत् । यद्यं चेद्देवतास्सर्वा मरिष्यन्त्यत्र संस्थिताः ॥ १८
इत्यादि चिन्तयित्वाऽयं वीरबाहुस्तदा स्थितः । अष्टाशादिकं कृत्वा तदाऽधः पर्वतोऽवसत् ॥ १९
पतत्यस्मिन्गिरिराजे गुहास्था दितिसंभवाः । तारकस्य भटाः केचिन्मृतिमापुरधोगताः ॥ २०
वीरबाहुर्वपाशोऽयं रूपं तनुं पयोनिधेः । गृहीत्वा मनसि ध्यात्वा देवसेनापतिं गुरुम् ॥ २१
लङ्घयामास वेगेन सागरं सः क्षणाद्वयम् । उल्लिख्येव यथाकाशशृङ्गं तत्तुं हरिपतिम् ॥ २२
पर्वतोऽपि यथापूर्वं उन्नमय्य क्षणात् स्थितः । विष्णुमार्गं यथा वेगात् प्रापयं साट्टहासतः ॥ २३

तदानीमेव तद्वायु संक्षुब्धा इव पर्वताः । आगतास्तस्य मार्गे ते तूलजालमिवानिले ॥ २४
अकंपयत्तदा शीघ्रमब्धिरुल्लोलमण्डितः । शशाम वाडवो योऽग्निर्वायुवाघात वशादयम् ॥ २५
एवमस्य गता मार्गे येये मेघार्क पूर्वकाः । वभ्रमुस्ते तदात्यर्थं वीरबाहोर्जवेनहि ॥ २६
यदा लङ्कापुरीमाप याळिवक्त्रासुरस्य सः । सेनापतिर्वीरसिंहस्तस्य तेजोबलान्वितः ॥ २७
वाहिनी पञ्चशतकैस्सेनानामाशु निर्ययौ । वीक्ष्य व्योमगतं शीघ्रात् गम्यते कुत्रथा त्वया ॥ २८
को भवानिति पृच्छंस्तं अहं शूरं व्रजाम्यमुम् । वीरबाहुरितिख्यातः किं कर्तुं शक्यते त्वया ॥ २९
इत्युक्त्वा धावनोद्युक्तमवर्षच्छरवृष्टिभिः । असुरास्तस्य भृतका महानिनदतत्पराः ॥ ३०
तानाशु खड्गमादाय गणिताच्वाहिनी शतैः । चिच्छेदान्येतु दैतेयाः पलायंत तदा द्विजाः ॥ ३१
ततस्तं वीरसिंहोऽपि स्वयं शूलं पविं तथा । क्षेपयामास वेगेन वीरबाहोस्तनुं प्रति ॥ ३२
अच्छिनत्तौ तदा शीघ्र खड्गेनायं क्रमेणहि । चिच्छेदास्य शिरोहस्तौ वीरबाहुर्महाबलः ॥ ३३
एवमाकाशगस्तूर्णं हत्वा दैत्यान्बहूनयम् । लङ्कोपर्यपतद्भीमो वीरबाहुर्जवेनच ॥ ३४
पतनात्तस्य वेगेन पपाताधः पुरी भृशम् । मृताश्च बहवो दैत्याः केचिच्छिन्नाङ्घ्रि पाणयः ॥ ३५
तिमिङ्गिलाद्यो मीना जक्षुःकांश्चिद्दितेस्सुतान् । ततोऽतिवीरदशीघ्रेण पुत्रो याळिमुखस्य सः ॥ ३६
किमेतदिति कोपेन निर्ययौ योद्धुमुद्धतः । दृष्ट्वा तं वीरबाहुं ते तद्भटाः कोपविह्वलाः ॥ ३७
ववर्षुश्शरवर्षाणि घर्ममेघाः इव क्वचित् । तत्सर्वं सहसा छित्वा मारयत्कांश्चितव्रतान् ॥ ३८
ततोऽतिवीरस्तत्सा सवज्रशक्तिसंज्ञितम् । अमुञ्चदायुधं भीमं वीरबाहुं प्रति द्विजाः ॥ ३९
खड्गमादाय सोप्याशु चिच्छेदायुधमागतम । गदां मुमोच भूयोऽयं वीरबाहोस्तनौ दृढाम् ॥ ४०
सा तु वक्षस्थले तस्य पतिता भंगमापह । शूलमादाय वेगेन पुनश्चामुं जघान सः ॥ ४१
तूर्णं तदपि हस्तेन चूर्णयामास भीषणम् । करवाळं गृहीत्वायं ब्रह्मणा दत्तमुज्ज्वलम् ॥ ४२
उक्त्वास्य महिमाजालमतिवीरस्तमापहि । भ्रमन्नितस्ततश्चापि संमुखात्पार्श्वतस्तथा ॥ ४३
पुनश्च मण्डलाकारं प्राप्याधावत्तदा भृशम् । एवं प्रदर्शयन् शिक्षां वीरबाहुरपि द्विजाः ॥ ४४
परस्परं युद्धमल्लौ युयुधातेतरामुभौ । ततः खड्गेन तद्धस्ते वीरबाहुश्शिरस्तथा ॥ ४५
पाणिमेकं स्वयत्नेन चिच्छेद निशितेनहि । एवं लंकापुरी दैत्यान् हत्वायं सुबहूनपि ॥
पुनश्च खं गतस्तूर्णमट्टहासादि भीषणः ॥ ४६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

वीरबाहुना वीरमाहेन्द्रपुरप्रवेशः ॥

सहस्र योजनायाम परिघां लंघ्य वेगतः । प्राकार द्वारमापायमुत्तरं पत्तनस्य सः ॥ १
तत्र घोरातिघोरौ द्वौ पालकौ वीक्ष्य भीषणौ । सहस्र वाहिनी संख्यान् गजांश्चैव तथारथान् ॥ २
वाहिनी द्विसहस्रेण मितानश्वान्वलं तथा । यद्यनेन गमिष्यामि मार्गेणैव तदाऽसुरैः ॥ ३
कार्यहानिर्भवेदेवमागतस्य ततो मम । इत्यादि चिन्तयित्वाऽयं प्राचीं द्वारं ततोऽगमत् ॥ ४
तत्रापि महिपाक्षाख्यं वीरभानुं महाबलौ । यावदुत्तरदिग्भागे चतुरङ्गबलं स्थितम् ॥ ५

तथैव तावत्सवीक्ष्य दक्षिणद्वारमाप स. । गजनयन महाभीम सहस्रवदनैरपि ॥
द्विसहस्रकरैश्चापि तथा शुण्डासहस्रकैः ॥ ६
पालक नगरस्यापि संवृत सैन्ययापि तम् । ददर्शाथ गजास्योऽपि वीरबाहुमवेक्ष्य स ॥ ७
प्रेषित येन देवेन कोमवान् वधमागत । इत्युक्त्वा स महाकोपादुद्धाद्यादिं तदोन्नतम् ॥ ८
चिक्षेप दोर्ष्णि तस्याथ वेगेन महताऽसुर. । जग्राह पर्वत शीघ्राद्दोषाऽसौ सव्यमेव तम् ॥ ९
पर्वतस्तु पतस्तत्र चूर्णतामगमत्खिल । पुनश्च तरसा दोर्भ्यां सहस्राणि गिरीनयम् ॥ १०
शुण्डाजालेन सगृह्य क्षेपयामास वेगत । तेऽपि सद्य पतन्तोऽस्य शरीरे चूर्णतां गता ॥ ११
गदा हस्तेन संभ्राम्य पुनर्वेगेन चाक्षिपत् । खड्गेन तामपि तदा चिच्छेद रिपु भूसुरा ॥ १२
वटवृक्षान् सहस्राणि गृहीत्वा तरसा पुन. । शुण्डासहस्रैश्चिक्षेप भ्रामयित्वा गजासुर ॥ १३
तान् सर्वानपि खड्गेन चूर्णयामास वेगत । मुष्टियुद्ध तत कर्तुं उपक्रम्य करास्तदा ॥ १४
खड्गेनाभ्यागतस्यास्य सहस्राण्यच्छिनत्क्रुधा । शुण्डासहस्रन्च तथा चिच्छेदारभ्य मूलत ॥ १५
पुनश्च खण्डहस्तैस्तमागत ताडितु द्रुतम् । पादेन ताडयामास वीरबाहुर्गजासुरम् ॥ १६
पपात भूतले क्षुब्धो गतप्राणस्तदाऽसुर । हत्वा त वीरबाहुस्तु पुन कार्यविचक्षणम् ॥ १७
मत्वा गृहीत्वा क्षिप्रण सूक्ष्मरूप द्विजोत्तमा । पश्चिमद्वारमत्युच्चमारुरोहच गोपुरम् ॥ १८
स्थित्वा तत्र पुरीं रम्या नानाश्चर्य समन्विताम् । नानासुरसमाकीर्णामनेकाञ्चितवीथिकाम् ॥ १९
पताका वैजयन्ताभिर्जयन्तीममरावतीम् । नक्षाडभित्ति भित्त्वैव गच्छन्तीभिर्वहिर्नभ ॥ २०
मण्डपावलिभिर्जुष्ट गोपुरैरभिशोभिताम् । वापीकूपतटाकैश्च पुष्पारामैर्मनोरमाम् ॥ २१
नानावृक्षसमृद्धैश्च शोभमानामितस्तत । मधुरैस्सुकुमारैश्च कृतवेश्यागृहा यथा ॥ २२
वन्दीश्नामिरमरनारीभिश्च निषेवितम् । वाटीभि फलवृक्षाणा प्रतिगेह सुशोभनाम् ॥ २३
वाञ्छितार्थप्रदाभिश्च कामधेनुभिरुज्वलाम् । नवरत्न समावद्ध नानागेह मनोहराम् ॥ २४
प्रतिवेश्म वहिर्द्वार मोचावृक्षैस्सुमङ्गलाम् । रथाश्वगजसेनाभिरभित परिशोभिताम् ॥ २५
प्रासादतलमारूढ चन्द्रैस्सन्तप्तमुज्ज्वलाम् । समूह रेणुजालाच वायुनानुक्षण भ्रमम् ॥ २६
सोम सूर्याग्निभिश्चापि स्वकर्मनिरतैर्वृताम् । रथमादाय सूर्यस्य पुपुरभ्यो मनोहरम् ॥ २७
वस्त्राद्वैसवधूभिश्च वराभिरभिचित्रिताम् । कुलटाभिस्तथान्याभिर्धर्वन्तीभिर्वलाद्यीन् ॥ २८
अमरान् सुन्दरास्तद्दशावृता सौधवहिर्भुपु । सुधाकर गृहीत्वाशु सुरतश्रम हारिणम् ॥ २९
पीत्वा तत्रत्यममृत नालिकेर यथाजन । पुनश्च त्रिविक्तीभिरावृता सौधमालके । ३०
तादृशीं ता समुद्वीक्ष्य वीरबाहुर्द्विजोत्तमा । महाभाग्यमहोभाग्यं सर्वलोकेषु दुर्लभम् । ३१
वीक्षितु लोचनान्यस्यास्सहस्राण्यनल धियम् । ब्रह्मणो माधवस्यापि लोपोवास्या यथापुर ॥ ३२
वयमादि विचिन्त्याथमवतानु गोपुरात् । प्रविश्य पत्तन वीथ्या माश्चर्य वीक्ष्य वावरम् ॥ ३३
गत्वा तत्रापि संवीक्ष्य चित्रमन्दाश्च वीथिकाम् । तत्र दृष्ट्वा भूरीणि विचित्राण्यपरां तथा ॥ ३४
गान्धर्वमण्डपस्थानु दृष्ट्वा वीथीषु चाङ्कताम् । क्रमेण प्राप मदन पाण्डले यत्र भास्कर ॥ ३५
जयमत्प्रमुखा दैत्येन्द्रनासीरपुरोगमजे । ब्राह्मे पदनावानु संदरिष्यामि वो ध्रुवम् ॥ ३६
पप कद्रूपयोगिभिर्मुरमावेत निष्ठुरं । दण्डादिभि (मण्डपजन्) कराद्यैश्च शङ्कुनिर्दुष्कृतैः
महापद्मभृतिभिर्मदायत्तदाय मे । उपद्रवे महादेव किमर्थ मयताऽधुना ॥ ३८
पुरा सरक्षितास्माभिर् वर्णद्वि वैकुण्ठपात् । बालकृष्णान्तरपूणान् वल्डेवाद्ध तपासुरान् ॥ ३९

पीत्वा तच्चाप्यरक्षस्त्वं तादृशं कृतकोऽधुना । गजान्धकासुरौ हत्वा पालयामास वै सुरान् (भवान्)
मत्स्य कूर्म वराहाश्च नारसिंह त्रिविक्रमौ । हत्वा नेत्रेच मीनस्य कमठस्यास्थि कर्कशम् ॥ ४१
वराहस्यच दंष्ट्राच नृसिंहस्य त्वचं तथा । त्रिविक्रमस्य पृष्ठास्थि गृहीत्वैव पुरा वयम् ॥ ४२
पालिता परमेशान त्वया सर्वेश्वरामरा । भण्डासुरं जलधरं पद्ममेढं महासुरम् ॥ ४३
हत्वा पूर्वं महादेव त्वया संरक्षितास्सुरा । एवमादि भयात्स्वामिन् दैत्यवर्गसमुद्भवात् ॥ ४४
उद्धृत्य देवान् देवेश ररक्षिथ किल प्रभो । सुप्ते जगति सर्वस्मिन् जागर्षि त्वमतन्द्रित ॥ ४५
अध्वानं दिशसि स्वामिन् दुर्मार्गासक्त चेतसि । श्रमे गते तथा शम्भो शान्तिं हर हरस्यहो ॥ ४६
भये गते महादेव भीतेस्त्वं रक्षसि प्रभो । सर्वदा जागरूकेण भवता रक्ष्यते जगत् ॥ ४७
किं कर्तव्यं त्वया शम्भो वयं पीड्यामहे भृशम् । कर्मणाऽस्म कृतेनैव त्वदाज्ञाधिष्ठितेनहि ॥ ४८
कृतश्च शुनासीरं शच्या साकमरिन्दम । गजराडभ्रमुपतिश्शम्भु संहार कारक ॥ ४९
अमराणां पुरीतद्वत्सर्वर्तुकुसुमोज्वला । नन्दनं वैजयन्तीच मातलिश्चैव सारथिः ॥ ५०
कथं सुधर्मा देवानां सभा सद्भिरधिष्ठिता । आनात्यवस्थामस्माकं किंवा वृषारिरीदृशीम् ॥ ५१
ज्ञात्वाथ ब्रह्मविष्ण्वादि देवैस्साकं पुरन्दर । शिवलोकमनुप्राप्य सर्वपापनिकृन्तनम् ॥ ५२
शैलादिं तरसा दृष्ट्वा गणानामधिपं चरम् । व्यजिज्ञपत्किमीशानं नीलकण्ठमुमापतिम् ॥ ५३
आहोस्विन्नन्दिना शोकस्समयस्स तिरस्कृत । यद्यदुक्तश्च शूरेण तत्तद्देवैरनुष्ठितम् ॥ ५४
तथापि मानभंगञ्च कर्तुमिच्छां चकारहि । किं कृतं दैवतैस्सर्वैं पापं शम्भो महेश्वर ॥ ५५
पिपीलिकानां यूकानां मशकानां तथैवच । अन्येषामपि जन्तूनामपि त्वं पालकः खलु ॥
एवमादि वदन्तस्त तदा निद्रामवापिरे ॥ ५६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे द्वितीयोऽध्याय ॥

---

॥ अथ तृतीयोऽध्यायः ॥

जयन्तादि देवानां स्वप्ने स्कन्ददर्शनं, स्कन्देन वीरबाहु प्रेषणम् च ॥

ततस्सर्वेषु देवेषु निद्रां प्राप्तेषु भूसुरा । प्रादुर्भूय महादेवतनूजष्षण्मुखस्स्वयम् ॥ १
नानारत्नसमाबद्धजातकुम्भकिरीटभृत् । प्रफुल्लाम्भोजसुषमाभृद्भिष्षड्भिर्मुखैरपि ॥ २
युगव्यायतवृत्तोद्यद्बाहुभिर्द्वादशभिर्भृशम् । उरसाऽतिविस्तीर्णसुकुमारेण मण्डित ॥ ३
अष्टापदकृतोद्भास्वब्रह्मसूत्रविराजितः । कटिबद्धलसत्पट्टवसनसूक्ष्मसुपेशलः ॥ ४
मुक्ताहारैर्विचित्रैश्च मण्डितोरस्स्थलस्तदा । अधिरूढबृहत्केकीवाहनस्तरसा सुरान् ॥ ५
समीक्ष्य सुरान्सुरैर्भृशं निद्रावशगतान् । भाष्यासयच्च जयन्तादीन् स्वप्नरूपेण चागत ॥ ६
स्वज पुत्र जयन्ताद्य कुशलं ते भविष्यति । पुलोमजाशुनासीराविदानीं तिष्ठतस्सुखम् ॥ ७
आगमिष्यति मद्दूत क्षणेनैव महाबल । शूरञ्च संहरिष्यामि सानुजञ्च ससैनिकम् ॥ ८
स्थापयिष्यामि युष्मांश्च यथापूर्वं स्वकेपदे । एष प्रतिसुरं दृप्यसेनानीः सप्रमथग ॥ ९
आश्वास्यातर्दधे क्षिप्रं महादेवात्मजो गुह । ततस्सर्वेषु देवेषु त्यक्तनिद्रेषु भूसुरा ॥ १०
यदास्यन्योन्यमाश्चर्यं वीरबाहुस्तदागत । भसुरान्मोहयित्वाशु बाधकानत्र संस्थितान् ॥ ११

कृतप्रणामस्तैर्भूयः प्रोवाच वचनं तदा । जयो जयन्त भवतो भविष्यत्येव शीघ्रतः ॥ १२
इन्द्रस्तु त्वत्पिता देवैर्ब्रह्मणा विष्णुना सह । गत्वा कैलासमचलं दृष्ट्वा तत्र महेश्वरम् ॥ १३
स्तुत्वा प्रणम्य देवेशं पीडां शूरकृतां तदा । उक्तवानथ देवेशस्तद्विप्रस्तुतं परम् ॥ १४
पार्वत्यां जनयामास सर्वं दैत्यनिबर्हकम् । कुमारस्त्वामरैस्सर्वैरागतश्शंभुचोदितः ॥ १५
श्रीसेन्तिनगरं प्राप्तस्तेन संप्रेषितोऽधुना । वृत्तान्तं वेदितुं शूरपद्मनेभ्यागतोस्म्यहम् ॥ १६
त्वत्पिता च शुनासीरः प्रोक्तवान्वचनं तदा । पुलोमजा निवसति मेरौ रम्ये सुखेन सा ॥ १७
अवधीदेवमिन्द्रोऽपि सुखेन वसति ध्रुवम् । क्रौञ्चतारकनामानावसुरौ हतवान्गुहः ॥ १८
अथायं षण्मुखस्तूर्णं हत्वा शूरमुखासुरान् । पालयिष्यति देवैस्त्वा पितृभ्यां सः स्थितं सुर ॥ १९
एवमुक्त्वाथ दैवैर्देवैर्वंदितः स्वमयपलः । सन्तुष्ट्या सह संभाष्य क्रमेणस्त्वागमं स्वकम् ॥ २०
प्रतस्थे सहसा भूयो वीरबाहुस्सुरोत्तमः । असुराश्च यथापूर्वमुत्तस्थुर्गतमूर्च्छनाः ॥ २१
आश्चर्याणि पुनर्वीथ्यां तस्यां तस्यां महान्त्यपि । दृष्ट्वा क्रमेण प्रापाय शूरवेश्मातिसुन्दरम् ॥ २२
सूक्ष्मरूपेण तेनैव लोचनानामगोचरः । गोपुरद्वास्थयोरुग्रमयूरगभिषयोस्तदा ॥ २३
पहरतामपि दैत्यानां तद्भटानामपि द्विजाः । ददर्श शूरमसुरैरासेवित निशान्तिकम् ॥ २४
दिव्यसिंहासनारूढं दिव्याम्बरधरं परम् । स्फुरत्कनककोटीरमणिज्वालावलीवृतम् ॥ २५
वर्णकुण्डलकाभ्यां च मण्डिताननमण्डलम् । मन्दहासप्रविस्फूर्जद्दन्तपङ्क्तिविराजितम् ॥ २६
स्फुरल्ललाटफलकत्रिपुण्ड्रावलिभूषितम् । सहस्रयोजनायाम मण्डपे चारुमण्डिते ॥ २७
नृत्यद्भिरप्सरस्संघैर्नृत्यादिरसकोविदैः । नीराजनविधात्रीभिर्दिव्यनारीभिरावृतम् ॥ २८
नानालंकारसंयुक्तं नानाभावविचक्षणम् । दृष्ट्वैव शूरपद्मानं वीरबाहुर्द्विजोत्तमाः ॥ २९
सिंहासनं विनाचैवं गतं नगणये (चेगणे) हि सः । इत्यालोच्य हृदि स्कन्दं चिन्तयामास वै द्रुतम् ॥ ३०
स्कन्दप्रसादादयुच्चं नानारत्न विचित्रितम् । अनेकार्कप्रतीकाशममृतोपममुज्ज्वलम् ॥ ३१
स्वप्रभावबलेनैव विष्कृतं तत्रासनम् । लब्ध्वा वपुस्स्वकीयञ्च यथारूपं तथाह्यसौ ॥ ३२
अग्रे शूरस्य निक्षिप्य सिंहासनमधिष्ठितः । महता च प्रभावेन ज्वलन्निव भृशं तदा ॥ ३३
तादृशं तमवेक्ष्याशु दैत्यास्सर्वेऽप्यचिन्तयन् । कोऽयमुज्ज्वलोऽत्यर्थं प्रभाया विष्णुदीपरो ॥ ३४
कथमत्रागतश्चैको वञ्चयित्वाशु पालकान् । एवं दैत्याभिप्रेक्ष्य शूरः प्राह वचः क्रुधा ॥ ३५
कोवा भवान्नत्वाशु पुत्रस्त्वं कस्य कोऽसि वा । महेन्द्रजाल विधेयं त्वया सम्यगनुष्ठिता ॥ ३६
पुरतो मे स्थितिं कर्तुं कंपन्तेव सुरोत्तमाः । ब्रह्मादयो मुकुन्दोऽस्त्यं साहस्यासनमुत्तमम् ॥ ३७
भवान् विभुत्वप्रेसे सर्वालङ्कारमण्डितः । कस्मादेतादृशी विद्या कृता सम्यक् त्वयाऽधुना ॥ ३८
तस्मात्तुभ्यं प्रयच्छामि प्राणत्यागमहं क्षणात् । किमर्थमागत ब्रूहि त्वया सम्यगनुक्रमात् ॥ ३९
इति शूरवचः श्रुत्वा वीरबाहुर्द्विजोत्तमाः । स्मयमानमुखाम्भोजः प्रोवाच वचनं तदा ॥ ४०
शृणु शूर प्रवक्ष्यामि लोकगर्वोऽद्यमानतः । ब्रह्मविष्ण्वादयो देवास्त्वया संपीडितास्सदा ॥ ४१
कैलासवासिनं देवं सर्वेषामभयप्रदम् । सर्वरोगापहं शान्तं साक्षात्परपददायकम् ॥ ४२
गत्वा तत्र अमरास्सम्यक्स्तुत्वा स्तोत्रशतैरपि । व्यजिज्ञपन् यथावृत्तं पीडां युष्मत्कृतां तदा ॥ ४३
संश्रुत्यैतु महादेवो प्रोतुरवे विनयान्विताः । देवदेव महादेव शूरोऽयं बाधते सुरान् ॥ ४४
तस्मात् त्वं तद्विनाशाय पार्वत्याममरेश्वरम् । उत्पादयाशु भगवन् कुमारं शूरमारिणम् ॥ ४५

ततस्तु भगवान् देवान् ओमित्युक्त्वा महेश्वरः । अजीजनत्कुमारं तं कालेनैवासुरद्रुहम् ॥ ४६
कुमारं च ततः प्रेक्ष्य प्रोक्तवान्वचनं तदा । त्वं पुत्र देवसेनानीः कान्तिशीकान् सुरोत्तमान् ॥ ४७
रक्ष शूरमुखान् दैत्यान् हत्वा शीघ्रं महाक्षय । इत्यादिष्टो भगवता प्रतस्थे सहसा तु सः ॥ ४८
मध्येमार्गं महापापं दैत्यं क्रौञ्चाभिधं तथा । तारकं च महाघोरं भ्रातरं तव षण्मुखः ॥ ४९
हत्वा श्रीशैलनगरे रम्ये वसति संप्रति । दयया त्वयि देवेशस्तेऽन्तिकं मामचोदयत् ॥ ५०
बुद्धिमत्त्वाच्च तेनेयं मुक्त्वा देवान्यथापुरम् । जयन्तप्रमुखानाशु यज्ञास्मिन्पत्तने स्वके ॥
नोचेदिदानीमागत्य संहरिष्याम्यसंशयम् ॥ ५१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे तृतीयोऽध्यायः ॥

---

## अथ चतुर्थोऽध्यायः ॥

### वीरबाहुना शूरस्य उपदेशः शतमुखादीनां वधश्च ॥

जयन्ताद्यांस्ततस्त्वं च मुञ्च शूर सुरानिमान् । त्यक्त्वा गर्वं यथापूर्वं तिष्ठ भूयोऽप्रमादतः ॥ १
एवमादि वचश्चोक्त्वा वीरबाहुर्द्विजोत्तमाः । स्फुटाक्षरं सुगम्भीरं मौनमाप द्विजोत्तमाः ॥ २
शूरपद्मोऽथ तं वीक्ष्य वीरबाहुं क्रुधा ज्वलन् । किन्न जानाति मच्छौर्यं युक्ताचेष्टा शिशोरियम् ॥ ३
तारकस्य वधं श्रुत्वा संहर्तुं तमहं क्षणात् । निर्गतस्तु विचिन्त्याथ बालस्य हनने कथम् ॥ ४
मुक्त्वा लज्जां गमिष्यामीत्येवं तूष्णीं स्थितं मया । प्रेरयिष्यामि सेनाढ्यो जेतुं तमहमुद्धतम् ॥ ५
जयन्तप्रमुखान् देवान् नमुञ्चाम्यमरानपि । आनीय तरसा बध्वाऽऽयसं शृंखला वसाम्यहम् ॥ ६
एवमादि वचः प्राह गर्वयुक्तं तदासुरः । ततः प्राह वचश्शूरं वीरबाहुः क्रुधा पुनः ॥ ७
अविज्ञायास्य वृत्तान्तं शूरः स्कन्दस्य दुर्मते । बालोऽयं मां न जानातीत्येवमाद्युक्तवानसि ॥ ८
स तु देवाधिदेवस्य स्कन्दाख्या मूर्तिरव्यया । तस्य देहे समुत्पत्ति यान्त्यण्डानि पुनर्लयम् ॥ ९
यस्माद्दौत्ये नियुक्तोऽहं न किञ्चित्तन्मया(न्मम)ऽधुना । अवमानं कृतं तेन तव दुष्टस्य सत्यतः ॥ १०
एवं कटुवचोभिस्तं वीरबाहुरभर्त्सयत् । ततः क्रुद्धेन शूरेण चोदिता दितिसंभवाः ॥ ११
सहस्रशिरसः शूरा द्विसहस्रकरास्तथा । सहस्र संख्यास्सन्नद्धाः परिवव्रुर्वधाय तम् ॥ १२
तान्सर्वान् वीरबाहुस्तु गृहीत्वा पाणिना द्रुतम् । आस्फालयन्महीपृष्ठे गतप्राणांस्तदाकरोत् ॥ १३
प्रतस्थे सन्निधौ तस्य हत्वा दैत्यान् वयं क्षणात् । सिंहासनं तदान्तर्धिं वीरबाहोर्गतं किल ॥ १४
पुनश्शतमुखं शूरः प्रेरयामास शीघ्रतः । प्रेरितस्सतु सेनाभिः प्राप योद्धुं क्षणादमुम् ॥ १५
वीरबाहुस्तु सेनासु सारवत्सु तदाभृशम् । उत्पाट्य गोपुरं विंशत्सहस्रघटमण्डितम् ॥ १६
क्षेपयामास वेगेन महता बलवान् द्विजाः । पतनादस्य सेनास्ता मृतिमापुः क्षणादहो ॥ १७
ततश्शतमुखः क्रुद्धो ववर्ष किल सायकान् । ते सर्वेऽस्य शरीरेतु पतन्तः क्षुण्णतां गताः ॥ १८
पुनश्च वीरबाहुस्तं उत्पाट्यान्यत्तु गोपुरम् । जघान तरसा वेगात् क्रुधाऽत्यन्तं ज्वलन्निव ॥ १९
स च चिच्छेद शतशस्सायकैरस्त्रकोविदः । गोपुरं तरसा युद्धे शतवक्त्रो महाबलः ॥ २०
तोमरं प्रासशक्तींश्च बाणांश्चान्यान्बहूनपि । मुमोचास्य शरीरेऽयं पुनः कोपेन सोऽसुरः ॥ २१
तान् सर्वान् भञ्जयित्वायं धनुश्चास्य बभञ्ज हि । पुनः पाणिशिरायद्धुं आगतो द्विशतैरपि ॥ २२

तुनोदांसस्थलेनैव वीरबाहुर्महासुरम् । मुष्टिमात्रेण पतितं भूतले तं जवेन सः ॥ २३
आक्रम्योरसि चैकेन, पादेनान्येन तत्क्षणम् । अवलम्ब्य शिरांस्यस्य नाळिकेरान् जना इव ॥ २४
एवं शतमुखं हत्वा वीरबाहुर्महाबलः । गृहीत्वात्यद्भुतं रूपं अयुतच्छ्रायं पुनश्च सः ॥ २५
पादेनास्फाल्य तरसा मेदिनीं स्थितवान् यदा । तदा भुग्नाऽभवद्भूमिस्तदाक्रान्ता भृशं किल ॥ २६
जलस्रोतश्च सुमहद्भूत्तत्पतनादहो । असुरानपि तत्स्थानश्वानः(शक्राश्च)कर्षयत्तदा ॥ २७
तत्र केचिन्मृता दैत्या जलस्रोतसि मध्यगाः । पञ्चाशद्वाहिनी संख्या दैत्या भूयः प्रतस्थिरे ॥ २८
वर्षन्तश्शरवर्षाणि वीरबाहो स्तनौ भृशम् । रुधिराणि तदाङ्गेऽस्य प्रसुस्रुस्तु बहून्यपि ॥ २९
अथ तान् वीरबाहुस्तु पाणिभ्यामङ्घ्रिणाऽसुरान् । सन्ताड्य मारयामास सर्वानेतान् क्षणात् द्विजाः ॥ ३०
पुरस्य पालकानेवं हत्वा भूयोऽपि गोपुरम् । नियुतस्वर्णकुम्भौघ भासुरं सुमनोहरम् ॥ ३१
वैशाल्योन्नमनाभ्यांच योजनानां मितं महत् । पञ्चोत्तरशतानांच सहस्राणामपि क्रमात् ॥ ३२
उद्धृत्य पाणिना भूयो वेगेनाक्षिपदञ्जसा । निपपात तदास्थानमण्टपे शूरपद्मनः ॥ ३३
निपातनात्तदा तस्य मण्टपोऽप्यपतत्किल । पुनश्च मण्टपानन्यान् प्राकारान् वळभीरपि ॥ ३४
गोपुराट्टाल सौधांश्च स्तंभान् गण्डशिलांस्तदा । वृक्षानुत्पाट्य तत्रस्थान् क्षेपयित्वा पुनःपुनः ॥ ३५
ननर्त सोट्टहासेन करमुद्धृत्य लीलया । इतस्ततश्च पतनात्तेषां दैत्याः परे मृताः ॥ ३६
पलायनपराः केचिन्मुक्तकेशांबरा भृशम् । शूरस्तु भग्नमास्थान मण्टपं पत्तनस्य च ॥ ३७
ज्ञात्वा संक्षोभमत्यर्थं कोपेन दिति संभवान् । सहस्रबाहून् प्रोवाच वीक्ष्य पञ्चाशताननान् ॥ ३८
यूयं भटा जवेनैव (छलेनैव) बध्वात्रागच्छताऽधुना । इत्यादिष्टास्तदा तेन ते सर्वे वीर्यवत्तराः ॥ ३९
नानायुधानि तरसा मुञ्चन्तो निशितानि वै । सहस्रसंख्याः प्रागेव तं बद्धुं चोन्मनास्तथा ॥ ४०
भवदाज्ञां प्रतीक्ष्यैव स्थितादशूराधुनावयम् । इत्युक्त्वाऽनुमतिं लब्ध्वा प्रतस्थुस्सहसाऽसुराः ॥ ४१
परिवृत्य तदा वीरबाहुमेते महासुराः । नानायुधानि तरसा मुमुचुर्निशितानि ते ॥ ४२
वीरबाहुस्तदा कोपात्सालवृक्षं महोन्नतम् । गृहीत्वाऽस्त्राणि तान्याशु चूर्णयामास वैभृशम् ॥ ४३
आस्फाल्य सर्वानितेन हतवान् किल निष्ठुरान् । तेषां मृतिंच श्रुत्वाऽयं दूतवक्त्रेण शीघ्रतः ॥
चुकोप शूरपद्मस्तं वीरबाहुं महाबलम् ॥ ४४

शूरात्मजस्तु तरसा पितुराज्ञयाथ नानाविधाभरण भूषितबाहुगात्रः ।
बद्धुं रथं दशसहस्रलसत्तुरङ्गैरुद्यानिर्गमनमप्यकरोत् द्विजेन्द्राः ॥ ४५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे चतुर्थोऽध्यायः ॥

---

॥ अथ पञ्चमोऽध्यायः ॥

वीरबाहुना शूरात्मजस्य वज्रबाहोर्वधः ॥

ततश्शूरकुमारोऽयं वज्रबाहुर्महासुरः । मन्त्रिसेनापतीनांच कुमारैरभितोवृतः ॥ १
वाहिनी पञ्चशतकैर्गजैरपि रथैस्तथा । सहस्रवाहिनीसंख्यैरश्वैर्मारुतवेगिभिः ॥ २
वाहिनी द्विसहस्रेण गणितैरावृतो बलैः । पटहध्वनिनिर्धूतपयोराशिमहाध्वनिः ॥ ३
छत्रचामरसंयुक्तपाणिभिर्ध्वजिभिस्तथा । यद्वा प्रतस्थे बलवान् वीरबाहुं प्रतिक्रुधा ॥ ४

तदोल्कापातः पुरेऽकस्मात्पपाताल्य भयंकरः । शुष्कवृक्षे प्रकाण्डे च तेनैककाकोऽवस्थितः ॥ ५
शिवारुतानि सर्वत्र श्रुतानि दनुजेन हि । रजस्वलाश्च रण्डांश्च रक्तमाल्याम्बरावृताम् ॥ ६
तैलाप्लुतं तथा छिन्ननासा वाहुपदानपि । दृष्ट्वा दुःशकुनं चैव निशापासूचकं तदा ॥ ७
अगणय्याथ तरसा वीरबाहोस्तदान्तिकम् । वीरबाहुस्तु सेनानां संरावमभिवीक्ष्य सः ॥ ८
क्षिप्रमेनामहं हत्वा निर्गमिष्यामि षण्मुखम् । नोचेत्तस्य न दूतोऽयं प्रतिज्ञामकरोदिति ॥ ९
गर्जयामास बलवानुत्प्लुत्योत्प्लुत्य वेगतः । श्रुत्वाऽस्य गर्जनं वज्रबाहुर्विस्मितमानसः ॥ १०
किमेतदिति पप्रच्छ विजयं सारथिं स्वकम् । चोदितस्तरसा तेन सन्नद्धस्तु रणाय सः ॥ ११
तत्पूर्वमेव तत्सेना शरवृष्टिं ववर्ष सा । वीरबाहोश्शरीरे च रक्तस्रावो महानभूत् ॥ १२
ततः कोपेन महता वीरबाहुस्तदाऽसुरान् । गृहीत्वा पाणिनानेकान्विक्षेपाण्डान्तमाशु तान् ॥ १३
भ्रामयित्वा पुनश्चान्यान् भूतले ताडयद्भृशम् । दिक्षु गदान् गृहीत्वान्यान् आक्षिपत्तरसाऽसुरान् ॥ १४
आस्फाल्यान्यान् कपोलेषु हतवानसुरान् बहून् । गृहीत्वा केशपाशेषु भ्रामयित्वार्णवाम्बुषु ॥ १५
लोकालोकेषु सर्वत्र द्वीपादिषु तथाऽसुरान् । पादाघातेनचपरान्मुष्टिपुट्टेन चापरान् ॥ १६
पादान् कराभ्यां संगृह्य बहूनां दितिजन्मनाम् । उत्पाट्य क्षेपयामास समन्ताद्व्योम्नि लीलया ॥ १७
शिरांसि मुष्टिघातेन परेषामुदरेऽकरोत् । तथाऽन्येषामुरस्स्थाने पादं हत्वैकमुज्ज्वलम् ॥ १८
इतरेण भुजेनाऽयमुत्तमांगानि सर्वतः । अन्यान्बहूनेकधायं करेणास्फाल्य निष्ठुरान् ॥ १९
पिण्डीचकार बलवान्निष्पील्य तरसाऽसुरान् । अंघ्रिग्रहीत्वाऽन्येषामुत्क्षिप्योर्ध्वं बलादयम् ॥ २०
यावत्कालेन ते भूयो निपतन्ति रसातले । तावदेव पुनश्चान्यांस्तेषां लक्ष्यं चकार सः ॥ २१
एवमेवासुरान्सर्वान् हतवान् भूसुरा भृशम् । सेनापतिकुमारांश्च ताडयित्वा महासुरान् ॥ २२
वटवृक्षेण कृतवान् विगतप्राण मारुतान् । ततस्ससंभ्रमं वज्रबाहुस्तु तरसाऽसुरः ॥ २३
माद्रायवापं सव्येन पाणिनान्येन मार्गणान् । योजयित्वाऽजया शौरिस्सहस्राणि मुमोच सः ॥ २४
वीरबाहुस्तु तान् सर्वान् चूर्णयामास तूर्णतः । पुनर्मुमोच नाराचानयुतान्निशितान्बली ॥ २५
मुसलेन तदास्फाल्य तानेणूनकरोदयम् । ववर्ष वृष्टिं बाणानां सहस्राणां पुनश्च सः ॥ २६
वीरबाहुस्तु तान्सर्वान् करेणैवाकरोत्पृथक् । पुनश्च वज्रबाहुस्तं मूर्ध्नि वक्षःस्थले क्रुधा ॥ २७
पाणिपादललाटेषु कन्धरादिषु मर्मसु । प्रतिस्थानं सहस्राणि शराणि निशितान्यहो ॥ २८
विमोचितानि सर्वाणि मुसलं तस्य कर्कशम् । छित्वा लग्नानि सर्वेण वीरबाहोस्तनौ भृशम् ॥ २९
मूर्च्छामाप इवारं स वीरबाहुः क्षणं स्थितः । वीरबाहुस्ततः कोपाद्रथं तस्यातिसुन्दरम् ॥ ३०
ताडयामास पादेन सारथिं पतितश्च सः । वज्रबाहुस्तु तरसा पुनश्चान्यं महारथम् ॥ ३१
स्थित्वा मुमोच बाणानां सहस्रं निटिलेऽस्य सः । तान् सर्वान् पाणिना तस्य हत्वा निष्फलवानिनः ॥ ३२
साकं तेन रथं तूर्णं अक्षिपल्लक्षयोजनम् । ऊर्ध्वं भूयो पतद्भूमौ विशीर्णोगोरथःक्षणात् ॥ ३३
वज्रबाहुस्तु पतितस्तत्रैव च पुनः क्रुधा । गृहीत्वा चापमत्युच्चं यदा योद्धुमियेष सः ॥ ३४
तदानीमेव तस्याशु तद्द्विधा कृतवानयम् । खड्गमादाय च पुनः कोपेनोत्प्लुत्य रंहसा ॥ ३५
अभ्यागमस्य तस्यापं करं सासरमच्छिनत् । गदां संभ्राम्य गुर्वीं च जघानास्योपरि क्रुधा ॥ ३६
चिच्छेद तामपि तदा करवालेन तस्य सः । ततस्तु वज्रबाहोश्च वीरबाहुश्शिरस्स्वयम् ॥ ३७
अच्छिनत्सुहृदान्यस्य खड्गेनोत्प्लुत्य रंहसा । एवं हत्वाऽसुरान् सर्वान् वीरबाहुर्द्विजोत्तमाः ॥ ३८

स्कन्दस्याग्याशामभ्येतु यदेच्छामकरोत्पुनः । सवितापि ततश्शीघ्रं प्रापास्तमयपर्वतम् ॥ ३९
अहो स्कन्दस्य निन्दाया फलं शूरेण सम्प्रति । अनुभूतमिति ज्ञात्वा वीरबाहुस्तु निर्ययौ ॥ ४०
वीथिस्यान्यद्भुतान्याशु पश्यन् भूप पुरस्तदा । उल्लंघ्य परिखां वेगात्प्राप लङ्कापुरीं क्षणात् ॥ ४१
तदागमनमस्याशु ज्ञात्वा याळिमुखासुरः । सहस्रमौळिनिचयो द्विसहस्रकरावृतः ॥ ४२
वीरबाहुकृतां स्मृत्वा मृतिं पुत्रस्य मन्युना । वारयामास सेनाभिरासुरीभिर्महाबलः ॥ ४३
अब्रवीद्वचनं चोग्रं वीक्ष्य तं याळिकन्धरः । यस्मात्त्वया मारितोयं मत्पुत्रस्मादसौ महान् ॥ ४४
संहरिष्यामि त्वद्याद्य पश्य मे वीर्यमुल्बणम् । एवं वचनं तस्य वीरबाहुर्निशम्य सः ॥ ४५
विहस्य किञ्चित्प्रोवाच याळिवक्त्रं तदासुरम् । सहस्रयाळिवक्त्रैस्त्वं द्विसहस्रभुजैरपि ॥ ४६
अवध्योऽहमेकेन शिरसा मण्डितोऽधुना । किं कर्तव्यं त्वयात्रैव रणे तत्कुरु वीर्यवान् ॥ ४७
इति ब्रुवन्तं तं तस्य सेनाश्शस्त्राणि निष्ठुराः । मुमुचुर्निशितान्याशु लक्षीकृत्य तदाभृशम् ॥ ४८
तास्सर्वास्सद्य एवाथ खड्गेनाच्छिनदुज्ज्वलः । ततस्तु याळिवक्त्रोऽसौ सहस्रैः पाणिभिः क्रुधा ॥ ४९
ताडयामास वेगेन वक्षस्युपलनिष्ठुरे । तत्क्षणेनैव ताम्पाणींस्तस्य खड्गेन चाच्छिनत् ॥ ५०
पुनश्चान्यैः करैरुग्रैः पर्वतानुन्नतानसौ । उत्पाट्य क्षेपयामास वीरबाहोस्तनौ द्विजाः ॥ ५१
निपतन्तोऽस्य ते सर्वे शरीरे चूर्णतां गताः । चिच्छेद तानपि करान् सहस्रगणितांस्तदा ॥ ५२
शुण्डासहस्रं भूयोऽपि प्रेरितं यन्मुखस्य सः । छित्वा खड्गेन शुण्डाश्च तस्तार पृथिवीतले ॥ ५३
हत्वाऽसुरकुलं भूप शैलादेर्गणराडयम् । गन्धमादनमाप्याय समुद्रं लंघ्य पर्वतम् ॥ ५४
श्रीशेन्तिनगरं प्राप स्कन्दस्यावासमुज्ज्वलम् । अग्रहीदात्मनो रूपं क्षणेनैव नटो यथा ॥ ५५
तत्र दृष्ट्वा महात्मानं आगतं सद्य एव तम् । अणाधिफलसद्धस्तगणाः पार्षदास्तथा ॥ ५६
ब्रह्मविष्ण्वादयस्सर्वे साकञ्चैव मरुत्पताः । नत्वा स्तुत्वा स्थिताः स्तोत्रं कृताञ्जलिपुटास्तदा ॥ ५७
सभाष्य सर्वान् सद्धापरालिङ्ग्यालिङ्ग्य तानयम् । वृत्तान्तमुक्त्वा सर्वेषां विशेषेण मरुच्यत ॥ ५८
अनुयातस्तदासर्वैश्चाप स्कन्दस्य मन्दिरम् । दृष्ट्वाथ षण्मुखेशानं रक्षकं परमं गुरुम् ॥ ५९
प्रणम्य परया भक्त्या स्तुत्वा स्तोत्रशतैरपि । प्रबद्धाञ्जलिकरस्तस्थौ प्रश्रयेण स ॥ ६०
कृतानुज्ञस्तु वृत्तान्तं पश्चात् स्कन्देन चाब्रवीत् । यदुक्तं भवता स्वामिंस्तथैवोक्तो मयाऽसुरः ॥ ६१
न शृणोति स्म तद्वाक्यमुल्लङ्घ्याज्ञां तव प्रभो । हन्तुं मां च तदा कांश्चिदसुरानप्यचोदयत् ॥ ६२
हत्वा तान् कृपया तेऽद्य पुनः प्राप्तोऽहमन्तिकम् । उक्त्वैवं विनयानम्रः प्राह तं षण्मुखस्तदा ॥ ६३
*श्रान्तोऽसि नितरां भक्त प्रयासमनुभूतवान् । मा तेऽस्त्वन्तमित्यादि ततो ब्रह्माणमच्युतम् ॥ ६४*
इन्द्रादिदेवान् वीक्ष्याथ षण्मुखस्सहसा पुनः । नाङ्गीकृतं यतस्तेन मद्वाक्यमसुरेण तत् ॥ ६५
श्वश्च संहरिष्यामि दैत्यानिन्द्रपुरोगमाः । युष्मासु सर्व पश्यत्सु शूरमेनं सबान्धवम् ॥ ६६
एवमुक्ते तदा सर्वे शृण्वन्तोऽस्य प्रहृष्टया । स्कन्दनं स्तुतिमापुस्ते वचो विष्णुमुखा द्विजाः ॥ ६७

इति गदितमशेषं वीरबाहोश्चरित्रं निखिलदनुजमुख्यध्वंसकस्याधुनाथ ।
पुनरपि च यशांसि स्फीतपुण्यानि मुनीन्द्राः समवहितमनस्कास्संशृणुध्वं कथा च ॥ ६८

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
वीरमहेन्द्रकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

शूरेण स्वानुज पुत्र मन्त्रिभिस्सह मन्त्रालोचनम् ॥

अथ शूरस्तु पुत्रस्य श्रुत्वा तां विपदं तदा । असुरैरपि नारीभिः पद्मकोमलया शुचम् ॥ १
धर्मकोपस्तमागत्य मन्त्री तस्य महामतिः । सांत्वयामास वचनैर्दुःखितं शूरमाशु सः ॥ २
ऐश्वर्यं कीर्तिबुद्धीनां धृतिशौर्योर्जसामपि । निलयस्त्वं महातेजास्सर्वदा सर्वतन्त्रवित् ॥ ३
किमर्थमधुना स्वामिन् शूर शोचसि मूढवत् । ब्रह्मादि देवास्सर्वेऽपि त्वामवेक्ष्येदृशं प्रभो ॥ ४
न करिष्यन्ति किं हासं तस्माच्छोकं त्यजाधुना । दूतेनैवं कृतं मत्वा कथं शोचसि कस्यचित् ॥ ५
आयुश्चैतावदस्यैतत्तव पुत्रस्य कल्पितम् । नोचेत्कथमनेनायं हतस्सर्वारिघातकः ॥ ६
एवं बहुविधं तेन बोधितस्सहसाऽसुरः । पार्श्वस्थान् प्रेक्ष्य दूतोऽयं गतोवा वर्ततेऽथवा ॥ ७
एवमुक्त्वाथ तैः प्रोक्तो गतएव इति द्विजाः । ब्रह्माणमानयाश्वेति दूतं प्राह महाबली ॥ ८
गत्वा दूतस्तु सर्वत्र प्रेक्ष्य तं स्कन्द पार्श्वगम् । सर्वान् देवानथागत्य प्रोवाचैवं यथातथम् ॥ ९
तच्छ्रुत्वा शूरपद्मार्यं स्वदूत वचनं तदा । चुकोप देवान् सर्वांश्च मनसा ब्रह्मपूर्वकान् ॥ १०
आनयामास धातारं अन्याण्डाधिपमाशुसः । दूतवचनेण तं प्रेक्ष्य नगरं पूर्ववत्कुरु ॥ ११
ब्रह्मन्निसाहशूरोऽयं ततो ब्रह्मा यथापुरा । कृत्वाशुनगरं तस्य प्रापाभ्याशं पुनश्चसः ॥ १२
बहुमानेन तं भूयो दूतैस्साकं निजालयम् । प्रेषयामास धातारं निजाण्डं सहसा तदा ॥ १३
मुक्त्वा तं बहिरस्याशु ब्रह्माण्डस्य गत.खलु । प्रेषिता ये पुरा दूतास्ते सर्वेऽत्र समागताः ॥ १४
शूरं सिंहासनारूढं ऊचुश्च विनयान्विताः । त्वदाज्ञया वयं नाथ ज्ञात्वा सर्वमिहागताः ॥ १५
श्रीशेन्तिनगरे स्कन्दस्सद्भूतैर्महाबलैः । वाहिनी द्विसहस्रेण गणितैरावृतस्तथा ॥ १६
अष्टोत्तर शतैश्चापि सेनापतिभिरुज्वलैः । नवसंख्याधिकैर्लक्षैर्वीरैरमितशक्तिभिः ॥ १७
हत्वा तारकमव्येप परमेशाङ्गसंभवः । वर्तते सुमहातेजा ब्रह्मविष्ण्विन्द्र पूर्वकैः ॥ १८
सुरैस्संसेव्यमानस्सन् शुश्रूषासक्तमानसैः । प्रेरयित्वा त्वदभ्याशं वीरबाहुं महाबलम् ॥ १९
विदितेनाधुना भूयो निवृत्तेन वलं तव । सहतो यालिवक्त्रोऽपि लङ्कापतिरसौ महान् ॥ २०
दग्ध्वा सर्वत्र साप्याशु सह तेनैव सुन्दरा । विदित्वा तव वृत्तान्तं आगतेनेश्वरात्मजः ॥ २१
क्रुद्धस्सन्नितरांस्कन्दो युद्धायोद्युक्तमानसः । ब्रह्मादि देवान् संप्रेक्ष्य श्वो युद्धमसुरेण मे ॥ २२
इत्युक्त्वा तैश्च सन्तुष्टैस्सेवितस्तत्र तिष्ठति । एवं दूतवचः श्रुत्वा शूरपद्मा द्विजोत्तमाः ॥ २३
सिंहाननं सपुत्रांश्च तथा सेनापतीनपि । अमात्यानपि मर्मज्ञान् आनयामास शीघ्रतः ॥ २४
आगतांस्तानयं प्रेक्ष्य वाचमूचे विचारवान् । शृणुध्वमनुजाः पुत्रास्सर्वे यूयं समाहिताः ॥ २५
ब्रह्मविष्णुमुखा देवा गत्वाभ्याशं महेशितुः । बाधते नितरां शंभो शूरपद्मा सुरानिमान् ॥ २६
रक्षणीयास्त्वयायेयमूचुः किल महेश्वरम् । तेषां तद्वचनं श्रुत्वा महादेवस्तु नाकिनाम् ॥ २७
कुमारं जनयित्वाशु सेनास्संयोज्य भूयसीः । प्रेरयामास तं देवो यालिशं परमेश्वरः ॥ २८
आगत्य सोऽपि श्रीशेन्तिमास्ते देवैः किलाधुना । ब्रह्मविष्ण्विन्द्र पूर्वैश्च पैशुन्यनिरतैरयम् ॥ २९
निश्चित्य युद्धमस्माभिरद्य श्वेति सुनिश्चितः । तारकंच यदा सोऽयं मारयामास यालिशः ॥ ३०
निगृहीतुं तदैवैनं निर्गतोऽहं बलैस्सह । बालं मत्वपि शूरोऽयं निर्जगामेत्यपत्रपा ॥ ३१
भविष्यतीति मत्वाऽहं निवृत्तः पुनरेवहि । इतः परं किं कार्यं नो यूयं ब्रूताधुना द्विजाः ॥ ३२
इत्थमेवं विरते तस्मिन्मयूरस्तं द्विजोत्तमाः । कथमेव त्वया स्वामिंस्तारकस्यापि घातकः ॥ ३३

मन्यते बाल इत्येवं सर्वसेनाधुनाप्यहो । कथं दूतमतिस्तस्मिन् वज्रयाहन्तके प्रभो ॥ ३४
आगतेषु बलेष्वेवं भूतबुद्धिः कथं तव । बहुना किं ममाद्येयं बुद्धिर्युद्धाभिशंसनी ॥ ३५
इत्युक्त्वा वचनं सोऽपि मौनमाप विचारवान् । ततः प्रोवाच वचनं दुर्मुखस्तमवेक्ष्य वै ॥ ३६
बालिशो भूतसेनाच्च नापिभाव्या त्वया विभो । सेनापतीन् प्रेरयित्वा जेतव्योऽयं शिशुर्बलैः ॥ ३७
श्रुत्वोक्तिमस्य सहसा धर्मकोपोऽभ्यधावदत् । वर्तेते यौ कुमारौ ते हिरण्याग्निमुखावुभौ ॥ ३८
तयोर्मध्येयमेकस्य नालं वीर्यपराक्रमैः । बालस्त्वाचारकोऽनेन मारितस्सत्यमेवहि ॥ ३९
कर्तुं प्रत्यक्षमस्यायं शरेणाशकुनप्रभो । अगस्त्यशापात्क्रौञ्चोऽपि भेदितोऽनेन पर्वतः ॥ ४०
वज्रबाहुश्च दूतेन स्वचाप शरादिकम् । मलन्धो मारितस्तस्मात् दूतेनानेनबालकः ॥ ४१
तस्मात्सेनापतिं मुञ्च प्रेरयित्वाशु बालिशः । जेतव्यस्ससह सेनाभिर्विष्णुपूर्वैस्सुरैरपि ॥ ४२
उक्त्वैवं विरते तस्मिन् कालजिच्चाब्रवीत्ततः । ब्रह्मविष्णुमहेन्द्राणां जयः पूर्वं त्वया कृतः ॥ ४३
तदानीं न विचारोऽयं एवं ते किं यताधुना । सेनां तु प्रेरयाशु त्वं जेतुमद्यासुरोत्तम ॥ ४४
आहोस्विदाश्रयाऽहं वा निर्गमिष्यामि शीघ्रतः । श्रुत्वैतद्वचनं चण्डः प्राहैनमसुरोत्तमम् ॥ ४५
किंमं भूतानि वा जेतुमसुरा अपि संप्रति । मत्वादक्षाः कथं वा स्युर्विचारोऽशुद्धमानसाः ॥ ४६
गत्वाऽहमधुना सचरसहायानागतानपि । जित्वाऽनेनासुरश्रेष्ठ पोतं नेष्याम्यसंशयम् ॥ ४७
मनलब्धैवमाहैनं तदाऽमितपराक्रमः । (अहं गत्वा सुरान् जित्वा ह्यागमिष्याम्यसंशयम्) ॥ ४८
ततोऽग्रशिखः सिंहः प्रकृतीनां वरोऽसुरम् । पुरन्दरसहायार्थमागतस्य शिशोरपि ॥ ४९
जये विचारः क्रियते कथमद्यासुरेश्वर । अण्डस्था यदि भूयांसः सहायाश्च समागताः ॥ ५०
तैरेतं सहजित्वैव तवाभ्याशं पुनः प्रभो । आगमिष्यामि सहसा कुर्वाज्ञामधुना मम ॥ ५१
अमात्यार्थैवमाहुस्तं सेनापतिमिरम्यमुम् (मले) । अथ त भानुकोपोऽपि वाक्यमूचे विचक्षणः ॥ ५२
यदा तु तारकक्रौञ्चावसुरावुत्तमौ हतौ । तदानेन नियुक्तोऽसि न त्वयाऽहं किल प्रभो ॥ ५३
अधकद्दतं बालं दूतं प्रत्यक्षचोदयः । भवद्वीर्यबलेनापि नजानासीह तत्वतः ॥ ५४
बहुनात्र किमाश्वयं तातमां समचोदय । इत्युक्तिमस्य संश्रुत्य हिरण्योऽप्यवदद्वचः ॥ ५५
हसन्नित्थं क्षमास्सर्वे शूरपद्म शिशुं प्रति । विचारं कृतवानित्थं रणायासुरनायकः ॥ ५६
गतक्रोधानुकोपेन मयैवैतावदाग्रहम् । तस्मात्त्वयाऽर्भकं शीघ्रात् ससेनमभिमाव्यताम् ॥ ५७
आगमिष्यामि भूयोऽपि तातावाह तथाद्य वा । अथाब्रवीदग्निमुखोऽप्येनं संवीक्ष्य शीघ्रतः ॥ ५८
भ्रातरावावयोर्बाल दूताभ्यां मारितौ शिशू । संहरिष्यामि तावाशु सेनाभिस्सह सत्वतः ॥ ५९
नयेत्तदान्तिकं भूयो मायाशाम्यसुराधिप । बलिसमुत्थितान् सर्वान् राक्षसानजयं किल ॥ ६०
पराक्रमं नजानाति मदीयं किं भवानहो । ब्रह्मणा मे प्रदत्तानि कवचं कार्मुकं तथा ॥ ६१
आयुधान्यतिघोराणि वर्तन्ते सुमहान्त्यपि । नियोजयतदद्यैव मां दैत्येश रणाङ्गणे ॥ ६२
एवं परस्परं सर्वे ते वाक्यमवदंस्तदा । ततोऽवदद्विदं सिंहमुखस्तान् सन्निशाम्य च ॥ ६३
शूरपद्मसमवीक्ष्य सर्वं सर्वार्थं सारवित् । सुमकण्ये कथं वा ते शिशुवीर सुराधिप ॥ ६४
यस्मादद्यान् प्रासवरः सर्वायं महेश्वरः । तस्मात्त्वया समुद्रांस्त वाल्येशानि सर्वं तथा ॥ ६५
भुक्त्वा तेन प्रदत्तं तदैश्वर्यं गर्वितो भृशम् । तस्मिन्नप्यं पुनश्चापि प्रायविष्णु पुरन्दरान् ॥ ६६
बाधयित्वापि देवेन्द्रतनून् अमुमोचिय । भ्रातॄनद्वानयान् इत्यन्दः प्रार्पितेषु कृपावतान् ॥ ६७
धीरेन्त्रिमय दूरेच भूतबुद्धि वचयं वै । गतेषु नन्दिकेशस्य परिक्षोभ्य महाबलः ॥ ६८

दृष्टोऽपि वीरो महातो विशेषेण त्वया किल । शतोत्तर शतंचापि युगानामसुरेश्वर ॥ ६९
आयुस्तेन प्रदत्तामामीशेन भवतोगतम् ।
शपत्वा स्वयाच येनान्ते (शपत्वाच्येनायुधेनान्ते) मरणं तेऽवद्यसः ॥ ७०
धृत्वा शक्तिं चागतोऽयं सुकुमारः कुमारकः । नजानासि महादेवमायां दुर्घटकारिणीम् ॥ ७१
बुद्धिरेतादृशीज्ञाता तव किं भ्रातरन्यथा । इतः परं वा देवांस्तान् मुक्त्वा कारागृहस्थितान् ॥ ७२
प्रणम्य षण्मुखं भूयस्त्वद्युक्तोक्तिं तस्य निर्भयः । यसास्मिन् स्वपुरेत्वये भुक्त्वाभोगान्यथेप्सितान् ॥ ७३
इत्यादि वचनं तस्य निशम्यासुरनायकः । प्रोवाच वचनं स्फुरत्स्फुरद्दन्तांधरोज्वलः ॥ ७४
घूर्णयन् लोचने रक्ते स्वयस्वेदोद्गमावृतः । किं वदस्यधुना भ्रात गतलज्जो मदन्तिके ॥ ७५
विशेषयसि भूतानि च कश्चिद्बालकं तथा । प्रणम्य वंने तिष्ठेति प्रोक्तवानसि दुर्मते ॥ ७६
जयन्तप्रमुखान्मुक्त्वा सुःखोक्तिमिति चाप्यहो । शपत्वाच मरणं मद्धयोत्तरयुगावधौ ॥ ७७
ममेति चापदस्तूर्णमनृत वचनं वत । मायाऽथवा भवान्यो महेशी विभ्रमोऽस्यते ॥ ७८
क्लिष्ट वीर्यमथवा मुक्तं दैत्यवरस्यच । नज्ञानासि ममेशेन वर दत्तं त्वमद्य किम् ॥ ७९
यत्र क्वापि द्रुतं गच्छ मुञ्चवस्यासं ममाधुना । इति साटोपमस्योक्तिं श्रुत्वा सिंहमुखस्तदा ॥ ८०
हितं मया समुदित न शृणोति विमूढधीः । विपरीतं च गृह्णाति यदिष्टाभीष्टमस्य यत् ॥
इति निश्चित्य मनसा प्रोवाच वचनं द्विजाः ॥ ८१
नानायुधानि मम सन्ति तथाश्रयाऽहं भूतानि चालमभिगम्य विजित्य भूयः ।
पश्यामि नूनमसुरेश तवान्तिकेऽत्र भ्रस्यांस्तुरौघकरि सिंहमुखोऽतिभीमः ॥ ८२
इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे षष्ठोऽध्यायः ॥

---

॥ अथ सप्तमोऽध्यायः ॥

स्कन्द सेनापतीनां नामानि. श्री स्कन्देन वीरमाहेन्द्रपुर समीपे हेमकूटाख्य पुरनिर्माणं च ॥

ततस्संश्रुत्य तस्योक्तिं शूरपद्मा प्रसन्नवाक् । सन्तुष्टो नितरां सिंहं प्रोवाच वचनं तदा ॥ १
शोधनार्थं त्वमत्रैवमुक्तवानसि सत्वत. । तव बाधा न योग्याहि बालमुद्दिश्य सम्प्रति ॥ २
आगतश्चेत्तदानीं त्वामानयिष्यामि शीघ्रत. । तस्मात् त्वमधुना गेहं गच्छेत्युक्त्वा विसृज्य तम् ॥ ३
सह सर्वैश्च शूरोऽथ शुद्धान्तं प्राप भूसुराः । तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय षण्मुखः ॥ ४
सिंहासनमधिष्ठाय नानारत्नोप शोभितम् । महाविष्णुसुरेन्द्राद्यैस्सेव्यमानस्समन्ततः ॥ ५
नवसंख्याधिकैर्लक्षैर्भूतानां पतिभिर्वृतः । वीरबाहुमवेक्ष्याशु जगाद वचनं तदा ॥ ६
आनेतव्यो रथस्तूर्णं त्वया युद्धाय संप्रति । इति तस्य वचः श्रुत्वा वीरबाहुस्त्वरायुतः ॥ ७
तथैव वायु प्रोवाच स्कन्दस्य वचन तदा । आनीय रथमत्यन्तमुज्वल वायुरव्ययम् ॥ ८
निवेशयामास ततस्सन्निधौ षण्मुखस्य हि । रथस्यानयनं श्रुत्वा वीरबाहुमुखाद्गुहः ॥ ९
अवरुह्यासनात् सैंहादारुरोह रथं क्षणात् । विष्णुब्रह्ममुखान् देवानाज्ञयामास वै प्रभु. ॥ १०
स्व स्वं यानमथारोढु तारकारिः क्षणादिव । ततस्तच्चोदितास्तेन ते सर्वे यानमास्थिता. ॥ ११
हंसं ब्रह्मा हरिस्तार्क्ष्यं विमानतु पुरन्दरः । सेनानां पतयश्चापि रथानारुह्य सुन्दरान् ॥ १२

वादिनी द्विसहस्राणि भूतान्यपि च निर्ययुः । देवदुन्दुभयस्तत्र निनेदुस्ताडिता भृशम् ॥ १३
झल्लरी काहली मड्डु डिण्डिमाः पटहास्तथा । निर्जितमर्त्याम्भोधि कल्लोलावलि संरवाः ॥ १४
विपञ्ची परिवादिन्यो वल्लक्यो रुद्रपूर्विकाः । शङ्खास्सहस्राणि चित्राणि निनेदुर्मधुरस्वराः ॥ १५
जगुः किन्नरगन्धर्वाः सिद्ध विद्याधरोरगाः । अपदानानि देवस्य देवसेनापतेस्तदा ॥ १६
पुष्पवृष्टिरभूत्तत्र सुरदारुसमुद्भवा । विरुदारभटौ तस्य प्रभोस्तुष्टुवतुर्नारदौ ॥ १७
पार्श्वस्थौ परमेशाङ्गसम्भवस्य जितेनतुः । अट्टहासपरास्सर्वे प्रापुरम्भोनिधेस्तटम् ॥ १८
रथाश्वसेनापादोत्थ धूलिस्सर्वत्र चावृता । पतितांभोनिधौ भूयः पङ्किलत्वं तमानयत् ॥ १९
सेनानां गमनात्तस्मिन् समभूच्च सदारजः । एवमंभोनिधिं तीर्त्वा सेनाभिस्सह षण्मुखः ॥ २०
उत्तरद्वारपर्यन्त भूमिमाप पुरस्य सः । तदानीमेवतरसा ब्रह्माविष्णुश्च तावुभौ ॥ २१
प्रणम्य दण्डवद्भूमौ स्कन्दमूचतुरानतौ । जय देवादिदेवेश भक्तानामभयप्रद ॥ २२
नगन्तव्य त्वया स्वामिन् पापिनस्तत्पुर प्रभो । स्थित्वात्रैव रणे शीघ्र मागतं तं हनिष्यसि ॥ २३
इति संप्रार्थितो देवैर्देवसेनापतिस्तदा । विश्वकर्माणमन्वीक्ष्य कुरुमे नगरं क्षणात् ॥ २४
इति प्राह स चैतच्छ्रुत्वाऽयं निर्ममे किल । नानामण्टप संयुक्तं गोपुरैरभिशोभितम् ॥ २५
अनेकाश्चर्यसंयुक्तं स्कन्दमन्दिरमण्डितम् । नानावीथिस्थ वेश्मौघैरावृतं सुमनोहरम् ॥ २६
हेमभित्तिर्निर्मितत्वाच्च हेमकूटाख्यमद्भुतम् । एव विधाय तद्रूप मायया स (तद्यमायान्तन्त) व्यजिज्ञिपत् ॥ २७
दृष्ट्वैतन्नगरं स्कन्दस्सम्भाव्यैनञ्च शिल्पिनम् । स्वगृहद्वारमभ्येत्य रथादवरुरोह सः ॥ २८
सेनापतीनां प्रत्येकं निवेशं समकल्पयत् । तेषां नामानि वक्ष्येऽह शृणुध्वं द्विजसत्तमाः ॥ २९
शुभ्रश्च मेघमालीच श्वेतशीर्षकरस्तथा । कपालिनामा बलवानपलिताभिधोपरः ॥ ३०
चित्राङ्ग ज्वालतालुश्च वज्रभीमोग्रनाशकाः । उग्रेभपिप्पलौनन्दि सेनो ब्रह्मजर्शकः ॥ ३१
ब्रह्मसेन. पद्मकश्च करालोदण्डपक्षकौ । तथा परिघनेमिश्च परोहुलवको महान् ॥ ३२
पुष्पदन्तश्च पल्याशुद्रकारहरावपि । मतिजित्कैतुमालीच यक्षोऽन्यो ब्रह्मकेशकः ॥ ३३
नदीपतिकलिङ्गौच घोरोऽप्यन्योऽच्युतोबलः । शान्तश्च चित्रसेनोऽन्यो भूरिनामा सुशीलकः ॥ ३४
भाजयो मानवान् सिंहस्तथाचोत्तरसिंहकः । उपदिष्टो जयेशश्च मत्तकश्च मतङ्गकः ॥ ३५
चण्डी महाबलश्वेतो नीलवक्त्रसुवाहुकः । चन्द्राभरणसंघश्च कालपादोपि पिङ्गलः ॥ ३६
समाय माय नामानौ निकुम्भः कुम्भशापको । पालको विदितश्चैव दग्धुतास्याभिधोपरः ॥ ३७
हयग्रीवापरो धीमानच्युताख्यस्तथैव च । सहस्रपादुसप्तश्च ख्यातोऽन्योऽनन्तसंज्ञकः ॥ ३८
वामगळकेशीच सोमनामापरो महान् । वज्रमालीच चण्डोऽपि परस्त्वप्रमुखोबली ॥ ३९
शम्भनन्दनामानौ तथाचान्धकसंज्ञकः । कवचमेधविज्ञयविद्रुमादशालिकोभृतः ॥ ४०
दण्डव्याघ्रौ महावीरौ कालपाशश्च निष्ठुरः । तथा दशमुखारव्योऽपि कुमुदो भानुनामकः ॥ ४१
मविद्यासुरकालोऽपि हरिकेशाह्वयोऽपरः । धनञ्जयो परो नाम्ना ख्यातो वृषभरूपक. ॥ ४२
पवनशुचिमुखो धीमानपरोऽनलकेशकः । सुवक्त्रपक्षाशुन्मत्तो नन्दीतद्वन्मनोमयः ॥ ४३
वायुवेगो महावेशास्तथान्योऽपि सहस्रभाक् । मानुरूप पतङ्गौच गुहानीपायुमावपि ॥ ४४
तथा शीतसुनाशौच सुमाली मालिनामकः । ज्वालाकेशाभिधश्चैवमष्टोत्तरशत सर्गी ॥ ४५
ततस्तु देवतैस्सर्वैर्ब्रह्म विष्णुमुखैरपि । वीरैर्नवाधिपैर्लक्षैष्यद्दिमश्च ऋषिभिर्वरैः ॥ ४६
स्तूयमानस्स्तोत्रवरैः प्रविश्य स्वगृहं प्रभुः । प्रतिष्ठद्रद्भुताकारे सिंहासनवरे गुह. ॥ ४७

अथ शूरं सुरऋषिर्नारदः प्राप्य शीघ्रतः । मम शुक्रस्तु भवतां गुरुः प्राणसखो भृशम् ॥ ४८
स्कन्दस्समागतोऽद्याद्य युद्धायासुरनायक । तव्रजुमागतस्तस्मात् कुरु युद्धं भयं विना ॥ ४९
अस्तु ते विजयश्चेति करिष्यामि तपो भृशम् । इत्युक्त्वा शूरपद्मानं नारदः प्रययौ द्विजाः ॥ ५०
श्रुत्वैतद्वचनं शूरो नितरां क्रोधविह्वलः । कोयात्र भारइत्युक्त्वा घोराघोरगुणावपि ॥ ५१
युवामानयतं शीघ्रात् समुद्रं निकटं मम । इति प्राह वचश्चैतावाब्धिमानयतां क्षणात् ॥ ५२
समुद्रराजं शूरस्तु प्राहस वचनं तदा । बालेनानेन भूतानि त्वया किं मोचितान्यहो ॥ ५३
इति पृष्टस्समुद्रोऽपि शूरमाह सदावचः । निग्रहीतुं मयाऽशक्यो बालोऽयममरेश्वरः ॥ ५४
अभयं पदतस्सोऽहं भूतानां कोपितः पुनः । इत्थं संश्रुत्य वचनं समुद्रस्यासुरेश्वरः ॥ ५५
कोपमाप भृशं विप्राध्वम्भुखं प्रतिचान्तरे । तदानीमागता दूता ज्ञात्वा सर्वं तदन्तिकम् ॥ ५६
प्रोचुश्च वचनं शूरं वीक्ष्य सिंहासनस्थितम् । शृणु शूर यथादृष्ट मस्माक सदतन्त्रितः ॥ ५७
स्कन्दोऽयं भूतसेनाभिस्तीर्त्वाब्धिश्च समागतः । हत्वा लंकापुरीं वीरबाहुना वीक्ष्यमर्दिताम् ॥ ५८
पुरस्योत्तर दिग्भागे तव दैत्याधिपाधुना । पुरमन्यद्विनिर्माय नानाश्चर्यसमन्वितम् ॥ ५९
वर्तते ब्रह्मविष्णिवन्द्रैरावृतोऽत्रामरेश्वरः । सन्नद्धश्च रणायात्र त्वया साकमयं शिशुः ॥ ६०
एवं दूतवचः श्रुत्वा शूरपद्मा द्विजोत्तमाः । ज्वलन्निव तथा क्रोधवह्निना प्रेक्षितो भृशम् ॥ ६१
आनयामास दूतैस्तु भानुकोपं निजात्मजम् । भानुकोपस्तु तरसा बलैर्बहुभिरावृतः ॥ ६२
रथमारुह्य शूरस्य गृहद्वारं समागतः । अवरुह्य रथाच्छीघ्रमपाय शूरसन्निधिम् ॥ ६३
प्रणनाम तदा तातमसुरेशं महाबलम् । शूरस्तमागतं प्रेक्ष्य वृत्तान्तं च व्यजिज्ञपत् ॥ ६४
श्रुत्वैतद्भानुकोपोऽपि जगाद वचन तदा । गत्वाहमधुना तात जित्वा सर्वानिमान् क्षणात् ॥ ६५
बध्वा तं सहसेनाभिः प्रापयिष्यामितेऽन्तिकम् । निशम्यैवं वचः प्रोक्तं स्वपुत्रेण तदाऽसुरः ॥ ६६
सन्तुष्टो विससर्जैनं रणायासुरनायकः ॥ ६७

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
वीरमाहेन्द्रकाण्डे सप्तमोऽध्यायः ॥

वीरमाहेन्द्रकाण्डस्समाप्तः ।



உ

ஸ்ரீராமஜெயம்.

श्री महागुरुभ्यो नमः ॥ श्री विघ्नेश्वराय नमः ॥ अविघ्नमस्तु ॥

श्री शरवणोद्भवाय नमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ युद्धकाण्ड प्रारम्भः ॥



षण्मुखं द्वादशभुजं त्रिपण्णयनपङ्कजम् । कुमारं सुकुमाराङ्गं केकीवाहनमाश्रये ॥

॥ अथ प्रथमोऽध्यायः ॥

ससैन्येन भानुकोपेन युद्धाय प्रस्थानम् ॥

भानुकोपस्तु निर्गत्य रथमारुह्य तत्क्षणात् । गत्वा गेहं स्वकं बध्वा कवचं वज्रनिष्ठुरम् ॥ १
तूणीरविलसत्पृष्ठभागः खड्गलसत्करः । मङ्गुलित्राणरमणीयांगुळीभिर्मनोहरः ॥ २
गोधाचर्मावृतात्मीयमणिबद्धोत्तरस्थलः । तप्तजांबूनदोद्भासत्पीतांबरपरिष्कृतः ॥ ३
वीरपट्टावृतस्तद्वन्नानाभरणभूषितः । द्रोणप्रसूनव्यचद्दामोद्दामप्रभावनः ॥ ४
धृतसंमोहनास्त्रौघः करवाळलसत्कटिः । त्रिंशत्सहस्रतुरगावृतरथे स्थितः ॥ ५
छत्रचामरभृङ्गारकाळाञ्च्यासरूपाणिभिः । वीटी पेटीधरैरन्यैर्वृदुभिः परिसेवितः ॥ ६
खड्गखेटधरैरन्यैरनेकैरावृतान्तिकः । निर्गतानेकशालौघैर्धृतकोटिरथानुगः ॥ ७
एवं यतस्थे सहसा यदा शूरात्मजो महान् । तदैव सेनापतयो निर्ययुश्चण्ड - विक्रमाः ॥ ८
विजयो दुर्जयोऽप्येषां नेमिमायौ महाबलौ । मुसली कण्टकस्तत्र मूलांभ्याश्च महौजसः ॥ ९
तथा दशामुखश्चापि मुनिलावो महाबलः । पिचण्डचण्डाजमुखा महिषश्चोग्रबाहुकः ॥ १०
विष्णुसेनाविमोषौच परो विजयसेनकः । सोमकश्च मधूच्छिष्टौ शशिजिष्णुनिवकौ ॥ ११
शनिश्च शल्यकेतवाह्वस्तथैवासुरसेनकः । तथा नियुतसंख्याका वाहिन्या दितिसंभवाः ॥ १२
तावत्संख्यारथाश्वेभा निर्गताः किल शीघ्रतः । महुदुन्दुभिनिर्घोषा जितांबुधिमहारवाः ॥ १३
अश्वानामारवास्तद्वत् करीणां बृंहितान्यपि । ध्वनयो रथचक्राणां घण्टानां करिणामपि ॥ १४
तुरङ्गकन्धरावद्धक्षुद्रघण्टारवा अपि । स्यन्दनं चैव सेनानां पांसवश्चार्कमावृताः ॥ १५
आवृताशेषदिग्भागा रसंबभुस्तदा भृशम् । उद्दामगीर्भिरत्यन्तमुज्ज्वलैर्मागधैस्तदा ॥ १६
पठ्यमानावदानौघैरावृतास्याद्वाभूरयम् । संवर्ताब्धिनिभैस्सैन्यैर्विचचाल द्विजसत्तमाः ॥ १७

विज्ञाय सर्वमित्रमस्य जितार्कवीर्यं दैत्यस्य निर्गमनमाशु पिपासवस्तु ।
प्रापास्थिकाद्भुतमावृतदेवसंघमावेदितुं सुरकपिः किल भूसुरेन्द्राः ॥ १८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकांडे प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

[श्री नारदेन स्कन्दनिकटे असुर युद्धोद्यम निवेदनम् ॥

आगत्य नारदस्स्कन्दं प्रणम्य परया मुदा । स्तुत्यं स्तोत्रवरैस्स्तुत्वा जगाद वचनं तदा ॥ १
उच्यतेऽयं मया स्वामिन् श्रूयतामधुना त्वया । सर्वज्ञेनापि देवेश क्षणमात्रं कृपावशात् ॥ २
भवदागमनं ज्ञात्वा शूरपद्मा निजात्मजम् । भानुकोपमिति ख्यातं जितभानुञ्च शैशवे ॥ ३
रणाय भवता देव चोदयामास तं बली । निर्ययौ स महामायी महासंमोहकारकः ॥ ४
ब्रह्मविष्णु यमानस्साकं वरुणेनरणेऽजयत् । ब्रह्मास्त्रं ब्रह्मणो विष्णोश्चक्रं मुक्त्वान्यदायुधम् ॥ ५
पाशं प्रचेतसो दण्डं यमस्याप्यग्रहीद्बलात् । जेतुमर्हति तं पापं भवानेव भवाज्ञया ॥ ६
इत्युक्तिमस्य संश्रुत्य स्मितवक्त्रपयोरुहः । शरभं केसरी यद्वत् गजः केसरिणं यथा ॥ ७
गोमायुरिव शार्दूल मायात्येष मदन्तिकम् । उक्त्वैवं सहसा स्कन्दो वीरबाहुं महाबलम् ॥ ८
पार्श्वस्थमब्रवीद्वाचं गंभीरममितौजसम् । गत्वा त्वमधुना सद्यः पुर प्रवास्य दुर्मतेः ॥ ९
अष्टाधिकैर्महावीरैर्लक्षसंख्यामितैस्तथा । सहस्रवाहिनीभिश्च वाहिनीभिः परिष्कृतः ॥ १०
निरुध्य पत्तनं तस्य घोटामाशु निपात्यच । कृत्वा च तुमुलं युद्धं जित्वा तानसुराधमान् ॥ ११
पुनरागच्छ मेऽभ्याशं वीरबाहो मदाज्ञया । एवं नियोजितस्तेन वीरबाहुस्तदा द्विजाः ॥ १२
प्रतस्थे सहसा भीमो वीरलक्षणलक्षितः । कर्णकुण्डलसंयुक्तस्वर्णसूत्रलसत्कटिः ॥ १३
पद्मरागप्रभापुञ्जरमणीयोर्मिकाङ्गुलिः । हारकंकणकेयूरकिरीटसुमहच्छविः ॥ १४
गदां दधानो महतीं दण्डपाणिरिवान्तकः । शरजालावृतोद्भासत्तूणीरबद्धपार्श्वकः ॥ १५
चापं दधानस्सुमहत् पिनाकं शङ्करो यथा । खड्गकुन्तासिनिस्त्रिंशतोमराद्यायुधोज्ज्वलः ॥ १६
मेरुमन्दरकैलाससमहोच्छ्रायरथे स्थितः । शङ्खकाहळनिस्साणपटहाडंबरारवः ॥ १७
वीज्यमानलसच्छुभ्रचामरद्युतिभूषितः । पताकावैजयन्तीभिर्लिखन्तीभिर्वलाहकान् ॥ १८
कदलीवनषण्डेन पर्वतेन्द्र इवोज्ज्वलः । राकाशशांकसपुमाद्दधन्मुक्तातपत्रकः ॥ १९
वीणावेणुमृदङ्गादिधरैरावृतपार्श्वभूः । पठद्भिर्विविधाग्र्यान् गुणान् स्वान् वन्दिभिर्वृतः ॥ २०
इत्थं निशम्य प्रस्थानं तदा वीरा महौजसः । सेनानां पतयश्चापि रथानारुह्य निर्ययुः ॥ २१
सहस्रवाहिनीभूत संघोऽपिच तदाऽचलत् । सेनाश्वरथवाद्यानां रवास्तत्पादपांसवः ॥ २२
प्रस्थानं चक्रुरस्यैव पुरमाशु पुरो ययुः । तत्र केचित्साट्टहासा धावन्तश्च परस्परम् ॥ २३
मण्डलाकारमभ्येत्य तत्रोत्प्लुत्य वेगतः । एवमापूरयन्सर्वे पुरोगा द्वारमस्य ते ॥ २४
तत्पूर्वमेव श्रुत्वैतद्भानुकोपस्ततो द्विजाः । यच्चैनं तरसा शूरनिकट त्वसुरैर्वृतः ॥ २५
प्रापयिष्याम्यहं सत्यमित्युक्त्वा क्रोधविह्वलः । निर्ययौच पुरात्पूर्णमसुरैस्सुमहारथैः ॥ २६
ततोऽसुरा भूतसेनां दृष्ट्वा वनचरा इमे । को भार इति मत्वाऽथ चक्रुश्च किलिकिंचितम् ॥ २७
श्रुत्वैतद्भूतसेनापि कृत्वा रावं महाभयम् । उपर्युपर्येव तदा गतास्तेषां हि पापिनाम् ॥ २८
ततस्सर्वेऽपि ते दैत्या ववर्षुः किल सायकान् । आयुधानि तथाऽन्यानि भूतसेनासु निष्ठुराः ॥ २९
भूतान्यपि तदाच्छिन्नपाणिपादशिरांस्यहो । मूर्छितानि भुवि विशस्तच्छ्याश्चाहितानिहि ॥ ३०
ततः कोपेन भूतानि नागान्नागैरमारयन् । अश्वानश्वैस्तदास्फाल्य रथैश्चापिरथान् बहून् ॥ ३१
एवमुल्लाडयित्वैवमसुरैरसुरानपि । अप्रत्यन्तमुत्कोधाद्बहवश्च तदा मृताः ॥ ३२
दृष्ट्वैतद्भानु कोपस्य सेनापतिवरोनलः । प्रेरयित्वा रथं शीघ्रादागतो भूतवाहने ॥ ३३

धनुषा रथं समायोज्य ववर्षच शिलीमुखान् ॥ ३४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे द्वितीयोऽध्यायः ॥

---

॥ अथ तृतीयोऽध्यायः ॥

सिंह गजमुखादीनां वधः

दुद्रुवुश्च ततोभूतसेनास्त्रस्तास्समंततः । मुमुहुः कानिभूतानि तद्बाणताडितानिहि ॥ १
वीरस्यैनद्भूतसेनाथः पतिस्सिंहाभिधोमहान् । दण्डमादाय हस्तेन दण्डपाणिरिवापरः ॥ २
ताडयित्वा रथावद्धतुरगानश्वरोन्मृतान् । ततोऽनलो धनुर्हं नदधेयं रणांगणे ॥ ३
नजयेयं यदि तद्देत्युक्त्वाश्ववर्षच्छरांस्तुतम् । सिंहस्तु तच्छरस्रोतो मध्येऽभिमुखमेत्यसः ॥ ४
रथमारुह्य तस्याशु चापमुत्पाट्यचाक्षिपत् । सोऽपिदण्ड समादाय महाभीमं त्वरायुतः ॥ ५
ताडयामास सिंहस्य शरीरे वज्रनिष्ठुरे । ततोऽनलं महाकोपान्मुष्ट्या सन्ताड्य वक्षसि ॥ ६
संगृह्य पादावस्यायं भ्रामयित्वातमपाणिना । आस्फालयन्महीपृष्ठे शतधा सोऽभवत्तदा ॥ ७
मृते तस्मिंस्ततश्चण्डदंष्ट्रीप्रमाजौ पुरागत. । वर्षन् शरसहस्राणि सिंहस्योपरिनाशयत् ॥ ८
उपागतं तमभ्याशं सिंहो दण्ड मृतस्य सः । गृहीत्वा तरसा तेन ताडयामास वेगतः ॥ ९
सोऽपि दंडं समादाय स्वकीयं यमवत्क्रुधा । मताडयत्तथा सिंहमसुरेशो महाबलः ॥ १०
तौ तदान्योन्यदण्डाभ्यां ताडितौ पेततुर्भुवि । मूर्छितौ तु समीक्ष्याशु मायनीलावुभावपि ॥ ११
दैत्यभूतबलानांच पतीतावागतौ युधि । ततो नीलस्स्वकं दण्डं मायस्योपरिचाक्षिपत् ॥ १२
वेगेन ताडितो दैत्यः क्षण मूर्छामवाप्यच । त्यक्तमोहस्तु शूलेन स्वेन नीलमयोजयत् ॥ १३
भूतसेनापतिर्नीलस्सोऽपि मोहं गतस्तथा । मुक्त्वा मोह ततः कोपात् करेणास्फाल्यवक्षसि ॥ १४
करी तस्य निजेनाशु करेणागृह्य पृष्ठतः । दष्ट्वा गळं तदीयंच स्वकैर्दन्तैस्सुनिष्ठुरैः ॥ १५
पीत्वा रक्तमयं नीलो मारयामास तं द्विजाः । मूर्छितौ यौ पुराचद्ध सिंहाख्यौ बलशालिनौ ॥ १६
धृतदण्डौ पुनश्चैतौ युयुधाते परस्परम् । परस्य ताडन कश्चित् स्वदंडेनैव रक्षति ॥ १७
चण्डीभूत्य तदा पाद मूर्ध्नि संताडितु मनः । दधनैतच्च विज्ञाय जुगोपान्यस्तु ताडने ॥ १८
पुनर्द्विनद्दस्स्वकं दण्डं सभ्राम्यच महाबलः । ताडयित्वापरस्याशु दण्डं धूळीचकारहि ॥ १९
तथापि चण्डसिंहवेन युयुधे दण्डपाणिना । करेणैव निजेनायं ताडयित्वा पुन पुनः ॥ २०
सिंह कोपेन तस्याशु दंडेनाताडयत्करम् । ताडनात्पतितस्सोऽपि शाखेव च तरो. क्षितौ ॥ २१
पतित स्वकर चण्डस्समादायातिभैरवम् । क्ष्वेळाशब्देन महता जघानोरसि तस्य स. ॥ २२
ताडनो तं महाघोर पादेनाताडयत्परः । हृष्टाः खेचरादेवा वाचमूचुस्तदा द्विजः ॥ २३
भोभो सिंहासुरेशानो यमच जितवान् किल । मारयन दुरात्मान महापापं महाबलम् । २४
इति संश्रुत्य देवानां वचनं भूतनायकः । पस्फालाशु करेणास्य कपोल हरिविक्रमम् ॥ २५
पपातास्फालनेनाथ मह्यां विगत चेतनः । प्राणानादातुमस्याशु विग्पुर्दूतावमस्य हा ॥ २६
मनुजां प्राप्य सैंहीति समाकर्यस्तदा खलु । तस्मिन् विनाशेऽपोम संप्रातेऽअसुरो महान् ॥ २७
सिंहमुद्दिश्य च तदा निर्ययौ सुमहारव. । मत्तप्रदीप्तप्रभावान्त मधुनाम महाबलः ॥ २८

तस्मिन्नजमुखस्तूर्णं मुमुचे चरसन्ततिम् । शरांस्तस्य गणस्यायं वटवृक्षं पुरस्स्थितम् ॥ २९
गृहीत्वोत्प्लुत्य तरसा रथे तस्यापतत्तदा । महता सिंहनादेन कंपयन्पृथिवीमिमाम् ॥ ३०
श्रुत्वा तस्य महारावं भक्तोऽभूद्दुरस्तदा । मुक्त्वा करस्थितं चापं वेपमानाङ्गयष्टिकः ॥ ३१
दृष्ट्वैनमसुरं भीतं तदा प्राह मधुर्वचः । नशूरोऽसिच भीतोऽसि त्वं निवर्तस्व संप्रति ॥ ३२
इत्युक्त्वाजमुखं शीघ्रादवतीर्य रथादयम् । निरस्तवटवृक्षस्सन्निर्ययौ शिबिरं प्रति ॥ ३३
चलत्येवमसौ तस्मिन्नसुरश्शोकविह्वलः । धिग्जीवितं ममेदानीं वजितारेर्मृधे बलात् ॥ ३४
जीवनान्निधनश्चैव वरमेतादृशस्यहि । इति संचिन्त्य मनसा दैत्यो योद्धुं मतिं दधत् ॥ ३५
नाहमस्मीति वेगेन महता क्रन्दनेनच । अभिदुद्रावतं शीघ्रं वर्षयन्मार्गणान्बहून् ॥ ३६
तमापान्तं पुनर्दैत्यं विहस्याथमधुर्बली । मोघांश्चकार सर्वांस्तान् करेणैव निरायुधः ॥ ३७
मुक्तान् पुनः पुनश्चापि दैत्येन सायकांस्तदा । पुनः कोपेन महता रथं संगृह्य पाणिना ॥ ३८
भ्रामयित्वांबुधौ तस्य क्षेपयामास सासुरम् । तदानीमेव तरसा पतितोऽयं महीतले ॥ ३९
कृतमुष्टिकरेणास्य ताडयामास वक्षसि । सोऽपि दैत्यं भुजेनैव मधुः परिघशोभिना ॥ ४०
अताडयद्भृशं कोपात् पविनेव गिरिंहरिः । केशाकेशि तथा बाहू बाहव्येव महाबली ॥ ४१
पतित्वा भूतलं भूयश्चोत्थितौ मल्लमार्गतः । युयुधाते तदात्यन्तं अजवक्त्रमधू द्विजाः ॥ ४२
छन्नाङ्गं तमारोप्य पतित्वायं स्वयं भुवि । उत्क्षेपाश पादाभ्यां मधुर्यावत्पयोधरम् ॥ ४३
पतितोऽयं महीपृष्ठे शीघ्रेणैवोत्थितस्तदा । महत्यायं क्रुधाभ्येत्य ताल्वोरश्चास्य (रक्षस्य) पाणिना ।
छन्नस्सन्मायथाऽमुश्चद्दैत्यवं चक्रमुज्ज्वलम् । निरायुधं तमभ्येत्य दृष्ट्वा तत् पुनरेत्य च ॥ ४५
प्रहर्तुः कण्ठमेवास्य छित्वा शीघ्रं गतं द्विजाः । स्वायुधेनैव बलवान्ममारायं यदाऽसुरः ॥ ४६
तदा संभूय सर्वेऽपि दैत्यसेनाधिपा द्रुतम् । समागत्य मृधे बाणान्ववर्षुर्भूतसंहतौ ॥ ४७
स्तनद्धर्मांबुदावृष्टीरिवस्थूलास्समंततः । दुद्रुवुश्च तदा भूतसेनाक्रान्ता इतस्ततः ॥ ४८
तान् सर्वानसुरानेको दण्डकस्तत्रदण्डकः । नियुतोद्धतवीरेषु वार्यारीन् सुमहायुधः ॥ ४९
अभ्येत्याद्रावयद्बाणैर्गोपालो गोव्रजं यथा । विद्धास्तद्बाणजालेन दैत्यास्तु बहवो मृताः ॥ ५०
छिन्नांघ्रिपाणिकवचमणिबन्धकलेबराः । मृता इवाक्षिणी केचिदुन्मील्य पतिता भुवि ॥ ५१
प्रादुद्रुवुस्तथा केचिच्छिन्न कर्णाश्च नासिकाः । हाहाशब्दश्च सुमहानभूदंभोधिनिस्स्वनः ॥ ५२
दृष्ट्वैतद्भानुकोपस्तु महता क्रोधवह्निना । दृष्ट्वा घरं निजं दैत्यो धनुषा धनुरानमत् ॥ ५३
योजयित्वा क्षणेनैव मयात्र समुपेक्षितम् । वाहिनी द्विसहस्रेण दैत्याश्चात्र मृताः किल ॥ ५४
अधावन्नपरे शस्त्राच्छिन्नभिन्न शरीरिणः । सहस्रवाहिनी संख्या वर्तन्ते दितिजाः किल ॥ ५५
तस्मादहममुं युद्धे विजेष्यामि ध्रुवं बलैः । नोचेच्छूरस्य पुत्रोनेत्युक्त्वायं रणभैरवः ॥ ५६
चोदनेचरथस्याशु प्रेरयित्वात्मसारथिम् । आस्फाल्य धनुषो ज्यांच धृतलस्तकमुष्टिकः ॥ ५७
ध्वनयन्धर्मकालस्य मेघसन्ततिवद्भृशम् । ववर्ष शारवर्षाणि भूतसेनासु निष्ठुरः ॥ ५८
सेनास्ताश्च तदावृक्षान् पर्वतान्महतीश्शिलाः । आयुधान्यतिघोराणि महाराघविभीषणाः ॥ ५९
चिक्षिपुस्सहसा सर्वान् भानुकोपं प्रतिद्विजाः । तानि सर्वाणिसहसा भानुकोपो महाबलः ॥ ६०
मुक्त्वा कोटिशरांस्तीष्णाग्रेणुतामनयत् क्रुधा । पुनश्च भूत सेनासु कोटि बाणाननेकशः ॥ ६१
योजयामास वेगेन मण्डलीकृतकार्मुकः । मुक्तास्तेन शराश्शीघ्रं गरुडा इव रंहसा ॥ ६२

उच्छिद्य पाणिपादादीन् भूतानां निर्गतास्तदा । पुनश्च साट्टहासेन शतशोऽथ सहस्रशः ॥ ६३
ववर्ष मार्गणांस्तीक्ष्णान्निदाघे मेघवज्ज्वलम् । भूतसेनास्तदाऽत्यन्तं छिन्नभिन्नांगयष्टयः ॥ ६४
अपलायन्तभिस्तास्त्रयन्त्यो रक्तयाहिनीम् । पराभवं तदा वीक्ष्य भूतानां धावतां द्रुतम् ॥ ६५
आजगामाति वेगेन रणमुग्रो महाबलः । भ्रामयन्भीषणं दण्डं ध्वनयंश्च महारवम् ॥ ६६
तस्य वर्ष्मणि दैत्यस्तु फळवान् कोटिकोटिशः । तत्याज सुमहाटोपो नदन्नद्भुत विक्रमः ॥ ६७
अकरोत्तानयं शीघ्रं दण्डेनाताड्य निष्फलान् । दण्डमादाय तरसा दैत्याऽऽक्षिपत् पुनः ॥ ६८
ताडयित्वा तमप्याशु स्वदंडेन वृथाऽकरोत् । पुनस्तु भानुकोपस्य सरथांस्तुरगानयम् ॥
मारयामास दण्डेन परस्योग्रो महाबलः ॥ ६९
भग्ने रथे तु महता बलशालिनैवमुग्रेण दैत्य तिमिरावलि भास्करेण ।
आरुह्य शीघ्रमपरं रथमुज्वलाभं आगाद्रणं दितिसुतेषु परो द्विजेन्द्राः ॥ ७०

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे तृतीयोऽध्यायः ॥

---

॥ अथ चतुर्थोऽध्यायः ॥

भानुकोपेन गणाधिपैस्सह युद्धम् ॥

ततस्तु निशितान् बाणान् भानुकोपो महाक्रुधा । मुक्त्वा बहून् परस्याशु दण्डं धूळीचकारहि ॥ १
ववर्ष निशितान् भूयो मार्गणांस्तत्कळेवरे । तानयंतु करेणैव ताड्य मोघांश्चकारच ॥ २
पुनश्चाभ्येत्य बलवानाभिमुख्येन मार्गणान् । नदीं मीनइवादाय भानुकोपेन तद्रथम् ॥ ३
अर्कमण्डलपर्यन्तमक्षिपद्रणभैरवः । रथेनाभ्यागतं वीक्ष्य रविर्भीतस्तथा भृशम् ॥ ४
आयाति भानुकोपोऽयं अपराधं मयास्यकिम् । इत्याकुलेन मनसा यदा तं ददृशे द्विजाः ॥ ५
तदैव न्यपतद्भूयो मह्यां भग्नरथोऽसुरः । उत्थायच पुनश्शीघ्रमुग्रं सन्ताड्य वक्षसि ॥ ६
अचिक्षिपत वेगेन पादौ संगृह्य सोंबरे । सत्यलोकावधि तदा गत्वायं भूयसा क्षणात् ॥ ७
यदा निवृत्तः पुण्यस्य क्षयादिवच पुण्यकृत् । योजितस्तु तदा शक्त्या ब्रह्मणा मुक्तया पुनः ॥ ८
पतन् भुवि समापाशु मोहमुग्रोऽद्रिराडिव । तस्मिंस्तु पतिते दण्डी महावीरो महागिरिम् ॥ ९
उत्पाट्य सुमहारावो निरासासुरवर्ष्मणि । तं सहस्रशरान्मुक्त्वा शतधा सोऽच्छिनत् क्षणात् ॥ १०
रसाल वृक्षमादाय पुनश्च पुरतः स्थितम् । सारथिं ताडयित्वास्य रथस्थं तममारयत् ॥ ११
ततस्तु भानुकोपोय मन्युनाच ज्वलन्निव । सहस्राणां दश तदा निशितानाशुगान् क्षणात् ॥ १२
ववर्ष निटिले तस्य गर्जयन्मेघवत् भृशम् । मुमोह समही प्राप्य तच्छरैस्ताडितो बली ॥ १३
तस्य तत्पतनं ज्ञात्वा पिनाकी शीघ्रमागतः । गास्फाल्योरं स्वकं गोत्रं प्रसार्यन्नकरौ बलात् ॥ १४
प्रचक्रमे यदा क्षेप्तुं भानुकोपं प्रतिद्विजाः । तत्पूर्वमेव तस्यायं वक्षस्यस्त्राणि रंहसा ॥ १५
सहस्राणि रणे भीमो मुञ्चतिस्म पिनाकिनः । तानि सर्वाणि तस्याशु वक्षो भित्वाच निर्ययुः ॥ १६
पपात समहीपृष्ठे हरिणेव महीधरः । ततस्सर्वाणि भूतानि सर्वे सेनाधिपा अपि ॥ १७
मिळित्वा पर्वतान् वृक्षान् गण्डशैल गदा अपि । महता क्रन्दनेनापि निर्जितांबुधि निस्स्वनाः ॥ १८
अवर्षयेस्य वेगेन भानुकोपे तदा भृशम् । भानुकोपस्तु तान्सर्वान् बाणमुक्त्वाऽऽशुगान् द्रुतम् ॥

छित्त्वास्य भूमौ सस्तार महाबल पराक्रमः । पुनश्च मार्गणान्मुक्त्वा द्रावयामास तानयम् ॥ २०
पलायितेषु सर्वेषु बलेष्वथ महाबलः । अखण्ड रुद्रदण्डाक्ष निरञ्जन कपालकाः ॥ २१
तथाण्ड लोचनाद्याश्च लक्ष्मीपास्तदा ययुः । ते सर्वे सुकुमाराङ्गाः सर्वाभरण भूषिताः ॥ २२
सर्वलक्षण संपन्ना धनुश्शास्त्र विशारदाः । एकदैव ज्यया साकं योजयित्वा धनूंषिच ॥ २३
पङ्क्त्या स्थित्वा विनिक्षिप्य रथेष्वालीढ मार्गतः । इतज्या स्फालनारावा गुणस्थशरपुंखकाः ॥ २४
ववर्षुश्शरजालानि साट्टहासास्तदाऽसुरे । तेषु कान्यस्य गात्रंच प्रविष्टा निर्गतानिहि ॥ २५
कानिचिच्च शरान्मुक्त्वा सोऽपि चिच्छेद शीघ्रतः । पुनश्च सोऽसुरः कोपात् सहस्रगणितान् शरान् ॥ २६
कोट्या मुमोच तान्सर्वान् लक्ष्मीशस्य महाबलः । तानेते सहसा चैतत् सहस्रशोऽधिकान् शरान् ॥ २७
मुक्त्वा न्यवर्तयन् भूयस्तदन्तिकमहो द्विजाः । पुनश्च भानुकोपस्तु सायकानयनिर्मितान् ॥ २८
अनेककोटि संख्याकान्मुक्त्वाऽमितपराक्रमः । कार्मुकाण्यमीषांतु क्षोदयामास शीघ्रतः ॥ २९
पुनश्च वीरास्सर्वे ते शरानन्यान्धनूंषिच । समादाय जवेनैव ववर्षुरसुरे तदा ॥ ३०
तेन मुक्तान् शरांश्चाशु चिच्छिदुस्समहोद्यमाः । तथा रथे तदीये ते सहस्रगणितांश्शरान् ॥ ३१
शतानि चतुरंगेषु ध्वजेषुच तथा बहून् । सारथौच सहस्राणि मुक्त्वा तानतयन्महीम् ॥ ३२
भानुकोपो महाकोप वह्निज्वलितमानसः । महान्तं रथमारुह्य पुनश्चान्यं महाबलः ॥ ३३
अत्यजत्तेषु वीरेषु शतानिच शतानिच । सहस्राणां सहस्राणि नाराचानतुलान् छितान् ॥ ३४
तैस्तदा वृतसर्वांगास्सर्वे कण्टकिता इव । अभवन् विगतोत्साहास्सवदास्रधृतागणाः ॥ ३५
तादृशांस्तानसमीक्ष्याशु वीरसिंहाभिधो महान् । रणकोलाहलाराधो वर्षन्नस्त्राण्यनेकशः ॥ ३६
जवेनागान्महाभीमो वीरशासन भूतलम् । तानि सर्वाणि तरसा भानुकोपो युधिष्ठिरः ॥ ३७
धूळीचकार बाणानां सहस्रशतकोटिभिः । वज्रास्त्राणि सहस्राणि पुनः क्रुद्धोऽस्यसोऽसृजत् ॥ ३८
छित्वायं तानि वेगेन सहस्रगणितैश्शरैः । वीरसिंहोऽस्य वक्षश्च पूरयामास कोपतः ॥ ३९
भानुकोपोऽपि तस्याशु सायकैस्ताडितो भृशम् । ग्लानिमाप तदाऽत्यन्तं रक्तधारा परिप्लुतः ॥ ४०
क्षणेनैव ततश्चास्त्रमस्त्रं नारायणस्य सः । असृजत्तं प्रतिक्रुद्धो मारकं सकलद्विषाम् ॥ ४१
प्रकाशयत्तदस्त्रंतु दिशो दश महाजवात् । प्रतस्थेऽनेकधा भिन्नं सर्वव्यामोहकं द्रुतम् ॥ ४२
महता शब्द जालेन पूरिताद्रि गुहान्तरम् । प्रत्यस्त्रंच यदा कर्तुं वीरसिंहः प्रचक्रमे ॥ ४३
तदा झटिति तं भूमावुरो भित्वाप्यपातयत् । ततस्तु वीरमार्ताण्डो दृष्टतत्क्रोध विह्वलः ॥ ४४
दिव्यां धनुर्ज्यां टंकारं घोषयित्वा समाययौ । तमायान्तमभिप्रेक्ष्य दूरेणासुरनायकः ॥ ४५
कलंशान् प्रेरयित्वाशु ज्यांचापं तस्य सोऽच्छिनत् । ललाटेपिच तावत्तु शस्त्राण्यस्यासृजत् द्विजाः ॥ ४६
पुनश्च कार्मुकं चापकालेनाप महोद्यतम् । योक्तुं ज्ययाऽऽरभद्धीमान् असुरात्तत्तदाप्ययम् ॥ ४७
रथं तुरङ्गमानस्यैर्भानुकोपो महाबलः । वीरमार्ताण्डकस्याशु पातयामास भूतले ॥ ४८
पुनरस्त्रशतास्त्राणि वक्षस्यस्य युयोज सः । ततोऽमर्षवशाद्वीरमार्ताण्डस्समहारथः ॥ ४९
उत्थाय स्वरथात्तस्य वक्षोमध्ये पपातहि । भञ्जयित्वाशु तच्चापं क्षिपतिस्म महीतले ॥ ५०
ससंभ्रमं तदा दैत्यः करवालं कटिस्थितम् । कोशादुद्धृत्य तरसा क्रोडे तस्य प्रवेशयत् ॥ ५१
जग्राहच यदा भीमं रक्तधारा तदा भृशम् । निपपात प्रहर्तुश्च वक्षोमध्ये द्विजोत्तमाः ॥ ५२
तदानीं वीरमार्ताण्डः खड्गं स्वं परिगृह्य च । योजयामास तस्याशु वक्षस्यत्यन्तमुत्क्रुधा ॥ ५३

घोरबाणं तदाच्छिन्नमेतेनासीत्तु निरङ्कुशम् । दैत्यस्तु पुनरुत्प्लुत्य निटिले तस्य योजयत् ॥ ५४
करवालं महाकोपात् पातयामास तं भुवि । प्रतापे सहसा वीरराक्षसो नाम दुर्जयः ॥ ५५
आगत्य समहावीरस्सहस्रास्त्राण्यमोचयत् । तानि सर्वाणि दैत्येशो मुक्त्वाशस्त्राण्यनेकशः ॥ ५६
अतश्चच्छेतघाश्वेळाशब्देनापूतदिङ्मुखः । शतैस्तु सारथिं तस्य शरैर्मारयति स्महि ॥ ५७
स्थाप्य सूतं पुनश्चान्य क्षणादेव महाबलः । सहस्रैर्निशितैश्शस्त्रैर्मकुटं तस्यचोज्ज्वलम् ॥ ५८
अपातयत्तदाक्षोण्यां वीरराक्षस संज्ञकः । त्वरया भानुकोपस्तु कोटीरं पुनरुज्ज्वलम् ॥ ५९
निधाय मौलौ बलवान् कोपाग्नि ज्वलितो भृशम् । चिच्छेद चापं तस्याय सहस्रैर्निशितैश्शरैः ॥ ६०
कार्मुकन्तु यदाऽऽदातु प्रवृत्तस्तरसा बली । तदैव भानुकोपोऽस्य रथं मुक्त्वाशरान् बहून् ॥ ६१
चिच्छेदसमहाटोपरवध्वनितदिङ्मुखः । क्षणादेव पुनश्चान्य रथमास्थाय सुन्दरम् ॥ ६२
योद्धुमाप यदा कोपाच्चहासनलसत्करः । तदैवचापं तस्यायं भानुकोपोऽच्छिनत्पुनः ॥ ६३
ततश्शक्तिं महाकोपात् तस्याञ्च सुमहारव । शरैश्शातैरसनिशितैरलाबीत्तामपिक्षणात् ॥ ६४
मवरुह्य रथात्तूर्णं राक्षसो वीरपूर्वकः । रथेन साकं तं दैत्य नुनोदोर्वीयतस्थले ॥ ६५
निर्गत्य शीघ्रमाकाशे रथे स्थित्वा महासुरः । अट्टहास निनादेन पूरयन्सकलादिशः ॥ ६६
मुमोच शक्तिं तस्याय निशितां वक्षसिक्रुधा । पतनाश्च महाशक्तेर्मोहमाप क्षितिंगतः ॥ ६७
वीरान्तको वीरमहेश्वरश्च विनिर्गतः वीरपुरन्दरेण । महाबलैर्वीरमहेन्द्रवीर धीरौ तदा वीक्ष्य तदस्य विप्राः

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे चतुर्थोऽध्याय ॥

---

॥ अथ पञ्चमोऽध्यायः ॥

वीरबाहुना भानुकोपस्य मूर्छापातनम् ॥

प्रस्थिताश्च महावीरास्सर्वे कार्मुकपाणयः । घनाघना इव तदा महारावविभीषणाः ॥ १
ववर्षुश्शरजालानि भानुकोपमभिद्रुताः । स्यन्दनं भानुकोपोऽपि नानालंकार मण्डितम् ॥ २
अधिरुह्य पुनश्चान्य ववर्षुं शरान् बहून् । युद्धं तदाऽभवद्घोरं सुरासुरमहीभुजाम् ॥ ३
अदृष्टपूर्वमश्रुतं लोकतामसिभैरवम् । तदाऽसुरशरैर्विद्धावुभौ भग्नमनोरथौ ॥ ४
कान्तौ भग्नरथौ शासावेको मूर्छां तदापद्धि । दृष्ट्वैतदासुरी सेना भूतानां गतलेशताम् ॥ ५
आजगाम महावेगा महाराव विभीषणा । अट्टहासपरास्तत्र नमृत्युश्शार्ङ्गपाणयः ॥ ६
खड्गखेटधराः केचिद्धावन्तिस्म समन्ततः । एवं नदत्सुसर्वेषु दैत्येषु च तदा क्षणात् ॥ ७
महाबाहुर्महावीरो वीरबाहुर्विनिर्गमत् । पठन् विविधवेदान्त गुहस्तोत्र परान्तरः ॥ ८
गुहाशयं गुहं ध्यायन् हृत्स्थितामोदहस्य सः । सुदृढं चापमादाय पिनाकमिव शङ्करः ॥ ९
शरसन्ततिं संभूत्ये चापे मौर्वीं तदाऽयुजत् । आस्फालयच्च तां भीमा स्वपक्षोनि विभीषणाम् ॥ १०
तदा समभवद्घोरो निनादः पूरयन् दिशः । ब्रह्माण्डच्छिद्रं तद्गिरीणाञ्च गुहान्तरम् ॥ ११
अकाण्डेऽण्डं स्फुटतिधा ब्रह्मणोऽतिभयप्रदः । कल्लोलानां रवो वा स्यात् प्रळयांभोनिधेरिव ॥ १२
एवमुत्प्रेक्षितो नाना प्रकारेणच मानवैः । तादृशं तं महारावं श्रुत्वा व्याघ्रभिया मृगाः ॥ १३

व्याघ्रा गजाश्च सिंहस्य रवमाकर्ण्य भीषणम् । शरभस्य रवोऽयं किमिति पञ्चानना अपि ॥ १४
सकभूभृद्गुहावासा दुद्रुवुः परितो दिशः । चकार भानुकोपोऽपि शिञ्जिन्यास्फालनं तदा ॥ १५
तदारावोऽभवत्तत्र सर्वाश्चर्यकरः परः । ततस्तु भानुकोपस्तं वीरबाहुं महाबलम् ॥ १६
नयज्ञस्त्वं नमधुभित्सुहृद्दो बलसिन्धव । दूतस्य कस्यचित्कोवा गर्वप्रलापशस्तव ॥ १७
मायावशेन पूर्वं त्वं मारयित्वाऽसुरान् गतः । दूतबुध्यातवाऽहं त्वां मुक्तवानस्मि सत्यतः ॥ १८
पश्याधुना बलं त्वत्र द्रावितं मारितं मया । जित्वा त्वामाहवे शीघ्रं सर्वान्देवांस्त्वदीयकान् ॥ १९
महच्छृङ्खलिकाबद्धान् करिष्यामि नसंशयः । इति ब्रुवन्तं तं प्रेक्ष्य वीरबाहुर्वचोऽब्रवीत् ॥ २०
किमुच्यते तेऽधुना दैत्य पण्डितं मानिना त्वया । योद्धुमभ्यागतं दूतं न तथा वक्तुमर्हसि ॥ २१
दूते नास्ति बलं शौर्यमिति कस्यचिन्निश्चयः । मुक्त्वाऽभिमानं तस्मात्त्वं कुरु युद्धं मया सह ॥ २२
इत्थं वदति देवेशे वीरबाहौ महाबले । भानुकोपस्तु कोपेन दशास्त्राणि मुमोच हि ॥ २३
सोऽपि मुक्त्वा दश शरान् बिभेदैतानि देवपः । शतसंख्याशुगान् दैत्यो विससर्ज पुनः क्रुधा ॥ २४
तावद्बाणान्विमुच्याथ तानप्याच्छिनदुज्ज्वलम् । पुनश्च पत्रिणो दैत्यस्सहस्राणि अहीरुषा ॥ २५
वीरबाहुस्तु तान् छित्वा सहस्रैरेव कोपतः । तस्मिन्भूयस्सहस्राणि दशास्त्राण्यत्यजत्सुरः ॥ २६
दशसिंहसहस्राणां छित्वातानसुरश्शरैः । भानुकोपोऽत्यजद्बाणान् लक्षसंख्यामितान्सुरे ॥ २७
तस्य लक्षशरैर्वीरबाहुः कृत्वाशुगान्वृथा । दशलक्षखगान् दैत्ये प्राहिणोत्स महारवान् ॥ २८
तावत्संख्यान् विमुच्याथ दैत्यश्छित्वाशु तानपि । शतलक्षशराणां तु मुमोचास्मिन् महाक्रुधा ॥ २९
तावत्संख्यैश्शरैस्तस्य तान् हत्वा देवनायकः । पुनश्शतसहस्राणि कोट्या तत्याज तं प्रति ॥ ३०
छित्वा तावच्छरैर्बाणानसुरो देवपोज्झितान् । कल्पान्तघनवद्भूयो ववर्ष सुबहून् शरान् ॥ ३१
वीरबाहुरपि क्रोधादट्टहासपरो भृशम् । मुमोच शस्त्रवर्षाणि महासंवर्तमेघवत् ॥ ३२
तदा तयोस्समभवद्युद्धे चित्रं तु दुर्दिनम् । रणचापगुणारावगर्जनातिभयप्रदम् ॥ ३३
शरजालप्रभापुञ्जस्फुरत्सौदामिनीवृतम् । कृताशेषदिगन्तार्कवामवृन्दातिवृष्टिम ॥ ३४
शिलीमुखनदीमध्यभ्रमच्चक्रयपर्वतम् । निर्यद्बाणप्रभौघेन लक्ष्यवक्त्रं परस्परम् ॥ ३५
निष्काण्डघुसितच्छत्र फेनराजिविराजितम् । अनिमेषैरपि तदा सनिमेषतयेक्षितम् ॥ ३६
प्रवृत्ते दुर्दिने चैवं भानुकोपस्तदा शरैः । वीरबाहुविमुक्तानि छित्वास्त्राणि बहून्यपि ॥ ३७
पुनर्दशशरान्मुक्त्वा भञ्जयित्वाशु तद्धनुः । चकार सुमहारावं घर्मकाल पयोदवत् ॥ ३८
वीरबाहुस्ततश्चापं गृहीत्वान्यन्महोन्नतम् । प्रेरयित्वाशुगानाशु भञ्जयामास तद्धनुः ॥ ३९
असुरस्तु जवाद्भूयो गृहीत्वान्यन्महद्धनुः । महताशब्द जालेन पूरयंश्च दिशो दश ॥ ४०
अवर्षन्निशितान्बाणान् सहस्राण्यस्य वक्षसि । ततः कोपेन वीराणां वीरोऽत्यन्तं ज्वलन्निव ॥ ४१
कोटीरं पातयामास बाणैस्समभिरासुरम् । अलंचकार दैत्यस्तु यदान्येनस्वकं शिरः ॥ ४२
तदैव कवचं तस्य चिच्छेदायं पुनश्शरैः । भानुकोपं तदा भानुवदुद्वीक्ष्य तादृशम् ॥ ४३
ततोऽसुरो महाकोपात्कनुरास्फाल्य निष्ठुरम् । ववर्ष वीरनिटिले नाराचानां सहस्रकम् ॥ ४४
प्रोतांस्तत्र करेणाशु वीरबाहुस्समुक्षिपन् । शिञ्जिनीं ताडयित्वायं महाराव विभीषणः ॥ ४५
अट्टहासपरोत्यर्थं मुञ्चतिस्मास्य वक्षसि । सहस्राणि तथा वक्त्र दोस्सन्धि युगपाणिषु ॥ ४६
प्रतिस्थानं शराणां स प्रळयाग्निरिवज्वलन् । तच्छरैरग्निसंकाशैर्दह्यमानस्तदासुरः ॥ ४७

मुमोह धनुषः कोट्यां बाहुनिक्षिप्य भूसुराः । मोहितेतु महापापे भानुकोपे दुरात्मनि ॥ ४८
प्रसूनराजीष्पवत् किंशुकाभेऽस्त्रशोणितैः । ततस्ससंभ्रमं सर्वे दैत्यास्संभूय तं वृताः ॥ ४९
ववर्षुश्शर जालानि युगपत् घर्ममेघवत् । वीरबाहुस्तथाटोपरवध्वनितदिङ्मुखः ॥ ५०
हृदिध्यायन् गुहं साक्षात् दैत्य संहार कारिणम् । सहस्रकोटि शस्त्राणि मुक्त्वा मुक्त्वा क्षणादयम् ॥ ५१
छित्वाऽसुरशरान्सर्वान् भीहारान् भानुवारकैः । अनन्तकोटि गणितैरस्त्रैस्सर्वान् दितेस्सुतान् ॥ ५२
समारयद्यथारुद्रस्त्रिपुरं लीलया द्विजाः । तदा शिरांसि दैत्यानां बाणलग्नानि कानिचित् ॥ ५३
पेतुरब्धौ पराण्याशु पर्वतेषु सरित्सु च । द्वीपात् द्वीपं तथान्यानि यावदण्डगतानिहि ॥ ५४
इवराण्यतम भार्याणां अपतन्पुर एव च ॥ ५५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

श्री स्कन्देन भक्तरक्षणाय अमोघास्त्र प्रयोगः ॥

ननृतुश्च कबन्धानि भूयांस्युत्थाय भीषणम् । तदा समभवत्तेषां रक्तैरेव महानदी ॥ १
मांसकर्दमभूयिष्ठा केशशैवालिनी भृशम् । मदण्डधवळच्छत्र फेनपङ्क्तिपरिष्कृता ॥ २
लुठत्तन्मस्तकपृथुदपद्मराजिपरीवृता । कीकसौघबृहच्छुक्तिपेशीसंघसमाकुला ॥ ३
परिभ्रमच्छ्येनकाककङ्कोपरि भीषणा । सारमेयशिवाभिश्च पिशिताकांक्षयावृता ॥ ४
प्रेतैः पिशाचैश्च तथा संकुला सर्वतो भृशम् । एवं मृताऽऽसुरीसेना वीरबाहुशराग्निना ॥ ५
ततो भूतानि सर्वाणि भूतसेनाधिपा अपि । मूर्छिताश्च परायेतु मिलितास्सर्वं एवते ॥ ६
नृत्यगानपरेष्वेषु हृष्टस्त्वपि परस्परम् । सहसा भानुकोपस्तु त्यक्तमोहस्तदा द्विजाः ॥ ७
मृतां चतुष्प्रकारेण स्वकीयां वाहिनीं तथा । निश्शेषेण तथा देवसेनांतामपि जीवतीम् ॥ ८
नृत्तगानपरां वीक्ष्य विचिन्त्य मनसापि च । साकं मया युयुधिरे एते सर्वे पलायिताः ॥ ९
अयमेको महाशूरो नसमोऽस्य पृथग्जनः । तमेनं घटिकामध्ये मारयिष्यामि सत्यतः ॥ १०
नोचेदग्निं गमिष्यामि सोऽहं चापधरोऽग्रहि । इति प्रतिज्ञां कृत्वाऽयं दैत्यसेनाधिपः क्रुधा ॥ ११
नदन्, भृशं तदा तूर्णं केसरीव महोन्नतः । ववर्ष शिशिरदशास्त्रान् सहस्राणि सुरंप्रति ॥ १२
तावत्तद्भूप शस्त्रैस्तच्छरांश्छित्वाशु देवपः । पुनर्मुमोच बाणानां सहस्राणि तदाऽसुरे ॥ १३
तानि सर्वाणि दैत्यस्तु महाबल पराक्रमः । भित्वाशु निशितैर्बाणैस्सहस्रैः कोपविह्वलः ॥ १४
पुनर्दश सहस्राणि मुक्त्वा शस्त्राणि निष्ठुरः । सैन्धवान तद्रथाश्वान् सारथिं मृतिमानयत् ॥ १५
अथ भूताधिपः कोपादन्यमासुरंरथं तदा । आरुह्य निशितैर्बाणैर्विंशतैर्विंशतैर्द्विजाः ॥ १६
भासुरं रथमश्वांश्च सारथिं कार्मुकं तथा । भित्वा महीतले वीरो ननोद समहाबलः ॥ १७
ततोऽसुरो रथं प्राप्य कार्मुकंच समुद्यतम् । पुनर्मुमोच चक्राण्यप्यस्त्रिंशत् शतानिवि ॥ १८
देवपस्तु तदा खिन्नः किंचित्कोपवशात्पुनः । चतुर्दशशरैस्तस्य धनुश्छित्वाशु निष्ठुरम् ॥ १९
महता सिंहनादेन कंपयन्दैत्यकुञ्जरम् । सहस्रैस्तु शरैर्भूयश्छित्वा ध्वजंच तद्रथम् ॥ २०

तुरङ्गमानपि तथा पातयामास भूतले । पुनर्दिशतैश्शातैर्बाणैर्वक्षश्चास्य बिभेद हि ॥ २१
यदा रथं पुनर्दैत्यस्त्वारुरोह महोद्धतम् । तदाथ देवपस्तस्य निषङ्गं पृष्ठभागगम् ॥ २२
सहस्रैश्छिन्नद्बाणैर्भित्त्वा चाराशु वक्षसि । ततस्ससंभ्रमं दैत्यश्चिन्तयित्वातरां तदा ॥ २३
महावीर्योऽहि धनुषा जेतुमादय माधवः । इति जग्राह मोहास्त्रं सर्वव्यामोहकारकम् ॥ २४
मनसा मन्त्रयित्वा तदस्त्रं श्रीपणं भृशम् । यदा विनिर्ययौ गाढं तमः पटलमेचकम् ॥ २५
अन्धीकृतजनाक्षं तदशेषाशावृतान्तरम् । महाभीतिप्रदं घोरं महामायाकरं परम् ॥ २६
मोहकं मोहकस्यापि भीषणं भीषणस्य च । तदा भूतानि सेनानां पतयस्सर्व एव ते ॥ २७
स्वायुधानि च घोराणि क्षिपन्तिस्माशु तत्प्रति । आगत्य महावेगादागच्छत्तद्धि देवपः ॥ २८
किमिदं भीषणं घोरं निवार्यं केनचा मया । आयाति शीघ्रं सर्वाणि शस्त्राण्युच्छिद्य रंहसा ॥ २९
एवं ससंभ्रमं वीक्ष्य व्यग्रचित्ते सुराधिपे । सहसा साकममुना सेनास्सर्वाश्च भूसुराः ॥ ३०
निपतन्मोहयामास तदस्त्रं घोरयाद्युता । स्तंभा इवस्थितास्सर्वे भूतसेनाधिपा अहो ॥ ३१
रथेषु रथिनस्तद्वद्भूतलेऽपि परेक्षणात् । स्वस्वायुधान्यवष्टभ्य निद्रामापुर्द्विजोत्तमाः ॥ ३२
बालेनापि भुजङ्गेन्तु शपथा इव तदास्थिताः । सन्तोषेण तदा तेषु भानुकोपश्शरान्वहन् ॥ ३३
मुक्त्वाशु रुधिराप्लुतान् अकरोत्तान्सुराधिपान् । ज्ञात्वैतत्सर्वभूतानां हृन्निवासो दयानिधिः ॥ ३४
कुमारस्सुकुमाराङ्गस्सच्चिदानन्द विग्रहः । हेमकूटपुरे स्वामी दिव्यसिंहासने स्थितः ॥ ३५
सेव्यमानस्सुरगणैः परितः पार्श्ववर्तिभिः । निवृत्तये तदस्त्रस्य मोहनाशस्तदा प्रभुः ॥ ३६
अमोहास्त्रं महाघोरं मुमोच सहसा ज्वलत् । भासयत्सुतरामाशास्सर्वा भानुकरा इव ॥ ३७
प्रभापुञ्जेन महता वारयामास तद्भुतम् । स्वापादिवोत्थितास्सर्वे वीरबाहुमुखास्सुराः ॥ ३८
भूतसेनाधिपतयस्त्यक्तमोहाः क्षणात् द्विजाः । अमोहास्त्रं तु मोहास्त्रं वारयित्वा गुहान्तिकम् ॥ ३९
ययावमतिमेनाशु रक्षेणैव तदा भृशम् । उत्थितास्सहसा वीरास्सर्वे लज्जितमानसाः । ४०
प्रत्यक्षेऽकुशलानां नो वीर्यं किंवाप्रवर्तते । कृपया षण्मुखस्यैते रक्षितास्सहसा वयम् ॥ ४१
इति स्तुत्वा गुहं सर्वे स्तोत्रैर्वैवाग्विगुम्फितैः । योद्धुं पुनर्दैत्यवरमुपचक्रमिरे क्रुधा ॥ ४२
हन्तुकामस्तदा वीरबाहुस्तं सहसाऽसुरम् । अस्त्रं पाशुपतं वेगादग्रहीद्देवनायकः ॥ ४३
वीक्ष्य तद्दैत्यनाथोऽयं भयाविष्टमनास्तराम् । गृहीत्वास्त्रमयैतस्य प्रत्यस्त्रं नगतः खलु ॥ ४४
गत्वाऽतो नगरं शीघ्रं अस्त्रं पाशुपतं महत् । समादायागमिष्यामि योद्धुमेनं महाबलम् ॥ ४५
इति निश्चितचित्तोऽय सूक्ष्मरूपेण शीघ्रतः । मुक्त्वा रथं पुरं प्राप नानादैत्य समाकुलम् ॥ ४६
गायद्दैत्यवरांस्तत्र क्रीडतोऽक्षेण वेदिषु । ययौ वीक्ष्य स्वयं गेहं नानारत्न विचित्रितम् ॥ ४७
सुन्दरीभिर्मनोहारि गात्रयष्टिभिरावृतम् । कुलनानोपचारोऽपि नितरां खिन्नमानसः ॥ ४८
चिन्तयित्वा रणायात्र व्यवसद्भूसुरा भृशम् । भूतानि सेनापतयश्चक्रुः कोलाहलारवम् ॥ ४९
ववर्षुः पुष्पवृष्टिं च देवा व्योम्नि स्थितास्तदा । देवदुन्दुभयस्तद्वद्दिने दुस्ताडिता भृशम् ॥ ५०
तदा प्रोचुश्च भूतानि वीरबाहुं महाबलम् । नेतव्यो दैत्यवर्योऽयं पुराद् वध्यात्र देवप ॥ ५१
एवं वादिषु भूतेषु वीरबाहुस्तदाऽवदत् । पलायितो रणे योधा कोशासौ च पुनर्भटैः ॥ ५२
नाभिभाष्य इतिप्राहुर्बुधास्तत्त्वार्थवेदिनः । आगतश्चेत्स्वयमयं संहरिष्याम्यसंशयम् ॥ ५३
एवमादिवचः श्रुत्वा भूतसेनाधिपास्तदा । प्रहृष्टमनसस्सर्वे प्रस्थितास्स्वपुरं प्रति ॥ ५४

दृष्ट्वा चैवं परिभवममुं भानुकोपस्य भानुर्भीत्येवागादपरजलधिं पीतमानुर्महान्तम् ।
सर्वे वीरास्सकलदनुजान्मारयित्वा द्रुतं ते स्कन्दावासं पुरमपि तदा प्रापिरे भूसुरेन्द्राः ॥ ४५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे षष्ठोऽध्यायः ॥

---

॥ अथ सप्तमोऽध्यायः ॥

श्री स्कन्देन युद्धाय प्रस्थानम् ॥

वीरबाहुमुखास्सर्वे भूतसेनाधिपास्तदा । गत्वा स्कन्दस्य निकटं प्रणम्य सहसा क्षितौ ॥ १
स्तुत्वा स्तोत्रवरैः स्तुत्यं वृत्तान्तं च व्यजिज्ञपन् । महत्या कृपया सर्वान् विलोक्य नितरां गुहः ॥ २
नियोजयामास तदा तानिमान् स्वगृहं प्रति । तुष्ट्वा सर्वे सुरश्रेष्ठं नमस्कृत्य गृहान् गताः ॥ ३
शूरपद्मोऽथ संश्रुत्य स्वपुत्रस्य पराभवम् । दूत वक्त्रेण बलवानहं गत्वा ध्वंसये तान् ॥ ४
सार्कं तेनार्भकेनाशु विजेष्यामि नसंशयः । इत्युक्त्वा तान् स्वकान् दूतान् प्रेरयित्वा गृहं प्रति ॥ ५
तस्थौ चिन्तापरवशो रात्रौ तामसुराधिपः । उषः काले समुत्थाय कृताशेष दिनक्रियः ॥ ६
सिंहासनं समारुह्य नानारत्नोप शोभितम् । सहस्रकोटि संख्याकान् दूतांश्च प्रैरयत्स्वकान् ॥ ७
आनेतुं स्वबलान्याशु तत्र तत्र स्थितान्ययम् । प्रस्थिता दूतवर्यास्ते तत्तद्द्वीपादि सन्धिषु ॥ ८
स्थितान् भटान् विभूत्यापि समानीयागता द्रुतम् । शूरपद्मोऽथ तां द्रष्टुं आरुरोह च गोपुरम् ॥ ९
स्थित्वा तस्याग्रदेशेऽयं वीक्ष्य तावनुजीविनः । शतसाहस्र संख्याकान् याद्भिर्व्या दितिजन्मनः ॥ १०
भयदानाशु तुष्ट्वायं महत्याऽसुरनायकः । नानामणिगणाकीर्णे धृतोच्छ्रित महाधनुः ॥ ११
भासमानस्तदा शारधनुर्धृतपलीयवत् । तलत्रातंस्रसमेव शारपूर्णनिषङ्गधृक् ॥ १२
स्थितविद्युत्प्रभापुञ्जभास्वरांशुदकञ्चुकान् । धृतद्रोणप्रसूनौघदामोद्दामप्रभाभरः ॥ १३
तदा शुभ्रगात्रजमालावृतशिरप्रभः । दण्डप्रासासिनिस्त्रिंशकुठारायुधोज्ज्वलः ॥ १४
जितमन्दरकैलासमहामेरुवरे रथे । इन्द्रलोकरथे चित्रे नानारत्नोपशोभिते ॥ १५
विपक्षाजलकिङ्किणीध्वजपरिष्कृते । स्थित्वा प्रतस्थे दैत्येन्द्रस्सानुगो मन्त्रिभिर्वरैः ॥ १६
सेनापतिभिरन्यैश्च महावीरैर्महाबलैः । तथा सर्वायुधापूर्णवद्भुस्यन्दनराजिभिः ॥ १७
राजवीथीं ततस्तीर्त्वा गोपुरद्वारमागतः । सिंह सारथयो तावदुरेशातिदूरगौ ॥ १८
सेनानामधिपौ दृष्ट्वा प्रेरयित्वाशु पूर्वगौ । पादढक्कीभेरिपटहमृदङ्गडिण्डिमस्वरैः ॥ १९
ताडितैस्समहाशङ्खवंशवेणुविपञ्चिभिः । तुरङ्गमाणां हेषाभिर्बृंहितैर्मत्तदन्तिनाम् ॥ २०
रथमुख्यमहानेमिशब्दैरपि । दर्पोद्धारैश्च सेनानां मागधानां महारवैः ॥ २१
शिवभक्तागतदासाधिपमहाधरोऽनिरस्यन् । नानारत्नवरात्रिर्गच्छत्पदस्सुगात्मनः ॥ २२
शूरपद्मोऽथ सेनाभिः प्राप युद्धस्थले महत् । महता पुष्करावर्तेन सेनापादोद्धितिमग्न ॥ २३
गुहार्कमण्डलाकारा विदराशागुरुस्तदा । तदागमनमाश्विन्द्रः कुमाराय व्यजिज्ञपत् ॥ २४
मार्गयामास देवेशः ममरस्य तां तदा । अथ शूरं दुरात्मानं मत्स्यागमन विश्वत ॥ २५
योद्धुमभ्यागत शीघ्रं सर्वदैत्याधिपं प्रभो । इति संभाषितस्कन्दस्तयोर्गुरुवा पुरन्दरम् ॥ २६

अथासनात् सिंहात् सर्वदैत्यापहारकः । वायुं स्वसारथिं तूर्णं रथस्यानयने गुहः ॥ २७
प्रेरयित्वाथ सेनायमानीतेऽस्मिन्महारथे । महर्षिभिश्चन्द्रपूर्वैश्च स्तूयमानपदाम्बुजः ॥ २८
विपञ्चीगानसंसक्तनारदादिनिषेवितः । इत्थं दण्डैश्च नृत्यद्भिरप्सरोभिर्ऋषिभिरावृतः ॥ २९
भेरीकाहळनिस्साणझर्झरीमड्डुमर्दळैः । शंखयंत्रविपञ्चाद्यैर्भर्त्सिताम्भोधिसंरवैः ॥ ३०
गायद्भिः किन्नरवरैः पठद्भिर्वन्दिभिर्गुणान् । छत्रचामरसंसक्तकरैर्देववरैरपि ॥ ३१
कृतनानोपचारैश्चान्यैरप्यावृतान्तिकः । आरुह्यात्मरथं देवः प्रतस्थे सहसा द्विजाः ॥ ३२
प्रस्थिताश्च तदा वीरास्सह सेनाधिपैरपि । रथानारुह्य तरसा सर्वाभरणभूषिताः ॥ ३३
भूतानि तानि तरसा कृतक्ष्वेळारवाण्यपि । तदा समभवद्रेणुपुञ्जो व्याप्तदिवाकरः ॥ ३४
सत्वरास्सहसा सर्वे प्रापुरायोधनस्थलम् । ततस्तु भूतसैन्यानि संवृतान्यासुरैर्भृशम् ॥ ३५
वडवाग्निरिवाम्भोधिजलैरतिबलैस्तदा । मुमुचुश्चाथ भूतानि वृक्षानुत्पाट्य पर्वतान् ॥ ३६
तथा शिलाश्च महतीरसुरेषु सुरात्मसु । तेऽपि दैत्यास्तदात्यन्तं क्रुद्धा भूतेषु शीघ्रतः ॥ ३७
स्वायुधान्यतिघोराणि तत्यजुस्सुमहारवाः । पुनर्भूतानि तान् कोपादसुरैरसुरान्तकैः ॥ ३८
तुरंगमैस्सहस्रैश्च दशभिर्मत्तहस्तिनः । सहस्रगजमुख्यैश्च तुरङ्गान्सुबहूनपि ॥ ३९
रथैर्गजैश्च दितिजानास्फाल्यास्फाल्य रहसा । अमारयन् बहून् दैत्यान् करिणश्च तुरंगमान् ॥ ४०
उत्पाट्य पादौ संगृह्य तथा दैत्यास्तुरंगमान् । संभ्राम्य कांश्चित् भूपृष्ठे सन्ताड्य मृतिमानयन् ॥ ४१
असुराश्च ततश्शीघ्रं भूतैर्मुक्तान्महीधरान् । पर्वतानायुधैश्छित्वा महासमरभीषणाः ॥ ४२
पुनश्च भूतसेनासु मुक्त्वा नानायुधान्यपि । चिच्छिदुः पाणिपादादीन् द्रावयामासुरप्यहो ॥ ४३
निर्गताश्च ततश्शीघ्रं भूतसेनाधिपाः क्रुधा । दण्डखड्गशरैस्तद्वदायुधैस्सुमहारवाः ॥ ४४
मारयन्तो बहून् दैत्यान् द्रावयामासुरञ्जसा । अभवंस्तदा दैत्य कबन्धानि बहून्यपि ॥ ४५
शोणितौघस्रवन्तीव समजायत वैनदी । वीक्ष्यैतदतिशूरस्तु दैत्येषु सुमहाबलः ॥ ४६
निर्जगाम महाघोषरवपूरितदिङ्मुखः । आरोहितरथे भग्ने पुनरारोहणाय च ॥ ४७
अनुयातो रथैरन्यैर्द्विसहस्रैर्महोन्नतैः । दशसाहस्रतुरगैः क्लृप्ते रथवरे स्थितः ॥ ४८
ववर्ष शरवृष्टीश्च ध्वनयन्मेघवत् भृशम् । तादृशं तं महाशूरमुग्रो वीराधिपो महान् ॥ ४९
दण्डमुद्यम्य वेगेन ताडयामास वक्षसि । कवचश्च तदा छिन्नः प्रहारेणास्य वक्षसि ॥ ५०
अतिशूरः पुनः कोपाच्छरान् शतसहस्रकान् । मुक्त्वा कळेबरं तस्य रक्ताप्लुतं तदाऽकरोत् ॥ ५१
ततस्ससंभ्रमं भूतपतिः पर्वतमुन्नतम् । उद्धृत्य सुमहावेगाद्रथे तस्य नुनोद हि । ५२
निपपातास्य पतनाच्छताश्चास महीतले । क्षणात्पुनर्दैत्यवरो रथमन्यं समुज्ज्वलम् ॥ ५३

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे सप्तमोऽध्यायः ॥

---

॥ अथ अष्टमोऽध्यायः ॥

सिंहवक्त्रपुत्रेण अतिशूरनाम्ना विसृष्टस्य पाशुपतस्य श्री शिवसमीप गमनम् ॥

दाऽऽरुरोह वेगेन तदानीं तस्य दैत्यपः । पादघातेन हतवान् अश्वान् श्वसनवेगिनः ॥ १
ततश्शरशतं दैत्यो मुक्तवानमरेश्वरे । दण्डेन ताडयित्वा तानकरोच्च महारवम् ॥ २

पूर्वदेवः पुनः स्थित्वा रथेऽन्यस्मिन्महोन्नते । आग्नेयास्त्रं महाघोरं प्रलयाग्नि समप्रभम् ॥ ३
अमुञ्चद्गर्जयन्भीमं महासंवर्तमेघवत् । तदस्त्रं शतधाभिन्नं विस्फुलिङ्गान्यहून्त्यसृजत् ॥ ४
प्रकाशयद्दशदिशो महाराव विभीषणम् । महताच जवेनाशु प्रापास्य निकटं द्विजाः ॥ ५
ततस्तु भूतसेनानामधिपो हृदयाम्बुजे । गुहं ध्यायन् क्षणेनैतत् उत्पाट्यास्त्रमभक्षयत् ॥ ६
भक्षितेऽस्मिन्पुनः क्रोधादसुरेशो महाबलः । वारुणास्त्रं जलमयं मुमोचारावभीषणम् ॥ ७
निर्ययौ तच्च तरसा कल्लोलैरिव वारिधिः । भक्षयामास देवेशः तदस्त्रमपि भीषणम् ॥ ८
ब्रह्मणोऽस्त्रं पुनः कोपादत्यजद्भीमनिस्वनम् । निर्ययौ तदस्त्रं महता रवेणापूरयद्दिशः ॥ ९
विभिन्नं बहुधा चैतच्चतुर्मुखस्तथा तदा । प्रापाशु निकटं तस्य विवृतास्यं महाजवात् ॥ १०
तदैतद्भीषणं देवं स्मृत्वाशु मनसा गुहम् । चकार च महाघोरं हृदये पूर्ववत्क्रुधा ॥ ११
एवमस्त्रेषु सर्वेषु भक्षितेषु च दानवः । नारायणास्त्रं विधिवत् सर्वसंहार कारकम् ॥ १२
सर्वाशापूरकं शब्दैर्निराशानाहवे रिपून् । कुर्वन्मुमोच देवेशे क्वचिदव्याहतं रणे ॥ १३
एतदस्त्रं तदात्यन्तं भासयत्सकला दिशः । कल्पान्तघनसंराव भीषणं बहुरूपवत् ॥ १४
त्वरयाच महत्याच सविघ्नश्चामरेशितुः । गच्छद्देवपतिश्शीघ्रं गर्जयन् सिंहवत्क्रुधा ॥ १५
निनिन्दे बलवान् देवं गुहं ध्यायन्निजान्तरे । तादृशं वीर्यमश्रायं दृष्ट्वा दैत्यवरस्तदा ॥ १६
कोऽयं विधिर्हरिर्वास्यात् उताहो भगवान् हरः । दिव्यानां पुरतस्तस्ये क्रोधास्त्राणां महाबलः ॥ १७
असौ तु भक्षयामास वीर्यं धैर्यमहोऽस्य किम् । एवमाश्चर्यमापायं भयकंपित विग्रहः ॥ १८
असुराश्च ततो भीतास्सर्वे ते योद्धुमागताः । ततोऽन्तरिक्षगा देवा वीक्ष्यास्यात्यद्भुतं बलम् ॥ १९
महदाश्चर्यसंयुक्ता प्रोचुर्ब्रह्माणमाशु ते । किमेतावद्बलं धैर्यं वीर्यमस्य वद प्रभो ॥ २०
मादृतानसम्भूरैवान् संशयाविष्टमानसान् । शिवाश्रितेषु सर्वेषु प्रथमोऽयं शिवप्रियः ॥ २१
संपादितप्रसादश्च शिवस्यामिततेजसः । हन्तुमण्डानि सर्वाणि कोविदोऽयं क्षणाद्बली ॥ २२
माहृशो बलवान् विष्णुचक्रं मुक्तं तदाहवे । गणात्तस्मादपि वरः कुमारं तस्य दानवाः ॥ २३
किमशक्यं महादेवकुमारासक्तचेतसाम् । पवित्रीकृतलोकानां पूज्यानांच सुरासुरैः ॥ २४
एवमुक्तास्तु ते देवा ब्रह्मणात्यादरेणच । ध्यायन्तो हृदयांभोजे कुमारं पुष्करस्रजम् ॥ २५
आनन्दाश्रुपरीताक्षास्सर्वे कण्टकिततयवः । इतोऽपि बलमस्याशु भूपालकन्दप्रसादतः ॥ २६
एवमाशीः प्रयुक्त्या ते वीक्षणाय स्थिताः दृशाः । अयासुरस्तु जेतव्यः केनोपायेनवाभ्ययम् ॥ २७
त्रिशूलमेनं सुमहत्प्रशान्तं बलशालिनम् । जयिष्यति रणे भीमं द्रावयिष्यति देवपम् ॥ २८
इति सञ्चिन्त्य तरसा ज्ञात्वा पाशुपतं महत् । कृत्वातु मानसीं पूजां शिवायाथासुरेश्वरः ॥ २९
अस्त्रमेव महाघोरं महासंहारकारकम् । तदस्त्रं निर्ययौ श्रीमान् प्रलयोऽण्डं महारवैः ॥ ३०
पूर्वमसर्वसंहारपरदृष्टाट्टहासवत् । नानाविधानि सर्पाणिमहूतगणान्बहून् ॥ ३१
तथायुधानि घोराणि ज्वलन्ति सुबहून्यपि । उद्गिरद्भीषयल्लोकान् सर्वान् भूताधिपानपि ॥ ३२
वेगेन महताप्याशु द्रावयद्भूतसन्ततिम् । वीक्ष्य तास्सोऽञ्जलिपुटो स्वके मूर्ध्नि महाभयात् ॥ ३३
अथाभयं दण्डपुषोऽयं शिवं ध्यायन् हृदंबुजे । पञ्चाक्षरं महामन्त्रं जपन्मनसाशु च ॥ ३४
उन्मीलय नयने घोषयन् दण्डरेतिच । भयशंभो महादेव शिवशंकर रक्षमाम् ॥ ३५
इति कंपितसर्वाङ्गस्तदा तस्ये महाबलः । तदस्त्रमाकृष्य शंभोरसमीपं सहसा गतम् ॥ ३६

तमस्पृष्ट्वा महाघोरं तदानीं ब्राह्मणोत्तमाः । द्विजाः— किमर्थं सूत भगवन् अवध्यं यत्र कुत्र चित् ॥
दैवतानांच सर्वेषामस्त्राणामधिराजकम् । अस्त्रं पाशुपतं घोरमस्पृष्ट्वैनं दुरासदम् ॥ ३८
गतं तद्ब्रूहि सर्वज्ञ शंभोरभ्याशमाशया । इति पृष्टस्तु तानाह सूतस्सर्वार्थसारवित् ॥ ३९
शंभुनास्य यदा दत्तमस्त्रं पाशुपतं महत् । तदासुरं महादेवः प्राह वाचमसुं खलु ॥ ४०
स्पृश्यस्वैतद्यदा यस्मिन् कस्मिंश्चिच्च निरायुधे । आयास्यतीदमभ्याशं ममैवाशु तदाऽसुर ॥ ४१
ततएव गतं शंभोर्निकटं भूसुरा इदम् ॥ ४२
वृथाकृतं पाशुपतं तदस्त्रं वीक्ष्यातिशूर प्रमुखाश्च दैत्याः ।
विभ्युर्भृशं भग्नमनोरथास्ते हाहेति सर्वे भयकंपिताङ्गाः ॥ ४३
भूतानि कोलाहलमाशु चक्रुः पुष्पाणि देवाश्च ववर्षुरुच्चैः ।
तदातिशूरस्तु रथं विमुच्य भुजंगतो दंडधरः प्रतस्थे ॥ ४४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकांडे अष्टमोऽध्यायः ॥

---

॥ अथ नवमोऽध्यायः ॥

तारकपुत्रस्य असुरेन्द्रनाम्नः वीरबाहुना वधः ॥

अथातिशूरः कोपेन महता प्रज्वलन्निव । सभ्राम्य पाणिना दण्डमुत्प्लुत्योत्प्लुत्य वेगतः ॥ १
इतस्ततश्च धावन् हि तानि तानि विचिन्तयन् । आयुधानि च चूर्णानि वृथाभूतानि दैत्यराट् ॥ २
भीषयन् सुमहारावैस्तर्जयन्भूतनायकम् । आगत्य सहसाऽभ्याश ताडयामास वक्षसि ॥ ३
तमेव दण्डं संगृह्य भूतसेनाधिपः क्रुधा । ताडयित्वा जयेनैत मारयामास भूसुराः ॥ ४
मृतं तमेनं संवीक्ष्य भूतसेनास्तदा भृशम् । कोलाहलं महाभीमं चक्रुस्सर्वास्समुद्यत ॥ ५
निरगादसुरेन्द्रोऽथ वर्षं वर्षं शरं शरम् । महता शब्द जालेन घनाघन इव क्षणात् ॥ ६
तमायान्त महावेगात् दृष्ट्वा भूतानि दुद्रुवुः । प्रतस्थेऽभिमुखं तस्य कनककरुहसा महान् ॥ ७
नदन् भृशं महावेगात् अक्षारवा वलमस्य च । तस्य वर्मणि दैत्यस्तु तदैक शरमत्यजत् ॥ ८
करेण ताडयित्वा तद्रथमारुह्य तस्य सः । हत्वा सन्ताड्य सूतंच दन्तैर्दष्ट्वाऽस्य शिञ्जिनीम् ॥ ९
भञ्जयामास कोपेन शतशः कनकस्तदा । निवृत्तः पुनरेवाशु महान्तं गिरिमुद्वहन् ॥ १०
भ्रामयित्वा सुमहता वेगेनापि नुनोद च । असुरस्तु समादाय धनुरन्यन्महोन्नतम् ॥ ११
अष्टभिर्निशितैश्शस्त्रैश्चिच्छेदैनं धराधरम् । पुनस्सहस्रशास्त्राणि प्रेरयित्वा महाबलः ॥ १२
कनकं पातयामास भूमावसुरनायकः । पतितेऽस्मिंस्तदा दैत्यः परमाकृष्य सारथिम् ॥ १३
द्रावयत्प्रागतश्शीघ्रं भूतसेनास्समन्ततः । तमायान्तं महाघोरं उन्मत्तो नाम दैवतः ॥ १४
महान्तं गिरिमुत्पाट्य पाणिना पर्वतोपमः । भर्त्सयन्सुमहारावैः करी केसरिणं यथा ॥ १५
पातयित्वाऽस्य तुरगानमारयदसौ बलः । ततोऽसुरस्तमुद्वीक्ष्य महता कोपवह्निना ॥ १६
बाणान् बहून् विमुच्यैनं स्रवद्रुधिरमेदुरम् । अकरोन्मोहवशगममरेशं क्षणादयम् ॥ १७
निर्ययौ सहसा मत्तस्तदोन्मत्तमवेक्ष्य तम् । स्फुरत्स्फुलिङ्गनयनो गृहीत्वा पर्वतं पृथुम् ॥ १८

॥ अथ दशमोऽध्यायः ॥

वीरबाहुना शूरपद्मस्य रथसारथि हननम् ॥

मृतं तं वीक्ष्य देवास्तु चक्रुः कोलाहलारवान् । पलायनपरा दैत्या जितास्सर्वे महाभयात् ॥ १
ततः प्रतस्थे शूराणां शूरपद्मावरो महान् । मृतावनुजपुत्रौ तावतिशूरासुरेन्द्रयोः ॥ २
पलायनञ्च दैत्यानां दशदिक्षु समीक्ष्य सः । प्रेरयित्वा रथं शीघ्रात् धनुरादाय निष्ठुरम् ॥ ३
अटन्यां योजयित्वा ज्यां कृतलस्तकमुष्टिकः । अताडयत्करेणैतामकरोत् सा तु निस्स्वनम् ॥ ४
किमर्थं ताडयस्येनां मामलंघितमरिस्थितिम् । तव मृषादिदं सद्यो दैत्याधम सत्यतः ॥ ५
शंसतीवैवमसुरनायकं शिञ्जिनी तदा । श्रुत्वा संरावमस्यास्तु सर्वे लोकाश्च कंपिरे । ६
ब्रह्मविष्णुसुरेन्द्राद्या देवा विभ्युस्तदाश्रयन् । पलायनं श्रुतान्यासु भूतान्याश्माभिरक्षकम् ॥ ७
अभ्यूयतायमरावो जनैराह्लादशाब्दकम् । स्थित्वा तु सेनापतयस्तदा सर्वे महौजसः ॥ ८
तरुभिर्गिरिभिश्शस्त्रैरन्यैर्नानाविधायुधैः । युयुधुस्तत्प्रधानं क्षिप्त्वा क्षिप्त्वा महाजवैः ॥ ९
चकार रेणूं स्तान्सर्वान् दशभिर्निशितैश्शरैः । पुनश्च तैस्सहस्रैश्च कोटिभिर्दैत्यनायकः ॥ १०
मुक्त्वा शरान् बहून् भूयो बिभेदैषां वपूंष्ययम् । तच्छरैः पीडिताः केचित् स्थिताः खिन्ना भृशं तदा ॥ ११
अलुठन् पतिता महामपरे रुग्ण मानसाः । पलायन्त महोच्छ्वासाः परे सेनाधिपा द्विजाः ॥ १२
एवं पराभवं सर्वे नानारूपेण संगताः । ततस्सर्वेऽप्युद्धय रुस्वं समागत्य रणस्थलम् ॥ १३
वपुर्भिर्निशितान् बाणान् असुरेशो महाबलाः । भूयोऽभिरम्भाश्वैषां शरान् भित्वा महासुरः ॥ १४
सहस्रकोटि संख्याकैश्शरैश्चापरथानपि । धूळीकृत्य महाकोपाद्ववर्ष निशितान् शरान् ॥ १५
वक्षांसि लक्षीकृत्यैषां शतसाहस्र संख्यकान् । ते सर्वे मुमुहुस्सद्यस्तच्छरैर्भिन्नवक्षसः ॥ १६
प्रस्थितो वीरमार्ताण्डः पृषत्कान् सुबहूनयम् । वीरेषु नवसु श्रीमान्मुमोचासुरनायके । १७
छित्वा तानाशुगैर्दैत्यो पञ्चभिस्तुमहारवः । सन्दधे निशिते तस्य सहस्राणि शरान् पुनः ॥ १८
सुराधिपस्तान् चिच्छेद सहस्रैरेव रंहसा । ततस्तु शूरपद्मायं सहस्रैर्निशितैश्शरैः ॥ १९
शरान् धनुश्च तूणीरमस्य छित्वा ह्यपातयत् । मुक्त्वा पुनस्सहस्राणि पातयामास तं क्षितौ ॥ २०
अपाययौ महावीरो वीरराक्षस संज्ञकः । अत्यजच्च सहस्राणि शस्त्राण्यस्मिन्महासुरे । २१
सहस्रैश्छिन्नतस्य छित्वा तान्येव कार्मुकम् । पतित्वाथ महाकोपाद्वीरस्तस्यरथे महान् ॥ २२
खड्गेन चापं चिच्छेद भग्नखड्गस्तदा स्वयम् । मुष्ट्या प्रहर्तुं शूरं तं यततेस्म पुनश्च सः ॥ २३
निरायुधत्वात्तं शूरो गृहीत्वा पादमुत्क्रुधा । ऊर्ध्वमुत्क्षेपयामास यावदण्डं महासुरः ॥ २४
अण्डस्य भित्याभिहतो पतितोऽयं महीतले । मोहमाप तदात्यन्तं हणकायस्सुरेश्वरः ॥ २५
अथवीरमहेन्द्रोऽपि प्रस्थितस्सायकान् बहून् । मुमोच दैत्यनाथेऽस्मिन् महाकोलाहलारवः ॥ २६
तान् शरैश्छिन्नतसोऽपि बहुभिर्दानवेश्वरः । मिथोरथं भ्रामयित्वा युयुधाते शरैरुभौ ॥ २७
ततः कोपवशाच्छूरः त्रिंशच्छस्त्राणि पादयोः । चत्वारिंशदुरोमध्ये त्रिंशद्बाहुयुगे तथा ॥ २८
युयोज तस्य सहसा पतितस्सोऽपि मोहितः । वीरधीरः प्रतस्थेऽथ वर्षन् बाणान् बहून् क्षणात् ॥ २९
तच्छरान् कार्मुकं दैत्यस्सहस्रैश्च बभञ्ज । रथंच सप्तभिश्शस्त्रैः पातयामास भूतले ॥ ३०
ताड़ितं तु यदा देवो दण्डमादाय चागतः । चतुर्भिस्तं चकाराशैर्द्विधा दैत्येश्वरस्तदा ॥ ३१
पुनश्चतुर्दशास्त्राणि मुक्त्वा तं क्रोडबाहुषु । पातयामास भूपृष्ठे पर्वतं हरिवत्क्रुधा ॥ ३२
ततस्समागतो वीरमाहेश्वर समाह्वयः । शक्तिं मुमोद धनुषा शक्यो जेतुं न चेत्ययम् ॥ ३३

प्राप धूलिस्वरूपं तु पतिते भुवि दीप्यतः । संयोज्य कालसूर्यास्त्रं मुमोचास्मिन्पुनः क्रुधा ॥ ३
कुण्ठिताग्रे निपतिते तेऽपि नूनं सुरेशितुः । ततः कोपेन महता वीरबाहुर्बलान्वितः ॥ ४
वारुणेन्द्रास्त्रमन्त्राभ्यां शस्त्रे संयोज्य रंहसा । प्रास्यजत्तेऽपि तत्रैव तथा भूमिं गते द्विजाः ॥ ५
मायासुरास्त्रं महता मन्युना प्राहिणोत्सुरः । प्राप्य ते तं महावीरं लज्जयैव भुवं गते ॥ ६
नारायणस्य शस्त्रेण मात्रमस्त्रं महाक्रुधा । विससर्ज महाभीमे सर्वसंहारकारणे ॥ ७
स्फुरद्वह्निकणे तेऽपि प्रतिहत्यास्य वक्षसि । एतदस्य बलं सर्वं दृष्ट्वाश्चर्यं गतास्तदा ॥ ८
तमाह वीक्ष्य शूरोऽयं स्फुरद्गम्भीरनिस्स्वनम् । मक्षिका पद्मयावत्र वह्निं यद्वत्तथैवते ॥ ९
दिव्यान्यस्त्राण्यपि मयि निरस्तास्त्रे गतानि हि । पुरैव संहरेयं त्वां तव वीर्यं बलं तथा ॥ १०
अस्त्राणामपि माहात्म्यं वीक्षितुं स्थितवानहम् । तदिदानीं क्षणेनैव संहरिष्याम्यसंशयम् ॥ ११
इत्युक्तमात्रेण तदा वीरबाहुः क्रुधा ज्वलन् । अस्त्रं पाशुपतं घोरं असुरेशे युयोज हि ॥ १२
विनिर्ययौ महावेगादुद्गिरत्प्रणवादिकम् । वीक्ष्यैतच्छूरपद्मापि तदेवास्त्रं तदास्यजत् ॥ १३
भृशं युयुधतुस्तेऽपि महारावविभीषणे । प्रहत्यौ प्रापतुर्भूयो निकटं भूभृतः क्षणात् ॥ १४
एतावद्धि बलं तेऽद्य पश्य वीर्यं ममाधुना । एवमुक्त्वा ववर्षैनं शूरपद्मा बहून् शरान् ॥ १५
अवर्षत्सोऽपि भूयांसि शस्त्राण्यस्मिन्महत्क्रुधा । दैत्यः पञ्चदशास्त्रैस्तद्धनुरच्छिनदुत्क्रुधा ॥ १६
मुमोच शक्तिमतुलां दैत्ये देवगणाधिपः । सा धूलिरभवत्तस्य पतिता दृढवक्षसि ॥ १७
ततस्तस्मिन्सुरे दैत्यो दण्डं तु समचिक्षिपत् । तदानीमेव देवोऽस्मिन् स्वकं दण्डं नुनोद हि ॥ १८
तं धूलीकृत्य सहसा दैत्यदण्डो महाजवात् । अमोघस्सुरेशानमुरोमध्ये पतत् क्षणात् ॥ १९
मोहितं सारथिर्वीक्ष्य विशालस्त्वरया रथम् । मूर्च्छापनोदनायायं समपवर्तयदुज्ज्वलम् ॥ २०
शूरो ववर्ष भूतेषु भीतेष्वथ शरान्बहून् । पलायितानि भूतानि तदानीं दश दिक्ष्वपि ॥ २१
ततः प्रतस्थे भगवान् गुहोऽमितपराक्रमः । पलायनंच भूतानां तत्पतीनाञ्च मूर्च्छनाम् ॥ २२
ज्ञात्वानेकार्ककोट्याभं प्रेरयित्वा रथं वरम् । प्राह तं वचनं शूरः प्रेक्ष्य सर्वेश्वरेश्वरः ॥ २३
स्कन्दोऽयमिति मत्वा तु सर्वदैत्यविनाशकः । तव सेनाधिपास्सर्वे मृताः खलु महौजसः ॥ २४
तदिदानीं निवर्तेत बालचेष्टान्वितो भवान् । दुर्बलं तारकं क्रौञ्चमिव मत्वा सुरेश्वर ॥ २५
इहागतोऽसि बालत्वात् न जानासि बलं मम । सुराणां विष्णुमुख्यानां यथाभीतिर्भवेद्भृशम् ॥ २६
जयिष्यामि तथैवैनं त्वामद्य रणमध्यगम् । प्राहत षण्मुखो वाचं स्मयमानमुखाम्बुजः ॥ २७
ग्रहीष्यामि बलं तेऽद्य दुरात्मन्न सुराधम । उक्तवानसि मां बाल इतीत्थं मन्दमूढधीः ॥ २८
दग्धुमण्डानि सर्वेशल्लाशाग्निकणोऽप्यलम् । इति स्कन्दवचः श्रुत्वा शूरपद्मातिमन्युना ॥ २९
जग्राह धनुरत्यन्तमुन्नतं पाणिना तदा । बभासे तन्मधुद्वेष्टुस्त्रिविक्रम शरीरवत् ॥ ३०
योजयित्वा गुणेनैतत् ज्याघातं कृतवान् तदा । तदा णोऽभवत्सप्तसागरोद्वेलनादवत् ॥ ३१
अग्रहीत् कार्मुकं स्कन्दः परमत्यन्तमुन्नतम् । ऊर्ध्वताण्डवसंहर्तृहरपादवदुज्ज्वलम् ॥ ३२
स्फुरत्तामारवोऽण्डानां सर्वेषांच यथा भवेत् । तथा गुणध्वनिं चक्रे देवसेनाधिपो भृशम् ॥ ३३
ततश्शूरश्शरैस्तस्य रथं देहं महाक्रुधा । सर्वान् लोकानिमानाशु छादयामास निष्ठुरः ॥ ३४
ववर्ष तस्मिन् स्कन्दोऽपि शरान् छित्वास्य देवपः । छादयित्वा नभोमध्यं घर्मकालपयोदवत् ॥ ३५
ततः कोपेन शूरस्तु शरान् दशसहस्रकान् । छित्वा तत्सर्वमस्यायं मुमोचहि सुरेश्वरे ॥ ३६

धृत्वीहत्य गुहस्तस्य सायकान् सायकैस्स्वकैः । प्रयुयोज भुजद्वन्द्वे चतुर्दशाथ तानिषून् ॥ ३७
ते तत्र पतितास्सद्यः कुण्ठीभावमिताः खलु । वीक्ष्य तत्पार्वतीसूनुस्सहस्रैर्निशितैश्शरैः ॥ ३८
चिच्छेद धनुरस्येदं पविनेव गिरिं हरिः । शक्तिं तत्याज शूरोऽपि ब्रह्मविष्ण्वोर्विभीषणाम् ॥ ३९
अच्छिनत्तामपि गुहश्चतुर्दशशरैः क्रुधा । ततस्ससंभ्रमं शूरो धनुरन्यत्समुद्यतम् ॥ ४०
गृहीत्वा युयुधेऽन्योन्यं मुक्त्वा मुक्त्वा शरान्बहून् । चकार सप्तमुखाथाय भुजे वेधस्य दानवः ॥ ४१
कोलाहलं महाभीमं सिंहवत् रणकोविदः । रेणुत्वमगमंस्तेषु पतनादत्र शीघ्रतः ॥ ४२
ततः कोपेन महता षण्मुखोऽस्य धनुर्वरम् । रथं तुरगान्सर्वान् क्रमेणैव महाबलः ॥ ४३
चिच्छेद निशितैरस्त्रैश्चतुर्दशभिरप्रधान् । सहस्रैरपरैस्तद्वत्सचतुर्दशलक्षकैः ॥ ४४
ततश्शूरोऽत्यजच्छूलं निशितं सुमहारवः । भित्वा चतुर्भिस्तच्चाय सप्तभिश्च शरैः पुनः ॥ ४५
अच्छिनद्धासितच्छत्रं शूरस्य सुरनायकः । शरेणैकेन मकुटं उच्छिद्य चतुर्भिस्तथा ॥ ४६
भूषणानि च सर्वाणि ततान भुवि शीघ्रतः । ततो विलज्जः सुमहद्ग्लानवदाननोऽसुरः ॥
गतहस्त बलस्तस्थौ दरिद्र इव भूसुरः ॥ ४७

दृष्ट्वा दानवमीदृशं दितिसुतास्सर्वेऽपि दैत्येश्वरं संगत्याशु रणस्थलं शितशरैर्नानाविधैरायुधैः ।
चक्रुर्वह्निभुवा सहातिचपला जन्यं तु मान्येन ते षष्ठेऽलानादसुपूरिताण्डकुहरा संभूय भूमीसुराः ॥ ४८

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे एकादशोऽध्यायः ॥

---

॥ अथ द्वादशोऽध्यायः ॥

शूरः हतसेनः निरायुधो पुरं पलायितः ॥

अथांबिकातनूजोऽसौ धनुः संभ्राम्य मन्युना । सन्दधे दैत्यसेनासु सर्वसंहारकारकम् ॥ १
तद्भासा भासयद्भास्वत्कोटिनिर्मलमण्डलम् (जम्) । प्राप्य दैत्यबलं शीघ्रं बहुधा मारयत्तदा ॥ २
छिन्नकर्णकराः केचित् भिन्नपादगलाः परे । छिन्ननासाक्षिचरणा हतकेशानिजांबराः ॥ ३
मृतिमापुस्तदा दैत्यास्सर्वे ते तत्र संगताः । चूर्णीकृतास्तथानेन रथा अपि समुद्यताः ॥ ४
हस्तिनोऽश्वाश्च सर्वे ते निधनं प्रापिताः क्षणात् । छित्वा छत्राणि सर्वाणि रूप्यभाजनवत्तदा ॥ ५
भक्तुं यमस्य दैत्यांस्तान् पातयान महीतले । तोमरध्वजशस्त्राणि विशीर्णानि समन्ततः ॥ ६
नृत्यत्कबन्धनिबिडं पिशाचकुलसंकुलम् । रक्तपरिभ्रमत्कङ्क काकश्येन वृकाकुलम् ॥ ७
पपे तदाऽभवत् क्षिप्रात् तदायोधनभूतलम् । तादृशं तं महद्यत्नं दृष्ट्वा विष्णोस्सुदर्शनम् ॥ ८
स्तुतिं चकार महतीं कंपमान निजात्मकम् । दत्वा तदैवमसुरनाय स्कन्दकरं द्विजाः ॥ ९
शूरपद्मा तथादैत्यान्मृतान्वीक्ष्य षण्मुखः । अहो पाशुपतास्त्रा वा शापोषा शक्तिरस्त्विम् ॥ १०
सहसा दानवास्सर्वे मृताः खलु महौजसः । इत्यमस्यद्भुतेनायं तस्थौ केवल एव सः ॥ ११
ततस्ससंभ्रमं मोघाद्ब्रह्मास्त्रं सुरेश्वरे । महाघोरं महारावं योजयामास दैत्यराट् ॥ १२
विनिर्गतं तदस्त्रं तु ब्रह्मणो रूपमास्थितम् । बहुधा प्राप तरसा भीषणग्रहसन्निधिम् ॥ १३
शक्तिरेतद्ग्रहस्याशु चास्याऽभक्षयत् किल । मुमोच वैष्णवं भूयस्तस्मिन्नस्त्रं तदा रुषा ॥ १४
महता शब्दजालेन भासंयत्सकलं जगत् । नानाविष्णु स्वरूपेण प्रापितश्च स तं क्षणात् ॥ १५

सुदर्शनमपि सा शक्तिर्जग्राह दितिजन्मनः । अथातिमन्युना दूरे गर्जयन् धर्मसेधयत् ॥ १६
बाल्याज्जासिन् पशुपतेरजमजस्त्रुतावरे । सन्नाहमयदिग्दृश्यर्या मानारूपेण निर्गतम् ॥ १७
अनेकपञ्चगान्तवान् पिशाचभूतराक्षसान् विसर्जयद्विभीषयद्गुदान्तिकं तदा यथौ ।
करं मदायं सादरं गुहोऽग्रहीन्महीसुरा वृथा गतेषु तेष्वयं विचारसक्तचेतसा ॥ १८
मयायमधुनाप्यलं विधातुमतुलं रणम् समर्थ इति चिन्तयन् स्थितोऽस्य बलमद्भुतम् ।
समाह्यवचनं गुहो निरीक्ष्य सुमहाग्रहः पुराभुतं त्वयाऽमरां नरस्तजेति न मयोदितम् ॥ १९
मृताद्रि लक्षयाह्निनी क्षणेन दितिजन्मनां गतं हि मकुटादिकं तथासुराधमाधुना ।
इतः परं सुरांस्त्यजेमेयोदिता मतिस्तव मतिस्त्वधुनाथका यत्रासुराधमक्षणात् ॥ २०
यथाच तारकोमृतं हतो मया, तथानुजं स्तथैव हन्तुमागतोऽस्म्यहं भवन्तमीदृशाम् ।
कृपावशान्मयाधुना न शक्तिरत्र त्यजे ततोऽसुराधमे त्वयि ध्रुवं त्यजेयमाहवे ॥ २१
त्यादि वचनं श्रुत्वा शूरपद्मा गुहस्य सः । मनसा चिन्तयामास महितांच गिरां प्रियाम् ॥ २२
यविल्लाय बलं मेऽद्य मृतसेनो निरायुधः । अहमित्युक्तवानेव मामेनमधिनश्वरम् ॥ २३
यत्र देवान् क्षणादेव मतिर्मे काचनेरिता । नमुक्ता वयथा शक्तिरितिचेत्स्वग्रधीम् किल ॥ २४
किंतु जानाति बालोऽयं बलमेत्युपतंमम । एतांदृशोदर्येको नशामयो जेतुमाहवे । २५
युक्ता बालस्य चेष्टेयं विवेकरहितस्य च । सोऽहमद्य पुरं गत्वा यथ यावद्बलं मम ॥ २६
आनयित्वा रणं कृत्वा जयिष्याम्येनमुद्धतम् । इत्थं विचिन्त्य मनसा शूरपद्मा तदा क्षणात् ॥ २७
विवेश भवनं रम्यं मायया स्वपुरोगतः । गतमेवं गुहस्तस्या हन्तुं तं कोविदोऽप्ययम् ॥ २८
परीक्षितुं मतिं तस्य तूष्णीमेव स्थितो द्विजाः । अथ विष्णुमुखा देवा गुहं प्राप्य सुरेश्वरम् ॥ २९
बद्धाञ्जलिपुटा मौलौ प्रणम्य परया मुदा । स्तुत्वा स्तोत्रयुतैर्नैनं साक्षात् ब्रह्मस्वरूपिणम् ॥ ३०
कोऽयं तव पुरः स्वामिन् कथलं तेति मानसम् । हन्तुमेनं दुरात्मानं नहि भारस्तवासुरम् ॥ ३१
लीलयैव स्थितोऽसि त्वं सम्पत्या । नूनं जगत्प्रभो । एवमुक्त्वा स्थितानाह वचनं प्रश्रयान्वितान् ॥ ३२
आयास्यति यदा वैधास्तोऽयं भूयो महासुरः तदैनं संहरिष्यामि दुरात्मानमसंशयम् ॥ ३३
इत्युक्तमात्रेण तदा चक्रुः कोलाहलं सुराः । तदानीं मिलिताः सर्वे सह सेनाधिपैर्बलैः ॥ ३४
नवसंख्याधिकालक्षवीराः विगतमोहकाः । तदा भूतानि सर्वाणि कार्तिकेयस्य सन्निधौ ॥ ३५
अथ सेनाधिपास्सर्वे भूतैस्साकं गुहाज्ञया । लुण्ठनाय पुरस्याशु विनिर्गत्यासुरस्य ते ॥ ३६
महाकोलाहलारावबधिरीकृतदिङ्मुखाः । द्वारमासाद्य सहसा प्राकारस्य महाबलाः ॥ ३७
विभिद्युस्तुमहाटोपं रवास्सर्वे तदैकदा । प्रतस्थेऽथ महारावं श्रुत्वा द्वारस्थो महासुरः ॥ ३८
अतिघोरहतिस्थाताश्चतुरंगबलैस्सह । भूतासुरगणामन्योन्यं बभूव तुमुलं रणम् ॥ ३९
पराभवं गता दैत्यास्सर्वे ते तत्र संगताः । संगृह्य मुसलं घोरमतिघोरस्तदापरम् ॥ ४०
संप्राप्य प्राणिनः भूतान्यद्रावयद्युयं क्रुधा । दृष्ट्वैतविरूपाच्छीघ्रं मेघो नाम महाबलः ॥ ४१
महान्तं गिरिमुत्पाट्य तुनोदास्मिन्महाक्रुधा । चूर्णीचकार तं दैत्यो मुसलेन महाबलः ॥ ४२
ततो वीरः करेणैनं ताडयामास वक्षसि । असुरस्तु महाकोपात् दृष्ट्वा समधरं पुनः ॥ ४३
अताडयदुरोमध्ये मुसलेन तमाहवे । अथोत्प्लुत्य महावेगात् स्फुरद्वह्निकपेक्षणः ॥ ४४
करेणास्फाल्य मेघस्तं कपोले ताडयत्क्रुधा । अथभूतानि सर्वाणि गोपुरं पुरभूषणम् ॥ ४५

सहस्रयोजनोच्छ्रायमुत्पाट्य सुमहारवैः । चिक्षिपुर्जलमध्येऽब्धौ मन्दरं देवताइव ॥ ४६
यदवश्च तदा दैत्यास्तत्रापतन् द्विजाः । समुद्रश्च ततोल्लोलैराहिलिंगे पुरीमिमाम् ॥ ४७
पुनश्च तानि भूतानि सालमुत्तरदिक्स्थितम् । पातयित्वा पुरस्यास्य कञ्चुकाकारवत् स्थितम् ॥ ४८
निर्गळं प्रविश्याशु हत्वा दैत्यान् बहून् द्रुतान् । भित्वा गृहाणि भूयांसि लुण्ठयित्वा यथेच्छया ॥ ४९
पुनर्निवृत्य तरसा स्कन्दमापुस्सुरेश्वरम् । ततः प्रतस्थे भगवान् हेमकूटपुरं प्रति ॥ ५०
सह सैन्यैस्स्वकैस्सर्वैर्महाकोलाहलारवैः । ववर्षुर्देवताः वृष्टिं पौष्पीं ताः परया मुदा ॥ ५१
देवदुन्दुभयो नेदुर्जितांबुधिमहारवाः । आतोद्यानिव सर्वाणि नादितानि तदा भृशम् ॥ ५२
पेठुर्गुणगणानस्य वन्दिनस्स्फुटवाङ्मयाः । पठद्भिस्स्वचरास्तोत्रं भक्तसंघैर्गृहैः क्षणात् ॥ ५३
हेमकूटपुरस्थं स भवनं प्राप्य सुन्दरम् । आरुह्य तरसा रम्यं सिंहासनमनुत्तमम् ॥ ५४
विनियोज्य ततस्सेनाः स्वगृहेभ्यः महाप्रभान् । महाविष्णुमुखैर्देवैः स्तूयमानपदांबुजः ॥ ५५
कृतनानोपचारेण तस्थौ तत्र वरासने । ततो रविस्समुद्वीक्ष्य वियत्स्थो जयमीशितुः ॥ ५६
अपमीरनुरागेण निजं प्रेक्ष्य लसत्तनुः । वरुणस्य दिशासक्तिमेत्यास्यन्तं ततः क्षणात् ॥ ५७
गाढसिजांशुकोबोधि ममज्ज किल भूसुराः । शूरपद्मा स्त्रिया सार्कं पद्मकोमळसंज्ञया ॥ ५८
रणाय चिन्तयन्भूयो विनिद्रस्सुतरां स्थितः । भानुकोपस्तदा श्रुत्वा पितुरागमनं क्षणात् ॥ ५९
जयाय कुर्वन् मन्त्रस्य पुरश्चरणमुज्वलम् । युद्धशिक्षां तथा मायां संभ्रमेण पुनस्त्यजन् ॥ ६०
शूरमाप रजन्यां तं खिद्यमानसमाहवे । व्यजिज्ञपत् स्ववृत्तान्तं वृत्तं पूर्वे दिने तदा ॥ ६१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकांडे द्वादशोऽध्यायः ॥

---

॥ अथ त्रयोदशोऽध्यायः ॥

मायादेव्या भानुकोपाय सम्मोहनास्त्र प्रदानम् ॥

जेतुं सकलसेनाभिस्सर्वैर्व्यायुधैरहम् । स्थितो यात्रां प्रतीक्ष्यैनमविज्ञाप्य गतो भवान् ॥ १
बालेन युद्धं कृत्वा त्वं जयापजययोः फलम् । किमाप्तोऽपिच का कीर्तिरपकीर्तिर्भवेत् ध्रुवम् ॥ २
गत्वाहं प्रातरेवैनं वधिष्यामि त्वयाखिला । श्रुत्वा दूतमुखेनैनं तुष्टो भव पितस्ततः ॥ ३
मजितारेः पुनर्मास्तु संगमो मे त्वया रणे । त्वद्राज्यमपि दैत्येश सत्यमुक्तं मयान्यथा ॥ ४
एवं सुतवचः श्रुत्वा बालोऽयं मां विनाऽऽहवे । जेतुं वैनाप्यशक्योऽतः पुत्रावं दूतमागतम् ॥ ५
सेनाश्च जित्वा तस्याशु समागच्छ महाशया । एवमुक्त्वा विसृज्याथ शूरपद्मा निजात्मजम् ॥ ६
शोषं संप्राप्य मनसा वसतिस्म निजे गृहे । समागत्य जयेनाथ भानुकोपं विनिर्गतम् ॥ ७
दूताः प्रोचुः पुरस्यास्य लुण्टनं गोपुरस्यच । क्षेपणं भूतसेनाभिर्मर्दनं वेदमनां तथा ॥ ८
मतिघोरस्य मरणं प्राकारस्यापि पातनम् । शूरागमनमात्रेण हतान्येतानि भूसुराः ॥ ९
श्रुत्वा दूतमुखेनैतद्भानुकोपः क्रुधा ज्वलन् । यथापूर्वमिदं सर्वं कुर्वित्युक्त्वा मयं पुनः ॥ १०
प्रेरयित्वा महाकायं तद्दिक् संरक्षणाय च । द्रुतं माहस्रवाहिन्या सेनया सह दीप्ततः ॥ ११
विवेश स्वगृहं दैत्यो मायामय विभूषितम् । निर्मायच यथापूर्वं तासर्वं दैत्यवर्धकिः ॥ १२
विवेशात्मीयभवनं शक्रायेव क्षणादयम् । ससैनस्समहाकायस्तमगाथ महाबलः ॥ १३

महद्दीप प्रभाजाल विनोदित तमःस्थितिः । प्रातोदये पुनर्भानोर्भानुकोपस्त्वरायुतः ॥ १४
समुत्थाय समाप्याशु दिनकर्म विशेषतः । ससार मायां तपसि वर्तमानां पितामहीम् ॥ १५
आगतां तामयं वीक्ष्य नत्वा स्तुत्वा स्तवैर्भृशम् । वीरबाहुकृतं भङ्गमुक्त्वा पप्रच्छ शेमुषीम् ॥ १६
प्राहसा ,विनयात्प्रश्नमसुरेशं तदाऽसुरी । ब्रह्म विष्णुमुखा देवा भवद्भिर्बाधिताभृशम् ॥ १७
तदिदानीं कथं वास्यात्युष्माकं विजयोऽसुर ।। एवं भूयो . वदन्तीं तां मायामाह तदाऽसुरः ॥ १८
अद्य देहि जयायास्य वीरबाहोर्भमायुधम् । यथा तथास्तु भावित्वं माये पौत्रसुखोद्यते ॥ १९
इति पृष्टा पुनर्माया भानुकोपेन धीमता । इदमस्त्रं महामोहं करिष्यति रिपून्रणे ॥ २०
भवितात्र जयोऽस्मिन् दिवसे दैत्य सत्यतः । उक्त्वैवं तत्प्रदत्त्वाशु मायाख्या निर्गतासुरी ॥ २१
लब्ध्वा मायास्त्रमतुलं तुष्टया परमयाऽसुरः । शरासनं गृहीत्वाशु शरपूर्णे निषङ्गवान् ॥ २२
कवचं वज्रसंकाशं बध्वा स्वाङ्गे महाबलः । वाय्वग्नियमचन्द्रार्कं ब्रह्मविष्णु शरान्वरान् ॥ २३
तथा पशुपतेरस्त्रमस्त्रराजेश्वरेश्वरम् । समादाय रथैरश्वैर्गजैरपि समुद्यतैः ॥ २४
प्रत्येकं दशसाहस्र वाहिनी गणितैर्वरैः । तथा विंशत्सहस्रेण वाहिन्या गणितैर्बलैः ॥ २५
प्रतस्थे सुमहारावैर्भानुकोपो रणोत्सुकः । निर्घोषैरपि मेघदिक्संवृतानैश्च रेणुभिः ॥ २६
वपुर्पुंडरीकराश्वागाः पीत्वा मेघजलं करैः । पर्वते मेघमार्गेऽपि सूर्यमार्गे तुरङ्गमाः ॥ २७
कृत्वा पदानि भूयांसि निर्गता जवशालिनः । चक्रध्वनिरभूत्तद्रथानां महतां तदा ॥ २८
वह्निनेत्रास्तथा दैत्याः कृष्णाङ्गाः पीतकेशिनः । निर्गता वह्नवक्त्रशीघ्रात् महाकोलाहलारवैः ॥ २९
रथहस्त्यश्वदैत्यौघैर्ध्वजैश्छायाविधायिभिः । लसद्रत्नप्रभाजालछत्रचामरकैरपि ॥ ३०
संबाधगामिभिर्जातं तिमिरावृतमुत्कटम् । स्फुरदायुधभूपास्य रत्नधुत्या निवारितम् ॥ ३१
एवं नाना प्रभावेन भानुकोपः क्षणाद्दृशम् । विनिर्गत्य समापार्यं सालद्वारं बलैस्सह ॥ ३२
सहस्राश्वमुखं दूतं वीक्ष्य वाचं ततोऽब्रवीत् । वीरबाहमिदं दूत मद्वचो ज्ञापयाधुना ॥ ३३
आयास्यामि रणे जेतुं त्वामहं क्षणमात्रतः । तस्य निर्गच्छ शीघ्रेण सज्जितस्सहसेनया ॥ ३४
एवमुक्त्वा विसृष्टोऽथ दूतो दैत्येन शीघ्रतः । गत्वा वीरस्य निकटं उक्तवानेवमेव तत् ॥ ३५
श्रुत्वातु वीरबाहुस्स तथेत्युक्त्वा विसृज्य च । ततः प्राप्य गुह वीरो भ्रातृभिस्सहसाबली ॥ ३६
प्रणम्य परया भक्त्या तस्थौ बद्धकराञ्जलिः । स्कन्दस्तमब्रवीद्वीक्ष्य सर्वभूतान्तरालयः ॥ ३७
आयास्यं दुरात्माद्य त्वया युद्धाय मन्युना । सहस्रवाहिनीभूतैर्गत्वा सेनाधिपैर्भवान् ॥ ३८
वीरैरणविधैर्लक्षैः करोतु रणमाशया । मोहयिष्यति युष्मानत्स मुक्त्वा मायास्त्रमाहवे ॥ ३९
अस्त्रं पुरापमस्यामि मच्छक्तिः परमाऽव्यया । एवमुक्त्वा महासेनः प्रेषयामास तं प्रभुः ॥ ४०
प्रतस्थे वीरबाहुश्च नत्वा स्कन्द रथेस्थितः । भूतानामारवैस्तद्वाद्यानां पटहैरपि ॥ ४१
सर्वेऽपि सहसा जग्मुयुद्धमापुर्महाबलाः । ततो देवेषु ते दैत्या युयुजुस्त्वायुधान्यपि ॥ ४२
तत्रासेनासु भूतानां सुमहाराव भीषणाः । तदा बहूनि भूतानि निपेतुर्भूतले भृशम् ॥ ४३
छिन्नपाण्यङ्घ्रिदोर्बन्ध प्रपदादीनि भूसुराः । ततो भूतानि सर्वाणि संभूय दितिसंभवान् ॥ ४४
ताडयित्वा शिरोमध्ये पीडयित्वा परान्वरान् । उत्पाट्यान्यान्महावीरान् पिण्डीकृत्य तथापरान् ॥ ४५
गृहीत्वा पाणिना पादानास्फाल्य च महीतले । भ्रामयित्वेतरानब्धौ बहून् क्षिप्त्वा रणमारयन् ॥ ४६
मायापुरवरानेतान् त्रिपुराणामिवेश्वरः । चक्रुस्सर्वान् वृथाभूतान् परेषां क्षणमात्रतः ॥ ४७
नीलानि कानि भूतानि धूतपक्षायुधानि च । पदाक्षाणि परान् दैत्यान् हत्वा रौरवैस्तदा ॥ ४८

नारायणा इव तदा विरेजुर्दैत्य घातिनः । भ्रामयित्वा गजान् कानि दन्तानुत्पाट्य रंहसा ॥ ४९
आदिक्रोडस्य दंष्ट्रां तां इव रेजुर्हरात्मजाः । करिवक्त्राणि भूयांसि गिरिरूपेषु शत्रुषु ॥ ५०
गमनागमनाभ्यांच क्रौञ्चे तारकवत्प्रभुः । जित्वा विष्णुमुखान्पूर्वं भूतचक्रैस्ततो हताः ॥ ५१
केचिद्दैत्या महाभीमा जलन्धर इव स्वयम् । शूले प्रोता परे दैत्या भैरवेणान्धको यथा ॥ ५२
एवं नानाप्रकारेण बहवो दानवा हताः । परेषु केषु वीराश्च ववर्षुर्निशितान् शरान् ॥ ५३
निरर्गाद्भानुकोपोऽथ दृष्ट्वा सर्व मिदं क्षणात् । मुक्त्वा रथाश्वान्वेगेन भूत सेनामभिक्रुधा ॥ ५४
मारोपित गुणं चापं कृत्वा संरावमन्धरम् । निर्गतो वीरबाहुश्च सहसा रणकोविदः ॥ ५५
तावुभौ रणशार्दूलौ परस्पर जयेच्छया । ववर्षतुर्महाकोपौ सायकान्निशितान्बहून् ॥ ५६
मिथस्तयोश्शरास्तेऽपि युयुधुर्भोगिनो यथा । भंगमापुस्तदान्योन्यं हतास्सर्वे क्षणादमी ॥ ५७
उभौ देवासुरौ शीघ्राद्देवलोकमवापतुः । क्षणेन ब्रह्मणो लोकं विष्णुलोकं ततः पुनः ॥ ५८
समुद्रांश्च दिशस्तद्वच्चक्रवाळगिरिं परम् । युयुधाते रथस्थौ तौ महाकोलाहलारवौ ॥ ५९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे त्रयोदशोऽध्यायः ॥

---

॥ अथ चतुर्दशोऽध्यायः ॥

वीरबाहु भानुकोपाभ्यां युगपत्पाशुपतास्त्र प्रयोगः ॥

भानुकोपः पुनः कोपाद्वीरवक्षसि निष्ठुरे । योजयामास निशितान् सहस्राणि शरांस्ततः ॥ १
वीरस्तु सायकैस्तीक्ष्णैस्तत्सूताश्वरथान् द्रुतम् । सहस्रैरच्छिनत्सोऽप्यच्छिज्ज्वालात्रिभीषणः ॥ २
यावदारुह्य दैत्योऽसौ रथमन्य समुद्यतम् । प्रयोक्तुमैच्छच्छिशितानिपूनसिन्महाक्रुधा ॥ ३
तावद्देव सहस्राणि नुनोदैतद्भुजान्तरे । चक्रुर्भूतानि संरावान् दृष्ट्वा तद्रणमण्डले ॥ ४
ततः कोपेन दैत्योऽपि तत्याजास्त्रं तु वारुणम् । आप्लुताशेष दिग्लोक सप्तसागर भीषणम् ॥ ५
महता निनदेनापि भूतान्यप्लावयद्भृशम् । भूतसेनाधिपानेतद्वीपयन्निर्गते क्षणात् ॥ ६
वीरबाहुस्समीक्ष्यैतदाग्नेयं सन्दधे महान् । क्वचित्स्फुलिंगजालेन ज्वाला मालाभिरन्यतः ॥ ७
तथा परत्र धूमेन महता निनदेन च । प्रकाशेनापि संव्याप्तं स्फुरद्ब्रह्माण्ड मुज्ज्वलम् ॥ ८
चलत्तारमहं शुष्यद्रुमादि सरिदब्धिवत् । धूलीकृत समस्ताद्रि प्रस्फुटद्भूमि मण्डलम् ॥ ९
प्रलिहद्ब्रह्मणोऽस्त्रं तदस्त्रमापाद्दुरान्तिकम् । दृष्ट्वाससंभ्रमं दैत्यः वायव्यं तदात्यजत् ॥ १०
कम्पयित्वा समुद्रं तदचलांश्चालयद्भृशम् । कल्पान्तकालवायुप्रेक्ष्यं महासंताप भीषणम् ॥ ११
महाभीकृतवत्स्यत्रं प्रपेदे देवसन्निधिम् । सार्पमस्त्रं युयोजाथ वीरबाहुर्महाक्रुधा ॥ १२
विनिर्गत्य जयेनैतदनन्तैर्बहुभिर्वृतम् । भस्मीकुर्वन्महोच्छ्वासैर्विविधैर्विषपर्णैरपि ॥ १३
विभ्यमेतत्फणाभिश्च वह्नीभिरभिमण्डितम् । माप्लुत्य सूर्यमाकाशं जग्या वायव्यमायुरम् ॥ १४
निकषापात्त्वरं दीप्तं सर्वलोक भयानकम् । भानुकोपस्समीक्ष्यैतद्गारुडास्त्रं प्रयुक्तवान् ॥ १५
अनन्त तार्क्ष्यं रूपेण गरुत्मतेन पर्वतान् । क्षेपपक्षानेत्यन्तं वार्पासमिव मारुतः ॥ १६
विलोड्य सरितां नाथांस्तुण्डेन ग्रासयत्क्षणीन् । त्यमागतमभ्यासं वीक्ष्य तदेवनायकः ॥ १७
नृपकाञ्चं महाघोरं महाबल पराक्रमम् । महता मन्युना भीमं सर्वसंत्रासकारकम् ॥ १८

चिक्षेप तस्मिन् विपिने विधिशो बलवत्तरः । रणद्घर्घरिका मालामध्यघण्टा महारवम् ॥ १९
किङ्किणिकिङ्किणिकाराव बधरीकृत दिङ्मुखम् । शृङ्गोत्क्षिप्तातितुङ्गाद्रि राजराजि विराजितम् ॥ २०
निजपादखुराग्रैश्चविलिखद्भूतलं भृशम् । वीज्यमान महावाल वायुनुन्नाविघसत्तकम् ॥ २१
नदद्गम्भीर शब्दौघ पूरिताण्ड महाबिलम् । गृहीत्वा पतगेन्द्राक्षं उच्छ्वासेन विभीषणम् ॥ २२
भीषयत्सकलान् दैत्यान् कंपयत्सकलं जगत् । आयादभ्याशमाश्वेतस्तज्जयदैत्य नायकम् ॥ २३
ततस्ससंभ्रमं दैत्यो याम्यं ब्राह्मं युयोज हि । निर्गते बहुभिस्तेतु तत्तद्रूपैर्विभीषणैः ॥ २४
महाध्वनिपरे घोरे वीक्ष्य तद्भयकंपिते । प्रणश्यच्च यथामार्गं निर्गते भूसुरास्तदा ॥ २५
ततोऽस्यजन्महाघोरं अस्त्रं नारायणस्य सः । निर्गत्य तन्महावेगाद्बहुनारायणाकृति ॥ २६
धृतपञ्चायुधं भीमं वृषभास्त्रेणचायुधत् । दृष्ट्वा तद्वीरभद्रास्त्रं वीरबाहुर्महाजवम् ॥ २७
तुनोद तन्महाघोरं महाभीमं महाबलम् । अनन्तकोटिभिर्वीरभद्रैरपि परीवृतम् ॥ २८
भित्वा नारायणस्यास्त्रं आगच्छद्वीक्ष्य दैत्यराट् । अस्त्रं पाशुपतं घोरं अस्त्रराजं महाभयात् ॥ २९
तत्याज विधिना देवे सर्वशक्ति निबर्हणम् । तदानीमेव वीरोऽपि सन्दधे तन्महाबलः ॥ ३०
विनिर्गतं पशुपतेरस्त्रमस्त्रेश्वरेश्वरम् । कल्पान्त चण्डसंरम्भ महाभीषण मारुतम् ॥ ३१
संवृताशेषदिग्भागघनधूमसमाकुलम् । क्वचित्संवर्तसंसक्तमहावैश्वानरोज्ज्वलम् ॥ ३२
हालाहलादिगरळकोलाहलविभीषणम् । महाकल्प समुद्भूत सागरानुद्गमात्क्वचित् ॥ ३३
तथा प्रळयकालोत्थ पुष्कलावर्तकांबुदम् । अनन्ताद्यष्ट नागेन्द्रान् त्सर्वसंत्रासकारणान् ॥ ३४
भूतप्रेतपिशाचांश्च विसृजत्क्वचित्तथा । परश्शतावृत विश्वान्धतमसं चातिभीषणम् ॥ ३५
महासंमोहकृत्सद्यन्महामायाभिरेव च । दंष्ट्राकराळवदन महामृत्यु गणावृतम् ॥ ३६
महाभीममहाशस्त्रसंघसंवृतपार्श्वभु । अधिरूढाखुवाहेन्द्र गणराज गणाकुलम् ॥ ३७
महापर्वत सङ्काश नारसिंह गणैरपि । महाघोर महाराव शरभौघैस्तथा क्वचित् ॥ ३८
अश्ववाहन समारूढैर्महाभीमैर्महाबलैः । अञ्जनाद्रि समाकार पिशाचगण संस्थितैः ॥ ३९
मत्स्यमानजगज्जालमहाभूतस्थितैरपि । वाहिनीकृतयाळीशैर्महावृषभवाहनैः ॥ ४०
अधिरूढमहावेग तुरंगौघैर्महाबलैः । ऋक्षवक्त्रमहाभीमशार्दूलगणवाहनैः ॥ ४१
तथा सिंहसमूहस्थैर्गजराजस्थितैरपि । बृहत्पर्वततीकाशरथौघ वस्थितैस्तथा ॥ ४२
नानारत्नप्रभाजालव्योमयानस्थितैरपि । एवमादिभिरन्यैश्च वृतं रुद्रगणैः परैः ॥ ४३
विद्याधरशिवाख्येन्द्र यादःपन्नगपादिनाम् । अक्षैस्तत्तत्स्वरूपैश्च बहुभिः परितोवृतम् ॥ ४४
खड्गखट्वांगमुसलभिण्डिपालभुसुण्डकैः । परिघैस्तोमरैश्चशैर्मुद्गरैश्च शतघ्निभिः ॥ ४५
प्रासाद्यैस्सायकैश्चक्रैर्दुर्भेद्यशक्तिभिस्तथा । चापैर्गदाभिः पाशैश्च कुठारैस्त्रिशिखैरपि ॥ ४६
असिभिः करवालैश्च ह्लादिनीभिस्समन्ततः । एवमादिभिरस्त्रैश्च भीषणैर्भीषणं भृशम् ॥ ४७
इत्थं निर्गतयोर्जातमस्त्रयोस्तुमुलं रणम् । त्रुट्यन्महाग्रहोदन्वद्घनुनाहुरनिस्वनम् ॥ ४८
दह्यमानमहीव्योम पतन्मेरु महारवम् । तप्यमानमहर्क्षाग्निस्फुरद्ब्रह्माण्डभित्तिच ॥ ४९
धूळीकृताद्रिनिकररथिस्यन्दनभीषणम् । निपतद्दन्तदिङ्नाग कुलं क्षोण्यां महाभयात् ॥ ५०
प्रशमत्पवनाश्वासवैश्वानरमहाजवम् । कृतपाताळके पञ्चलुठद्दिग्याधिवच्छपम् ॥ ५१
सन्तापीकृतसर्वातिमहाहाकारैर्विभीषणम् । भयाविष्टमहालक्ष्मीश्रिपद्विष्णु भयप्रदम् ॥ ५२

आश्लिष्य मन्मथं रत्या कृताक्रन्दनरोदनम् । ऋषिपत्नीभिरन्याभिरालिङ्गितनिजप्रियम् ॥ ५३
एवं पशुपतेरासीदस्त्रयोस्तु यदारणम् । तदा ममार सेनापि वह्नीकल्पान्त कालवत् ॥ ५४
श्रुत्वा तयोर्महारावं महासंमोहकारकम् । भीषणं भीषणस्यापि मोहकं मोहकस्यच ॥ ५५
मृत्योर्मृत्युप्रदं घोरं सर्वभूतभयावहम् । विभ्युरश्शूरपुरस्थाये दैत्यास्सर्वेपि पापिनः ५६
किमेतदिति शूरोऽपि विचार्यच विचार्यच । प्रेषयामास दूतांश्च ज्ञातुं तच्छीघ्रगामिनः ॥ ५७
तदानीमेव तत्रत्यं ज्ञात्वा सर्वंहि केचन । दूतास्समागताश्शीघ्रं ऊचुरेतद्यथाक्रमम् ॥ ५८
प्राह शूरस्तु तान् दूतान् दूतवृध्या स्थितोऽस्म्यहम् । वीरमेनमविज्ञाय वीरोऽयं नितरामिति ॥ ५९
एवं पाशुपतास्त्रे ते युद्धं कृत्वाति भीषणम् । आवयोश्च रणेनाशु लोकानां प्रळयो भवेत् ॥ ६०
इति ज्ञात्वा निवर्तेते प्रयोक्तारावुभावपि । दृष्ट्वा तद्देवतास्सर्वास्तुष्टिमापुस्तदा भृशम् ॥ ६१
निरगाद्भानुकोपोऽपि मृतसेनो नभःस्थलम् । छन्नवेषस्स्थितस्तत्र मायया दुर्मतिर्द्विजाः ॥ ६२
ततो भूतानि सर्वाणि वीरास्सेनाधिपा अपि । निश्चिस्य गमनं तस्य चक्रुः कोलाहलारवान् ॥ ६३
भीत्येव भानुरसहसा पयोधिं मुक्तांबरोस्ताद्रिशिरस्स्थितांशः ।
प्रापास्य दैत्यस्य नभस्स्थल स्थितिं ज्ञात्वा शनैः स्रस्तकरो द्विजेन्द्राः । ६४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे चतुर्दशोऽध्यायः ॥

---

॥ अथ पञ्चदशोऽध्यायः ॥

भानुकोपस्य सम्मोहास्त्रेण भूतसैन्यान् सम्मोह्य समुद्रे निपातनम् श्रीस्कन्द दासया तेषां रक्षणञ्च ॥

अथ सर्वेऽपि ते वीरा भूतैस्सेनाधिपैस्सह । परेद्युरागमिष्यामः प्रणम्य स्कन्दमव्ययम् ॥ १
इति निश्चित संयाश्च यदा स्वस्थास्थिता भृशम् । तदाऽसुरो विचार्यासौ गतश्चेदयशो भवेत् ॥ २
मायां समातनोद्देवं सर्वव्यामोहकारिणीम् । कल्पान्तघनजीमूतमहावायुमहारवम् ॥ ३
आगत्य सर्वानाच्छाद्य मोहयामास वैधवान् । क्षेपयामास भूतानि सहवीरैर्महाबलैः ॥ ४
स्वाकूपारार्णवमध्येघो यथा सेनाधिपैरपि । ततस्तु भानुकोपोऽसौ समायात् पितरं क्षणात् ॥ ५
हत्वा रिपूनहं शीघ्रात् क्षिप्त्वाप्याथागतोऽपिच । अन्येद्युरेव तं बाले जित्वा प्रह्लादिर्दैवतान् ॥ ६
कारावेश्मनितान् सर्वान् पातयिष्याम्यसंशयम् । इति पुत्रवचः श्रुत्वा प्रीत्या परमयाऽसुरः ॥ ७
आघ्रायच शिरस्तस्य समालिंग्यात्मजं तदा । संस्थाप्य निकटे प्रादात् कोटीरादि विभूषणम् ॥ ८
उवाच प्रियवचश्चापं तथा नागतयासरे । जितस्त्वं दैवतास्सर्वाः कुरु पुत्र महाशया ॥ ९
इत्थाप्यनुजस्तूरेण भानुकोपोऽविशत् गृहम् । ततस्सुरास्समाविश्यैतां वीराणां विपदं तदा ॥ १०
समाजग्मुर्गुहाभ्याशं ज्ञापितुं खिन्नमानसाः । तत्पूर्वमेव तत्सर्वमुक्तवाञ्छारदो गुहम् ॥ ११
अथ शक्तिं गृहीत्वायं मोचयित्वा तदस्त्रतः । आनयैनान्महावीरान् इत्यस्यं सन्दधे गुहः ॥ १२
विनिर्गता सहस्रार्ककोटितेजोविजृंभणी । गाढान्धकार रात्रौ सा द्योतद्वह्निकणभीषणा ॥ १३
भ्रमन्महाचलेन्द्रौघपाताभारवमावहा । भ्रुकुटीकुटिलभ्राद्धैर्यसंघसमाकुला ॥ १४
तथा प्रळयमेघामधूमजालावृता क्वचित् । क्वचिद्गांतु समग्रशालामालाहिकणसंवृता ॥ १५
रणाकुलिशासंघायमहामेघावृता क्वचित् । अनुधावद्भिरग्यपर्वमयायुमरतयताम् ॥ १६

इन्द्रयादस्पतिब्रह्मविष्णुश्रवसामपि । अक्षैरन्यादृशैश्चापि कृतस्तोत्रैस्समागता ॥ १७
दृष्ट्वा तामतुलां शक्तिं स्कन्दस्यामिततेजसः । प्रतस्थेऽथ समुद्रोऽसौ भयकंपितविग्रहः ॥ १८
न कृतं चेदिदं कर्म मया रक्षाधुना च माम् । स्तुत्वा स्तववरैस्तां च प्रणनाम पुनः पुनः ॥ १९
तमाश्वास्य च सा शक्तिराप मध्यं महाजवात् । तदानीमेव ते सर्वे त्यक्तमोहास्सुराधिपाः ॥ २०
शक्तिस्तुतिं गुहस्यैते सर्वलोकसुपावनीम् । विलोक्य तादृशीं शक्तिं ,स्तुत्वा तुष्टया मुदा ॥ २१
वयं सुरक्षिताः पूर्वं मायायास्तारकस्य हि । इदानीमपि तत्किं ते ,करवाम च निष्क्रयम् ॥ २२
इति तेषां वचः श्रुत्वा शक्तिस्सा प्राह तांस्तदा । मायास्त्रं संहरस्व त्वं वीरानानय मेऽन्तिकम् ॥ २३
विसृष्टैवं गुहेनाशु यूयमागच्छतेश्वरम् । गच्छामि तत्पुनस्स्कन्दमित्युक्त्वा देवमाप सा ॥ २४
वीरबाहुस्ततो वीरान् ससेनेशानवेक्ष्य सः । दृश्यते हि पुरो दैत्यनगरं क्रोशमात्रतः ॥ २५
तत्र तिष्ठत्यसौ सर्वानस्मान् दैत्यस्तु मायया । मोहयामास तं हन्तुं नगरं ,तस्य शीघ्रतः ॥ २६
लुण्ठयित्वा दहिष्यामस्स्वयमेष्यति सोऽसुरः । तदानीं तं हनिष्यामि भानुकोपमहं रणे ॥ २७
अन्यथाहं मरिष्यामि सचापोऽग्नौ पतन्ध्रुवम् । प्राहैवं तदिमे वीराः प्रतिश्रुत्यामुना सह ॥ २८
पश्चिमां दिशमापुस्ते पुरः कोलाहलारवाः । प्रतिहाराधिपस्तत्र प्राकारस्य महासुरः ॥ २९
मायापुत्रो महादीपराजिराजितसन्निधिः । वरसिंहासनारूढो व्याघ्रवक्त्राह्वयोऽपरः ॥ ३०
चतुरंगबलेनापि महता सेवितो द्विजाः । श्रुत्वा तदा रवान् सर्वैः प्रतस्थे स्वबलैरयम् ॥ ३१
ततस्समभवद्भूतैरसुराणां महद्रणम् । पर्वतैः पादपैरस्त्रैः पाषाणैरपि निष्ठुरैः ॥ ३२
मृताश्च बहवो दैत्यास्तदानीं रुधिराप्लुताः । व्याघ्रवक्त्रस्ततः कोपाच्छूलमादाय रंहसा ॥ ३३
निर्गत्य पर्वतान्वृक्षांश्छित्वा चक्रे महारवम् । निर्जगाम ततस्सिंहो भूतसेनाधिपो महान् ॥ ३४
प्रळयांबुदनिर्घोषमहारावविभीषणः । ताडयामास तं दैत्यश्शूलेनैव दुरात्मवान् ॥ ३५
योजयामास शूलेन स्वेन वैरं सुरोऽप्यथ । एवं परस्पराघातात् भिन्नं शूलं तयोर्द्वयोः ॥ ३६
मल्लयुद्धेन घोरेण मारयामास तं सुरः । तस्मिन्मृते तदा देवाः पुष्पाणि ववृषुस्तदा ॥ ३७
प्राप तोषं तदाऽत्यर्थं वीरबाहुर्महाबलः । ततो भूतानि सर्वाणि भित्वा प्राकारमुन्नतम् ॥ ३८
उत्पाट्य गोपुरं रम्यं नुनुदुस्तत्पुरे जवात् । पतनादस्य तत्रत्या बहवो मृतिमापिरे ॥ ३९
प्रविश्य वीरा वीथीषु दैत्यान् हत्वा बहूंस्तदा । गोपुराणि विमानानि वेश्मानि सुबहून्यपि ॥ ४०
बभूवुस्सुमहारवा भूतसंघैरभिद्रुधा । चतुरंगबलं चाक्षैर्जघ्नुस्सर्वे महौजसः ॥ ४१
वीरबाहुस्ततोऽग्नेश्च वायोरस्त्रे उभे स्मरन् । योजयामास कोपेन पुरस्य दहनोद्यतः ॥ ४२
दग्धुमग्निस्तदा भीत्या पुरीं तस्य विचिन्तयन् । पत्तने मत्प्रयोक्तासौ किं ममेति कचित्तताम् ॥ ४३
ददाह सुमहारावैर्महाज्वालावलीवृतः । वियद्भ्रमत् ग्रहर्क्षौघ महासन्तापकारकः ॥ ४४
इतस्ततश्च धावद्भिराकुलो वीक्षितोऽसुरैः । दूतैस्तच्छूरपद्मानं प्राप्य दूताः क्षणात्तदा ॥ ४५
शृणु स्वामिन्महादैत्य भानुकोपो यदागतः । तदाऽग्नौ ते सुरास्सर्वे मोहितास्सरितां पतौ ॥ ४६
मोचितास्स्कन्द शक्त्या तु मोहात्प्राप्य पुरं तव । मारयित्वा बहून् दैत्यान् व्याघ्रवक्त्रमुखान् क्षणात् ॥ ४७
अदहन् पत्तनं रम्यं दशसाहस्रयोजनम् । दहते चाधुना वह्निं महाद्युति दैत्यप ॥ ४८
एवमूचुस्ततश्शूरो निशम्यैषां वचोऽसुरः । कोपं चकार सहसा शूरपद्मा महासुरः ॥ ४९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे पञ्चदशोऽध्यायः ॥

॥ अथ षोडशोऽध्याय. ॥

हिरण्येन स्वपितर शूर प्रति श्रीस्कन्द शरण व्रजेत्युपदेश ॥

अथ कोपेन महता मेघराजान् महोन्नतान् । आनयन् प्रळयायाग्रे प्रेषयामास शीघ्रत. ॥ १
तथेति प्रस्थिता व्योम्नि महाप्रळय रूपिण. । यद्यय शमितोऽस्माभिर्वीरोऽनस्संहरेत्तदा ॥ २
सचेत् कारागृहे शूर पातयिष्यत्यसंशयम् । ततोऽपि परमस्माक वीरेण निधन हितम् ॥ ३
इति निश्चित्य ते मेघा गर्जन्तोदकबिन्दुभि । शमयन्तिस्म त वह्निं क्षणेनैव महारवा ॥ ४
विलोक्य वीरबाहुस्तान् मायाया दैत्यचोदिता । महाप्रळयमेघा किमितिडोळाममनास्स्थित ॥ ५
समागत्य ऋषिदर्शीघ्रात् नारदस्तपतावर । शूरेण प्रेरितास्त्वेते बोधयित्वा महाघना ॥ ६
महासवर्तं सप्तमास्सन्त मुञ्चन्त्यपोभिशम् । तैनास्त्र वडवाग्नेस्त्व त्यजेत्युक्त्वा जगाम स ॥ ७
सतु निश्चित्य मनसा वाडवास्त्र तदाऽत्यजत् । तदस्त्र तज्जलान्याशु पपौ ज्वालावलीवृतम् ॥ ८
अपतश्च तदा मेघा महा निस्सारतो द्विजा । गुहनामस्तवेनाथ बलास्त्वधिगता पुन ॥ ९
ततोऽस्मिन् देवतास्सर्वा विकीर्य कुसुमानिच । अनृत्यस्सुमहाराधा प्रीत्या परमया तदा ॥ १०
तदेतत्सर्वमाकर्ण्य शूरो दूतमुखात्क्रुधा । रथमानय युद्धाय दूतेत्येन तदाऽवदत् ॥ ११
श्रुत्वा शूरस्य वचन महाकोपेन निर्गतम् । पुत्रस्तस्य हिरण्याख्यो महामायी महाबल ॥ १२
पाताळरक्षकस्त्वाह त्रिशिरा पटुबुद्धिमान् । उत्थाय पितर प्राह प्रणम्य शिरसानत ॥ १३
बाधया देवताना हि संपदायु क्षयोभवेत् । इदानीमागतस्तेषु कृपयासु हरात्मज ॥ १४
ब्रह्मविष्ण्वोर्जयस्तेऽपि वरायत्तोस्य सत्यत । तादृग्बलप्रदातुश्च स्वबलस्यापहारणे ॥ १५
कोऽतिभारो महेशस्य वद तातासुरेश्वर । नतुलघ्या महेशस्य पराज्ञा हितकांक्षिभि ॥ १६
उल्लङ्घितशिवाज्ञा ये गतास्ते दुर्गति किल । किं नजानासि दैत्येश त्रैपुराणा महौजसाम् ॥ १७
गजान्धकजलन्धराणा भगभण्डाख्ययोरपि । व्याघ्रादीनाच दैत्याना मदनान्तकयोरपि ॥ १८
मत्स्यकूर्मवराहाणा नृसिंहस्य महौजस । वामनस्य हरेस्तद्वद्दक्षस्यापि द्विजन्मन ॥ १९
पञ्चरावणपूर्वाणा शिवाज्ञाल्यघनेनहि । बभूव मरण तेषा महाघोरतया पुरा ॥ २०
गङ्गागर्वापहरण काळकूटस्य भक्षणम् । इन्द्रदोर्भञ्जनचापि कृन्तन शिरसो विधे ॥ २१
रक्तपान हरेस्तद्वत्परोदीक्षणविधारणम् । अजीर्णरूपापस्मार पादाध धरण तथा ॥ २२
एवमादीनि कार्याणि महादेवकृतानिहि । तत्कुमारेण सद्योद्य तव सत्यमसाम्प्रतम् ॥ २३
माजानासि शिशु चैन महादेवस्वरूपिणम् । विश्वरूपमनुष्यस्य प्रलयकालप्रदेशनम् ॥ २४
लोकस्यैव नजानासि लीलयैतत्कृत पित । आदिमोऽस्यदृशा ता मायापादाद् हरन्हि ॥ २५
समारयत् किल क्रौञ्च तारकच तवानुजम् । तस्मादस्मिन् महातात बालबुद्धि करोतुमा ॥ २६
भर्दीयित महेशस्य जगतस्संरक्षणेच्छया । नाह्यकार्तिकेयादिनामभि परमेश्वर ॥ २७
शिवपत्ने मुनिश्रेष्ठैर्मुदाभिनतया विदु । मायमायोष तनैव या शक्ति प्रविशत पुरा ॥ २८
यदितुत्ताय सा तेन क्रौञ्चीपेदितिविस्मय । वीरबाहौ महावीरे मारुषा हृतदुर्मदम् ॥ २९
यस्य मृत्युभय नास्ति देवादिभ्यो भय तथा । द्राविनो भानुकोपोऽपि येन हन्याऽसुरान् बहून् ॥ ३०
इन्द्रलोके हि मर्दं तेन योद्धु क ईश्वर । इत्युक्तस्तो यदिद्विषद्भः परिश्रेष्ठासुरोऽसुर ॥ ३१
शरण व्रज भगवन्त मुक्तया दैत्याध्यक्षा पुरा । निहति इत्यर्थेन बोधितस्मनसंमदि ॥ ३२

कोपादस्य पुरा वेगान् मुक्त्वा तं प्रणमाधुना । तथा चेत्सुप्रसन्नोऽसौ वरं दत्वा यथेप्सितम् ॥ ३३
सर्वाभिस्सहसेनाभिर्गमिष्यति यथागतम् । एवमादि वचः श्रुत्वा हिरण्यस्यात्मजस्य सः ॥ ३४
प्राह तं मन्युना शूरः स्फुरद्दशनवाससा । किमुच्यतेऽधुना भ्रान्त त्वया पण्डितमानिना ॥ ३५
उच्चैर्वदसि तं शत्रुं बालकं मत्पुरोपि हि । बोधयामास कोवैवं संहरिष्यामि तं वद ॥ ३६
मदैश्वर्यं बलं वीर्यं नित्यत्वमपि सर्वदा । ममानुजस्य मधुभिश्चक्रं स्वकत्वाद्रथद्रणे ॥ ३७
प्रत्यहं दितशुद्धिश्च ब्रह्मणोक्ता सहात्मजैः । इन्द्रादि दैवतास्सर्वा मत्स्यवाहे नियोजिताः ॥ ३८
दैत्यानां कुलनीतिं त्वमज्ञात्वा किञ्चिदुक्तवान् । ईदृशं पुनरुक्तं चेत् त्वां हनिष्याम्यसंशयम् ॥ ३९
एवं शूरवचः श्रुत्वा हिरण्यः खिन्नमानसः । नश्यतोरस्येपमहापथं काले प्राप्ते विनाशके ॥ ४०
यथेष्टमस्य वक्तव्यमिति निश्चित्य सोऽसुरः । क्षमस्व तात मद्वाक्यं शोधनाय समीरितम् ॥ ४१
जित्वाहं सह सेनाभिर्बालं जन्यसमागतम् । आगमिष्यामि तेऽभ्याशं कोभारस्तज्जये वद ॥ ४२
संप्रेरय रणायैनं मामतो जनकाधुना । इत्युक्त्वा शूरपद्मानं प्रणनाम तदात्मजः ॥
भीत्या निशम्य वाक्यं तदेनं प्रेरयत द्विजाः ॥ ४३
ततोऽगमत् संगृह्यमुज्वल प्रभो हिरण्यनामा दितिजन्मनां वरः ।
कृताहवान्तः करणो निजानुजैस्सहस्रसंख्यैस्सहसा विनिर्ययौ ॥ ४४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकांडे षोडशोऽध्यायः ॥

---

॥ अथ सप्तदशोऽध्यायः ॥

शूरकुमारेण हिरण्येन मत्स्यरूपेण समुद्रवासः ॥

विनिर्गतो यदा दैत्यो द्रोणमालाविभूषितः । सहस्रसिंहसंयुक्तसमुन्नतरथे स्थितः ॥ १
सहस्रसंख्यैस्सेनेशैश्चतुरङ्गबलैस्सह । कांक्ष्यमाणपुरस्त्रीभिर्हिरण्याख्यो महासुरः ॥ २
अष्टाभिश्शतसंख्याभिर्वाहिनीनां रथास्तदा । तावत्संख्यास्तथानागामहापर्वतसन्निभाः ॥ ३
सहस्रवाहिनी संख्या द्विशतंच तुरंगमाः । तावत्संख्यासुराश्शूरनिर्जरमुरसादसाऽमुना ॥ ४
तदा भेरीरवोऽप्यासीज्जितांबुधिमहाध्वनिः । आतोद्यानि बहून्येवं ताडितानि समाकुलम् ॥ ५
क्षणेन वीरनिकटं प्राप्यार्थे पत्तनं स्वकम् । विलोक्य निशि कोपेन महताच ज्वलन्निव ॥ ६
चतुर्धाच बलान्याशु विभज्य स महासुरः । सहस्रवाहिनीमानैर्गणितानि पृथक् पृथक् ॥ ७
नियोजयन् चतुर्दिक्षु स्वबलैश्च स्वयं तदा । वीरबाहुं प्रति क्रोधादागतस्समहारयः ॥ ८
वीक्ष्यैनं वीरबाहुश्च कोपमिश्राकुलोऽभवत् । तदार्मी महापुत्रेण नारदेन महर्षिणा ॥ ९
वेदितैतद्बलो धीमान् विभज्य स्वबलान्यपि । चतुर्धा विनियोज्याशु स्वबलैस्साकमुज्वलैः ॥ १०
युयुधे स हिरण्येन महाराव विभीषणः । तदा समभवद्युद्धं भूतानामसुरैर्भृशम् ॥ ११
दैत्यसेनाधिपानांच भूतसेनाधिपैस्तथा । वीरानुजानामनुजैस्सहस्रैर्दितिजन्मनः ॥ १२
मुसलैर्मुद्गरैश्चक्रैर्भिण्डिपालैश्च तोमरैः । असिपट्टिशशूलवज्रशक्तिकुठारकैः ॥ १३
द्रुमपाषाणगिरिभिर्लगुडैर्लोष्टकैरपि । छिन्नपाण्यङ्गुलिपदो भिन्नकूर्पर नासिकाः ॥ १४
हस्तोदमणिबन्धाश्च शकलीभूतदन्तकाः । द्विधाभूतांशशेषाश्च विशीर्णप्रपदाः परे ॥ १५

अथासक्थिकटीवस्तिहृदक्षः कर्णलोचनैः । स्रवद्रुधिरभूयिष्ठैर्भीषणास्सुभृशं परे ॥ १६
एवं मृताश्च बहवो मूर्छामापुर्महाभटाः । वीरबाहुरथागत्य दैत्यान्मुक्त्वा शरान्बहून् ॥ १७
अभारयन्महाकोपात् ज्यास्फाररवभीषणः । तदा नदीमहावेगा रुधिरैस्समजायत ॥ १८
नृत्यद्भिश्च कबन्धैस्तु भयदातीव सास्थली । तदा हिरण्यः कोपेन सहस्रैरयुतैरपि ॥ १९
नियुतैः कोटिभिर्बाणैर्भित्वा भूतानिकानिचित् । मोहयित्वा तथान्यानि द्रावयामास सूसुराः ॥ २०
ततः प्रतस्थे नीलाख्यो भूतसेनाधिपोवरः । महाकोलाहलारावसंपूरितदिगन्तरः ॥ २१
तस्मिन् दैत्यस्तदा कोपात् मुक्तवान् शक्तिमुज्वलाम् । पतनादस्य नीलोऽसौ मोहं प्राप्य क्षणात् पुनः ॥ २२
सालवृक्षं समादाय बभञ्ज रथमासुरम् । ततो रथान्तरं दैत्यस्समारुह्यातिमन्युना ॥ २३
सायकान्निशितांस्तस्य युयोजोरसि शीघ्रतः । भूतेशो गिरिमुत्पाट्य महान्तमभिदानवम् ॥ २४
अनुद्रन्मन्युनातीव महारयेण मीयथन् । अच्छिनत्तं गिरिं दैत्यस्त्रिभिरेव शरैस्तदा ॥ २५
अभिक्रम्य ततो देवस्सदैत्यं रथमुत्क्षिपन् । क्षेपयामास वेगेन महता पर्वतोपमम् ॥ २६
साकं तेनाथमाकाशं गत्वा भूयो निवृत्यच । रथमन्यं समारोढुं यद्वागाद्दानवो जवात् ॥ २७
तत्रैव भीमस्तं प्राप्य ताडयामास वक्षसि । ततोऽसुरो गृहीत्वैनमक्षिपत्पाणिना रुषा ॥ २८
ससंभ्रममथागत्य भूत सेनाधिपो महान् । पादेन ताडयित्वैनं चकाराराथमुत्थणम् ॥ २९
पतितं व्योमतो मह्यां ज्ञात्वैनं दानवेश्वरम् । पपातास्यो परिजयात् नीलः कोलाहलारवैः ॥ ३०
स्रवद्रुधिरवक्त्रोऽसौ तदा मूर्छामवाप्यच । निवृत्तमूर्छस्सहसा योद्धुं नीलेन दैत्यराट् ॥ ३१
ससार स्वाकृतिं काश्चिन्मायी मायामयीं द्विजाः । तत्रैव निर्गतस्सद्यो हिरण्याभोऽद्भुतासुरः ॥ ३२
अयुधत्तेन देवेन महाराव विभीषणः । तमेनं ताडयामास नीलोमिथ्यासुरं भृशम् ॥ ३३
दण्डेन पृथुना मूर्ध्नि महता मन्युना तदा । प्राप्तमोह इवायं तु पतित्वा भूतले क्षणात् ॥ ३४
पुनरेत्य नभोमध्यमकरोत्सिंहवद्रवान् । आगतेनाथ नीलेन युद्धं कृत्वातिदारुणम् ॥ ३५
क्षणेन पृथिवीं प्राप कृतकोलाहलारवः । आगत्य तत्र नीलोपि तमेनं युयुधे रुषा ॥ ३६
युध्यन्निव मृषा दैत्यस्समुद्रमनयत्सुरम् । द्वीपात् द्वीपं वनादन्यद्वनं चैवातिभीषणम् ॥ ३७
पर्वतात्पर्वतपरं कन्दरात्कन्दरं महत् । लोकालोकान्तरं नीलमानयित्वा महाबलम् ॥ ३८
अकरोत् खिन्नमनसं भ्रामयित्वा पुनः पुनः । तदा शूरात्मजो दैत्यो हिरण्यः प्राप्तचेतनः ॥ ३९
मायामयेन दैत्येन साकं तमयुधत् द्विजाः । अधिष्ठाय रथं चान्यमग्रेरक्तं महत् क्रुधा ॥ ४०
तुतोद नीलं दैत्योसौ महाबलपराक्रमम् । मुमोह सहसा नीलो स्रवद्रुधिरविप्लुतः ॥ ४१
मोहिते वीरबाहुस्तु ज्ञात्वा तं भृशकोपतः । विज्ञाय मायां दैत्यस्य विशालाक्षं तदात्यजत् ॥ ४२
त्यक्तमायासुरो दैत्यस्तस्थे केवल एवसः । तस्मिंस्तदा वीरबाहौ सहस्राणि शरानयम् ॥ ४३
सन्दधे सहसा वीरे गर्जन्रवमहारवम् । पतित्वा तदुरोमध्ये कुण्ठीभावं गताश्च ते ॥ ४४
ततः कोपेन महता वीरबाहुश्शितैश्शरैः । ध्वजचक्रध्वजचापानि चिच्छेदास्य क्षणादयम् ॥ ४५
चापान्तरं यदा दैत्यो जग्राह सहसाबली । छित्वा तदा हिरण्यस्य कार्मुकं शरधिं शरान् ॥ ४६
रथं ससूतं भूपृष्ठे सहस्रैश्च ततान सः । बिभेद वक्षस्सुमहत् पुनः क्रुद्धदरोरयम् ॥ ४७
रथमन्यं समारोढुं प्रवृत्ते दानवेश्वरे । रथं तं सहसा छित्वा बहुभिस्सायकैरसुरः ॥ ४८
बभञ्जान्यान् रथान् सर्वांस्तत्र तत्रस्थितान् पुनः । एवमेव हिरण्योऽसौ चिन्तामाप तदा भृशम् ॥ ४९
विनष्टमायुधं सर्वं मदीयं बलमप्यहो । संहरिष्यत्ययं दैत्यान् स्कन्दद्वार सुरानपि ॥ ५०

मत्पिता शूरपद्मासौ बहुपुत्रानजीजनत् । तेषु पिण्डप्रदानाय यदि कश्चित् स्थितोऽस्तिचेत् ॥ ५१
तदा यशो जगत्यस्मिन्नन्यथा त्वयशो भवेत् । तस्मात्पिण्डप्रदानाय मया स्थातव्यमस्यहि ॥ ५२
इति निश्चित्य मनसा मायया रूपमग्रहीत् । क्षणेन वारिधिं प्राप्य मत्स्य रूपं समास्थितः ॥ ५३
तथा त्रिविधसेनापि तैस्तैर्मृतिमवापहि । दृष्ट्वा पलायनं तस्य भूतानि सुमहारवान् ॥ ५४
चक्रुस्सुनिभृतात्यन्तं भूतसेनाधिपा अपि । दध्मौ शङ्खं महारावं वीरबाहुस्तदा भृशम् ॥ ५५
अकिरन्निर्जरावीरे सुगन्धिकुसुमान्यपि । शूरपद्मा निशम्यैतद्वृत्तान्तं दूतवक्त्रतः ॥ ५६
नम्रवक्त्रस्तदा तस्थे महता मन्युना ज्वलन् । ततस्समागतस्तस्य तनुजोऽग्निमुखोऽसुरः ॥ ५७
यो दिग्गजान् सूर्यरथांस्तदश्वांश्च महाजवान् । गृहीत्वा चतुरङ्गेन क्रीडतिस्म महाबलः ॥ ५८
गर्भेचसन्यदामातुस्सन्तापमकरोत् भृशम् । मायया तत्पितामहा चाहूतोऽग्निमुखाख्यया ॥ ५९
यो विष्णोर्गरुडं धातुर्हंसमानीय शैशवे । अकरोल्लीलया क्रीडां बध्वा रज्वा महाबलः ॥ ६०
ज्येष्ठेन वन्धितो भानुरित्ययं शर्वरीश्वरम् । गृहीत्वा पीडयामास दुरात्मा पापकर्म कृत् ॥ ६१
सर्वदेवास्त्र संपन्नो महामायी महाबलः । तादृशोऽग्निमुखो नत्वा पितरं वाचमुक्तवान् ॥ ६२
विचारः क्रियते तात किमर्थं भवताप्यहो । निर्जितब्रह्म विष्ण्वादि देवेन नमितानननम् ॥ ६३
इति पृष्टस्तदावष्टे पुत्रेणासुरनायकः । देवसेनापतेर्दूतो वीरबाहुरिघोऽधुना ॥ ६४
दग्ध्वाऽस्मन्नगरं रम्यं क्रन्दति स्वजनैरयम् । प्रेषिता मेघराजाश्च वह्नेः मरणमनाय ते ॥ ६५
पराभवमयुस्तेन भर्त्सिता रणमूर्धनि । त्वद्भ्राता सहिरण्योऽपि युद्धं कृत्वाऽमुना बली ॥ ६६
निर्जितोऽब्धि गतस्तत्र वर्तते रूपभेदवान् । अनेनमारिता दैत्या बहवो बलशालिनः ॥ ६७
एवं पितृवचः श्रुत्वा जगादाग्निमुखोऽसुरः । अहो तात विचारः कस्तवदूतजये वद ॥ ६८
जित्वा तमेनमायोधे तवाज्ञां शिरसा वहन् । आगमिष्यामि निकटं तस्यं प्रेरयमां प्रभो ॥ ६९
शूरस्य वचसा तेन प्रेरितोऽग्निमुखस्तदा । प्राप्य वेश्म स्वकं रम्यं तदानीमेव भूसुराः ॥ ७०
मायया दत्तमतुलं गृहीत्वा चापमद्भुतम् । धृतदेववरास्त्रौघस्सर्वायुधधरो महान् ॥ ७१
सहस्रवाहिनीनागैस्तावत्संख्यरथैरपि । द्विसहस्रैश्च वाहिन्यास्तुरङ्गैर्वायुवेगिभिः ॥ ७२
अनेक वाहिनी दैत्यैरावृतः परितो बलैः । सोमकण्टक सोमाभ्यां तथा वै सूर्यशत्रुणा ॥ ७३
मेघपिङ्गलकाभ्यांच सेनेशैर्बहुभिः परैः । करभैर्बहुभिस्तद्वत् ध्वजैश्छत्रैस्सुपेशलैः ॥ ७४
महता वाद्यघोषेण महाधूलिभिरावृतः । सूर्यसोदयवेलायां वरेण्युद्ध भूतलम् ॥
प्राप तीव्रप्रतापेन यत्र वीरा वसन्ति ते ॥ ७५

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे सप्तदशोऽध्यायः ॥

---

॥ अथ अष्टादशोऽध्यायः ॥

वीरबाहुना शूरपुत्रस्य अग्निमुखस्य वधः ॥

तदानीमभवद्युद्धं सेनयोरुभयोर्भृशम् । परस्पराहंकृतिनोर्दुर्मपर्यंतमालवैः ॥ १ .
लक्षवीरास्ततः कोपान्निर्गत्य सहसाऽसुरान् । द्रावयन्तिस्म बाणैस्तान्महायसविशारदाः ॥ २
ततः प्रतस्थिरे सोमकंटको मेघसंज्ञकः । सोमश्च दैत्य सेनेशा महाश्वेळारवाः रणात् ॥ ३

युयुधुस्तान् लक्षवीरान् शरैर्न्यैर्महायुधैः । ततो मूलाधिपदशीर्षं महान् वीरपुरन्दरः ॥४
निर्गत्य बाणान्मुक्त्वाथ छित्वा तेषां रथानपि । सोमकण्टकनामानं हतवान् सायकैः क्षणात् ॥५
अथ दैत्याधिपास्सर्वे रथानारुह्य रहसा । चक्रुरायोधनं घोरं महाराव विभीषणा ॥६
ततः कोपेन महता रथास्तेषां धनूंष्यपि । छित्वा निटिलदोर्द्वन्द्व वक्षस्सु निशितान् शरान् ॥७
मुक्त्वाशु सुमहावीरो महानादं चकार हि । अथ मेघो महावेगात् गृहीत्वा दण्डमुन्नतम् ॥८
संभ्राम्य ताडय तत्सूतं हतवानसुराधिपः । तद्दृष्ट्वा सहसावीरो महामर्षो महाबलः ॥९
भित्वा वक्षस्तदीयं च शक्त्या तं हतवान् क्षणात् । पलायिताश्च ते सर्वे दैत्य सेनाधिपास्तदा ॥१०
स्वसेनां धावतं दृष्ट्वा महानग्निमुखोऽसुरः । वर्षन्शरान् बहून्भूतसेनाश्चाद्रावयत्क्रुधा ॥११
समागत्य महावीरो बाणान्वीरपुरन्दरः । सन्दधेऽग्निमुखे तस्मिन्महाकोलाहलारव ॥१२
ततो दितिजवर्योऽसौ निषङ्गं तद्दृढं धनुः । छित्वा शरैः पुनश्शक्त्या मोहयामास तं क्षणात् ॥१३
तदानीं सप्तवीराश्च वीक्ष्य वीरपुरन्दरम् । मोहितं मन्युनातीव महाकोपेन संयुताः ॥१४
सहस्राणि मुखे तस्य बाहावस्त्रद्वये तथा । प्रेरयित्वा बभञ्जुस्तद्रथं बाणैस्समुन्नतम् । १५
अथ दान्दानवोऽवोचत् उक्तवान्मन्युना भृशम् । जित्वा युष्मान्वीरबाहुं जयिष्यामि क्षणादहम् ॥१६
तदिदं वचनं तस्य निशम्यैते महाबलाः । छित्वा रथतुरगाश्च महाकोपाकुलाश्शरैः ॥१७
बिभिदुस्तस्य वक्षश्च महापाषाणनिष्ठुरम् । ततः क्षणेन दैत्योऽसौ स्फुरदग्निविलोचनः ॥१८
आरुह्याशु रथं चान्यं अस्त्रं पाशुपतं महत् । तत्याज तद् क्षणेनैव स्फुरदग्निविनिर्गतम् ॥१९
मत्वा तदस्त्रं ते वीरा यक्षयत्नमिति भूसुराः । वारुणं तत्प्रजुस्सर्वे व्यग्रचित्तास्तदा भृशम् ॥२०
कथञ्चीत्य तत्तेषामस्त्रं पाशुपतं महत् । अमारयत् क्षणेनैतान्महावीरानहो द्विजाः ॥२१
महाकोलाहलं चक्रे तान् दृष्ट्वाऽसि मुखस्तदा । भूतानि दुद्रुवुर्भीताः प्रापुर्दुःखं बलाधिपाः ॥२२
तदानीं वीरबाहुस्तु दृष्ट्वा तत्सहसागतः । महाटोपवर्वेरुच्चैः केसरीव गजेश्वरम् ॥२३
तमायान्तमसौ दैत्यः प्रेक्ष्य वाचमुवाच हि । अमारयस्त्वमसुरान् बहून् पूर्वं रणान्तरे ॥२४
जयिष्यामि क्षणेनाहं त्वामद्यापतमत्र च । त्वां विजेतुमशक्तोऽपि श्रीसभोशोऽप्यय तथा ॥२५
इति ब्रुवन्तं स वीरो जगाद वचनं क्रुधा । हिरण्यो मधुरः स्यातु दिवामीतोरवेर्यथा ॥२६
मदाकुवन्महादैत्यो महामायी पलायितः । भानुकोपो महापापो मायां कृत्वा गतः किल ॥२७
आगमिष्यत्यथ युद्धं संहरिष्यामि तं तदा । युधिष्यति भयाच्चापि पलायिष्यति वा उत ॥२८
युध्यन्तं त्वां हनिष्यामि येन केनापि रक्षितम् । इत्युक्त्वा चापमादाय सन्धायाशु गुणेन सः ॥२९
चकार निस्वनं भीमं महाकोपेन संयुतः । तदानीमकरोद्दैत्यो गुणारावं भयानकम् ॥३०
श्रुत्वा ते तद्गुणारावान् विस्मयुस्सर्वे भूता तदा । ततः कोपेन दैत्योऽथ महता वह्निना ज्वलन् ॥३१
चतुर्दश शरास्तीक्ष्णानभिवेदमयोजयत् । तावद्भिस्सायकैश्छित्वा वीरबाहुः क्षणेन तान् ॥३२
महाकोलाहलं चक्रे ब्रह्माण्डं पूरयन्निव । तस्मिन्नग्निमुखः कोपात् विशत्संख्याकसायकान् ॥३३
तस्याग्रे सुमहाराघो भर्त्सयन्परुषोक्तिभिः । तावद्भिरेव तान्सर्वानच्छिनद्भूतनायकः ॥३४
सुरावा सहस्र भूपोऽपि दैत्यशङ्खं निनाद सः । तच्छिद्रमाशो देवोऽथ स्फुरदन्तच्छदो भृशम् ॥३५
रथाश्वपार्श्वगान्सूत्य तावत्ताच्छिनदुग्रधा । दानवश्शीघ्रमारुह्य रथमन्यं समुन्नतम् ॥३६
संधार्य दण्डं पृथुलं मुचचान्भीरवर्षाणि । तमायान्तमथ घोरं चिच्छेदार्धेन रुषा ॥३७

पुनर्द्विजवर्योऽयं गृहीत्वा धनुरद्भुतम् । वायुसूर्ययमास्त्राणि मुमोच सहसा रुषा ॥ ३८
तान्येव मुक्त्वा वीरोऽसावाच्छिद्यैतानि कोपतः । मुक्तवान् शितमेतस्मिन् अग्निवक्त्रे महाऽसुरे ॥ ३९
तच्छराक्रमितो दैत्यो मूर्छामाप स्वके रथे । क्षणेन त्यक्तमूर्छोऽयं काळीं सस्मार पूजिताम् ॥ ४०
प्रादुरासीत् भद्रकाळी सैंहमारुह्य वाहनम् । चापशूलपरश्वादि वरायुधकरा तदा ॥ ४१
अनेककोटि काळीभिर्वृताभिश्च परीवृता । महता वाद्य घोषेण संपूरितदिगन्तरा ॥ ४२
तादृशीं भद्रकाळीं तां दृष्ट्वा प्रार्थितवानयम् । जयेन भद्रकाळ्यय भक्तदेवाश्रिताय भो ॥ ४३
वीरबाहुं महाघोरं जहि शत्रुनिबर्हणे । इति वादिनमेनं सा प्राहवाचं तथेति च ॥ ४४
विनिर्गता महाघोरा महारावेण भीषणा । तां वीक्ष्य सहसा वीरास्सर्वे बिभ्युर्द्विजोत्तमाः ॥ ४५
समादायाथ सा घोरा शूलं तस्मिन्युयोज हि । धूळीचकार तच्छीघ्रं चतुर्दशभिरेवसः ॥ ४६
पुनश्च भर्त्सयन्तीसा कटुवाचा सुरेश्वरी । महाघोरं महातीक्ष्णं शूल तत्याज निष्ठुरा ॥ ४७
तदप्ययं महाकोपात्सहस्रैरच्छिनद्बली । ततस्ससंभ्रमा सातु महाकोपेन वाहनात् ॥ ४८
अवरुह्य समादाय खड्गमत्यन्त भीषणम् । हन्तुकामा गतावीरं क्षणेनाप महाजवात् ॥ ४९
तदानीं वीरबाहुस्तु तां वीक्ष्याभ्याशमागताम् । स्त्रियश्च हननात्पापमिति मत्वा मनस्यसौ ॥ ५०
भर्त्सयित्वा भुजानया तदीयास्सभुजेनसः । गृहीत्वाऽन्येन हस्तेन ताडयामास वक्षसि ॥ ५१
उद्वमन्ती भृशं रक्तमास्येन पृथिवीतले । रुवती हीनसत्वासा पतित्वा पुनरुत्थिता ॥ ५२
सहोदरेण स्कन्दस्य युद्धंतु न जयप्रदम् । इति कृत्वा मनस्येषा वीरबाहुं महाबलम् ॥ ५३
त्वदीयं बलमज्ञात्वा संगतास्म्यस्य भक्तितः । ज्ञात्वा त्वमग्निवक्त्रंच भानुकोपादिदानवान् ॥ ५४
स्कन्द प्रसाद संपन्नो भव वीर महाबल । एवमादि वचः प्रोक्त्वा स्तुत्वा तं तदनुज्ञया ॥ ५५
सिंहमारुह्य वेगेन स्वावासमगमत् द्विजाः । ज्ञात्वा गतां भद्रकाळीमग्निवक्त्रो महाऽसुरः ॥ ५६
अनया वा रिपून्सर्वाञ्जयं रणमध्यगान् । तस्याः पराक्रमं ज्ञातुं मया सा सुस्मृता खलु ॥ ५७
नहि युद्धे परापेक्षा ममास्ति भुवनत्रये । अहमेव रिपून् सर्वान् हनिष्यामि क्षणेनच । ५८
अन्यथा पितरं शूरं नमिष्यामि सत्यतः । इत्थेत्थं शपथं शीघ्रादुत्थितो दैत्यवल्लभः ॥ ५९
महता सिंहनादेन पूरिताशो महाबलः । शतं शराणां तत्याज वीरबाहौ महद्रुषा ॥ ६०
वीरोऽपि तच्छतेनैव छित्वा तस्मिन्महासुरे । ववर्ष भूयः कोपेन बहून्बाणान्महाजवात् ॥ ६१
तानयं दैत्यराजस्तु शतेनोच्छिद्य वीर्यवान् । शंखध्वनिं चकाराशु महाप्रळयमेघवत् ॥ ६२
ससंभ्रमं ततो वीरश्चतुर्दशभिरस्य सः । भित्वा धनुर्महोच्छ्रायं चक्रे कोलाहलारवम् ॥ ६३
समाकर्ण्य महाकोपादग्निवक्त्रोऽसुरेश्वरः । सन्दधे महाणदशस्त्रं सर्वशत्रु निबर्हणम् ॥ ६४
नानाविधात् रूपेण निशाचरयदा जगाम् । तदैव वीरभद्रास्त्रं वीरबाहुर्युयोज हि ॥ ६५
महाघोरं महाभीमं भल्लं तद्बाणमाशुच । कदळीहस्त वेगेन छित्वा तस्य शिरोमहत् ॥
पातयित्वा महीपृष्ठे मारयामास तं द्विजाः । ६६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे षष्ठदशोऽध्यायः ॥

॥ अथ एकोनविंशोऽध्यायः ॥

वीरबाहु प्रेषित पत्रिकां दृष्ट्वा यमेन तद्भ्रातॄणां पुनरुज्जीवनम् ॥

ततस्तन्मरणं ज्ञात्वा सहसैन्यैस्स्वकैर्वरैः । चतुर्विंशत्सहस्राणि सेनानामधिपाः पराः ॥ १
संभूय सहसा सर्वे ववर्षुस्सायकान् शितान् । संरम्भिणश्च नितरां घर्मकालघना इव ॥ २
तेषु दैत्येषु देवोऽपि शतकोटि शरानयम् । वर्षयन्द्रावयामास कांश्चिद्बलशालिनः ॥ ३
आयुधानि तथान्येषां छित्वा तानभिवन्दितान् । विहाय बलवानन्यान् मारयामास भूयसः ॥ ४
तदा केचिद्दितिसुता मृतानारोप्य वर्ष्मसु । बहुभारभरात्प्राप्ता मरणं विधिचोदिताः ॥ ५
अलीकवीर विज्ञानादन्येऽपि मृदामोहिताः । सञ्जातायामसृङ्नद्यां पतित्वा केचनासुराः ॥ ६
पयोधिं प्राप्य बहवो निधनं प्रापिरे वत । छिन्नमूर्धशरीराणि नटन्ति स्म बहून्यपि ॥ ७
बभ्रमुः काककङ्काद्याः पक्षिणो मांस लिप्सवः । तदा किलिकिलारावाः पतने तत्र तत्र च ॥ ८
जनानां रोदनारावास्संबभुवुस्समन्ततः । तदानीं देवतास्सर्वाः पुष्पाणि सुबहून्यपि ॥ ९
मुमुचुः स्वकानि वस्त्राणि चोत्क्षिप्योत्क्षिप्य हस्ताः । ननृतुस्सुमहारावाः प्रीतिसंफुल्लमानसाः ॥ १०
तथा भूतानि सर्वाणि भूतसेनाधिपा अपि । त्यक्त मोहास्तदा वीर उग्रोनाम सुरेश्वरः ॥ ११
प्रोवाच वचनं धीमान्वीरबाहु समीक्ष्य सः । शतयोजनदूरेण वटस्तिष्ठत्यतो महान् ॥ १२
तत्र ते विगतप्राणा वृक्षमूले तवानुजाः । यमोऽपि तेषामादाय प्राणान् स्वपुरमापद्दि ॥ १३
इति श्रुत्वा वचस्तस्य वीरबाहुस्सुदुःखितः । स्खलत्पादक्रमश्शीघ्रं तत्र गत्वा निजानुजान् ॥ १४
दृष्ट्वा यमवशं प्राप्तान्पतित्वा तेषु मोहितः । मुक्तमोहः क्षणाद्भूयो प्रलप्य बहुधाप्ययम् ॥ १५
शिवाक्षेणाभिविद्धार्थेयमस्यात्र कईशिता । विश्वज्ञानात्यसौ मूर्खस्सुमत्क्षप्यानुजानिमान् ॥ १६
मृकण्डुसूनुमुद्दिश्य ताडनञ्च पुराकृतम् । अर्पयामास यःपुण्यं हरेति क्षणमुक्तवान् ॥ १७
तदर्थं वामपादेन कृतं वै ताडनं भृशम् । तथा दुस्ताकदुर्मत्योरर्थे यत्ताडनं कृतम् ॥ १८
श्वेतकेत्वभिधस्यार्थे पुरा यत्ताडनं कृतम् । नस्मर्यते किं तत्सर्वं अन्तकेन प्रमादिना ॥ १९
मार्गे विभूतिरुद्राक्षधारकाणामगच्छतः । वस्यते तादृशः कोऽयं मदृश्त्येवसायके ॥ २०
लिखित्वा प्रेषयामास यमलोक महत्क्रुधा । तदस्त्रं शीघ्रतो गत्वा यमलोकं तदन्तिके ॥ २१
भासयन् सकलाः काष्ठा निपपात महाज्वाला । धर्मराजस्तदुद्धृत्य किमेतदिति विस्मितः ॥ २२
वाचयित्वाशु विज्ञाय महाभीतिमवापसः । ततस्तु तान्यमो ज्ञात्वा कैलासे पर्वतोत्तमे ॥ २३
ज्ञानदृष्ट्या विचार्यायं मोदमानान्महेशवत् । तत्र सैन्यैस्स्वकैरसर्वैर्नानारूपैर्विभीषणैः ॥ २४
महान्तं महिषं भीममधिष्ठाय ययौ यमः । तत्र दृष्ट्वा महावीरानुद्यानवनवासिनः ॥ २५
असुरैर्मारितैर्मूर्तैः आवृतान् दिव्यरूपिणः । गायद्भिर्वादकैर्नृत्यदप्सरोभिः परिष्कृतान् ॥ २६
मदवानन्दसम्पूर्णान् मण्डितान् भूषणैरपि । वीक्ष्य तान्सम्प्रणम्याय समवर्ती कृताञ्जलिः ॥ २७
भोभो वीरा मया यूयमानीता इति शंकितः । वर्तते वीरबाहुस्तु महाकोपेन संयुतः ॥ २८
तदर्थं च इमां कृत्वा मयि सर्वे महौजसः । आगच्छन्तां पुनस्तत्र संप्रार्थ्ययं परेतराट् ॥ २९
प्रेषयामास पुरतो वीरबाहोस्सुरेश्वरान् । तदानीमुत्थिता वीरास्स्वापादिव महौजसः ॥ ३०
वीरबाहुस्तु तान्वीरान्वीक्ष्यालिङ्ग्य मुहुर्मुहुः । शिरांस्येषां समाघ्राय प्रीतिमाप तदाभृशम् ॥ ३१
तदानीमागतस्सोऽपि धर्मराजस्त्वरायुतः । प्रणम्य च महावीरं प्रोवाच विनयान्वितः ॥ ३२
नश्यते वा मया तत्र भस्मरुद्राक्षधारिणाम् । पदव्यामपि भोवीर क्रोशमात्र (दियताक्षि) मयान्वितः

एते तवानुजा वीराः कैलासे संस्थिता मुदा । माहूयतानागतोऽसि मीत्याभ्याशं सुरेश्वर ॥ ३४
अहि कोपं दयां कृत्वा मयि त्वं करुणानिधे । इत्युक्तवन्तं कीनाशं वीरबाहुस्तदाऽब्रवीत् ॥ ३५
शिवप्रियस्त्वं नितरां शिवभक्तप्रियस्तथा । त्वयैवं क्रियते चात्र त्यज भीतिं ममाधुना ॥ ३६
एतेषां मरणं ज्ञात्वा दुःखार्तेन मया यम । त्वया कृतमिति भ्रान्तं सत्यमेव विमोहनात् ॥ ३७
गच्छस्व पुरमद्याशु यथापूर्वं शिवाज्ञया । एवं कृताभ्यनुज्ञोऽयं वीरेण शमनस्तदा ॥ ३८
प्राप स्वसैन्यैः स्वपुरं क्षणादेव महीसुराः । तदा ववृषुः पुष्पाणि देवास्तस्मिन्सुरेश्वरे ॥ ३९
कोलाहलं ततश्चक्रुर्भूतान्यपि सहाधिपैः । एवं वीरैर्वृतस्तस्थौ वीरबाहुर्मुदा द्विजाः ॥ ४०
तदैव दूतास्तत्सर्वं वृत्तान्तं शूरमूचिरे । श्रुत्वा दूतमुखेभ्यस्तु शूरपद्मा तदाऽशुभम् ॥ ४१
क्रोधाग्निमुखमायासौ भूतापतनुजाद्धि । क्षिपश्च सर्वास्तस्याशु हा हेति रुरुदुस्तराम् ॥ ४२
दुःखिता दितिजन्मानस्सर्वे तत्पुरवासिनः । तदानीमागताः पुत्राश्शूरस्य त्रिसहस्रकाः ॥ ४३
सर्वेऽपि ते समुद्वीक्ष्य शूरमूचुस्सुदुःखिताः । वीरैस्त्वोत्तरैर्लक्षैर्भूतैश्च बलशालिभिः ॥ ४४
एकोऽयमेभिः प्रयत्नैर्युद्धाय प्रेरितः कथम् । मृते तस्मिन् त्वया तात किं दुःखं प्राप्यते वत ॥ ४५
तिष्ठामश्च वयं सर्वे जीवन्तो बलशालिनः । हिरण्यभानुकोपौ च महावीर्यपराक्रमी ॥ ४६
सेनामृतेतिच भवान् विचारं किं करोति भो । शोषणोऽपि समुद्रस्य नहि शोषो बलस्य नः ॥ ४७
मेरुं व्यत्यासयिष्यामः किंवा पर्वत वल्लभम् । थाडयं शमयिष्यामो यथेच्छं प्रेरयाशु नः ॥ ४८
भूतवीर शिशून् जित्वा गमिष्यामस्तवान्तिकम् । एवमुक्तस्तु तान् शूरो रणाय प्रैरयत्सुतान् ॥ ४९
लब्धानुज्ञास्ततस्सर्वे सुसन्नद्धा महौजसः । धृत द्रोण सजो रथानश्वांस्तुंगानधिष्ठिताः ॥ ५०
अनेकैश्च महाशूरैश्चतुरंगबलैस्सह । वाद्यघोषैर्जितांभोधिरवैश्शङ्खैश्च भेरीजैरपि ॥ ५१
प्रस्थिताश्शूरपुत्रास्ते युवानः स्थिरधन्विनः । तदा ननर्त पृथिवी भारमोक्षो भवेत ध्रुवम् ॥ ५२
एतेषां मरणाच्छीघ्रं ममेतिच महीसुराः । बभ्रमुः कङ्ककाकाश्च तेषामुपरि भीषणाः ॥ ५३
उल्काग्नयोऽपि सर्वत्र पेतुः क्षोण्यां सुदारुणाः । छत्रोपरिस्थिताश्श्येनास्तेषां वैकालरूपिणः ॥ ५४
शाकुनं संबभूवैवं भाविमृत्युप्रसूचकम् । अगणय्य तदा ते तद् अगमन् रणमण्डलम् ॥ ५५
बलयोरुभयोराशु बभूव तुमुलं रणम् । वृक्ष पर्वत पाषाण वर्षैर्नितरां तदा ॥ ५६
भूतसैन्यैर्महावीरैः परिभूताश्च दानवाः । इतस्ततश्च परितो दुद्रुवुर्योद्धुमक्षमाः ॥ ५७
तान् दृष्ट्वा सुकुमारास्ते कुमाराश्शूरनन्दनाः । गुणानारोपयित्वाशु चापेषु सुदृढेषु च ॥ ५८
आस्फालयित्वा तान् सर्वान्महाराव विभीषणान् । ववर्षुस्सायकानुग्राग्निशिखान्सुस्थिरान् बहून् । ५९
पलायन्त तदाऽत्यन्तं भूतान्यपि समन्ततः । ततश्च भूतसेनानां पतयश्च महाबलाः ॥ ६०
प्रस्थितास्सहसा भीमा महारावपराः क्षणात् । वृक्षैश्च पर्वतैर्दण्डैरास्फाल्याश्वाग्रयानपि ॥ ६१
सूतानाताड्य पादैश्च रथानुत्क्षिप्य वापरान् । मुसलैरायसैस्तेषामुरस्सु सुमहत्स्वपि ॥ ६२
संताड्यच शिरांस्येषां छित्वा परशुभिस्तथा । केषांचित् पर्वतांस्तुंगानुत्क्षिप्योत्क्षिप्य कोपतः ॥ ६३
भित्वा धनूंषि चान्येषामेवं युयुधिरे भृशम् । एवमेतान् महावीरान् सेनाग्युध्यततो भृशम् ॥ ६४
शूरात्मजाः पुनस्सर्वे दृष्ट्वा जन्यं रुषान्विताः । ववर्षुर्घोरास्त्राणि प्रज्वलन्ति महान्ति च ॥ ६५

तैर्विद्धदेहास्सेनेशाः किंचिद् खिन्नास्तदाऽभवन् । ततो लक्षामरेशेभ्यो विजयाह्वो जयप्रदः ॥ ६६
मतिघोराघलास्तद्वत् करवीरवृषाह्वयः । अनन्तवामनोऽनन्तवारणावन्तको महान् ॥ ६७
अकलंको निर्गुणको मारुतदारिकण्टकः । तथाऽनतबलिश्चैव निर्गतास्तु सहस्रकाः ॥ ६८
ते सर्वे सहसा तूर्णं वधं तेषां दुरात्मनाम् । हन्तुमालोचयित्वाथ वीरबाहुं व्यजिज्ञपन् ॥ ६९
लब्धानुज्ञा महावीराः क्षणेनासादयन्तारिपून् । ववर्षुश्च शरांस्तीक्ष्णान् महाकोपेन भीषणाः ॥ ७०
परस्परं तदा तेषां महद्युद्धं बभूव हि । ततस्तेषां सहस्राणां रथान् दैत्यास्तदाच्छिदन् ॥ ७१
सहस्रसंख्यास्ते वीरास्तद्रथान्कार्मुकानपि । छित्वा शुभरथान् सर्वान् बभञ्जुः पर्वतोपमान् ॥ ७२
भूमिमास्थाय दैत्यास्तु वृक्षानुत्पाट्य पर्वतान् । प्रचिक्षिपन् सुरेन्द्रेषु महाकोलाहलारवाः ॥ ७३
सहस्रसंख्या वीरास्तु तान् छित्वा निशितैश्शरैः । आग्नेयास्त्राणि घोराणि मुमुचुर्दानवेषु ते ॥ ७४
तच्छरैर्भिद्यमानांगास्स्रवद्रुधिरमण्डिताः । मुमुहुर्दानवाः केचित् युयुधुश्च परैः परे ॥ ७५
केचिद्वीरास्थानभ्यधावुच्चिक्षिपुरद्रोधवलाः वीरास्तु सहसा भूमौ पतिता रणगर्विताः ॥ ७६
आरूढान्यरथाभूयो ववर्षुस्सायकान् बहून् । तच्छरैः पीड्यमानास्ते दानवा भृशकोपिताः ॥
सप्रहारास्सहसा तेषां बभञ्जुश्च धनूंष्यपि ॥ ७७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे एकोनविंशोऽध्यायः ॥

---

॥ अथ विंशोऽध्यायः ॥

वीरबाहुना धर्मकोपस्य मारणम् ॥

पुनश्च तेषामन्योन्यमलं युद्धं बभूव ह । खेदमापुस्तदा देवा दैत्यैस्सन्ताडिता भृशम् ॥ १
ततस्तु विजयश्श्रीमान् तेषु वीरो महाबलः । लब्ध्वा चापं निषंगञ्च शरपूर्णं महेश्वरात् ॥ २
ववर्ष तेषु दैत्येषु महता मन्युना शरान् । तन्मुक्तास्सहसा तेषां शिरांस्युच्छिद्य सायकाः ॥ ३
इतस्ततश्च पतितः पेतुरब्धिषु तैस्सह । पुनरुत्पन्नशिरसः क्षणादेव तदासुराः ॥ ४
अनन्तरसुमहाटोपा युयुधुः सायुधैस्सुरम् । पुनश्च तान्महाकोपात् पाणिपादशिरांस्यपम् ॥ ५
अच्छिनद्दारुणैर्बाणैर्भीषयन्सुमहारवैः । तथैवते समुत्पन्नाखिलसर्वांगाः पापिनोऽसुराः ॥ ६
ववर्षुस्सायकानुग्रान् विजये दुर्जयेऽरिभिः । एवं बहुप्रकारेण छित्वोत्पन्नोत्तमांगकान् ॥ ७
वीक्ष्य तेन मनश्शक्तेः विचारं विजयस्तदा । अहो गुह महाबाहो सर्वदैत्यनिषूदन ॥ ८
किं कर्तव्यं मया स्वामिन्नेते मायाविनोऽसुराः । जातपाण्यंघ्रिमूर्धानश्छेदितेष्वपि तेष्विह ॥ ९
युध्यन्त्यखिलास्ससर्वे युगपदेव माम् । इति दुःखितचित्तोऽथ स्मृत्वा देवं गुहं हृदि ॥ १०
प्रादुरासीच्च भगवांस्तस्मै शीघ्रमुमासुतः । विजयाय जयश्रीश्च तव भूयान्महात्मना ॥ ११
एते लब्धवराः पापाः ब्रह्मणः भूरुषभेण । ममैव शरेणैषां छेदेन महाबलः ॥ १२
आच्छिनत्ति शिरांस्याशु तदैव मरणं भवेत् । एषु यः कोऽपि मुक्तोऽस्ति तदेवैषां न मृतिः किल ॥ १३
तस्मात्त्वं सहसा वीर शरेणैतेन तानिमान् । भवतोश्छिद्य मूर्धांश्च भवाशादि गरीयसी ॥ १४
इति येन विधातुर्वै शिरश्छेदं चकार सत् । दत्वा महद्दिव्यास्त्रं भद्रं दानुसंहती ॥ १५
अन्तर्दधे क्षणादेव भगवान्पार्वतीसुतः । लब्धास्त्रो विजयः स्कन्दात् इत बोलाहलायः ॥ १६

सन्दधे तन्महाभीमं सर्वशत्रुनिबर्हणम् । तदस्त्रं पशुपाभिख्यं नानाभैरवरूपभाक् ॥ १७
यदा प्रतस्थे तरसा घातयन् सकलान्रिपून् । तदा मत्तो महाबाहुर्दृष्ट्वा दैत्यवरस्तुतम् ॥ १८
मायालं तत्यजे कोपात् निवारयितुमाकुलः । गणपस्त्वाशुनन्दिशशादस्याशुसंभवात् । १९
अमारयन्महावेगाच्छिरांस्याच्छिद्य चैकदा । मृतेषु तेषु दैत्येषु त्रिसहस्रेषु भूसुराः ॥ २०
विजयस्तु महायशा स्वयं स्कान्दं चचार सः । भूतान्यपि महारावं चक्रुस्सर्वाणि भीषणम् ॥ २१
ववर्षुर्दैवतास्सर्वाः पौष्पीं वृष्टिं तदा भृशम् । तदेतत्सर्वमालोक्य दूताच्छूरं स्वशिबिरम् ॥ २२
तच्छ्रुत्वा शूरपद्मासौ दुःसाध्यो निममज्ज हि । तमेनं धर्मकोपाख्यः प्रकृतीनां परो महान् ॥ २३
आत्मपुत्रपितृभ्रातृबन्धूनां मरणेऽपि । नहि शोको महावीर्यपराक्रमवतामिह ॥ २४
त्वंतु दैत्यवरो धीमान् सर्वेषामधिपो महान् । दुःखितुं तु नयुक्तं ते सर्वदा सर्वद प्रभो ॥ २५
वर्ततेऽस्मद्दशोकालस्सर्वेषां प्राणहारकः । अथवाच वर्तेते स्वर्ग्ड प्राणानपगतानपि ॥ २६
ऐश्वर्यं वीर्यमतुलमिन्द्रलोकत्रयं तथा । सेनाच मन्त्रिणो वीराः किंन्यूनं तव भो विभो ॥ २७
इत्यादि वचनैश्शूरं प्रसदुःखं महासुरम् । क्रमेण सान्त्वयामास धर्मकोपो महामतिः ॥ २८
तस्य तद्वचनं श्रुत्वा गतशुग्दानवेश्वरः । जिघांसन्नेव तान्सर्वान् आगमिष्यामि शीघ्रतः ॥ २९
इत्युक्त्वा धर्मकोपेन प्रतस्थे महता यशा । तदैनं धर्मकोपस्तु प्राह वाचं महामतिः ॥ ३०
अस्योपरि त्वया गन्तुमसांप्रतमिहाधिप । मत्सदादिषु सर्वेषु तिष्ठत्स्वथानुजीविषु ॥ ३१
गत्वाहं तान् जयिष्यामि रिपून् सर्वानिहागतान् । त्वदाज्ञां शिरसा धृत्वा दानवानामधीश्वर ॥ ३२
निशम्य तद्वचश्शूरः सन्तोषेण तथेतितम् । प्रेरयित्वाऽऽसनं सैंहं आरुरोह पुनश्च सः ॥ ३३
ततश्च धर्मकोपस्तु धृतनानावरायुधान् । दिग्गजं पुण्डरीकाख्यं आरुह्य निरगात् किल ॥ ३४
ध्वजच्छत्रपताकौघवारितार्कातपोतुलः । बहवश्च तदामात्याश्चतुरंगबलान्यपि ॥ ३५
वाद्यानामारवाश्चासन् प्रळयांभोदनादवत् । एवं निर्गत्य बहिस्ता वीथीरालंघ्य शीघ्रतः ॥ ३६
प्राप युद्धस्थलं घोरं सह सैन्यैर्महाबलैः । तमायान्तं तदा वीक्ष्य भूतानि सुमहारवान् । ३७
चक्रुस्तत्तुल्यवेगेन समुद्रद्रवभीषणम् । निशम्य तद्रवं भीमो विचाराक्रान्तमानसः ॥ ३८
धनुरारोपयित्वाशु गुणमास्फाल्य कोपतः । ववर्ष भूतसेनासु सायकान्निशितान्बहून् ॥ ३९
बलयोरुभयोर्भूत दानवानां परस्परम् । वीराणां लक्षसंख्यानां मंत्रिणांच महद्रणम् ॥ ४०
वर्षतां दैवतास्त्राणि नामानि वदतां गुणान् । संबभूव महाघोरं तुमुलं भीषणं भृशम् ॥ ४१
तदा वीरास्तु तेसर्वे यमदूता इवाशुगाः । आगत्य तरसा तेषां प्राणानादाय निर्गताः । ४२
तान् दृष्ट्वा केचिदसुराः पलायनमहोद्यताः । तदाशु धर्मकोपोऽपि भूतसेनासु कोपतः ॥ ४३
ववर्ष सायकानुग्रान् भीषणांश्च महारवैः । पुण्डरीकगजोऽप्यन्यानमारयद्बहो रिपून् ॥ ४४
ततस्तु वीरा नागेऽस्मिन् तत्यजुर्मार्गणान् बहून् । स्रवद्रुधिरसर्वांगो महाकोपेन दिग्गजः ॥ ४५
गृहीत्वा मुसलं घोरमायसं वेगतो भृशम् । अताडयच्च भूतानि तेन सर्वाणि तान्यथ ॥ ४६
मुमुहुः कानिचित्तेषु पलायन्तिस्म कानिचित् । वीरबाहुस्तु तद्वीक्ष्य वीराणामधिपः क्रुधा ॥ ४७
तस्मिन् पृषत्कान्सुबहून् अत्यजत्सहसा गजे । विद्धमात्रेण तद्बाणैः किंचित्क्षीणबलोऽभवत् ॥ ४८
दृष्ट्वैतद् धर्मकोपस्तु शमयित्वा गजेश्वरम् । तस्मिन्वीरे शतं कोपात् बाणानामयुतं द्विजाः ॥ ४९
तदानीं देववर्योऽसौ रुधिराप्लुतविग्रहः । रथे स्वके क्षणं तस्थे विद्धदेहः पराशुगैः ॥ ५०

नरसदैत्य चण्डालो ,ब्रारा त खिन्नमानसम् । ,प्राहिणोच्छक्तिमान् शक्तिं हतसंपावभीषणाम् ॥ ५१
रियाहुस्ततः कोपादुत्थायाभ्यागतान्तिकाम् । धूळीचकार ,बाणेन तामेकेन ततो द्विजाः ॥ ५२
नश्च कवचं तस्य चिच्छेद सुदृढ शरैः । छिन्नकञ्चुकोऽमात्यो दैत्येशस्य तदा रुषा ॥ ५३
मुमोच दण्डं पृथुलं दण्डपाणिरिवान्तकः । वीरोऽथ तस्य पतनाद्दुःसमाप तदाक्षणम् ॥ ५४
रियाद् यलं वीर्यमुक्त्वा स्वस्थाद्गुरो महान् । बहून्यचर्पनाराचान्निशितान् देवनायके ॥ ५५
ीरोऽपि तरसा तस्मिन् मुक्त्वास्त्राणि महद्रुषा । मुमोच शक्तिमतुला स्पृचा विद्दत्तिमस्यसः ॥ ५६
महुरस्तुदुरात्मायं अस्त्रेणैतां यताच्छिनत् । तद्दृष्ट्वा सहसामर्षात् वीरबाहुः क्षणात्पुनः ॥ ५७
विभेदास्त्रेण तस्योरो निष्ठुरं हृदयोऽपि च । तदानीमेव दैत्योऽसावमूर्च्छद्गजस्कन्धरे ॥ ५८
तद्वैयसमद्देमोऽपि गृहीत्वा मुसलं दृढम् । तेन सन्ताड्य वीरस्य सूतं तं प्रापयन्मृतिम् ॥ ५९
ततः कोपवशाद्वीरस्त्ववरुह्य रथाद्द्रुतम् । कपोले ताडयित्वैनं गृहीत्वोर्ध्वं मुमोद्सः ॥ ६०
घर्मकोपस्य नागेन्द्रः पतित्वा भूतले क्षणात् । मुमोद परमेशेनगजासुरश्चद्विजाः ॥ ६१
अथ भूयोऽपि दैत्योऽयं पापात्मा द्रुतमुत्थितः । दण्डं महान्तमादाय वक्षस्येनमताडयत् ॥ ६२
यभञ्ज तं करेणायं गृहीत्वा कोपविह्वलः । वीक्ष्य तद्दानवश्रेष्ठो मुमोच कुलिशं महत् ॥ ६३
पुरध्वास्य देवोऽयं गत्वादायकरेणतत् । अताडयन्महाकोपादसुरं पापिनं तदा ॥ ६४
पतितं तं महीपृष्ठे पादेनापि जघान हि । उद्गमंश्चतदारक्तमास्येनायं मृतोऽसुरः ॥ ३५

दृष्ट्वा मृतं वनुजमन्त्रिणमाशु दैत्याः स्थातुञ्च तस्य पुरतो नितरामशक्ताः ।
त्यक्त्वायुधानि परितः परिखिन्नचित्ता. प्राद्रुद्रवन् गलितकेशभरा जवेन ॥ ६६

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे विंशोऽध्याय. ॥

---

॥ अथ एकविंशोऽध्याय. ॥

भानुकोपेन शरस्य स्कन्दशरणागत्युपदेश. भानुकोपस्य तृतीय युद्धश्च ॥

ततस्तु पुण्डरीकोऽपि गतमूर्छो गजेश्वरः । वीरबाहुं समासाद्य प्रणम्य विनयेन तम् ॥ १
दिग्गजानां वरिष्ठं मां विद्धि वीर महाबल । गृहीत्वैनं दुरात्माऽय निगळेन ,बबन्ध हि ॥ २
स्वेच्छयाऽऽरुह्य मुक्त्वातो यत्रकुत्रापि गच्छति ।
अश्रुताचेन्मया तस्य वागस्यैनं (वाग्मिन् स्त) तदाऽसुरः ॥ ३
मोचितोऽहं त्वया दासा तादृशं पापिनं सुर । मया कृतापराधं त्व क्षमस्व करुणानिधे ॥ ४
महिमानं तवाज्ञात्वा भ्रान्तचित्तेन मे द्य । त्वदाज्ञयाऽऽद्य मत्स्थान वसिष्यामि यथापुरा ॥ ५
इत्युक्त्वा दीनवचसा प्रणनाम पुनः पुनः । तथेति प्रेरयामास वीर बाहुर्गजेश्वरम् ॥ ६
प्रासातुको पञ्चदशीथ स्वायासमगमत् द्विजाः । ववर्षुश्च सुरा वीरे कुसुमानि मुदान्विताः ॥ ७
सेनाश्चममुमेहासायान् उत्प्लुत्य दयासुरा । ततस्तास्मवंभावरूपं ज्ञात्वा भटाननैः ॥ ८
प्राप दुःखं तदात्यन्तं विचारेणापि संयुतः । तथैव यामिनीं शीघ्र नियम्य दितिजान् बहून् ॥ ९
यमलोके सर्वं स्थाप्य स्वयमाय द्विजोत्तमाः । ततस्तु भानुकोपोऽपि मायाढ्य परस्मैं दिने ॥ १०

स्वस्त्यागतो गृहं शीघ्रं तदाऽभ्यासुरो महान् । धर्मकोपस्य मरणं श्रुत्वा वृत्तं स्ववृत्ततः ॥
लुण्ठनंच पुरस्यापि वर्तमानैस्सुरेश्वरैः । दह्यमानस्तदाऽत्यन्तं दुःखेन महता हृदि ॥
विनिष्क्रम्य गृहात् स्वस्य प्राप तात गृहं क्षणात् । नत्वा च पितरं शूरं प्रोवाच वचनं तदा ॥
तातास्माभिरमी जेतुं अशक्या बलिनो युधि । भवानपि महावीर्यो मायितस्तैर्महाबलैः ॥
नाशितं बलमस्माकं स्कन्देन सुरपीडनात् । मृता इति भयच्चेदं भीत्याहं वहयोऽसुराः ॥
यदा सञ्जीवनं तत्र भवेदिति महासुर । इदानीमपि तान् देवान् यद्वाऽमुक्त्वा नमस्कृतः ॥ 1
सुप्रसन्नो यदि गुहस्तत्राऽस्माकं स्थितिर्भवेत् । इत्यादि वचनं श्रुत्वा पुत्रेणोक्तं तदाऽसुरः । 1
महता मन्युनाऽऽवीय ज्वलन्निव वचोऽब्रवीत् । ब्रह्मविष्णुमुखैर्देवैः स्तूयमानोऽहमानतैः ॥ 1
आरब्धं न हि मुञ्चामि प्राणैः कण्ठगतैरपि । अपकीर्तिर्भवेत्त्यागे भवान्भीतस्तरामिह ॥ 1
गच्छत्वमधुना भ्रान्त स्वपथा यथकुत्रचित् । अहमेव जयिष्यामि तान्निपूत्रणमध्यगान् ॥ २
इति शूरवचः श्रुत्वा भानुकोपस्तदात्मजः । क्षमस्व त्वं मया तात प्रोक्तं तत्कपटेन हि ॥ २
भवद्बलाद्रिपून् सर्वान् जेताऽसि जनकाधुना । इति तद्वचनैरर्थं सन्तुष्टो दैत्यवल्लभः ॥ २
प्रेरयामास युद्धाय भानुकोपमरिन्दमम् । ततः स्वगृहमभ्येत्य भानुकोपो महाबलः ॥ २
अनेकदैवतास्त्राणि नानागुप्तरथानपि । संपाद्य स्वयमारुह्य रथमत्यन्तमुन्नतम् ॥ २
महता वाद्यघोषेण ध्वजैश्छत्रैश्च पेशलैः । वह्नीभिरासुरीभिश्च सेनाभिस्सपरिष्कृतः ॥ २
भ्रातृस्नेहवशाच्चायं दुःखेन परिपीडितः । निश्चित्यायमवाप्यायं वीथीस्त्यक्त्वा रणस्थलम् ॥ २
तत्र दृष्ट्वानुजान्वीरान् त्रिसहस्रमितान्मृतान् । अन्यानप्यसुरांस्तत्र समन्तात्पतितान् बहून् ॥ २
महद्दुःखपराक्रान्तः कोपेनापि ज्वलन्नयम् । संहरिष्यामि तानेतान् रिपूनाशु रणाङ्गणे ॥ २
विनिन्दन्त्यन्यथा चैनं जनास्सर्वेऽपि मामिह । दरिद्रं गणिकासक्तमिव मन्मथपीडितम् ॥ २
उक्त्वैवं मनसा दैत्यः जगाम रिपुमण्डलम् । ततस्सर्वाणि भूतानि दृष्ट्वैनं तु महासुरम् ॥ ३
कोपं पापो महाभीमस्समायास्यति वेगतः । सैन्यैश्च बहुभिर्घोरैरिति व्यग्रमनांसि च ॥ ३
समभिजग्मुर्महाकोपात्तेषामुपरि भूसुराः । तदासमभवद्युद्धं सेनयोरुभयोर्भृशम् ॥ ३
वृक्षपर्वतपाषाणगदामुद्गरवर्षिणोः । बहवश्च मृतास्तत्र शूराबलपराक्रमाः ॥ ३
ननृतुश्च कबन्धानि बहून्यत्र विभीषणम् । शिवाश्च काकगृध्राश्च पिशिताकांक्षयागताः ३
एवं वृत्ते रणेघोरे दैत्यानां पुरतस्तदा । नशक्नुवन्ति भूतानि स्थातुं सर्वेन दुद्रुवुः ॥ ३
तदैव च समागत्य भूतसेनाधिपाः क्रुधा । अयुधन् पापिनो दैत्यान् अस्त्रैर्मर्मच्छिदोभृशम् ॥ ३
पलायन्त तदा दैत्याश्छिन्नभिन्नशरीरिणः । तान् दृष्ट्वा भानुकोपोऽयं महापापो महासुरः ॥ ३
प्रेरयित्वा महास्त्राणि तामुकद्रुमपर्वतान् । धूळीकृत्य महाकोपान्महास्त्रैश्च मोचयन् ॥ ३
आग्नेयास्त्राणि भूरीणि सेनेशेषु तदाऽभ्यजत् । अक्षमास्सोढुमेतानि भूतानामधिपा युधि ॥ ३९
स्रवन्तो रक्तधारास्ते पलायन्तिस्म विद्रुताः । वीरबाहुस्समीक्ष्यैतत् प्रेरयित्वा रथं स्वकम् । ४०
अभिजग्राह वेगेन धनुरायम्य वर्षयन् । छित्वाऽऽयुधानि दैत्येन मुक्तानि सुबहून्ययम् ॥ ४१
अमारयत् बहून्दैत्यान् युध्यतस्समहाबलः । ततस्ते भानुकोपोऽयं वीरं प्रोवाच कोपतः ॥ ४२
त्वं दूत पूर्वमसुरान् बहून् हत्वा गतः खलु । अधुनाप्यागतोऽग्याशं मम भूयः क्वगच्छसि ॥ ४३
यत्रकुत्र गतंचापि संहरिष्याम्यहं ध्रुवम् । एवं जगाद वीरत्वं किञ्चिद्दैत्याधमस्तदा ॥ ४४

तमेनं वीरबाहुश्च प्रोवाच वचनं बली । उभावपि करिष्यावो युद्धमत्र सुदारुणम् ॥ ४५
पश्यन्तु देवतास्सर्वा जयंचापि पराजयम् । वृथोक्त्या किं दुरात्मंस्त्वं कुरु युद्धं मयासह ॥ ४६
इत्युक्तमात्रेण तदा भानुकोपो महद्रुषा । वीरस्य वक्षसि तदा सहस्रं सन्दधे शरान् ॥ ४७
ततस्तु वीरबाहुश्च महता मन्युना युतः । युयोज भुजयोस्तस्य सहस्रं रणगर्वितः ॥ ४८
मधुरस्तु शतेनायं निषंगं तस्य चाच्छिनत् । ततः कोपेन दैत्यस्य निटिले शक्तिमुज्वलाम् ॥ ४९
प्राहिणोत्सहसा वीरो महाकोलाहलारवः । मुमोह सक्षणं दैत्यश्शक्तेस्संपतनादयम् ॥ ५०
तदानीं देवराजोऽयं वायव्यं पुनरत्यजत् । तदेव मुक्त्वा दैत्योऽपि चिच्छेद च महाबलः ॥ ५१
देवस्तु सहसाऽऽग्नेयं मुमोचापि महासुरम् । छित्वा तेनैव तद्दैत्यस्सौरं तत्याज कोपतः ॥ ५२
वीरबाहुस्तु तेनैव व्यर्थतामगमच्च तत् । ततस्तु दैत्यः कोपेन मोघयंस्तं सुरेश्वरम् । ५३
ब्राह्ममस्त्रं मुमोचाशु सर्वसंहारकारकम् । अच्छिनद्वीरबाहुश्च तेनैव तन्महाबलः । ५४
गतेषु व्यर्थतामेवमस्त्रेष्वसुरनायकः । महाघोरं महाभीमं अस्त्रं नारायणस्य सः ॥ ५५
सन्दधे सहसा कोपाद्वीरबाहुं प्रति द्विजाः । तदेतन्निर्गतं घोरं भासयत्सकलादिशः ॥ ५६
वीक्ष्याशु वीरबाहुश्च तदेव प्राहिणोत्क्रुधा । परस्पराहतिवशात्तूष्णींभूते तदाऽऽशु ते ॥ ५७

ततस्तु भानुकोपोऽसौ महता मन्युना ज्वलन्
यदि मुक्तं पशुपतेरस्त्रं सर्वारिसूदनम् ॥
योजयिष्यति सोप्येतत् इतिसंचिन्त्य भूरिशः ॥ ५८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकांडे एकविंशोऽध्यायः ॥

---

॥ अथ द्वाविंशोऽध्यायः ॥

॥ वीरबाहुना भानुकोपवधः ॥

ततः क्षणेन मायावी माययाऽलक्ष्यतां गतः । इतस्ततश्च पुरतः पृष्ठतश्च सुरेशितुः ॥ १
अमन्यवर्ष शस्त्राणि वास्यावद्वीरवर्ष्मणि । अपदृक्कमहाधारो वीरबाहुस्तदा भृशम् ॥ २
क्वगतोऽयं दुरात्माऽद्य वर्षत्यद्य शरानपि । नलक्ष्यते शरा एव लक्ष्यन्ते पातितोऽत्र हि ॥ ३
इतिव्यग्रमनास्तस्थौ पश्यन्दिक्षु विदिक्ष्वपि । बिभ्युस्सुरास्तदाऽत्यन्तं भूतान्यपि महाधिपैः ॥ ४
ततः क्षणेन वीरोऽथ ज्ञात्वा मायां दुरात्मनः । विज्ञानास्त्रं ससर्जाशु सर्वव्यामोहकारकम् ॥ ५
तस्यास्त्रस्य महिम्नैनं रथारूढं वियत्स्थले । दृष्ट्वा कोपेन महता ययौ तत्र रथेन सः ॥ ६
तदा तयोर्महद्युद्धं तत्रासीद्दारुणं तराम् । इतस्ततश्च सर्वत्र भ्रामयित्वा रथावुभौ ॥ ७
वर्षिणोद्दारवर्षांणि घनाघन इवापरैः । मुञ्च बाणान् हनिष्यामि त्वं कुत्र मम सन्निधौ ॥ ८
इत्युक्तमात्रेण तदा वर्षिणोश्च परस्परम् । ततः कोपेन महता एत्वा शपथमाशु च ॥ ९
वीरस्यं यद्वतोस्तद्धनामग्रहणपूर्वकम् । परास्त्राणि च सन्ताड्य परं भर्त्संयतोरपि ॥ १०
परस्परं पश्यतोर्मोपीडितमहारथयोः । परत्रामापि गदतोस्सन्तोषेणापदस्य च ॥ ११
हताशांसमहारावकोलाहलसुनाश्रयोः । परस्परं भर्त्सयतोः वदतोश्चिमिरीर्ष्यया ॥ १२

एवं तदा तयोर्जातं रणे देवासुरेशयोः । शरच्छरैर्भूतलं सर्वं पातितैरावृतं तदा ॥ १३
ववृषुश्च तदा भूतदानवा मग्नुरुज्ज्वलाः । मर्कादयो महास्त्रसर्वं वीक्ष्यैतत् विस्मयावहम् ॥ १४
येनैव वायुतुल्यानि यमदण्डारकाण्यपि । प्रलयाग्निरिवात्यन्तं दाहकानि पराङ्मुखि ॥ १५
भास्वन्ति सूर्यनीकाशं ह्रादिनीव महारवैः । घोराणि त्रिपुरारातेश्शरवद्दाहकान्यरीन् ॥ १६
एवं विधानि शस्त्राणि मुक्त्वा मुक्त्वा पुनःपुनः । युद्धमल्लावुभावेतौ तदाऽयुध्यतां भृशम् ॥ १७
गिरयश्च तदाऽत्यन्तं शरैरेभिस्सुपूरिताः । बलाहकादिभिश्छिन्ना भृशं शकलतां गताः ॥ १८
दिशश्च विदिशस्तद्वत्सूर्याचन्द्रमसावपि । ब्रह्मांडाकाशपातालसमुद्राश्चापि पूरिताः ॥ १९
ददह्युरिंगजाम्मेघान् पर्वतास्तत्र तत्र च । अस्फुरच्च तदा पृथ्वी दह्यमाना शरैर्भृशम् ॥ २०
शोषमापुस्समुद्राश्च द्रुचारसर्वाश्च तारकाः । आवृतं धूमजालेन ब्रह्माण्डस्यान्तरं तदा ॥ २१
अन्योन्यं च तदास्त्राणि वह्न्यच्छिन्नतावुभौ । आश्चर्येण तयोर्युद्धं वीक्ष्य देवाश्च तापसाः ॥ २२
न सन्ति धन्विनस्तुल्या एतयोरुभयोरिह । अहोवीर्यमहोशौर्यं गांभीर्यश्चेति विस्मिताः ॥ २३
ततस्तु मन्युनाऽतीव भानुकोपो महासुरः । धूळीचकार वीरस्य रथं शरसहस्रकैः ॥ २४
अतनोत्सम महारावं केसरीव मियान्वितः । ससंभ्रमं महाधीरो दैत्यस्यास्य दुरात्मनः ॥ २५
सहस्रेण रथं छित्वा पातयामास भूतले । दानवस्तु पुनः कोपाद्विशच्छस्त्राणि वक्षसि ॥ २६
मुक्त्वा तस्य महारावं चक्रे तं भीषयन्निव । अंसावास्फाल्य पाणिभ्यामात्मनो भूसुरोत्तमाः ॥ २७
तदामर्षवशाद्वीरश्चतुर्दशभिराशुगैः । छित्वा तन्मकुटं भूमौ अपातयद्धोमहत् ॥ २८
असुरोऽपि महासत्वः कवचं तस्य निष्ठुरम् । तावद्भिरकरोच्छिन्नं शतधा पापवान् भृशम् ॥ २९
वीरबाहुर्महाक्रोधादाच्छिनत्तद्धनुर्वरम । सप्तभिर्निशितैर्बाणैर्महाकोलाहलारवः ॥ ३०
भग्ने धनुषि दैत्योऽसौ भ्रुकुटीकुटिलेक्षण. । नुनोद शक्तिमतुलां भ्राह्मीमस्मिन्सुरेश्वरे ॥ ३१
तस्यां शक्तौ सुरश्रेष्ठश्शतकोटिशरान् शितान् । ववर्ष तानियं शीघ्राच्छित्वास्याश्याशमापहि ॥ ३२
तदानीं देववर्योऽसौ वीक्ष्यैतामागतामन्तिकाम् । ध्यात्वा स्कन्दं सितांभोजे हृदयस्थे महेशितुः ॥ ३३
खड्गमादाय कोशस्थं चिच्छेदैनां महाबलः । द्विधाभूतां च तां दृष्ट्वा सन्तोषं प्रापिरे सुरा. ॥ ३४
खड्गं कोशे पुनः स्थाप्य स्थिते तस्मिन्सुरेश्वरे । भानुकोपो महापापो गृहीत्वा खड्गमद्भुतम् ॥ ३५
कृतकोलाहलारावो ह्याभ्यैत्तत्पाणिनाऽऽगतः । तदा वीरो महाकोपो बहुभिस्सायकैर्वरैः ॥ ३६
बिभेद वक्षस्तस्याशु पापिनो वज्रनिष्ठुरम् । भगणस्यैवमसुरो रक्तस्रावपरिप्लुतः ॥ ३७
आगम्य तेन सद्यापमच्छिनत्कोपविह्वलः । कृत्वा पुनर्महारावं बभ्रामैतस्ततो भृशम् ॥ ३८
तदानीं देवराजोऽयं स्वं खड्गमग्रहीद्वरम् । कूरयोरुभयोर्वैक्रियमयोरिव वीरयोः ॥ ३९
खड्गयुद्धं तदा जातं महाघोरं भयानकम् । असुरस्सहसा पापः खड्गं दोर्ष्णि सुरेशितुः ॥ ४०
अपातयत्क्षणेनैतन्मोघीवृत्याऽमरेश्वरः । अंसं दक्षिणमस्यायं छित्वा महामपातयत् ॥ ४१
वामेन पाणिना भूयः खड्गमादाय कोपतः । प्रहर्तुमुद्यतस्यास्य चिच्छेदैनमपि द्विजाः ॥ ४२
ततः कोपवशाद्दैत्यो मायास्त्रं घोरमाददे । ससार पावकापोऽयं प्रयोक्तुं सुरनायके ॥ ४३
तावद्देव सधर्मात्मा छित्वा तस्य शिरोमहत् । पातयामास भूपृष्ठे तं पर्वतमिव द्विजाः ॥ ४४
प्राप्तकालवशं पापं दैत्यं तं वीक्ष्य देवताः । ववर्षुः परया प्रीत्या सुगन्धिकुसुमानि ताः ॥ ४५
निनेदुश्च तदाऽत्यन्तं भूतान्यपि सहाधिपैः । प्राप सन्तोषमत्यर्थं भानुर्वीक्ष्य मृतं रिपुम् ॥ ४६
तदानीमेव वीरोऽसौ नमस्स्यकाथा महीतलम् । अथस्थानुजैर्वीरैः भूतैरपि परिष्कृतः ॥ ४७

प्रतिज्ञा मम निर्वृत्ता यस्मात्पापोऽद्य मारितः । पूर्वैर्युरपि देवेशो गुहोऽस्माभिर्नवन्दितः ॥ ४
इत्युक्त्वा सकलान्वीक्ष्य वीरबाहुस्तु तैर्युतः । महता वाद्यघोषेण हेमकूटपुरोत्तमम् ॥ ४
प्राप्य स्कन्दालयद्वारि रथात्स्वादवरुह्य सः । प्रविश्यान्तर्गृहं देवं दृष्ट्वा मङ्गलविग्रहम् ॥ ५
बहुशारं ननामैनं विनयेन सुदाप्ययम् । वीरबाहुं तमुद्धृत्य पाणिभ्याममरेश्वरः ॥ ५
महता त्वं प्रयासेन महापापममारयः । खिन्नोऽसि नितरामद्य सन्तोषो मे महानभूत् ॥
वृणु वरमभीष्टं ते वीरानुज महाबल ॥ ५२
इति ब्रुवन्तं भगवन्तमेनं प्रोवाच वाक्यं कृतपाणिबन्धः ।
तवाज्ञयाऽहं जितवानमुं मे यदि प्रसन्नस्त्वयि भक्तिरस्तु ॥ ५३
मास्तु मे ब्रह्मविष्ण्वादिदेवतानां पदं प्रभो । तव पादाम्बुजद्वन्द्वे भक्तिर्भवतु पावनी ॥ ५
इति संप्रार्थितो देवस्तमेनं विनयान्वितम् । मद्भक्तिरव्यया पुण्या लभ्यते न सुरैरपि ॥ ५
कृपावशात्तवास्त्वेवं उक्त्वा तं सकलानपि । प्रेषयामास तान् स्वं स्वं गृहं प्रत्यमरेश्वरः ॥ ५
ते गुहं संप्रणम्यैनं वीराः प्रापुः स्वकान् गृहान् । यदिदं पठते नित्यं श्रद्धाभक्तिसमन्वितः ॥ ५
शृण्वन्ति ये नरश्रेष्ठा भानुकोपस्य पापिनः । वीरबाहुहतं घोरमन्यैरपि सुदुष्करम् ॥ ५
भवेच्छत्रुजयस्तेषां सर्वाभीष्टं च जायते । श्रुत्वैनं पाण्डवादश्रुवन् दुर्योधनमुखान्रणे ॥ ५
अजयन् सहसा मत्तान् धर्ममार्गरतास्सदा । तथा परशुरामोऽपि कार्तवीर्यार्जुनादिकान् ॥ ६
अजयद्रणमध्ये तान् रिपून् वीर्यबलान्वितान् । श्रुत्वा ऋषिमुखाद्वाली हनुमानञ्जनात्मजः ॥
शत्रूनजेयानपरैरजयश्च महाबलान् ॥ ६१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे द्वाविंशोऽध्यायः ॥

---

॥ अथ त्रयोविंशोऽध्यायः ॥

शूराज्ञया सिंहमुखेन युद्धाय निर्याणम् ॥

ततो दूतमुखेच्छूरो भानुकोपं मृतं सुतम् । विज्ञाय पतितो भूमौ मूर्छामापातिदुःखितः ॥
विललाप प्रबुद्धोऽसावाशु सर्वासुरेश्वरः । हा पुत्र भानुकोपाद्य जितभानो महाबल ॥ २
तवापि मरणं चेत्स्यात्कथं युस्सुखिनोऽमराः । धीमूर्तिभ्यां निजभ्रातृभ्यां परिमर्दितसक्थिकः ॥ ३
शचीपते हरिर्दुग्धसिन्धावस्त्वगुहान्तरः । शच्या सह शुनासीरः पुनः स्वर्गे सुखिष्यति ॥ ४
दिशामधीशास्सर्वेऽपि सुखमेष्यन्ति वै किल । एवं विलप्यमानेऽस्मिंस्तदानीं केचनासुराः ॥ ५
शिरः कबन्धं पाणीतायानीयास्यैतमागताः । अर्पयांस्तनुजस्यैतान् दृष्ट्वा शूरः पुनर्द्विजाः ॥ ६
स्वपक्षदृष्ट्या शोकात् सन्धाय च यथाक्रमम् । मन्दोदरीभिस्तदा तत्र समायाताश्रुशोभना ॥ ७
दृष्ट्वा पुत्रस्य सांगानि पतितानि भूतले क्षणम् । विललाप सुदुःखार्ता विमुक्तकचबन्धना ॥ ८
विलोक्यायवयवानस्य स्पृष्ट्वाऽऽघ्राय पुनः पुनः । पद्माक्षरस्थितं वक्षः पृष्ठरूपं महामानस ॥ ९
आदाय तरसा पूर्वं दक्षयान् पक्षयान् खलु । यस्मात्तरेऽपि ते देवाश्रमं दुर्गमीदृशाम् ॥ १०
तेषां स्त्रियोऽपि सादृशीं प्राप्नुस्त्वीदृशीं दशाम् । एवं शूरो सुरास्सर्वे मन्त्रिणश्च मृतं सुतम् ॥ ११
विलोक्य व्यलपंस्तत्र नितरां मृत्युरोपमाः । समुत्थाय ततश्शूरो महता मन्युना ज्वलन् ॥ १२

इमेतान् क्षणेनाहं हत्वा तद्रुधिरैरिह । विधाय वीरपर्शंच जीवयिष्यामि तं मृतम् ॥ १३
इत्वा कांश्चिदसुराग्रक्षकानस्य वर्त्मणः । विधायान्तःपुरं भार्याः पद्मकोमलकादिकाः ॥ १४
यित्वा तदा दूतान् वीक्ष्य वाचमुवाचहि । क्षणेन यूयं सर्वेऽपि भानुकोपादिकान्मृतान् ॥ १५
त्वा सिंहमुखस्यात्र पुनरागच्छताधुना । इति तेन विसृष्टास्ते गत्वा सैंहमुखं पुरम् ॥ १६
सुराख्यं महावेगात् नानारत्नविराजितम् । दृष्ट्वा तत्रासुरश्रेष्ठं सिंहवक्त्रं महाबलम् ॥ १७
म्याञ्जलिहस्तास्ते विनयेनावदन्वचः । भ्राता तवासुरश्रेष्ठ त्वामाश्वानयतेत्यमून् ॥ १८
सान् प्रैरयत त्वं तत् निर्गच्छाशु विलंघनम् । इत्युक्तमात्रेण तदा पृष्टा वृत्तान्तमूचिरे ॥ १९
हवक्त्रेण दूतास्ते भानुकोपवधं द्विजाः । तच्छ्रुत्वा सहसा दैत्यो महद्दुःखमवाप्यच ॥ २०
पेनापि ज्वलन्भूयो लज्जानमितकन्धरः । उत्थाय रथमारुह्य चतुरंगबलैस्सह ॥ २१
जैश्छत्रैरनेकैश्च वाद्यनामारवैर्भृशम् । निर्गत्याकाशमार्गेण प्राप शूराधिपां पुरीम् ॥ २२
वरुह्य रथाच्छीघ्रमविशज्ज्येष्ठमन्दिरम् । तत्र दृष्ट्वाऽग्रजं शूरं प्रणनामासुरेश्वरम् ॥ २३
स्तदा समालिंग्य पाणिभ्यामनुजं बली । दुःखाक्रान्त इवाभाति असुरेश भवानिह ॥ २४
हमेतदिति पृष्टस्सन् निधायैनं निजान्तिके । क्रमाद्वृत्तान्तमुक्त्वाऽशु त्वं जित्वा तान्निपूप्रणे ॥ २५
नर्निकटमागच्छ ममानुज वराधुना । आहूतस्त्वेतदर्थंश्च भवानत्र मया खलु ॥ २६
ति शुत्वचः श्रुत्वा सिंहवक्त्रोऽब्रवीद्वचः । अनिशम्य वचो मे त्वं सर्वानेतानमारयः ॥ २७
ात्मानपरशिवं सत्यज्ञानानन्दस्वरूपिणम् । प्रोक्तवान्यालिशं तस्मादनुभूतं फलं त्वया ॥ २८
शस्यते विधिस्सर्वैर्निवारयितुमप्यहो । मद्वचो भवतस्त्वासीद्विषमत्यन्तदाहकम् ॥ २९
कर्मैतेनाधुनाऽहं तान् हत्वा सर्वान्रिपून् क्षणात् । आगत्य त्वन्मुखं भ्रातर्द्रक्ष्यामि न ततोऽन्यथा ॥ ३०
स्य तद्वचनं श्रुत्वा शूरपद्मा तथेति तम् । प्रेरयामास बलवान् बलवन्तं निजानुजम् ॥ ३१
तार्सिंहमुखोऽभ्येत्य गृह स्वं तत्र निर्मितम् । मांसं बहुविधं रक्तं क्षौद्रं क्षीरदधीन्यपि ॥ ३२
त्ससागरमानानि (नामानि) सुरया सह तान्यदम् । भुक्त्वा परिमलद्रव्यं लिप्त्वा दिव्यस्रगुज्ज्वलः ॥ ३३
नूतनं वसनं धृत्वा तथा नूतनभूषणम् । शिवेन दत्तं दण्डं च चक्रं कुलिशमेव च ॥ ३४
शूलमन्यानि देवानां मस्त्राण्यपि महान्त्ययम् । मायापाशं महाघोरमादाय सहसा बली ॥ ३५
स्खलक्षाश्वसंयुक्तरथे स्थित्वा मनोहरे । सेनाधिपैर्महावीरैः सस्तुतैश्च बलोत्कटैः ॥ ३६
असिघोरेण नितरां कृतोच्चनिनदेन च । धृतनानायुधेनैव लक्षवाहिनिकेन सः ॥ ३७
चतुरङ्गबलेनाशु निर्जगाम बहिः क्षणात् । मदवारीणि फेनानि गजानां वाजिनां तथा ॥ ३८
अभवन्नधिवन्नीमे तदानीं भूमिदेवताः । बभूव वाद्यघोषोऽपि जितांबुधिमहारवः ॥ ३९
अनेककोटिभिश्छत्रैर्ध्वजैरपि समुन्नतैः । आवृताशेषदिग्भागैस्संबाधं प्राप वर्त्म तत् ॥ ४०
गृध्रारुढेष्वपि तदा श्येना अपि रथे स्थिताः । अलातचक्रं सर्वत्र निपपात भयङ्करम् ॥ ४१
शुष्कवृक्षस्थिताः काका रुदन्तिस्म तदा भृशम् । अनेकदुर्निमित्तानि जातान्येवं तदाद्विजाः ॥ ४२
आयान्तमेवमालोक्य सिंहवक्त्रं ससैनिकैः । ब्रह्मविष्णुमुखादेवा भीताः स्कन्दमवाप्य ते ॥ ४३
प्रणम्य साञ्जलिकरा भक्तिनम्रास्सुरेश्वरम् । देवदेव दयासिन्धो समायात्यसुरो महान् ॥ ४४
सिंहवक्त्र इतिख्यातश्शूरस्यैषोऽनुजः परः । सहस्रमूर्धा बलवान् द्विसहस्रमहाभुजः ॥ ४५
सहस्रयोजनायाममहद्दृढभुजान्तरः । तथाण्डानि सहस्राणि शास्ति जित्वा रिपून्बलात् ॥ ४६
दिनमेकमसौ भूमिं पर्वतैरष्टभिर्गजैः । अष्टभिश्च महासर्पैः कूर्मेण विधृतामिमाम् ॥ ४७

बभारातिबलो मायी महापापो महाखलः । अत्तुं लोकानिमान् सर्वान् अण्डेनापि परं दृढः ॥ ४८
कदाचिन्मेरुमुत्पाट्य दण्डयत्यण्डकुण्डके । आस्फाल्य तमसारत्वात् युयोज च यथापुरा ॥ ४९
छायापादर्षद्वयं शंभुदत्तं शूलं बिभर्त्ययम् । पतज्ज्येष्ठो हरिं रुद्रानेकादशककोटिकान् ॥ ५०
न बाधते तथेशानं पालयंस्येव मार्गतः । दुरात्मायं महापापः ऋषिभिर्बाधतेह्यमून् ॥ ५१
तमेनं भीषणं घोरं महाबलपराक्रमम् । हत्वा रक्ष कृपासिन्धो देवदेव सुरानिमान् ॥ ५२
इति तेषां वचश्श्रुत्वा कृपया परया गुहः । तथेति वायुमभ्याशवर्तिनं सारथिं सुखम् ॥ ५३
रथमानय शीघ्रेण महान्तमिति सोऽब्रवीत् । तस्य तद्वचनं श्रुत्वा वीरबाहुस्समीपगः ॥ ५४
नमस्कृत्य गुहं साक्षात् सच्चिदानन्दरूपिणम् । अहमेव प्रभो सर्वानमुना रणमध्यगान् ॥ ५५
संहरिष्यामि तद्देव प्रेरयैनं तवानुजम् । कर्णे कृत्वा वचस्तस्य मुग्धस्मितमुखांबुजः ॥ ५६
प्रेरयामास युद्धाय वीरमेनं सुरेश्वरः । निरगाद्देववीरस्तु लक्षैरक्षाधिकैर्वृतम् ॥ ५७
तथा सेनाधिपैर्गत्वा स्वगृहं सहसा बली । दिव्यांबरधरः श्रीमान् द्रोणमालाविभूषितः ॥ ५८
धृतनानायुधस्तद्वद्रथमारुह्य सुन्दरम् । निर्ययावथमारूढरथैर्वीरैर्महाबलैः ॥ ५९
सहस्रवाहिनीसंख्यैर्भूतैरपि महायुधैः । रेणवश्च तदाऽत्यन्तमुत्थितास्सूर्यमावृताः ॥ ६०
आतोद्यानि च सर्वत्र ताडितानि महाबलैः । अभ्रंकषपताकाश्च धृताश्छत्राणि भूरिशः ॥ ६१
नानारत्नप्रभावन्ति प्रस्थितानि सदा पुरः । क्षणेन युद्धसंकेतस्थलमापुर्महाबलाः ॥ ६२
तदा समभवद्युद्धं सेनयोरुभयोर्भृशम् । ताडितातोद्यसंरावबधिरीकृतकर्णयोः ॥ ६३
भ्रमन्महारथांगस्वनेमिभीमसुनादयोः । नानाश्वघण्टाघर्घरिकामहाध्वनिविभीषयोः ॥ ६४
अश्वहेषागजश्रेष्ठबृंहितारावयोरपि । वृक्षपर्वतपाषाणद्रुमशूलास्त्रवर्षिणाम् ॥ ६५
भूतानामथ दैत्यानां मुञ्चतां सायकान् बहून् । तथा शूलासिशक्तानि तोमराणि वराण्यपि ॥ ६६
एवं पत्तिमहारावैर्युध्यतोः कटुवादिनोः । तयोः प्रवृत्ते लोकानां तुमुले भीषणे रणे ॥ ६७
तदानीमसुरास्सर्वे संभूय रणकोविदाः । तन्मुक्तान्पर्वतान्वृक्षानन्यानुच्छिद्य शीघ्रतः ॥ ६८
भूतानि द्रावयामासुस्सर्वाणि च महासुराः । निर्गत्य सहसा सिंहो भूतसेनाधिपो महान् ॥ ६९
दण्डेन महता दैत्यानास्फाल्यास्फाल्य कोपतः । अमारयद्बहूनुग्रान् गजानिव मृगाधिपः ॥ ७०
ततः प्रतस्थे तरसा दैत्यसेनाधिपो बली । हरितुल्यो रणे भीमो दशवक्त्रो युधिष्ठिरः ॥ ७१
ववर्ष स महापापो निशितान् सायकान् बहून् । छित्वा तान् देववर्योऽप्यं दण्डेन महता पुनः ॥ ७२
गरयोपरि महाकोपात् अघानोरसि निष्ठुरम् । छिन्नं कवचमस्याशु तदाघातवशात् द्विजाः ॥ ७३
दानवोऽपि ततः क्रुद्धो नितरां तस्य वक्षसि । भ्रामयित्वा पृथुं दण्डं मताडयदसौ खलः ॥ ७४
वेणुनामगमहद्दण्डः कठिनेऽत्र विघट्टनात् । पुनश्च दानवः पापो परशुं मार्गयन् सुरम् ॥ ७५
पुनोऽक्षासिनमहावेगात्तमभ्येत्यसुरोत्तमः । धूलीकृत्याशु दण्डेन बभञ्ज च धनुर्वरम् ॥ ७६
ततस्तु शक्तिं वैरयोऽसावत्यजत्सुरतापके । तामायान्तीं महावेगाच्चक्रेणाचिच्छिदत्सुधा ॥ ७७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे त्रयोविंशोऽध्यायः ॥

---

॥ अथ चतुर्विंशोऽध्यायः ॥

वीरबाहुना सिंहवक्त्रस्य पुत्राणां वधः ॥

छिन्नां शक्तिं समुद्वीक्ष्य दैत्योऽसौ पापकर्मकृत् । ज्वलन्निव महाकोपाद्दण्डमादाय भीषणम् ॥ १
नुनोद देववर्येऽस्मिन् दण्डपाणिरिव द्विजाः । तदाघातवशाद्देवस्स्रवद्रुधिरदूषितः ॥ २
स्थित्वा क्षणं जवेनासावागत्यैनं महासुरम् । कराभ्यां दण्डघोराभ्यामास्फालयदुरो महत् ॥ ३
स दुरात्मा स्रवद्रक्तो वक्त्रेण नितरां तदा । भूतले भूधरइव पतित्वा निधनं गतः ॥ ४
ततस्संभूय दैत्याश्च सर्वे तं युयुधुः क्रुधा । तद्दृष्ट्वा कनकः श्रीमान् लक्षमध्ये महाबलः ॥ ५
कनकाभो महावीरो महावेगेन चागतः । महता मन्युना सर्वान् द्रावयामास सायकैः ॥ ६
मद्दुरात्तत्पुरःस्थातुमशक्ता दुद्रुवुर्द्विजाः । ततो दैत्यबलाधीशो दुर्मुखो नाम पापवान् ॥ ७
निवर्त्य तानयं दैत्यान् द्रुतान् भीतान् महाबलः । ववर्ष मार्गणान् भीमान् पर्जन्यमेघमहाध्वनिः ॥ ८
भूतान्यपि तदात्यन्तं पर्वतान् शाखिनश्शिलाः । सम्भूय तस्मिन्पापिष्ठे तत्यजुर्महतारवैः ॥ ९
ततस्तु दुर्मुखः क्रुद्धो नितरां रथपञ्जकः । शतशः प्रविभिन्नोऽसावयुधत्तान्सुरान् प्रति ॥ १०
अतस्मै वीरमार्ताण्डो मायां विज्ञाय पापिनः । ज्ञानास्त्रं सन्दधे वीरो भूतानामधिपः क्रुधा ॥ ११
स संभ्रमं तदा दैत्यस्त्वयं केवलएव सः । गतमायो ववर्षाशु सहस्रं सायकान् शितान् ॥ १२
चिच्छेद तानयं देवस्सहस्रेण महाबलः । सप्तभिः कार्मुकं चापि दशमेकेन कञ्चुकम् ॥ १३
पूरयामास तद्गात्रमनेकैस्तु पुनश्शरैः । मूर्छामाप क्षणेनायं माययाऽदृश्यतां गतः ॥ १४
दुद्राव स महापापो रक्तैराप्लुतविग्रहः । भूतानि तं गतं ज्ञात्वा दुर्मुखं पापकर्मिणम् ॥ १५
रणे पलायितस्यानुयानं युक्तं न कस्यचित् । इत्यमालोच्य तान्याशु निवृत्तानि महारवैः ॥ १६
पलायन्तिस्म ते. दैत्या योद्धुमत्र समागताः । पलायनमवेक्ष्याथ दानवानामधीश्वरः ॥ १७
सिंहवक्त्रो महासत्त्वो निरगात्सहसा द्विजाः । तं दृष्ट्वा पर्वताकारं महाभीमं महास्वनम् ॥ १८
संभूय तानि भूतानि ववर्षुः पर्वतान् द्रुमान् । तन्मुक्तास्त्वनलैनैते पर्वता भूरुहा अपि ॥ १९
पुनरेव पतन्तिस्म दानवेशस्य धूपिताः । रेणुभावं गताः केचित् विशीर्णा भुवि सर्वतः ॥ २०
सबला मृगसिंहाद्याः पतिताश्शीघ्रमद्रवन् । ताराग्रहाणां मार्गोऽपि रुद्धस्तैः पतितैः पुरः ॥ २१
दृष्ट्वैतदसुरः कोपादवतीर्य रथात्तदा । तैरेव पर्वतैर्वृक्षैस्तानि भूतानि कानिचित् ॥ २२
प्रापयामास निधनं चोदितैश्च महासुरः । पाणिनाऽऽदाय भूपृष्ठे चान्यान्यास्फाल्य रंहसा ॥ २३
पर्वते कानि भूतानि रथे सौरे पराण्यपि । समुद्रेऽपि तथान्यानि द्वीपेषु च महाबलः ॥ २४
पादस्त्वन्यानि मुष्ट्यापि सम्ताड्योरगाद्य कानिचित् । अण्डभित्तावथ कानि भ्रामयित्वाऽऽशु तारयन् ॥ २५
ब्रह्मविष्ण्वादिलोकेषु चोत्क्षिप्योत्क्षिप्य कानिचित् । इन्द्रादिलोकपालानां स्थानेषु सुमहत्स्वपि ॥ २६
वरुणाग्नौ तथाऽन्यानि पाताले च पराण्यपि । क्षिप्त्वा पराणि भूमावप्याच्छादयेवं महाबलः ॥ २७
सर्वासु दिक्षु भूतानि सर्वलोकेष्वथाकिरत् । पादाघातेन भूतानि पादाभ्यां मर्दनेन च ॥ २८
पादेन मोदयित्वा च हस्तयित्वा शिरांस्यपि । शृङ्खाटया विलोपयाय हुङ्कारेण पराण्यपि ॥ २९
पाणिभ्यां कानि संपीड्य भक्षयित्वाच कोपतः । पुनश्च स महापापो मुसलैर्मुद्गरैश्शरैः ॥ ३०
हलापरशुशूलैश्च गिरिभिस्तरुभिः परैः । सन्ताड्य छिन्नगात्राणि मारयामास तान्ययम् ॥ ३१
एवं पशुषु भूतेषु मृतेषु द्विजपुङ्गवाः । महाविष्णुसुरेन्द्राद्याः पलायनमतिभवन् ॥ ३२

आरुरोह पुनश्चायं रथं पापोऽतिसुन्दरम् । ततोऽग्निकोपनः क्रुद्धो भूतेशो निर्ययौ क्षणात् ॥ ३३
वदन् पराक्रमं स्वस्य सिद्धचक्रममि द्विजाः । महाघोरं महाशूलं नुनोदास्मिन्महासुरे ॥ ३४
भग्नं वक्षसि तस्यैतत् पतित्वा सुदृढे भृशम् । पुनः कोपाग्निनाऽतीव दण्डमादाय देवपः ॥ ३५
भ्रामयित्वा महावेगात् कृत्वा कोलाहलारवम् । सन्ताड्य सारथिं तस्य निन्ये संयमनीं पुरीम् ॥ ३६
वीक्ष्य तत्सिद्धचक्रोऽसौ दण्डमादाय भीषणम् । प्रेरयित्वा क्षणेनैनं मोहयामास भूसुराः ॥ ३७
परिकल्प्य पुनस्सूतमन्यं दानवपुङ्गवः । सुमालिनमभिक्रोधाद्दाययौ भूतनायकः ॥ ३८
तस्मिन्नसुरवर्योऽसावुत्पाट्य गिरिमुन्नतम् । जघान मन्युनाऽत्यन्तं महान्तं पर्वतोपमे ॥ ३९
तमेव पाणिनाऽऽदाय कन्दुकं बालकाइव । मनुद्दे वचर्योऽस्मिन्महाबलपराक्रमः ॥ ४०
तदानीं मोहमापायं पतनादस्य वक्षसि । दण्डी तं पतितं वीक्ष्य दण्डमादाय देवपः ॥ ४१
अताडयदुरोमध्ये तस्य वज्रसुनिष्ठुरे । रेणुनामपमत्सोऽत्र निपातनवशात्तदा ॥ ४२
समागत्य पुनः कोपाद्व्याहुना सुरनायकः । ताडयामास दैत्येशं सिंहं मत्तगजो यथा ॥ ४३
तमेनमसुरः क्रूरो पादेनास्फाल्य भूतले । पातयित्वाऽमुना देवं क्षेपयामास चाम्बरे ॥ ४४
सपुनर्देववर्यस्तु निपत्यास्मिन्महाऽवात् । पञ्चशाखेषु सर्वेषु शाखामृग इव द्विजाः ॥ ४५
उत्प्लुत्योत्प्लुत्य कोपेन मर्दयित्वा पुनः पुनः । लाघवेन चचाराथ लतासु भ्रमरा इव ॥ ४६
विचरन्तममुं दैत्यः पाणिनाऽऽस्फाल्य मन्युना । मक्षिका मनुजा यद्वत् पिण्डीकृत्य नुनोद ह ॥ ४७
स तु दूरे पतित्वाऽऽशु मोहमाप सुरेश्वरः । सेनापतिषु सर्वेषु निर्जितेष्वमुना क्षणात् ॥ ४८
प्रस्थितास्सहसा वीरा वर्षयन्तश्च सायकान् । तच्छरास्तस्य सर्वाङ्गे पुष्पवृष्टिरिवापतन् ॥ ४९
ततस्तु दानवेशोऽसावचतीर्य रथाद्द्रुतात् । कृतकोलाहलारावः केसरीव गजान्रिपून् ॥ ५०
गृहीत्वा पाणिभिः कोपादास्फाल्यैतान्परस्परम् । पादाघातेन च परानुत्क्षिप्य सरथान् परान् ॥ ५१
हत्वा परेषां बलवानन्यथान्योन्यमेव सः । एवं बहुप्रकारेण तान् वीरानजयत् द्विजाः ॥ ५२
दुद्रुवुश्च ततस्सर्वे महाभीता मृगाइव । ततस्तु वीरवर्योऽपि वीरबाहुस्समीक्ष्य तान् ॥ ५३
चापमादाय सुदृढं वर्षयामास सायकान् । महापापेषु दैत्येषु घर्मकालघनाइव ॥ ५४
मृतिमापुस्तदा दैत्या बहवः पापकर्मिणः । चतुरंगबलं चापि क्षणेन निधनं गतम् ॥ ५५
भूरीणि च कबन्धानि ननृतुश्शोणितौघसि । बभ्रमुश्च तदा कङ्कश्येनाद्याश्च पिशाचकैः ॥ ५६
दध्यैतस्य तनुत्राश्शतसंख्या दुरासदाः । वर्षपञ्चशरवर्षाणि वीरबाहौ सुरेश्वरे ॥ ५७
सोऽपि तेषु महाकोपाद्ववर्षानेकसायकान् । अनेककोटिसंख्याकान् अरयंस्ते महाबलाः ॥ ५८
तावद्भिस्तान् समुच्छिद्य धनूंषि च रथानपि । भञ्जयित्वा महाकोपाच्चकार च महारवम् ॥ ५९
ततस्सर्वेऽपि ते दैत्यास्संभूयैनं महाबलम् । धनुषा योद्धुमेतेन शक्तः कोऽपि न विद्यते ॥ ६०
इति खड्गान्समादाय धृतखड्गेन तेन च । अयुध्यन्सुमहाराचा नानाशिक्षाप्रकारतः ॥ ६१
खड्गेनापि यदा जेतुमशक्यो दैवनायकः । आययुः परिदग्धुं (परितस्तं) तेहन्तुकामा महाखलाः ॥
तदैतान् भूसुरश्रेष्ठा वीरबाहुर्महाबलः । चिच्छेदैकेन बाणेन खड्गेन निशितेन हि ॥ ६३
हत्वा तानसुरान् पापान् सिंहवक्त्रसुतानथ । आरुरोह पुनर्दिव्यं रथं परममङ्गलम् ॥ ६४
ववर्षुश्च तदा देवा पुष्पाणि परया मुदा । तत् दृष्ट्वा सिंहवक्त्रोऽसौ नितरां खिन्नमानसः ॥ ६५
एक एव सुतानेतान् हतवानिति लज्जया । कोपेन च ज्वलन् पापो मनसा चिन्तयन्निदम् ॥ ६६
सर्वानेतान् भक्षयित्वा चामुना बलशालिना । सर्वान् लोकान् हनिष्यामि कोपोपशमनाय च ॥ ६७

इति वीरस्य निकटमापाद्य सत्योऽसुरः । अत्यग्रहीत्तमायान्तं वीरबाहुरपि द्विजाः ॥ ६८
तमागतमसौ दैत्यः प्रोवाच वचनं तदा । नचासि त्वं गुहो लक्षवीरेष्वेकोऽथवा पुनः ॥ ६९
तथा नवसु वीरेषु दूतोवा सत्यतो वद । इति पृष्टस्सधर्मात्मा व्याचष्टे तत्पुरो बली ॥ ७०
दासोऽहं देवदेवस्य गुहस्यामिततेजसः । हन्तारमसुरान् विद्धि दूतभावेन मां पुरा ॥ ७१
आह्वयन्ति सुरश्रेष्ठा वीरबाह्वाख्ययाच माम् । योवा कोवाऽसि किं तेन तव दैत्याधुना वद ॥ ७२
इति गंभीरया वाचा वदन्तं देवनायकम् । दुर्बलासुरहन्तृत्वे किं बलं तव दूतक ॥ ७३
हतवानसि मत्पुत्रानिदानीं बालकानिह । तं त्वां क्षणेन हत्वाऽहं श्येनादीन् तर्पयामि तान् ॥ ७४
बलं व्यपोहयिष्यामि तव स्कन्दस्य शीघ्रतः । भूतानां देवतानांच वीराणां रणमध्यतः ॥
एवं पराक्रमं वान्यं स्वस्यायमवदत्तदा ॥ ७५

इतिगदितमशेषं सिंहवक्त्रेण वीरो वचनमतिकटुत्वान्मन्दमन्दं निपीय ।
श्रवणवरपुटाभ्यामुद्गमत्कोपमुग्र (वह्नि) स्त्रिजनयनविलाभ्यामास्थितोऽयं मुनीन्द्राः ॥ ७६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे चतुर्विंशोऽध्यायः ॥

---

॥ अथ पञ्चविंशोऽध्यायः ॥

सिंहवक्त्रस्य मायापाशेन वीरबाहु मुखादीनां उदयगिरौ प्रक्षेपणम्, गुहेन युद्धाय प्रस्थानंच ॥

ततस्सतु दशास्त्राणि निशितानि सुरेश्वरः । तत्याज तस्य सुहृदे वक्षोमध्ये दुरात्मनः ॥ १
निपत्य तत्र ते भग्नाः पतिता भूतले यदा । तदा दैत्यवरस्तस्मिन् भीषणं दण्डमुज्ज्वलम् ॥ २
नुनोद समयं वीरश्चतुर्भिश्चाच्छिनच्छरैः । पुनस्सहस्रं तत्याज तस्य मूर्ध्नि महद्रुषा ॥ ३
निपात्य तानि रेणुत्वमगमंस्तत्र भूसुराः । नुनोद सिंहदत्तलंच पुनः कोपेन भीषणम् ॥ ४
छेत्तुं तद्वीरबाहुस्तु सहस्राणि मुमोच हि । छित्वा तान्येष तं शीघ्रादाययौ तरसा यदा ॥ ५
पुनस्सहस्रं तत्याज वीरस्तत्प्रति सत्वरम् । उच्छिद्य सहसा तानि चाभ्यागादीरमनु द्विजाः ॥ ६
ससंभ्रमं तदा वीरः खड्गमादाय रंहसा । चिच्छेदैतन्महाघोरं वीरबाहुस्सुरेश्वरः ॥ ७
तुष्टिमापुस्तदा देवा वीक्ष्य वीरबलं भृशम् । वीरबाहुः पुनः क्रोधादस्त्रं पाशुपतं महत् ॥ ८
प्रेरयामास बलवान् सर्वसंहारकारकम् । तदैव सहसा दैत्यो युयोजैतद्विभीषणम् ॥ ९
परस्परमुभे युध्वा निवृत्ते ते यथागतम् । अभिदैत्य तदा वीरः प्रापाश्चर्यं मतस्त्वयम् ॥ १०
न मया शक्यते हन्तुं गुहेनायं विना रणे । संहरिष्यामि तत्सेना इति वीरः क्रुधा ज्वलन् ॥ ११
मुक्त्वा चतुर्दशनाराचान् हतवानस्य सारथिम् । ततः कोपेन दैत्योऽपि गदां तत्याज भीषणाम् ॥ १२
पतिता सा शरीरेऽस्य भंगमाप सहस्रधा । अथ देवस्सहस्रेण रथं चिच्छेद मन्युना ॥ १३
तथा भूतानि सर्वाणि वर्षयन्ति महीधरान् । वृक्षान् लगुडपाषाणान् परिघमुद्गरासुरम् ॥ १४
ततस्सिंहमुखः कोपाद्धृषमादाय चापम् । सहस्रचापनादाय सन्धायैतानि शीघ्रतः ॥ १५
कृत्वा गुणध्वनिं भीमं बहुकोटिशरानयम् । ववर्ष तेषु भूतेषु कृतकोलाहलारवः ॥ १६
तदा मृतानि भूतानि बहूनि छिन्नवक्षसः । निपेतुश्च ... सत्पर्वतेषु सरित्स्वपि ॥ १७
काननेषु समुद्रेषु द्वीपेष्वाशासु चांबरे । ज्योतिश्चक्रे रथे भानोर्ब्रह्माण्डे पतितान्यपि ॥ १८
लोकालोकेषु सर्वत्र सीघ्रसवेन भूसुराः । अभाविद्धशरीरैर्तनास्ति भग्नांगमये ॥ १९

वीरबाहुरपि क्रोधादसुरास्तद्गदाघ्नहन् । अनेकैस्सायकैस्तीक्ष्णैरमारयदसौ क्षणात् ॥ २०
यत्र यत्र शरास्तस्य गच्छन्ति सुमहाजवात् । तत्र तत्र सुरेशोऽपि स्वकत्वाऽस्त्राण्यच्छिनच्च तान् ॥ २१
तदेतदमरास्सर्वे त्रिलोक्याश्चार्यमापिरे । ततस्सिंहानन क्रुद्धो वीरबाहुमुवाच तम् ॥ २२
वीरोऽपि परुषा वाचमुवाचैनं महासुरम् । तत कोलाहल कृत्वा दैत्यो दशसहस्रकान् ॥ २३
तस्याज्ञ तस्मिन्देवेशे महाघोरान् विमोचयन् । दशलक्षैश्शरैर्वीरो विलयादिव तान् क्षणात् ॥ २४
छित्वा हतमहाराधो सहस्राणि सहस्रशः । चरैस्संसिद्ध पापिष्ठे ग्रीष्मकालघनाइव ॥ २५
स तु दैत्य पुनः क्रोधाद्दशलक्षैर्महेषुभि । भञ्जयित्वा तदीयानि धनूंष्यनेककोटिकान् ॥ २६
सहस्रकोटिसंख्याकान्मुक्त्वा तानच्छिनत्सुर । ततस्ससम्भ्रम दैत्यो द्विसहस्रशरैर्वरै ॥ २७
चिच्छेद चाप वीरस्य सुदृढ त्वरया सह । चापान्तरग्रहाद्वीर प्रागेवानेककोटिभि ॥ २८
स्वचक्रुधिरसंपांक्तमकरोत्पुनरेव स । तथाऽपि वीरस्सुदृढ आनमय्य धनुर्वरम् ॥ २९
शतसाहस्रसंख्याकानन्यैर्दानवाधिप । छित्वैतान् स तु कोपन लक्षसंख्यैश्शितैश्शरै ॥ ३०
असुरेशो बहूनस्मिन्नवर्ष सुमहारणम् । देवपस्सहसा सर्वान् उच्छिद्यैतान्महाबल ॥ ३१
लक्षेण भूयश्शराणि सहस्राणि परित्यजन् । बभञ्ज सुन्दर तस्य रथमत्यन्तमुन्नतम् । ३२
तत कोपन सिंहास्यो पदाऽन्य रथमुज्ज्वलम् । आरुरोह महावेगात् कम्पयन्निव मेदिनीम् ॥ ३३
तदानीं देवपर्याऽय अनेकान्मार्गणान् शितान् । मुक्त्वा तत्करचापानि महाघोराणि शीघ्रत ॥ ३४
सहस्राण्यच्छिनत्कोपात् द्विधा तद्ब्राह्मणोत्तमा । तदा भूतानि सर्वाणि चक्रु कोलाहलारवान् ॥ ३५
दृष्ट्वैतत्तु पापात्मा दह्यमानो रुषाग्निना । महाघोरं विचिन्त्याशु मायापाश महाबल ॥ ३६
आदाय सहसा सर्वान् रिपूनुद्गपयर्यसे । पातयेत्यभिमन्याथ तुनोद हि महीसुरा ॥ ३७
विनिर्गत यदा घोरं गाढान्धतमसावृतम् । महावेग महाराव भीषयन्सकलान्रिपून् ॥ ३८
तदतद्वीक्ष्य मायेति बुबुधुर्देवभूमिपा । तदैव भूतैस्सेनेशान् वीरबाहुमुखानपि ॥ ३९
बध्वा तत्र गिरौ सर्वान् पातयित्वा स्थितावत । ततस्सिंहमुख पापो कृत्वा कोलाहलारवान् ॥ ४०
क्वगतैतेऽधुना बाल कि युद्धावासमीभ्रंशम् । इति पप्रच्छ दूतान् स्वान् योधिनस्तैर्महाबल ॥ ४१
हेमकूटपुरे रम्ये निवसत्येव षण्मुख । सहस्रपादिनीभूतै सेविताङ्घ्रिपङ्कज ॥ ४२
इत्यूच दानव पापी तत्रगत्वा क्षणादमुम् । आगमिष्यामि जित्वात्र भीतोऽथ नितरामिति ॥ ४३
इत्युक्त्वा दानवान् सर्वान् प्रतस्थे सहसा स्वयम् । तदेतत्सर्वमालोक्य मातरिश्वा क्षणाद्गुहम् ॥ ४४
वीरबाहुमुखास्सर्वे मायापाशेन बन्धिता । पातिताश्च प्रमोस्वामिन् उदयाद्रौ विधवत ॥ ४५
अमुना दानवेनैव लोपयामास काऽधि । श्रुत्वा वायुमुखादित्थ देवसेनापति क्षणात् ॥ ४६
मयत्नाऽऽमनासिंहाननोऽय येति दानव । पृष्ठाऽध्यधायी देवेशो वायुनाऽऽयास्यतीरथम् ॥ ४७
तत प्रतस्थे भगवान् युद्धाय हसमानस । आनीते ब्रह्मणा रम्ये पादुके मणिचित्रिते ॥ ४८
धृत्वा पादांबुजाभ्यां ते तीर्त्वा द्वाराणि वेश्मन । आरुह्य वायुना नीत स्यन्दनमुज्ज्वलम् ॥ ४९
विविधैर्गन्धकुसुमा विचित्रैर्कुसुमावृत । विमतानुममरवचामरासक्तपाणिना ॥ ५०
मत्स्यमासुर्दशितनालवृन्दवैरपि । चन्द्रार्काभ्यां समस्मुखाग्रचरवाभ्यां च पार्श्वयो ॥ ५१
धृतधूम्रप्रदीपन वह्निना दिवसे तथा । भृगोश्चन्द्रधर्मेण वीणागीतानुयायिना ॥ ५२
पतत्पादर्दर्पणपुरो रक्षोदिपव च । वरदण्डाभिधर्वेण वज्रेनानुजीविना ॥ ५३
सुपर्वदीपदीपसूदनदेन तथैव च । घृतशृङ्गेन महता वेदानेन विपाचिना ॥ ५४

कृतोपचारैरमरैर्गुहोऽसौ निर्ययौ यदा । तदा बभूवुर्वाद्यानामारावा युगपद् भृशम् ॥ ५५
सितच्छत्राणि भूयांसि ध्वजौघाश्च प्रतस्थिरे । परोक्षरचिताः केचित् ध्वजाः परमशोभनाः ॥ ५६
ऋषयश्च कृतस्तोत्रा गायन्तो नारदादयः । पठन्निजापदानाश्च वन्दिनः कलकण्ठकाः ॥ ५७
इतस्ततश्च धावन्ति भूतानि सुबहून्यपि । आयुधान्यतिघोराणि भ्रामयित्वा कराग्रतः ॥ ५८
अश्रूयत कलारावः काहलीनां मनोहरः । जय देवादिदेवेश भक्तवत्सल शिखिध्वज ॥ ५९
रक्ष सर्वान्सुरानेनान् भवद्भक्तिपरायणान् । आययावाययौ दैत्यकुलसंहारकारकः ॥ ६०
आययौ देवसेनानीराययावखिलेश्वरः । आययौ पार्वतीसूनु राययावरिकेसरी ॥ ६१
महादेवकुमारोऽयमाययावसुरान्तकः । धृतशक्त्यायुधो भास्वत्करः स्कन्दस्समाययौ ॥ ६२
समाययावयंस्वामी भक्तानां रक्षणोद्यमः । लीलया क्रीडते लोकान् लोकवन्द्यो गुहाशयः ॥ ६३
गुहः परमकल्याणगुणोऽमितपराक्रमः । समाययौच देवेशः सर्वसंपत्परीवृतः ॥ ६४
सर्ववित्सर्वनेता च सर्वदेवाभिवन्दितः । सर्वाराध्यो जगत्सृष्टिस्थितिसंहारकारकः ॥ ६५
सर्वेश्वरसमग्रस्यशंभोः प्रेमास्पदोऽनिशम् । अणिमादिगुणोपेतः स्वतन्त्रः सर्वकृत्सदा ॥ ६६
सर्वेषां प्राणिनां श्राव्यस्सर्वश्रोत्रसुखावहः । पटहादिमहारावानघःश्वसुदेशजः ॥ ६७
एवमादिमहारावं व्याप्तलोकत्रयं गुहः । शृण्वन्युद्धक्षितिं प्राप सहवीरैर्महाबलैः ॥ ६८

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे पञ्चविंशोऽध्यायः ॥

---

॥ अथ षड्विंशोऽध्यायः ॥

सिंहवक्त्र भक्षितानां भूतानां श्री गुहेन पुनरानयनम् ॥

तदानीं देवतास्सर्वा ब्रह्मविष्णुपुरोगमाः । दूरीकृत्य स्वयं वीरैः स्थितवान् कुत्रचिद्गुहः ॥ १
तदा समभवद्युद्धं भूतानामसुरैर्भृशम् । वृक्षपर्वतपाषाणवर्षिणां सुदुरात्मभिः ॥ २
भङ्गमापुस्तदा दैत्याः पीडितास्तैर्महाबलैः । दृष्ट्वैतत्सिंहवक्त्रस्तु निरगाद्घोरविग्रहः ॥ ३
अग्रहीषुस्तमायान्तं महाघोरं महाकृतिम् । वृक्षपर्वतपाषाणैर्भूतानि युगपत् द्विजाः ॥ ४
तान्ययं द्विसहस्रैः स्वैः करैरादाय शीघ्रतः । विवृत्यास्यं महाकायः पातयामासचोदरे ॥ ५
नासापुटेभ्यो निर्गत्य श्रोत्ररन्ध्रेभ्य एव च । तदा भूतानि तस्याशु दुद्रुवुः कानि दूरतः ॥ ६
उदरस्थानि चान्यानि तस्य छेत्तुं महोदरम् । स्थितान्याशु द्रवन्ति स्वैरायुधैरत्रभूसुराः ॥ ७
बुभोजैवं महापापस्तानि सर्वाणि दानवः । सहस्रवाहिनीसंख्यासंख्यातान्याशु भीषणः ॥ ८
पुनश्चवीरान्सेनेशानन्यानप्यभुजत्तथा । स्थितस्तदा गुहस्त्वेको वीक्ष्य सर्वमरिंदमः ॥ ९
तदेतत्सर्वमालोक्य दूताः केचन शीघ्रतः । शूरपद्मान्तमागत्य प्रोचुश्चैवं यथाक्रमम् ॥ १०
वीरबाहुमुखान्वीरान्मायापाशवशंगतान् । भक्षितानपि भूतानि निशम्य स्वकनीयसा ॥ ११
दत्वा तेभ्यस्तदास्त्राणि दूतेभ्यस्सोऽसुराधिपः । सुमनोहरवस्त्राणि भूषणान्यपि तोषवान् ॥ १२
प्रैरयच्च पुनर्दैत्यान्यत्रास्ते स्वानुजो महान् । समुत्थायाऽऽसनात्सैंहादारोहच्च गोपुरम् ॥ १३
वीक्षितुं स्वानुजं दैत्यं भक्षकं सकलद्विषाम् । गोपुराग्रे स्थितश्शूरः स्कन्दमैक्षत् रणस्थले ॥ १४
भीमरूपं महाकायं सिंहवक्त्रं समीक्ष्य सः । तुष्टिमाप परां तत्र स्थितवान् पुनरेव च ॥ १५

संहरन्तोऽसुरान्पापान् ब्रह्मविष्णुहरा इव । मनोवायुमहावेगान् शोषयन्तो महाघनान् ॥ ५०
समुद्रान्वडवावह्निमर्कादीनां रथानपि । ब्रह्माण्डमेरुभूम्यादीन् स्फुटयन्तो महारवाः ॥ ५१
छित्वा शिरांसि दैत्यानां दोंषि गात्राणि भूरिशः । तथा गजांश्च रथानश्वान् छित्वा छित्वा सहस्रशः ॥ ५२
विकीर्यन्तोऽण्डमध्येऽस्मिन् भित्वाण्डं पार्थिवं पुनः । प्रविशन्तश्च तोयेषु तत्रस्थेषु महत्स्वमी ॥ ५३
पंक्तिकेष्वथ तेष्वेते रक्तक्षोदेन भूरिणा । प्रविश्याण्डानि चान्यानि तत्रस्थानसुरान् बहून् ॥ ५४
जघ्नुर्मुक्त्वा सुरानन्यानृषीनपि महीसुराः । अहो गुहस्यमहिमा केन वा ज्ञायते द्विजाः ॥ ५५
यदेको मुक्तमात्रेण बाणः कोटिगुणो भवेत् । कोटिस्सहस्रगुणिता कोट्या बाणा महाजवाः ॥ ५६
असंख्याकास्ततस्तेतु व्याप्याण्डानि बहून्यपि । अमारयन्महापापानसुरानेवमुज्वलाः ॥ ५७
ब्रह्मविष्णुमुखास्सर्वे देवाः कंपितविग्रहाः । उन्मील्य नयनान्याशु भीत्या भक्तकृपाणयः ॥ ५८
पाहि नो भगवन् स्वामिन् देवदेव कृपाकर । मारयाशु महापापानसुरान् भक्तवत्सल ॥ ५९
सुब्रह्मण्य सुरश्रेष्ठ रक्ष रक्ष सुरानिमान् । इति तुष्टुवुरीशानं गुहं परममङ्गलम् ॥ ६०
अचिन्त्यमहिमाधारमस्खलद्वैभवं तदा । क्षणेन तेषु दैत्येषु नष्टेषु रणमण्डले ॥ ६१
ननृतुश्च कबंधानि भूयांसि हि विभीषणम् । कंकादयोऽपि मिलिता वृकगोमायुभिस्तदा ॥ ६२
सिंहाननस्तदा पूर्वदेहं प्राप विमूर्छितः । त्यक्तमायो महादेहो मृतान् दैत्यान् स्वकीयकान् ॥
मिलितानिच भूतानि वीक्ष्य क्रुधा ज्वलत् ॥ ६३

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे षड्विंशोऽध्यायः ॥

---

॥ अथ सप्तविंशोऽध्यायः ॥

श्रीगुहेन सिंहमुख वधः ॥

सहस्रं धनुषामाशु गृहीत्वा सुमहारवः । दशलक्षशरान्देवे मुमोच सहसाऽसुरः ॥ १
छित्वाऽमून् पार्वतीसूनु स्सहस्रेण पुनः क्रुधा । युयोज तस्मिन् पापिष्ठे सहस्राणि महीसुराः ॥ २
दशलक्षं मुमोचाथ शरान् घोरान् सुरेश्वरे । स्फुरत्कोपमहावह्निव्याकुलाशो सुराधिपः ॥ ३
तावदेवाशु तान्बाणानच्छिनल्लीलया गुहः । तस्मिंस्तदाननः कोपात्सहस्रैस्स्सायकैः पुनः ॥ ४
बिभेद वक्षः पापात्मा स्कन्दस्तुतं महायशम् । संबभूव तदा तस्य रुधिरौघस्तु सारथेः ॥ ५
तं दृष्ट्वा षण्मुखः कोपात् निशितान् सायकान् शतान् । रथं चिच्छेद दैत्यस्य प्रेरयित्वा महाबलः ॥ ६
ततस्ससंभ्रमं दैत्यस्समादाय शरान्बहून् । ववर्ष देवे क्रोधेन घर्मकालपयोदवत् ॥ ७
तदानीमेव तान् सर्वान् भित्वा बहुभिराशुगैः । चिच्छेद कार्मुकाण्यस्य सहस्रं युगपत् क्रुधा ॥ ८
सहस्रसंख्यै रिषुभिः पार्वतीनन्दनः क्षणात् । छिन्नचापोऽसुरःकोपात् शूलमादाय भीषणम् ॥ ९
मुमोच देवनाथेऽस्मिन् कृतकोलाहलारवः । आगतं तं महाघोरं अन्तराले वीक्ष्य देवपः ॥ १०
बिभेद सायकैर्दीप्तैर्दशभिराशु सः । पुनस्तत्याज पापिष्ठ सहस्राणि सुराधिपः ॥ ११
तानि सर्वाणि दण्डेन विनिवार्यासुराधमः । कृतकोलाहलारावः स्कन्दस्योपरि चागतः ॥ १२
समायान्तं तदा वीक्ष्य षण्मुखो दानवाधिपम् । सप्तभिर्निशितैर्बाणैः अच्छिनत्तत्करं शुभम् ॥ १३
अपरेणासुरो भूपर्लं दण्डं भीषणं भृशम् । समादाय तुतोदास्मिन् देवेशे मन्युना ज्वलन् ॥ १४

तमायान्तं महाभीमं वीक्ष्य दंडं सुरेश्वरः । सहस्रेण शरैः कोपादच्छिनत्सहसा द्विजाः ॥ १५

पुनः पाशं महाघोरं प्रेरयामास दैत्यपे । चिच्छेद तत्सहस्रेण सुब्रह्मण्यस्सुराधिपः ॥ १६

ततः कोपेन महता द्विसहस्रकरैः गुहम् । बन्धितुं सुमहाटोपरवपूरितदिङ्मुखः ॥ १७

समाययौ महावेगादसुरेशो महाबलः । तमायांतं तदा वीक्ष्य विस्तृतात्मकरं गुहः ॥ १८

द्विसहस्रशरैस्तस्य करांश्छित्वाप्यपातयत् । पतिताः पाणयो भूमौ महान्त इव भूरुहाः ॥ १९

प्ररोहन्ति स्म भूयोऽपि पाणयस्तस्य पापिनः । तैस्समादाय तान्पाणीन् छिन्नानेव महासुरः ॥ २०

महाकिलिकिलारावो महावेगो महत्क्रुधा । मायया त्वसुरारातावक्षालोत्यमहामदः ॥ २१

तदा समीक्ष्य तं पापं भ्रुकुटीकुटिलेक्षणम् । छित्वा शिरांसि तस्यायं सहस्रं निशितैश्शरैः ॥ २२

द्विसहस्रैर्महाघोरैः दोषि सर्वाणि चाच्छिनत् । संबभूवुर्महाघोरा मूर्धानस्तस्य दोष्ष्वपि ॥ २३

यथापूर्वं तमुद्वीक्ष्य देवास्सर्वे सुदुर्गताः । प्रापुराश्चर्यमत्यन्तं भीत्या व्याकुलमानसाः ॥ २४

ससार पार्वतीसूनुर्वीरयागं पुराकृतम् । वटवृक्षसमीपे तैस्सुरैरेभिरात्मनः ॥ २५

तस्मादेव प्ररोहन्ति पाणयोऽस्यापि पापिनः । इति ध्यात्वा यदा तस्थे सुब्रह्मण्यस्सुराधिपः ॥ २६

तदा महासुरः पापो नजानाति भयान्तरम् । ऐश्वर्यं मद्बले शौर्यमजरामरणोत्तमम् ॥ २७

छिन्नानां पुनरुत्पत्तिः पाण्यादीनांच बालिश । नमुञ्चामि सुरान् बद्धान् मुंचासि त्वां शिशुं पुनः ॥ २८

यत्रकुत्रापि शीघ्रेण गच्छ गच्छ यथामति । तस्य तद्वचनं श्रुत्वा किं जल्पति भवानिह ॥ २९

दुरात्मन् जल्पनं मास्तु क्षणमात्रं विलोकय । त्वां हनिष्याम्यवक्षेन सत्यमुक्तंनचान्यथा ॥ ३०

इत्याह भगवान् स्कन्दो गंभीरं ब्राह्मणोत्तमाः । तच्छ्रुत्वा स महापापो महाकोपो महारवः ॥ ३१

महारंभेण निर्गत्य द्विसहस्रकरैर्गिरीन् । तावत्संख्यान्समुत्पाट्य नुनोदास्मिन्सुरेश्वरे ॥ ३२

शतेन तानयं वीरदशानां वेणुनां तदा । प्रेरयित्वा सहस्राणि सन्दधे वक्षसि क्रुधा ॥ ३३

प्रघवद्रुधिरासृष्टोऽप्ययंपापस्तनरस्तयन् । गिरीनुत्पाटयामास महतो भीषणारवः ॥ ३४

तदानीं तस्य सर्वाणि शिरांस्यच्छिनदुत्क्रुधा । सहस्रेणशरैः स्कन्दः केवलं लीलया द्विजाः ॥ ३५

उत्पन्नानि पुनस्तानि शिरांस्यस्य दुरात्मनः । यथापूर्वं तदाद्रींस्तान्नुनोद सुमहारवः ॥ ३६

द्विसहस्रशरैः स्कन्दश्छिन्नैस्तैरनान्महागिरीन् । यमस्य दोंपि सर्वाणि दैत्यस्यास पुनर्द्विजाः ॥ ३७

उत्पन्नानिच सर्वाणि पुनः पुनरसौ गुहः । चिच्छेदाप्यधिकं वारं सहस्रादपि पापिनः । ३८

निपेतुः पाणयस्तस्य शिरांसि सुमहान्त्यपि । दिक्षु सर्वासु पाताले भूनभोवारिधिष्वपि ॥ ३९

पर्वतादिषु सर्वत्र नीरन्ध्रेण तदा भृशम् । बिभ्युस्सर्वे सुरश्रेष्ठास्तदारवभयाकुलाम् ॥ ४०

पतितेषु शिरस्स्वेषु विवृतास्तेषु पक्षिणः । मृगादयो महद्बीला गुहाभ्रान्त्या प्रविश्यते ॥ ४१

मग्नः पिहितवक्त्रेषु तदा सर्वो महीसुराः । एवं छिन्नेषु सर्वेषु चोत्पन्नानि यदा पुनः ॥ ४२

तदा मुक्त्वा शिरस्त्वेकं पाणिद्वयमयं गुहः । अच्छिनत्तस्य सर्वाणि शिरांसि महतः करान् ॥ ४३

प्ररोहंश्च यथापूर्वं पाणयोऽस्यापि पापिनः । पुनः पुनरहोविभा यदा दैत्यस्य रंहसा ॥ ४४

तदानीं पार्वतीसूनुर्भर्त्संयामास तत्क्रुधा । नासाग्रे स्वांगुलिं हत्वा मायेति मनसास्मरन् ॥ ४५

ध्वंसगतानि तान्याशु कल्पे तच्छिरो यथा । गुहाज्ञया शिरांस्यस्य पाणयोऽप्यसुरेशितुः ॥ ४६

एकत्रोचितमूर्धानं द्विपाणिं वीक्ष्य तं गुहः । उत्पत्स्यंते क्षणादेव छिन्नान्यपि शिरांसि मे ॥ ४७

इत्यमुक्तं त्वया भ्रांत पश्यावामीदृशीमिमं । इति प्रोवाच भगवान् स्मयमानमुखांबुजः ॥ ४८

तच्छ्रुत्वा स महापापो दानवः कोपविह्वलः । पश्य वीर्यं ममेदानीं एकमूर्धोऽपि बालिश ॥ ४९

इत्युक्त्वा सुमहारावस्सुब्रह्मण्यमभिक्रुधा । गिरिमेकं समुत्पाट्य नुनोद सुरनायके ॥ ५०
चिच्छेद तं गिरिं शीघ्राच्छरेणैकेन षण्मुखः । ततः कोपाकुलो दैत्यो दण्डमादाय भीषणम् ॥ ५१
शक्त्या शरैश्च भवतो योद्धुं सामर्थ्यमेव हि । नमयान्यायुधेनात्र बालेत्युक्त्वा नुनव द्विजाः ॥ ५२
तदानीं पार्वतीसूनुः कुलिशं भीषणं महत् । अनेककोटिसवितृसमतेजोभिरुज्ज्वलम् ॥ ५३
प्राहिणोत्सुमहारावं भीषयत्सकलं जगत् । निर्गत्य तन्महावेगाच्छित्त्वा दंडं तदीयकम् ॥ ५४
पतित्वा तदुरोमध्ये भित्त्वैतत् क्षणमात्रतः । विनिर्ययौ समादाय प्राणांस्तस्य दुरात्मनः ॥ ५५
स्नात्वांभसि च गङ्गायाः पुनरावृत्य शीघ्रतः । करमाप यथापूर्वं स्कंदस्यैतत् द्विजोत्तमाः ॥ ५६
तदानीं सदुरात्मापि पतित्वा भूतले क्षणात् । उद्गिरन्रुधिरस्रावमास्येन परितो भृशम् ॥ ५७
लुठन्सितस्ततस्तूर्णं मुमोच प्राणमारुतम् । मृतं तमेनं पापिष्ठं दृष्ट्वा तुष्टास्सुराधिपाः ॥ ५८
सुगन्धीनि विचित्राणि मुमुचुः कुसुमानि ते । चक्रुः कोलाहलारावान् भूतान्यपि तदा भृशम् । ५९
मेळयित्वा गुहो वीरान् भूतान्यपि सुरान्परान् । महता वाद्यघोषेण भूतकोलाहलेन च ॥ ६०
हेमकूटं समागत्य भवनद्वारि शीघ्रतः । अवरुह्य रथात् स्वस्य वीरान् सर्वान् गृहान्प्रति ॥ ६१
प्रेरयित्वा विवेशान्तःपुरं रम्यं सुरैस्सह । आरुरोह वरं सैंहमासनं ब्राह्मणोत्तमाः ॥ ६२
एतदाख्यानसनिशं यश्शृणोति पठत्यपि । सर्वान्कामानवाप्नोति विजयं शत्रुसंहतौ ॥ ६३
श्रुत्वाऽगस्त्यमुखादेतद्रामो दशरथात्मजः । अजपद्रावणमुखाप्राक्षसान्पापकारिणः ॥ ६४

इति श्रीस्कान्दे महापुराणे शांकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे सप्तविंशोऽध्यायः ॥

---

॥ अथ अष्टाविंशोऽध्यायः ॥

सिंहवध दुःखितेन शूरेण युद्धाय निर्याणम् ॥

ततो दूताननैस्शूरस्सिंहवक्त्रं मृतं द्विजाः । निशम्य गोपुरात्तस्थः पपाताधो महीतले ॥ १
लुठन्सितस्ततस्तत्र प्रललापातिदुःखितः । महाविष्णुमुखास्सर्वे त्यक्त्वाऽस्मत्पयोऽमराः ॥ २
स्वं स्वं पदमधिष्ठातुं कृतिनोऽद्य यथापुरा । तवेदृश्यनुजावस्था कथं रिपुविनाशक ॥ ३
एवमादीनि भूयांसि प्रविलप्यासुरेश्वरः । उत्थायाथ्यन्तदुःखोऽयमाशु सिंहासनं महत् ॥ ४
आरुह्य मन्युनात्यन्तं परिस्फुरितलोचनः । मदीयाण्डेषु सर्वेषु बहवो दानवा बलाः ॥ ५
सन्ति सिंहमुखादस्मान्मृतादपि यशस्विनः । आहूय तानहं गत्वा जित्वैकं बालकं रणे ॥ ६
आगमिष्यामि भूयोपि पत्तनं मामकं क्षणात् । इत्युक्त्वा प्रेषयामास दूतान् साहस्रकोटिकान् ॥ ७
गत्वाण्डेषु च सर्वेषु दूतास्तत्र स्थिताग्बहून् । विज्ञाप्य शूरवचनमसुरान् बलशालिनः ॥ ८
मापुरद्धमिदं भूयो दानवैस्तैर्महाबलैः । विश्वं जगदिदं शंभोस्सहसुरासुरमानुषम् ॥ ९
विनिर्गतं सिरक्षायां पादावेव यथापुरा । जटाजूटतटासंगा प्रवाह इव भीषणाः ॥ १०
तत्र तत्र स्थिता दैत्या निर्भियाण्डं विलाप्यतः । विनिर्गता महाघोरास्संभूताकाॅदिरस्मयः ॥ ११
स्वदारीराप्यकारौघैर्व्याप्तलोकअपांतराः । अथासेषां भयं यद्वेतीरन्ध्रेण नभस्तलः ॥ १२
महारावेण लोकानां संभूय तदा भृशम् । अशुष्यत्वाथयस्सर्वे तत्पादोत्थैश्च वेणुभिः ॥ १३
पादन्यासमहावेगात् ब्रह्मांडचास्फुटत्तदा । सप्ताधं प्रापिरे भूमिराकाशं बलिसद्म ॥ १४
तथा विष्णुर्विधात्राद्याश्चक्रितुं यत्रकुत्रचित् । बलन्धात्मायकाशात्वाद्दिचारेण परेण ह ॥ १५

गिरयश्च तथा सर्वे तूलवत् खं समाश्रिताः । दैत्यसेनामुखेनैव ब्रह्माण्डं पूरितं तदा ॥ १६
अनागतानां दैत्यानामवकाशोऽत्र दुर्लभः । तेषामागमनं श्रुत्वा शूरः परमया मुदा ॥ १७
उत्थायांतःपुरं गत्वा स्नात्वा भुक्त्वा यथेच्छया । धृतत्रिपुण्ड्ररुद्राक्षमालाभूषितविग्रहः ॥ १८
अनुलिप्य सुगन्धेन चन्दनेन निजाङ्गकम् । मालाभिरमलाभिश्च वासितात्मोत्तमांगकः ॥ १९
नूतनानि विचित्राणि वस्त्राण्याभरणानि च । धृत्वा पाशुपतं दिव्यमस्त्रराजेश्वरं महत् ॥ २०
ब्रह्मास्त्रादीनि चान्यानि समादाय विचक्षणः । सहस्रकोटिसंख्याकपरशुसत्पावनुगः ॥ २१
प्रतस्थे सहसा शूरो दैत्यानामधिपो यदा । तदा दैत्याः क्षणेनैव सिंहवाहनमद्भुतम् ॥ २२
समानीयागतास्तत्र रथमत्यन्तमुज्ज्वलम् । सहस्राश्वतुरगसिंहभूतगणावृतम् ॥ २३
सिंहध्वजांकितं रम्यं मनोमारुतवेगिनम् । चक्रमुर्गिरयोऽत्यन्तं रथस्यास्यागमे तदा ॥ २४
शीततामगमत्सूर्यदशाम वडवानलः । तस्मिन्प्रवरे रम्ये नानायुधसुनिर्भरे ॥ २५
धिरक्ताष्टकुलक्ष्माभृद्दृढचक्रमनोहरे । वीरयागमसुतेऽस्मिन् ब्रह्मनाशोऽप्यतश्चरे ॥ २६
स्थित्वा वाचार्यैर्दैत्यः प्रयुक्ताशीर्भिरेव च । ' पुरोविकीर्यत्पुष्पौघवृष्टिभिर्हृष्टमानसः ॥ २७
प्रस्थितस्सहसा दैत्यराजोऽयं सारथीन् बहून् । नियुज्य चोदने तस्य भेरी नीलगिरिर्यथा ॥ २८
विनिर्गतास्तदा केचित् काळांज्यासक्तपाणयः । पूगमश्रिभृतः केचित् भृङ्गारपत्रशालिनः ॥ २९
वीज्यमानलसच्छुभ्रचामरासक्तपाणयः । धृतध्वजबृहच्छत्रमनोहरकराः परे ॥ ३०
चक्रुः कोलाहलारावं दानवाश्च तदा भृशम् । तीर्त्वा वीथीरनेकाश्च गोपुराण्यसुरेश्वरः ॥ ३१
प्रधानगोपुरद्वारं यदावाप्सुरसैन्यकैः । तदा तत्र स्थिता दैत्यास्तं दृष्ट्वा दैत्यनायकम् ॥ ३२
चक्रुः किलिकिलारावं धृतस्वायुधपाणयः । निर्गत्य तैरयं शूरो महेभमदवारिभिः ॥ ३३
संपूरितं पुरो मार्गं तीर्त्वा प्राप रणस्थलम् । तदानीं दानवाः केचित् हेमकूटपुरंपरम् ॥ ३४
ययुः छलसंपाया महापापा महाबलाः । मूर्छामापु स्तदा ब्रह्मविष्णुपूर्वास्सुरेश्वराः ॥ ३५
भूतान्यपि तदा वीरा विभ्युस्तत्र्ये बलाधिपैः । प्रसादयस्ततोमेयं गुहं नत्वा व्यजिज्ञपन् ॥ ३६
सर्वाण्डस्थासुरान्सर्वान्मेळयित्वाऽसुरेश्वरः । समागतोऽयं युद्धाय स्वयं शूरो दुरात्मवान् ॥ ३७
तस्य सेनामुखं स्वामिन् भरोत्सीत्पत्तनं तव । तदेनमसुरं पापं मारयाश्वमरेश्वर ॥ ३८
इति तेषां वचःश्रुत्वा गुहः परमकारणः । मानयाश्वव वायोस्त्वं मनोवेगरथंवरम् ॥
इति श्रीकृत्यासनास्सिंहाद्यारोहस्यदयुतः ॥ ३९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे अष्टादशोऽध्यायः ॥

---

॥ अथ एकोनविंशोऽध्यायः ॥

विष्णुना देवानां स्कन्दमहिमानुवर्णनम् ॥

आदाय परशुं वज्रं शूलं शक्तिं विभीषणाम् । खड्गं खेटं मुद्गरं दण्डं मुसलमेव च ॥ १
धनुस्तालमहाघोरास्त्रोमतानि पाण्यपि । विनिर्गत्य रथं रम्यं वायुनानीतमग्निभूः ॥ २
आरुरोह सुरैस्सर्वैः पूजितः पुष्पवृष्टिभिः । नमद्भिश्चाधिपैस्सेवकैरपि महाबलैः ॥ ३

छत्रस्तोमवरैस्तुंगरथारूढैर्यशस्विभिः । प्रतस्थेसहसास्वामी भूतैरपि महाबलैः ॥ ४
वाहिनीद्विसहस्रेण गणितैर्बृहदायुधैः । ब्रह्मादय सुरास्सर्वे ववर्षुः कुसुमान्यपि ॥ ५
वाद्यघोषो महानासीत् कल्पान्तघननादवत् । छत्रचामरसंघाश्च वारितार्कातपास्तदा ॥ ६
पेठुर्गुणगणान्सर्वे वन्दिनः कलवाङ्मयाः । ततो भूतानिसर्वाणि दानवाः क्रूरकर्मणः ॥ ७
अष्टोत्तरसहस्राण्डस्थिता वले महाबलाः । अनेकशिरसः पापा नैकहस्ताश्च मायिकाः ॥ ८
प्रत्येकं लोकमखिलं भोक्तुं चापि परीवृढाः । तथाण्डानिच सर्वाणि प्रकंपयितुमीश्वराः ॥ ९
स्फुरदग्निवृहद्वेशाः समुद्रोहनिनाश्यकाः । विलिखच्चन्द्रसूर्यादितारावशिरसो बलाः ॥ १०
यथा सिंहमुखः पापो भानुकोपो यथा खलः । तारकोऽग्निमुखो यद्वत् वालिवक्त्रो महासुरः ॥ ११
सुन्दोपसुंदनामानौ मधुकैटभसंज्ञकौ । जलन्धराख्यो बलवान्महिषासुरसंज्ञकः ॥ १२
तथा सर्वे इमे क्रूरा महाबलपराक्रमाः । ब्रह्मविष्णुमहेन्द्रादि दिक्पालायुधशालिनः ॥ १३
अनंतकोटिसंख्याका स्संवृताःखलुपापिनः । परिभूतानि सर्वाणि पुरैकाण्डासुरैः खलु ॥ १४
तदस्माकं भवेदेषां कथंचा प्राणरक्षणम् । येषां सर्वाण्डदैत्यानामेको मध्ये परीवृढः ॥ १५
ब्रह्मविष्णुसुरान्सर्वान् जेतुमाश्वप्रयत्नतः । तेषु द्वौ मिलितौ स्यातां चेत्तयोःकःपुरोवसेत् ॥ १६
वीरास्सेनाधिपाश्चैतौ विजेतुं नपरीवृढाः । युध्यन्तां क्षुद्रपापाणैरस्माकं कात्र शक्तिता ॥ १७
चतुरंगबलंचेत्स्याद् प्रवृत्तं योद्धुमासुरम् । तदावीराश्च सेनेशास्तृणं वायुगतं यथा ॥ १८
भ्रमिष्यंति तथा सर्वे वीरबाहुर्यदि स्थितः । सोऽपि त्यक्तबलोऽभ्येति पराभवमसंशयम् ॥ १९
स्थातुमत्र गुहः साक्षात्समर्थस्सर्वदैत्यहा । पलायितुमिहास्माभिरवकाशो न लभ्यते ॥ २०
कृत्वा युद्धमिहेदानीं मरिष्यामो यथाबलम् । इत्थमुक्त्वा मिथस्तानि प्रवृत्तानि रणे द्विजाः ॥ २१
वीरास्सेनाधिपा दैत्यान्वीक्ष्याथासद्बलं गतम् । इतीरयित्वा तेऽन्योन्यमुपचक्रमिरे रणम् ॥ २२
सर्वेन्द्रप्रमुखादेवा विष्णुमीक्ष्य वचोऽब्रुवन् । हन्तुमेतान्महापापान् असुरान् केशवाखिलान् ॥ २३
युद्धेनानेकदिवसा व्यपयाता न संशयः । कदा शूरवधो भावि कदावा देवमोचनम् ॥ २४
कदाऽस्मद्दुःखनाशो वा पदप्राप्तिः कदाचन । न लभ्यते किमस्माभिरेतावद्धि हि जीविभिः ॥ २५
इति तेषां वचः श्रुत्वा विष्णुराह सुरानिमान् । साक्षात्परशिवोऽस्माकं वर्गो नेता च शङ्करः ॥ २६
षण्मुखाख्यं स्वयं कृत्वा देवान्रक्षितुमागतः । लीलया योऽखिलाल्लोकानण्डानि सहदेहिभिः ॥ २७
दर्शयामास चात्मीयदेहरोमसु षण्मुखः । पंक्षश्शर्वस्तस्तंत्र संहर्तुरखिलद्विषाम् ॥ २८
अमीषां हनने भारः कोवास्याद्दितिजन्मनाम् । क्षणमात्रेण तानेतान् संहरिष्यत्ययं गुहः ॥ २९
युष्माभिरमरास्सर्वे विस्मृतो महिमाऽस्यवै । शिशुबुद्धिं विशेषेण करोषि त्वं पुरन्दर ॥ ३०
सर्वाण्डाधिपतौ तस्मिन् गुहे परमपावने । तपोमहिम्ना केनापि सुराणां भरसमागतः ॥ ३१
इंद्रत्वं मत्कृपाकारं गृहीत्वा देवनायकः । मंदस्मितेन कोपेन शापेनापोधनेनवा ॥ ३२
क्षणेन हन्तुं शरादीनयं शक्तोऽसुरान्परान् । को विजानाति देवस्य बलं परमभद्भुतम् ॥ ३३
पृथ्व्यायुधानि भूतानि वीरान् बलपराक्रमान् । लीलया मेळयित्वात्र युद्धायागतवान् खलु ॥ ३४
हत्वाऽसुरान् क्षणेनैतान् हनिष्यत्यसुराधिपम् । शृणुध्वममरास्सर्वे सत्यं सत्यं मयोदितम् ॥ ३५
इति विष्णुवचः श्रुत्वा पुरंदरमुखास्सुराः । स्थपत्या शङ्कां हृदंभोजे ध्यायन्तो देवनायकम् ॥ ३६

सत्यज्ञानानंदमयं सर्वशत्रुनिबर्हणम् । विष्णुना ब्रह्मणा सार्धं प्राप्य स्कन्दान्तिकं सुराः ॥ ३७
अनुसृत्य गुहं तेन ययुस्सर्वेऽसुरार्णवे । दृष्ट्वैतन्मन्दहासेन विवेशायोधनस्थलम् ॥ ३८
गुहस्सर्वैस्सुरैस्सार्धं वीरबाहुमुखैरपि । तदाभवन्महाघोरं भूतानामसुरैः मृधम् ॥ ३९
वृक्षपर्वतपाषाणवर्षाणां तुमुलं द्विजाः । कश्चित्सेनापतीनां च वीराणामेकतस्तथा ॥ ४०
भंगमापुस्तदा दैत्यैः परिभूता इमेऽखिलाः । वीरबाहुस्तदा तूर्णं गृहीत्वा धनुरुत्तमम् ॥ ४१
प्रयुद्धस्त्वा सुबहून् बाणान्हत्वा दैत्यान्बहून् क्षणात् । पराभवं गतः प्राप निकटं षण्मुखस्य सः ॥ ४२
तदा दैत्या महाघोरा गुहं आवृत्य पापिनः । बालोऽयं नितरां कोऽस्य शक्तिर्युद्धाय सांप्रतम् ॥ ४३
इति ब्रुवन्तः पापिष्ठा दण्डांश्चक्राणि भूरिशः । कुलिशानिच शूलानि शक्तीरश्मुसलान्यपि ॥ ४४
ववर्षुः कृतसंरावा युगपद्दानवा भृशम् । वीक्ष्य तान्पापिनः कोपात्सुब्रह्मण्यस्सुरेश्वरः ॥ ४५
आनमय्य धनुर्घोरं योजयित्वाऽथ्यथासह । अकरोज्ज्यिशिनीरावं प्रळयांबुदमेघवत् ॥ ४६
तदाकर्ण्य महाघोरं चतुरंगबलं तदा । पपात भूमौ मोहेन दैत्यानां ब्राह्मणोत्तमाः ॥ ४७
मुक्त्वाऽस्त्राणि बहून्याशु पादान् बाहून् शिरांस्यपि । वक्षांसि दोंषि दैत्यानां छित्वा छित्वा महीतले ॥ ४८
पातयामास धर्मात्मा गिरीन्वृद्धश्चवाइव । अश्वानां पादवालानि स्कन्धानपि मन्धरान् ॥ ४९
चक्राणि येतून् स्तंभांश्च रथानां महतां तथा । दंतिनांच दंतदण्डुण्डान् पादशाळकमस्तकान् ॥ ५०
तथा ध्वजानि छत्राणि चामराण्यायुधान्यपि । भूषणानि विचित्राणि किरीटानि महान्त्यपि ॥ ५१
छित्वा ततान दैत्यानाममरेशो महीतले । स्वर्गं व्यानशिरेऽस्त्राणि गुहस्यामिततेजसः ॥ ५२
ब्राह्मं लोकं तथा विष्णोः भूलोकमपि भूसुराः । पाताळमण्डभित्तिंच नभोदिग्वलयं तथा ॥
अमारयंस्तदा दैत्यान् बहूनत्रसमागतान् ॥ ५३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे एकोनत्रिंशोऽध्यायः ॥

---

॥ अथ त्रिंशोऽध्यायः ॥

श्री गुहेन शूर सैन्य वधः ॥

मुक्त्वा देवानुर्वीतन्यान् बहुधा ब्राह्मणोत्तमाः । प्रस्थितानि (मथितानि) शिरांस्येषां स्वर्गानोश्वशिरोयथा ॥ १
तैरेवपूरितं विश्वं जगदेतच्चराचरम् । दैत्यानां छिन्नहस्तस्थान्यायुधानि तदाऽसुरान् ॥ २
मनुष्याणि शरैस्तस्य पतित्वा मारयन्बहून् । एवं नाना प्रकारेण मृता एतेऽसुराधमाः ॥ ३
दृष्ट्वैतद्देवताः सर्वा ब्रह्म विष्णुपुरोगमाः । आपुस्संतोषं अत्यन्तं वीराससेनाधिपाश्च ते ॥ ४
प्रथमं दानवान्सर्वान् आगतान् ददृशुः पुनः । न संहारं एत तेन गुहेन क्षणमात्रतः ॥ ५
मृतान् सर्वत्र पतितान् केवल ददृशुः किल । प्रीत्या परमया चक्रुः स्तोत्रमेते सुरैस्सह ॥ ६
इत्थं मृतेषु सर्वेषु दानवेषु दुरात्मसु । भयत्रासमवाप्याशु पुनरण्डान्तरासुराः ॥ ७
आपूरयन्यथा पूर्वमण्डमेतन्महाबलाः । सर्वदैत्याधिपं शूरं दृष्ट्वा तं पापकर्मिणम् ॥ ८
ययुः कोलाहलारावान् सर्वे तत्र समागताः । मृतासुरबन्धेषु विस्तृतेषु महीतले ॥ ९
कृत्वा पदानि तद्रक्तशोणितौघानतीत्य च । हनिष्यामो वयं शूर शत्रुमेनं रणस्थले ॥ १०
इति प्रतिज्ञां कृत्वा ते दृष्ट्वा स्कन्दमरिन्दमम् । बालोऽयं नितरां सेना ह्यागता दितिजन्मनाम् ॥ ११

अण्डान्तरेभ्यो हतशानेक एव रणस्थले । नसन्ति नागास्तुरगा बालस्यास्य रथादयः ॥ १२
इत्याश्चर्यं गताः पापाः परिवृत्य गुहं तदा । शूरस्यागमनादेनं हनिष्याम इति क्रुधा ॥ १३
ववर्षुर्निशितान्बाणानायुधानि महाबलाः । विचारमापुर्भूतानि वीरास्सेनाधिपास्तदा ॥ १४
तदा वायुमवेक्ष्यायं गुहः परमपावनः । स्मयमानमुखांभोजः प्राह गंभीरया गिरा ॥ १५
प्रेरयाशु रथं वायो पुरः पश्चाच्च मध्यतः । पार्श्वभागेषु वेगेन सर्वत्र क्षणमात्रतः ॥ १६
इति स्कन्दवचः श्रुत्वा तथेति रथमाशु सः । मुमोच भूतले व्योम्नि समुद्रेषु सरित्स्वपि (हरित्स्वपि)
लोकालोकेषु सर्वत्र रथमत्यन्तवेगिनम् । तत्र तत्र महाघोरान् अमारयदसौ शरैः ॥ १८
अनेककोटिसंख्याकैः अजेयान् शत्रुभिर्गुहः । ममार क्षणमात्रेण चतुरंगबलं तदा ॥ १९
मृतासुरै स्तदाभूमिः पतितै र्भारविह्वला । चकम्पे स्वबहुच्छेपकंपनाद्वा द्विजोत्तमाः ॥ २०
तदासुरान् स्सारमेयाश्च खिदुः कुणपानिह । सखेटपाणयो व्योम्नि व्यरुचन् राहवो यथा ॥ २१
ग्रस्तसूर्येन्दु सुमहन्मण्डलादिति जन्मनाम् । भूतप्रेतपिशाचाश्च रथाकर्षणयन्त्रिताः ॥ २२
दैतेयानां महाघोराः प्रवृत्ता मांसभक्षणे । निर्गतानि गुहास्त्राणि शूलरूपेण कानिचित् ॥ २३
महापरशुरूपेण चक्राकारेण कानिचित् । वज्रशक्त्यसिवाण्वादिरूपेणान्यानि भूसुराः ॥ २४
अपहृत्य तदामायां वीरत्वं दितिजन्मनाम् । तन्मुक्तदैवतास्त्राणि विश्वं व्यानशिरे जगत् ॥ २५
शरवेगमतीत्यैव तत्र तत्रामरेशितुः । रथोऽगमत् प्रणुन्नोऽयं वायुना शीघ्रगामिना ॥ २६
रथवेगं तदा दृष्ट्वा गुहस्यामिततेजसः । शराणां कार्मुकस्यापि सारथेश्च समर्थताम् ॥ २७
गुहस्य महिमावार्यं सारथेर्महिमा उत । अस्त्रादीनां जवोवास्यादित्यालोच्यामरास्तदा ॥ २८
आश्चर्यमापुरत्यन्तं ब्रह्मविष्णुपुरोगमाः । एवं क्षणेन तान् दैत्यानमारयदसौ गुहः ॥ २९
कुणपानि च सर्वत्र पतितानि महीतले । रक्तानि भुवमापूर्य पातालमपि भूसुराः ॥ ३०
व्याप्नुवन्निततरामाशु नृत्यन्तु कुणपेष्विव । अनेककोटिसंख्येषु भीमरूपेषु सर्वतः ॥ ३१
एवं मृतेषु सर्वेषु पापेषु ब्राह्मणोत्तमाः । पुनरण्डांतराद्दैत्याः प्राप्यैतत्पूर्ववद्रुताम् ॥ ३२
आपूरयन्महाघोरा स्सर्वायुधसमुज्वलाः । तानप्यमारयत् क्षिप्रं सर्वदैत्यविनाशकः ॥ ३३
पुनः पुन स्समायाता नेवमेव अधान सः । अण्डद्वारं शरैः कोपादाच्छादयदसौगुहः ॥ ३४
मार्गाभावात्तदादैत्याः नागताः खलु भूसुराः । ब्रह्माण्डभित्तिपर्यन्त मसुरैस्त्यक्तजीविभिः ॥ ३५
निर्ममे कुणपाकारो महान् गिरिरहो द्विजाः । अर्णवोऽपि तदा रक्तै रसुराणामजायत ॥ ३६
तमेनं पर्वतं स्कन्दः कृतमन्दशुचिस्मितः । भस्मीचकार कोपेन वीक्ष्य द्वादशलोचनैः ॥ ३७
स्फुरत्स्फुलिंगनिचयैः क्षणमात्रेण भूसुराः । अवकाशो यथापूर्वं सर्वत्र समजायत ॥ ३८
चेलुर्मंसानि परितः केवलं चिरलानिहि । तदा विष्णुमुखाः देवा महिमानं विलोक्य ते ॥ ३९
सुब्रह्मण्यस्य सन्तुष्टाः स्तुतिं चक्रुः सुपावनीम् । हत्वाऽसुरानिमान् पापान् रक्तार्णव परिप्लुतम् ॥ ४०
महान्तं कुणपाकारं पर्वतं क्षणमात्रतः । भस्मीचकार कोपेन केवलं नेत्रवह्निना ॥ ४१
शूरपद्मवधे तस्य कोऽतिभारो महेशितुः । इति ब्रुवंतस्तेऽन्योन्यं प्रणम्य परया मुदा ॥ ४२
शूरपद्मा ततो देवं दृष्ट्वा कोपाग्निनाज्वलन् । चचालोपरिवार्ताभि र्भर्त्सयन् देवनायकम् ॥ ४३
भस्मप्रदीप्तं पापिष्ठं सुब्रह्मण्योऽमरेश्वरः । प्राह तं वचनं शूरो दैत्यानामधिपो गुहम् ॥ ४४
वरेण परमेशस्य मरणं नास्तिमे ध्रुवम् । कृतवन्तो मया युद्धं पराभवमिताः खलु ॥ ४५
देवानां वचनं श्रुत्वा मत्कृपि कुपेतामिह । आगतोऽसि विचारेण हीनो बालोऽत्र संयुगे ॥ ४६

सेना भवान्यतोऽस्माकं जघान सुरपक्षस । न त्यजामि तमेन त्वां धावन्त यत्र कुत्रचित् ॥ ४७
इति तस्य वच श्रुत्वा कुमारस्सुरनायक । त्वया न वच्मि पापेन दैतेयाधम तावकम् ॥ ४८
भित्वा शरीरमङ्गानि मामकानि वदन्तु तत् । द्रियताऽसुरपापिष्ठ पश्य मे बलमद्भुतम् ॥ ४९
श्रुत्वा तद्वैत्यपापोऽय मन्युना धनुरुत्तमम् । मानमस्य ज्यया साकं योजयित्वा शरान्परान् ॥ ५०
ववर्ष सुरसेनासु सार्धं तत्सुरोत्तम । तदा भूतानि वीराश्च सेनेशैरपि सगता ॥ ५१
तत्यनुस्सायकान् घोरान् युगपद्दानवर्षति । छित्वैतानस्य शूरस्य पतुर्बाणा वलेषु ते ॥ ५२

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे त्रिंशोऽध्याय ॥

---

॥ अथ एकत्रिंशोऽध्यायः ॥

श्री स्कन्देन देवसैन्य संरक्षणम् ॥

पलायन्त परे छत्वाशिरोयस्त प्रदेशिन । मग्नुन्ये महामोह गताखलु महीसुरा ॥ १
वीरबाहु मुखा केचिद्वयपुंस्तायकान् शितान् । कुण्ठीभाव गतास्तेऽपि पतित्वा तस्य वक्षसि ॥ २
तत कोपेन शूरोऽस्य मुक्त्यास्त्राणि बहून्यपि । अच्छिनत्तच्छरान् भीमान् पुनर्मुंचन्महाबल ॥ ३
छित्वा रथास्तदीयानि कार्मुकाणि महान्त्यपि । पूरयामास दोर्भश्शिरस्स्वपि परश्शतम् ॥ ४
कृत्वा कोलाहल भूयो महाघोर महासुर । परिभ्रमण गत्वाथ भर्त्सयामास तान् द्विजा ॥ ५
तदा वीरा स्ववद्रक्तधाराप्लुतशरीरिण । अपलायन् भृशं त्रस्ता स्वस्वस्थानमवसनायुधि ॥ ६
वीरबाहुर्महावीर कोपाद्भ्येत्य तद्रथम् । बभञ्ज तद्धनुर्घोर करवालेन भूसुरा ॥ ७
तमेवमन्तिक प्राप्त करेणाताडयद्रुषाम् । मुमोह ताडितस्तस्य भुजेनामरनायक ॥ ८
दूतस्य हनन युक्त नशूराणामिहेत्यसौ । गृहीत्वा पाणिना वीर नुनोद व्योम्नि पादयो ॥ ९
गजावासोदर वीरस्त्यजमोहो गुहान्तिकम् । प्राप क्षणेन धर्मात्मा महाबलपराक्रमः ॥ १०
दानवस्तु तत कोपात् गृहीत्वा धनुरुत्तमम् । मेरुपर्वतसङ्काशमन्य शरकिर्मीणणम् ॥ ११
अटन्या शिञ्जिनीं कृत्वा पस्फालैतां भयानकाम् । तदानीमारपोऽस्यन्त संयमूय भयप्रद ॥ १२
ततो जग्राह धर्मात्मा सुब्रह्मण्यस्सुराधिप । विष्णुब्रह्मादिसंहारकाले कैलासपर्वत ॥ १३
प्रथमानो यथाभाति ब्रह्माण्डावरणभ्रव । ततोऽपि परमन्युग्र धनुर्धर्मीश्वर प्रभु ॥ १४
मविद् योजयित्वाथ गुणेन गुणवान्गुह । युगपद्भाविनरतर्वे प्रत्येक पञ्चरूपताम् ॥ १५
गृहीत्वा निरगुणत्या (स्वाहा) मद्गुणमनिनादयत् । महाघोर महाभीम गुणाराव चकार स ॥ १६
तत कोपन शूरोऽस्य शतकोटिशरान्परान् । सहस्रकोटिमस्त्राणां दशसाहस्रकोटिपान् ॥ १७
शतकोटिसहस्राणि व्यापकान् स्वकन्भगव् । पायुधैवान्महाघोरान् शाहकानप्रियद्रुताम् ॥ १८
कैलाश इव संदर्शमेघादीना विद्रावकान् । अण्डे दारयतो व्यक्ष्ण्हारिणी कृपण शोटित न् ॥ १९
ववर्ष पावकालेन दुरात्मा दानवाधिप । तदा देवा भृशं त्रस्ता विष्णुब्रह्मण्य गोविन्द ॥ २०
पलायाना भवेत् कुत्र रक्षार्थे शरणान्तरे । प्रसार्थ मापयाधेति प्रोचुर्विश्रमानना ॥ २१
न जगादोत्तरं यावत् हरिस्तानमरान् प्रति । तावदस्मिन्सुखोऽस्त्राणि तच्छरानच्छिनद्वन ॥ २२
दृष्ट्वा तदस्त्रं देवा हर्षतोप प्रापिरे भृशम् । पुनर्दैत्याधमोऽस्त्राणि गुहोपरि ववर्ष हि ॥ २३

छित्वा तान्यपि धर्मात्मा पुनर्मुक्तानि शीघ्रतः । धूळीकृत्य पुनर्दैत्ये जहौ सप्तशतं शरान् ॥ २४
मोघीकृत्यासुरो बाणान् द्विसहस्रं मुमोचहि । तावत्संख्यै श्शरैः स्कन्दस्तान् छित्वादेवनायकः ॥ २५
सन्दधे द्विसहस्राणि शस्त्राण्यस्योपरि क्रुधा । उच्छिद्य तानि दैत्योऽयं द्विसहस्रैर्महाशरैः ॥ २६
कंपयन् शेषभूम्यादीन् महाकोलाहलारवैः । अनंतकोटिसंख्यानि ववर्षासुरनायकः ॥ २७
धूळीचकार क्षिप्रेण तानि सर्वाणि षण्मुखः । एवं परस्परं छित्वा युयुधाते शरानुभौ ॥ २८
उत्पपात तदा वह्निरन्योन्यशरघट्टनात् । अशोषयदयं व्योम गङ्गामब्धीनहोद्विजाः ॥ २९
वीरलक्ष्मीस्तयोर्वीर्यं पश्यन्ती सातिविस्मिता । तस्थेसमीपे कथाऽहं भजिष्याम्यतयोरिति ॥ ३०
ददर्शतुस्तयोरंगे शरैरत्यावृतेनहि । ततस्तु शूरपद्मोऽयं तद्रथस्थं बृहत्ध्वजम् ॥ ३१
छित्वा कोलाहलं कृत्वा दध्मौ शंखं महारवम् । पुनर्ववर्ष भूयांसि शराण्यस्मिन् दुरात्मवान् ॥ ३२
तानि सर्वाणि सर्वेशो मोघीकृत्य शरैः परैः । समुद्रे पातयत्सप्त शरैश्छित्वा रथध्वजम् ॥ ३३
दैत्यस्य तस्य देवेश स्सहसा ब्राह्मणोत्तमाः । ततस्तु भानुकंपाख्यो भूतानां मध्यतोबलः ॥ ३४
सहस्रास्येषु शङ्खानां सहस्रं संविधाय सः । चकार सुमहारावं सर्वशब्दाभिभावकम् ॥ ३५
अनेकयुगपर्यन्त मश्रूयत तदा रवः । प्रतिस्खलनमाप्याय मण्डभित्तौ महीसुराः ॥ ३६
पाञ्चजन्यं तदा दध्मौ हरिश्शंखं निजं परम् । प्रेरितस्तु तदा वह्निर्देवैः कुक्कुटरूपवान् ॥ ३७
कुक्कुटध्वजरूपेण रथे स्थित्वा गुहस्य सः । विततान महाशब्दं महाप्रळयमेघवत् ॥ ३८
सर्वमेतत्तदा दृष्ट्वा विष्णुब्रह्ममुखास्सुराः । चक्रुः कोलाहलारावं तेऽपि सन्तुष्ट मानसाः ॥ ३९
तमाकर्ण्य महाशब्दं शूरः पापविनिर्मितः । माकर्षि कुर्वतां नित्यं देवानां माधवादिनाम् ॥ ४०
स्थित्वा मम पुरो भीत्या किंवा कोलाहलैर्यलम् । तदैतान् पुरतो हत्वा जयिष्यामि ततश्शिशुम् ॥ ४१
इतिप्रतिज्ञां कृत्वार्थं रथेनैव नभः स्थले । गत्वा ववर्ष शस्त्राणि देवानुद्दिश्य कोपतः ॥ ४२
तानि सर्वाणि सर्वात्मा गुहः परमपावनः । मोघीचकार स्थित्वात्र भूतले सायकैः परैः ॥ ४३
प्रेरयित्वा रथं स्कन्दः खं स्वयं प्राप्य देवताः । मास्तु भीरिति ताश्चोक्त्वा दूरतो स्थापयत् खलु ॥ ४४
अवाप्य प्रीतिमतुलां तस्थुस्तत्र गुहाज्ञया । पुरतो वर्तमानं तं प्रेक्ष्य शूरो महासुरः ॥ ४५
दुद्रुवुश्च सुरास्सर्वे वञ्चयित्वा शराम्मम । बालिशोऽयं समागत्य वर्तते पुरतः स्वयम् ॥ ४६
यले मम समीचीनं जातमत्र रणस्थले । चिन्तयित्वेत्थमसुरो ववर्ष सुबहून् शरान् ॥ ४७
अच्छिनत्तच्छरान् क्षिप्रात् प्रत्यस्त्रैरमरेश्वरः । तयोर्विक्रममुत्तत्र युध्यतोस्सुमहारथौ ॥ ४८
वायुभ्रमणवत् द्वाभ्यां चक्रचद्राशिचक्रवत् । कुंभकारस्य चक्रंवा यथा भ्रमति भूसुराः ॥ ४९
पुनः क्षणेन पाताळं भूमिमाशास्तथार्णवान् । पर्वतान्मेघवत् ब्रह्मविष्णुलोकान्समंततः ॥ ५०
चक्रवाळगिरिं वार्द्धि महान्तं तु तमोमयम् । लोकमण्डकटाहस्य मूलमंतः क्षणेन तौ ॥ ५१
भ्रामयन्ताविमान् सर्वान् भूत्वा भासाक्षिपत्विषा । भ्रमतोरेतयोरेवं रथयोर्ब्राह्मणोत्तमाः ॥ ५२
त्रिपुरस्सर्वं जना भूमि श्चकंपे ससतसागराः । अद्रयः पांसवो जाता ब्रह्माण्डमपि चास्फुटत् ॥ ५३
अपतं स्तारकास्तस्ता स्समर्वेशेषं बलाहकाः । शूरपद्म तदा बाणान्यवर्षाग्नीनिवाधिकम् ॥ ५४
मध्ये मध्ये महापापः परशून् कुलिशानपि । वज्रायुधानि भूयांसि शूलानि मुसलान्यपि ॥ ५५
टंकानि शक्तिपरिघान् भिण्डिपालानि तोमरान् । लाङ्गलादीनि चान्यानि ववर्षानंतसंख्यया ॥ ५६
तानि सर्वाणि सर्वात्मा छित्वाखैर्यायुदैवतैः । चतुर्दशभिरस्त्रैस्तद्रथाश्वान् हतवान् प्रभुः ॥ ५७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे पञ्चविंशोऽध्यायः ॥

---

॥ अथ द्वात्रिंशोऽध्याय ॥

प्रत्यण्ड स्कन्द शूरयो युद्ध वर्णनम् ॥

प्रविनष्टरथाश्वोऽथ स्थित्वा भूमौ धनुर्धर । मुमोचानन्तसप्तकान् सुब्रह्मण्य प्रति क्रुधा ॥ १
छित्वा तान् देवनाथोऽथ तत्याजासिन् बहून् शरान् । तानवेक्ष्य पुनश्चाथ भिन्नानेतस्य सायकै ॥ २
मुमोच भुजयोरस्य सहस्र पार्वतीसुत । वृष्टिधारा गिरौ यद्वत् तथैवेमे पृथागता ॥ ३
पतितरा तस्य दोर्द्वन्द्वे कठिने दृषदोऽपिच । तदा कोपेन शूरोऽथ सुब्रह्मण्यभुजोपरि ॥ ४
द्विसहस्रशरा स्तीक्ष्णान प्राहिणोद्दानवाधम । चक्रे कोलाहलाराव तदास्यन्त दुरात्मवान् ॥ ५
पतनात्तत्र देवस्य भस्मभावमितास्तदा । तद्दृष्ट्वा दानव पापो महता मन्युना ज्वलन् ॥ ६
भूतसेनेशवीरेषु युयोजानन्तसायकान् । छित्वा तानपि सर्वात्मा चिच्छेदास्य धनुर्वरम् ॥ ७
सहस्रसर्य्यैर्निशितैर्बाणैरमितविक्रम । तदानीमसुरश्चाीघ्राद्दाय धनुरन्तरम् ॥ ८
गत्वाकाश महावेगात्तत्रस्थस्तस्त्यजे शरान् । गत्वा तत्रापि देवेश स्तमेनमयुधत् द्विजा ॥ ९
युध्यन्निवासुरो भूय क्षणेनाप महीतलम् । मायया वञ्चयित्वा त महापापो महाखल ॥ १०
तत्रापि देवसेनानीरागत्य युयोधहि । ततोऽपि देत्य पापिष्ठ पाताळ वारिधीनपि ॥ ११
चक्रवाळगिरिं मेरु महान्त वारिधिं क्षणात् । दिक्पालाना तथा लोकात् ब्रह्मणो माधवस्य च ॥ १२
तत्र तत्र दुरात्माय माययागाद्यदाऽसुर । गत्वा तेषु स्थलेष्वेन अयुधद्देवनायक ॥ १३
अण्डभित्तिस्थल प्राप्य वर्षाय शरान् बहून् । गत्वा तत्रापि देवेश क्षणेनास्य रथ परम् ॥ १४
व्यपातयदसौ छित्वा भूपृष्ठे वज्रिभिश्शरे । ततस्ससार दैत्योऽथ इन्द्रलोकस्य परम् ॥ १५
समागते जयेशासिन् स्थित्वायमयुधच्छरै । पुनर्विलोक्य दैत्योऽथ द्वारमण्डस्य सायकै ॥ १६
गुहस्य पिहित घात्वा चिच्छेदैतानिजैश्शरै । भिन्नेषु तपु शाखेषु द्वारमासीद्यथापुरा ॥ १७
ततो बलानि भूयासि दैत्यानामागतानिहि । आजुहाव दुरात्माय तानि वीक्ष्य दृतास्य ॥ १८
आस्फाल्य वाहाव योल्य मुहुर्मुहुरुत्पवगत । ततो विष्णुमुखादेवाश्चतुरगवल तदा ॥ १९
हालाहलानि घोराणि कुलिशानि बहूनिवा । कालाग्निधूमवृन्दरा किमेतदिति विस्मिता ॥ २०
आगत महता वेगात् किंवाण्डस्य बहिर्जलम् । इत्यालोच्य भयाविष्टा परिक्षुब्धुरक्षसा ॥ २१
तदानीं तरमे दैत्या गुहमावृत्य पापिन । ववर्षु स्सायकान् घोरान् नानाशस्त्राणि भीषणा ॥ २२
मन्दस्मित तत कृत्वा हुङ्कारेणावलोकयतान् । ददाह परमात्माय सूक्ष्मभस्ममय द्विजा ॥ २३
पुन पुनर्ददाहैव आगतानसुरास्तत । ततस्तु चक्र परशु दण्ड मुसलमाथ्यसिम् ॥ २४
तत्र तत्र स्थिता दैत्या ब्रह्माण्डेषु महाबलाः । नायास्यन्ति यथा घोरा दहतेति महाशया ॥ २५
तस्याज तानि धर्मात्मा हन्तु तान् ब्राह्मणोत्तमा । तानिपञ्चायुधान्याशु विनिर्गत्य महाजवात् ॥ २६
गुहाभ्यासस्थितान् दैत्यान् हत्वाण्डस्य बहि क्षणात् । अनन्तकोटिचण्डांशुभासिर्गत्वा महारवै ॥ २७
बहुधा प्रविभिन्नानि ब्रह्माण्डानि प्रविश्य च । तेषु तेषु स्थितान् पापान् दैत्यान् जघ्नु किल द्विजा ॥
शूलयम तत कोपात् पारमेश विभीषणम् । सर्वसंहारक चक्र चक्राणामधिदैवतम् ॥ २९
मुमोच देवसेनेशो गुहे परमपावने । तदाऽऽलोक्य गुहश्शीघ्र प्रसार्य स्वकर तदा ॥ ३०
जग्राह लीलया स्वामी प्रत्यक्षाविषय महत् । दृष्ट्वैतदानवोऽत्यन्त शोकमाप निजात्मनि ॥ ३१
बहुरूप गृहीत्वाऽथ मायया त युयोध स । अनयाकारभिन्न त वीक्ष्य देव स्मितानन ॥ ३२
महामोहहर घोर ज्ञानास्त्र सन्दधे महत् । गतमायस्तदा दैत्यस्तस्थे केवल एव स ॥ ३३

ततो ब्रह्मादयो देवा मुमुचुः कुसुमानि ते । चक्रुः कोलाहलारावं सर्वेऽपि युगपत् द्विजाः ॥ ३४
ततस्तु शूरो ब्रह्माण्डमतीत्य युद्धमाकरत् । अण्डान्तरमुभौ गत्वा युयुधातेऽतिभीषणम् ॥ ३५
पुनरंडान्तरं प्राप्य महाबलपराक्रमौ । कृत्वा युद्धं महाघोरं त्यक्त्वा तदपि भूसुराः ॥ ३६
अण्डान्तराणि सर्वाणि चैवमेतौ सुरासुरौ । गत्वा विभीषणं तेषु युयुधाते यदा द्विजाः ॥ ३७
तदा ब्रह्ममुखा विष्णुं प्रपच्छुर्भयविह्वलाः । दुर्जयोऽयं हरे शूरो महामायोऽतिवञ्चकः ॥ ३८
आह्वयामास युद्धाय सुब्रह्मण्यं सुरेश्वरम् । तस्य तद्वचनं श्रुत्वा देवोऽप्यण्डान्तरं गतः ॥ ३९
ददर्श किं तं पापिष्ठं देवः परमवञ्चकम् । किं न जातं रणं किंवा जातं विष्णो वयं न हि ॥ ४०
बाधते महती भीतिरस्मान् संशयमानसान् । इति तेषां वचः श्रुत्वा स्मृत्वा देवस्य वैभवम् ॥ ४१
प्राह विष्णुस्सुरान् सर्वान् भयकंपितविग्रहान् । शृण्वन्तु देवतास्सर्वा युष्माकं भीतिरत्र का ॥ ४२
साक्षात्परशिवस्संभुष्षण्मुखो नात्र संशयः । धनुष्यप्रतिमं तस्य बलं परममद्भुतम् ॥ ४३
जानतोऽपिच तं युष्मान् बाधते संशयो महान् । सर्वाण्डान्यपि गत्वायमायास्यत्यतिशीघ्रतः ॥ ४४
तदत्र संशयो मास्तु सत्यं सत्यं मयोदितम् । इति विष्णुवचः श्रुत्वा सन्तोषं प्रापिरे सुराः ॥ ४५
तदानीमेव शूरोऽयं कृत्वाण्डेषु महद्रणम् । स्वपुरस्यागतोऽभ्याशं विनिवृत्य द्विजोत्तमाः ॥ ४६
समाह्व(ह)तोऽमुना देवस्तत्र स्कन्दो महाबलः । ततो महेन्द्रनगरीदैत्यैस्तैर्या गुहमीक्ष्य ते ॥ ४७
परिवव्रुर्महाघोरा दानवेन सुचोदिताः । मन्दस्मितेन तान्पापान्वीक्ष्य देवो ददाह हा ॥ ४८
तदा विष्णुमुखादेवा विकीर्य सुमनोहरान् । तुष्टुवुर्देवमीशानं सुब्रह्मण्यं सुरेश्वरम् ॥ ४९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे द्वात्रिंशोऽध्यायः ॥

---

॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

सुधामन्दर वातेन मृतासुराणां पुनरुज्जीवनम् ॥

ततो दैत्याधिपो दैत्यान् भस्मीभूतान् स्वसैनिकान् । स सैन्यं गुहमभ्याशे वीक्ष्य दुःखेन पीडितः ॥ १
किमिदानीं करिष्यामि विचार्यैवं दुरात्मवान् । सस्मार मातरं मायां तपस्यन्तीमरूपिणीम् ॥ २
आगतायां महावेगात् दानवेन्द्रस्य सन्निधिम् । तामाह दानवान् सर्वान् पुनरुज्जीवयेति सः ॥ ३
जगाद वचनं सा तं शूरं वीक्ष्यासुरेश्वरम् । महादेवस्वरूपं त्वं गुहं निन्दितवानसि ॥ ४
त्वया मदुक्तं वचनं न श्रुतं खलु पैतृकम् । युद्धं च कृतवांस्तेन दुर्जयेनातिमोहितः ॥ ५
तदस्य शक्त्या मरणं तव भावि न संशयः । तत्तिष्ठतु मृता दैत्या उज्जीव्याः पुनरेवचेत् ॥ ६
महतोंभोनिधेरन्ते सुधामन्दरपर्वतः । वर्तते पुनरुज्जीवी मृतान् सर्वान् क्षणेन सः ॥ ७
आनेतव्य इति प्रोक्त्वा जगामैवा यथागतम् । तदाकर्ण्य वचस्तस्यास्सन्तोषेणासुरेश्वरः ॥ ८
सिंहवाहनमारुह्यचेन्द्रलोकस्थं त्यजन् । आनयाशु गिरिं तं त्वं सुधामंदरनायकम् ॥ ९
इत्युक्त्वा प्रैरयज्जीमसिन्द्रलोकस्थं तदा । तथेति गत्वा तत्रायमादाय गिरिमद्भुतम् ॥ १०
वहन् समागतः क्षिप्रं महावेगेन भूसुराः । तदानीमसुरास्सर्वे शूरद्काद्य सोदराः ॥ ११
भानुकोपमुखाः पापासिंहवक्त्रमुखा अपि । येचान्ये निधनं प्राप्ताः स्पृष्टास्तन्मारुतेन ते ॥ १२
समुत्तस्थुर्महाघोराः स्वापादिव महीसुराः । चक्रुः कोलाहलारावं युगपद्दानवा भृशम् ॥ १३

युद्धस्थलमिवाभाति किमेतदिति वादिनः । इति ब्रुवन्तश्शस्त्राणि पतितानि समन्ततः ॥ १४
समादाय स्थितास्सर्वे सन्नद्धास्संगराय ते । समुत्थितांस्ततः शूरः पुत्रभावमुपासुरान् ॥ १५
इन्द्रलोकरथं वीक्ष्य परां प्रीतिमवाप सः । निनिन्द दैवान् सकलान् दुरात्मा पापकर्मकृत् ॥ १६
तदेतद्दूरतो दृष्ट्वा देवास्सर्वे भयान्विताः । इदमेव पदभ्रांतिरस्माकमसुरैः खलैः ॥ १७
पीडा न जायते चेद्धा प्रोक्त्वैवं दुद्रुवुः क्षणात् । चक्ररूपेण भूयांसस्तथान्येतु शिखण्डिनः ॥ १८
हंसपारावतपिककौशिकाक्षिवकादिनाम् । त्यक्त्वाऽऽयुधानि स्वान्येवं भयाविष्टास्तदा द्विजाः ॥ १९
दुःखमापुस्तदा वीरा भूतान्यपि बलेश्वरैः । तदेतत्सर्वमालोक्य स्मयमानमुखांबुजः ॥ २०
तस्थौ तत्र गुहस्साक्षात्सच्चिदानंदविग्रहः । ऊर्ध्वानुधावस्तदा शूराः सिंहवक्त्रमुखाः खलाः ॥ २१
विजेतुमागताः स्कन्दं प्रदीपं शलभा इव । आगत्य त इमे बाणान्ववर्षुं निशितान्गुहे ॥ २२
बिभ्युस्तदा तरां वीरास्तदाटोपमवेक्ष्य ते । ततः पाशुपतं घोरं सर्वशत्रुनिकृन्तनम् ॥ २३
सन्दधे तेषु पापेषु धर्मात्मा षण्मुखः क्षणात् । उद्गिरत्तन्महासर्पान् कुलिशानि विषाण्यपि ॥ २४
रुद्रानन्तान् मरुतान् शस्त्राणि सुमहान्त्यपि । वारिधीनपि बह्वोर्मीभीषणांश्च समन्ततः ॥ २५
वह्नीनस्त्राणि चान्यानि महाघोराणि भूसुराः । उच्छिद्य तेषामस्त्राणि क्षणेनैवातिभीषणम् ॥ २६
हत्वा तानसुरान् पापान् युगपत्सर्वतश्च तम् । धूळीकृत्य पुनश्शीघ्राद् गुहपार्श्वं तदागमत् ॥ २७
तदावशिष्टश्शूरोऽयमेकस्तस्थे रणस्थले । आपुः प्रीतिं तदा देवाः परमां धातृपूर्वकाः ॥ २८
ततो दैत्यस्तरांक्रुद्धो भ्रूकुटीकुटिलेक्षणः । इन्द्रलोकरथं प्रेक्ष्य प्राह वाचं तदा खलः ॥ २९
वीरान् भूतानि चान्यांश्च समानीयाण्डगोळके । स्थापयित्वा वसाशु त्वमित्युक्त्वा प्रैरयद्रथम् ॥ ३०
स तथेति विनिर्गत्य महावेगेन भीषयन् । मोहयित्वा तदा वीरान् भूतान्यपि महीसुराः ॥ ३१
क्षणेन तान् समादाय तत्र गत्वाऽब्धिमालयम् । प्रातिमाप तदास्यन्तं शूरपद्मोऽसुराधमः ॥ ३२
दुःखमापुस्तरां देवाः हाहेति च भयान्विताः । इन्द्रलोकरथेनैतानानीतानण्डगोळके ॥ ३३
ज्ञात्वा गुहः पराक्रम्य मुमोचास्त्राणि भूरिशः । तदस्त्राणि महावेगाद्गत्वा तांस्तद्रथेस्थितान् ॥ ३४
बोधयित्वा क्षणेनैतान् रथेनैव गुहान्तिकम् । प्रापयामास वेगेन समानीय रथं द्विजाः ॥ ३५
अवतीर्य रथाद्वीरास्तदावीक्ष्य षण्मुखम् । प्रणम्य परया भक्त्या तुष्टुवुर्दैवनायकम् ॥ ३६
सुब्रह्मण्यस्तदावीक्ष्य रथं तं दानवस्य सः । मा पुनर्गच्छ दैत्यस्य समीपं त्वं वसात्र च ॥ ३७
इत्युक्त्वा स्तंभयित्वैनमिन्द्रलोकरथं गुहः । न्यवसत्तत्र धर्मात्मा वीक्ष्य शूरं निजेक्षणैः ॥ ३८
दृष्ट्वैनदसुरः कोपाच्छरवर्षास्त्राणि षण्मुखे । छित्त्वैतानि गुहो बाणैर्वर्षाण्यस्त्राणि पुनर्वहन् ॥ ३९
मोचीहस्य गुहस्त्वेतान् दानवः पापकर्मकृत् । युयोज सारथौ कोपात् मार्गणान् सुयहनम् ॥ ४०
सहस्रैः पीडितो वायुरस्त्रस्रोतोभिराकुलः । रथस्य चोदनेऽशक्तस्तस्थौ तथापि दुःखितः ॥ ४१
दृष्ट्वैनदसुरस्त्वार्यं धनुरच्छिनदाशुगैः । गुहस्सहस्रसंख्याकैर्निशितैर्मार्गणोत्तमैः ॥ ४२
ततः प्रवृद्धतरां शूरस्सिंहं युक्त्वाशु वाहनम् । गुहस्य सन्निधिं प्राप कृत्वा कोलाहलारवम् ॥ ४३
शूलमादाय वेगेन सर्वसंहारकारकम् । तदीयवाहनस्सिंहो रथाश्वान् षण्मुखस्य सः ॥ ४४
आस्फाल्यास्फाल्य वेगेन ववेल्लाकारं तदाभ्यरोत् । दानवोऽपि तदा शूलं प्रेरयामास षण्मुखे ॥ ४५
तदग्नीन् सृजन्तन् घोरान् विषाणि कुलिशान्यपि । विर्मोचनानि भूतानि चायुधानि महान्त्यपि ॥ ४६
वपमादीनि सत्त्वानि विसृजद्भीषणा भृशम् । वेगेन महता दाशिवगमद्गुहसन्निधिम् ॥ ४७
तस्मिन् कोटिशतान् स्कन्दो मुमोच निशितांस्तदा । तानुच्छिद्याग्रतः पश्चाद्गतं भासुरा यदा ॥ ४८

तत्याज कुलिशं घोरं तदा तस्योपरि क्रुधा । गुहस्य कुलिशं घोरं शूलमासे विधाय तत् ॥ ४९
समानीय भवत्वैतद्गुहपाणौ स्थितं स्वयम् । प्रहृष्टमनसो देवा रक्ष रक्ष दयानिधे ॥ ५०
हत्वैनं पापिनं घोरं दुष्टात्मानं प्रभो गुह । तुष्टुवुर्देवमीशानं सुराणां तमुमासुतम् ॥ ५१
तदा गुहश्शरान् घोरान् द्विसहस्राणि शीघ्रतः । तत्याज वाहने सिंहे दैत्यस्यास्य दुरात्मनः ॥ ५२
तदैव सिंहो भूपृष्ठे पतित्वाशु ममार सः । असुरस्तु तदा भूमिमाश्रितस्सहसा द्विजाः ॥ ५३
अत्यद्भुतं महाघोरं रथांगाह्वयपक्षिणः । गृहीत्वा देहमत्युग्रमुड्डीयनभसिक्षणात् ॥ ५४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे त्रयस्त्रिंशोऽध्यायः ॥

---

॥ अथ चतुस्त्रिंशोऽध्यायः ॥

शूरेण मायया बहुरूपग्रहणम् ॥

पक्षवातेन भूतानि वीरानपि बलाधिपान् । मोहयित्वा पुनश्चान्यांस्तुण्डेनान्यांश्च खादयन् ॥ १
तुण्डेन कांश्चित्कोपेन गृहीत्वा प्रैरयद्दिवि । पादाभ्यां दारयन् व्योम्नि तथा भूतानि कानिचित् ॥ २
भ्रमित्वोपरि वेगेन सारथिञ्च रथं तथा । वेगेन महताऽभ्येत्य सन्ताड्य व्योम गच्छति ॥ ३
पीडयत्याशु कोपेन रथबद्धतुरङ्गमान् । वीरशस्त्राणि घोराणि भक्षयित्वा विशीर्यति ॥ ४
दृष्ट्वैतदखिलं देवशूरस्यास्य दुरात्मनः । अनंतकोटिसंख्यानि शस्त्राण्यसिन्ववर्षद्धि ॥ ५
तानि सर्वाणि दैत्योऽयं पक्षाभ्यां ताडयन् भृशम् । खण्डयित्वाशु तुण्डेन पादाभ्यामपि दारयन् ॥ ६
परिभ्रमन्पुनर्वेगात् पाताळं वारिधीनपि । चक्रवाळगिरिं भूमिं पर्वतान् सरितस्तथा ॥ ७
पुनर्वेगेनचाभ्येत्य वीरान् भूतानि भक्षयन् । व्यक्षेपयत्तथाऽन्यानि तुंडेनास्फाल्य कोपतः ॥ ८
बभ्राम सुमहारावैष्षण्मुखस्य रथोपरि । वीक्ष्य तं पक्षिणं घोरं पार्वतीतनयः स्मयन् ॥ ९
न सांप्रतं ममेदानीं पक्षिणा युद्धमीदृशम् । इत्युक्त्वा रथमास्थाय भूमिष्ठोदेवनायकः ॥ १०
अवालोकयदिन्द्रस्य मुखमग्रे निवासिनः । इन्द्रस्तदानीं मायूरं गृहीत्वा रूपमद्भुतम् ॥ ११
आगत्य तं प्रणम्याशु विनयेनासुरान्तकम् । स्थित्वा मदुपरिस्वामिन् तेन युद्धं दुरात्मना ॥ १२
कुरु सर्वामरेशानेत्येवं तुष्टाव षण्मुखम् । तस्य तद्वचनं श्रुत्वा तथेत्याकर्ण्य षण्मुखः ॥ १३
मयूरं प्रेषयामास चक्रवाकोपरि क्रुधा । चक्रवाकस्तदा कोपादागत्यैनं शिखण्डिनम् ॥ १४
दंशयामास तुंडेन पादेनास्फाल्य रंहसा । मयूरोऽयं तदा खेदमापात्यन्तं भयान्वितः ॥ १५
तद्वीक्ष्य पार्वतीसूनुस्तस्य वक्त्रे शरान्बहून् । शिरोवक्षः प्रदेशेऽस्य मुमोचांघ्रिषु भूयसा ॥ १६
तैर्बाणैः पीडितोऽत्यन्तं रुधिरौघपरिप्लुतः । धुन्वन् पुनर्वितत्यायं पक्षौ स्वस्यातिभीषणौ ॥ १७
बभ्राम सकलान् लोकान् क्षणमात्रेण कंपयन् । तदानीं देवनाथोऽपि यत्र यत्रासुराधमः ॥ १८
निर्गच्छति महावेगात्तेषु सर्वत्र सायकान् । प्रेरयित्वा ववर्षास्मिन् युगान्तोद्युक्तमेघवत् ॥ १९
ततस्ससंभ्रमं तस्य धनुर्भञ्जयितुं खगः । आगतष्षण्मुखाभ्याशं महावेगेन भासुरः ॥ २०
अभ्यागतं समीपे तं वीक्ष्य खड्गेन देववः । छित्वा द्विधा महीपृष्ठे पातयामास षण्मुखः ॥ २१
स दुरात्मा पतित्वाऽयं महीरूपेण भूयसा । उत्थितस्सहसाऽण्डान्त मायया भीषयन्गुहम् ॥ २२
तदा रवीन्द्रोर्वायोश्च खस्थो मार्गो दुरात्मना । वीक्ष्य तं भीषणाकारं दुरात्मनिति तं ब्रुवन् ॥ २३

तत्याज तस्मिन् पापिष्ठे निशितान् लक्षसायकान् । महासमुद्ररूपेण बाणास्ते पृथिवीं क्षणात् ॥ २४
गत्वा विनाशयामासुरसुरामिश्ररूपिणीम् । ततो दैत्यः पुनः कोपात्समुद्रस्याहर्ति पृथुम् ॥ २५
गृहीत्वा महद्भुल्लोलैरागतप्यणमुखोपरि । युयोज तस्मिन्बाणानां शतं शीघ्रं सुरेश्वरः ॥ २६
त इमे मार्गणाश्शीघ्रं गत्वाऽनन्ताग्निरूपिणः । ददाह वारिधिं घोरमसुरेण विचेष्टितम् ॥ २७
तदानीं दानवः पापो गृह्णन्वह्निमहद्वपुः । निरगात्मतिरेवैशं स्फुरदग्निकणावृतः ॥ २८
सहस्रबाणांस्तत्याज तस्मिन् देवः स्वयमेव । चण्डवायुस्वरूपेण गत्वा ते वह्निमीदृशम् ॥ २९
शमयामासुरत्येनं तदानीमेव भूसुराः । जग्राह स महावायोदशरीरं भीषणं भृशम् ॥ ३०
पापात्मा दानवो घोर स्तदानीमेव वञ्चकः । तस्मिन् लक्षशरान् घोरान् सन्दधे देवनायकः ॥ ३१
अमी शरा महासर्पसंघरूपेण निर्गताः । कवलीकृत्य वायुं तु निवृत्ता गुहमापिरे ॥ ३२
तत्तद्रूपाणि सर्वाणि तत्तद्रूपं च दानवम् । इत्येत्थमापुस्सर्वेदं निवृत्यैतानि शीघ्रतः ॥ ३३
एवं घोरेण युद्धेन चत्वारो दिवसा गताः । सुरासुरेशयोर्युद्धमल्लयोर्ब्राह्मणोत्तमाः ॥ ३४
पुनस्त्रिमूर्तिरूपेण दैत्योऽयं वञ्चकः परः । समायाति महावेगाद्दानवाकारतः क्वचित् ॥ ३५
इन्द्रादि देवरूपेण भूताकारेण कुत्रचित् । पैशाचं रूपमास्थाय वह्नेरपि विभीषणम् ॥ ३६
अन्तकस्य महाघोरं रूपमादाय चैकतः । महावात्यास्वरूपेण परितो याति दुष्टधीः ॥ ३७
समुद्ररूपेणैकत्र धूप (विष) रूपेण चान्यतः । संघमेघाशनितमः पर्वतादिसवृन्दवत् ॥ ३८
दिङ्नागसिंहविहगमृगसंघ इव क्वचित् । स्वस्वरूपेणचान्यत्रतारकाकारतस्तथा ॥ ३९
सिंहाननस्याग्निमुखभानुकोपमुखादिनाम् । कनीयसां सुतानां च भीमरूपेण सर्वतः ॥ ४०
मन्त्रिसेनापतीनांच रूपं गृह्णन् कचित्कचित् । निर्गत्य सुमहापापे भीषयामास दानवः ॥ ४१
पलायन्त तदा देवा भृशंत्रस्ता स्समंततः । तदैतत्सर्वमालोक्य स्मितं कृत्वा गुहस्तदा ॥
सहस्रकोटिसंख्याकान्वर्षास्मिन् शरान् शितान् ॥ ४२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे चतुस्त्रिंशोऽध्यायः ॥

---

॥ अथ पञ्चत्रिंशोऽध्यायः ॥

स्कन्देन शूरपद्मवधः ॥

तानि सर्वाणि शस्त्राणि दैत्यस्यास्य दुरात्मनः । एवंचास्य स्वरूपस्य समाधिवशेन शीघ्रतः ॥ १
आगत्यतानि हत्वाशु स्वरूपाणि षण्मुखम् । शूर एवस्तदातस्थौ परिशिष्टो गुहान्तिके ॥ २
तमेनमसुरं वीक्ष्य देवः परमवैभवः । एतानि तवरूपाणि दृष्टवानस्मि दानव ॥ ३
मदीयमपिरूपं त्वं पश्येत्युक्त्वाऽमरेश्वरः । जग्राह विश्वरूपं स्वमवाङ्मानसगोचरम् ॥ ४
महानगाः पर्वता पादतलमध्ये व्यवस्थिताः । सागराः प्रपदे तस्य तारका ह्लादिनी ग्रहाः ॥ ५
पादाङ्गुलीषु विश्रान्ता गुल्फयोदशादि मादश्री । नैर्ऋत्यापाचती तावस्यैवान्तर्गतापुमं ॥ ६
जङ्घयोरूरपधिग्तामग्निर्जानौ महेशितुः । विपाद्यः स्थिता इन्द्रजयन्ताद्युरुसंस्थितौ ॥ ७
कटिसन्धौ कालपमापसुराः कटिदेशगाः । पार्श्वभागे स्थिता देवा नाना गुह्यादि देशगाः ॥ ८
शेषःस्वममूले नाभावुत्पत्तिजंपतांप्रभोः । दिव्ये वक्षसि शास्त्राणि ज्ञानं यज्ञोपवीतकम् ॥ ९

अण्डानि रोमकूपेषु पाणौ भोगस्य संस्थितिः । ब्रह्मा विष्णुश्च भुजयोरंगुलीष्वमरस्त्रियः ॥ १०
शब्दजालमशेषंतत् कण्ठदेशे समाश्रितम् । आस्यमध्ये स्थितावेदा देवदेवस्य भूसुराः ॥ ११
अक्षराणि च दन्तेषु जिह्वायांतु शिवागमाः । सप्तकोटिमहामन्त्रा ओष्ठदेशे व्यवस्थिताः ॥ १२
वायुर्नासिकसंस्थोऽस्य नेत्रयोरिन्दुभास्करौ । दिशश्चोत्रप्रदेशस्था ललाटे प्रणवः स्थितः ॥ १३
परमात्मा शिवः साक्षात् स्वयं शिरसि राजते । एवमत्यद्भुतं रूपं दर्शयामास षण्मुखः ॥ १४
दृष्ट्वैतदमरास्सर्वे भयकंपितविग्रहाः । कृताञ्जलिपुटा मूर्ध्नि स्तुतिं चक्रुः परां तदा ॥ १५
तान्वीक्ष्य कृपया देवो मास्तुभीर्षोऽमरा इह । इत्युवाच कृपांभोधिर्गुहः परमपावनः ॥ १६
तुष्टुवुश्च तदा देवास्सुब्रह्मण्यं प्रणम्य ते । शूरस्तु तादृशं रूपं दृष्ट्वा दैववशादयम् ॥ १७
चित्ते सञ्चिन्तयामास प्राप्य ज्ञानं गुहस्य सः । हत्वाऽऽसुरीमयं सेनामन्यैरपि मया सह ॥ १८
कृत्वा युद्धं महाघोरं इन्द्रलोकस्थं पुनः । हत्वा सवशागं मायां मत्कृतांच विनाशयन् ॥ १९
अनन्यसदृशं रूपं ससुरासुरमानुषम् । अनन्तकोटिब्रह्माण्डकृतावासमदर्शयत् ॥ २०
तमेनं मूढबुध्याहं ज्ञातवानस्मि बालिशम् । अयमेव महादेवः परमात्मा स्वयं शिवः ॥ २१
पुत्रसिंहमुखावेवं उक्तवन्तौ पुरा किल । न श्रुतं तद्वचोऽस्माभिर्मत्तैरैश्वर्यमानिभिः ॥ २२
पादरोमसु दृष्टानि तस्याण्डान्यखिलानिमे । आपादमस्तकं नेत्रैरस्य रूपं मयेक्षितम् ॥ २३
अनेककालं लसति सौन्दर्यं तु नवं नवम् । मलंबुद्धिर्न कुरुते तरां प्रीतिस्तु जायते ॥ २४
तपोमहिम्ना तस्यैतं दृष्टवानस्मि विग्रहम् । कृपया मयि देवोऽयं युद्धायात्र समागतः ॥ २५
जायतेच तरां भक्तिरेतस्मिन्नन्तरात्मनि । प्रदक्षिणनमस्कारस्तोत्रेषु च मनो मम ॥ २६
परिस्फुरति मे नेत्रं दक्षिणं बाहुरप्यहो । ज्ञात्वा शत्रुसहायार्थं आगतं तं मनो मम ॥ २७
परिद्रवति कोपेन परिक्षुब्धं तरामिह । हन्तुं यदिच देवोऽयं आगतो मां रणस्थलम् ॥ २८
कोतिभारस्तदातस्य लीलामेव चकार सः । अदर्शयन्महादेवो दैवतानांच वन्धनैः ॥ २९
नयुक्तमितिमां केचिदूचिरे ज्ञानमोहिताः । अनेन यस्मादयुधं वीर्यं कीर्तिस्ततस्तराम् ॥ ३०
मुक्त्वा देवान् प्रणम्यैनं स्थितं चेत्तत्कृतो मम । एवमादि विचार्यात्र मनसाऽस्मिन् स्थितेसति ॥ ३१
उपसंहृत्य विश्वात्मा विश्वरूपं वपुः पुनः । ज्ञानंच तस्य प्राचीनं स्वरूपमग्रहीत् द्विजाः ॥ ३२
विज्ञानेऽपहृते दैत्यः कोपेन परिपीडितः । वीक्ष्य देवं विहस्यायं करावास्फाल्य भीषणम् ॥ ३३
योद्धुं मया समर्थोऽयं मायया वपुरग्रहीत् । अस्यादृशं क्षणेनैतत् निगृहीतं मया शिशोः ॥ ३४
मत्समानमत्सदृशो नास्ति लोकेषु हि विचक्षणः । पश्चादेनं जयिष्यामि देवान् तत्सर्वान् क्षणेन तान् ॥ ३५
अल्पकालस्य बालस्य भक्षयिष्याम्यसंशयम् । इति सञ्चिन्त्य मनसा दुरात्मा विधिचोदितः ॥ ३६
महान्धकारं संपाद्य मायया भीषणं वपुः । अनेकपाणिपादौघमनेकमुखभीषणम् ॥ ३७
गृहीत्वैतादृशं घोरमुत्थितो व्योम्नि भूसुराः । तत्रस्थित्वा सुरान् सर्वान् वीक्ष्य कोपेन दानवः ॥ ३८
प्रवृत्तो भक्षितुं शीघ्रात् प्रसार्यांशमकरान्बहून् । तदा देवा भृशं त्रस्तास्सुब्रह्मण्यं सुरेश्वरम् ॥ ३९
रक्ष रक्ष कृपांभोधे भक्तानामभयप्रद । माययाशु दुरात्मानं देवानां भयदायिनम् ॥ ४०
महाघोरं महापापं भर्त्सयन्तं जगत्त्रयम् । इत्थं प्रलपमानास्ते दुद्रुवुश्च समंततः ॥ ४१
मयूररूपो मधवानप्यर्थयदसावपि । तदेषांतु वचश्श्रुण्वन् देवेशः कृपयान्वितः ॥ ४२
अपेक्ष्य शक्तिमतुलां शत्रुसंहारकारिणीम् । द्विधा भित्वाऽसुरं शीघ्रादागच्छेति मुमोच ताम् ॥ ४३

मन्दं मन्दं विनिर्गत्य सूर्यकोटिसमप्रभा । वर्षयन्ती महद्वह्निं विनिवार्यासुरं तमः ॥ ४४
मायारूपं च तस्याशु शक्तिरेषा समागता । यदा शूरस्य निकटं तदानीमसुरोत्तमः ॥ ४५
अनश्वरं कदाप्येनं किं मां शक्तिः करिष्यति । विहस्य कोपादसुरो लोकान् हत्वा क्षणाच्छिशुम् ॥ ४६
हनिष्यामीति वेगेन गत्वा मध्य पयोनिधे. । स्फुरद्वह्निप्रवालौघं धूमराशिच्छदावृतम् ॥ ४७
तप्तकाञ्चनपुष्पाढ्यं श्यामरत्नदलाङ्कुरम् । रक्तोपलफलाकीर्णं मेघशाखामनोहरम् ॥ ४८
ब्रह्माण्डभित्तिपर्यन्तं गतमूलं महोन्नतम् । वितन्वानं घनच्छायां लक्षयोजनदूरतः ॥ ४९
कंपयन्तं हरेर्लोकं ब्रह्मणोऽपि महीसुराः । दिक्पालानां च सर्पाणां सूर्यचन्द्रविवस्वताम् ॥ ५०
मातृणां कन्यकानां च लोकान् सप्तपयोनिधीन् । अण्डभित्तिं तदास्फाल्य दारयन्तं महीमपि ॥ ५१
गृहीत्वैतादृशाकार चूतवृक्षस्य दानव. । अपीडयज्जगत्सर्वं स्कन्धैरास्फाल्य मन्युना ॥ ५२
तदाटोपवशाद्भूमिस्फुटद्भूराकम्पिता । अधोभुवन जालानि न्यपतंश्च तदा भृशम् ॥ ५३
आदिकूर्मोऽष्टदिङ्नागा अनंताद्यामहोरगाः । चकम्पिरे समुद्राणामेकीभावोऽभवत्तदा ॥ ५४
गिरयस्तारकास्सर्वा न्यपतन् सर्वतो द्विजाः । चन्द्रसूर्यावुभौ सर्वैर्ग्रहैर्मुक्त्वा स्थान् स्वकान् ॥ ५५
अपलायंस्तरां त्रस्ता हाहेति परितो भुशम् । कैलासे केचिदमरा मेरावपि गतास्तदा ॥ ५६
पपात ब्रह्मणोऽप्यण्डं विभिन्नं भूतले भृशम् । एवमेतस्य दैत्यस्य मायां वीक्ष्य दुरात्मनः ॥ ५७
गुहस्य सा परा शक्तिः कोपेनात्यन्तभीषणा । महासंहाररुद्राभा व्याप्नुवन्ती जगत्तराम् ॥ ५८
विधातृहर्म्यमध्यस्थज्योतिर्लिङ्गस्वरूपिणी । महाभैरवशूलस्य समप्रख्यातिभीषणा ॥ ५९
दहन्ती सकलान् लोकान् मुक्त्वा कैलासपर्वतम् । शोषयित्वा तथांभोधीनागत्यामुं द्विधाकरोत् ॥ ६०
ततस्तु दानवः पाप. त्यक्तचूतस्वरूपवान् । स्वस्वरूप गृहीत्वाऽथ खड्गमादाय वेगतः (चागतः) ॥ ६१
तमेनमसुर घोरं पक्षोभित्वा द्विजोत्तमाः । विनिर्गत्य पुनश्शक्तिर्भासयन्ती वियत्स्थलम् ॥ ६२
स्तूयमाना सुरैस्सर्वैर्व्योमगङ्गाभिसिक्षणात् । स्नात्वा देवादिदेवस्य करमाप महीसुराः ॥ ६३
द्विधाभूतोऽसुरः पापो मार्गेनैकेन बर्हिणः । कुक्कुटस्यापरेणायं शरीराभ्यां विनिर्गतः ॥ ६४
मयूरकुक्कुटाकारी परमेशं गुह तदा । योद्धुमभ्यागतौ कोपाकुञ्चल्योद्धृत्यरंहसा ॥ ६५
कृपया तौ गुहः साक्षात्परमानंदविग्रहः । मयूरकुक्कुटावेतावपालोकयदक्षसा ॥ ६६
तयोर्यभूय विज्ञानं तदार्नो त्यक्तगर्वयोः । प्रणम्य तौ गुहं देवदेवं तुष्टुवतुर्भृशम् ॥ ६७
कुमहाप्यस्तदा वीक्ष्य कुक्कुट भीमविग्रहम् । ध्वजरूपेण तिष्ठास्मिन् मद्रथेतिजगादतम् ॥ ६८
तदाज्ञां शिरसा धृत्वा कुक्कुटः प्राप्तचेतनः । आरुह्य तस्य परमे रथे स्थित्वाऽति भीषणम् ॥ ६९
महारावं चकाराशु प्रलयांबुदमेघवत् । अथ शह्व मयूरास्स्वादारुह्यैने शिखण्डिनम् ॥ ७०
इन्द्ररूपाद्गुहस्तीव्रं यद्रावयदमु द्विजाः । मयूरस्तु तदा भूमौ अन्तरिक्षेच दिव्यपि ॥ ७१
सर्वलोकेषु भ्रुवैनमधावद्गुहः क्षणाद्य । धावतो बर्हिणो वेगादस्य्यो विभिदुस्तदा ॥ ७२
पपात मेरुभूपृष्ठे पृथिव्यपि तदास्फुरत् । अत्रिवायू चर्षपाते महाण्डेन भृशा तदा ॥ ७३
वितत्य केकि सौ पक्षी केकारावैर्जगत्त्रयम् । विभीषयस्तदाश्वस्त पञ्चाननादासु सर्वतः ॥ ७४
उत्पादयन् भयं शेष राहु केत्वादिनां भृशम् । उवाह देवसेनेश सुगन्तव्य महाबलम् ॥ ७५
मेघरूपो हरिर्यद्वत् परमेशमुवाह सः । निमिषैकमात्रात्तु सर्वत्र शिखण्डिनम् ॥ ७६
अनन्तकोटिब्रह्माण्डानुपमापरिगतो गुहः । प्राप युद्धस्थले देवाश्च देवमुख्या. स्थिताः ॥ ७७
तदा धर्ममनायन्तौ रूप कुक्कुटबर्हिणोः । गुहाज्ञया परित्यज्य स्वा रूपं जगृहतुः स्वकम् ॥ ७८

नमस्कृत्वा गुहं भक्त्या भृशं तुष्टुवतुस्तदा । तथा भूतानि वीराश्च सह सेनाधिपैर्बलैः ॥ ७९
संगत्य देवमावृत्य चक्रुः कोलाहलारवान् । ब्रह्मविष्णुमुखादेवाः प्रणम्य गुहमव्ययम् ॥ ८०
प्रहृष्टमनसस्सर्वेऽप्यस्तुवन् देवनायकम् । कृपापूरितदृष्ट्यैतानवालोकयदग्निभूः ॥ ८१
मृतश्शूर इति श्रुत्वा तद्भार्या पद्मकोमला । तदानीमेव मरणमापेयं मुहूरोत्तमाः ॥ ८२
विविशुश्च पदानार्थस्तस्य वाह्निं मनोहरम् । शूरादीनां मृतिं श्रुत्वा हिरण्यश्शूरपद्मजः ॥ ८३
हन्त तात वचोऽस्माभिरीरितं न श्रुतं त्वया । मृतः कुक्कुटरूपेण ध्वजे तिष्ठसि वैरिणः ॥ ८४
मायूरं वपुरास्थाय वहस्येनं किलाधुना । एवमादि विलप्यायं यदिदृष्टोऽस्य सैनिकैः ॥ ८५
बाधन्ते मां तदाऽऽगतं इति सञ्चिन्त्य चेतसि । गत्वा शुक्रस्य निकटं स्वगुरोर्दानवात्मजः ॥ ८६
पित्रोः कृत्यानि कृत्वाऽयं ऐश्वर्यं क्षणभंगुरम् । विनिन्द्य शिवमुद्दिश्य मोक्षार्थीतप आश्रितः ॥ ८७
यः पठेच्छृणुयाद्वैतदाख्यानं परमाद्भुतम् । तस्य शत्रुभयं नास्ति सुब्रह्मण्यकृपाबलात् ॥ ८८
श्रुत्वा ऋषिमुखेभ्यस्तदेतद्विष्णुसुरं रिपुम् । कालनेमिं महाघोरं अजयत् ब्राह्मणोत्तमाः ॥ ८९
उपमन्योर्ऋषिश्रेष्ठाच्छ्रुत्वा कृष्णो जगत्पतिः । भौमादीनसुरान्पापान् हतवान् क्षणमात्रतः ॥ ९०
श्रुत्वा पितामहच्छुकात् दधीचस्तपतांवरः । आख्यानमेतदखिलं अजयद्धरिमच्युतम् ॥ ९१

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
युद्धकाण्डे पञ्चत्रिंशोऽध्यायः ॥

॥ युद्धकाण्डः समाप्तः ॥



॥ श्री ॥

ஸ்ரீராமஜெயம்.

श्री महागुरुभ्यो नमः ॥ श्री विघ्नेश्वराय नमः ॥ अविघ्नमस्तु ॥

श्री शरवणोद्भवाय नमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ देवकाण्ड प्रारम्भः ॥



॥ देवकाण्डे प्रारम्भ मङ्गल श्लोकाः ॥

कल्याणं वृदतं कटाक्षलवतो भक्ताय हत्वा रिपून् कल्याणाचल कार्मुकस्य तनुजं कारुण्यपाथो निधिम् ।
कल्याणाकृतिमव्ययं गिरिसुता प्रेमास्पदं पावनम् कल्याणाय भजेऽनुजं गणपतेः श्रीदेवसेनापतिम् ॥
भजेतरामहं वल्ली देवसेनापतिं गुहम् । मयूरवाहनं शक्तिधरं तारकमारकम् ॥

॥ अथ प्रथमोऽध्यायः ॥

श्री देवसेना विवाह निश्चयः ॥

अथावेक्ष्य गुहो देवान् जयन्तप्रमुखानिह । वन्धितानानयेत्याह वीरबाहुं तदाऽसुरैः ॥ १
स तथेति विनिर्गत्य गुहाज्ञां शिरसा वहन् । जयंतादीनवाप्यार्यं वन्दितस्तैर्महाबलः ॥ २
वृत्तान्तमुक्त्वा तान् शीघ्रादानयित्वा समागतः । प्रणम्य ते गुहं दृष्ट्वा स्तुतिं चक्रुस्तरां तदा ॥ ३
तानुवाच कृपांभोधिस्सुखिनो भवताधुना । स्वर्गभोगान् यथापूर्वं भुक्त्वा यूयमितिद्विजाः ॥ ४
कृताशिषो जयंतादि देवाः परमया मुदा । प्रणेमुरिन्द्रमभ्याशे स्थितमग्निभुवस्तदा ॥ ५
परितुष्टस्सुरेशानो जयंतादीन् सुरानिमान् । आलिंग्य प्रणवेनायमुवाच वचनंच तान् ॥ ६
यानि भूतानि वीराश्च मृताः पूर्वं रणस्थले । उत्तिष्ठन्तु पुनश्शीघ्रादिति सस्मार षण्मुखः ॥ ७
तदाज्ञया मृतास्सर्वे नमिताः प्राप्त चेतनाः । अपांपतिमवेक्ष्याथ गुहः परनिषूदनः ॥ ८
महेन्द्रनगरं दैत्यकृतावासं मदाज्ञया । कबळीकुरु शीघ्रात्वमित्याज्ञां कृतवान् द्विजाः ॥ ९
स तथैव चकाराशु संभीत्यांभोनिधिः पुरम् । विनिर्गत्य ततो देवैर्वीरैरन्यैश्च षण्मुखः ॥ १०
श्रीसन्धिनगरं रम्यमाप वाद्यमहारवैः । तत्र गत्वा मयूरात्स्वादवरुह्यासनं महत् ॥ ११
सिंहमध्यास्यरोहार्यं सूर्यश्चास्तं गतस्तदा । कुमारं तत्र ते भक्त्या (पद्धत्या) देवादेवमपूजयन् ॥ १२
तदानीं तेषु कृपया दृष्टिं चक्रे सुरेश्वरः । उदितेतु पुनस्सूर्ये परेद्युष्षण्मुखः स्वयम् ॥ १३
अपूजयन्महेशानं जगतां पितरं तदा । पूजयित्वा पुरारातिं षण्मुखो हृष्टमानसः ॥ १४
आरुह्य बर्हिणं रम्यं नानालंकारमण्डितम् । श्रीसन्धिनगराद्वीरैस्सेनेशैस्स्यन्दनस्थितैः ॥ १५
प्रतस्थे परया प्रीत्या पराचलमभि द्विजाः । गुहाज्ञया तदा विष्णुब्रह्ममुख्यास्सुरेश्वराः ॥ १६

स्वं स्वं वाहनमारुह्य निर्ययुस्सहसा द्विजाः । छत्रचामरसंघाश्च निर्ययुर्व्यजनैस्सह ॥ १७
ध्वजा महोन्नतास्तद्वद्वाद्यानि विविधान्यपि । चञ्चुनाभूमिमुल्लिख्य मयूरो भीषयन्नहिम् ॥ १८
केकारवैर्महाघोरैर्विचचाल क्षणात् द्विजाः । कुक्कुटोऽपि महामेवारशनि निजचञ्चुना ॥ १९
लेलिहानो महारावो निरगाद्भूसुरास्तदा । मृगाणां चापि भूतानामारावैस्तु मृगाःपरे ॥ २०
गुहां प्रविविशुस्त्रस्ताः पर्वतस्य समंततः । केकीकुक्कुटशब्देभ्य भृशंत्रस्ता महोरगाः ॥ २१
बिलानि विविशुश्शीघ्रं गंभीराणि तदा द्विजाः । समजायत वेदाना (देवाना) मारावोऽपि ऋषीश्वराः ॥
अस्तुवन् गुहमीशानं स्तोत्रवर्यैः स्तुतिप्रियम् । तदा किन्नरमुख्यानां गानासक्तमनागुहः ॥ २३
पराचलं महारावैरापायं दानवान्तकः । ऋषयष्षड्विधास्त्राद्या देवा अपि गुहं तदा ॥ २४
स्थातव्यमत्र देवेश भवता पर्वतोत्तमे । एवमप्रार्थयन् स्तुत्या सुब्रह्मण्यं सुरेश्वरम् ॥ २५
तानुवाच गुहो वीक्ष्य युष्माभिस्समपीरितम् । याथाज्ञातं मया पूर्वं तदेतत् स्मारितं किल ॥ २६
इत्युदीर्य गिरेरूर्ध्वमारुरोह सुरेश्वरः । तत्रगत्वा गुहो वीक्ष्य विश्वकर्माणमग्रतः ॥ २७
निर्मातव्यं त्वया रम्यं पुरं मम सुरप्रिय । इति संभाषयामास कारुण्यामृत विग्रहः ॥ २८
स तस्य भवनं मूर्ध्नि कृत्वा तक्षाच नाकिनाम् । निर्ममेऽथ पुरं रम्यं नानावृक्षोपशोभितम् ॥ २९
गोपुराट्टालसंयुक्तं प्राकारवलभीवृतम् । नानाश्चर्यसमोपेतं नानालंकारमण्डितम् ॥ ३०
एवं निर्मितमन्वीक्ष्य त्वष्ट्रा सन्तुष्टमानसः । वीथीषु वीरान् भूतानि विनियोज्य बलाधिपैः ॥ ३१
प्रविश्य स्वालयं रम्यं मयूरादवरुह्य सः । सिंहासनं समारुह्य पार्श्वयोश्च सुरांस्तदा ॥ ३२
स्थापयित्वा स्वयं वीरैः कृतनानोपचारवान् । ऋषिभिष्षड्भिरत्यन्तं पूजितः पार्वती सुतः ॥ ३३
तदा तेषां सुविज्ञानं उपदेष्टुमनास्सुरान् । ब्रह्मादीन् स्वस्वभवनं प्रेरयामास भूसुराः ॥ ३४
प्रेरयित्वा स्वविज्ञानं उपदिश्यात्र संस्थितः । ब्रह्मविष्णुमुखानिन्द्रः प्रोवाच स्वसुतामिह ॥ ३५
गुहाय संप्रयच्छामि विवाहोक्तविधानतः । इति तस्य वचः श्रुत्वा सन्तोषेण तथेति ते ॥ ३६
आपिरे स्वानि वेश्मानि कृतकृत्या इव क्षणात् । स्वगृहं प्राप्य मघवानिन्द्राणीं स्वसुतांगजाम् ॥ ३७
आनेतुं प्रेषयामास तथेति स्वभटांस्तदा । तद्भ्रे शीघ्रमेवैनामिन्द्राणीं मेरुवासिनीम् ॥ ३८
प्रणम्य शूरमुख्यानां संहारं देवमोचनम् । पराचलप्रवेशंच गुहस्य परमात्मनः ॥ ३९
सुतोद्वाहप्रसङ्गंच यथेन्द्रेण सुभाषितम् । उक्त्वा तामानयित्वाशु ससुतां सगजां तथा ॥ ४०
प्रापुरिन्द्रस्य भवनं नानालंकारशोभितम् । तामागतां शचीं दृष्ट्वा वन्दीग्राहमिताक्षया ॥ ४१
कन्याः प्रणेमुरागत्य परिफुल्लकपोलकाः । जयन्तोऽपि समागत्य नमश्चक्रे स्वमातरम् ॥ ४२
आलिंग्य तं सा रुदती (सुदती) दु:खमाप तदा भृशम् । समीचीनामुवाचैषा वाचं स्त्रीणांच नाकिनाम् ॥ ४३
सर्वे जना निशम्यैतत् कल्याणं शरजन्मनः । तुष्टिमापुस्तदाऽत्यन्तं प्रसन्नेनान्तरात्मना ॥ ४४
विनिर्गत्य सुराधीशस्समागत्य सुरैस्सह । प्रणम्य षण्मुखं प्राह विनयेन नताननः ॥ ४५
शूरपद्ममुखान् दैत्यान् स्वामिन् हत्वा सुरानिमान् । ररक्षिथ कृपासिन्धो दत्वाऽभयं पदं स्वकम् ॥ ४६
प्रयच्छामस्ततः किंवा लीलामङ्गलविग्रह । तथापि देवदेवेश भक्तानामिष्टपूरक ॥ ४७
रक्षार्थे देवतानां त्वं मत्पुत्र्याः पाणिसंग्रहम् । कुरु सर्वामरेशान रक्ष रक्ष दयानिधे ॥ ४८
इत्युक्त्वा प्रणनामार्यं दण्डवत्पृथिवीतले । तमाह देवदेवेशस्तथेत्युक्त्वा पुरन्दरम् ॥ ४९
परेद्युरेव कल्याणं भवत्वत्र मदाज्ञया । उत्तिष्ठ शीघ्रं गच्छत्वं तदर्थं यत्नमाचर ॥ ५०
इत्युक्त्वा प्रेषयामास सन्तोषेणामराधिपम् । ततोऽमरेशो निर्गत्य तुष्ट्या परमया युतः ॥ ५१

स्वगेहं प्राप्य दूतान् स्वान् प्रेषयामास शीघ्रतः । भूपतीन्मुचुकुन्दादीन् गन्धर्वाधिपतीन्सुरान् ॥ ५२
आनयध्वं गुहस्यात्र श्वः कल्याणमिति द्विजाः । पुनश्च विश्वकर्माणं कुरु कल्याणमण्टपम् ॥ ५३
वापीकूपतटाकादीनन्यानिष्करणान्यपि । इति सञ्चोदयामास मघवान् सुरवर्धकिम् ॥ ५४
स तथेति चकाराशु तत्सर्वं सुरवर्धकिः । एवमिन्द्रस्तदा कृत्वा कल्याणापेक्षितं स्थितः ॥ ५५
मुचुकुन्दमुखान्दूता भूपतीनमरानपि । ध्वजिश्चिपनिदर्शं वृत्तान्तं ब्राह्मणोत्तमाः ॥ ५६
मुचुकुन्दस्समाकर्ण्य कल्याणं षण्मुखस्य सः । प्रीत्या परमयाऽऽश्चर्यं दूतास्तानुपचारतः ॥ ५७
सबन्धुभिर्नागरैश्च स्वदारैर्विलासिभिः । नागरीभिश्च योषाभिः पुरन्ध्रीभिर्विनिर्गतः ॥ ५८
प्राप तत्पत्तनं रम्यं यत्र स्कन्दो विराजते । अन्येऽपि पृथिवीपालाः दिगन्तेषु स्थिता द्विजाः ॥ ५९
चन्द्रसूर्यौ तथा देवा ऋषयः पुण्यशालिनः । श्रुत्वा दूतमुखेभ्यस्ते कल्याणं ह्यागमन् ॥ ३०
गृहं प्रमनसस्सर्वे नानालंकारमन्धराः । चतुरंगबलैस्साकं वाद्यानां च महारवैः ॥ ६१
शिबिकान्दोलिकारूढैः प्रभुभिश्च समन्ततः । सुन्दरीभिस्सुरम्याभिः विनिर्गत्य महाबलाः ॥ ६२
पराचलबहिर्भूषु स्वावासं चक्रिरे मुदा । पुष्पारामेषु वृक्षाणामारामेषु सरित्स्वपि ॥ ६३
प्रपासु मण्टपेष्वत्र संबाधेन महीसुराः । मुचुकुन्दमुखा भूपा देवाश्च ऋषयस्तदा ॥ ६४
शतक्रतोर्गृहं गत्वा दृष्ट्वा तं त्वरया सह । मिथः कृतोपचारास्ते कृतसल्लापिनोऽवसन् ॥ ६५
समागतास्तु देवानां भूपानां च वराः स्त्रियः । इन्द्राणीनिकटं गत्वा प्रणम्यैनां च तत्सुताम् ॥ ६६
कल्याणवेषां तां देव्यो गजनायिकसज्जिकाम् । अलंचक्रुस्ततस्तास्ताः दिव्याम्बरविभूषणैः ॥ ६७
ततो विधाता निर्दिष्टस्समयोऽयमिति द्विजाः । कल्याणाय निशम्यैतदिन्द्रो विष्ण्वादिभिस्सह ॥ ६८
सुब्रह्मण्यस्य भवनं गत्वा देवं प्रणम्य सः । आगच्छ देवदेवेश विवाहाय गृहं मम ॥ ६९
समयोऽयं समीचीनस्त्वायस्वैनान्कृपानिधे । इत्युक्तवन्तं तं प्रेक्ष्य परमात्मा गुहस्तदा ॥ ७०
विहस्य किञ्चित्सन्तोषादवरुह्यासनात्स्वकात् । आरुह्य बर्हिणं रम्यं नानालंकारमन्थरम् ॥ ७१
नवाधिकैर्महावीरैर्लक्षपर्यन्तगामिभिः । कृता मपायनस्तोत्रैर्देवैरञ्जलिपाणिभिः ॥ ७२
विकीर्यत्पुष्पवर्षाभ्यां भक्ताभ्यां परया मुदा । भजनारायणाभ्यां च प्रतस्थे सहसा द्विजाः ॥ ७३
तदानीं चन्द्रसूर्यौ च छत्रे दधतुरुज्वले । चामरव्यजनाभ्यां च वायुप्रचेतसावुभौ ॥ ७४
कालोऽपि भीषणं खड्गमादाय निरगात्तदा । वेदघोषोऽभवच्छान्त्यो वाद्यानां च महारवाः ॥ ७५
ऋषयश्च तदा स्तोत्रैरस्तुवन् स्तुत्यमव्ययम् । कुक्कुटोऽपि तदारावान् अकरोद्भीषणं भृशम् ॥ ७६
जगुर्गानानि रम्याणि विप्रास्तु कलवाङ्मयाः । ऊर्वशी मेनका रम्भा ननृतुर्गानतत्पराः ॥ ७७
पूर्णकुम्भान् समादाय ऋषयोऽग्रे समागताः । एवं नानोपचारेण वीथीरुल्लंघ्य षण्मुखः ॥ ७८
मरुत्वतो गृहद्वारवीथीमापामरैस्सह । तदा सरस्वतीलक्ष्मीमुखा देववरस्त्रियः ॥ ७९
नीराजनक्रियाश्चक्रुरष्टमङ्गलकान्यपि । प्रदक्षिणत्रयं कृत्वा विनिशुर्भवनान्तरम् ॥ ८०
ततस्तु भगवान् देवो मयूरादवरुह्य सः । कल्याणशालानिकटमाप मङ्गलसंरवैः ॥ ८१
तदा समागता देवी शक्रस्य परया मुदा । अप्सरोभिर्गृहं नत्वा (गत्वा) क्षीरैः पादावपूजयत् ॥ ८२
आनर्च पुष्पैर्दिव्यैस्सा कृत्वा दीपावलिं पुनः । प्रदक्षिणप्रणामानि कृत्वा भवनमाप सा ॥ ८३
सुवर्णपादुके रम्ये नानारत्नविचित्रिते । धृत्वा गुहस्तानैर्देवो ययौ कल्याणमण्टपम् ॥ ८४
समारुरोह तत्रस्थं दिव्यं सिंहासनं पुनः । विष्ण्वादिदेवाः स्कन्दस्य नियोगात् स्वासनानि ते ॥ ८५
भेजिरे मुचुकुन्दाद्याः प्रणम्याञ्जलिपाणयः । वीरबाहुमुखा वीरा विविशुर्गृहं सत्क्रियाम् ॥
एवं नानोपचारेण पूज्यमानस्सुरेश्वरः ॥ ८६

अथ निरगमदीशस्स्यन्दनं व्योमयानं कनकमणिविचित्रं सार्धमद्रीन्द्रपुत्र्या ।
वियति परिविशुद्धे वाद्यघोषैरनेकैर्जितघनघनरावैराश्रितो द्रष्टुमेतत् ॥ ८७

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
देवकाण्डे प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

श्रीस्कन्ददेवसेनापरिणयः ॥

तत्र दृष्ट्वा महादेवं समुत्थाय गुहादयः । प्रणम्य परया भक्त्या तुष्टुवुर्बद्धपाणयः ॥ १
अवरुह्य विमानात् स्वात् निरगाद्वया शिवः । तौ गुहः पुरतो गत्वा पार्वतीपरमेश्वरौ ॥ २
प्रणम्य पादयोर्मूर्ध्ना तुष्टाव विनयेन सः । समालिङ्ग्य गुहं शम्भुस्समाघ्रायाशु तच्छिरः ॥ ३
तृप्तिं नाप तदाऽस्य तं पुनः पुनरहो द्विजाः । विष्णुब्रह्मादयो देवा नत्वा देवं त्रियम्बकम् ॥ ४
अस्तुवन् विविधैस्स्तोत्रैर्बद्धाञ्जलिपुटास्तदा । कृपया तान् विलोक्येशः प्राप कल्याणमण्डपम् ॥ ५
अनुसृत्य सुरास्सर्वे परमेशं तदागताः । तत्र सिंहासनं दिव्यमागतं तच्छिवाज्ञया ॥ ६
अलंचकार तद्देवः परमानन्दविग्रहः । सुब्रह्मण्यं महादेवः स्वाङ्कमारोपयत्तदा ॥ ७
प्रणेमुरम्बिकानाथं संस्तुत्य सकलास्सुराः । त्वदाज्ञया गुहः स्वामी हत्वा दैत्यान् सुदुर्ग्रह ॥ ८
मोचयित्वाऽमरान् बद्धानागतोऽत्र पराचले । प्रीतये षण्मुखस्याथ मघवान् स्वसुतामिह ॥ ९
पाणिं ग्राहयति स्वस्य कुलस्योद्धृतये प्रभो । एवं प्रणम्य देवेशं ब्रह्मा वृत्तान्तमुक्तवान् ॥ १०
तदङ्गीकृत्य शिरसश्चालनेन महेश्वरः । द्रष्टुमभ्यागतोऽस्म्याहं कल्याणमिति चावदत् ॥ ११
पुरन्दरं तदा विष्णुरानयाशु सुतां तव । कल्याणवेषां परमां जगादेवं द्विजोत्तमाः ॥ १२
गत्वाऽमरेश्वरश्शीघ्रमानिनायात्मजां तदा । कल्याणमण्टपे लक्ष्मीवाणिभ्यां सह सुन्दरीम् ॥ १३
समुत्थाय ततो देवाः प्रणेमुस्तां वराङ्गनाम् । पार्वतीपरमेशानौ श्वशुरौ प्रणनाम सा ॥ १४
अवलोक्य तदा लज्जामाप षण्मुखमग्रतः । तदानीं पार्वतीनाथः कृपा चक्षेऽप्यलोकयताम् ॥ १५
करेणामृश्य तामेनां गौरी सञ्चुम्ब्य गण्डयोः । कृपया वीक्ष्य देवेशी जगतां जननी स्नुषाम् ॥ १६
स्वपुत्रं चासने सैंहे स्थापयित्वा गता स्वयम् । एकासनस्थितावेतौ देवसेनागुहावुभौ ॥ १७
वीक्ष्य सर्वे सुरा नत्वा सस्तोत्रं प्राणिरे तदा । चकार षण्मुखस्याथ पादप्रक्षालनं शुचिः ॥ १८
शचीपाणिस्थभृङ्गारजलैरिन्द्रो विनिर्गतैः । अभ्यर्च्य चन्दनैः पुष्पैर्धूपदीपादिभिस्तथा ॥ १९
कृतनानोपचारौघः पादोदं पावनं तदा । कुत्रचित् स्थापयामास स्वीकर्तुं तदनन्तरम् ॥ २०
जलमादाय हस्तेन गुहस्यैव कुटुम्बिनी । इति प्रवक्तदाधारां चकार मघवान् द्विजाः ॥ २१
ततो मङ्गलसूत्रं संगृह्य मनसा विधिम् । प्रादात् गुहकराब्जे तत् स्वेच्छामङ्गलहेतवे ॥ २२
बबन्ध देवसेनायाः कण्ठे तद्देवनायकः । सुगन्धिकुसुमस्रग्भिः गुहः कण्ठमभूषयत् ॥ २३
ततः पुरन्दरः पुत्रीजामात्रोस्सुरसायनम् । अमृतं फलमन्यच्च नैवेद्यमकरोत्सुधीः ॥ २४
वाद्यघोषस्तदाऽत्यन्तं बभूव घननादवत् । आशीः प्रयुज्य तत्रस्थास्तृप्तिमापुस्तदा भृशम् ॥ २५
जुहाव समिदाज्याहुतीभिः पावके ततः । प्रदक्षिणाविधिं विधिविधिना ब्राह्मणोत्तमाः ॥ २६
प्रदक्षिणीकृत्य वह्निं तया स्कन्दस्स्वयं प्रभुः । पाणिनाऽऽरोपयामास पत्न्याः पादं तदाऽश्मनि ॥ २७

ददर्शतुस्तदात्मेतौ दंपती तामरुन्धतीम् । ततो महेश्वरं गौरीं पितरौ जगतामुभौ ॥ २८
त्रीणिप्रदक्षिणान्यत्र कृत्वा नेमतुरञ्जसा । स्थापयामासतुर्गौरीपरमेशौ निजासने ॥ २९
समालिङ्ग्य स्नुषां पुत्रं कृपादृष्ट्या विलोकयतौ । अथ विष्णुमुखा देवा भद्रसिंहासनस्थितान् ॥ ३०
प्रणम्य तुष्टुवुर्भक्त्या दृष्ट्वा तान् लोचनप्रियान् । अंतर्दधतुरंबेशौ तदानीमेव भूसुराः ॥ ३१
आश्चर्येण ततो देवाः स्तोत्रं चक्रुरुमेशयोः । तदानीं भार्यया साकं स्वालयं प्राप षण्मुखः ॥ ३२
शृण्वन्मङ्गलवाद्यानि स्तोत्राणि विविधान्यपि । द्वारि स्थित्वासुरान् सर्वान् प्रेषयित्वा गृहान्प्रति ॥ ३३
द्वारपालान् गृहद्वारि कल्पयित्वा तदा प्रभुः । विवेशान्तःपुरं रम्यं भार्यादत्तकरो द्विजाः ॥ ३४
देवसेनागुहौ तत्र तस्थतुः परया मुदा । मुचुकुन्दमुखान् भूपान् देवानन्यानृषीश्वरान् ॥ ३५
यथायोग्यं सुपूज्यांस्तान् पूजयित्वा पुरन्दरः । वासोभिर्भूषणैर्दिव्यैः कल्पवृक्षसमुद्भवैः ॥ ३६
त्रासदोषविनिर्मुक्तैर्मणिभिर्हारकङ्कणैः । तोषयित्वा यथान्यायं प्रेषयामास तान् द्विजाः ॥ ३७
शच्या सह तदा सोऽयं स्वगृहे न्यवसन्मुदा । स्थित्वाऽत्र कतिचित्काले सुब्रह्मण्यस्त्रिशासह ॥ ३८
पट्टाभिषेकमिन्द्रस्य कर्तुं स्वर्गं प्रति द्रुतम् । प्रतस्थे स्वगृहद्वारि सर्वदेववरो द्विजाः ॥ ३९
तदा भतस्थुर्भूतानि वीरास्सेनाधिपा अपि । चक्रुः कोलाहलारावान् पटहानां महारवैः ॥ ४०
तच्छ्रुत्वा मघवान् ब्रह्मा हरिरन्ये सुरोत्तमाः । सर्वेऽपि मिलितास्तत्र गुहधामान्तिके तदा ॥ ४१
ततो मनोजवं रम्यं रथमारुह्य षण्मुखः । प्रतस्थे सकलान् देवान् कृतस्तोत्र प्रणामकान् ॥ ४२
निजासनान्यधिष्ठातु मुक्त्वा देव्या क्षणात् द्विजाः । गुहाज्ञया ततो देवा वाहनेषु व्यवस्थिताः ॥ ४३
निकटं देवदेवस्य पुरतो भक्तिसंयुताः । वाद्यानामारवोऽप्यासीत् प्रळयांबुदनिस्स्वनः ॥ ४४
निर्ययुश्छत्रिणः केचित् ध्वजिनश्शुभ्रचामराः । एवं निर्गत्य देवेशः प्रापायममरावतीम् ॥ ४५
विदग्धामग्निना शून्यां दृष्ट्वा तां पार्वतीसुतः । सुरलक्षणमन्वीक्ष्य कुर्वतां पूर्ववत् क्षणात् ॥ ४६
इति प्रोवाच भगवान् कारुण्यामृतसागरः । निर्ममे स तथैवाशु पुरीं सर्वसुरालयाम् ॥ ४७
तदा विष्णुमुखा देवास्त्वष्टारं शिल्पिनां वरम् । तोषयामासुरत्यन्तं मृदुवाग्भिर्महीसुराः ॥ ४८
तेन साकं सुरा गत्वा गुहमेतद्व्यजिज्ञपन् । श्रुत्वा तद्वचनं तेषां वाहनादवरुह्य सः ॥ ४९
प्राप स्वसदनं रम्यं तत्रस्थ चित्रशोभितम् । तत्र सिंहासने रम्ये पत्न्या तस्थौ तदाऽग्निभूः ॥ ५०
तदा शची सुरस्त्रीभि र्विमानेनागता गृहम् । स्वकीयं सर्वरत्नाढ्यं सर्वाश्चर्यसमन्वितम् ॥ ५१
तदानीमग्निभूः प्राह ब्रह्माणं पार्श्ववर्तिनम् । पट्टाभिषेकं कृत्वा त्वमिन्द्रस्यागच्छ शीघ्रतः ॥ ५२
स देवस्य परामाज्ञां कृत्वा मूर्ध्नि स्वके विधिः । अपेक्षितानि द्रव्याणि संपाद्यागत्य तद्गृहम् ॥ ५३
कृत्वाऽभिषेकं शुभ्रोदैः पट्टबन्धं तदाऽकरोत् । पुनः प्राप गुहाभ्याशं स्वयं तेनाभिपूजितः ॥ ५४
ततो मरुत्वानृषिभिराशिषा संप्रयोजितः । वन्दितो निखिलैर्देवैर्नृत्यद्भिश्चाप्सरोगणैः ॥ ५५
गायद्भिः किन्नरवरैः कृतनानोपचारयान् । कियन्तं कालमास्थाय सिंहासनमनुद्विजाः ॥ ५६
प्रस्थितो देवसेनेशं ननाम परितोषवान् । शरजन्मा मरुत्वन्तं स्वयं पालय पूर्ववत् ॥ ५७
निष्कण्टकं सुखेन त्वमित्युवाच दयानिधिः । प्रेरयामास विष्ण्वादीन् सर्वदमानिप्रति द्विजाः ॥ ५८
स्वगेहद्वारि वीरान् स्वान् कृत्वा देवान् स्वयं गुहः । शुद्धान्तं प्रविवेशायं प्रीत्या परमया युतः ॥ ५९
उपित्वैवं कियत्कालं स्वर्गलोके यथारुचि । पुनः स्कन्दगिरिं गन्तुमियेषांगनया सह ॥ ६०
प्रतस्थे सहसा स्वामी ब्रह्मविष्णुमुखान् सुरान् । प्रणम्य परया भक्त्या बद्धाञ्जलिपुटैः स्थितान् ॥ ६१
कृपया वीक्ष्य तान् स्वेषु लोकेषु प्रैरयद्गुहः । प्रेरयित्वा स्वयं देव्या रथमारुह्य सुन्दरम् ॥ ६२

लवल्याख्याऽभवत्तस्याः केन वा हेतुना तथा । यदेतदखिलं सूत तपतांवर नोऽधुना ॥ २२
सूतः — काञ्चीपुरं जगत्स्थानं वर्तते पन्महत्स्थलम् । तत्समीपे पुरं रम्यं मूर्धास्फाटीति विश्रुतम् ॥ २३
लवलीनिलयः कश्चिद्गिरिस्तत्र विराजते । तत्र व्याधोऽवसच्छ्रीमान्निरपत्यस्तपोधनः ॥ २४
व्याधानामधिपो नित्यमैच्छत्तस्य सुतं परम् । गिरौ तस्मिन्महारण्ये शिवाख्यो मुनिसत्तमः ॥ २५
तपश्चचार पुण्यात्मा तपस्वी सत्यवर्धनः । स कदाचिन्मृगीं रम्यां स्वसमीपे स्थितामृषिः ॥ २६
विलोक्य कामवशगो मुमोह नितरां तदा । तदालोकनमात्रेण गर्भं दधे स्म सा मृगी ॥ २७
लवलीकुञ्जमध्ये सा सुषुवे स्त्रियमुत्तमाम् । विलोक्य तां विजातीयां दुद्राव भयविह्वला ॥ २८
रुरोद तत्र सा बाला सुस्वरेण तदा द्विजाः । तां दृष्ट्वा व्याधवर्योऽयं रुदन्तीमागतः क्वचित् ॥ २९
प्रियङ्गुव्रीहिसंपन्नकेदारालोकनाय सः । प्रीत्या परमया युक्तो गृहीत्वा तां मनोहराम् ॥ ३०
गत्वा स्वस्य कुटुंबिन्या हस्तयोर्दत्तवान्मुदा । पुत्रोत्सवक्रियां कृत्वा तदानीं व्याधनायकः ॥ ३१
स्वक्रियाऽनुदिनं कन्यामपोषयदहो द्विजाः । ववृधे सा क्रमेणैव कन्या द्वादशवत्सरम् ॥ ३२
वेणुक्रियाविलासेन बालचेष्टासमन्विता । ततस्तु तां व्याधनाथस्संपन्नप्रौढ शेमुषीम् ॥ ३३
केदारे कुत्रचिद्रम्ये स्थापयामास रक्षितुम् । शकुन्तादुपघातेभ्यः प्रियंगुव्रीहिणोवरान् ॥ ३४
सच्छायां तत्र कृत्वेयं भर्त्सयन्ती पतत्रिणः । ऊर्ध्वैस्स्वरैश्शब्दभेदैर्न्यवसत्सुमनोहरा ॥ ३५
आलवाले लवल्यास्तावत्सदाख्या बभूवहि । तामेनां रक्षितुं स्कन्दो मुक्त्वा स्कन्दगिरिं तदा ॥ ३६
प्राप श्रीपरिपूर्णाख्यं गिरिं परमशोभनम् । तदानीं नारदो दृष्ट्वा लवलीनायिकामिमाम् ॥ ३७
प्रणम्य स्कन्दपत्नीति, ज्ञात्वा सर्वत्रसञ्चरन् । प्राप्य श्रीपरिपूर्णाख्यं गिरिं परममद्भुतम् ॥ ३८
तत्र दृष्ट्वा गुहं देवदेवं नत्वा ऋषीश्वरः । दृष्टाऽऽज्ञातोऽस्मि लवलीमित्युक्त्वा देवनायकम् । ३९
विशेषेण प्रणम्याथं प्रतस्थे स्वेच्छया पुनः । व्याधवेषं गृहीत्वाऽथ निरगात्षण्मुखस्तदा ॥ ४०
समागत्य जवेनायं लवलीनायिकान्तिकम् । का त्वं बाले सुता कस्य किं नामाते क्व वा जनिः ॥ ४१
कथमेतादृशीं व्याधाः स्त्रीरत्नमतिसुन्दराम् । आस्थापयन्निमे त्वांहि प्रियङ्गुं रक्षितुं वने ॥ ४२
मार्गो वाच्यो जन्मभूमेर्मुक्त्वा लज्जां वरानने । वद किञ्चिद्विहस्यैनमवलोकय मामिह ॥ ४३
जानासि विजनस्यत्वमुचितं काननस्य च । वनेषु नितरां भ्रान्त्या खिन्नस्यास्याशु नायिके ॥ ४४
अमृतस्य पिपासा मे सुधापूर्णनिजाधरे । एवं वादिनि देवेशे तत्पिता व्याधनायकः ॥ ४५
सेवितो बहुभिर्व्याधैः क्रूररूपैर्धनुर्धरैः । वाद्यानामारवैर्भीमैः प्रतस्थे पुरतो द्विजाः ॥ ४६
तदानीमेव देवोऽपि गृहीत्वाऽसनशाखिनः । अनंतवेदशाखस्य रूपं परममद्भुतम् ॥ ४७
तस्थे केदारनिकटे छायां कृत्वा सुशीतलाम् । व्याधस्समागतः पुष्प्याः फलानि विविधानि च ॥ ४८
प्रियंगुपिष्टं समधु वासवस्यैव ददौ द्विजाः । अन्येऽनुजीविनस्तस्य वृक्षमेनं विलोक्यते ॥ ४९
इतः पूर्वं नदृष्टोऽयमिति छेत्तुं तदाऽऽगताः । तान्निवार्य प्रधानोऽयं व्याधः पुत्रीमवेक्ष्य सः ॥ ५०
वत्सेयं कागतो वृक्षस्सुच्छायस्तव संगतः । इत्युक्तवन्तं जनकं नजानेऽहमिमं पितः ॥ ५१
मायेव भाति नितरामित्युवाच वरानना । गाऽस्तु ते भीतिरेतस्माद्वृक्षात्सुशीतलात् ॥ ५२
भवत्वयं सहायस्ते कानने सुखदोऽनिशम् । इत्युक्त्वा प्रययौ व्याधो वनानि विविधानि च ॥ ५३
गते सपरिवारेऽस्मिन् जग्राह प्राक्तनुं गुहः । धनुष्पाणिर्महारूपो युवा नेत्रप्रियो वरः ॥ ५४
चाटूक्त्यानि भूयांसि जगादालिङ्गनोत्सुकः । आलिङ्ग नाय तामेनामवदत्करुणतो द्विजाः ॥ ५५

तमेनं सा भयोद्विग्ना प्राहवाचं नतानना । अहं हीनकुलोद्भूता त्वं तु राजकुलोद्भवः ॥ ५६
प्रियंगुपालिका राजन् आवयोः कियदन्तरम् । तवेदृशमिहायुक्तं गच्छगच्छ यथागतम् ॥ ५७
यदि दृष्टः पुलिन्दैस्त्वं तदा बाधा भवेद्ध्रुवम् । इत्युक्तवत्यामेतस्यां तदानीं व्याधनायकः ॥ ५८
समागतः पुनर्व्याधैर्बहुभिरस्त्रमहायुधैः । समादाय गुहस्तूर्णं स्थाविरं रूपमद्भुतम् ॥ ५९
जरापलितसर्वाङ्गं दण्डमालम्ब्य पाणिना । व्याधस्य तस्य भद्राणि ददावाशीः प्रयुज्य सः ॥ ६०
गंतव्यं कुत्र भवतः किमपेक्षितमत्र च । इति पृष्टस्तदा तेन वृद्धः प्राह वचो द्विजाः ॥ ६१
किमप्यपेक्षितं व्याध वरं मे नास्ति वस्तुषु । स्नातुं मां कुमरीतीर्थमागतं विद्धि ते गिरौ ॥ ६२
इति तस्य वचः श्रुत्वा तथेति व्याधनायकः । स्नात्वा त्वमत्र मत्पुत्र्या सह साहाय्यतां गतः ॥ ६३
इत्युक्त्वा पूर्ववत्तस्याः फलादीनि प्रदाय सः । ययौ स्वकीयैः पुरुषैर्व्याधोऽयं ब्राह्मणोत्तमाः ॥ ६४
ततो वृद्धस्तु तां कन्यां क्षुत्पीडा वर्तते मम । इत्युक्त्वादाय तद्धस्तात् फलपिष्टमधून्ययम् ॥ ६५
भक्षयित्वा पिपासा मे वर्ततेऽथेत्युवाच ताम् । इतस्तटाकस्तुमहांस्तीर्त्वा सप्तगिरीन् भवान् ॥ ६६
पीत्वा जलानि स्वादूनि पुनरागच्छतु क्षणात् । इति तस्या वचः श्रुत्वा नवेद्मि सरणीमहम् ॥ ६७
वृद्धस्ततस्त्वं साहाय्यं प्राप्य मार्गं प्रदर्शय । सा तथेति विनिर्गत्य तटाकान्तं निनाय तम् ॥ ६८
पीत्वाऽऽकण्ठं जलान्येष तत्रगत्वा सरोवरे । पुनरागत्य तां बालां तृष्णा मे जलकांक्षिणी ॥ ६९
निवृत्ता वर्तते तृष्णा भवत्संभोगलक्षणा । तां निवारय सर्वांगसुन्दरे दयया मयि ॥ ७०
त्वां नतोऽस्मि सुधापूर्णमधुराधरशालिनि । अङ्गीकुरु त्वं विजने वने मां बाधते स्मरः ॥ ७१
इति तस्य वचः श्रुत्वा लवली वृद्धमीक्ष्य तम् । वृद्धस्त्वं तापसोऽथापि यत्किञ्चिद्वदसीह माम् ॥ ७२
वयोधिको नमस्कारः क्रियतेऽद्येति चोक्तवान् । प्रसादीयैर्यदि भवान् दृष्टस्त्वेतादृशस्तथा ॥ ७३
बाध्यते नितरां तत्त्वं पश्चादागच्छ संप्रति । पुरोगच्छाम्यहं शीघ्रादित्युक्त्वा प्रययौ पुरः ॥ ७४
तदानीं षण्मुखो ज्येष्ठं गजवक्त्रमचिन्तयत् । स तु गन्धद्विपाकारो महावेगेन निर्ययौ ॥ ७५
तं दृष्ट्वा गजमल्लं सा भीतभीता महाजवात् । आगत्य वृद्धमालिंग्य त्वदुक्तं तच्छृणोम्यहम् ॥ ७६
रक्ष रक्ष गजात्त्रसात् शरणागतवत्सलः । इति तस्या वचः श्रुत्वा प्रणम्य गणनायकम् ॥ ७७
तुष्टाव परया भक्त्या षण्मुखो वृद्धवेषवान् । उपसंहृत्य तद्रूपं विघ्नेशोऽन्तर्दधे द्विजाः ॥ ७८
ततस्तु तां महारामे रम्ये तस्मिन् रराम सः । केशसंयमनं कृत्वा दष्ट्वा दन्तच्छदं रदैः ॥ ७९
स्वरूपं दर्शयामास संभोगानंतरं द्विजाः । तं दृष्ट्वा षण्मुखं भीता प्रीत्या परमया युता ॥ ८०
प्रणम्याञ्जलिहस्ताग्रा प्रागेव तवसुन्दरम् । वपुरेतादृशं देव न प्रदर्शितवानसि ॥ ८१
प्रतारणं कृतं तूष्णीमहो लीला तवेदृशी । इत्यादि वचनं चोक्त्वा तुष्टाव लवलीगुहम् ॥ ८२
ततस्तामाह देवेशो मन्दस्मितमुखांबुजः । विष्णोस्त्वं तनया पूर्वं तपः कृतवती महत् ॥ ८३
तपसा तेन सन्तुष्टः परां प्रीतिमवाप्य ते । त्वयि स्नेहरसाविष्टस्त्वेवं संयुक्तवानहम् ॥ ८४
तत्त्वं प्रियङ्गकेदारे पुरा गच्छ ममाधुना । आगमिष्यामि तत्रापि महाभागे जवादहम् ॥ ८५

इति गुहवचनं निशम्य वल्ली तदुपरि सन्निहितात्ममानसैवम् ।
विहितचरननमस्क्रियागुहस्य द्रुतमपि पूर्वमवापतत्स्थलं सा ॥ ८६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
देवकाण्डे तृतीयोऽध्यायः ॥

॥ अथ चतुर्थोऽध्याय ॥

श्रीरस्या स्कन्दपरिणयवर्णनम् ॥

ततस्तु तत्सखी काचित् प्रियङ्गुवीहिपालिनी । पप्रच्छ क्वगता कालमियन्तमिति ता द्विजा ॥ १
तामाह्वेय तटाकेऽस्मिन् स्नात्वा भूपस्समागता । क्वर्तते तटाकोऽयमधरस्य विशुद्धिव् ॥ २
स्फुरचे लोचने रक्ते केशास्ससन्ततिसर्वत । प्रवर्तन्ते मुखे स्वेदबिन्दवोऽपि मनोहरा ॥ ३
तवेत्युक्तवती ज्ञात्वा शङ्कमाना निजप्रियाम् । आरोपयसि निन्दा त्वं सखि हे मयि सम्प्रति ॥ ४
एवमन्योन्यमनयोर्वदतोरुत्तरोत्तरम् । समागतस्तत्र गुहो धृतकार्मुकशास्त्रवान् ॥ ५
कृत्वा खेटमतिश्रान्त इव स वाचमुक्तवान् । युवां बाले गजश्रेष्ठ किं ददर्शथुरक्षतम ॥ ६
मच्छरविद्धसर्वाङ्ग पलायनमिहाश्रितम् । इति वाच निशम्यास्य सखीचापि जगादतम् ॥ ७
त्वद्वीय तव तुल्यस्य भटस्य वद मा च नौ । इत्युक्त्वा चिन्तयामास मनस्येषा द्विजोत्तमा ॥ ८
उभयोरनयोर्दर्पी स्यातोस्याश्चर्यमार्गणम् । गजादीना तथा तस्या प्रियङ्गुवीहिरक्षिताम् ॥ ९
यन सा वीक्षते तामप्ययमन्वीक्षतेतराम् । इत्यसदिह तावेतौ लवली षण्मुखौ सखी ॥ १०
सकेदारे गता वेगान्मन्युनाच समन्युना । अनुसृत्याशु ता देव प्रार्थैना ब्राह्मणोत्तमा ॥ ११
मास्तु कोपा वरारोहे युवयोर्यदपेक्षितम् । तत्प्रयच्छामि शीघ्रेण दया कुरु वरानने । १
समाकर्ण्य वचस्तस्य राजानो व्याधकन्यकाम् । वाञ्छन्ति वा भवानेना कथमिच्छति बालिकाम् ॥ १३
इय विष्णोर्वराल्लब्धमभूतं स्त्रासु चोत्तमा । तपोमहिम्ना व्याधस्य बभूव तनुजा ननु ॥ १४
मया नियोजयस्वेना परेषुस्सुन्दरे यदि । पटे(पठे)लिखित्वा ता बाला भद्रा पश्याम्यसशयम् ॥
इति तस्य वच श्रुत्वा सखी प्राह गिरं तदा । न युक्तमीदृश तेऽद्य वचन मानिना वर ॥ १६
आनयिष्यामि ता शीघ्राद्वृक्षारामे मनोरमे । तिष्ठ तत्र यदि व्याधैरीदृशो वीक्षितस्तदा ॥ १७
परिपीडा भवेत्तत्र सावधानेन तिष्ठ भो । इत्युक्त्वाऽभ्याशमागत्य लवल्या सा सखीक्षणात् ॥ १८
प्रणम्य वाञ्छा तस्यैव उक्त्वा तस्यै विशेषित । आनीय वृक्षारामेऽस्मिन् कुत्रचित् स्थाप्य सुन्दरीम् ॥ १९
स्वय पुष्पापहारस्य व्याजेनागत्य निर्गता । ततस्समागतो वीक्ष्य तामेना लवलीं गुह ॥ २०
द्रुतमुत्थाप सा तस्मै प्रणनाम स्मरातुरा । हा समालिङ्ग्य देवेशस्संपीड्यस्तनकुड्मले ॥ २१
दष्ट्वाऽधर कृतनखक्षतरेखो रराम ताम् । ततस्समागता पुष्पाण्याहृत्यैतत् सखी क्षणात् ॥ २२
मायव्य चिकुरेष्वस्या कुसुमानि बहूनि सा । आहूय ता पुन क्षेत्र प्रियङ्गूनक्षितु ययौ ॥ २३
तत्र सा लवली तस्थे सयोगस्मरणसुखस्मृते । कदा भवेदितितरा विरहाकुलितान्तरा ॥ २४
अथ व्याधास्समागत्य सुपक्वपु (सुपक्वेषु) प्रियङ्गुषु । निन्यिरे लवलीं बाला गेह परमशोभनाम् ॥ २५
तास्सर्वा स्वगृह प्राप लावण्यतरसुज्वला । पक्षिणा तत्र यातानां वृक्षाणा गिरिणामहो । २६
मृगाणामपि चान्येषा मुक्त्वोपरत्या गमन द्विजा । स्मृत्वातु लवली देव मदनेन निपीडिता ॥ २७
विहाय कन्दुकक्रीडाम यामपि शिशुप्रियाम् । मुमूर्छकामवशगा भृशमुद्विग्नमानसा ॥ २८
ततो मातृमुखास्तस्या परिवृत्य समन्तत । आशङ्क्यावेशमेतस्या निरूप्य कुलदैवतम् ॥ २९
गुह महोपचारेण नैवेद्यैस्त्वतोषयन् । ततो धात्री समाविश्य गुहस्याभिततज्जन ॥ ३०
सयोगोऽभवद्रहस्यमावेशो ब्राह्मणोत्तमा । श्रुत्वेव गुहनामानि समुत्तस्थे जवन सा ॥ ३१
एवं बहुप्रकारेण तस्थे विरहविह्वला । ततो व्याधा प्रियङ्गूस्तानलुनन पक्वता गतान् ॥ ३२

संप्राप्य षण्मुखस्तत्र तामदृष्ट्वा निजप्रियाम् । इतस्ततश्च वीक्ष्यैनां विरहेण समन्वितः ॥ ३३
पप्रच्छ पर्वतान् वृक्षान् काननानि मृगानपि । वापीकूपतटाकादीन् क्वगता प्राणनायिका ॥ ३४
इति पृष्ट्वा रसेनाथ सायाह्नेऽस्तगते रवौ । गुहपृष्ठप्रदेशेऽस्या गत्वा रात्रावुमासुत ॥ ३५
निर्यास्यति कदा स्वया सखीश्चात्र स्थितो द्विजा । तदा समागता तस्यास्सखीसा वीक्ष्य षण्मुखम् ॥ ३६
न लभ्यतेऽवकाशोऽत्र संयोगाय तवाधुना । न युक्तः खलु संयोगो गेहेऽस्मिन्बालयासह ॥ ३७
तदन्यत्रानयित्वैनां गच्छेत्युक्त्वा स्वयसखी । समेत्य तत्समीपं सा स्वपतीं मातरं तथा ॥ ३८
पितॄन्भ्रातॄनतिद्राग्निद्रायैषा क्षणेनताम । निर्गळं कवाटञ्च कृत्वैनां गुहसन्निधिम् ॥ ३९
प्रापयित्वा सखीरश्न्द प्राहुवाच द्विजोत्तमा । हणे यदि भवान्व्याधैः परिपीड्यो (कुररेक्षी) भविष्यति ॥
सख्यैनां तदन्यत्र गच्छेत्युक्त्वाकरौ तदा । लवल्याः करयोस्तस्य गुहस्य परमात्मन ॥ ४१
अर्पयित्वा गुहेनेव सन्तुष्टेनान्तरात्मना । कृतनानोपचाराशु प्रणम्य लवलीमपि ॥ ४२
परिरभ्य स्वयं गेहं प्रापानुमतिमाप्य सा । वल्ली गुहं प्रणम्याथ घने तमसि साहसात् ॥ ४३
कथमभ्यागतस्त्वत्र रक्षितुं मां कृपावशात् । इत्युवाच ततस्नेहाधारुद्यापर्पैमेनोहरैः ॥ ४४
श्रुत्वा सुविस्मिता (सुविस्मित) पश्चाद्ग्रामपालैरलक्षित । दूरे कस्मिन्महाग्रामे गत्वा साकं तया गुहः ॥ ४५
रेमे समदहासेन रतिशास्त्रविचक्षण । व्यतीतायां ततो रात्र्यां लवल्या जननी तदा ॥ ४६
समुत्थाय सुतां पार्श्वे वीक्ष्याहृष्ट्वा ससम्भ्रमम् । पप्रच्छ तत्सखीं गत्वा क्वचली क्वगतेतिताम् ॥ ४७
विज्ञायते मया नैवं प्रातरेवेति साब्रवीत् । प्रवृत्ते पत्तने हाहाकारे सर्वत्र भूसुरा ॥ ४८
व्याधनाथस्ततोव्याधैर्निरगाद्वीक्षितुं रुषा । चोरयित्वा सुतां बालां कोजीवेत्प्राणभुञ्जन ॥ ४९
इति व्याधान् बहून् घोरान् मार्गेषु प्रैरयत्तदा । स्वयं वनेषु रम्येषु पर्वतेषु सरित्स्वपि ॥ ५०
परिभ्रमन् क्रमेणाथ वृक्षाराममवाप तम् । तत्र दृष्ट्वाऽऽशु तान् व्याधान् क्वचली भयकातिरा ॥ ५१
समायान्त्यत्र देवेश रक्षमां शस्त्रपाणय । इत्युक्त्वा प्रणतामेनां वीक्ष्य किञ्चित् स्मिताननः ॥ ५२
मास्तु भीतिर्वरारोहे मयि तिष्ठति वल्लभे । तिष्ठ मत्पृष्ठदेशे त्वं योद्धुं शक्तिश्च वर्तते ॥ ५३
समाकर्ण्य वचस्तस्य पृष्ठभागमगाद्वधूः । तदैव ते समागत्य पुत्रीचोर इति क्रुधा ॥ ५४
जल्पन्त कटुवाचोऽस्मिन् ववर्षुस्सायकान् बहून् । वल्ली तदा भयोद्विग्ना सहरैतान् महाबलान् । ५५
पालयस्व भयादस्माद्रक्षमां प्राणनायक । इत्युवाच ततो देव सर्वभूतहितोद्यतम् । ५६
तच्छ्रुत्वा कुक्कुट वैचस्तदाऽस्मार्षीदुमासुतः । समागत्य क्षयेनाथ महारावं चकारहि ॥ ५७
निशम्य तं महारावं प्रळयाम्बुदनिस्वनम् । पतित्वा भूतले सर्वे जहुः प्राणान् भयातुरा । ५८

इति श्रीस्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
देवकाण्डे चतुर्थोऽध्याय ॥

---

॥ अथ पञ्चमोऽध्याय ॥
श्रीवल्लीकल्याणम् ॥

हत्वा तानखिलान्व्याधाधिराधिपनायक । अनुसृत्य गुहं वल्ली पितृदुःखसमन्विता ॥ १
अवकुण्ठितसर्वाङ्गी चेलेनानुययौ द्विजा । मध्ये मार्गं समागत्य तदा ब्रह्मात्मसम्भव ॥ २
नारदस्तपसां श्रेष्ठो लीलामानुषविग्रहम् । प्रणम्य गुहमाकर्ण्य वृत्तान्तमनुपूर्वशः ॥ ३

प्रार्थयामास देवेशं सञ्जीव्य शबरान् मृतान् । एतत्पितृमुखान् स्वामिन् सर्वमङ्गलसंयुत ॥ ४
वल्लीपाणिग्रहं पश्चाद्विधिना कुरु देवप । इति तस्य वचः श्रुत्वा लोकयात्रा चिकीर्षया ॥ ५
निवृत्तो नारदेनाथ उपलीं वीक्ष्य सुन्दराम् । मदाज्ञया त्वमेवाद्य त्वत्पितृप्रमुखान्मृतान् ॥ ६
उज्जीवय वरारोहे वीक्ष्य दृष्ट्या दयान्विता । तथैवोज्जीवयामास सर्वानेतान् गुहप्रिया ॥ ७
उत्थितेषु पुलिन्देषु स्वापादिव महीसुरा । स्वरूपं दर्शयामास लीलामानुषविग्रहः ॥ ८
देवसेनापतिं दिव्यं षण्मुखं द्वादशेक्षणम् । युगव्यायतमन्दारमालाङ्कितशाखच्छदम् ॥ ९
महोरस्कमहाग्रीवमप्राकृतमनुत्तमम् । तं दृष्ट्वा ते गुहं व्याधा प्रणेमुर्भयविह्वला ॥ १०
तुष्टुवु परया भक्त्या परिवृत्य समं ततः । यदीदृशं कृतं देव मर्यादोल्लङ्घनं त्वया ॥ ११
अपकीर्तिर्भवेदस्मत्कुलस्य खलु गर्हिता । तत्त्वमेना विधानेन वोढुमर्हसि विश्वप ॥ १२
इत्युक्त्वा ते प्रणेमुस्तं कुमारं जगतां गुरुम् । अंगीकृत्य वचस्तेषां कृपया देवनायकः ॥ १३
नारदेन समं गत्वा पक्वणं व्याधसेवितम् । तस्थौ व्याघ्रासने दिव्ये तद्दत्ते ब्राह्मणोत्तमाः ॥ १४
तदा दशांशुका बाला दिव्यरूपा वरासने । त्यक्त्वा तु मानुषं रूपं त्वचं जीर्णामिवोरगः ॥ १५
जलमादाय हस्तेन तदा धाता पुलिन्दपः । गुहाय वरवर्णाय विधानेन द्विजोत्तमाः ॥ १६
अग्निकार्यं त्वृत्विग्वरो नारदोऽप्यकरोत्तदा । प्रादुरासीत्तदा व्योम्नि पार्वतीसहितः शिवः ॥ १७
ब्रह्मविष्ण्वादिभिर्देवैः स्तूयमानपदाम्बुजः । स्थित्वा तत्र महादेवः कल्याणवपुषं गुहम् ॥ १८
अथाश्लोक्याद्रीन्द्र सुतया वल्लीमपि । नमश्चकार पश्चात्तु गुहो वेगात्समुत्थितः ॥ १९
ववर्षुरमरास्सर्वे पुष्पाणि ह्यजगन्मनि । प्रणेमुर्दम्पती वल्लीगुहौ तौ विष्णुपूर्वकान् ॥ २०
अन्तर्दधे महादेवः क्षणेनैतैस्सुरोत्तमैः । व्याधनाथस्ततो व्याधैः स्त्रीभिर्देवाधिपं गुहम् ॥ २१
प्रणम्य प्राप सन्तोषं हृदयेऽपि भृशं तदा । ववर्ष व्याधनाथोऽपि कुसुमानि गुहोपरि ॥ २२
एवं नानोपचारेण पूजितो गणनायकः । प्रतस्थे श्रीगिरीपूर्वगिरिं परमशोभनम् ॥ २३
निवर्त्य प्रस्थितान् व्याधान् सख्यापेक्षान्प्रयाति । व्याधवल्लीमितस्स्वयं देव्या वल्ल्या गिरिमयाप तम् ॥ २४
तत्र सिंहासनं दिव्यं विश्वकर्मविनिर्मितम् । नानारत्नसमापूर्णं देव्या साकमधिष्ठितः ॥ २५
तदा पप्रच्छ देवी सा प्रणम्य गुहमव्ययम् । किं नामायं गिरिस्स्वामिन्महिमानं च कीर्तितम् ॥ २६
श्रिया देव्या गिरिर्यस्मात्परिपूर्णस्तदाह्वयः । युद्धे मया हता केचित् तस्माद्युद्धगिरिस्ततः ॥ २७
काञ्चीपुर्यास्समीपोऽयं वसाम्यत्र विशिष्यतः । काञ्चीस्थलेषु पुण्येषु तीर्थेषु स्वर्वेदी यथा ॥ २८
पर्वतेषु च सर्वेषु यथा कैलासपर्वतः । क्रीडाद्येणुवृक्षाद्यैर्विहारायच सर्वदा ॥ २९
पुरा मां पूजयित्वाऽत्र विसभ्य मघवानिह । कल्हाराख्यं सरः खात्वा स्वच्छाम्भः परिपूरितम् ॥ ३०
तत्कल्हारपुष्पाणि त्रिसन्ध्यं च दिने दिने । विकसन्ति सुगन्धीनि समीपस्थे सरोवरे ॥ ३१
स्वामीव कष्टपापघ्ने गिरौ परमशोभने । पश्यन्ति ये गिरिवरमेनमत्र नरोत्तमाः ॥ ३२
तेषां पापानि नश्यन्ति क्षिप्रमेव न संशयः । स्नात्वा सरोवरेऽस्मिन्यो मामर्चयति मानवः ॥ ३३
सद्योर्ध्वं संप्रयात्येव महापापपरिपूरितः । ध्यायन्ति ये पञ्चदिनमत्र विजितेन्द्रियाः ॥ ३४
सत्या स्वर्वाञ्छितानर्थान् मोक्षं प्रयान्ति । दृष्ट्वा गिरिवरं येषां न नमन्ति दुरात्मना ॥ ३५
समार्जितं यत्तैः पुण्यं तत्तत्फलदं भवेत् । महापातकसंयुक्ता ये भजन्ति नगोत्तमम् ॥ ३६
विधूय तानि ते महाविष्णुपूर्वैश्च वन्दितम् । मत्पदं प्राप्नुवन्त्येव नात्र कार्या विचारणा ॥ ३७
यदेवं मनुरत्र पुण्यं सम्यगनुष्ठितम् । अनन्तफलदं तत्र सम्प्रयुक्तं नचान्यथा ॥ ३८

यद्यद्घोरतरं पापं तत्तदत्र विनश्यति । एवमादि वचः श्रुत्वा गुहस्य परमात्मनः ॥ ३९
तदा प्रीतिमथावाप्तौ मन्दस्मितमुखाम्बुजा । तत्र शैवं परं लिङ्गं प्रतिष्ठाप्यामरेश्वरः ॥ ४०
पूजयित्वा पुरारातिं कृपां प्राप्य महेशितुः । स्थित्वाऽत्र कतिचित्कालं नगानामुत्तमे द्विजाः ॥ ४१
दिव्यं विमानमारुह्य लवल्या सहदेवपः । प्राप्य स्कन्दगिरिं रम्यं विमानादवरुह्य सः ॥ ४२
तत्र स्वगेहशुद्धान्तं प्राप देव्या द्विजोत्तमाः । प्रणनाम ततो देवं देवसेना समागता ॥ ४३
प्रीत्या तां वीक्ष्य देवेशः कृपां चक्रे मुदा तदा । देवसेनां ननामाथ वल्ली परमशोभना ॥ ४४
आलिङ्ग्य जातहार्दां तां स्मितपूर्वमभाषत । सुसहायाऽऽगतामहं त्वमत्र ननु बालिके ॥ ४५
प्रीतियुग्भ्यां गुहस्ताभ्यां सिंहासनमशिश्रयत् । देवसेना ततः स्कन्दमात्मनः पतिमव्ययम् ॥ ४६
अपृच्छदानता वल्ल्या वृत्तान्तमनुपूर्वशः । गुहः—युवामुपेन्द्र तनुजे पूर्वमास्तां वरानने ॥ ४७
मत्पाणिग्रहमुद्दिश्य से तपो श्रयतं महत् । तपसा तेन तुष्टोऽहं मुक्येनां त्वां मदृच्चति ॥ ४८
उत्पत्तये कृताशातो युवामुत्पत्तिमाश्रिते । तथैव त्वामिन्द्रपुत्रीं विधिनांगीकरोम्यहम् ॥ ४९
इयमत्रौ वपुस्त्यक्त्वा काञ्चीपुरसमीपतः । ऊचव्याख्यगिरौ रम्ये मत्स्नेहातिशयान्विता ॥ ५०
तपश्चचार परमं ध्यात्वा मामेव मानसे । तत्र नद्यां वने कस्मिन् कण्वशापवशाद्धरिः ॥ ५१
शिवकण्वाभिधस्तत्र चचार परमं तपः । तत्रागता तदा लक्ष्मीर्हरिणीरूपमास्थिता ॥ ५२
तां दृष्ट्वा ऋषिवर्योऽयं मुमोह मदनातुरः । लवली कुण्ड (कुञ्ज) मध्ये यत्तदुत्पन्ना वराङ्गना ॥ ५३
तदाख्यया जगत्यस्मिन् प्रथिता तेन सुन्दरी । उपेन्द्रः कण्वशापेन निषादानां कुले जनिम् ॥ ५४
अवाप व्याधनाथोऽयं दृष्ट्वा तां लवलीं तदा । समादाय श्रियै स्वस्य दत्तवाननपत्यवान् ॥ ५५
तामिमां प्रीतिसंयुक्तो विवाह्य विधिनाप्रिये । स्थित्वा श्रीपरिपूर्णाख्यगिरौ साकं तया पुनः ॥ ५६
प्राप्तवानस्मि निकटमनयासहते प्रिये । श्रुत्वैतद्देवसेनासा नितरां हृष्टमानसा ॥ ५७
तत्र तत्र स्थिते देव युयोजैकतामिमाम् । सोदर्यौ करुणामूर्ते जगादेव गुहं तु सा ॥ ५८
ततस्तु लवलीदेवसेनां वीक्ष्य तवानुजाम् । इदानीं सर्वदा मां त्वं रक्षेत्युक्त्वा रराम (ननाम) सा ॥
आलिङ्ग्य तां देवसेना सखीत्वं हृदयंगमा । त्वया गुहकृपा पूर्णा कारिता मयि बालिके ॥ ६०
कृतार्थां तदिहास्यन्तसित्युक्त्वास्ते परस्परम् । गुहपार्श्वगते देव्यौ रेजाते नितरां द्विजाः ॥ ६१
मयूरकुक्कुटौ तस्य मत्तोवैरागरवस्तथा । वज्रशक्तिविशालानि तत्रयुक्तत्र गुहाश्रया ॥ ६२
गुहस्तुवीरैस्सेनेशैर्भूतैरपि महाबलैः । कृतनानोपचारेण तस्थे श्रीभ्यां वरासने ॥ ६३

इति गदितमशेषं यद्विपृष्टं भवद्भिर्निखिलसुरवराणामीशितुष्षण्मुखस्य ।
चरितमथ पुनर्वो वच्मि यच्छ्रोतुमिच्छासकलमपि तदत्र ब्राह्मणानामधीशाः ॥ ६४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
देवकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

मुचुकुन्दराज्ञः चरित्रम् ॥

ऋषयः —

मुचुकुन्द इति प्रोक्तस्सूत पूर्वं त्वया नृपः । कल्याणायागतः कोऽयं स्कन्दस्य परमात्मनः ॥ १

सूतः —

श्रोतव्यं सावधानेन वक्ष्येऽहं ब्राह्मणोत्तमाः । पुरा कैलासशिखरे पार्वतीपरमेश्वरौ ॥ २
शृङ्गारवनमालोक्य बिल्ववृक्षस्थली स्थितौ । तदानीं वानरः कश्चिच्छ्यामवर्णो महाबलः ॥ ३
आरुह्य वृक्षं पत्राणि बैल्वानि परया मुदा । छित्वा तयोस्ततो भक्त्या पातयामास भूरिशः ॥ ४
किमेतदिति वृक्षं तं मवलोकयदद्रिजा । वृक्षस्योपरि वीक्ष्यैनं वानरं कोपविह्वला ॥ ५
व्यजिज्ञपन्महादेवं चेष्टास्येति तदा शिवा । परमेशस्तदादेवीमाधयोर्भक्तिमानयम् ॥ ६
इत्युक्त्वा तं कपिश्रेष्ठमाह्वयामास देवपः । आहूतस्स समागत्य प्रणनाम महेश्वरम् ॥ ७
तमेनं पार्वतीनाथः कृपया परयाऽन्वितः । सार्वभौमो भवाशु त्वं बिल्वपत्रैर्मदर्चया ॥ ८
भुवि सर्वमहीपालमौलिलालितपादवान् । अन्ते कैलासमागत्य गाणापत्यं सुदुर्लभम् ॥ ९
सवाप्य परया प्रीत्या वसेत्येवमुवाचतम् । अप्रार्थयत्तदा देवं मुचुकुन्दो महाबलः ॥ १०
देवदेव महादेव करुणामृतसागर । यद्युत्पत्तिर्भवेदस्मै भवद्भक्ताय विश्वप ॥ ११
तदा ज्ञानं भवेन्नूनं तन्मे वदनमीदृशम् । ममाकारं (प्रेमाकारं) भवत्वीश रक्षमां परयामुदा ॥ १२
इति प्रसाद्य देवेशं हरिश्चन्द्रान्वयेऽभवत् । गुहकल्याणमन्वीक्ष्य भक्त्या परमया गुहे ॥ १३
मुचुकुन्द इतिख्यातस्सर्वदेशेषु सर्वदा । गुहव्रतानि दिव्यानि वसिष्ठात्तपतां वरात् ॥ १४
श्रुत्वा यथाक्रमेणायमाचचारादरेण सः । मुनयः — मुचुकुन्दो नृपश्रेष्ठो वसिष्ठादपि सत्तमात् ॥
समाकर्ण्याचचारायं व्रतानि परया मुदा । अनुष्ठितानि कैः कानि वदात्र ऋषिसत्तम ॥ १६
सूतः — पुराभगीरथो नाम राजा परमधर्मवान् । पराजितो रणे सोऽयं घोरसंज्ञेन रक्षसा ॥ १७
सकुटुंबो वनं प्राप देशभ्रष्टस्तदा भयात् । राज्यञ्च यन्निधनं तेन राक्षसेनास्य भूसुराः ॥ १८
वनं गतस्तदा राजा भृगोस्तु ऋषिसत्तमात् । श्रुत्वा गुहव्रतं दिव्यं भक्त्या परमया सह ॥ १९
भृगुवारे विधानेन संकल्प्य ब्राह्मणोत्तमाः । वर्षत्रयं चचारायं शुक्रवारे वरं व्रतम् ॥ २०
ततः कालेन तं घोरं राक्षसं शक्तिरूपया । गुहस्य देवदेवस्य मारयामास भूसुराः ॥ २१
भगीरथस्तु सन्तोषात् स्वराज्यं प्राप्यपूर्ववत् । निष्कण्टकं महाराजो ररक्ष निखिलां महीम् ॥ २२
शुक्रवारव्रतं तस्मात् गुहस्येष्टफलप्रदम् । नारदस्तपतां श्रेष्ठश्चरित्वा व्रतमुत्तमम् ॥ २३
कृत्तिकायां विधानेन श्रेष्ठोऽभूदृषिपुङ्गवम् । तस्यामेव द्विजः कश्चिदनुष्ठाय व्रतं मुदा ॥ २४
मनुर्भूत्वा स तु श्रीमान् बभार पृथिवीमिमाम् । पुनरस्यां द्विजोऽन्योऽपि समाप्य व्रतमुत्तमम् ॥ २५
त्रिशंकुनाम्ना पृथिवीं शशास स नृपाधिपः । अपरौ द्विजराजानावनुष्ठाय व्रतं महत् ॥ २६
कृत्तिकायां यथा शास्त्र भक्तिमंतौ गुहोपरि । संरक्ष्य राज्यमाख्यातौ तौ द्वावन्तिम सन्निभौ ॥ २७
देहान्ते प्रापतुर्मोक्षं गुहस्यैव प्रसादतः । स्कन्दषष्ठी व्रतं त्वन्यत्विख्यातं भुवनत्रये ॥ २८
चरित्वा यत्पुरा देवा ऋषयश्च तपोधनाः । स्वपदाऽसुरभयान् प्रापुः पदानि स्वानि पूर्ववत् ॥ २९
व्रतादीनि राजाऽसौ मुचुकुन्दो महामनाः । आचचार क्रमेणैव गुहे . विन्यस्तमानसः ॥ ३०
प्रादुरासीत्ततस्तस्य परमात्मा गुहस्स्वयम् । वाञ्छितानि प्रदास्यामि वरैतानि नृपोत्तम ॥ ३१

इति ब्रुवन्तं तं राजा प्रणम्य भुवि दण्डवत् । स्तुत्वैनं विविधैः स्तोत्रैरप्रार्थयदयं द्विजाः ॥ ३२
नवसंख्याधिकाः लक्षवीरा देव कृपानिधे । भवन्तु मेऽनुजास्स्वामिन् सहायाः प्राप्य तानिमान् ॥ ३३
निष्कंटकमिदं राज्यं पालयिष्याम्यनुग्रहात् । श्रुत्वैतद्वचनं स्वामी तथेत्युक्त्वा दयानिधिः ॥ ३४
वीरबाहुमुखान्वीरानवलोक्याब्रवीद्वचः । यूयमस्यानुजा दक्षीयं भवताद्य ममाज्ञया ॥ ३५
इत्युक्तिमस्य संश्रुत्य वीरास्ते भयकंपिताः । दैत्यसंहारकाणां नो देवदेव कथं रुचिः ॥ ३६
भवेदस्यानुजत्वेऽतदल्पके जगतां प्रभो । इति तेषां वचः श्रुत्वा कोपाकुलित मानसः ॥ ३७
पुनः प्राह गुहो वीरान् वीक्ष्य संभर्त्सनेन तान् । नाङ्गीकुरुत मद्वाक्यं यस्माद्यूयंतु गर्विताः ॥ ३८
प्राप्य मानुष्यमेतेन स्थित्वाचास्यानुजाः क्षितौ । तपः कृत्वा परं पश्चाद्विशुद्धाः किल्बिषादतः ॥ ३९
मागच्छत ममाभ्याशं पुनरन्ते मदाज्ञया । इत्युक्तमात्रे ते वीरा मानुषं रूपमास्थिताः ॥ ४०
क्षंतव्यो नोऽपराधोऽयं देवदेव कृपानिधे । इत्युक्त्वा दण्डवद्भूमौ प्रणेमुर्भयकम्पिताः ॥ ४१
लब्धानुज्ञास्ततो भूपस्यानुजत्वं समाश्रिताः । परिवव्रुस्तं शचीभर्तुरुपेन्द्र इव भूसुराः ॥ ४२
मुचुकुन्दाय भूपाय गुहः परमपावनः । अनुग्रहं विधायैवं अन्तर्धानं समाश्रितः ॥ ४३
मुचुकुन्दस्ततो धीमांश्चतुरङ्गबलं महत् । प्रत्येकं संव्यवस्थाप्य भ्रातॄणां परया मुदा ॥ ४४
राज्यं बभार सन्तोषाद्ब्रह्मण्यं हृदि संस्मरन् । ततस्तु कर्पूरग्रामे राजकन्यात्मतां गताः ॥ ४५
पाणीन् संग्राहयामास भ्रातॄणामप्सरस्त्रियः । पुष्पगन्धि विवाहाथ वीरबाहुर्महाबलः ॥ ४६
पुत्रावुत्पादयामास कनकानकसंज्ञकौ । साकं दुहित्रापरया चित्रवल्याख्यया द्विजाः ॥ ४७
सजीजनंस्तदा वीराः पुत्रानन्येऽपि भूपसः । वीरबाहुर्ददौ पुत्रीं चित्रवल्लीं मनोहराम् ॥ ४८
कल्पितज्येष्ठभावाय मुचुकुन्दाय शास्त्रतः । तस्याः करस्थितं कीरं चित्रवल्या मनोहरम् ॥ ४९
यमदूता गृहीत्वेमं यमपत्न्यै मुदे तदा । कांक्षिण्यै प्रददुः शीघ्रं बलात्कारेण भूसुराः ॥ ५०
वृत्तान्तमेतच्छ्रुत्वाऽथ वीरास्ते क्रोधविह्वलाः । युद्धं कृत्वा यमेनैते गृहीत्वा पुनराशु तम् ॥ ५१
चित्रवल्यै प्रदायैनं तेनुः प्रीतिं तदा भृशम् । अन्तर्वत्न्यभवद्बाला चित्रवल्ली नृपप्रिया ॥ ५२
तदा केरळदेशस्थं फलमैच्छन्महद्रसम् । वीरास्तत्रत्यराजानं दूतवक्त्रेण भूसुराः ॥ ५३
ययाच्छुरेतद्भूपेन नदत्ते क्रोधविह्वलाः । जित्वा तं रणमध्ये तत्फलं संगृह्य शीघ्रतः ॥ ५४
ददुरेतत्फलं तस्यै चित्रवल्यै तदा द्विजाः । तत्र तत्र स्थितान् दुष्टान् जित्वा देशेषु संगरे ॥ ५५
स्ववशीकृत्य गां सर्वां चक्रुर्न्यायवर्तिनः । चित्रवल्यसिवर्णाख्यं कुमारं सुषुवे तदा ॥ ५६
मुचुकुन्दस्य भूपस्य प्रिया सर्वाङ्गसुन्दरा । तस्मिन्काले शक्रपुरीं बलोनाम महासुरः ॥ ५७
अरौत्सीद्रणदक्षोऽयं जित्वेन्द्रं दुर्बलं द्विजाः । तेन योद्धुमशक्तत्वात्सुराणामधिपस्तदा । ५८
मुचुकुन्दं नृपश्रेष्ठं दूतैरानयदात्मतः । मुचुकुन्दस्समागत्य बलसेनां महाबलाम् ॥ ५९
अमारयन्महासत्त्वो रणमध्यं समाश्रितः । अवशिष्टस्तदा तस्थौ बलएको महासुरः ॥ ६०
वज्रेण मरुतामीशास्तं जघान महीसुराः । बलारिः कथितस्तेन तदारभ्य पुरन्दरः ॥ ६१
हत्वा बलं महाघोरं मुचुकुन्देन भूभुजा । स्वगृहं प्राप मघवान् सन्तोषेणामरेश्वरः ॥ ६२

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
देवकाण्डे षष्ठोऽध्यायः ॥

---

## ॥ अथ सप्तमोऽध्यायः ॥

### श्रीमुचुकुन्देन कमलालये श्रीत्यागराजप्रतिष्ठा ॥

ततः स्नात्वा नृपसुराधीशौ परमशोभनौ । पूजागृहं पुरारातेरभिविविशतुस्तदा ॥ १
उपविष्टो नृपश्रेष्ठस्सुखमासनमुत्तमम् । ददर्श पूजाकालेऽस्य सोमास्कन्दं महेश्वरम् ॥ २
प्रसन्नवदनांभोजं परमानन्दविग्रहम् । तं दृष्ट्वा परमेशानं मुचुकुन्दो नृपोत्तमः ॥ ३
कैलासवासिनं देवमंबिकासहितं प्रभुम् । स्मृत्वा तुष्टाव भक्त्या तमानंदाश्रुपरिप्लुतः ॥ ४
तस्मै प्रसन्नो भगवान्मुचुकुन्दाय भूभुजे । विष्णुनाऽऽराधितः पूर्वमहमिन्द्रमिहागतः ॥ ५
तं मां त्वं पूजयामायिन्मद्भक्तेषु वरो यतः । इत्युपांशु महीपालं प्राहवाचं महेश्वरः ॥ ६
न श्रूयते यथेन्द्रेण तथैव ब्राह्मणोत्तमाः । तच्छ्रुत्वा मुचुकुन्दोऽयं प्रसन्नेनान्तरात्मना ॥ ७
तस्थौ पूजां सुरेशस्य विलोक्यानन्यमानसः । समाप्य पूजामिन्द्रोऽपि प्रस्थितो भूभुजासह ॥ ८
प्राप्य भोजनशालां स्वां कामधेनुमचिन्तयत् । धेनुस्समागता शीघ्रं कामदा स्वाश्रिताय सा ॥ ९
भोजयित्वा तदा दत्तमन्नं दिव्यं पयोयुतम् । दापयित्वा विभूषाश्च वस्त्राण्यपि महीभुजे ॥ १०
पप्रच्छ भूयो भूयोऽथ वांछितं वद हे नृप । इति प्रेम्णा सुरेशानो मुचुकुन्दं महीसुराः ॥ ११
तच्छ्रुत्वा स महीपालस्सन्तोषेण युतस्तदा । प्रयच्छ सांबमीशानं त्वयाऽसे शक्र पूजितम् ॥ १२
तमेनं परमेशानं पूजयिष्यामि भक्तिमान् । निशम्यैतत्सुरेशोऽपि विचारेण महीयसा ॥ १३
प्राह वाचममुं वीक्ष्य नमदीयो महेश्वरः । विष्णुनाऽऽराधितो देवस्सत्यमुक्तं मया नृप ॥ १४
तत्पूजाकारणं वक्ष्ये श्रृण्वैकमनसाऽधुना । निरपत्य. पुरा विष्णुः परमेशं हृदिस्मरन् ॥ १५
तपश्चचार सुमहत्पुत्रार्थमवनीपते । प्रसन्नेच महादेवे प्रणम्य परया मुदा ॥ १६
देवदेव महादेव त्वया दत्त महत्पदम् । आयुश्चानंतसंख्याकं नकिञ्चिन्न्यूनमद्यमे ॥ १७
तव प्रसादात्पुत्रोमे भूयादद्य कृपानिधे । निरपत्यस्य देवेश तदेनोऽपाकुरुक्षणात् ॥ १८
इति संप्रार्थयामास परमेशं तदा हरिः । तथेति पार्वतीनाथो वरं प्रादाद्धरेस्तदा ॥ १९
तदेतत्सर्वमालोक्य पार्वती कुपिता तराम् । यस्मान्महेशं मुक्त्वा मां अर्चयित्वा त्वसौहरिः ॥ २०
अवाप्तवान्वरं तस्य जातः पुत्रो मदाज्ञया । भवनेत्राग्निनिर्दग्धो भवत्वस्य दयानिधे ॥ २१
वञ्चकोऽयं महामायी मोहयित्वाऽत्मनोऽखिलान् । ब्रह्मास्मीति सदाजल्पंस्त्वयि ब्रह्मणिजायति ॥ २२
पातयामास दुर्मार्गे तदस्य मुखमीक्षितुम् । नयुक्तमिति देवेशमुक्त्वा भूयो जगत्पतिम् ॥ २३
अन्तर्धिं शंभुना प्राप पार्वती भूपते क्षणात् । ततो विष्णुस्सुदुःखार्तस्सोमास्कन्दममुं वरम् ॥ २४
प्रतिष्ठाप्य विधानेन बहुकालमपूजयत् । तत. काले महादेवः कस्मिंश्चित्कृपयासह ॥ २५
सषण्मुखो हरेश्शंभुराविरासीद्दयानिधिः । तुष्टाव सांबं ससुतं परमेशं पुनर्हरिः ॥ २६
ततः प्रसन्नो भगवान् गौरीमुखमलोकयत् । तदिङ्गितं हरिर्ज्ञात्वा प्रणम्योमां गिरीन्द्रजाम् ॥ २७
अज्ञानेन भवानि त्वामसंपूज्य महेश्वरम् । अपूजयं तमेवैकमपराधो भवेन्मम ॥ २८
महान्तं कालमारभ्य पुत्रार्थंच तपः कृतम् । तं त्वं रक्ष महेशानि कामं दाहो भवत्विति ॥ २९
इति स्तुत्वा महादेवीमप्रार्थयदधोक्षजः । ततो हैमवती विष्णुं सुप्रसन्ना जगादतम् ॥ ३०
विष्णो भवतु दग्धस्य त्वत्पुत्रस्य महेश्वरात् । पुनस्सञ्जीवनं शीघ्रं मदाज्ञाहि गरीयसी ॥ ३१
इत्युक्त्वाऽन्तर्दधिं प्राप गिरिजा शंभुनासह । ततस्सन्तुष्टमनसा विष्णुर्भूष्णुर्मनोभवम् ॥ ३२
मनसोऽजीजनत्स्मृत्वा महादेवाज्ञया सुतम् । संवर्धितोऽयं हरिणा बहुकालं मनोभवः ॥ ३३

सुरकार्यं समुद्दिश्य दग्धत्रिपुरविद्विषा । पुनरुत्पादितस्तेन प्रसन्नेन शिवेन सः ॥ ३४
तमिमं विग्रहं विष्णुः पूजयित्वाऽस्तवान्वरम् । उरस्यारोप्य देवेशं शेषशायी हरिस्तदा ॥ ३५
क्षीरार्णवे जगामायं निद्रां योगाख्यां तदा । वक्षोमध्ये तदा विष्णोस्सोमास्कन्दो महेश्वरः ॥ ३६
अनंतविष्णोरुच्छ्वासनिश्वासान्दोलितविग्रहः । इतस्ततश्चचालायं शाखीव पवनाहतः ॥ ३७
एवं गते हरौ निद्रामनुमारोप्य वक्षसि । समागतस्तदा योद्धुं वाष्कलाख्यो महासुरः ॥ ३८
ततो भीतमनाश्शीघ्रमहं विष्णुं पयोनिधौ । बोधितुं गतवानस्मि वृत्तान्तं भूपते तदा ॥ ३९
प्रबुद्धस्सहसा विष्णुरुत्थितो मां विलोक्य च । ज्ञात्वा मदागमनं चासौ मास्तु भीतिस्तवेतिमाम् ॥ ४०
उक्त्वोरःस्थितमीशानं दत्वाऽस्माकममुं शिवम् । स्वयं निर्गत्य भूलोके पुण्डरीकपुरं परम् ॥ ४१
प्राप्य दृष्ट्वा महादेवं तत्र चिद्रूपिणं शिवम् । आनन्दाश्रुपरीताक्षस्तदा गद्गदवाग्घरिः ॥ ४२
चतुर्मासान्तमज्ञात्वा नकिञ्चिदपि माधवः । स्थित्वा (सुप्त्वा) समुत्थितश्शंभोः प्राप्यानुग्रहमद्भुतम् ॥
निर्गत्य युद्धे वाष्कलिं हत्वा घोरं महासुरम् । क्षीरार्णवमनुप्राप्य मां पुरं प्रति माधवः ॥ ४४
प्रेषयित्वा यथापूर्वमधिशिश्ये महोरगे । गत्वाहं मत्पुरं रम्यं तदारभ्य महेश्वरम् ॥ ४५
उमया सहितं देवमस्थाप्य गुहमव्ययम् । अर्चयाम्यमुमीशानमनन्यमनसा नृप ॥ ४६
तद्दातुं माधवस्यैनमप्राप्यानुमतिं पराम् । न शक्यते नृपश्रेष्ठ विष्णोरमिततेजसः ॥ ४७
तदनुज्ञामवाप्याशु गृहीतुं शक्यते भवान् । इति तस्य वचः श्रुत्वा मुचुकुन्दो महानृपः ॥ ४८
विष्णोरभ्याशमाप्याथमुक्त्वैतदखिलं वचः । प्राप्तानुज्ञस्समागत्य सुराणामधिपं पुनः ॥ ४९
विष्णोरनुज्ञा संप्राप्ता मया देववराधुना । तद्दातुमर्हति भवान् परमेशं सुरेश्वर ॥ ५०
इत्युक्तिमस्य संश्रुत्य विचारेण महीयसा । विमलादातुमीशानं सोमास्कन्दं द्विजोत्तमाः ॥ ५१
त्वष्ट्राऽस्तु निर्मितानन्यान् षडस्य सदृशान्वरान् । प्रादात् क्रमेण देवेशो विग्रहान् भूभुजे तदा ॥ ५२
विलोक्य तानयं ज्ञात्वा कपटं च शतक्रतोः । तमेव विग्रहं भूयः पप्रच्छ सुरपुङ्गवम् ॥ ५३
ततः प्रादात्सुरेशोऽस्य तं देवं परया मुदा । गृहीत्वाथ महादेवं मुचुकुन्दो नृपोत्तमः ॥ ५४
कमलालयमागत्य स्थलानामुत्तमोत्तमम् । प्रतिष्ठाप्य विधानेन चक्रे पूजोत्सवादिभिः ॥ ५५
महोपचारं देवस्य सोमास्कन्दस्य भक्तिमान् । तत्समीपपुरेष्वन्यान्विग्रहान् षडपि द्विजाः ॥ ५६
अपूजयन्महात्मायमवनीशो द्विजोत्तमाः । चण्डालजनिमापाथ सुरेशोऽपि महेश्वरम् ॥ ५७
स्वात्मभाऽभ्यूजितं यस्मात्सोमास्कन्दं प्रदत्तवान् । कमलालय एवायं पुण्यक्षेत्रे तथा क्षणात् ॥ ५८
व्याधारवांस्ततः कृत्वा महादेवस्य पावनात् । प्रसाद्य परमेशानं प्राप्तवानिन्द्रतां पुनः ॥ ५९
मुचुकुन्दो महीपालो निर्माय पुरविद्विषः । प्राकारमण्टपाट्टालगोपुरादीननेकशः ॥ ६०
कारयित्वा महापूजां महादेवस्य भक्तिमान् । निष्कण्टकमसौ राज्यभारं भृत्वा महाधनः ॥ ६१
आत्मजायाग्निवर्णाय पट्टबंधं विधाय सः । कैलासं पर्वतश्रेष्ठमापन्ने ब्राह्मणोत्तमाः ॥ ६२
वीरबाहुमुखा वीरा अपि स्थाप्यात्मजान् स्वकान् । अग्निवर्णस्य निकटे तपः कृत्वा सुदुश्चरम् ॥ ६३
मुक्त्वाशु मानुषान् देहान् गृहीतात्मशरीरिणः । प्राप्य स्कन्दगिरिं रम्यं प्रणम्य गुहमव्ययम् ॥
तत्र तस्थुस्तुसन्तोषात्संप्राप्ततदनुग्रहाः ॥ ६४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
देवकाण्डे सप्तमोऽध्यायः ॥

सुब्रह्मण्याय नमः ॥ हरिः ॐ ॥ शुभमस्तु ।

॥ देवकाण्डस्समाप्तः ॥

उ
ஸ்ரீராமஜெயம்.

श्री महागुरुभ्यो नमः ॥ अविघ्नमस्तु ॥ श्री विघ्नेश्वराय नमः ॥

श्री प्रणतार्तिहरायपरस्मैब्रह्मणेनमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ दक्षकाण्ड प्रारम्भः ॥

मौर्वी भूभृद्यदारासनदिरसनझारिचक्रद्वयश्रकान्तानिहितदशरस्तदुदरे सूतस्तशास्त्रवेदयाः ।
तेषामेव शिरः पदेषु वसतिस्स्वरूपेति यस्यश्रुतं देवश्चित्परिच्छदस्सभगवान् कुर्यात्सदा मङ्गलम् ॥

॥ अथ दक्षकाण्डे प्रथमोऽध्यायः ॥

परशिव एव परं ब्रह्मेति निरूपणम् ॥

ऋषयः —

दक्षाध्वरः पुरा प्रोक्तस्त्वया सूत तपोधन । जयन्तायेन्द्रपुत्राय समासेन बृहस्पतिः ॥ १
प्रोक्तवानिति तं भूयो विस्तराद्वक्तुमर्हसि । तदेतेषां वचः कर्णे कृत्वा प्राह मुनीश्वरः ॥ २

सूतः —

शृण्वन्तु ब्राह्मणास्सर्वे भवन्तो ब्रह्मवित्तमाः । सत्यलोके पुरा ब्रह्मा सर्वैर्देवैस्तपोधनैः ॥ ३
ऋषिभिर्दशभिः पुत्रैः प्रजापतिभिरास्थितः । दक्षोऽयं प्रथमस्तस्य पुत्राणां ब्राह्मणोत्तमाः ॥ ४
प्रणम्य पितरं मूर्ध्ना पप्रच्छ जगतां प्रभुम् । भोः विनिर्णीतसर्वार्थसर्ववेदार्थकोविद ॥ ५
कोऽयमध्ये त्रिमूर्तीनां वरिष्ठो जगतांप्रभुः । परिपूर्णः परञ्ज्योतिः परमात्मा सनातनः ॥ ६
कर्ता सर्वस्य जगतः पालको हारकस्तथा । सर्वजीवेषु सर्वत्र साक्षित्वेन व्यवस्थितः ॥ ७
इति तस्य वचश्श्रुत्वा ब्रह्मा ध्यात्वा शिवं हृदि । आनन्दाश्रुपरीताक्षो हर्षगद्गदवाक्क्षणम् ॥ ८
आविर्बभूव यो वह्निज्वालामालावृतोऽन्तरे । ब्रह्मविष्ण्वोर्महामोहात्कमहं दयतोः कृपा ॥ ९
सर्वेश्वरस्स एवैकश्शम्भुराकाशमध्यगः । मयमेव जगत्कर्ता विशेषादावयोरपि ॥ १०

दक्षः —

इत्थरूपं विधात्रोर्वा ब्रह्मविष्ण्वोरयं हरः । संहर्तातातकर्ताऽस्मात्सर्वथा जगदीशयोः ॥ ११

ब्रह्मा —

उपाध्यायं महादेवो ब्रह्माणं मां हरिं तथा । कल्पयित्वावयोः कृत्यं हृदये संव्यवस्थितः ॥ १२
प्रेरयत्यनिशं स्वेस्वे कृत्ये सर्वत्र विश्वपः । मोहितौ च समुद्वीक्ष्य निगूह्यावां स रक्षति ॥ १३
तथापि स महादेवो विभात्येक इवावयोः । अध्यापयत्ययं वेदान् पुराणानिव पूर्वतः ॥ १४
पुष्पेषु गन्धवत् देवस्तिलेष्वपि च तैलवत् । घण्टायां ध्वनिवदग्नौ प्रभावत्परमेश्वरः ॥ १५
सर्वत्र सर्वदा देवस्सर्वेष्वपि च संस्थितः । एतादृशोऽयमेकस्स्यात्कथ पुत्रावयोर्विभुः ॥ १६

दक्षः —

सर्वस्य ब्रह्मतादात्म्यं सर्वं खल्विति हि श्रुतिः । कथमस्यादरेणेयं तात वक्ति जगत्प्रभो ॥ १७

ब्रह्मा—

उपचारेण सर्वस्य ब्रह्मतामाह सा श्रुतिः । भूलोके ब्राह्मणान्यद्वन्मया भेदं वदन्ति ते ॥ १८
तथा सर्वस्य जगतो ब्रह्मत्वमिति निश्चयः । सर्वव्यापित्वमीशस्य वीक्ष्यैवं श्रुतिरव्यया ॥ १९
सर्वस्यापि महादेवतादात्म्यं वदति ध्रुवम् । स्वभावेन महादेवं मृत्युञ्जयमुमापतिम् ॥ २०
विश्वाधिकं महामीत्याऽभिधत्ते ब्रह्मशाश्वतम् । अन्तर्यामी स एवैषां जीवानां परमेश्वरः ॥ २१
एक एव जगत्कर्ता नान्यो रुद्रान्महेश्वरात् । अनेक गुणसंपन्नो निर्गुणोऽपि महेश्वरः ॥ २२
अरूपी बहुरूपी च सर्वरूपी परात्परः । त्रिपदार्थ स्वरूपीशस्सर्व कल्याण कारणः ॥ २३
परतत्वं परञ्ज्योतिस्तत्वातीतस्स एव हि । मोहितौ विष्णु धातारावावां रक्षितवान्पुरा ॥ २४
आवयोरस्थिनी देवो बिभर्तिज्ञापनाय हि । चर्मवद्व्योममनुजाबेष्टयिष्यन्ति चेन्नृशम् ॥ २५
शिवं तदाते विज्ञाय मुक्तिमेष्यन्त्यसंशयम् । तस्यास्य महिमावक्तुं शक्यते न मया सुत ॥ २६
यत्रापि वेदो वदति मांच विष्णुं क्वचित्स्थले । उपचारेण तत्रापि देवेशं परमार्थतः ॥ २७
एकभावेन कर्माणि देवान्विष्णु मुखान्नृपीन् । भागेनान्येन देवेशं भयाद्वदतिहि श्रुतिः ॥ २८
अस्मासु शम्भुबुध्यैव तत्रापि भणति श्रुतिः । यदिशिवेन समानस्मान् मोहान्धीकृतचेतसा ॥ २९
वदत्येषमहापापो नरकं प्रविशेत्खलु । वदन्ति शिवशास्त्रान्ये तेषुप्रीतिर्हि नस्तराम् ॥ ३०
शास्त्रान्यान्प्रपश्यामो दुर्बुद्धीन्पापकर्मिणः । शिवपशुपतिश्शंभुः पशवो वयमेवहि ॥ ३१
भूम्यां लिङ्गानि देवस्य शङ्करस्यास्मदादिभिः । प्रतिष्ठाप्यैव विधिना पूजितानि निदर्शनम् ॥ ३२
स एव भोगं मोक्षञ्च प्रददात्याश्रितस्य हि । तस्मात्त्वमपि तं देवं शरण्यं शरणं व्रज ॥ ३३
एवमेव मया प्रोक्तं पुरा पुत्र स्वभावतः । मोहेन त्वं महेशस्य न स्मरस्येतदीशितुः ॥ ३४
तदिदं सर्वमाकर्ण्य ब्रह्मणोक्तं प्रजापतिः । ऐश्वर्यमिच्छन्मनसा पप्रच्छ तपसस्स्थलम् ॥ ३५

ब्रह्मा —

मन्मानसे समुत्पन्नं मानसाख्यं सरश्शुभम् । तत्तीरे शोभने गत्वा तपसा परमेश्वरम् ॥ ३६
प्रीणयित्वा निजाभीष्टं लभस्व परमेश्वरात् । इत्युक्त्वा प्रैरयत्पुत्रं दक्षमब्जभवस्स्वकम् ॥ ३७
तदानीमेव दक्षोऽसौ तत्स्थलं प्राप हृष्टधीः । तत्रस्थित्वाऽतपद्घोरं शिवे विन्यस्तमानसः ॥ ३८
वर्षाकाले जले स्थित्वा हेमन्ते हिममध्यगः । ग्रीष्मे पञ्चाग्निमध्यस्थो मूलाग्निं ज्वलयन्भृशम् ॥
एकादशसहस्राणि वर्षाणामयुतोपरि ॥ ३९

इति श्रीस्कान्दे महापुराणे शांकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

दक्षेण श्रीमहेश्वराद्वरप्राप्तिः ॥

प्रादुरासीत्ततश्शम्भुर्दक्षाय महात्मने । आरुह्य शाङ्करं दिव्यं नानालङ्कारमण्डितम् ॥ १
स्तूयमानो मुनिवरैर्गन्धर्वैः किन्नरैरपि । तं दृष्ट्वा परमेशानं दक्षः परमया मुदा ॥ २
स्तुत्या स्तोत्रशतैर्दिव्यैः प्रणनाम पुनः पुनः । वीक्ष्य तं परमेशोऽसौ प्रसन्नान्तरात्मना ॥ ३
दक्ष ते सुप्रसन्नोऽहं परं वरय वाञ्छितम् । इतिशंभोर्वचश्श्रुत्वा दक्षः प्राह मुदायुतः ॥ ४

देवदेव महादेव शरणागतवत्सल । सर्वैश्वर्येण सम्पन्न शम्भो भो व्योममध्यग ॥ ५
भूरपन्तरिक्षस्वर्गाणां पातालाना विशेषत । ब्रह्मविष्ण्वादिलोकानामाधिपत्यं प्रयच्छमे ॥ ६
तत्रतत्रस्थितास्सर्वे भवन्त्वाज्ञानुगा मम । तव प्रसादात्सर्वेश सर्वत्रापि सुपूज्यता ॥ ७
भगवन्त महादेव पुत्रत्वान्य यच्चकश्चन । न भजेय कृपासिन्धो भजन्त्वेते सुरास्तुमाम् ॥ ८
भूयासुस्तनयामह्य बहवो वेदपारगा । सुताश्च बहवस्सर्वेश सर्वलोकपितामह ॥ ९
गौरी मद्गर्भसंभूता तनयत्वमसि देवर । विवाहिता महादेव रक्षता मा महेश्वर ॥ १०
एवमादीनि भूयासि तस्येणानि महेश्वर । दत्त्वातिप्रसिद्धेच्छयाय्ये वर्धन्त्वेते मदाज्ञया ॥ ११
इत्युक्त्वान्तर्धिमापाथ त्वरया परमेश्वर । ततोदक्षो लब्धवरस्तुष्टोऽत्यन्त महेश्वरात् ॥ १२
सस्मार पितर प्रीत्या ब्रह्माण लोकनायकम् । ज्ञात्वा ब्रह्मैतदचिराच्चिन्तयामास मानसे ॥ १३
भोगायायमहादेवे प्रसक्तोऽपि कुमारक । वरयत (वत्र) तथामोक्षे नबुद्धिनिरुपद्रवे ॥ १४
भविष्यत्येतदप्यप्र यत्रकुत्रदुरत्ययम् । अनुग्रहविनाशम्भो कस्यमोक्षे भवेन्मति ॥ १५
इतिसञ्चिन्त्य शीघ्रेण विधिस्तत्रसमागत । वन्दितस्तेनदक्षेण चाशिषायोजयच्च तम् ॥ १६
ततोदक्ष महात्मा ब्रह्माण जनकमुदा । निर्मातव्य पुरस्य मम सर्वोत्तम पित ॥ १७
इतिवाह चतुश्शीघ्रास्त्वेति विधिस्त्वसौ । कृत्वातिरम्य नगर नानाश्चर्यसमन्वितम् ॥ १८
नाम्ना दक्षपुरीत्येव प्रथित भुवनत्रये । दक्षोविधिमुखादेतच्छ्रुत्वा हृष्टमनाभृशम् ॥ १९
स्वपुरीं प्राप्य तरसा स्वगृह प्रविवेशहि । ततस्सिंहासने दिव्ये नानारत्नविचित्रिते ॥ २०
इन्द्रादिदेवैर्गुरुणा पूर्वदेवैस्सकाव्यकै । ग्रहैस्सूर्यमुखैश्चापि दिक्पालैर्लोकपालकै ॥ २१
एवमादिभिरन्यैश्च सेवितोऽतिष्ठदद्भुते । क्रमेण ब्रह्मण पुर्यां वेदवल्ली मनोहराम् ॥ २२
उद्वाह्यायमतापन महताच समन्वित । सहस्रसंख्यान्पुत्राश्च जनयामास सात्त्विकान् ॥ २३
तेषानामादिकर्माणि विधायविधिना विधि । तोषयित्वाऽऽत्मतपसा परमेशं परात्परम् ॥ २४
प्रभुत्वसर्वलोकाना प्राप्यागच्छत शीघ्रत । इतितान्प्रेषयामास तपसेस्वात्मजान् द्विजा ॥ २५
ततोदक्षसुतास्सर्वे मानसाख्य सरोवरम् । समागत्य कृतस्नानास्तेपुण्यैस्सुबुश्चरम् ॥ २६
तपोमहद्विशुद्धान्तःकरणा नियता भृशम् । तदानीं नारदश्श्रीमान् प्राप्यतेषा तप स्थलम् । २७
तद्दृष्ट्वामुनिशार्दूल यथान्याय तपोधना । प्रणम्य कुशलंपृष्ट्वा सर्वेतेप्रीतिमापयु ॥ २८
किमर्थंतप्यतेघोर तपोयुष्माभिरत्रहि । इतिपृष्टा पुनस्तेन नारदेन महर्षिणा ॥ २९
सृष्टिसामर्थ्यमस्माक जगता समवदियति । तच्छ्रुत्वा तापसश्रेष्ठस्तानुवाच विधेस्सुतान् ॥ ३०
महादेवप्रसादेन सर्वेषामेवमूचिरे । महोमोहमहोमोह तपतामपिवो भृशम् ॥ ३१
प्रीणयित्वा महादेव तपसा सृष्टिवर्तिता । प्रार्थ्यते दुस्स्वरूपैवा युष्माभिर्योगकिल्बिषैः ॥ ३२
प्रबलस्सृष्टिरेतेषा य पितुर्मोहगौरवात् । शिरश्छेदोऽभवत्पूर्वं परमेशानपेश्वरात् ॥ ३३
शाठ्येय बहुभिस्तद्दक्षरूपी चराचरम् । मद्भूमा नितरा दुस्समासनात्प्रतुगर्वित ॥ ३४
तथा जन्मादिदुखानि भजते नितरामयम् । राक्षसैरसुरैरन्यै प्रत्यहं बाध्यते प्रजु ॥ ३५
एव दुस्सहरूपाहि सृष्टिना सुखवर्जिता । तस्मात्तत्र निवृत्ताशास्सृष्टौ दुखैकभाजने ॥ ३६
तपसा परमेशान तोषयित्वा महेश्वरम् । भजध्वं मुक्तिमतुलां निरस्तद्वयशालिनीम् ॥ ३७
एवं मुनिवरस्तेषा तत्पथान शिवाध्वम् । उपदिश्य जगामैषस्वेच्छया व्योम्नि भूसुरा ॥ ३८

श्रुत्वा तदुक्तिं ते सर्वे तथैव कृतमानसाः । प्रसाद्य तपसा देवं मुक्तये परमेश्वरम् ॥
मोक्षमापुर्महात्मानः पुनरावृत्तिदुर्लभम् ॥ ३९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे द्वितीयोऽध्यायः ॥

---

॥ अथ तृतीयोऽध्यायः ॥

चन्द्रशाप प्राप्ति परिहारौ ॥

अथदक्षस्तु विज्ञाय वृत्तान्तं खिन्नमानसः । पुनस्सहस्रसंख्याकान् पुत्रानुत्पाद्यपूर्ववत् ॥ १
समाप्य तेषां कर्माणि तपसे प्रीतिपूर्वकम् । सृष्ट्यर्थं प्रेषयामास सर्वलोकस्य बुद्धिमान् ॥ २
तथैव तेषु सर्वेषु प्रवृत्तेषु तमोमहत् । नारदस्सहसाऽऽगत्य विनिन्द्य सृष्टिकर्तृताम् ॥ ३
मोक्षेमतिं विधायैषां पूर्ववद्योभवाश्रितः । तेऽपिप्रसाद्य देवेशं तपसा परमेश्वरम् ॥ ४
अपवर्गं गतामातृगर्भसरणवर्जितम् । वृत्तान्तमेतद्विज्ञाय पुनर्दक्षः क्रुधान्वितः ॥ ५
पुंसृष्टिं प्रविहायासौ षष्टिविंशतिकन्यकाः । ससर्ज सुकुमाराङ्गीस्सर्वलक्षणसंयुताः ॥ ६
धर्मभृगुमरीचीनां पुलस्त्याङ्गिरसोरपि । पुलहस्य वसिष्ठात्रिप्रमुखानां तपस्विनाम् ॥ ७
दत्तवान्विधिना तेषां कन्याकल्याणमद्भुतम् । अजीजनद्वहून् ताश्च पुत्रान्कन्यास्सुशोभनाः ॥ ८
पुत्रीश्च पद्मोद्भवोभाव्या दक्षपुत्र्यः क्रमेणच । एवं पौत्रैर्वृतो दक्षः पौत्रीभिश्च समन्ततः ॥ ९
ससर्ज सप्तविंशत्यः पुनःकन्या महौजसः । ताश्च सर्वा ददौ कन्याश्चन्द्रायाह्लादकारिणे ॥ १०
तासांमध्ये शशीसक्तिं कृत्तिकायामथाप्यहि । ततस्तु कन्यादुःखेन परांदक्षमबोधयन् ॥ ११
नास्मासु रमते चन्द्रः कृत्तिकायां यथा पितः । इतितासां वचश्श्रुत्वा दक्षः कोपसमाकुलः ॥ १२
शशाप चन्द्रश्च परं क्षयमियति तदाद्विजाः । तथैव चन्द्रमाः पञ्चदशवारे क्षयं गतः ॥ १३
कलामात्रावशिष्टोऽयं देवेन्द्रं प्राप रक्षकम् । इन्द्रोऽपि चन्द्रमुद्वीक्ष्य मोक्तवान्वचनं तदा ॥ १४
पूर्वविप्रेशशापार्यं ब्रह्मविष्णुमुखैस्सुरैः । प्रसाद्य विघ्नराजं तं मोचितः किल चन्द्रमाः ॥ १५
प्रतिसंवत्सरं दृष्टमेकस्मिन्दिवसे मुखम् । नयुक्तमिति ते सर्वे नेक्षन्तेऽद्यापिते मुखम् ॥ १६
विद्यमानेऽपि दोषेऽस्मिन्निदमप्यभवत्खलु । तस्मात्त्वमाशु ब्रह्माणं विज्ञाप्य जगतां प्रभुम् ॥ १७
बोधयित्वाऽमुना दक्षशापान्मोक्षं भजेत्यमुम् । प्रेषयामास मतिमानिन्द्रश्चन्द्रमसं द्विजाः ॥ १८
स तथेति विनिर्गत्य प्राप्य धातारमञ्जसा । प्रणम्य परयाभीत्या स्तुत्वाच विविधैः स्तवैः ॥ १९
दक्षशापस्य मोक्षञ्च प्रार्थयामास चन्द्रमाः । तस्यतद्वचनंश्रुत्वा जगाद कमलासनः ॥ २०
दक्षोऽयं नश्रणोत्यस्मदुक्तिं दुष्टमना भृशम् । करोति मय्यपिक्रोधं तस्मात्त्वं चन्द्र बुद्धिमान् ॥ २१
गत्वा महेशनिकटं विज्ञापय सदाशिवम् । पाळकूटं पुरा पीत्वा देवान्सर्वानरक्ष सः ॥ २२
हत्वा यमं महाघोरं मार्कण्डेयं ररक्षहि । इतिधातृवचः श्रुत्वा चन्द्रः कैलासपर्वतम् ॥ २३
प्राप्य नन्दिमुखाद्देवं महादेवमथाप्यच । प्रणम्य परया प्रीत्या तुष्टाव विविधैस्स्तवैः ॥ २४
प्रसन्नेच महादेवे वृत्तान्तञ्च जगादहि । ततः प्रसन्नहृदयो भगवानिदमब्रवीत् ॥ २५
दयाऽमयं दयालुस्य कलामात्रावशेषिणः । धृत्वा धृष्टतया मूर्ध्नि क्षणमात्रं महेश्वरः ॥ २६
शशाद्दन्यमपूज्य सर्वलोकेश्वरस्य च । ममाश्रयमथानुत्वं वृद्धिमाप्नुपूर्ववत्पुरा ॥ २७

इति दक्षवरेशाभ्यां ब्रह्मविष्णुमुखास्सुराः । महिमानमजानाति तवलोको महेश्वर ॥ २८
तस्मात्त्वं लोकरक्षार्थं चन्द्रचूड दयानिधे । चन्द्रस्य कल्पयास्याशु क्षयवृद्धी उभे अपि ॥ २९
प्रतिमासं महादेव तदिदं लोकनायक । ज्ञात्वा लोकोभवद्भक्तो निजमिष्मजायतु ॥ ३०
इत्यूचुस्तश्च वर्णं श्रुत्वातैषां महेश्वर । तथैव चन्द्रं परया दयया भक्तवत्सल ॥ ३१
प्रेरयामास विश्वात्मा विश्वसंरक्षणोद्यम । चन्द्रोऽपि देवदेवेशं प्रणम्य प्रासतद्दृप ॥
प्रययौ स्वपदं हृष्टो मुदा ब्राह्मणपुङ्गवा ॥ ३२

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे तृतीयोऽध्याय ॥

---

## ॥ अथ चतुर्थोऽध्याय ॥

### देवीगर्वापनोदाय शिवेन प्रपञ्चोपसंहार ॥

तदिदं सर्वमाकर्ण्य दक्षोऽय कोपविह्वल । मया शप्तोऽपि चन्द्रोऽसौ मोचितश्शम्भुना कथम् ॥ १
इत्यथ शङ्करस्यास्य चक्रे दूषणमुल्बणम् । तच्छ्रुत्वा तपतांवर्य पुलहो ऋषिसत्तम ॥ २
शिवस्य दूषणं दक्ष सर्वैश्वर्यविनाशकम् । भविष्यसि शनैस्सर्वं दूष्यसवञ्च दुरात्मवान् ॥ ३
भवच्छापस्य गतिरप्युक्ता तेन महात्मना । त्वत्सुतामपि देवोऽय कालेनोद्वाहयिष्यति ॥ ४
इतिमस्यवचः श्रुत्वा स्वकोपो मुदायसत् । एवस्थिते मुदा दक्षे ब्राह्मणानामधीश्वरा ॥ ५
यस्मिन्गौर्यास्तु संभूतिं वक्ष्ये युष्माकमद्भुताम् । कैलासे ब्रह्मविष्णुभ्यां देवैरन्यैश्च सेवितौ ॥ ६
पार्वतीपरमेशानौ पुरा तस्थतुरुज्ज्वलौ । तदोत्थाय भवान्येषा प्रणम्य परमेश्वरम् ॥ ७
भगवन्देवदेवेश सर्वज्ञ जगतां प्रभो । यथोत्पन्नजगत्सचराचरमथ तदा ॥ ८
वक्तुमर्हसि विश्वात्मन्विश्वसंरक्षणोद्यम । इतिदेव्या तदापृष्टश्शङ्करो लोकशङ्करः ॥ ९
जगाद सृष्टिजगतो यथापांगममागतं । सर्वलोकस्यपायाश्च सर्वज्ञ परमेश्वर ॥ १०
ततस्तु देवी देवेश पुनःप्राह कुतूहलात् । भगवन् भवसर्वेश सत्यचिल्लक्षण प्रभो ॥ ११
मदमेव तवेशान शरीरं रूपमद्भुतम् । न मां विना तवेशान शरीरं रूपमस्ति हि ॥ १२
मय्येवेदृशगात्सर्वं चेष्टते तस्यमायत । इतिदेव्या वच श्रुत्वा सावलेपं महेश्वर ॥ १३
महिमा नहि कल्याणी त्वया ज्ञायते परं । मुखलक्ष्मा मदम्पादे स्थिया त्वामेव चोन्नताम् ॥ १४
उत्पत्स्यति सोऽहन्तु त्वयि सर्वत्र सर्वदा । परिपूर्णं परञ्ज्योति परमात्मा स्वयस्थितः ॥ १५
प्रेरयामि शक्त्याप्येतत् प्रतिमां सूत्रधारवत् । विनाऽस्मत्प्रेरणां सर्वं जगच्च समस्तदिते ॥ १६
तथेत्येवं तस्मादुत्य विलोक्य पुरोमम । इति सर्वैश्वर्यदशम्भुस्सविदानन्दविग्रहः ॥ १७
उपसंहृत्य विश्वात्मा शक्तिं सर्वनियामिकाम् । स्वस्मिन्तस्थे स्वप्रज्योति पार्वत्या पुरतो द्विजाः ॥ १८
तदा जगदिदं सर्वं मीलनं निष्प्रियं भृशम् । माहोरात्रो मघामायुधसन्द्रोपग्रिहशुराग ॥
तमोभूतं जडाकारं भीषणं वैपरं द्विजाः ॥ १९

दृष्ट्वैतदद्भुतमसौ गिरिराजपुत्री भीताभृशं भवमशेषगुरुं प्रणम्य ।
तुष्टाव वाग्भिरतुलाभिरनन्यभावा कृत्वाञ्जलिं करयुगं शिरसि द्विजेन्द्राः ॥ २०

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे चतुर्थोऽध्यायः ॥

---

॥ अथ पञ्चमोऽध्यायः ॥

एकादशकोटिरुद्रैः मध्यार्जुनक्षेत्रे श्रीशिवाराधनं दाक्षायण्युत्पत्तिश्च ॥

अथ देवं समीक्ष्यैवा प्रार्थयामास शङ्करी । जयदेव महादेव भक्तवत्सल शंकर ॥ १
मया न ज्ञायते स्वामिन् महिमा तव विश्वप । सोढ्वाऽपराधं देवाद्य मदीयं रक्षरक्ष माम् ॥ २
यथा पूर्वमिमान्सर्वानुज्जीवय महेश्वर । किमशक्यं महादेव तव सर्वेश्वरेश्वर । ३
एवं संप्रार्थ्यमानोऽयं गीर्वा गौरीमनोहरः । प्रसन्नहृदयः पूर्वमेकादशककोटिकान् ॥ ४
रुद्रानबोधयच्छम्भुः स्वापादिव महीसुराः । ततस्ससंभ्रमं रुद्रास्समुत्थाय शिवं हृदि ॥ ५
ध्यात्वा ज्ञात्वैतदखिलं शिवलीलेति ते द्विजाः । उद्बोधाय मनःकृत्वा सर्वेषां प्राणिनाममी ॥ ६
मध्यार्जुनं महत्क्षेत्रं जगत्यांसित्तमोमपे । संप्राप्य शिवपूजाञ्च यामेष्वेते चतुर्ष्वपि ॥ ७
चक्रुः प्रसन्नहृदयाश्शिवरात्री मनीषया । ततः प्रादुरभूद्देवस्तेषामग्रे महेश्वरः ॥ ८
तं दृष्ट्वा परमेशानमस्तुवन् बद्धपाणयः । प्रणिपत्य महीपृष्ठे दण्डाकारतया द्विजाः ॥ ९
नमस्ते विश्वरूपाय विश्वस्रष्ट्रे परात्मने । संहर्त्रेऽस्य स्वतन्त्राय महाग्रासाय शूलिने ॥ १०
क्षयद्वीराय शूराय नमोऽस्तु स्थिरधन्विने । भवत्प्रसादाद्देवेश जगदेतच्चराचरम् ॥ ११
उत्तिष्ठतु यथापूर्वमयातज्ञानमीश्वर । तेषां तद्वचनं श्रुत्वा महादेवस्तथेत्यमून् ॥ १२
उक्त्वान्तर्धिमगाच्छीघ्रं प्रसन्नहृदयेन च । अथविष्णुविधात्रादि देवाः प्रभातमबुद्धयः ॥ १३
उत्तस्थुस्सहसा सर्वे सर्वजीवैश्शिवाज्ञया । आदित्यचन्द्रप्रमुखैश्चिराद्देवभूसुराः ॥ १४
निवृत्ते तिमिरे गाढे प्रकाशोऽव्यानशे जगत् । ततस्सर्वेऽपि ते देवा देवदेवस्य शूलिनः ॥ १५
माहात्म्यमवबुध्यैते पूजां चक्रुश्च पावनीम् । यदान्तर्धिमगाद्देवस्तदा रुद्रान्विलोक्यच ॥ १६
अपेक्षितं किं युष्माकं तत्प्रयच्छामि शीघ्रतः । इति देवस्य वचनं निशम्य क्रुपयेरितम् ॥ १७
भवत्प्रसाद्द्देवेश भगवन्तं महेश्वरम् । निशायामर्चयन्तीत्थं सर्वदा मनुजोत्तमाः ॥ १८
शिवरात्र्यर्चनफल तेषामस्तु कृपानिधे । तथेत्यन्तर्हिते देवे रुद्रास्सपद्ममापिरे ॥ १९
ततो विष्णुमुखा देवाः कैलासं पर्वतोत्तमम् । अधिगम्य महादेवं तत्र दृष्ट्वा पिनाकिनम् ॥ २०
प्रणम्य परया भक्त्या प्रोचुश्च वचनं तदा । एतावत्कालपर्यन्तं भगवन् मृतमायत ॥ २१
अन्धश्शापावृतास्सर्वे परित्यक्तक्रिया वयम् । प्रायश्चित्तं यदेतेषां सर्वपापहरं वद ॥ २२
इत्येषां वचनं श्रुत्वा स्मयमानमुखश्शिवः । युष्माकं न हि दोषोऽस्ति सुरास्सर्वे महाशयाः ॥ २३
गौर्याकृतमिदं सर्वमनयाप्यवलेपतः । अद्यप्रभृति युष्माभिर्नित्यकर्माणि नाकिनः ॥ २४
कर्तव्यानीति तानुक्त्वा प्रेरयामास शंकरः । तथैव देवा निर्गत्य स्वस्थानं प्राप्य ते मुदा ॥ २५
तस्थुः कर्माणि कुर्वन्तो शिवाज्ञावर्तिनोऽनिशम् । ततस्ससंभ्रमं गौरी समुत्थाय कृताञ्जलिः ॥ २६

प्रणिपत्य महादेवं प्रश्रयेण नतानना । भगवन् देवदेवेश सर्वज्ञ जगतांप्रभो ॥ २७
कथमागो ममैवैतदद सर्वदयानिधे । इति पृष्टोमहादेवो देव्या चित्रचरित्रया ॥ २८
प्राह मन्दस्मितमुख स्फुरद्गम्भीरयागिरा । स्थित्वा मन्निकटे त्वं त्वामुन्नतामुक्तवत्यसि ॥ २९
तेनदोषेण लोकोऽयं तिमिरेणावृतः खलु । त्वमेव कुरुकल्याणि प्रायश्चित्तं तदेनसः ॥ ३०
त्वन्तुसर्वस्य जगतो जननी कृपयान्विता । इति देवस्यवचनं निशम्य गिरिजा ततः ॥ ३१
तथेति भगवस्थाने पप्रच्छ परमेश्वरम् । (शिवः)-पुण्यायमसुसालोके प्रसिद्धायानदीशुभा ॥ ३२
तस्याः पद्मवने शुभ्रपत्रे शङ्खाकृतिश्शिवे । तपःकुरु तदा दक्षप्रजापतिस्तदन्तिकम् ॥ ३३
समागत्याभिवीक्ष्यैनं शंखं दिव्याकृतिं परम् । ग्रहीष्यति तदानीं त्वं कन्याकारं प्रदर्शय ॥ ३४
दक्षोऽपि त्वां तदालब्ध्वा सर्वावयवसुन्दरीम् । परितुष्टेन मनसा कन्यां संपोषयिष्यति ॥ ३५
क्रमेण द्वादशाब्दान्ते कल्याणं भाविचावयोः । इत्युक्त्वा प्रेरयामास भवानीं परमेश्वरः ॥ ३६
तथेति प्रस्थिता गौरी कालिन्दीमागता द्रुतम् । तत्पद्मच्छदे रम्ये शंखरूपं तदद्भुतम् ॥ ३७
गृहीत्वा परमेशानं ध्यात्वा मनसि सुस्थिता । तपस्तति महत्येषा सुनिश्चितमतिस्तदा ॥ ३८
एतस्मिन्नन्तरे दक्षो रवौ मकरसंस्थिते । मखाह्वये च नक्षत्रे सपत्न्यासह पुत्रकः ॥ ३९
स्वपुत्रीभिश्च सर्वाभिर्देवैरपि तपोधनैः । स्नात्वाऽयं नियमेनाग्रे शङ्खं पद्मे ददर्शह ॥ ४०
दृष्ट्वा तदद्भुतं शङ्खं जग्राह सहसाऽऽदरात् । गृहीतमात्रे दक्षेण नदृष्टं शंखमद्भुतम् ॥ ४१
किन्तुकन्या विशालाक्षी सर्वावयवसुन्दरी । शिवरूपामिमांगौरीं प्राप्त्वा विस्मितलोचनः ॥ ४२
समादायाशु भार्यायास्तातायाः करयोर्ददौ । वेदवल्यापि सैषा सन्तोषेण समन्विता ॥ ४३
आघ्राय मेश्रयोः कृत्वा ददौ स्तन्यं सुधामयम् । ततस्सर्वाभिस्सर्वाभिः परितस्संवृता सती ॥
स्वपुत्रीभिश्च सहसा स्वगृहं प्राप भूसुराः ॥ ४४

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

तपश्चरन्त्याः गौर्याः पुरतः ब्राह्मणाकारेण श्री ईश्वरस्य प्रादुर्भावः ॥

अथ दक्षोऽपि नियमात् समाप्य सकलाश्रिभिः । तपोधनैर्नृपश्रेष्ठाद् गृहमभ्यागतो द्रुतम् ॥ १
कालेन ववृधे गौरी पित्रोः प्रीतिं प्रकुर्वती । दशवर्षे पञ्चवर्षेऽस्यास्तस्त्तु मनोऽभवत् ॥ २
शिवस्य पाणिग्रहमिच्छन्त्याः परमेशितुः । सुनिश्चितमतिः पश्चात्तपो गृहमयाचत ॥ ३
पितरौ स्वानुकूलौ सा प्रीतियुक्तौ सुमङ्गला । तथैव तस्याः पितरौ तपोगृहमनुत्तमम् ॥ ४
विधाय पर्णगृहाद्य सखीश्च परिरक्षकाः । कल्पयित्वा ततोदेवीं स्थापयामासतुर्मुदा ॥ ५
साऽपि गौरी क्रमानुष्ठा मुनिभिस्तपस्तत्परैः । तपश्चचार सुमहत्तपस्त्रिकवा स्थिरंतराम् ॥ ६
तदानीं वेदवल्याख्या दक्षस्य सहधर्मिणी । कथमस्याससमुत्पन्ना तपोवृद्धिस्तथापनी ॥ ७
पप्रच्छैवं तदाद्क्षस्तामुवाच शुचिस्मिताम् । इयं भगवती गौरी साक्षाच्छद्ररूपिणी ॥ ८
तपोमहिम्ना सम्प्राप्ता पुत्री नौ जगदम्बिका । धन्योऽस्मि नितरामद्य त्वञ्च धन्यासिनिन्दिते ॥ ९
इति तत्रापराधृष्या दक्षस्यास्य कुटुम्बिनी । प्रसन्नहृदया तस्थे एतावन्तीति निश्चिता ॥ १०

तपश्चरन्तीं तां गौरीं शिवैकमनसा द्विजाः । स्वद्वादशाब्दपर्यन्तं ध्यानस्तोत्ररतां तदा ॥ ११
परमात्मा शिवो ज्ञात्वा ब्राह्मणाकारमास्थितः । गौर्यास्तपोगृहद्वारमवाप्यावेदयच्छिवाम् ॥ १२
सा तु गौरी समुत्थाय शिवभक्तः क्षितीश्वरः । समागत इतिज्ञात्वा निर्ययौ पुरतो गृहात् ॥ १३
दृष्ट्वैनं ब्राह्मणश्रेष्ठं दक्षकन्या महादरात् । प्रणम्य प्रापयित्वान्तर्गृहमस्य महात्मनः ॥ १४
आसनं सुमहद्दत्वा कृत्वार्घ्यादीनुपचारकान् । सपर्ययातं संपूज्य महत्या भक्तिपूर्वकम् ॥ १५
अपेक्षितं किंभगवन् पप्रच्छैवं शुचिस्मिता । इतिब्रुवाणां तां गौरीमाहचैव द्विजोत्तमाः ॥ १६
गृहीतुं ते करं मेऽद्य काङ्क्षा कल्याणि वर्तते । तत्पूरय कृतार्थोऽस्मि प्रसन्नायां त्वयि द्रुतम् ॥ १७
इति तस्य वचश्श्रुत्वा गौरी खिन्नमनास्तदा । हस्तौ श्रवणयोः कृत्वा प्राह चैनं रुषान्विता ॥ १८
शिवस्य धर्मपत्नीत्वमिच्छन्तीं मां परात्मनः । कथं शुक्त्वा भयं मूर्ख त्वमित्थमिह चोक्तवान् ॥ १९
नाहं परात्परादेवमन्यं कमपि कांक्षये । इति तस्या वचश्श्रुत्वा कोपयुक्तो द्विजोत्तमः ॥ २०
सुखेन लभ्यो देवोऽयं नभवत्येवमुक्तवान् । कृतेऽपि तीव्रे तपसि प्रसन्नो न भवेद्यदि ॥ २१
प्राणानपि परित्यक्ष्ये त्वं गच्छाशु यथागतम् । इत्युक्त्वा सहसा देवी निवृत्ता स्वयमेवसा ॥ २२
तदाशु भगवानीशस्स्वरूपं परिगृह्य सः । दर्शयामास तत्तस्यास्सुमनोहरमद्भुतम् ॥ २३
दृष्ट्वैनं परमेशानं भक्त्या परमया शिवा । प्रणम्य सहसा तुष्टा भयाविष्टा कृताञ्जलिः ॥ २४
क्षन्तव्योऽयं महादेव देवदेव कृपानिधे । अपराधो मदीयोऽत्र रक्षरक्ष महाप्रभो ॥ २५
मास्तुभीतिर्वरारोहे तपसा महताऽमुना । तवसुन्दरि सन्तुष्टो नितरां दक्षकन्यके ॥ २६
इत्युक्तवन्तमीशानं नमस्कृत्य पुनश्च सा । आनन्दबाष्पनयना तस्थे तस्य पुरोऽम्बिका ॥ २७
ततस्तु दक्षमंघायाः परिवारजनो द्रुतम् । गत्वा निवेदयामास ब्राह्मणागमनं तदा । २८
दक्षोऽपि तं द्विजन्मानं जज्ञे शंभुरिति द्विजाः । निश्चित्य मनसा पश्चात्कल्याणाय महेशितुः ॥ २९
संभारानानयामास पदार्थादीननेकशः । देवर्षिसिद्धसाध्यादिगणानपि समानयत् ॥ ३०
कल्याणाय गृहाग्रस्थानकारयदसौ बहून् । संस्थाप्य रंभास्तंभांश्च तत्रतत्र सुपेशलान् ॥ ३१
चूतपत्राणि भूरीणि बबन्ध किल रज्जुभिः । विनिर्गत्य ततो देव्या गृहं प्राप्य प्रजापतिः ॥ ३२
प्रणम्य ब्राह्मणाकारं शिवं दृष्ट्वा प्रसन्नधीः । दुहित्रासहितं विप्रं कल्याणायानयद्गृहे ॥ ३३
नानापुष्पावकीर्णेऽस्मिन्नानाध्वजविचित्रिते । नानामण्डपसंयुक्ते नानावेदिसमन्विते ॥ ३४
तत्र सिंहासने रम्ये सर्वरत्नविचित्रिते । शिवं निवेशयित्वान्तःपुरे दुहितरं चताम् ॥
प्रेरयामास मतिमानलङ्काराय भूसुरः ॥ ३५

दक्षस्य कन्या जगतां जनित्री ज्ञात्वा तदाभ्यज्य जटां व्यपोह्य ।
धृताच्छवस्त्राभरणानि धृत्वा समाससादाशु शिवान्तिकं सा ॥ ३६

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे षष्ठोऽध्यायः ॥

---

## ॥ अथ सप्तमोऽध्यायः ॥

### दाक्षायणी विवाहः ॥

ततो विष्णुमुखा देवाः प्रणम्य परमेश्वरम् । ववर्षुस्सुमनो वृष्टीस्स्तुवन्तो बद्धपाणयः ॥ १
लक्ष्मीसरस्वतीमुख्या देवीं दाक्षायणीं शुभाम् । प्रणम्य परया प्रीत्या विकीर्य सुमनोहरान् ॥ २
कृतस्तोत्रवरा स्तस्थुः परितो ब्राह्मणोत्तमाः । वाद्यानामारवोऽप्यासीत्प्रळयांबुदनिस्स्वनः ॥ ३
जगुः किन्नरवर्याश्च रक्तकण्ठा स्तदाभृशम् । ब्रह्मादयस्सुरास्सर्वे परमेशं तदाऽस्तुवन् ॥ ४
रम्भातिलोत्तमाद्याश्च ननृतुर्नृत्तकोविदाः । पुण्ये मुहूर्ते दक्षोऽपि देवदेवस्य शूलिनः ॥ ५
पादाब्जे क्षाळयामास भार्यादत्तै र्जलै र्विभोः । अर्चयित्वाशु विधिना नानापुष्पैर्महेश्वरम् ॥ ६
पाणिं संग्राहयामास धारां कृत्वा सुपावनीम् । दुहितुः पाणिकमलं परमेशेन भूसुराः ॥ ७
समस्तजगतां कर्ता विधाता हव्यवाहनम् । हविर्भिश्छन्दयामास महता विभवेन सः ॥ ८
नारायणमुखादेवाः पेतु र्वेदान्सुमङ्गळान् । तदैव परमेशोऽयं क्षणादन्तर्धिमापहि ॥ ९
ततस्तु गौरी दुःखार्ता स्वात्मानं हृदयेन सा । विनिन्द्य पद्मामुख्यासिर्देवपत्नीभिरावृता ॥ १०
सबाष्पनयना मातुः प्रविश्य गृहमान्तरम् । रुरोद बहुवारं सा दुःखेन महतान्विता ॥ ११
वेदवल्लीमावाण्यो गौरीमभ्येत्य दुःखिताम् । अस्मत्कृतापचारेण देवोन्तर्धिमगात् सुते ॥ १२
तदद्य तपसा भूयः प्रसाद्य परमेश्वरम् । भज दुःखं त्यजाशुत्वमितिदुःखाद्विमोच्यताम् ॥ १३
इति तासां वचश्श्रुत्वा कथञ्चित् परमेश्वरी । निगृह्य दुःखं मनसा विवेश तपसो गृहम् ॥ १४
तत्र गत्वा यथापूर्वं चचार सुमहत्तपः । ब्रह्मविष्णुमुखा देवा गतेऽन्तर्धिं महेश्वरे ॥ १५
दुःखमापुस्तरां सर्वे मुनयश्च तपोधनाः । पापात्मा ननु दक्षोऽयं यतोऽस्माकं महेश्वरः ॥ १६
अनुग्रहमकृत्यैव प्रसन्नोऽपि द्रुतं ययौ । अथवाऽस्मासु दोषोऽस्ति यःकश्चित्त पवघा ॥ १७
इति नानाप्रकारेण स्वमनस्सु विचिन्त्य ते । तस्थुर्मौनतया सर्वे नतवक्त्रास्सुदुःखिताः ॥ १८
सुराणां सुमहद्दुःखं दुःखितां स्वात्मजामपि । व्यसनञ्च सुरस्त्रीणां वीक्ष्य दक्षोऽपि दुःखितः ॥ १९
कल्याणमण्टपे देवान्वीक्ष्य सर्वानुवाच तान् । दृष्टः कोवा मयि सुरा दोषो वदत शंकरः ॥ २०
कल्याणमध्ये कल्याण मुक्त्वैवं गतो ननु । कोवैनं प्रार्थयामास स्वयमेव पिनाकधृत् ॥ २१
अज्ञातपितृको नित्यं श्मशाननिलयोऽशुचिः । ब्राह्मणाकार मासाद्य मत्पुत्रीं कांक्षितस्स्वयम् ॥ २२
प्राप्य तन्निकटं तान्तु प्रार्थयामास वञ्चकः । तच्छ्रुत्वा तमिमं क्रूरं समानीयाहमेवहि ॥ २३
देवतानाञ्च युष्माकं सन्निधौ दुहितुर्मम । विधिना पाणिसंग्राहमकारयमहं सुराः ॥ २४
तथापि मध्ये कल्याण मपकीर्तिं विगर्हिताम् । संपाद्यायं सभामध्ये नर्तको धूर्तशेखरः ॥ २५
नहि मुञ्चति लोकेऽस्मिन गुण स्सांसिद्धिको जनम् । यतो ब्राह्मणवेषोऽयमेवं चेष्टां चकारह ॥ २६
इत्यादि वचनं दक्ष स्सर्वेषां संनिधौ तदा । उक्त्वा सुरा निमान् सर्वान् प्रेरयित्वा पदं प्रति ॥ २७
तदाप्रभृति देवेऽस्मिञ्छङ्करे लोकशंकरे । कोपोऽस्य दोषमाहात्म्यात्सञ्जातोननु भूसुराः ॥ २८

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखंडे
दक्षकाण्डे सप्तमोऽध्यायः ।

---

॥ अथ अष्टमोऽध्यायः ॥

तपस्यन्तीं देवीं परिगृह्य ईश्वरेण कैलासगमनम् ॥

एवं बहुतिथे काले गते दाक्षायणीं शिवाम् । तपश्चरन्तीं सुमहत्कृशाङ्गीं नियमेन ताम् ॥ १
अनुग्रहं तदा कर्तुमात्मारामः कुतूहलात् । जटी तापसरूपेण भूतिरुद्राक्षभूषणः ॥ २
कपालमालासच्चूडो धृतशूलकपालवान् । शिञ्जन्नूपुरमञ्जीरनादनादितदिङ्मुखः ॥ ३
धृतकाषायवसनश्शंभुस्तत्र समाययौ । तं दृष्ट्वा तापसश्रेष्ठं समुत्थाय कृताञ्जलिः ॥ ४
अर्घ्यपाद्योपचारांश्च कृत्वा दाक्षायणी शिवा । विष्टरं परिकल्प्यास्य विनयेन स्थिता पुरः ॥ ५
तदैव स महादेवः प्रसन्नहृदयो द्विजाः । आरुह्य वृषभं दिव्यं कैलासशिखरोपमम् ॥ ६
क्वणत्किङ्किणिकादामविराजितवृषध्वजम् । आविरासीत्कृपासिन्धुराश्रितानां सुरद्रुमः ॥ ७
देवदुन्दुभयो नेदुर्जितमेघस्वना भृशम् । पुष्पवृष्टिं रसृजंस्तत्र दिव्यगन्धैर्मनोहराम् ॥ ८
सिद्धसाध्यमुखैर्देवैर्ब्रह्मविष्णुपुरस्सरैः । परीवृतः परात्मायं परितो ब्राह्मणोत्तमाः ॥ ९
तं दृष्ट्वा सा महादेवं प्रणम्य परया मुदा । कृतप्रदक्षिणस्तोत्रा भक्तियुक्तान्तरेणाच ॥ १०
क्षमस्व देवदेवेश मन्तुं त्वं करुणाकर । पुनः पुनरियं गौरी प्रणनाम शुचिस्मिता ॥ ११
गृहीत्वा तामिमां देवीं पाणिभ्यां परमेश्वरः । वृषोपरि व्यवस्थाप्य वामपार्श्वे मनोहरे ॥ १२
ययौ कैलासमतुलं सर्वैर्देवगणैः स्तुतः । तत्र गत्वाऽऽसनं सैक्षमधिश्रयदयं द्विजाः ॥ १३
ततः परिजना देव्या दक्षस्य निकटं गताः । वृत्तान्तमानुपूर्व्याच्चमूचुः प्राप्तभया द्विजाः ॥ १४
श्रुत्वा प्रजापतिर्देवान् समीक्ष्य निकटे स्थितान् । मध्ये कल्याणममराश्चश्चैव पुरा गतः ॥ १५
इदानीमयमागत्य तस्कराणां पुरस्सरः । मत्सद्दुहितरं चौर्यात् गृहीत्वा गतवान् खलु ॥ १६
उल्लंघ्यार्यं ममाज्ञां च कृतवानयशोऽपि मे । विना पित्रोर्मतिं लोके कः कुर्यादीदृशीं क्रियाम् ॥ १७
अमुना यत्र कुत्रापि कल्याणं न कृतं श्रुतम् । न दृष्टं भिक्षुको यस्मादितः पूर्वं पुरा ननु ॥ १८
यदि दृष्टं कृतं वा स्यात्स इत्थं कुरुते सुधीः । इत्यादि वचनं दक्षस्तेषामग्रे तदा ब्रुवन् ॥ १९
प्रेरयित्वा सुरानेतान् स्वपदं प्रति भूसुराः । शिवे परात्मनि भृशं कोपी तस्थे दुरात्मवान् ॥ २०
शिवनिन्दां चकारैवं प्रतिक्षणमयं खल । तमेवं दक्षममरा ब्रह्मविष्णुमुखा स्तदा ॥ २१
निन्दया देवदेवस्य महादेवस्य शूलिनः । दक्षोऽयममरैः स्वार्थमस्माभिर्नाशमेष्यति ॥ २२
त्यक्त्वैनं यत्र कुत्रापि गम्यते नहि पापिनम् । तस्मात्सर्वे वयमिह बुद्धिमुक्त्वास्य पापिनः ॥ २३
निन्दामपि निवार्यास्य करिष्यामो हितं ध्रुवम् । इति निश्चित्य ते सर्वे प्रोचुर्वाचं द्विजेश्वराः ॥ २४
दक्षसमर्थोऽसि विधात्रा दक्षत्वं जगतां प्रभुः । दत्ता शिवस्य देवस्य भवता दुहिता ननु ॥ २५
जामाता तव देवोऽयं सर्वलोकेषु विश्रुतः । तदस्य दूषणं मास्तु योवा कोवा भयावहम् ॥ २६
संबन्धेतु कृते पश्चात्कुलादेः परीक्षणम् । तदयत्वं कृती शीघ्रं पुत्रीं जामातरं तव ॥ २७
कैलासपर्वतं गत्वा वीक्ष्यागच्छ यथापुरा । सन्धिं कृत्वाऽमुना भूयश्शंभुना जगतां प्रभो ॥ २८
इत्यादि वचनं तेषां श्रुत्वा शान्तात्ममन्युमान् । तथेति निरगाच्छीघ्रं कैलासं प्रति भूसुराः ॥ २९
तत्र गत्वाशु देवस्य शंकरस्य परात्मनः । भवनद्वारमासाद्य द्वारपालैर्निरोधितः ॥ ३०
आज्ञया दक्ष देवस्य गन्तुमर्हसि चान्तरम् । तत्तिष्ठ त्वमिहान्यत्र गच्छ वा यत्र कुत्र वा ॥ ३१
इति तेषां वचः श्रुत्वा द्वारेशानां प्रजापतिः । कन्यां ममेक्षितुं शंभुं जामातरमिहागतम् ॥ ३२

मया किमर्थं युष्माभिः क्रियते मेऽवरोधनम् । इत्युक्तिमस्य संश्रुत्य प्रत्यूचुस्ते गणेश्वराः ॥ ३३
शृणु दक्ष वचोऽस्माकं मूढबुद्धे दुराशय । ऐश्वर्यं भवता प्राप्तमीश्वराच्छंकरान्ननु ॥ ३४
निष्कण्टकमिदं विश्वं भुज्यते सचराचरम् । तेन दत्तस्त्वां पापिन् कृतवान् दूषणं विभोः ॥ ३५
नास्ति ते बुद्धिरल्पापि दैत्यानामपि साऽस्तिहि । तदद्य वीक्षितुं युष्मन्मुख मेषामसांप्रतम् ॥ ३६
संभाषणे कथा कैव भवेद्दोषो महानिह । यद्यस्ति तव सेवायां शङ्करस्य परात्मनः ॥ ३७
मतिस्तुनिश्चिता तत्त्वं भक्त्या समयमीशितुः । ज्ञात्वाऽऽज्ञया ततो गन्तु मर्हस्यन्तःपुरं प्रति ॥ ३८
न चेद्गच्छ यथामार्गं तिष्ठ वात्र वृथामते । इतितेषां वचः श्रुत्वा दक्षः खिन्नमनास्तदा ॥ ३९
निवृत्तः प्राह कोपेन गणेशानां पुरो वचः । न वन्दे शंकरं युष्मत्स्वामिनं द्वारपालकाः । ४०
ब्रह्मविष्णुमुखा देवा श्रुत्वोक्तिं मम सर्वदा । कार्यं कुर्वन्ति भीतास्ते मदाज्ञावर्तिनो ध्रुवम् ॥ ४१
सर्वेषामपि देवानामहमेवप्रवर्तकः । निवर्तकोऽपि संहर्ता धारकोऽपि जगत्प्रभुः ॥ ४२
तयोर्वचनमाकर्ण्य युष्माभिरवरोधनम् । कृतं दुहितृजामात्रोः कार्याकार्यमजानतोः ॥ ४३
तदिदानीं सुरान् सर्वान् रुद्रस्यास्य नमस्क्रियाम् । स्तुतिं ध्यानञ्च यत्किञ्चिदस्ति तद्विषयञ्च तत् ॥ ४४
इत ऊर्ध्वमकर्तव्यमिति चाज्ञापयामि तान् । इत्यादिवचनं दक्षस्तेषामुक्त्वाशु सन्निधौ ॥
निवृत्य स्वपुरं प्राप नानालङ्कारमण्डितम् ॥ ४५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे अष्टमोऽध्यायः ॥

---

॥ अथ नवमोऽध्यायः ॥

ब्रह्मणो यज्ञे दक्षेण शिवनिन्दा ॥

तत्र ब्रह्ममुखैर्देवैः पूजितोऽग्रे समागतैः । स्थित्वा निवेदयामास वृत्तान्तममरेश्वरान् ॥ १
युष्मद्वाक्यं निशम्याहं ब्रह्मविष्णुमुखास्सुराः । गतोऽस्मि वीक्षितुं रुद्रं कैलासगिरिमात्मजाम् ॥ २
द्वारस्थैस्तत्र रुद्रस्य क्रूरैः किञ्चिद्विचेष्टितम् । न गन्तव्यं न द्रष्टव्यं त्वन्मुखं शंकराज्ञया ॥ ३
पिताञ्च गच्छ वा तिष्ठ इति निष्ठुरभाषिभिः । दूषणानि च भूरीणि कृतानि मम तैरहो ॥ ४
वाक्यं दुहितृ जामात्रोस्समाकर्ण्य सुरेश्वराः । न तेषामपराधोऽत्र मयि दोषो न संशयः ॥ ५
मुक्त्वाऽभिमानं गतवान् तावहं वीक्षितुं यतः । बहुना किं सुरास्सर्वे शृणुध्वमवधानतः ॥ ६
इतः प्रभृति युष्माभिर्न कर्तव्या नमस्क्रिया । न स्तुतिर्न स्मृतिर्वापि रुद्रस्य क्रूरचेतसः ७
कृता चेदपराधोऽपि युष्माकं सुमहान् भवेत् । प्रयच्छेयं परेभ्योऽहं तावकानि पदान्यपि ॥ ८
उक्त्वा वृत्तान्तमेवं तान् प्रेरयित्वा स्वयं द्विजाः । न्यवसद् बहुकालं स स्वयं सन्तुष्टपङ्क्तिकम् ॥ ९
अथ कालेन महता विधाता विश्वसृड्विधिः । मखं कर्तुमनास्तस्य यानि द्रव्याणि भूसुराः ॥ १०
अपेक्षितानि संपाद्य तानि सर्वाणि शीघ्रतः । राजाऽमरध्वरस्याहं महादेवं त्र्यंबकम् ॥ ११
विश्वाधिकं पराञ्ज्योतिस्स्वरूपं ब्रह्म केवलम् । आनयित्वा हविर्भिस्तं पूजयिष्यामि भक्तितः ॥ १२
दक्षोऽयं विमुक्तो मोहादभिवीक्ष्य यदीश्वरम् । तथापि तं महादेवं पूजयिष्याम्यसंशयम् ॥ १३
यत्किञ्चिदपि वा दक्षः करोतु मम दुर्मनाः । परित्यजेहं प्राणांश्च तदर्थं नात्रसंशयः १४
यस्य प्राणाभिमानोऽस्ति तस्य भीतिः कथञ्चिद्भवेत् । प्राणेश्वरो महादेवः कृत्तिवासाः पिनाकधृक् ॥ १५

रक्षेदित्थं मतिं कृत्वा ब्रह्मा लोकपितामहः । कैलासं पर्वतश्रेष्ठं गत्वा परमया मुदा ॥ १६
तत्र दृष्ट्वा महाकायं नन्दिनं द्वारपेश्वरम् । प्रणम्य तन्मुखाद्देवं बोधयित्वा तदाज्ञया ॥ १७
प्रविश्य भवनं रम्यं महादेवस्य भूसुराः । विनयेन महादेवं दृष्ट्वा हृष्टमना विधिः ॥ १८
पुनः पुनः प्रणम्याथं प्रार्थयामास भूरिशः । देवदेव महादेव शरणागतवत्सल ॥ १९
रक्ष मां करुणामूर्ते यज्ञेश्वर महेश्वर । मया करिष्यमाणे त्वं प्रसन्नो भव चाध्वरे ॥ २०
अनुमन्यस्व देवेश प्रथमं हविरीश्वर । भविष्यामि कृतार्थोऽहं तेन सत्यञ्जगद्गुरो ॥ २१
इति ब्रह्मवचश्श्रुत्वा देवदेवोऽब्रवीद्वचः । प्रेरयामि विधे यज्ञे नन्दिनं तव मामकम् ॥ २२
इति शम्भुर्विधातारं मन्दस्मितमुखांबुजः । प्रेरयामास विश्वात्मा ब्रह्माणं परया मुदा ॥ २३
तथेति स विधाताशु प्रणम्य परमेश्वरम् । विनिर्गत्य पुनर्गत्वा दक्षस्यान्तिकमात्मवान् ॥ २४
विज्ञाप्य तञ्च लब्धाज्ञो गत्वा मेरुं महीभृतम् । समागत्यात्र शिखरे मनोवत्याह्वये शुभे ॥ २५
तत्र स्थित्वा शुचिर्भूत्वा यागारंभञ्चकार सः । विष्ण्वादि देवतास्सर्वा ब्रह्मपुत्रा महौजसः ॥ २६
समानीयागतास्शीघ्रं कैलासमचलं परम् । निर्गत्य तासां पुरतो ब्रह्मापि जगतां प्रभुः ॥ २७
उक्त्वोपचारानेतासां परिकल्प्यासनानि च । दक्षप्रजापतिं तद्वदागतं पुरतो विधिः ॥ २८
विनिर्गत्योपचारेण प्रेरयित्वा तरांतदा । विधायास्यासनं रम्यं स्वयं तस्थे तदाज्ञया ॥ २९
नन्दी समागतश्शीघ्रं भवानीं शङ्कराज्ञया । उत्थाय तं विनिर्गत्य पुरतोऽस्य महात्मनः ॥ ३०
नानोपचारैस्संपूज्य प्रणम्य परया मुदा । मध्ये महार्हे संस्थाप्य वरे सैंहे महासने ॥ ३१
समागतास्तमानीय शतकोटिमिता गणाः । आसनानि वराण्येषां परिकल्प्य स्वयंविधिः ॥ ३२
विधेश स महारम्भो यागंकर्तुं द्विजोत्तमाः । तदा दक्षस्तु तं दृष्ट्वा शैलादिं गणनायकैः ॥ ३३
विष्ण्वादि देवास्सर्वेऽपि तिष्ठन्ति परितोऽस्यहि । पद्मा सरस्वतीमुख्या देवानां पत्नयस्तथा ॥ ३४
विलक्षणोऽयं सर्वेषां वरासनगतो बत । द्वाःस्थोऽयं कस्यचित् क्रूरो गर्वाविष्टो महाखलः ॥ ३५
कैलासे वर्तते नित्यं रुद्रस्य क्रूरचेतसः । कोपैत्तमलयामास इति कोपाकुलान्तरः ॥ ३६
ब्रह्माणं वीक्ष्य चाहायं ज्ञात्वा सर्वं दुरात्मवान् । आनीतो भवता नूनं रुद्रस्य द्वारपालकः ॥ ३७
आसनञ्चास्य सुमहद्दत्तवानसि विश्वसृट् । पितेति त्वामहं ब्रह्मन् मुक्तवानस्मि सत्यतः ॥ ३८
अन्यथेत्तस्य शीघ्रेण शिरश्छेदं करोम्यहम् । तस्माद्रुद्रस्य यज्ञेऽस्मिन्नदातव्यं हविर्वरम् ॥ ३९
प्रीणनीयास्सुरास्सर्वे विष्णुपूर्वा त्वया मखे । यत्र कुत्रापि महिमा रुद्रस्य श्रूयते श्रुतौ ॥ ४०
अप्रमाणं हि सा सर्वा त्यक्ता त्यज मदाज्ञया । रुद्रस्स्वभावात्क्रूरात्मा तामसोऽस्थिधरोऽनिशम् ॥ ४१
तस्यास्य द्वारदेशस्य स्तादृशः क्रूरचेतनः । इत्यादि वचनं दक्षे जल्पति ब्राह्मणोत्तमाः ॥ ४२
श्रुत्वैतदखिलं नन्दी श्रवसोः करयो र्युगम् । कृत्वा शिवशिवेत्युक्त्वा कोपाकुलितचेतनः ॥ ४३
ध्यात्वा शिवं महादेवं दक्षमेनं समीक्ष्य च । रे रे दक्ष महापापिन् शिवस्य परमात्मनः ॥ ४४
दूषणं क्रियते हन्त त्वयाद्यासन्नमृत्युना । जिह्वाप्रखण्डनं तद्वत्तिर्यगास्यस्य भेदनम् ॥ ४५
शंभो र्दूषणकर्तॄणां सकृदेव वदन्ति हि । मुक्तवानस्मि पापिष्ठ शिवेच्छा कीदृशीत्यहम् ॥ ४६
त्वां विनिन्दकमीशस्य महादेवस्य शूलिनः । अत एव महापापिन् जीवसित्व मनुं क्षणम् ॥ ४७
इतऊर्ध्वं त्वया मुखं यत्किञ्चिज्जल्पयते यदि । छिन्नं विद्धि शिरश्शीघ्रमिदैवासिमखायुधैः ॥ ४८
हविर्नास्तीति देवस्य यज्ञेऽचैवत्वमुक्तवान् । शंभो र्यज्ञेश्वरस्यात्र वारयित्वा प्रजापतिम् ॥ ४९

अदत्वा ये महामोहाद्धविः प्रथममध्वरे । तेषां शिरांसि शीघ्रेण छिन्नानि स्युर्मदाज्ञया ॥ ५०
गच्छन्तु संपदो भ्रान्त तव सर्वाशिशवेच्छया । शिवनिन्दाकरं दक्ष शिरस्ते पततु क्षितौ ॥ ५१
समुच्छिन्नमिदं भूयो भवत्वाजं विगर्हितम् । तिष्ठन्ति ये दुरात्मानो निकटे ते दुरात्मनः ॥ ५२
तदीयशिरसांछेदो भवत्वाशु तवाध्वरे (पराकरे) । पीड्यन्त्वेते खलास्सर्वे शूरपद्मेन सन्ततम् ॥ ५३
शपित्वैवं क्षणादेव नन्दी शंकरवल्लभः । उत्थाय सकलैः भूतगणैः कैलासमुत्तमम् ॥ ५४
आगत्य दृष्ट्वा देवेशं सोमं सोमार्धशेखरम् । प्रणिपत्यानुपूर्व्येण वृत्तान्तं देवसन्निधौ ॥ ५५
वर्णयित्वा प्रणम्य भूयोऽपि महादेवं महाचलम् । आज्ञया शंकरस्यायं स्वद्वारं प्राप भूसुराः ॥ ५६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे नवमोऽध्यायः

---

॥ अथ दशमोऽध्यायः ॥

दक्षयागारम्भे दधीच्यागमनम् ॥

ततो विष्णुमुखा देवाः शैलादौ निर्गते क्रुधा । भीता भृशं तयो नन्दि दक्षयोर्ब्राह्मणोत्तमाः ॥ १
तस्थु दुःखपरा नम्रवक्त्राः स्वर्थे गतप्रभाः । यज्ञमध्ये विधातापि यागं दक्षाद्भयं गतः ॥ २
यागादपि वरं तूर्ष्णीं भावः कलहवर्जनात् । इति निश्चित्य मनसा तस्थे कैवलमेव सः ॥ ३
ततो दक्षस्समुत्थाय कोपात् स्वपुरमाप्तवान् । यथायथं देवताश्च स्वपदानि गतास्तदा ॥ ४
नन्दिशापमनुस्मृत्य भीत्या मनसि भूसुराः । तदाप्रभृति कुत्रापि यागो नास्ति जगत्सहो ॥ ५
अनेककालपर्यन्त भीत्याऽत्यन्तं तयोर्द्विजाः । स्वयमेव तदा दक्षो यागं कर्तुमनाः पुनः ॥ ६
सर्वान् देवान् समुद्दीक्ष्य प्रोवाच वचनंचतान् । नन्दिशापवशात्सर्वे देवा यूयं भयं गताः ॥ ७
विमुखाः स्थ मखे तस्मादहं याग महाधनम् । करिष्यामि ततः पश्चात्परित्यक्तभयास्सुराः ॥ ८
कुरुतास्मबलं ज्ञात्वा मुक्त्वा रुद्र महाक्रतुम् । इत्युक्त्वा विश्वकर्माणं वीक्ष्य प्राह वचस्तदा ॥ ९
विशाला यागशाला मे कर्तव्येति द्रुत त्वया । तस्य तद्वचनं श्रुत्वा वर्धकिर्नाकिनां क्षणात् ॥ १०
गङ्गातीरे कनखलस्थाने रम्ये सुपावने । सहस्रयोजनायामप्राकारसुमनोहराम् ॥ ११
गोपुराट्टालवळभीहर्म्यादिभिरलङ्कृताम् । वापीकूपतटाकाद्यैः वृक्षारामैश्च पेशलाम् ॥ १२
भक्ष्यव्यञ्जनशालाभि विशालाभिरितस्ततः । दधिक्षीरघृतानांच शालाभिः परितो वृताम् ॥ १३
कस्तूरी चन्दनानाञ्च मालानामपि मण्डिताम् । सुवर्णरजतरूप्याणां वस्त्राणामपि भूरिशः ॥ १४
यागोपकरणानाञ्च शालाभिः परितो वृताम् । शतयोजनविस्तीर्णकुण्डमण्डलवेदिकाम् ॥ १५
यज्ञीभिश्चित्रशालाभिरमितैः परिवेष्टिताम् । आसनानि च भूरीणि देवतानामितस्ततः ॥ १६
व्यजनादिभि रत्नैश्च मण्डितामतिसुन्दराम् । निर्माय यागशालां तां दक्षायास्मै न्यवेदयत् ॥ १७
विलोक्य तामिमां शालां दक्षो लोकेषु विश्रुतः । सन्तोषेणच संयुक्तो महता ब्राह्मणोत्तमाः ॥ १८
स्रुक्स्रुवादीनि सर्वाणि यागोपकरणानिच । कल्पवृक्षं कामधेनुं निधिश्चिन्तामणिं तथा ॥ १९
आगतानां दापयितुं वस्त्राण्याभरणान्यथम् । मण्टपे मण्टपे सर्वान् स्थापयामास भूसुराः ॥ २०
त्रिंशत्सहस्रमन्नस्य दातारो ब्राह्मणाः परे । व्यञ्जनप्रमुखानाञ्च षष्टिसाहस्रसंख्यया ॥ २१
कल्पितास्तेन दक्षेण ब्राह्मणानामधीश्वराः । ततस्सुचोदिता दूता ब्रह्मविष्णुमुखान् सुरान् ॥ २२

बोधयित्वाऽऽगताश्शीघ्रं दक्षस्य निकटं द्विजाः । अथ विष्णुविधीन्द्राद्या देवाश्च मुनिसत्तमाः ॥ २३
सूर्याचन्द्रमसौ दैत्या स्सर्वेऽपि स्वबलैस्सह । सपत्नीभिश्च सन्तुष्टा वीक्षितुं सहसागताः ॥ २४
तेषांतु पुरतो गत्वा ब्रह्मविष्णू उभावपि । तोषयित्वा यथान्यायं स्थापयित्वा वरासने ॥ २५
नानोपचारैरमरानृषीनपि वरानथम् । आसनेषु तदा तेषु व्यवस्थाप्य स्वयं पुनः ॥ २६
देवतानां च सर्वेषां मध्ये तस्थे तदा द्विजाः । प्रसिद्धा बहवो विप्रास्तदानीं तेऽपि चाययुः ॥ २७
लक्ष्मी सरस्वतीन्द्राण्यो याश्चान्या देवपत्नयः । ऋषीणां पत्नयश्चापि सर्वास्तास्सुमनोहराः ॥ २८
प्रविश्य वेदवल्यास्तु गृहं परमशोभनम् । कृतनानोपचारास्ता स्तस्थुस्तां परितो मुदा ॥ २९
दक्षस्तु प्रेषितान् दूतानागतान्वीक्ष्य संमुखः । कोवाऽत्र नागतो दूता देवद्विजऋषिष्वपि ॥ ३०
वदन्तु निकटेऽस्माकं भवन्तो निर्भया इह । इति तस्य वचश्श्रुत्वा तदा दूता वचोऽभयम् ॥ ३१
ऊचुस्सर्वेऽपि तं वीक्ष्य ब्राह्मणानामधीश्वराः । अगस्त्यस्तपतां श्रेष्ठो नारदोऽत्र प्रभो महान् ॥ ३२
सनकाद्याश्च मुनयो वेदवेदांगपारगाः । दधीच्यत्रिवसिष्ठाश्च पराशरभृगूनपि ॥ ३३
दूर्वासास्तपतां वर्यो दूषयित्वा जगत्प्रभुम् । भवत्कृतं भवन्तश्च नाययुस्ते तपोधनाः ॥ ३४
इति तेषां वचः श्रुत्वा दक्षः पापी तदा हसन् । रुद्रभक्ता इमे सर्वे नागतास्तत्र पर्वते ॥ ३५
मागच्छन्निवति तान् सर्वान् धिक्कृत्य च वचोऽब्रवीत् । तदा दधीचिरशिष्यैश्च प्रशिष्यैश्च तपोधनाः ॥ ३६
समागतो महात्माऽयं सर्वेश्वरपरो द्विजाः । तं दृष्ट्वा रुद्रभक्तोऽयं न भवस्यत्र यद्दि ॥ ३७
मद्भीत्या चागतोनूनमिति निश्चितमानसः । नासनं कल्पयामास शिष्याणामपि मूढधीः ॥ ३८
तदा दधीचिस्तं वीक्ष्य चाह्वाने भवता कृतम् । किमर्थमिति पप्रच्छ स्फुरद्गम्भीरवाग्यम् ॥ ३९

इति श्रीस्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे दशमोऽध्यायः ॥

---

॥ अथ एकादशोऽध्यायः ॥

दक्षेण शिवनिन्दनम् ॥

प्रत्युवाच ऋषिं दक्षो वीक्ष्य तं तपतां वरम् । मत्कन्यापाणिसंग्राहं कृत्वा पूर्वं त्रिलोचनः ॥ १
मध्ये कल्याणमुच्छिद्य गत्वातु कुटिलक्रियः । पुनरागत्य चौर्येण गृहीत्वा तामिमामयम् ॥ २
गतवान् क्रूरकर्मात्मा क्रूरहृत्वञ्चनोद्यमः । तथापि वीक्षितुं तस्य कैलासे तामुपायहम् ॥ ३
गतवानस्मि सहसा तत्प्रतीहारवर्तिभिः । अनुरोधः कृतोऽस्माकं श्रुतताद्वचनैरहो ॥ ४
मायया मोहयित्वाऽयं मत्पुत्रीं मत्समीपगाम् । कृत्वातु विमुखीमत्र वर्तते परवञ्चकः ॥ ५
तत्कृते ब्रह्मयागेऽस्य निर्दिष्टं च हविर्मया । ब्राह्मस्यस्तस्य तदा नन्दी समुत्थाय शिवाय वै ॥ ६
मदत्वा प्रथमं यज्ञे हविर्येऽपि यजन्ति च । तेषां शिरांसि छिन्नानि विशीर्णानि भवन्त्विति ॥ ७
उक्त्वा कोपाकुलश्शीघ्रं ययौ मद्भीतिसंयुतः । मद्‌ळाघातकवच्च दृष्ट्वा सर्वे इमे सुराः ॥ ८
न कुर्वन्ति तदारभ्य यागं भीता विना हरम् । अहमेव पुनस्तेषा मगणय्य वचोऽस्य च ॥ ९
करोमि रुद्रं मुक्त्वा तं यागं परमपावनम् । तदर्थममरास्सर्वे मयाऽऽहूता स्तपोधन ॥ १०
आगतं भवताप्यत्र द्रष्टुं यागं महात्मना । तत्समागतमिमं मन्ये नात्र कार्या विचारणा ॥ ११

तदेतस्य वचश्श्रुत्वा दधीचिस्तपतां वरः । हासं कृत्वा तदा प्राह करावास्फाल्य कोपतः ॥ १२
त्वत्पुण्यमखिलं दक्ष पापायैवाभवत्किल । इत्युक्त्वा मौनमास्थाय तूष्णीं तस्थे तदा द्विजाः ॥ १३
ततः प्राह वचो दक्षः कोपाकुलितलोचनः । रुद्रस्य भक्तिमत्त्वात्त्वं विहस्यात्र विनिंद्य माम् ॥ १४
इत्युक्त्वा कोपकुटिलवक्त्रस्तस्थे तदा द्विजाः । उक्तवानसि यत्किञ्चिद्दधीचे पुरतो मम ॥ १५

दधीचिः —

अध्वरेशं महादेवं मुक्त्वा दक्ष कतुं भवान् । कर्तुमिच्छति मोहेन महता सर्वशास्त्रवित् ॥ १६
ब्रह्मविष्णुमुखान्देवान् पशून् त्वसृष्ट्वा महेश्वरः । कल्पयित्वा स्थितिं तेषां संहरिष्यति कालतः ॥ १७
सर्वेषामन्तकश्शम्भुः परमात्मेति विश्रुतः । हव्याशो हविराकारो जनको जातवेदसः ॥ १८
कर्ता यज्ञस्य देवोऽयं रक्षकोऽस्य जगत्प्रभुः । शिव एवेति वेदान्ता नान्योऽस्तीति वदन्तिहि ॥ १९
अस्तिचेदत्र यज्ञेश समभुत्तिष्ठतु मत्पुरः । अनेन दत्तमैश्वर्यं विष्ण्वादीनां हि नाकिनाम् ॥ २०
सर्वकर्ता महादेवो नास्य कर्तास्ति कुत्रचित् । शिवोमहेश्वर श्शम्भु र्नीलग्रीवस्त्रिलोचनः ॥ २१
अन्तर्यामी परं ब्रह्म परात्परतरश्च सः । सर्वेष्वेतेषु देवेषु वरीयान् ब्राह्मणोह्यसौ ॥ २२
त्रिमूर्तिषु परा मूर्तिरस्यैव जगतां प्रभोः । ब्राह्मणोऽयं महादेवः क्षत्रियो विष्णुरित्यपि ॥ २३
आम्नाय एव भगवानभ्यासेन वदत्यमुम् । इममर्थं महामोहाद्दस्मृत्वाऽऽम्नायचोदितम् ॥ २४
अध्वरेशं महादेवं होतारं रुद्रमव्ययम् । मुक्त्वान्याञ्छल्मलीपुष्पतुल्यांस्तुच्छफलप्रदान् ॥ २५
मेळयित्वा वृथारंभो वर्तसेऽत्र क्रतून्मुखः । दासीपुत्रः स्वजनकमविज्ञाय यथापरम् ॥ २६
मन्यते पितरं तद्वत्सर्वज्ञमनिदैवत । पुण्यार्थंतु प्रवृत्तस्य पापमत्र फलंनतु ॥ २७
वेदमार्गं परित्यक्त्वा वर्तते कुपथे भवान् । अतोऽस्य तव यागस्य महान्विघ्नो भविष्यति ॥ २८
आसन्नस्तु विनाशोऽपि भवतस्सत्यमुच्यते । भीषास्मात्सर्वदा वायु र्वात्युदेति च भास्करः ॥ २९
ऊर्ध्वं ज्वलति वह्निश्च नाकं रक्षाति वृत्रहा । पञ्चमस्सोऽपि (स्थोपि) मृत्युस्तद्भक्तस्याशु विदूरतः ॥
भीषास्माद्याति देवेषु कोन बिभ्यति तं वद । कालकालस्य देवस्य सर्वदा चित्स्वरूपिणः ॥
तत्तस्मैभवता दक्ष दातव्यं प्रथमं हविः ॥ ३१

इति तस्य वचो निशम्य दक्षः कलुषाविष्टमना ऋषीश्वरस्य ।
निजगादश्च वीक्ष्य तं दुरात्मा पुनरुद्भ्रान्तविलोचनो द्विजेन्द्राः ॥ ३२

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकादशोऽध्यायः ॥

---

॥ अथ द्वादशोऽध्यायः ॥

दधीचिमहर्षिणा शिवस्य परं ब्रह्मेति निरूपणम् ॥

ऋषे नाहं प्रयच्छामि रुद्रस्यास्य हविर्वरम् । यज्ञेशे तद्धरये दत्वा विष्णवे प्रभविष्णवे ॥ १
पूज्यस्स एव यज्ञेऽस्मिन् मया सर्वजगन्मयः । इति तस्य वचः श्रुत्वा पुनः प्राह ऋषीश्वरः ॥ २
अपूज्यस्य त्वया पूजा क्रियते चेत्प्रजापते । सद्यो मृत्युर्भवेन्नूनमिति शास्त्रविदो विदुः ॥ ३
सर्वज्येष्ठो महादेव श्श्रिया चन्द्रार्धशेखरः । अध्वरेश इति ख्यातो महेशो लोकवेदयोः ॥ ४
प्रथमं तस्य पूजादि कर्तव्या क्रतुषु प्रभोः । इति तस्य वचश्श्रुत्वा दक्षः प्राह पुनर्वचः ॥ ५

ईशानमेव यागेऽस्मिन् दिगीशं प्रथितं भुवि । रुद्रानेकादश तथा पूजयिष्याम्यसंशयम् ॥ ६
तेषु रुद्रेषु सोऽप्येकस्त्वत्ते पूज्यो मया क्रतौ । दधीचिः — एते कथं महादेव तुल्या रुद्राः प्रजापते ॥ ७
ध्यायन्ति ये महात्मानश्शिवं परमकारणम् । सारूप्यभाजस्ते सर्वे रुद्राश्च प्रथिता ननु ॥ ८
न तावता क्रतौ पूज्यास्ते रुद्राः परमेशवत् । ब्रह्मादीनामपि वरा भवन्त्येते न संशयः ॥ ९
तथापि ते महादेवभक्ताः पूर्वं पदेच्छया । स्वपदानि च सम्प्राप्ता नार्हन्त्येते हविर्वरम् ॥ १०
आदातु पारमेशं तदत्तुं वा तावकेऽध्वरे । एषां तपोभिर्देवेशः प्रसन्नः पूर्वमीश्वरः ॥ ११
ईशानं परिकल्प्याशु दिगीशं निजरूपिणम् । दिक्पालमध्ये रुद्रांस्तु व्यवस्थाप्य सुरेषु तान् ॥ १२
रक्षत्यनिशमाद्यन्तहीन स्स स्वयमीश्वरः । साकं सुराख्यास्त्रिंशत्कोटिकास्तैर्मिता खलु ॥ १३
नास्त्येषामधिकारोऽपि गृहीतु शाङ्करञ्च तत् । तस्माद्दक्ष महादेवं यज यज्ञेश्वरं परम् ॥ १४
स एव भगवानीश स्सर्वाभीष्टं प्रदास्यति । इत्युक्तिमस्य संश्रुत्य पुनः प्राह दुरात्मवान् ॥ १५
क्रतौ किमर्थं भवता महान्यत्नोऽनु भूयते । आघोराजातमन्त्रेण रुद्राय हविरीरितम् ॥ १६
तदत्र रुद्रं यागेमे पूजयिष्यामि कञ्चन । सर्वेषामपि रुद्राणां तारतम्यं न विद्यते ॥ १७
इच्छया मम तेष्वेको मत्पूजार्हो न चापरः । इत्युक्तिमस्य श्रुत्वाऽयं दधीचिः प्राह तत्त्ववित् ॥ १८
एकोऽपि रुद्रनामेदं ख्यातं तद्वच्च षण्मुखे । ज्वरेऽपि सर्वसन्तापकारके प्रथितं ननु ॥ १९
सारूप्यभाक्षु भूतेषु गणेष्वपि च वर्तते । पातालानामधोभागे कालाग्निरिति यच्छ्रुतः ॥ २०
तस्मिंश्च हाटकेशेऽपि कूष्माण्डेऽपि प्रवर्तते । द्रव्य (हव्यं) गृहीत्वा देवानां यदा याति पावकः ॥
अनुद्रुतस्तदा तैस्तु भीतोऽरोदीद्भृशं सुरैः । रोदनाद्रुद्रनामा च वह्नावपि च वर्तते ॥ २२
परब्रह्मणि सर्वेशे महादेवे भयवके । नीलग्रीवे कृतानन्द बोधदुग्धाम्बुधौ शिवे ॥ २३
रुजद्रावयतीशानां भक्तानां दयया ह्यसौ । वर्तते योगरूढिभ्यां तथामेदं सुपावने ॥ २४
तस्माद्दक्ष मृषा मोहं मुक्त्वा त्वं परमेश्वरम् । यज यज्ञेश्वरं साक्षात्सर्वान्मुक्त्वा महेश्वरम् ॥ २५
दक्षः — त्रिषु मूर्तिषु रुद्रोऽयमेकस्संहारकारकः । क्रियेते ब्रह्मविष्णुभ्यां ताभ्यां सृष्टिस्थिती ननु ॥ २६
संहर्तुस्सर्वकर्तृत्वं कथमस्य भवेदिदम् । मोहात्त्वमेव तं सर्वकर्तारं वदसि ध्रुवम् ॥ २७
एवं वदन्तं विप्रेन्द्रः पापिष्ठं प्राह तापसः । शृणु दक्ष महामोहं मुक्त्वा त्वं प्राप्तचेतनः ॥ २८
ज्ञानमूर्तिर्महादेव स्सत्यानन्दगुणः स्मृतः । नास्ति तस्य शरीरञ्च मुक्त्वा चिच्छक्तिमव्ययाम् ॥ २९
स एव ब्रह्मविष्ण्वादीनुत्पाद्य जनकस्स्वयम् । सृष्टिस्थित्यादि कार्याणि कर्तृनेतान्विधाय च ॥ ३०
क्षीयमाणेषु सर्वेषु शायने न हि तैरपि । प्रेरयत्यनिशं सर्वान् कालधर्मस्थितानमून् ॥ ३१
हत्वा कालेन तानेतान् ब्रह्मविष्णुमुखान् सुरान् । लीलयाथ पुनस्सृष्ट्वा स्वकर्माणि विधाय च ॥ ३२
वेदान्व्याख्यापयामास सपद्मजान्महेश्वरः । तथा विभूतिरुद्राक्षाण्यमून्धारयति प्रभुः ॥ ३३
पञ्चाक्षरं महामन्त्रं पञ्चब्रह्मस्वरूपकम् । उपदिष्ट्वा महादेवो रक्षत्यनिशमव्ययः ॥ ३४
मोहितांस्तु पुनर्दृष्ट्वा विनिगृह्णाति शंकरः । नशक्योऽन्यैस्सुरैर्यस्मात्संहारः कर्तुमीश्वरात् ॥ ३५
करोति तं ततस्तदाभूद्रुद्ररूपी जगद्गुरुः । अतस्सृष्टिस्थितिध्वंसतिरोभावादयो विभोः ॥ ३६
परमेशान्महादेवात् सत्यज्ञानस्वरूपिणः । एवमेव पुरा केचिद्वयं प्राप्तसंशयाः ॥ ३७
मेरुं गत्वा विधातारं दृष्ट्वा तत्र प्रजापते । स्तुत्वा ते विविधैः स्तोत्रैः पप्रच्छुर्विनयानताः ॥ ३८
मुनीशं भगवन्प्राप्त स्संशयापायिचेतसाम् । परब्रह्म परञ्ज्योतिः कोवादेवो भवेदिति ॥ ३९

तेषां तद्वचनं श्रुत्वा ब्रह्मा ध्यात्वा क्षणं तदा । हृत्पुण्डरीकमध्यस्थं नीलग्रीवं त्रिलोचनम् ॥ ४०
चन्द्रार्धभूषणं सौम्यं सच्चिदानन्द विग्रहम् । कृष्णपिङ्गलमीशानं ऋतं सत्यं परात्परम् ॥ ४१
आनन्दाश्रुकणान् सिञ्चन् हर्षगद्गदवागयम् । ईशानस्सर्वविद्यानामीश्वरो जगतां प्रभुः ॥ ४२
ब्रह्मणोऽधिपति श्शंभु र्ब्रह्माधिपतिरव्ययः । सदाशिवः परञ्ज्योतिरोङ्कारनिलयो महान् ॥ ४३
स एव शंकरश्शंभुः परं ब्रह्म न चेतरः । सत्यं सत्यं पुनस्सत्य मुद्धृत्यकरमुच्यते ॥ ४४
ऋतं सत्यं ब्रह्मपरं पुमांसं कृष्णपिङ्गलम् । ऊर्ध्वज्वलनरेतस्कं विश्वाकारं महेश्वरम् ॥ ४५
नमस्कृत्यैव ते वेदा वदन्तीशं महाभयात् । स एव तस्मात्सर्वेश श्शातवारं मयोच्यते ॥ ४६
तत्समो नास्ति लोकेषु न वरो नापरः क्वचित् । सर्वज्यायानणीयांश्च स्तब्धो वृक्ष इवाचलः ॥ ४७
दिवि तिष्ठति सर्वात्मा तेन पूर्णमिदञ्जगत् । यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ॥ ४८
आनन्दमस्य यो वेत्ति न भयं तस्य कुत्रचित् । अद्यापि ब्रह्मविष्णुभ्यां न दृष्टोऽयं महेश्वरः ॥ ४९
पशूनां पतिरीशोऽयं ब्रह्माद्याः पशवः स्मृताः । करुणामूर्तिरतुलो भक्तानामभयङ्करः ॥ ५०
सर्वैश्वर्येण संपन्न श्शम्भुराकाशमध्यगः । बहुना किं परं ब्रह्म स एव ऋषिसत्तमाः ॥ ५१
इति धातृवचः श्रुत्वा ते सर्वे मुनिसत्तमाः । त्यक्तमोहा महादेवं परं ब्रह्म सनातनम् ॥ ५२
ज्ञात्वा प्रणम्य धातारं स्तुत्वा च विविधैः स्तवैः । धृतत्रिपुण्ड्ररुद्राक्षमालाभरणभूषिताः ॥ ५३
वरपञ्चाक्षरीमन्त्रजपतत्परमानसाः । कैवल्यमापुस्सर्वे शिवभक्ताः प्रजापते ॥ ५४
ततस्स भगवानीशः परमात्मा शिवः स्वयम् । नान्योऽतोऽस्ति महादेवाद्द्रष्टा श्रोता परात्परः ॥ ५५
इति वेदान्तवाक्यानां निष्ठा काष्ठा महेश्वरे । पतिस्स एव भगवांस्तदन्ये पशवः स्मृताः ॥ ५६
निश्चितं ब्रह्मणा पूर्वमेवं वेदानुसारतः । त्वञ्च पूर्वं वचः श्रुत्वा ब्रह्मणस्त्वष्टुरीदृशम् ॥ ५७
अवाप्य भक्तिं देवेशे तपस्तप्त्वा सुदुश्चरम् । आसवानीश्वराद्दक्ष परमैश्वर्यमीदृशम् ॥ ५८
ब्रह्मणस्सृष्टिकर्तृत्वं विष्णोर्दानवमर्दनम् । स्वर्गाधिपत्य मिन्द्रस्य शिवपूजाफलं खलु ॥ ५९
मायया मोहितो नूनं त्वमासन्नमृतिर्यतः । ब्रह्मणा विष्णुना वापि तस्य माया दुरत्यया ॥ ६०
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । न बाधते तान् सा घोरा महात्मानश्शिवमिश्रान् ॥ ६१
अत एव भवानद्य किञ्चिद्वा न स्मरत्यहो । महामोहवशादेते ब्रह्मविष्ण्वादयस्सुराः ॥ ६२
आसते तेऽन्तिकं प्राप्य सर्वेऽपि हविराशया । बहुना किं दुराचार यदीच्छसि परं हितम् ॥ ६३
अध्वरेशं महादेवं हविर्भिः प्रीणयाधुना । सर्वात्मा स महादेवः परं ब्रह्म न चेतरः ॥ ६४
हितमिच्छन्नहं दक्ष तवेत्थमवदं ध्रुवम् । एवमुक्त्वा ऋषिवरो मौनमाश्रित्य तिष्ठति ॥ ६५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे द्वादशोऽध्यायः

---

॥ अथ त्रयोदशोऽध्यायः ॥
श्री शिवेन दारुकावनप्रवेशः ॥

विहस्य दक्षः पापिष्ठः पुनः प्राह वचो द्विजाः । परमात्मा कथं रुद्रः परं ब्रह्म कथं मुने ॥ १
यदि वायं परं ब्रह्म कथमेष दिगम्बरः । कथं बिभर्ति शूलं वा कपालं चातिगर्हितम् ॥ २
भुजालजः कथं वीथ्यां भिक्षामटति निर्भयः । कर्कशं व्याघ्रचर्मापि कथं धत्ते पिनाकधृक् ॥ ३

मृगं वा परशुं घोरं पाणिभ्यां वहते खलु । आशीविषै महाघोरै स्सर्पै र्वेष्टित विग्रहः ॥ ४
भूतसेनाभि रनिशं भीताभिः परितो वृतः । मूर्ध्ना बिभर्ति सततं शिरोमुण्डं शुचिस्मितम् ॥ ५
धत्ते डमरुकञ्चापि महारावविभीषणम् । अपस्मारमधः कृत्वा पादस्याधापि वर्तते ॥ ६
धृत्वा करतले वह्निं नृत्यते खलु भीषणम् । निष्ठुरं गजचर्मापि ध्रियते किं परात्मना ॥ ७
वाराहं दंष्ट्रमुत्पाट्य कथं ब्रह्म बिभर्ति तम् । ध्रियतेऽनेन घोरेण कमठास्थि सुनिन्दितम् ॥ ८
अपिबत्कालकूटंच विषन्दु (विषञ्च) श्वेष्टयापुरा । भिक्षामटति लोकेषु सर्वेष्वपि दुराशया ॥ ९
तुन्दिलं वृषभं वृद्धमारोहति विगर्हितम् । मुण्डमालाभिरन्याभिस्सर्वदा परिवेष्टितः ॥ १०
अशुचीनि सदास्थीनि धत्तेऽङ्गे कुसुमं यथा । यज्ञोपवीतमथापि शिरोरुहमयं किल ॥ ११
शूलाग्रे प्रेतमनिशं प्रोतं कृत्वा विभीषणम् । श्मशानभस्मभिर्गात्रं मुद्धूल्य सततोद्यमः ॥ १२
ननृते स महाटोपं कृत्वा कृत्वा मदेन सः । संहर्ता सर्वभूतानां निष्ठुरो बहुरूपवान् ॥ १३
कामान्धीकृत चक्षुस्सञ्छिरसा वहते स्त्रियम् । एकां परामपि सदा पार्श्वे लोकेषु विश्रुतः ॥ १४
सकुटुम्बी गृहस्थोऽयं पुत्रबान्धववर्जितः । तमोमयगुणो घोरे स्सर्वेषामपकारकः ॥ १५
कथमेतादृशो रुद्रः परं ब्रह्म ऋषीश्वर । इत्युक्तवन्तं तं कोपा द्दधीचि र्वीक्ष्य तापसः ॥ १६
न हि संभाषणं युक्तं दक्षेणानेन पापिना । अवलोकयितुञ्चास्य न युक्तं मुखमीदृशम् ॥ १७
महामोहवशात्पापी सभायामेवमुक्तवान् । अनुक्त्वोत्तरमेतस्य न युक्तं गन्तुमत्रहि ॥ १८
इति निश्चित्य मनसा प्राहैनं तापसेश्वरः । महामोहवशाद्दक्ष शिवस्य परमात्मनः ॥ १९
अमूनि सुचरित्राणि दूषणत्वेन जल्पसि । एतानि किन्न जानासि चरितानि महेशितुः ॥ २०
अन्तर्यामी स सर्वेषां सर्वात्मा च महेश्वरः । न शक्यतेऽस्य केनापि स्वरूपं द्रष्टुमद्भुतम् ॥ २१
सर्वलोकोपकाराय श्रीमत्कैलासपर्वते । तथा विराजते शंभुर्ज्ञानमूर्ति र्वराकृतिः ॥ २२
स्थिरयाऽत्र सकलान्देवाननुगृह्णाति देवपः । दिगंबरादि चरितं कारणादस्य नान्यथा ॥ २३
शृणु दक्ष दुराचार संप्राप्तज्ञानलोचनः । पुरा केचिन्महाभागा ऋषयो दारुकावने ॥ २४
भक्तिहीना महादेवे कर्मठा दुष्टचेतसः । न तपोव्यतिरेकेण देवता काचिदस्ति हि ॥ २५
न यागेन विना देवः फलं कश्चिद्ददाति हि । फलं प्रदाति सर्वेषां तत्तत्कर्माणि सत्यतः ॥ २६
न कर्मणा विना देवो नास्त्यन्यः फलदायकः । भोगोऽपि कर्मणा जन्तो रपवर्गोऽपि तेनहि ॥ २७
इत्यादिकुकथाः कृत्वा तस्थुस्तत्वा विरादमी । तानेतान्पापिनो ब्रह्म विष्णुपूर्वा स्सुरोत्तमाः ॥ २८
ज्ञात्वैषां शङ्करे भक्तिर्न भविष्यत्यपक्वतः । पापोपहतचित्तानां शिवे भक्तिर्न जायते ॥ २९
शिक्षितुञ्चासमर्थास्ते शापभीत्या प्रजापते । व्यजिज्ञपन्महादेव मिदं सर्वं तदा सुराः ॥ ३०
श्रुत्वैतदखिलं शंभुः प्रेषयामास तांस्तदा । पुनः कालेन महता शङ्करो लोकशंकरः । ३१
ससार विष्णुं तान्सर्वान्व्यामोहयितुमीश्वरः । तदाज्ञया हरिस्तूर्णमाससाद शिवान्तिकम् ॥ ३२
तत्पाणिमवलंब्यायं शिवासिंहासनात्स्वकात् । अवरुह्याशुकैलासं मुक्त्वा परमपावनम् ॥ ३३
विष्णो त्वयाऽत्र मोहिन्या रूपमास्थाय शीघ्रतः । मोहनीया मृषाचारा महाशाश्वतिनाऽधुना ॥ ३४
इत्युक्त्वा स महादेवो दिगंबरतया तदा । इच्छाज्ञानक्रियाशक्ति स्वरूपं शूलमद्भुतम् ॥ ३५
पराशक्तिस्वरूपञ्च कपालं परमेश्वरः । पादुकेच तिरोधानशक्तिरूपे विचित्रिते ॥ ३६
परिकल्प्याविवेकाद्य दारुकायनमीश्वरः । तदानीं मोहिनी शम्भुं वीक्ष्य मोहमवाप्यसा ॥ ३७

अथाचतामुना भोग शिवेन परमात्मना । ऊर्ध्वरेतास्तदा शम्भु लीलापाङ्गेक्षणामिमाम् ॥ ३८
चारुहार मनोहारि दन्तपङ्क्तिशुचिस्मिताम् । नवविद्रुमसंकाश प्रकाशाधरपल्लवाम् ॥ ३९
अर्धेन्दु वक्र भ्रूक्षेपक्रिया नीलाब्जलोचनाम् । सुवृत्ताभ्यां स्तनाभ्याञ्च स्तोकनम्रा कृशोदरीम् ॥ ४०
नीलोत्पलसमच्छायरोमराजिविराजिताम् । चाटुवाक्यैकवचना वीक्ष्य मन्दस्मितानन ॥ ४१
कालान्तरे त्वया मेऽस्तु सम्भोगस्सर्वमोहिनि । अधुना दारुकारण्ये गत्वा त्व विमुखानपि ॥ ४२
तापसान्मोहयित्वाऽऽशु पुनरागच्छ शीघ्रत । इत्युक्त्वा प्रेरयामास ता तदा परमेश्वर ॥ ४३
साधु शम्भोर्वचश्श्रुत्वा तपोवनमनुत्तमम् । विवेश निरवद्याङ्गी वर्तन्ते यत्र तापसा ॥ ४४
दृष्ट्वैना तापसा स्सर्वे लीलामन्थरगामिनीम् । इतस्ततश्च परितो वीक्ष्य मुग्धस्मिताननाम् ॥ ४५
हरिणीमिव विभ्रस्तनयना यतमध्यगाम् । कन्दर्पकलमावापवरकेदाररूपिणीम् ॥ ४६
नितम्बप्रस्खलत्पाणिपल्लवा लीलया मुहु । पादाङ्गदकलारावै बोधयन्तीं मनोभवम् ॥ ४७
पीडिता कामबाणेन ऋषयस्ते प्रजापते । नियमान् संपरित्यज्य सर्वेऽपि गलितेन्द्रिया ॥ ४८
परिवृत्य विकारेण तामेता स्रस्तवासस । उत्प्रेक्ष्योत्प्रेक्ष्य बहुधा वर्णयित्वा वराङ्गनाम् ॥ ४९
तस्थुर्मोहवशात्सर्वे कृत्वालाप यथेच्छया । तदानीं स महादेवो तद्वीथ्यामागतो युवा ॥ ५०
कन्दर्पकोटिसंकाश शरीरो भिक्षुकाकृति । अटतिस्म तदा भिक्षा पठन्वेदवच क्वचित् ॥ ५१
वीणातन्त्रीं समुत्पीड्य क्वचिद्गायति सुस्वरम् । शिवागमान् पठित्वापि भैक्षं गृह्णाति कुत्रचित् ॥
शिवसङ्कीर्तन कृत्वा कुत्रचिल्लीलया शिव ॥ ५२

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे त्रयोदशोऽध्याय ॥

---

॥ अथ चतुर्दशोऽध्याय ॥

ईश्वरेण दारुकावने भिक्षाटनादिकम् ॥

एव विलासमार्गेण भिक्षामटति शङ्करे । तदान्नपूर्णदर्वीका ऋषिपत्न्यो महेश्वरम् ॥ १
युवान सुन्दराकार वीक्ष्य कामवशं गता । स्रस्ताभरणनिचया प्रोच्छ्वसन्नीविबन्धना ॥ २
स्मरद्रुणा कण्टकित शरीरावयवा भृशम् । श्लथधम्मिल्लनिचया चाटुवाक्यपरायणा ॥ ३
भिक्षाप्रदानव्याजेन भिक्षुक तमुपाययु । तदानीं धृतगर्भास्ता पुत्राश्चाजीजनन् क्षणात् ॥ ४
शिवाख्या शिवं सर्वे प्रणम्य विनयेन ते । तस्थुस्तानात्मजान्वीक्ष्य सन्तोषेणाहभिक्षुक ॥ ५
ध्यात्वा माममत्र सर्वेऽपि यूय पुत्र महाशया । तप कुरुत सुमहत् प्रेरयित्वैवमात्मवान् ॥ ६
चचाल ऋषिपत्नीभि रनुयान्तीभिरीश्वर । मोहिन्यपि तदा तत्र ऋषिभि परितो वृता ॥ ७
समापयौ शिवस्थाने सर्वावयवपेशला । ऋषय स्वस्त्रियो दृष्ट्वा तत्र कामवशाङ्गता ॥ ८
भिक्षुकश्शिवपर्याये समागत्यात्र मत्प्रिया । मायया मोहयामास मन्त्री मन्त्रैरथैरिव ॥ ९
यैयाऽस्मान्मोहयामास मोहिनी वरवर्णिनी । स तु नारायणो नून तथा शिवस्य चकारहि ॥ १०
शापेश ज्ञानदृष्ट्या ते ऋषय कोपविह्वला । असाध्य व्रतभङ्गेन यत्किञ्चिज्जायते यदि ॥ ११
मायाविशेषेण तत्पाप प्रभवति न संशय । पतिव्रतात्वमेतासां क्षीणं मन्ये हि दुर्लभम् ॥ १२
मर्त्यलोकेषु विषयात्मवशारसमभूव हि । इत्यालोच्यान्तरैवैते ऋषय स्वकुटुम्बिनी ॥ १३
बटुप्रभृति समाहूय यूय गच्छत मद्गृहान् । प्रत्यूचुर्वेदुषां ते तदा दम तपोधना ॥ १४

तेषां तद्वचनं श्रुत्वा स्त्रियस्सर्वा दिगंबराः । शिवानुधावनं मुक्त्वा विविशुः स्वगृहानमूः ॥ १५
शिवाज्ञयैव परमा दक्ष नार्यः क्षणादहो । निजरूपं समादाय विष्णुश्शंभुं प्रणम्य च ॥ १६
तस्थे स्तुतिवरैः स्तुत्वा बद्धाञ्जलिपुटो भयात् । तदा ब्रह्मादयो देवा स्समागत्य महेश्वरम् ॥ १७
प्रणम्य तुष्टुवुर्भक्त्या गृहीतनिजविग्रहम् । शिवं परमकल्याणं नीलग्रीवं परात्परम् ॥ १८
तदा तं देवमतुलं दृष्ट्वा ते ऋषयः क्रुधा । यस्मादेवश्चकारायमस्माकमयशो महत् ॥ १९
तपोमहिम्ना वध्योऽयमस्माभिरिह दुष्क्रियः । इति निश्चित्य ते सर्वे चक्रुः कर्माभिचारकम् ॥ २०
तदा व्याघ्रो बभूवात्र घोरः परशुरेव च । मृगसर्पौ च भूतानि भीषणानि बहून्यपि ॥ २१
शुचिस्मितं शिरोमुण्डमपस्मारश्च भीषणः । महारावैरट्टहासैः परुषैर्वचनैरपि ॥ २२
चकंपिरे जनास्सर्वे सर्वलोकस्थिता अपि । तदा ब्रह्मादयो देवाश्शिवस्य परमात्मनः ॥ २३
पृष्ठभागं गतास्सर्वे भीतभीता भृशं यत । शिवस्तदैवामाटोपयुताराव विभीषणान् ॥ २४
श्रुत्वा गमनमेतेषां तस्थे शास्ता निजान्तरे । तदन्तरे शिवं व्याघ्रो भर्त्सयन् कुटिलाननः ॥ २५
हन्तुकामोऽन्तिकं प्राप वितत्योर्ध्वं करं क्रुधा । गृहीत्वा वालमेतस्य करेणास्फाल्य निष्ठुरम् ॥ २६
हत्वा त्वचं समादाय वस्त्रवद्विदधे शिवः । ततः परशुमायान्तमायुधं परिकल्प्य सः ॥ २७
महाघोरं महानादं गृहीत्वा पाणिना मृगम् । तिष्ठ मत्कर्णसविधे शब्दं कृत्वा सदेति तम् ॥ २८
स्थापयामास विश्वात्मा स्वतन्त्रस्तं प्रजापते । समायान्तं पुनस्सर्पं महानादेन भीषणम् ॥ २९
कल्पयामास चाकल्पं सर्वाभरणभूषितः । ततो भूतानि सर्वाणि महाघोराणि शङ्करः ॥ ३०
साट्टहासानि बलवान् स्वसेनाः परिकल्प्य च । शिरोमुण्डं दधौ मूर्ध्नि शुचिस्मितमुखश्शिवः ॥ ३१
अपस्मारमपि क्रूरं पादस्याधश्चकार हि । एवं व्यर्थतया तेषु गतेषु ऋषयः क्रुधा ॥ ३२
अग्निं संप्रेषयामासुर्हन्तुं तं परमेश्वरम् । बभार पाणावायान्तं कालानलसमप्रभम् ॥ ३३
ततो मन्त्रान्महाघोरान् हन्तुं तं प्रैरयञ्छिवम् । बृहड्डमरुकाकारं परिकल्प्य तपोबलात् ॥ ३४
तं च घोरं महानादं दधौ हस्ते पिनाकधृक् । विफलेष्वेवमेतेषु ऋषयः क्रोधविह्वलाः ॥ ३५
शेपुस्तं परमेशानं सर्वे दक्ष प्रजापते । शापाश्च तेषां देवेशे व्यर्थतामगमं स्तदा ॥ ३६
ज्वलद्वह्निमुखे यद्वत्तूलराशिर्महानपि । तदेतत्सर्वमालोक्य भीतभीतास्तपोधनाः ॥ ३७
व्यर्थानि नस्तपांस्यासन् क्रियास्सर्वास्समन्त्रकाः । अस्मिन् पुरुषधौरेये युवायमतिमानुषः ॥ ३८
इति चिन्तामवाप्यैते, तस्थुर्व्रीलानताननाः । तदानीं स महादेवः स्मयमानमुखांबुजः ॥ ३९
महिमानं न जानन्ति ममैवमिति तापसाः । इति स्मृत्वा ननर्तायं ताण्डवं नटनं भृशम् ॥ ४०
तस्य तं नटनं दृष्ट्वा सर्वे ते भयकंपिताः । बभ्रमुश्च महाभीता निपेतुर्नमिताननाः ॥ ४१
शिवस्तदा कृपां चक्रे सर्वेषु करुणाकरः । समुत्थाय ततस्सर्वे प्राप्य ज्ञानं प्रणम्य तम् ॥ ४२
जय देव महादेव क्षमस्व करुणाकर । अपराधं शिवास्माकं रक्ष रक्षान्तकान्तक ॥ ४३
इति स्तुत्वा स्थितानेतान् बद्धपाणीन्महेश्वरः । प्रोवाच करुणामूर्तिर्वीक्ष्यैतान्वचनं तदा ॥ ४४
एतावत्कालपर्यन्तमृषयो यूयमीश्वरम् । मामविज्ञाय दुर्मार्गमवष्टभ्यातिमोहिताः ॥ ४५
अतिष्ठन् किल युष्माभिरित ऊर्ध्वं मदाज्ञया । स्थातव्यं वैदिके मार्गे भस्मरुद्राक्षधारिभिः ॥ ४६
यतध्वं यूयमनिशं मामेवानन्यभावनाः । प्रेषयित्वा कृपांभोधिरेवमेतानृषीश्वरान् ॥ ४७

कैलासं प्राप तरसा नानाश्चर्यसमन्वितम् । तत्र विष्णुमुखान् देवान् प्रेषयित्वा स्वयं शिवः ॥
शिवया सहितो देव्या क्रीडंस्तस्थे प्रजापते ॥ ४८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखंडे
दक्षकाण्डे चतुर्दशोऽध्यायः ॥

---

॥ अथ पञ्चदशोऽध्यायः ॥

गजासुरवधः ॥

दिगंबरादिचरितं वृत्तपर्यन्तमद्भुतम् । शिवस्यानन्यतुल्यस्य ऋषीश्रोतुमिच्छतः ॥ १
मयोक्तं सावधानेन दक्षान्यच्च ब्रवीमि ते । शृणुष्वावहितो ज्ञात्वा विगतैना भविष्यसि ॥ २
पुरा गजासुरो घोरस्तपस्तप्त्वाऽपि निष्ठुरः । प्रीणयित्वा विधातारं वरं वव्रे प्रजापते ॥ ३
अवध्यत्वं सुरैरन्यैः क्षयद्वीरं शिवं विना । सुबहूनि तथायूंषि बलं वीर्यं पराक्रमम् ॥ ४
एवमादीनि चान्यानि प्रदत्तानि स्वयंभुवा । ततो लब्धवरो दैत्यो बबाधे सकलं जगत् ॥ ५
जित्वा ब्रह्मादि देवांश्च रणमध्ये गतामयम् । हत्वा ऋषीन् सुरांश्चापि सुबहूनवलेपतः ॥ ६
इत्थं प्रतिदिनं तस्थे बाधयन् सकलञ्जगत् । ततः कदाचिदमरनायकं बलभेदकम् ॥ ७
जित्वा रणे द्रावयित्वा गजमभ्रमुवल्लभम् । गृहीत्वा पाणिना बालं भ्रामयित्वा समन्ततः ॥ ८
क्षेपयामास दुष्टात्मा सुदूरं मूर्छितं गजम् । दिशामधीशानन्यांश्च द्रावयामास पीडयन् ॥ ९
यक्षानपि तदा हत्वा भूलोकनिलयान् परान् । हन्तुमद्रावयद्धोरः पुनः कांश्चिदपीश्वरान् ॥ १०
भीतास्ते तापसाः काशीं समागत्यात्र संभवैः । ऋषिभिर्मिलिता गत्वा मणिकर्ण्यां ततः पुनः ॥ ११
प्रविश्य विश्वनाथस्य परमंधाम चाद्भुतम् । तत्रत्यैरपि देवस्य परिचर्यारतै र्जनैः ॥ १२
विश्वनाथं प्रणम्यैते तस्थुस्तत्र भयान्विताः । तदानीमागतस्तत्र त्वरया स गजासुरः ॥ १३
द्वारि स्थित्वा महारावं चकाराति विभीषणम् । तच्छ्रुत्वा तपतां वर्या भीतभीता महेश्वरम् ॥ १४
समालिङ्ग्यच सर्वेऽपि मुमुहुर्गतचेतनाः । तत्क्षणेन पुनः पापी तीर्त्वा द्वारं शिवान्तिकम् ॥ १५
हन्तुकामस्तदा सर्वानाप दक्ष प्रजापते । ततस्स भगवानीश स्सर्वेषामालिङ्ग्य स्वयम् ॥ १६
आविरासीदनेकार्क प्रभमास्थाय विग्रहम् । तर्जयंस्तं महारावैः घोरमेनं महेश्वरः ॥ १७
अनेककालमखिलैः श्रुताश्शब्दा महेशितुः । स तु पापी शिवं ज्ञात्वा क्षयद्वीरमपि स्थिरम् ॥ १८
युयुधे तं महामोहात्परमेशं गजासुरः । ताडयामास पादेन शिरस्यस्य दुरात्मनः ॥ १९
महाबलो महाभारो महेपुरुष महेश्वरः । स पपात महीपृष्ठे तत्र दैत्याधमो द्रुतम् ॥ २०
रुरोद स महारावो रुधिराप्लुतविग्रहः । त्वचञ्जग्राह देवोऽस्य तदानीं निष्ठुरां शिवाम् ॥ २१
श्रुत्वाऽस्य रोदनारावं भयमाप शिवाप्यहो । तदद्भुतं महेशस्य विग्रहं वीक्षितुं तदा ॥ २२
सर्वेषामपि देवानां लोचनानि प्रजापते । कुण्ठीभावं गताऽन्याशु सूर्यकोटि समप्रभम् ॥ २३
त्वचावकुण्ठिते देवे गजस्यास्य दुरात्मनः । लोचनानि न सर्वेषां तदा शक्यानि वीक्षितुम् ॥ २४
परित्यक्तभया स्सर्वे ददृशुस्तं महेश्वरम् । प्रणेमुश्च महाभक्त्या कृत्तिवाससमीश्वरम् ॥ २५
तपोधनाश्च ते सर्वे गतमोहा महेश्वरम् । ददृशुः परमस्थीनि चास्य दैत्यस्य केवलम् ॥ २६

हतोऽयममरेशेन शङ्करेणार्तिहारिणा । इति निश्चित्य सर्वे ते तुष्टुवुः परमेश्वरम् ॥ २७
ब्रह्मविष्णुमुखैस्सार्धं परित्यक्तभया मुदा । जय शम्भो महादेव प्रणतार्तिप्रभञ्जन ॥ २८
समस्तजगतां नाथ सच्चिदानन्दविग्रह । गजचर्माम्बरं त्वां ये वर्णयन्ति बुधोत्तमाः ॥ २९
मा भवन्तु भयं तेषां यस्मात्कस्मादितः परम् । भवन्तु पूज्यास्सर्वत्र सर्वलोकैर्नमस्कृताः ॥ ३०
तथेत्यन्तर्हिते देवे दत्वा वरमनुत्तमम् । ब्रह्मविष्ण्वादयस्तुष्टिमवापुः परमां तदा ॥ ३१
गजासुरं महाघोरं सदा देवर्षिबाधकम् । हत्वा ररक्ष सकलांस्त्वचं चास्यातिकर्कशाम् ॥ ३२
प्रख्यापनाय सर्वेषां दधौ विश्वाधिकश्शिवः । न च तद्दूषणायास्य भूषणायैव केवलम् ॥ ३३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे पञ्चदशोऽध्यायः ॥

---

॥ अथ षोडशोऽध्यायः ॥

अमृतमथनं कालकूट विषोद्भवश्च ॥

बिभर्ति देवो दंष्ट्रां तामित्युक्तं मयायथापुरा । ब्रवीम्येनां कथां तुभ्यं शृणु दक्षावधानतः ॥ १
हिरण्याक्षोऽसुरो घोरो गृहीत्वा पृथिवीमिमाम् । स जगामाशु पातालं दानवो घोरकर्मकृत् ॥ २
नासिकाया तदा विष्णु र्ब्रह्मणो निरगात्क्रुधा । धाराहं वपुरास्थाय हन्तुकामोऽसुराधमम् ॥ ३
तत्र गत्वा हिरण्याक्षं हत्वा पातालमध्यगम् । स्थापयामास पृथिवीं पूर्ववद्दानवान्तकः ॥ ४
ततस्तु तस्य पापस्य रक्तपानेन माधवः । हसो बबाधे नितरां सर्वान् लोकांस्ततोऽधिकम् ॥ ५
ततो देवा महादेवं शरण्यं शरणं गताः । रक्ष देवानिदानीं त्वं विष्णुना दंष्ट्रिरूपिणा । ६
बाध्यमानानहोरात्रं सर्वेषामार्तिहन् प्रभो । इति तेषां वचः श्रुत्वा कृपया चन्द्रशेखरः ॥ ७
हत्वा वराहं तं घोरं दंष्ट्रामुत्पाट्य तस्य च । अरक्षदमरान् सर्वानापन्नापत्प्रणाशकः ॥ ८
तदा तुष्टाव देवेशं गतमोहो हरिश्शिवम् । नमस्तुभ्यं महेशाय भक्तानामिष्टदायिने ॥ ९
संहर्त्रे कालरूपाय लोकोपद्रवकारिणाम् । शङ्कराय नमस्तुभ्यं मंगळाय नमोनमः ॥ १०
दंष्ट्रामिमां महादेव मदीयां सर्वरक्षक । वोढुमर्हसि देवेश मद्रक्षाज्ञापनाय भो ॥ ११
दुष्टेनामपि मे भूयो नाशनं भवतीश्वर । इति संप्रार्थितस्तेन विष्णुना परमेश्वरः ॥ १२
तथेति तां बभारासौ सर्वेशः करुणाकरः । कूर्मरूपी पुरा विष्णुर्मन्दराख्याश्मकन्दरम् ॥ १३
धृत्वा पयोधिममरै र्ममन्थामृतकांक्षया । उत्पन्नममृतं तस्मात्तदांबोधे र्महत्तरम् ॥ १४
तत्राऽन्योन्य म ्युद्ध देवानामसुरैस्सह । अस्माभिर्मथ्यमानेऽब्धौ संबभूवामृतं ध्रुवम् ॥ १५
तदा कूर्मोऽपि संदृप्तो डोळयामास वारिधिम् । मयैव मथितोंभोधिर्महाबलवता ननु ॥ १६
बभूव बाधा लोकानां क्षुब्धे दुग्धांबुधौ तदा । अशक्तुवन्तस्तां बाधां पुरस्कृत्वा विधिं सुराः ॥ १७
गत्वा कैलासमतुलं महादेवं व्यजिज्ञपन् । तदा तमपि देवोऽयं हत्वा कूर्मं महाबलम् ॥ १८
जग्राह तस्य पृष्ठास्थि महाघोरस्य शंकरः । देवैस्संप्रार्थितो देवो बभारैतत्प्रजापते ॥ १९
रक्षार्थं सर्वलोकानां काळकूटं पपौ शिवः । पुरा सुरासुरैस्सर्वैः कृते युद्धेऽपि दारुणे ॥ २०
केनोपायेन मरण मस्माकं न भवेदिति । सञ्चिन्त्यैवं विधात्रा ते विष्णोश्चाप्याशामायुः ॥ २१

श्रुत्वा विष्णु र्वचस्तेषा ह्यात्योपाय हृदाप्ययम् । पीतेऽमृते न मरणमित्युक्त्वा तान् सुरान् हरि ॥ २२
क्षीराम्बोधि मथन्याय मन्थने मन्दरे स्थिते । कृत्वा तु वासुकिं योक्त्र सर्पराज सुरैस्सह ॥ २३
तदा कळकलारावो महानासीद्भयकर । सर्पस्योच्छ्वास निश्श्वासमरुद्भि क्षुभितोऽम्बुधि २४
ततस्सर्पमुखाद्घोर विषमग्नी पपात ह । अनेककोटिवडवानलवेग तमोमयम् ॥ २५
क्षणेनासीदिद सिन्धु व्यानशे सर्वतो मुखम् । दुद्रुवुश्च ततो देवा योक्त्र मुक्त्वाशु वासुकिम् ॥ २६
पलायनपरो विष्णु पश्चाद्दग्धोऽमुना भृशम् । शक्त्या मुकुन्दो मन्दोऽभूदासीज्जातधृतिस्तथा ॥ २७
मधृतिर्वायुरप्यासीद्ब्रह्मणश्चापोहित । निर्व्यापार कुबेरोऽभूद्देवमन्येऽपि नाकिन ॥ २८
विषाग्निदग्धा स्सर्वेऽपि हाहेति सुमहारवा । अरक्ष्यमाणास्सर्वे ते शरण्य शरण शिवम् ॥ २९
मत्वा कैलासमचल सर्वे दु खनिवारकम् । आपु किलिकिलारावैराशु दक्षप्रजापते ॥ ३०
विषाग्निदग्धसर्वाङ्गो विष्णु कृष्णोऽभवत्तदा । तत्र दृष्ट्वाऽऽलयद्वारि शैलादि गणनायकम् ॥ ३१
प्रणम्य तस्मै वृत्तान्त मूचुस्सर्वेऽति दु खिता । कृपया तेषु शैलादिरश्रुत्वा सर्वं सुरानिमान् ॥ ३२
निरुध्य तत्र स पुनर्ब्रह्मणा विष्णुनापि च । इन्द्राद्यैरपि दिक्पालै प्रविश्यान्त पुर द्रुतम् ॥ ३३
पञ्चमावरणे तत्र व्यवस्थाप्य दिशा पतीन् । पुनरावरणे षष्ठे ब्रह्मविष्णू उभावपि ॥ ३४
सन्निरुध्य विवेशाय स्वयमन्त पुर तदा । गत्वा शिवाय प्रोवाच सुराणामागम तदा ॥ ३५
शिवाज्ञया पुनर्नन्दी ब्रह्माण विष्णुमेव च । प्रवेशयामास तदा शम्भोरन्त पुर मुदा ॥ ३६
प्रविष्टौ ब्रह्मविष्णू तौ प्रणम्य परमेश्वरम् । तदा तुष्टुवतुर्भक्त्या स्तोत्रैर्वेदान्तगुम्भितै ॥ ३७
तुष्टस्तदा विलोक्यैतौ ब्रह्मविष्णू महेश्वर । किमेतदधुना विष्णो शुद्धस्फटिकसन्निभ ॥ ३८
दवाग्निदग्धतरुवत्कृष्णोऽसि नितरामहो । पुण्डरीकेक्षणोऽपि त्व रक्तनेत्रो विराजसे ॥ ३९
शरीर तावक विष्णो कम्प सन्दृश्यते तराम् । तप्तकाञ्चनसंकाशो वैवर्ण्यं भजते विधि ॥ ४०
इति शम्भोर्वच श्रुत्वा विष्णु प्राह महेश्वरम् । अविज्ञाप्य महादेव भवन्तममृतेच्छया ॥ ४१
अमन्थि सर्वै रमरै क्षीराम्बोधि महेश्वर । तदा समभवद्घोर विष कालानलोपमम् ॥ ४२
तज्ज्वालापुञ्जसर्वाङ्गास्सर्वे देवास्त्र्यम्बक । अरक्ष्यमाणाश्शरण प्रपन्नास्त्वा सदाशिवम् ॥ ४३
पुरतो धावतो देवाननुयातोऽहमग्रणी । मच्छरीरमतस्स्वामिन् दग्ध शम्भो विशेषत ॥ ४४
घोरेणानेन देवेश विश्वमीशातिबाध्यते । कृष्णोऽहमधुना शम्भो बाध्यमान क्षणे क्षणे ॥ ४५
अनन्यशरणान्देवान् भव विश्वाधिक प्रभो । रक्ष रक्ष कृपाम्भोधे माविलम्बितुमर्हसि ॥ ४६
सर्वेषामन्तरात्मा त्व सर्वव्यापी सनातन । गृहीत्वैव विध रूप कल्याणगुणमण्डितम् ॥ ४७
रक्षितु सर्वलोकास्त्व सर्वदाऽत्र विराजसे । इत्युक्त्वा माधवश्शीघ्र प्रणनाम पुन पुन ॥ ४८

इति श्री स्कान्द महापुराणे शाङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे षोडशोऽध्याय ॥

---

॥ अथ सप्तदशोऽध्यायः ॥

हालाहल भक्षणम् ॥

बहिः स्थितास्तदा देवास्सर्वे युगपदेव ते । रक्ष रक्ष महादेव शरणागतवत्सल ॥ १
दह्यमानान्सुरान्सर्वान्विषवह्निमहाग्निना । अनन्य शरणाञ्शंभो त्वामेव शरणं गतान् ॥ २
बहुना किं महादेव रक्ष रक्षेति चुक्रुशुः । तेषां तानारवाञ्छ्रुत्वा शङ्करः करुणाकरः ॥ ३
किमेतदिति पप्रच्छ ब्रह्माणं वीक्ष्य पावनः । रक्षास्मान् पार्वतीनाथ देवान् दैत्यतपोधनैः ॥ ४
विषाग्निना दह्यमानानतिघोरेण विश्वप । सर्वे सुरासुराश्शंभो बहिरेत्य तपोधनैः ॥ ५
महाघोर विषं सोढु मशक्ता भृशमीश्वर । क्रोशन्ति नितरां खिन्ना स्त्वामेव शरणं गताः ॥ ६
रक्षा तदाशु कर्तव्या भवता परमेश्वर । इति ब्रह्मवचश्श्रुत्वा नन्दिनं वीक्ष्य शंकरः ॥ ७
भ्रूविक्षेपञ्चकारासौ कृपया देवनायकः । ज्ञात्वा तदिङ्गितं नन्दी पुनर्गत्वा सुरासुरान् ॥ ८
ऋषीनप्यानयित्वाऽथ मन्तिकं प्राप शांकरम् । तदा सर्वे महादेवं वीक्ष्य सोमार्धशेखरम् ॥ ९
प्रणेमुर्दण्डवद्भूमौ स्तुत्वा स्तोत्रै रनेककैः । तदानीममरानन्यान्वीक्ष्य गौरी दयावती ॥ १०
कृपाञ्चकाररक्षैतानिति शंभुं निरीक्ष्य सा । तदा शिवस्समीपस्थं सुन्दरं वीक्ष्य सुन्दरम् ॥ ११
गृहीत्वा विषमेनत्त्व पुनरागच्छ शीघ्रतः । इत्युक्त्वा प्रेषयामास गणनायवरं शिवः ॥ १२
शिवाज्ञयाऽयं निर्गत्य करे जग्राह तद्विषम् । रराज तत्कराब्जेऽस्य कोमले भृङ्गवत्तदा ॥ १३
सुन्दरस्तद्विषं शंभोर्ददौ हस्ते तदाज्ञया । पाणावस्य महेशस्य कस्तूरी बिन्दुवद्विषम् ॥ १४
संबभूव क्षणादेव तदा दक्ष प्रजापते । ततो देवान्निरीक्ष्यायं भीतभीतान्महेश्वरः ॥ १५
लेह्य किममरादूरात् क्षेप्तव्यं वा मयाऽथवा । परित्यक्तभया यूयं वदताश्च मदाज्ञया ॥ १६
इत्युवाच महादेवो महाग्रासो जितान्तकः । तस्य तद्वचनं श्रुत्वा ब्रह्मविष्णुपुरोगमाः ॥ १७
भगवन् दूरतः क्षिप्तं पुनरायास्यति क्षणात् । इति नो भीतिरधुना महती परिवर्तते ॥ १८
क्षणेनानेन घोरेण दग्धास्सर्वे जितान्तक । दृष्टैतच्छ्रीकरे स्वामिन् भवतो भीतिरद्य नः ॥ १९
सर्वज्ञस्त्वं दयासिन्धुस्सर्वरक्षापरायणः । मृत्युञ्जयः क्षियद्वीरः कालकालो महेश्वरः ॥ २०
यथोचितं समुद्वीक्ष्य रक्षदेवान् परात्पर । नमो नमस्ते रुद्राय सर्वभूतहितैषिणे ॥ २१
कालकालाय भवते सर्वरक्षाय (मक्षाय) शूलिने । इति स्तुत्वा प्रणेमुस्ते दण्डवत्परमेश्वरम् ॥ २२
शिवस्तदा शिवां वीक्ष्य स्मितवक्त्राम्बुजप्रभाम् । पपावेतत्कृपांभोधि . रखण्डानन्द विग्रहः ॥ २३
विषमेतन्महाघोर मानीलाभं यदा गळम् । द्रुतमाप तदा देवास्सर्वेप्यञ्जलिपाणयः ॥ २४
देवदेव दयासिन्धो भक्तवत्सल विश्वप । अनन्तमहिमाधार स्वतन्त्रानन्द विग्रह ॥ २५
ब्रह्मक्षत्रञ्च यस्याहुरोदनं ब्रह्मवादिनः । मारकृत्यशनं मृत्युं महाग्रासस्य शूलिनः ॥ २६
स्वतन्त्रशक्ते स्तत्कण्ठे शुद्धस्फटिक सन्निभे । स्तंभयाशु विषं घोर मलंकारस्त्वयाद्भुतः ॥ २७
अलङ्कार भगवन्स्तव कण्ठ यदा विषम् । अलङ्कुर्वन्ति देवश्रीकण्ठ मंगळयतन्तवः ॥ २८
देवानां विषदग्धानामस्माकं भवता प्रभो । विषं पीत्वा कृता रक्षा न च विस्मर्यते तत ॥ २९
इत्यादिवचनान्येते तदा प्राहुः प्रजापते । तथेति तद्गळे शंभुः स्तंभया...

स्वतन्त्रशक्तेरीशस्य महिमा केन वर्ण्यते (गण्यते) । ततो देवास्सुसंतुष्टा स्तुष्टुः परमेश्वरम् ॥ ३१
नमो नमस्ते देवेश नीलग्रीवाय शंभवे । पशूनां पतये तुभ्यं देवानां प्राणदायिने ॥ ३२
प्राणेश्वराय रुद्राय नमस्ते कृत्तिवाससे । अद्यप्रभृति लोकोऽयं भगवन्तं महेश्वरम् ॥ ३३
त्वां विजानातु सततं नीलकण्ठं दयानिधे । स्तोत्रेणानेन सन्तुष्टो भगवान् परमेश्वरः ॥ ३४
मथित्वा यूयममराः क्षीरांबोधिं मदाज्ञया । पीयूषं मथनोद्भूतं पिबत त्यक्तशंकया ॥ ३५
भविष्यति न संदेहः पीयूषमतुलं क्षणात् । इत्युवाच सुरान्वीक्ष्य दयया परमेश्वरः ॥ ३६
ततो देवास्तु सन्तुष्टाः प्रणम्य गिरिजापतिम् । गत्वा ममन्थुः क्षीराब्धिं लब्ध्वाऽमृतमनुत्तमम् ॥
पपुस्सर्वेऽमृतत्वाय शिवाज्ञापरिचोदिताः ॥ ३७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे सप्तदशोऽध्यायः ॥

---

॥ अथ अष्टादशोऽध्यायः ॥

ब्रह्मविष्ण्वोः पुरतः शिवाविर्भावः ॥

आख्यानमेतद्भवते दक्षाभिहितं मया । सर्वदेवपरित्राणं विषं पीत्वाऽकरोच्छिवः ॥ १
भिक्षाटनचरित्रञ्च प्रतिग्रामं प्रजापते । अतश्शृणु वृथा मोहं परित्यक्त्वाऽवधानतः ॥ २
पुरा हरिविधातारौ मेरुपार्श्वस्थितावुभौ । तदा देवाश्च ऋषयः सन्देहाविष्टमानसाः ॥ ३
प्रणम्य तौ समभ्येत्य पप्रच्छुश्च कुतूहलात् । कोदेवस्सर्वदेवानां वरिष्ठो व्यापकः प्रभुः ॥ ४
अन्तर्यामी परञ्ज्योतिः परमात्मा परात्परः । स्रष्टा च सर्वभूतानां पालको हारकस्तथा ॥ ५
इति तेषां वचश्श्रुत्वा ब्रह्मा प्राह वचस्तदा । अहमेव जगत्कर्ता मत्तस्सर्वं विचेष्टते ॥ ६
लयमेष्यति मय्येव जगदन्ते मदाज्ञया । इति ब्रुवाणं ब्रह्माणं वीक्ष्य प्राह वचो हरिः ॥ ७
निर्माय त्वामहं पूर्वं सृजामि विसृजाम्यदः । नान्यतोऽस्ति जगत्कर्ता मत्तस्सर्वंहि जायते ॥ ८
जगन्मूलमहं यस्मात्सर्वं विष्णुमयञ्जगत् । अन्योन्यमेवममरौ महामोहवशंगतौ ॥ ९
अहमेव परं ब्रह्म न त्वमित्यूचतुस्तदा । पुनःपुनरभूद्देवौ बहुकालं प्रजापते ॥ १०
तदा सर्वेऽपि तत्रस्था भीता जग्मुर्निजालयान् । पुनर्बहुतिथे काले गते प्रणवपूर्वकः ॥ ११
समागत्याह भगवान्वेदस्तत्वार्थबोधकः । हरे विधे वृथा किंवा युवाभ्यां क्रियते कलिः ॥ १२
शिव एव जगत्कर्ता परमात्मा महेश्वरः । विश्वाधिको विश्वमयो रुद्र एव महानृषिः ॥ १३
सर्वैश्वर्येण संपन्नश्शंभुराकाशमध्यगः । अणोरणीयानीशानो महतोऽपि महानयम् ॥ १४
मतीनाञ्जनिता सोऽयमुमया सहितः प्रभुः । दिवश्च जनिता ब्रह्मशक्रविष्णोरपि स्वयम् ॥ १५
एवं वेदवचश्श्रुत्वाऽप्येतौ मोहपरायणौ । अगणय्य यथापूर्वञ्चक्रतुः कलहं पुनः ॥ १६
ततः प्रादुरभूद्देवः परमात्मा महेश्वरः । अहङ्कारवशादेतौ खिन्नौ नूनं भविष्यतः ॥ १७
गर्वो मयाऽपनेतव्य स्सुरयोरेतयोरिह । इति कोट्यर्कसंकाशं ज्योतीरूपं शिवस्तदा ॥ १८
दृष्टौ तौ तत्परञ्ज्योति र्व्योम्नि सर्वाक्षिवारकम् । किमेतदिति भीतौ तौ विचारञ्चापतुर्भृशम् ॥ १९
तदानीमंबया साकं शिवः स्वं रूपमद्भुतम् । दर्शनं प्रददौ शीघ्रं ब्रह्मविष्ण्वोर्महेश्वरः ॥ २०

अथ दृष्ट्वा महादेवमंबिकापतिमव्ययम् । हरिरुत्थाय वेगेन नमस्कृत्वा पुनः पुनः ॥
स्तुत्वा स्तोत्रशतैर्देवं क्षीराब्धिमगमत्स्वयम् ॥ २१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे अष्टादशोऽध्यायः ॥

---

॥ अथ एकोनविंशोऽध्यायः ॥

भैरवेण ब्रह्मशिरः खण्डनम् ॥

गते विष्णौ प्रणम्येशं क्षीराब्धिं तरसा भयात् । महामोहवशाद्ब्रह्मा त्वप्रणम्य महेश्वरम् ॥ १
ऊर्ध्वं वक्त्रेण देवेशं निन्दयामास मूढधीः । तदा सस्मार देवेशो भैरवं कोपविह्वलः ॥ २
आविरासीत्तदा शीघ्रं भैरवश्शंकराज्ञया । भस्मोद्धूलितसर्वाङ्गो भुजंगकटिसूत्रवान् ॥ ३
शिञ्जन्मञ्जीरनिनदः कपालावलिभूषितः । बिभ्राणः परमं शूलं पाशं डमरुकं तथा ॥ ४
वृत्तघोरस्फुरन्नेत्रो महाघोरकपालवान् । रक्ताभिर्विकृताभिश्च जटाभिरतिभीषणः ॥ ५
मसिप्रकाशसर्वाङ्गो मन्दस्मितमनोहरः । ब्रह्माण्डान्यखिलान्याशु भक्षितुञ्च परीवृढः ॥ ६
तादृशोऽयं महादेवं प्रणम्य प्रश्रयानतः । कर्तव्यं किं मया स्वामिन्नाज्ञापय जगत्प्रभो ॥ ७
कृपां कुरु मयीश त्वं किङ्करे तव शंकर । इत्युक्तवन्तं तं वीक्ष्य प्राह वाचं महेश्वरः ॥ ८
मन्मायामोहितस्यास्य ब्रह्मणो मद्विनिन्दकम् । छित्वा शिरस्त्वं देवानां विष्णवादीनाञ्च गर्विणाम ॥ ९
ऋषीणामपि रक्तानि भिक्षाव्याजेन शीघ्रतः । गृहीत्वा पुनरुज्जीव्य मृतानप्यथ भैरव ॥ १०
गत्वा स्वभवने तिष्ठ ब्रह्माण्डोर्ध्वे मदाज्ञया । देवतानामृषीणाञ्च रक्षां कुर्वन्सतन्द्रितः ॥ ११
इति संप्रेषयित्वैनमन्तर्धिमगमच्छिवः । वृत्तान्तमेतद्विज्ञाय विचारेण स्थितो हरिः ॥ १२
ततस्तु भैरवः कोपाद्ब्रह्मणः पञ्चमं शिरः । चिच्छेद सुमहाटोपः करजाग्रेण भीषणः ॥ १३
स पपात महीपृष्ठे ब्रह्मा रक्तप्रवाप्लुतः । मुमोह च क्षणेनायं रुधिरौघे प्रजापतिः ॥ १४
शोषयित्वाऽस्य रक्तानि भैरवो निर्विलेक्षणः । पुनरुज्जीवयामास भैरवस्तं कृपादृशा ॥ १५
समुत्थाय ततश्शीघ्रं ब्रह्मा ज्ञात्वाऽस्य वैभवम् । गतमोहः प्रणम्यैनं तुष्टाव भयकंपितः ॥ १६
क्षमस्व मन्तुं देवेश महामूढस्य मे विभो । पुनर्माभवतु स्वामिन्ममाज्ञानं तवाज्ञया ॥ १७
तदर्थे मच्छिरोमुण्डं पात्रीकुरु दयानिधे । करस्थं मत्कपालं ते भिक्षापात्रं भवत्वलम् ॥ १८
अनेनैव कपालेन रक्तभिक्षां गृहाण भो । इत्युक्त्वा प्रणनामायं पुनः पुनरमुं विधिः ॥ १९
तथेति तद्गृहीत्वायं निर्ययौ मेरुपर्वतात् । ततस्ससर्ज भूतानि स्वेच्छया भैरवः क्षणात् ॥ २०
हालाहलं कालवेगं तथाग्निमुखसोमकौ । अन्यानतिबलानीशो भूतसेनापतीनपि ॥ २१
भूतैरनेकैस्सेनेशैः युतोऽयं कालभैरवः । रक्तभिक्षाच्छलेनायं भूलोकं सञ्चरंस्तथा ॥ २२
काननेषु च सर्वेषु पर्वतेषु महत्स्वपि । पाताळे नागलोके च देवलोके तथैव च ॥ २३
तत्र स्थितानां देवानां मुनीनां गर्विणामयम् । जग्राह तेषां रक्तानि कपालेनैव भैरवः ॥ २४
मृतानपि तदा कांश्चि ज्जीवयामास लीलया । अटित्वा सर्वतो भिक्षां विष्णुलोकं समाययौ ॥ २५
तरसा भूतसैन्यानि वारयाणि तदा भृशम् । प्रापुर्विष्णोर्गृहद्वारं विष्वक्सेनगणास्थितम् ॥ २६

करोध तानि गणपो विष्वक्सेनोऽतिनिष्ठुर । तमेन भैरवश्शीघ्र सन्ताड्य च कपोलयो ॥ २७
प्रोतयित्वा स्वशूलाग्रे विष्णोरभ्याशमाययौ । तदा सर्वभ्रम विष्णु भोगशायी महाभयात् ॥ २८
समुत्थाय प्रणम्यैन श्रीभूमिभ्या सह स्तुवन् । तत प्रोवाच तं विष्णु भैरव वीक्ष्य भीषणम् ॥ २९
किमर्थमागतोऽसित्व भक्तानामभयप्रद । त्वद्दर्शनेनदेवाह कृतार्थोऽस्मि जगद्गुरो ॥ ३०
रक्षमा करुणामूर्ते भवदेकसमाश्रयम् । इत्युक्तवन्त त प्राह भैरवो मधुसूदनम् ॥ ३१
काङ्क्षित्वा तव रक्तानि शिरसोऽह समागत । भिक्षाव्याजेन तद्देहि शीघ्रमेव हरेऽधुना ॥ ३२
इति तस्य वच श्रुत्वा कृतार्थोऽस्मीति माधव । भित्वा नखेन निटिल रुधिराणि मुमोच ह ॥ ३३
जग्राह तानि सर्वाणि कपालेनैव भैरव । महत्या धारयाब्दाना निजसाहस्र संख्यया ॥ ३४
पपात पश्चान्नीरक्तो माधवो मोहविह्वल । परिपूर्ण तथाप्येतत्कपाल नार्धमाभत ॥ ३५
पतितत्तु महाविष्णु महामोहेन वीक्ष्य तम् । श्रीभूमी दु खदु खार्तं देव्यावभ्येत्य शीघ्रत ॥ ३६
आलभ्य पादौ पाणिभ्या भैरवस्य महात्मन । रक्षरक्ष दयामोघे विष्णु त्व भैरवेश्वर ॥ ३७
माङ्गल्यभिक्षा भगवन्नावयोर्देहि शीघ्रत । इति तुष्टुवतुर्देव्यौ वदान्यन्त महेश्वरम् ॥ ३८
तत प्रसन्नो भगवान् भैरवो वीक्ष्य माधवम् । कृपयोज्जीवयामास करुणामृतसागर ॥ ३९
समुत्थित स्ततो विष्णु र्लब्धज्ञानोऽस्तवीत्प्रभुम् । स्तुवन्त, त समीक्ष्याथ कृपया भैरवो हरिम् ॥ ४०
पुन स्वभुवनायाय निर्ययौ कालभैरव । महता वाद्यघोषेण गणानामारवेण च ॥ ४१
यान्त त भैरव विष्णुरन्वयाद्दूरमागत । प्रणम्यभैरव स्तुत्वा शूलप्रोत स्वक गणम् ॥ ४२
विष्वक्सेन मोचयित्वा स्वावासं प्राप माधव । भैरवोऽपि स्वभवन गणै प्राप महारवै ॥ ४३
शिवाज्ञयाय संहृत्य ब्रह्मविष्णुमुखान्सुरान् । कल्पान्तरे जगत्सर्वं महाकोलाहलारव ॥ ४४
स्वेच्छयैषा शिरोमुण्डमालालङ्कृतविग्रह । दग्ध्वा ललाटनयनवह्निलेशेन तानिमान् ॥ ४५
तद्भस्मलेपिताङ्गोऽय भैरव पितृकानने । वेदान् सर्वान् सारमेयान् परिकल्प्य स्वतन्त्रत ॥ ४६
आरुह्य तानय भीमनिनद् स्ताहवौर्गणै । परीवृत परध्यात्वा परमानन्दनिर्भर ॥ ४७
विचरत्यतुलाकारो भैरवस्तत्रतत्रच । स ग्रामभिक्षा कृत्यैतत्कथित ते प्रजापते ॥
अन्यच्चरित्र मधुना ब्रवीमि तव शाङ्करम् ॥ ४८

इति श्री स्कान्दे महापुराणे शङ्करसंहिताया शिवरहस्यखण्डे
दक्षकाण्डे एकोनविंशोऽध्याय ॥

---

॥ अथ विंशोऽध्याय ॥

॥ धर्मविष्ण्वो ईश्वरवृषभ वाहनत्वप्राप्ति ॥

चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते । तावत्येव निशा प्रोक्ता तदहोरात्रसख्यया ॥ १
शतत्रय पष्ट्यधिक वर्षमेक सुनिश्चितम् । शतसवत्सरान्तेऽस्य वधमेति तदा विधि ॥ २
दिनमेक तदा विष्णोस्तावती रात्रिरस्य वै । वष्युत्तराणि त्रिशत दिनान्यस्यैकहायनम् ॥ ३
ततो वर्षशतस्यान्ते वधमेति हरिस्तदा । एव बहुना संहारे विष्णूना प्रलयो महान् ॥ ४
समायाति तमुद्वीक्ष्य धर्मोऽत्यन्त भयान्वित । प्रणम्य वृषमाकारस्तुष्टाव परमेश्वरम् ॥ ५

अथ शम्भो महादेव रक्षमां शरणागतम् । महासंहारकालोयमागमिष्यति शीघ्रतः ॥ ६
मुक्त्वा मां संहरेशान तदा सर्वं जगत्प्रभो । इति स्तोत्रशतैः स्तुत्वा प्रार्थयामास शंकरं ॥ ७
ततः प्रसन्नो भगवान् दत्वा तस्य वरं पुनः । वाहनं परिकल्प्यैनं बलं दत्वाऽस्य तादृशम् ॥ ८
नित्यत्वमपि दत्वाऽस्य कृतादिषु युगेषु च । परिकल्प्यच पादोन संचारं तं चतुष्पदम् ॥ ९
प्रीत्या परमया सोऽहं न्यवसामि त्वदात्मनि । सन्निधौ मम सर्वत्र निवस त्वं सुपावन ॥ १०
मामनाराध्य ये मर्त्याः पुण्यानि सुमहान्त्यपि । समाचरन्ति तान्याशु महापापफलाय वै ॥ ११
मद्भक्तानांच पापानि महापुण्यफलानि वै । भवन्तु धर्म त्वत्राहं यस्य भक्तस्य दृढधीः ॥ १२
यदानुग्रह मिच्छामि तदा त्वं वृषरूपभाक् । समागच्छ महासत्व ममाज्ञां शिरसा वहन् ॥ १३
इत्यायुक्त्वा महादेवो वाहनं तं विधाय सः । प्रेरयामास तच्छ्रुत्वा विष्णुं स्सर्वजगन्मयः ॥ १४
वृषरूपी महादेवमुवाह त्रिपुरान्तकम् । यदा त्रिपुरसंहारं कृतवान्परमेश्वरः ॥
अत एव महादेवो वृषवाहः प्रजापते ॥ १५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखंडे
वृषकाण्डे विंशोऽध्यायः ॥

---

॥ अथ एकविंशोऽध्यायः ॥

॥ शिवेन महासंहारकाले भस्मास्थ्यादि धारणम् ॥

अन्यच्चरित्रमतुलं महादेवस्य पावनम् । ब्रवीमि शृणु दक्ष त्वमवधानेन केवलम् ॥ १
कालाग्निरुद्रो भगवान् सरुद्रो भैरवोऽपिच । सर्वं सञ्जहतुश्शंभो राज्ञया तौ महाबलौ ॥ २
अवान्तराख्यसंहार स्सतुक्षेप। प्रजापते । सर्वग्रासो महादेव स्सर्वाण्डान्यखिलं जगत् ॥ ३
सर्वान् जीवान्वीक्षणेन हासेन च परान् क्रुधा । अट्टहासेन नृत्तेन ललाटनयनाग्निना ॥ ४
हुङ्कारेण च हस्तेन पादाघातेन लीलया । नानारुद्र गणैस्साकं संहारं यं चकार स। ॥ ५
स महाप्रळयो नाम सर्वेषां नाशकारकः । संहर्ता स महादेव स्सदानन्तान् हरीन् विधीन् ॥ ६
इन्द्रादीनपरान् देवांस्तत्तदण्डेषु संस्थितान् । दग्ध्वाकांश्चित्तदा तेषां भस्मानि परमेश्वरः ॥ ७
अवालेपयदात्मांगमुद्धूळनविधानतः । बभार मुण्डमालाश्च परेषां स्वेच्छया विभुः ॥ ८
अस्थीनितेषामाकल्पं वितताम महेश्वरः । यज्ञोपवीतमन्येषां मूर्धजानि चकारहि ॥ ९
तथा विष्णून् परान्कूले संविधाय विधीनपि । साट्टहासपरो नृत्तमारब्देन चकारहि ॥ १०
सर्वभूतैकदमन स्साक्षाच्छिन्नमूर्तिरव्ययः । भक्तिहीना महादेवे ये तदा प्रळये हताः ॥ ११
तदुद्भूतैः पिशाचैश्च परितोऽयं परीवृतः । गाढान्धकारमध्यस्थः केवलो हृष्टमानसः ॥ १२
महाश्मशानदहनमध्ये नृत्यति कुत्रचित् । लीलया तान् पिशाचांश्च हत्वा केवलएव सः ॥ १३
पुनश्च तं व्यतीत्यैनं महाप्रळयमीश्वरः । परानन्दयशेनायं देव्याः पुरतएव सः ॥ १४
विधायच महानृत्तं पश्यन्त्याः केवलं शिवः । ततस्ससर्ज भूतानि सिसृक्षा शक्तिसंयुतः ॥ १५
ब्रह्माण्डानिच सर्वाणि तत्तल्लोकान्यथा पुरा । तेषु सर्वेषु चाण्डेषु विष्णूनपि विधीन् बहून् ॥ १६
बाह्मणोऽपि तथा सर्वानसुराग्राक्षसानपि । अधिकारञ्च सर्वेषामानुगुण्यतया शिवः ॥ १७

दत्वा सदर्हविद्यानामुपदेशश्चकार स । अत एव महाप्राज्ञ प्रथित परमेश्वर ॥ १८
अस्थिभूषणमाहात्म्यमपि ते वच्म्यहं शृणु । पुरा विष्णुमुखा देवा प्रणम्य गिरिजापतिम् ॥ १९
तपसाऽऽराध्य देवेश प्रार्थयामासुरीश्वरम् । हरशम्भो महादेव विश्वेशामरनायक ॥ २०
महाप्रळयकालोऽयमागमिष्यति विश्वप । व्यतीतानि च जन्मानि बहून्यस्माकमीश्वर ॥ २१
न पुनर्जनने शक्ति खिन्नाना सस्मृतौ प्रभो । तव पादाम्बुजध्यानान्मोक्षो भवतु सस्मृते ॥ २२
अस्मिन्महति ससारे हत्वाऽस्मान् करुणाकर । संगृह्य तेषामस्थीनि चाकल्प परिकल्पय ॥ २३
समादाय तथा भस्मान्युद्धूळय प्रभो । तथा कृतश्चेन्मोक्षोऽपि सुलभो न कृपानिधे ॥ २४
या धृता भवता जह्नुकन्या लोके सुपावनी । तस्या यदीयान्यस्थीनि प्रक्षिप्तानि महीतले ॥ २५
तेषामपि महादेव मुक्तिर्भवतिहि प्रभो । तस्मादस्मान् कृपासिन्धो रक्ष संसृतिमध्यगान् ॥ २६
तैरेव प्रार्थितो देवस्तथैव कृपयाऽकरोत् । अतस्सुराणा रक्षार्थं भस्मास्थीनि दधौ विभु ॥ २७
कालकाल स्वयञ्ज्योति परमात्मा महेश्वर । जरामरणनिर्मुक्त स्सर्वेशानमयदिशत ॥ २८

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकविंशोऽध्याय ॥

---

॥ अथ द्वाविंशोऽध्याय ॥

जलन्धरासुर वध ॥

चरित देवदेवस्य सहारादि प्रजापते । मयाभिहित पुण्य शृणु चान्यद्वदाम्यहम् ॥ १
पुरा महवान् कैलासे शिवसेवार्थमागत । सावलेपस्तदा द्वारि शम्भु प्रमथरूपभाक ॥ २
तस्थे तत्र स्वय त तु वीक्ष्य द्वास्थ पुरन्दर । कोवा महेशसमय पप्रच्छैवमहङ्कृत ॥ ३
अनुक्त्वोत्तरमस्याय क्रुधा समवलोकयत् । त वीक्ष्य वज्री कोपेन मुमोच कुलिश पुन ॥ ४
तस्योरसि पतित्वैत च्छिन्नातलसुनिष्ठुरे । रेणुतामगमच्छीघ्राद्भमद्विस्फुलिङ्गान् बहून् ॥ ५
स्वरूपमाशु जग्राह रौद्र पश्चान्महेश्वर । ज्ञात्वाऽमु वृत्रहा शम्भु प्रणम्य भयकम्पित ॥ ६
क्षमस्व मन्तु देवेश सर्वभूतदयापर । इति स्तोत्रशतै स्तुत्वा प्रसादयदसौ शिवम् ॥ ७
तत प्रसन्नो भगवान्वृत्रारिं प्रेक्ष्य शङ्कर । मास्तु भीतिस्तवेन्द्राद्य प्रसन्न विद्धि मामिह ॥ ८
इत्यनुग्राह्य देवेन्द्र प्रेषयित्वा पुर प्रति । निजकोपानल सिन्धौ क्षिप्त्वा करुणया शिव । ९
माविवेशालय शीघ्रात्तदैव परमेश्वर । स तु कोपानल दशभो दिशशुर्भूंचा हरोद ह । १०
सर्वांश्चापि शब्दोऽथ देवैरन्यैस्तपोधनै । तच्छ्रुत्वा वरुणोऽभ्येत्य गृहीत्वाऽमुमपोषयत् ॥ ११
दिनेदिने शिशुस्तस्य ववृधे मन्दिरेऽम्पते । धाता समागत कालाहरणस्य गृह स्वयम् ॥ १२
तदा त वरुणस्तस्य हस्त धातु ददौ शिशुम् । गृहीत्वा द्रुहिणा बाल स्वाङ्कमारोपयद्विभु ॥ १३
बालोऽथ पाणिना धातु श्मश्रूणि परिगृह्य च । कर्षयामास बल्वाम्नोदनेन समन्वित ॥ १४
ब्रह्मा – समरे ब्रह्मविष्ण्वादीन्विजयिष्यत्यसशयम् । नास्य शापात् भय यत्र कुमरा महतामपि ॥ १५
ख्याति जलधर इति त्रिषु लोकेषु चैष्यति । धैर्यशौर्यगुणोपेतो महासत्वो महाबल ॥ १६
जित्वाऽमरपुरीमुग्रो दैत्यराज्य प्रयच्छति । एवमुक्त्वा विधिरगान्निजागारं मनोहरम् ॥ १७

जलन्धरः पुनः कालं कियन्तं वरुणान्तिके । स्थित्वा ततोऽसुरान् घोरान्मेळयित्वा महीमगात् ॥ १८
जित्वा दिशांपतीन् सर्वानसुराणां सुरालयम् । दत्वा जालंधरं नाम नगरं मयनिर्मितम् ॥ १९
अधिष्ठाय महावीर्यो जिताशेषसपत्नवान् । कालेन कालनेम्याख्यदैत्यस्यच सुतामयम् ॥ २०
वृन्दां विवाह्य सन्तोष मवाप्य परमं ततः । पुनः कालेन महता देवान्मेरुसमाश्रितान् ॥ २१
ज्ञात्वा गत्वाऽत्र तान्सर्वान्युद्धे जित्वा हरिं पुनः । देवतानां सहायं च कुर्वाणं युद्धमध्यगम् ॥ २२
युयोध विंशतिसमा स्सहस्राणामरिंदमः । धर्मिणं तं मुमोचायं स्वकीर्तनरतं बली ॥ २३
ततो देवा भयत्रस्ता स्सेन्द्राः कैलासमाश्रिताः । गत्वा स्वनगरं दैत्यस्तत्र स्थित्वा चिरंपुनः ॥ २४
स्वसेनाभि र्ययौ क्रूरः कैलासं पर्वतोत्तमम् । वृन्दाया वचनं पत्न्या निरुन्धत्या महासुरः ॥ २५
अगणय्यातिसंरंभाद्यत्र देवा भयद्रुताः । तदागमं ततो देवा ज्ञात्वात्यन्तं भयान्विताः ॥ २६
प्रणम्य नन्दिनं द्वाःस्थं महादेवस्य पावनम् । विविशुर्मन्दिरं देवदेवस्यैते तदाज्ञया ॥ २७
तत्र दृष्ट्वा महादेवं सर्वसंसारमोचकम् । प्रणम्य दण्डवद्भक्त्या तुष्टुवुः स्तुतिभिस्तदाम् ॥ २८
वृत्तान्तमखिलं प्रोचुः पृच्छते शंकराय ते । तदा देवोऽभयं दत्वा देवानां परमेश्वरः ॥ २९
स्वयं द्विजाकृतिर्भूत्वा निर्ययौ पुरतोऽस्य सः । दण्डी, कमण्डलुकरो धृतच्छत्रो ऋषिर्यथा ॥ ३०
अनुयातस्सुरैस्सर्वैरिन्द्राद्यैश्छद्मवेषिभिः । जलन्धरस्य निकटमापायं द्विजसत्तमः ॥ ३१
दृष्ट्वा जलन्धरं देवः को भवान् कुत आगतः । कुत्रवा गम्यते सर्वं पप्रच्छेदं महेश्वरः ॥ ३२
जलंधराख्योऽहं जित्वा देवान्सर्वान्रणांकणे । गच्छामि शंकरं जेतुं कैलासमधुनाऽचलम् ॥ ३३
इत्युवाच तदा शंभु र्विहस्यामुं वचोऽब्रवीत् । कोवा योद्धुमलं शंभुं क्षपद्वीरं पिनाकिनम् ॥ ३४
मनसा स्मर्यते येन योद्धुं सोऽपि पराभवम् । प्राप्नोति नात्र सन्देहस्तं सञ्जेतुं कथं प्रभुः ॥ ३५
निवसामि महेशस्य निकटेऽहं जलंधर । पुनर्गच्छ यथामार्गं यदि जीवनमिच्छसि ॥ ३६
समाकर्ण्य वचस्तस्य विप्रस्यायं जलन्धरः । न जानासि बलं विप्र मदीयं त्वं दुरासदम् ॥ ३७
प्रदर्शयामि तद्विप्र क्षणमात्रेण भूसुराः । इति संरम्भवचनं क्रुद्धस्य द्विजसत्तमः ॥ ३८
जलन्धरस्य पापस्य विप्ररूपो निशम्य सः । बलं त्वत्कीदृशं दैत्य तावकं वीक्षितुं मम ॥ ३९
कुतूहलमतस्त्वंतु चक्रमेतत्स्वमूर्धनि । उद्धृत्य पाणियुग्मेन समारोपय मत्पुरः ॥ ४०
इत्युक्त्वा विलिलेखायं पादाङ्गुष्ठेन तत्क्षितौ । दृष्ट्वा तच्चक्रमसुरो भूगतंप्राह चद्विजम् ॥ ४१
मया विद्राविता देवा महाविष्ण्वादयो रणे । पुरा करेणाहमयं वाडवं क्षणमात्रतः ॥ ४२
शोषितास्सागरास्सर्वे गिरयः कन्दुकीकृताः । कोऽतिभारोऽस्य मे समुद्धर्तुं तदिदं द्विज ॥ ४३
इत्युक्त्वोद्धृत्य पाणिभ्यां स तदारोप्य वक्षसि । बलेन महता मूर्ध्नि पुनरारोपयत् क्षणात् ॥ ४४
द्विधाकृत्या पपातैनं तच्चक्रं भूतले जवात् । रक्तस्रावो महानासीत्तदानीं तत्रवेगवान् ॥ ४५
जलंधरः पपाताशु क्षितौ पर्वतवत् द्विधा । ममारच पुनस्त्वीशं विलुठन् भूतलेऽसुरः । ४६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे द्वाविंशोऽध्यायः ॥

---

॥ अथ त्रयोविंशोऽध्यायः ॥

वृन्दाभस्मनि तुळस्युत्पत्तिः ॥

मृते तस्मिन्महाघोरे सेनास्तस्य महेश्वरः । ददाह वीक्ष्य निटिलवह्निना त्रिपुरान्तकः ॥ १
भस्ममात्रावशेषाः स्युस्सेनास्तस्य दुरात्मनः । पुनः स्वरूपमतुलं जग्राह स्वेच्छया विभुः ॥ २
तदा ब्रह्मादयो देवास्सेन्द्रा दृष्ट्वा महेश्वरम् । प्रणेमुर्दण्डवद्भूमौ स्तुत्वा स्तोत्रैरनेकधा ॥ ३
वीक्ष्य तान् कृपया शंभुः प्रेषयित्वा पदं प्रति । अन्तःपुरं ययौ तूर्णमखण्डानन्दविग्रहः ॥ ४
मृते जलन्धरे घोरे पुनःकालेन माधवः । वृन्दां सस्मार वशगः स्मरस्यासुरगेहिनीम् ॥ ५
गृहारामं विवेशायं विष्णुस्तस्याः स्मरातुरः । तपोव्याजेन तस्थेऽत्र ऋषिरूपी जनार्दनः ॥ ६
वृन्दा वृत्तान्तमज्ञात्वा भर्तुर्विरहकर्शिता । कालक्षेपं तदा कर्तुं गृहारामं समागता ॥ ७
ततो विष्णुगणौ तत्र सिंहरूपौ महाबलौ । द्रावयामासतुस्तां तौ विष्णुना परिचोदितौ ॥ ८
सा तु वीक्ष्य तदा घोरौ ऋषेरभ्याशमागता । तां दृष्ट्वा भयविभ्रस्तां सिंहाभ्यां विद्रुतामृषिः ॥ ९
मास्तु भीतिर्वरारोहे रक्षकं विद्धि मामिह । इत्युक्त्वा माधव सिंहौ तौ न्यवारयदञ्जसा ॥ १०
ऋषिमेनं त्रिकालज्ञं ज्ञात्वा वृन्दा तदैव सा । भर्तारं शंकरं योद्धुं ययौ कैलासपर्वतम् ॥ ११
जीवत्यथ किं नाशं वा प्राप्तवान् ज्ञायते न हि । तद्वृत्तान्तं मम ब्रूहि सर्वज्ञो हि तपोधन ॥ १२
इत्युक्तवत्यामेतस्यां माधवो वीक्ष्य किंकरौ । प्रेषयामास गणपावानेतुं तं मृतंऋषिः ॥ १३
तौ तदा गणपौ सिंहरूपौ मर्कटरूपिणौ । भूत्वा जलधरं घोरं द्विधाभूतं मृतं क्षितौ ॥ १४
गृहीत्वा पुरतस्तस्याः सन्न्यवेशयतामुभौ । सा तु वीक्ष्य पतिं वृन्दा गतप्राणं द्विधाहृतम् ॥ १५
पतित्वा स्वपतौ दुःखाद्विललाप प्रजापते । तां तदा वीक्ष्य मधुभित् पुनराश्वास्य दुःखिताम् ॥ १६
मृतोऽपि तव भर्ताऽयं पुनर्जीवनमेष्यति । इत्युक्त्वा तां स्वयं छन्नस्तद्देहं प्रविवेश ह ॥ १७
उत्तस्थे सहसा विष्णुर्जलन्धरसमाह्वयः । सा तु भर्तारमेवैनं ज्ञात्वा शोकं विसृज्य तम् ॥ १८
समालिङ्ग्यातिमोहेन निर्वृतिं च परां ययौ । न ददर्श पुनः क्षिप्रमाश्रमं मर्कटावपि ॥ १९
रेमे तया हरिरयं बहुकालमतन्द्रितः । जालन्धरं शरीरं तदनुविष्टो यथेच्छया ॥ २०
गते बहुतिथे काले विष्णुर्मायां प्रमादतः । अवमृश्य व्यवसायेन तदाऽज्ञासीदरिन्दमः ॥ २१
तदानीमेव सा वृन्दा तं विज्ञाय हरिं स्वयम् । परकायं प्रविश्य त्वं मायया मां पतिव्रताम् ॥ २२
परदारान् गतव्रीडो भुक्तवान्मदनातुरः । ततश्चार्यप्रदिशिनी विष्णो रिपुर्गृहात्तु यत्नवान् ॥ २३
मर्कटाख्यौ यतः स्नेहो बभूव सह माधव । मर्कटैस्सह सञ्चारस्तव भूयात्ततोऽपि वा ॥ २४
इति शप्त्वैव हरिं वृन्दा विवेशाग्निं महाशुचा । तद्भस्मनि हरिः पर्यन् तदालोकनतत्परः ॥ २५
स्मरातुर स्मराऽऽक्रान्त तत्रतस्थे श्मशानके । लोकयात्राञ्च विसृज्य ध्यानतत्परमुद्गमः ॥ २६
तदा ब्रह्मादयो देवाश्चरितं माधवस्य ते । विज्ञाय विश्वभर्तारं महादेवं व्यजिज्ञपन् ॥ २७
श्रीमत्कैलासनिलय सच्चिदानन्दरूपिणम् । पुनश्च प्रार्थयामासुः विश्वेशममरा भृशम् ॥ २८
प्रसीद परमेशान सच्चिदानन्द विग्रह । स्मरस्वहरिं शंभो वृन्दायां मदनातुरम् ॥ २९
इति संप्रार्थितः स्तावस्तुतैर्देवैः करुणाकरः । तथेति गौरीं पार्श्वस्थामथालोक्य महेश्वरः ॥ ३०
सा तु बीजं कनिष्ठायां वामपाणेः किमप्यहो । निर्माय प्रददौ हस्ते रम्यं तद्बीजमद्भुतम् ॥ ३१
गौरीदत्तं बीजं तद् वृन्दायाः श्मशाने तत्र शीघ्रतः । उप्त्वा पोष्य पीयूषधारयानुदिनं पिपे ॥ ३२

जलन्धरः पुनः कालं कियन्तं वरुणान्तिके । स्थित्वा ततोऽसुरान् घोरान्मेळयित्वा महीमगात् ॥ १८
जित्वा दिशांपतीन् सर्वानसुराणां सुरालयम् । दत्वा जालंधरं नाम नगरं मयनिर्मितम् ॥ १९
अधिष्ठाय महावीर्यो जिताशेषसपत्नवान् । कालेन कालनेम्याख्यदैत्यस्य च सुतामयम् ॥ २०
वृन्दां विवाह्य सन्तोष मवाप्य परमं ततः । पुनः कालेन महता देवान्मेरुसमाश्रितान् ॥ २१
ज्ञात्वा गत्वाऽत्र तान्सर्वान्युद्धे जित्वा हरिं पुनः । देवतानां सहायं च कुर्वाणं युद्धमध्यगम् ॥ २२
युयोध विंशतिसमा स्सहस्राणामरिंदमः । धर्मिणं तं मुमोचायं स्वकीर्तनरतं बली ॥ २३
ततो देवा भयत्रस्ता स्सेन्द्राः कैलासमाश्रिताः । गत्वा स्वनगरं दैत्यस्तत्र स्थित्वा चिरंपुनः ॥ २४
ससेनाभि र्ययौ क्रूरः कैलासं पर्वतोत्तमम् । वृन्दाया वचनं पत्न्या निहन्घत्या महासुरः ॥ २५
अगणय्यातिसंरंभाद्यत्र देवा भयद्रुताः । तदागमं ततो देवा ज्ञात्वात्यन्तं भयान्विताः ॥ २६
प्रणम्य नन्दिनं द्वाःस्थं महादेवस्य पावनम् । विविशुर्मन्दिरं देवदेवस्यैते तदाज्ञया ॥ २७
तत्र दृष्ट्वा महादेवं सर्वसंसारमोचकम् । प्रणम्य दण्डवद्भक्त्या तुष्टुवुः स्तुतिभिस्तदा ॥ २८
वृत्तान्तमखिलं प्रोचुः पृच्छते शंकराय ते । तदा देवोऽभयं दत्वा देवानां परमेश्वरः ॥ २९
स्वयं द्विजाकृतिर्भूत्वा निर्ययौ पुरतोऽस्य सः । दण्डी, कमण्डलुकरो धृतच्छत्रो ऋषिर्यथा ॥ ३०
अनुयातस्सुरैस्सर्वैरिन्द्राद्यैश्छद्मवेषिभिः । जलन्धरस्य निकटमापायं द्विजसत्तमः ॥ ३१
दृष्ट्वा जलन्धरं देवः को भवान् कुत आगतः । कुत्रवा गम्यते सर्वं पप्रच्छैवं महेश्वरः ॥ ३२
जलंधराख्योऽहं जित्वा देवान्सर्वान्रणांकणे । गच्छामि शंकरं जेतुं कैलासमधुनाऽचलम् ॥ ३३
इत्युवाच ततश्शंभु र्विहस्यामुं वचोऽब्रवीत् । कोवा योद्धुमलं शंभुं क्षयद्वीरं पिनाकिनम् ॥ ३४
मनसा स्मर्यते येन योद्धुं सोऽपि पराभवम् । प्राप्नोति नात्र सन्देहस्तं सञ्जेतुं कथं प्रभुः ॥ ३५
निवसामि महेशस्य निकटेऽहं जलंधर । पुनर्गच्छ यथामार्गं यदि जीवनमिच्छसि ॥ ३६
समाकर्ण्य वचस्तस्य विप्रस्यायं जलन्धरः । न जानासि बलं विप्र मदीयं त्वं दुरासदम् ॥ ३७
प्रदर्शयामि तद्विप्र क्षणमात्रेण भूसुराः । इति संरम्भवचनं क्रुद्धस्य द्विजसत्तमः ॥ ३८
जलन्धरस्य पापस्य विप्ररूपो निशम्य सः । बलं त्वत्कीदृशं दैत्य तावकं वीक्षितुं मम ॥ ३९
कुतूहलमतस्त्वं तु चक्रमेतत्स्वमूर्धनि । उद्धृत्य पाणियुग्मेन समारोपय मत्पुरः ॥ ४०
इत्युक्त्वा विलिलेखायं पादाङ्गुष्टेन तत्क्षितौ । दृष्ट्वा तच्चक्रमसुरो भृगतंप्राह चद्विजम् ॥ ४१
मया विद्राविता देवा ब्रह्मविष्ण्वादयो रणे । पुरा करेणाश्मयं याडवं क्षणमात्रतः ॥ ४२
शोषितास्सागरास्सर्वे गिरयः कन्दुकीकृताः । कोऽतिभारोऽस्य मे चक्रमुद्धर्तुं तदिदं द्विज ॥ ४३
इत्युक्त्वोद्धृत्य पाणिभ्यां स तदारोप्य वक्षसि । यत्नेन महता मूर्ध्नि पुनरारोपयत् क्षणात् ॥ ४४
द्विधाकृत्वा पपातैनं तच्चक्रं भूतले जवात् । रक्तस्रावो महानासीत्तदानीं तत्रवेगवान् ॥ ४५
जलंधरः पपाताशु क्षितौ पर्वतवत् द्विधा । ममार च पुनश्शीघ्रं विलुठन् भूतलेऽसुरः । ४६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे द्वाविंशोऽध्यायः ॥

---

भविष्यत्यत्र तुलसी मनोज्ञा विष्णुवल्लभा । तां दृष्ट्वा माधवस्तस्यामासक्तहृदयस्सदा ॥ ३३
भविष्यति हरिं तस्याः पाणिं ग्राह्य पङ्कज । स तयाऽनुदिनं भोगान् भुक्त्वा स्वेच्छमतन्द्रितः ॥ ३४
भविष्यति परित्यक्तमोहोऽयं नूनमात्मभूः । बिभर्ति मालामतुलां शिरसा मधुसूदनः ॥ ३५
इत्थं मालाञ्च पत्नीञ्च करयिष्यत्यसंशयम् । स्वकृत्यंच हरिः पश्चात्करिष्यति विधे इह ॥ ३६
इत्युक्त्वा प्रेषयामास पङ्कजं परमेश्वरी । ततो ब्रह्मादयो गौरीं महादेवं प्रणम्य ते ॥ ३७
स्वपदानि ययु स्सर्वे प्रसन्नहृदया द्रुतम् । ब्रह्माचत्वरया तत्र गत्वा बीजं तदद्भुतम् ॥ ३८
स्थापयामास गौर्याज्ञां शिरसा संवहन्विभुः । तदानीमभवत्तत्र तुलसी सुमनोहरा ॥ ३९
तद्दर्शनेन विष्णोस्तु तद्दुःखं सहसा गतम् । विवाह्य तां हरिरपि पश्चात्तु तुलसीमिमाम् ॥ ४०
नित्यं संक्रीडयामास स्वेच्छया हृष्टमानसः । बभार तन्मयीं मालां शिरसा सुमनोहराम् ॥ ४१
गतमोहस्ततो गत्वा वैकुण्ठं स्वालयं हरिः । तत्र स्थित्वा स्वकृत्यंच कृत्वा कालेन माधवः ॥
तोषयित्वा महादेवं निजाक्षकमलार्चनैः ॥ ४२

चक्रं जलन्धरवधाय शिवेन पूर्वं यन्निर्मितं सवितृकोटिसमानकान्ति ।
लब्ध्वा तदद्भुतमयं हरिराप तुष्टिमित्थं विभोर्विविधरूपकथामयोक्ता ॥ ४३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे त्रयोविंशोऽध्यायः ॥

---

॥ अथ चतुर्विंशोऽध्यायः ॥

॥ शिवेन शिरसि गङ्गावहनम् ॥

पार्श्वे शिरसि भार्ये द्वे वहतीति महेश्वरः । यदुक्तं निन्दया पूर्वमुत्तरं शृणु तत्र च ॥ १
पुरा कैलासशिखरे पार्वती परमेश्वरे । छादयामास नयने पाणिभ्यां प्रणयक्रुधा ॥ २
तदा जगदिदं सर्वं तिमिरेण परिवृतम् । दृष्ट्वैतदद्भुतं गौरी भीतभीता तदा भृशम् ॥ ३
मुमोच पाणी तौ देवनयनाच्छादकावुभौ । स्वेदोद्भवस्तदा तत्र महानासीत्कराब्जयोः ॥ ४
स्रोतोभि र्दशभि गौर्याः क्षितं तत् स्वेदज जलम् । तदिदं क्षणमात्रेण व्यानशे सकलं जगत् ॥ ५
तदा विष्णुमुखा देवास्सर्वेऽपि भयकंपिताः । अकाण्डे प्रलयः कोऽयमिति चिन्तापरायणाः ॥ ६
महादेवं समाराध्य ह्यूचु परमः मुदा । रक्ष रक्ष महादेव जगदेतच्चराचरम् ॥ ७
अकाण्डप्रलयग्रस्यमानं शम्भो दयानिधे । इति स्तुतस्सुरैस्सर्वैः लोकसंरक्षणोद्यमः ॥ ८
शंभुस्तेषु दयां कृत्वा धृदाशय जलं महत् । जटायां रोम्णि चैकस्मिन् बभार जलबिन्दुवत् ॥ ९
दृष्ट्वैतदद्भुत विष्णुब्रह्मेन्द्राद्या स्सुरास्तदा । प्रणम्य दण्डवच्छंभुं स्तुत्वा बहुविधैः स्तवैः ॥ १०
भगवन् पावनी सेयं नदी गौरीकरोद्भवा । विधृता भवता यस्माज्जटायां परमेश्वर ॥ ११
दर्शनात् स्पर्शनात्तद्वत् भाषणान्मज्जनादपि । सर्वेषामपि जन्तूनां सदा पापप्रणाशिनी ॥ १२
अस्माकमस्या देवेश जलं किञ्चित्प्रयच्छ भो । इति ते ब्रह्मविष्ण्विन्द्राः पृथक् शंभोर्जलं मुदा ॥ १३
गृहीत्वा स्वेषु लोकेषु कल्पयामासुरञ्जसा । वैष्णवी प्रथिता लोके विष्णोस्सेयं सरिद्वरा ॥ १४
कमण्डलौ परा तद्वद्ब्रह्मा स्वीयां दधौ सदा । आकाशगङ्गा विख्याता स्वर्लोके या व्यवस्थिता ॥ १५

ततः कालेन महता ब्रह्मलोकेस्थितां नदीम् । भगीरथः प्रयत्नेन नयतिस्म क्षितौ यदा ॥ १६
तदा दधार तां शंभुः कल्लोलावलि भीषणाम् । शोषयामास तां द्रुतं जटायामेव शंकरः ॥ १७
पुनस्तां प्रार्थितस्तेन तत्यजेशस्सुरापगाम् । निर्ययौ सा महावेगान्महदूर्मिसमाकुला ॥ १८
भागीरथी महीमाप मुक्तमात्रेण शंभुना । सागरांस्तारयामास, संस्तब्धधैर्यपारगात् ॥ १९
स्नान्ति तस्यामिदानीं ये गङ्गायां शंकरस्रजि । ते मुक्तकिल्बिषा मोक्षमाप्नुवन्ति प्रजापते ॥ २०
इति गङ्गाधरस्यैतद्गङ्गाधारणमीरितम् । अन्यच्चरित्रमधुना शृणु दक्ष प्रजापते ॥ २१
पुरा ससर्ज सनकप्रमुखांश्चतुरो विधिः । ज्ञानिनस्ते तपोनिष्ठा विमुखास्सृष्टिकर्मणि ॥ २२
बभूवुस्तान् समुद्वीक्ष्य ब्रह्मा साकं मधुद्विषा । कैलासे देवमीशानं विज्ञापयितुमागतः ॥ २३
ऋषयस्सनकाद्याश्च तदा तत्र समागताः । संव्यज्ञापयतां वृत्तं तौ देवौ परमेश्वरम् ॥ २४
स्रष्टुं जगद्बलं नास्तीत्येवं तावूचतुस्तदा । तावुभौ शंकरः कोपाद्ददाह निटिलाक्षिणा ॥ २५
वामभागे ततो गौरीं विससर्ज महेश्वरः । तावपीशः पुनस्सृष्ट्वा लीलया विधिमाधवौ ॥ २६
इतः प्रभृति ते भूयाज्जगत्स्रष्टुं बलं विधे । शक्त्याऽनयाऽहं संयुक्तो विहरामि यतस्सदा ॥ २७
तद्गच्छ विष्णुना ब्रह्मन् सृज सर्वं यथा पुरा । इत्युक्त्वा प्रेषयामास तावुभौ परमेश्वरः ॥ २८
ततः प्रणम्य तौ देवं शिवां तां ज्ञानरूपिणीम् । ययतुः स्वपदं प्रीत्या तदाज्ञापरिचोदितौ ॥ २९
ससर्ज बहुधा ब्रह्मा जगत्सर्वमतन्द्रितः । जगत्पुष्ट्यर्थमीशोऽतच्छिवया दक्ष संयुतः ॥ ३०

साऽपि तस्य प्रभा सत्य (गौरी) ज्ञानानन्दस्वरूपिणः ।
न तयोर्विद्यते भेदश्चन्द्रचन्द्रिकयोरिव ॥ ३१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे चतुर्विंशोऽध्यायः ॥

---

॥ अथ पञ्चविंशोऽध्यायः ॥

मागधमुनेः गजमुखासुरोत्पत्तिः ॥

अजीजनच्छिवः पुत्रावित्युक्तं दक्ष यत्त्वया । तत्कथां वर्णयाम्यद्य शृणु त्वमवधानतः ॥ १
असुरेन्द्रः पुरा युद्धे द्रावितो वज्रिविष्णुना । मृतसेनस्स्वयं दुःखादेकोऽभ्याशं ययौ गुरोः ॥ २
आलोक्य शुक्रस्सहसा शान्तदृष्ट्या तदागमम् । असुरेन्द्र त्वया कार्यो न शोकोऽत्र मयि स्थिते ॥ ३
मागधाख्यो महायोगी वसिष्ठस्य कुलोद्भवः । तपस्यं महाघोरं तपोनिश्चितमानसः ॥ ४
तस्मात्सुरी यदा काचिन्नारीसंगमवाप्स्यते । तदा तस्मात्सुरो घोरो महान् गजमुखाह्वयः ॥ ५
भविष्यति महासत्त्वशिवाराधनतत्परः स्वयम् । हत्वा शत्रून् स्वयं राज्यं परिपालयति ध्रुवम् ॥ ६
इत्युक्त्वा प्रेषयामास शुक्रस्तमसुरेश्वरम् । ततोऽसुरेन्द्रो मतिमान् स्वगृहं प्राप्य शीघ्रतः ॥ ७
विभूत्याख्यां स्त्रियं वीक्ष्य प्रोवाच वचनं मुदा । विभूते सुकुमाराङ्गि मागधस्तपतां वरः ॥ ८
मेरोर्दक्षिणशृङ्गेऽयं घोरे तपसि वर्तते । तं प्राप्य तापसश्रेष्ठमुत्पादय वरं सुतम् ॥ ९
त्वद्गर्भशुक्तिनिर्भिन्नासुररत्नेन ह्याकुलम् । जितासुर (वृत्र) द्विषानेन भविष्यति निराकुलम् ॥ १०
सुस्थिताश्च वयं सर्वे तदानीं जितशत्रवः । इत्युक्त्वा प्रेषयामास सुरारिः कार्यगौरवात् ॥ ११
सा तथैवेति निर्गत्य मागधस्तपतां वरः । वर्तते यत्र महती तपस्यग्रैकमानसः ॥ १२

तत्र गत्वा समीक्ष्यास्य तपोनिष्ठां सुनिर्मलाम् । चिन्तयामास हृदये महदाश्चर्यसंयुता ॥ १३
न मया शक्यते चित्तं दृढचित्तस्य भेदितुम् । मागधस्यास्य महतो यत्नेन बहुनापि वा ॥ १४
पुनर्निवृत्ता निकटमसुरेन्द्रस्य वाप्यहम् । गमिष्यामि तदा सोऽप्यमतिदुःखी भवेदिति ॥ १५
तस्मादत्र तपस्तप्त्वा साधयिष्यामि तं वशम् । इत्यालोच्य चचारैषा पुरतोऽस्य तपोमहत् ॥ १६
ततः कालेन महता करिणं करिणी सुखम् । विलोक्य तापसश्रेष्ठस्समुत्थाय मुमोह च ॥ १७
तदानीं तत्र सा प्राप्य प्रणम्य तपतां वरम् । कदा मुने त्वया संगो भविष्यति ममेत्यहम् ॥ १८
तपः कृत्वा तवाभ्याशे स्थित्वास्मि बहुकालतः । तस्यमंगीकुरु स्वामिन्मामिहाशु स्मरातुराम् ॥ १९
इत्युक्तिमस्याश्श्रुत्वाऽयं तापसः प्रीतिसंयुतः । तथेतिकरिणीरूपं ग्राहयित्वाऽऽसुरीमिमाम् ॥ २०
स्वयं मतङ्गजो भूत्वा रेमे तां मागधस्तदा । तदा गजमुखो घोरो दैत्यस्तस्यामजायत ॥ २१
रोमकूपेषु बहवो दैत्यास्तस्याश्च जज्ञिरे । तैरयं दानवैर्दैत्यैश्चचारानुवनं महान् ॥ २२
खड्गखेटधरः क्रूरः कृतकोलाहलारवः । विक्षिपन् पर्वतान् वृक्षान् पर्वतेषु द्रुमेष्वपि ॥ २३
तमेतौ पितरौ सोढुमक्षमौ भयकंपितौ । मुक्त्वा वनं दुद्रुवतुर्दूरमाश्चर्यसंयुतौ ॥ २४
कुत्रचित् गह्वरे स्थित्वा ऋषिस्तां वीक्ष्य चासुरीम् । किमेतदिति पप्रच्छ वृत्तान्तं तापसोत्तमः ॥ २५
सा जगाद यथावृत्तं तस्मै सर्वं महात्मने । तदाकर्ण्य वचस्तस्या मागधो दुःखविह्वलः ॥ २६
लोकानां देवतानां च मया पीडा समार्जिता । इत्युक्त्वा तापसश्रेष्ठो ययौ भूयस्तपोवनम् ॥ २७
सा प्रणम्य ऋषिं शीघ्रात्सिद्धकार्या ययौ मुदा । वृत्तान्तमेतदखिलमसुरेन्द्रमबोधयत् ॥ २८
असुरेन्द्रोऽपि निर्गत्य सहसा तेन संयुतः । ववाधे नितरां लोकान् देवेन्द्रप्रमुखानपि ॥ २९
तदा दैत्यगुरुश्शुक्रस्समागत्यात्र रंहसा । प्रसाद्य देवमीशानं तपसा परमेश्वरम् ॥ ३०
वरं लब्ध्वा ततो देवाद्ययेच्छं सङ्गराभयात् । भविष्यति भयं नोऽद्येव कुत्रापि ते ध्रुवम् ॥ ३१
इत्युक्त्वा तं ययौ शुक्रो गजवक्त्रं महासुरम् । स तु शुक्रवचश्श्रुत्वा मेरुपार्श्वे मनोहरे ॥ ३२
तपश्चचार सुमहत्सहस्राब्दं तृणाशनः । तावत्कालंच पर्णाशी तावत्पीत्वा जलान्यपि ॥ ३३
वायुभक्षस्तथा पञ्चवह्निमध्ये दुरासदे । मूलानलं समुद्दीप्य सुषुम्नानाडिमार्गतः ॥ ३४
पीत्वाऽमृतं शिरोमध्यस्थितमेकांघ्रिणास्थितः । चचार दशसाहस्रवर्षान्तं तप उत्तमम् ॥ ३५
तद्दृष्ट्वा दैत्यवर्यस्य तपश्शक्रादयस्सुराः । दुद्रुवुर्नितरां भीतिं समनस्य तदाप्नुवन् ॥ ३६
तदा शिवस्य मनसि कृपामूर्तेः कृपाऽभवत् । संवभूवास्य देहोऽपि वल्मवच्छेकाराशया ॥ ३७
तदाऽस्य मूर्ध्नि दैत्याद्य ववर्षुः पुष्पसन्ततिम् । तदन्तरे वृषारूढः प्रादुरासीत् महेश्वरः ॥ ३८
तं दृष्ट्वा देवमीशानं प्रणम्य प्रणयान्वितः । तुष्टाव वाग्भिरिष्टाभिर्महादेवमयं तदा ॥ ३९
वरं वरय भद्रं ते यत्ते मनसि वर्तते । प्रसन्नोऽहं प्रदास्यामीत्येवमाह शिवोऽसुरम् ॥ ४०
तच्छ्रुत्वा देवदेवस्य वचनं सुरघातकः । यदि प्रसन्नो भगवन्यदि दास्यसि मे वरम् ॥ ४१
हरीन्द्रप्रमुखा देवास्समरं प्राप्य मामकम् । पराजिता भवन्त्वीश सिंहं गोमायुवण्डयम् ॥ ४२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे पंचविंशोऽध्यायः ॥

॥ अथ षड्विंशोऽध्यायः ॥

गजमुखासुर राज्यपालनम् ॥

आयुधान्यपि भूरीणि मम नानाविधान्यपि । माभून्मृतिर्महेशान मम सन्ताडनायुधैः ॥ १
तथा परेषां बहुभिश्छेदनकृन्तनायुधैः । विक्षेपणायुधैरन्यैरेवं नानाविधैरपि ॥ २
देवतानां मनुष्याणामसुराणांच रक्षसाम् । मृगपक्षिभुजङ्गानामन्येषां बलिनामपि ॥ ३
समरे मे भयं माभूदत्र कुत्रापि दुर्जये । मदाज्ञया जगत्सर्वं वर्ततां परमेश्वर ॥ ४
मायया मरणं यत्र कुत्रचिद्वाऽमरेश्वर । समागतश्चेदुत्पत्तिः पुनर्मा भवतु प्रभो ॥ ५
तथैतत्सर्वमाकर्ण्य तथेत्युक्त्वा महेश्वरः । अन्तर्हितोऽभवच्छीघ्रात्तस्यैवपुरतश्शिवः ॥ ६
ततो गजमुखः पापी सर्वमेतन्महेश्वरात् । लब्ध्वाऽसुरैर्महाघोरै रनेकैर्नितरां मुदा ॥ ७
हरीन्द्रप्रमुखान् देवान् जित्वा तत्तत्पदान्यपि । असुरेभ्यः प्रदत्वाशु भूलोक प्राप्य हृष्टधीः ॥ ८
तत्र स्थित्वा पुरे रम्ये मतङ्गाख्ये मनोरमे । दर्शकयोजनायामविशालबहुवीथिके ॥ ९
तत्र वेश्मानि रम्याणि दैत्यानां रक्षसामपि । भ्रातॄणांच तथान्येषां दत्वाऽत्यन्तं कुतूहलात् ॥ १०
स्वयं विवेश तन्मध्यस्थितं वेश्म मनोहरम् । ततोऽसुरेन्द्रतनयां कालेनायं महासुरः ॥ ११
विचित्रकामिकां रम्यां विधाह्लास्यन्तसुन्दराम् । सुराणामसुराणांच राक्षसानां तथैवच ॥ १२
विद्याधराणामन्येषां विवाह्य तनयाः पराः । विनियोज्य स्वकृत्ये च सुरेन्द्रप्रमुखानपि ॥ १३
कल्पवृक्षं कामधेनुं निधिं चिन्तामणिं तथा । शुक्रेण साकमसुरै रमात्यैर्बहुभिस्तथा ॥ १४
महताच प्रतापेन शशास निखिलं जगत् । तदा कदाचिदिन्द्राद्या देवास्तत्र समागताः ॥ १५
प्रणम्य दण्डवद्बद्धपाणयस्तत्पुरः स्थिताः । तान्वीक्ष्य देवानसुरः प्रोवाचायं वचस्तदा ॥ १६
अद्य प्रभृति ये देवा यूयं सर्वेऽप्यतन्द्रिताः । प्रणम्य त्रिप्रकारं मां कृत्वा च करकुट्टनम् ॥ १७
करौ श्रवणयोः कृत्वा व्यत्यासेन पुनः पुनः । नमनोन्नमनं कृत्वा चाज्ञया मम गच्छत ॥ १८
इत्युक्त्वा प्रेषयामास सुरान् गजमुखासुरः । तदाज्ञया सुरास्सर्वे तथा तं ते सिषेविरे ॥ १९
महता दुःखभारेण बहुकालमतन्द्रिताः । ततः कदाचिदमरा स्साच्युतद्रुहिणा इमे ॥ २०
कैलासं पर्वतश्रेष्ठं प्राप्य नन्दीश्वराज्ञया । तत्र दृष्ट्वा महादेवं संसारामयभेषजम् ॥ २१
प्रणम्य दण्डवद्भक्त्या तुष्टुवुर्विविधैः स्तवैः । प्रसन्नः परमेशानः पप्रच्छागमनं हरिम् ॥ २२
वृत्तान्तमखिलं विष्णुरुक्त्वाऽप्रार्थयदीश्वरम् । शंभो सर्वज्ञ विश्वेश भक्तानां भयभञ्जन ॥ २३
सुरान् गजमुखेनैतानसुरेण दिवानिशम् । बाध्यमानान्महादेव शिवोत्पाद्यात्मजं परम् ॥ २४
पाहि सर्वामरेशान शरणागतवत्सल । इति तस्य वचश्श्रुत्वा तथेति परमेश्वरः ॥ २५
प्रेषयामास ताञ्छंभुः प्रणतार्तिप्रभञ्जनः । ततो देवाश्च सन्तुष्टाः प्रणम्य स्वास्पदं ययुः ॥ २६

इत्थं सुरेषु सकलेषु निजास्पदानि यातेषु तेषु शिवया सह शंकरोऽपि ।
अभ्याससाद हरिचन्दनपारिजातमुख्यैर्द्रुमैस्तदनु केळिवनं विचित्रम् ॥ २७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे षड्विंशोऽध्यायः ॥

---

॥ अथ सप्तविंशोऽध्यायः ॥

श्रीमहागणपति जननम् ॥

अथ तत्र महादेवो विचित्रं वीक्ष्य कानने । चित्रमण्डपमाध्यायं तत्रस्थं गिरिजासखः ॥ १
रत्नसिंहासनारूढो देव्या सह महेश्वरः । चित्रभित्तिस्थितान्यत्र चित्राणि परया मुदा ॥ २
विलोक्य प्रणवं चात्र क्रमात्तमवलोकयत् । शम्भुना वीक्षणात्तस्मात् प्रणवाद्गजदंपती ॥ ३
समुत्पन्नौ तदान्योन्यं रेमाते तौ मुदान्विते । वीक्ष्य तौ परया प्रीत्या गौरी चाश्चर्यसंयुता ॥ ४
पप्रच्छ सा महादेवं किमेतदिति शंकरी ।
श्रीशिवः — कल्याणि तावकीं विद्धि कृपां लोकोपकारिणीम् ॥ ५
इत्युक्त्वा प्रणयात्तौ तावेवालोकयतामुभौ । तदा गजमुखस्तत्र प्रादुरासीद्गणेश्वरः ॥ ६
चण्डार्ककोटिसङ्काशः क्रीडतोर्गजयुग्मयोः । सोऽयं विनायको देवं देवीमपि मुदा तदा ॥ ७
प्रणनाम महासत्वो दण्डवत्प्रश्रयान्वितः । तं समालिङ्ग्य चाघ्राय मूर्ध्नि गौरीमहेश्वरौ ॥ ८
स्वमङ्कमारोपयतां तौ तदा तं गणेश्वरम् । ततः प्राह वचः शंभुर्गणेशं कृपया सुतम् ॥ ९
त्वां ये नमन्ति पुरुषा मदनन्यं ममात्मजम् । तेषां भवन्त्वभीष्टानि शीघ्रं निर्विघ्नभावतः ॥ १०
त्वं गणानामशेषाणां पतिराद्यो मदाज्ञया । स्वकार्यादौ समभ्यर्च्य स्वाभीष्टं प्राप्नुयाज्जनः ॥ ११
हत्वा गजमुखं घोरं दैत्यश्रेष्ठं सुरद्रुहम् । सुरान्विष्णुमुखान्पुत्र पालय त्वमतन्द्रितः ॥ १२
इत्युक्त्वा तं समाहूय परमेशो गणेश्वरम् । कैलासगोपुरद्वारि स्थापयित्वा स्वयं शिवः ॥ १३
गौर्या सह विवेशाशु शुद्धान्तं हृष्टमानसः । ततो नन्दिमुखास्सर्वे गणा विष्णुमुखास्सुराः ॥ १४
प्रणम्य तं गणेशानं स्तुत्वा नानाविधैः स्तवैः । तदाज्ञया स्वकृत्यानि चक्रिरे पूर्ववत्तदा ॥ १५
शिवस्तदा शिवां वीक्ष्य प्राहवाचं कुतूहलात् । अक्षद्यूतेन कल्याणि विहर त्वं मया सह ॥ १६
पराभवमिता चेत्त्वं भूषणानि प्रयच्छ मे । दास्याम्यहं मदीयानि भूषणानि पराजितः ॥ १७
एवं पणोक्तिसमये विष्णुस्तत्र समागतः । पार्वतीपरमेशानौ नत्वा तस्थे भयान्वितः ॥ १८
अकल्पयत्तदा विष्णुं साक्षिणं परमेश्वरी । सुन्दराद्याः परिजना निन्युस्ते द्यूतसाधनम् ॥ १९
तत्तत्स्थाने हरिश्चायं विधायैतत् हराज्ञया । अक्षद्यूतविहारं स शिवयोरवलोकयत् ॥ २०
पराजितस्तदा शंभुश्शिवया तुल्यकल्पया । तथाऽपि शंकरस्सोऽहं जितवांस्त्वां मनोरमे ॥ २१
प्रयच्छ मह्यं शीघ्रेण कल्याणि तव भूषणम् । इत्युवाचोक्तिकुशलः परमेशः परामुमाम् ॥ २२
विहस्य सा भगवती भवताऽत्र किमुच्यते । मुक्तलज्जेन देवेश पराभवमितेन च ॥ २३
देहिदेहि त्वदीयानि भूषणानि ममाधुना । साक्षिणं माधवं पृष्ट्वा मुक्त्वा मिथ्यावचश्शिव ॥ २४
इत्युवाच तदा विष्णुश्शिवेन परिचोदितः । भ्रूक्षेपेण वचः प्राह कूटसाक्षी नताननः ॥ २५
जितमद्य महादेवि सर्वज्ञेन शिवेन हि । इति विष्णुवचः श्रुत्वा गौरी कोपाकुलानना ॥ २६
पश्यता भवता विष्णो मध्यस्थेनापि यन्मृषा । प्रोक्तं तत्त्वं भव क्षिप्राद्दग्धाजगररूपवान् ॥ २७
शशापैव शिवा विष्णुं कूटसाक्षिणमानतम् । ततो विष्णुश्शिवाशापात् भीतभीतो महेश्वरम् ॥ २८
प्रणम्य प्रार्थयामास शापमोक्षं प्रजापते ।
शिवः — घटद्वीपे तपः कृत्वा दुष्करं तिष्ठ माधव ॥ २९
विनायकस्तदा कालाद्वाया गजमुखासुरम् । समापास्यति तं दृष्ट्वा शापमोक्षं समेष्यसि ॥ ३०

इत्युक्त्वा प्रेरयामास विष्णुं तं परमेश्वरः । ततोऽन्धोऽजगरो विष्णुर्शिवानुज्ञामवाप्य सः ॥ ३१
वटद्वीपं समासाद्य वटवृक्षस्य कोटरे । सतयोजनमानेन विशाले भीषणे भृशम् ॥ ३२
प्रविश्य तस्थे शिवमद्वितीयं ध्यात्वा हृदब्जे गणनायकञ्च ।
विष्णुस्तदैकाग्रमनाश्शिवाया इशापप्रभावात्सजुगुप्सिताङ्गः ॥ ३३

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे सप्तविंशोऽध्यायः ॥

---

॥ अथ अष्टाविंशोऽध्यायः ॥

गजमुखासुरवधः ॥

ततो देवास्सुराधीशप्रमुखा देवता भृशम् । गजवक्त्रेण तेनैते, कैलासं पर्वतोत्तमम् ॥ १
प्राप्य तत्र गणाधीशं पूजयित्वा परात्परम् । नानाविधैश्च नैवेद्यैः पुष्पै र्नानाविधैरपि ॥ २
तुष्टुवु र्नितरां स्तुत्यं स्तोत्रै र्वेदान्तगुंभितैः । ततः प्रसन्नो भगवान्विघ्नाधीशश्शिवात्मजः ॥ ३
युष्मदिष्टं विधास्यामि सुरास्सर्वे महौजसः । किं कर्तव्यं मयाद्यात्र यूयं वदत निर्भयाः ॥ ४
इत्युवाच ततो देवा निर्भया वाचमूचिरे । गणनाथ महासत्व भक्तानामिष्टदायक ॥ ५
गणानां त्वां गणपतिं शरण्यं शरणं गताः । रक्षरक्षसुरान् सर्वान् हत्वा गजमुखासुरम् ॥ ६
दुरात्मना गणाधीश बाध्यमानानहर्निशम् । इति तेषां वचश्श्रुत्वा तथेत्युक्त्वा गणाग्रणीः ॥ ७
अवरुह्यासनात्सिंहान्निर्गत्य द्वारि शीघ्रतः । अचलाख्यमहाभूतस्कन्धमारुह्य चोन्नतम् ॥ ८
भूतसेनाभिरतुलं महारावाभिरावृतः । छत्रचामरसंघैश्च ध्वजव्यजनकैरपि ॥ ९
वाद्यानामारवै स्तद्वज्जितांभोधिस्वनैरपि । वर्षद्भिः पुष्पनिकरान् देवैरपि परिवृतः ॥ १०
मतङ्गनगराभ्याशं प्राप विघ्नेश्वरो जवात् । तदागमं समाकर्ण्य गजवक्त्रो महासुरः ॥ ११
रथमारुह्य वेगेन चतुरङ्गबलैस्सह । चामरैर्व्यजनैश्छत्रै र्ध्वजैर्वाद्यैरनेककैः ॥ १२
सहस्रवाहिनीसंख्यामितसेनासमावृतः । निरगान्नगराद्वाहो महता संभ्रमेण सः ॥ १३
तदाऽभवद्रणं घोरं सेनयोरुभयोस्तयोः । सेना पराभवमिता तदा दैत्यस्य तत्क्षणात् ॥ १४
वीक्ष्यैतद्गजवक्त्रोऽसौ महाकोपाकुलाननः । चापमाकृष्य शस्त्राणि सहस्राणि ववर्ष सः ॥ १५
द्रावयामास भूतानि सहस्रैर्निशितैश्शरैः । पुनः कोपेन विघ्नेशो प्रेरयित्वा रथं जवात् ॥ १६
निजगाद ततो वाचं समुद्वीक्ष्यासुराधमः । न जानाति भवान्वीर्यं मम शंभुवरं तथा ॥ १७
गच्छ तूर्ष्णीं यथामार्गं यदि जीवितुमिच्छसि । न शक्तस्त्वं मया योद्धुं बालोऽसि नितरामिह ॥ १८
पराजिताः पुरा केचिद्द्विपवो रणमागताः । आयुधैर्न हतिस्सर्वैं मेम शम्भुवरादिह ॥ १९
देवतानां सहायार्थं आगतस्त्वं वृथाग्रहात् । यदि योद्धुं मनस्तेऽद्य कुरु युद्धं मया सह ॥ २०
जित्वा भवन्तं पश्चात्तान् संहरिष्यामि नाकिनः । तस्य तद्वचनं श्रुत्वा दानवस्य गणेश्वरः ॥ २१
शिवाज्ञयाऽहं त्वां हत्वा देवान्रक्षितुमागतः । इन्द्रादीनां यथापूर्वं पदानि परिकल्पय ॥ २२
न चेदिदानीमाज्ञा ते भविष्यति न संशयः । त्वमद्य भूमिं संश्रय तिष्ठ स्वकप्रमादवान् ॥ २३
इति विघ्नेशवचनं श्रुत्वाऽयं दानवेश्वरः । ववर्ष तस्मिन्छस्त्राणि वह्न्यस्त्रमहारवः ॥ २४
तान्वयोमुसलेनायं क्षणात्सूळीचकार ह । कार्मुकञ्च महाघोरं चिच्छेदास्य दुरात्मनः ॥ २५

चापान्तरं समादाय चापाग्रं निकटं तदा । चिच्छेद तच्च विघ्नेशस्तेनैवास्य महाबलः ॥ २६
पुनर्दण्डं समादाय साट्टहासेन सोऽसुरः । अभ्यागतो जवेनायमभ्याशं तस्य भीषणः ॥ २७
धूळीकृत्य तमभ्याशु दण्डं विघ्नेश्वरस्तदा । अताडयदुरोमध्ये मुसलेन दुरात्मनः ॥ २८
दुःखमाप तदाऽत्यन्तं ताडितोऽयं महासुरः । अत्रान्तरे गणाधीशस्तदीयानि बलान्ययम् ॥ २९
युगपन्मारयामास क्षणात्परशुना धन । ततः कोपानलप्लुष्टो गजवक्त्रो महासुरः ॥ ३०
ववर्ष तस्मिन् महति दैवतास्त्राणि भूरिशः । तानि सर्वाणि विघ्नेशं प्रदक्षिणविधानतः ॥ ३१
प्रणम्य तस्थिरे भीत्या तदा दक्ष प्रजापते । दृष्ट्वैतदसुरः कोपाद्ववर्षास्त्रिच्छरान् बहून् ॥ ३२
कल्पकाल मृशाटोपमेघो वृष्टीर्यथा तथा । गणाध्यक्षस्ततो ज्ञात्वा तमशस्त्रवधं तथा ॥ ३३
नुनोद दन्तमेतस्मिन् अग्रे छित्वा महाबलः । ससमभ्येत्य वेगेन भित्वोरस्तस्य निष्ठुरम् ॥ ३४
क्षणात् स्वादूदकांभोधौ स्नात्वा तस्य करं ययौ । उत्सृज्य देहमसुरस्तदा तं रुधिराप्लुतम् ॥ ३५
जग्राह देहमतुल मूषिकस्य महोन्नतम् । सुवृत्तरक्तपृथुलघोरनेत्रद्वयान्वितम् ॥ ३६
स्थूलदीर्घातिकठिनवक्रवालेन संयुतम् । पादैश्चतुर्भिः परितश्चलद्भिः पर्वतान् द्रुमान् ॥ ३७
नयन्तं पांसुतामुग्रमण्डान्यपि परीवृतम् । महारावं महाघोरं तर्जयन्तं जगत्त्रयम् ॥ ३८
तादृशोऽयं महावेगाद्विघ्नेशनिकटं ययौ । आरुह्यास्मिन् गणाध्यक्षो कल्पयन्तं स्ववाहनम् ॥ ३९
बभार स तु विघ्नेशमवाप्तज्ञानयानहो । ततो ब्रह्ममुखा देवाः प्रीतिमापुस्तरां तदा ॥ ४०
ववर्षुस्सुमनोजालं नन्नृतुश्च समन्ततः । पेठुर्गुणगणानस्य नितरां मागधा इव ॥ ४१
ततस्तेषु कृपां चक्रे विघ्नेशः करुणाकरः । यानि भूतानि दैत्येन मारितानि दुरात्मना ॥ ४२
उत्तस्थुस्तानि सर्वाणि विघ्नेश्वर कृपावशात् । असाध्यं किं गणेशस्य रक्षकस्य सतां सदा ॥ ४३
ततः कोलाहलं चक्रुर्भूतानि निखिलान्यपि । असुरेन्द्रस्तदा भीतो भूतेभ्यश्च पुरन्दरात् ॥ ४४
पक्षिणोरूपमादाय मेरोः प्राप गुहां तदा । शुकोऽपि पक्षिरूपेण भीत्या प्रापपदं स्वकम् ॥ ४५
मृतो यज्ञासुरो घोरो यज्ञद्वेषो दुरात्मवान् । पुरं बभूव तत्रैव महद्भक्तजनाश्रयम् ॥ ४६
तत्र विघ्नेश्वरश्शंभुं प्रतिष्ठाप्य विधानतः । स्वनाम्ना पूजयामास भक्त्या गणपतीश्वरम् ॥ ४७
पुनश्च मूषिकारूढो भूतैर्देवैश्च सेवितः । छत्रचामरसंघैश्च निर्जगाम मुदान्वितः ॥ ४८
तत्र मार्गवशात्प्राप वटद्वीपं मनोहरम् । ततो विनिर्ययौ विष्णुर्वास्त्वास्यात्र समागमम् ॥ ४९
मध्याजगररूपोऽसौ विघ्नेशस्य महात्मनः । तत्र दृष्ट्वा गणेशानं प्रणम्य परया मुदा ॥ ५०
तुष्टाव मुक्तत्द्रूपो भैजं रूपमवाप्य च । नमस्तेऽस्तु गणेशान भक्तानामिष्टसिद्धिद ॥ ५१
अनाथनाथ महते सर्वलोकैकपालक । भवद्दर्शनमात्रेण मम घोरमिदं वपुः ॥ ५२
गौरीशापवशात्प्राप्तं विनष्टं खलु दैवप । इत्युक्त्वा पूजयामास भक्त्या तं परया हरिः ॥ ५३
पूजाद्रव्याणि संपाद्य भक्ष्यै भोज्यै रनेककैः । ततः प्रसन्ने विघ्नेशे प्रोवाच वचनं हरिः ॥ ५४
अर्चयन्ति धनुर्मासे पञ्चाम्यस्यां नरोत्तमाः । सर्वाभीष्टप्रदं त्वां ये तेषां सर्वेश वाञ्छितम् ॥ ५५
दातुमर्हसि विघ्नेश मद्वाक्यापालनाय भो । इति तस्य वचश्श्रुत्वा तथेत्युक्त्वा गणेशस्ह ॥ ५६
गणेश्वरो ययावाशु कैलासं पर्वतोत्तमम् । प्रणम्य तत्र पितरौ पार्वतीपरमेश्वरौ ॥ ५७
तदाज्ञया निजद्वारवेदिमाश्रयतिस्म मः । ततो विष्णुमुखा देवाः प्रणम्यात्र विनायकम् ॥ ५८
स्तुत्या पस्पुर्वस्त्रान्यं बद्धाञ्जलिका इमे । विघ्नेशास्माभिरमरैरसुरस्य दुरात्मनः ॥ ५९

पुरतो गजवक्त्रस्य यत्कृतं कुट्टनादिकम् । तत् स्वामिन् पुरतस्तेऽद्यप्रभृत्यस्तु महात्मनः ॥ ६०
न विस्मृतिं भवेत्तेन मद्रक्षाकारणस्य भो । एवं त्वत्पुरतो मर्त्या ये कुर्वन्ति क्रियामिमाम् ॥ ६१
तेषामभीष्टदो नित्यं भवदेव भवात्मज । ततो लब्धवरास्सर्वे नत्वा कुट्टनपूर्वकम् ॥
स्वपदानि ययुः प्रीत्या देवा विघ्नेश्वराज्ञया ॥ ६२
आख्यानमेतद्भवतो मयाऽत्र प्रजापते वर्णितमानुपूर्व्यात् ।
गणेश्वरस्यामितवैभवस्य किं तावता दूषणमीश्वरस्य ॥ ६३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे अष्टाविंशोऽध्यायः ॥

---

॥ अथ एकोनत्रिंशोऽध्यायः ॥

श्री परमेश्वरस्य निर्गुणत्व निरूपणम् ॥

तामसत्वं शिवस्य यदुक्तं त्वया दक्ष प्रजापते । शृणु तच्च प्रवीम्यद्य चरित्रं मवधानतः ॥ १
गुणातीतो महादेवः कल्याण गुणभूषणः । अनन्तमहिमाधारः परञ्ज्योतिः परात्परः ॥ २
सत्वं रजस्तमश्चेति गुणान् सृष्ट्वा पुरा शिवः । रजसा योजयद्धातारं स्रष्टुं लोकान्मतिं ददौ ॥ ३
सत्वेन विष्णुं संयोज्य पालनाय मतिं ददौ । अन्यैः कर्तुमशक्यत्वात् संहारस्य सुरोत्तमैः ॥ ४
अधिष्ठाय तदा शंभुस्तमस्सत्वोऽपि केवलः । प्रतिकल्पं महादेवस्सर्वं संहरति प्रभुः ॥ ५
अन्यथा सर्व विद्यानामुपदेष्टा कथं शिवः । सनकादि ऋषीणांच ब्रह्मविष्ण्वादि नाकिनाम् ॥ ६
स्वच्छाकृतिः कथं वाच्यं तामसश्चेद्भवेच्छिवः । सत्यं ज्ञानमनन्तं च ब्रह्ममाह शिवं श्रुतिः ॥ ७
एवमादि महेशस्य तामसत्वेन संभवेत् । निरञ्जनं महादेवं निर्गुणं निरुपप्लवम् ॥ ८
अनन्तमहिमाधार मपरिच्छिन्नवैभवम् । अप्राकृतशरीरञ्च लक्ष्यलक्षणवर्जितम् ॥ ९
अत्यन्तपरिशुद्धत्वाच्छिव इत्याहहि श्रुतिः । ब्रह्मविष्णुमुखा देवा गुणत्रयसमन्विताः ॥ १०
निद्रालस्यवशत्वाच्च कृष्णत्वात्तामसो हरिः । अहंकारादियुक्तत्वाद्राजसः परिपठ्यते ॥ ११
शिवज्ञानार्चनध्याननिष्ठत्वात्सात्विकश्च सः । एवं गुणत्रययुतो ब्रह्माच चतुराननः ॥ १२
दुःखाज्ञानादियुक्तत्वात्तामसात्मा विधिस्स्मृतः । सुवर्णसदृशाकारो राजसोऽहंकृतीयुतः ॥ १३
शिवज्ञानादियुक्तत्वात्सात्विकोऽपि प्रजापते । एवमेव जगत्सर्वं गुणत्रयमयं किल ॥ १४
शिवस्तु निर्गुणश्शान्तः केवलं ज्ञानरूपवान् । चराचराणां सर्वेषामन्तरात्मा महेश्वरः ॥ १५
कल्पभेदोपचारेण तामसो भाति नान्यथा । निर्वाणादि मयाप्रोक्तं तामसान्तं चरित्रकम् ॥ १६
शिवस्य दारुकारण्यनिलयानां महर्षिणाम् । द्विसहस्रोत्तरपञ्चाशत्सहस्राणांच रक्षितुम् ॥ १७
तत्तद्ब्रह्मविधौ स्वाध्यचरितं तत्तदीरितम् । तस्मात्त्वमपि यज्ञेऽस्मिन्यज यज्ञेश्वरं शिवम् ॥ १८
स एव भगवांस्त्वाञ्च दक्ष रक्षति सत्यतः । एवमुक्ते ऋषिवरे दधीचे पुनरेव सः ॥ १९
योवा कोवा भवत्येव न तस्मै दीयते हविः । यत्किञ्चिदपि वक्तव्यं त्वया नैवात्र तापस ॥ २०
गच्छ गच्छ यथामार्गं मुक्त्वा वाचालतामिह । इत्युक्तवति दक्षेऽस्मिन् पुनः कोपाकुलो ऋषिः ॥ २१
निगृह्य कोपं यत्नेन स्वान्तरेव वचोऽब्रवीत् । अध्वरे ये महादेवं न यजन्ति द्विजाधमाः ॥ २२
न तेषां तत्फलं किन्तु विपरीतफलं भवेत् । तस्मात् त्वदीय यज्ञस्य विच्छेदो भवति ध्रुवम् ॥ २३

छिन्नं तव शिरस्सद्यो भविष्यति न संशयः । एतैश्च सकलैर्देवै र्भोक्तुमभ्यागतै र्हविः ॥ २४
इत्युक्त्वाऽथ द्विजान्वीक्ष्य यज्ञवाटमुपागतान् । यूयं विप्राधमास्सर्वे कुशास्त्रासक्तमानसाः ॥ २५
शिवद्रोहपराः नित्यं शिवार्चनपराङ्मुखाः । वेदमार्गैकविमुखा शिवप्रियविनिन्दकाः ॥ २६
नरकेषु च सर्वेषु पततात्यन्तदुःखिताः । शपित्वैवं ऋषिवरः सशिष्यैस्साकमीश्वरम् ॥
ध्यात्वा हृत्पद्मनिलये स्वाश्रमं प्रययौ द्विजाः ॥ २७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकोनत्रिंशोऽध्यायः ॥

---

॥ अथ त्रिंशोऽध्यायः ॥

दक्षेण दाक्षायण्याः तिरस्कारः ॥

गते ऋषिवरे तस्मिन्दक्षस्यास्य दुरात्मनः । बलं वीर्यं धृतिः कीर्तिस्संपदाद्याश्च निर्ययुः ॥ १
ततो दक्षस्य भूपृष्ठे ध्वजदण्डो द्विधाऽपतत् । मंगळ्यतन्तुर्भार्यायाः कण्ठाच्छिन्नः पपात ह ॥ २
तस्थिरे काककङ्काद्या यूपस्तंभे तथोन्नते । एवमादीनि वीक्ष्यापि दुर्निमित्तानि दुर्मनाः ॥ ३
परित्यक्तभयो विष्णुं पूजयित्वाऽथ पद्मजम् । देवतानामृषीणाञ्च कृतनानोपचारवान् ॥ ४
तथा दुहितृतद्भर्तॄन् भूषणैर्वसनैरपि । मानयन् ब्राह्मणान् सर्वान् कामधेनुसमर्पितैः ॥ ५
भोजयन्नशनै र्वस्त्रैः कल्पवृक्षविनिर्मितैः । भूषणैर्मणिभि र्दिव्यै श्चिन्तामणिसमुद्भवैः ॥ ६
तोषयामास बहुभिस्तत्र तान् समुपागतान् । एतान्सर्वाणि तत्रैव राशीचक्रुर्द्विजाः परे ॥ ७
गृहीत्वा केचिदन्यत्र स्थाप्याशु पुनरागताः । रथानां तुरगाणां च गजानां च महारवाः ॥ ८
बभूवुस्तत्र शालायां विशालायां समुद्भवत् । बहून्यपि विमानानि संबाधेनात्र तस्थिरे ॥ ९
रम्भाद्यप्सरसस्तत्र ननृतुस्सुमनोहरम् । जगुर्विद्याधराः केचित् कळकण्ठाश्श्रुतिप्रियम् ॥ १०
नवधूकास्सुरास्तत्र सन्तुष्टास्तस्थिरे मुदा । दत्वा दानानि दक्षोऽपि ब्राह्मणेभ्यो यथेप्सितम् ॥ ११
अग्निं प्रज्वाल्य तरसा देवानुद्दिश्य मन्त्रतः । आहुतीः प्रददौ तेषामानुपूर्व्याद्धविर्भुजाम् ॥ १२
तत् ज्ञात्वा नारदः धीमान् कैलासमचलाधिपम् । गत्वा तत्र महादेवं सांबं भक्त्या प्रणम्य तम् ॥ १३
वृत्तान्तमेतत् प्रोवाच बद्धाञ्जलिकरो ऋषिः । अवरेशाय भवते दक्षो धर्मसुतोऽव्ययम् ॥ १४
अदत्वाथ हविर्भागमन्यान्देवान्भजत्यलम् । यज्ञेश्वरे त्वयि शिव विमुखो दुर्मना इति ॥ १५
तदा तद्वचनं गौरी श्रुत्वा विस्मितमानसा । दक्षस्य तस्य तं यागं द्रष्टुं निश्चितमानसा ॥ १६
प्रणम्य देवमीशानं प्रोवाच परमेश्वरम् । दृष्ट्वाऽथ यागं देवेश पुनरायामि शीघ्रतः ॥ १७
अनुज्ञां कुरु यागार्थे मम सर्वेश्वराधुना । इति भार्यावचश्श्रुत्वा स्मयमानमुखाम्बुजः ॥ १८
कथं गच्छसि कल्याणि त्वामनाहूय मोहतः । दक्षोऽयमस्मानुपेक्ष्यान्यान् देवान्सर्वान्यजत्यलम् ॥ १९
तस्मात् तव यागाय निषिद्धा खलु भामिनि । इति शंभोस्समाकर्ण्य दक्षकन्या शिवापरा ॥ २०
पुनः प्राह पितृस्नेहाल्लोकयात्रा चिकीर्षया । क्षमस्वमन्तुं दक्षस्य किञ्चित्तस्य शिवाधुना ॥ २१
वीक्ष्य यागमहं तस्य समायास्यामि शीघ्रतः । आज्ञया तव देवेश सोत्सुकैवमुमा तदा ॥ २२
प्रणनाम महादेवं दण्डवद्विनयेन सा । तथेति स महादेवः प्रेषयामास तां शिवाम् ॥ २३
शिवाज्ञया गणास्तस्य विमानं निन्यिरे महत् । अनेककोटिसूर्याभं नानारत्नविचित्रितम् ॥ २४

सर्वालङ्कारसंयुक्ताऽऽरूढा तच्छिबिका तदा । सुमालिनीमालिनीभ्यां धृतदिव्यातपत्रका ॥ २५
मंगलासुमनोभ्यां च वीज्यमाना च चामरैः । भार्यया नन्दिकेशस्य सुकेश्या शोभनांगया ॥ २६
धृतनानामणिप्रोतपादुका सुमनोहरा । अनिन्दिता कमलिनी विकीर्यत्पुष्पसन्ततिः ॥ २७
तालवृन्ताफलाभिश्च दिव्यस्त्रीभिः परिवृता । वीटिकापेटिकाभिश्च तथा दर्पणपाणिभिः ॥ २८
स्रग्गन्धवस्त्राभरणपेटिकाकोटिभि स्तथा । नृत्यद्भिरप्सरस्संघैस्सुकुमारांगयष्टिभिः ॥ २९
वाद्यवद्भिर्विमानानि बहून्यपि सखीजनैः । शुकहस्ताभिरन्याभिः पिकहंसात्मपाणिभिः ॥ ३०
शारिकादिकराभिश्च सुन्दरीभिः परिवृता । एवमादिभिरन्याभिर्दिव्यस्त्रीभिरियं क्षणात् ॥ ३१
प्रतस्थे वाद्यघोषेण महता परमेश्वरी । धृतच्छत्राणि भूतानि वृषभध्वजपूर्वकम् ॥ ३२
धृतायुधानि चान्यानि तदा द्वादशकोटयः । निर्ययुस्तानि सर्वाणि महाकोलाहलारवैः ॥ ३३
सोमनन्द्याख्यगणपः प्रणयैनां पदे पदे । महता संभ्रमेणैव यागशालामियं ययौ ॥ ३४
अवरुह्य विमानात् स्वादाप दक्षान्तिकं शिवा । तदा दक्षस्सुतामेनामवमत्य दुरात्मवान् ॥ ३५
अमङ्गलस्तव पतिरविज्ञातकुलोद्भवः । अनाचाररतो नित्यमनाहूतस्ततो मया ॥ ३६
तद्भार्येयं मया नैवाहूता किल मखे परे । तथापि त्वं वृथाशोभावशं प्राप्तागता ननु ॥ ३७
गच्छ तासहसा पत्युर्गेहमेव श्मशानकम् । इत्युक्तवति दक्षेऽस्मिन् दुराचारे शिवाऽवदत् ॥ ३८
सोदर्यो मम सर्वास्तास्त्वया संमानिताः खलु । तासाञ्च पतयस्तात तथा सर्वेऽपि मानिताः ॥ ३९
*अन्येऽपि बान्धवास्सर्वे पूजितास्तात त्वयतः । मत्पतिं मां च यागेऽस्मिन्सर्वं नैव गणयस्यहो ॥ ४०*
आगतायां मयि तथाप्यहो कोपाकुलो भवान् । पुनर्गच्छेति वदसि त्वं मामत्र समागताम् ॥ ४१
अपराधं मया किं वा यदेतच्छ्रेयसे न ते । इति गौर्या वचश्श्रुत्वा पुनर्दक्षप्रजापतिः ॥ ४२
तद्भार्या त्वं च नैवास्मद्यागं द्रष्टुमिहार्हसि ॥ ४३

सर्वास्ता अपि मे पुत्र्यस्समाहूता मयाऽत्र ताः । तासाञ्च पतयस्सर्वे मम जामातरस्तु ते ॥ ४४
न जामाता तव पतिर्न पुत्री त्वं च सत्यतः । तासामेव प्रयच्छामि वाञ्छितानि मदिच्छया ॥ ४५
सर्वदा मां विचार्यैता स्तिष्ठन्ति त्वं न तादृशी । तस्मात्तव पतेर्यागे न दास्यामि हविर्वरम् ॥ ४६
वेदवाक्येन तस्यापि हविः प्रोक्तं तथाप्यहम् । अगणय्यैतमधुना बलादद्य कृतोद्यमः ॥ ४७
नियासमभिहारेण न वक्तव्यं त्वया वचः । तद्गच्छ तूष्णीं पुरतो मम लज्जां विहाय च ॥ ४८
इति तस्य वचः श्रुत्वा तस्थे गौरी क्रुधान्विता । तदा सर्वेऽपि तत्रत्या विष्णुर्देवीं समीक्ष्य ते ॥ ४९
विमलाख्या सखी गौर्यास्तदा तां संप्रणम्य सा । कोपं संहर देवेशि माता त्वं जगतोऽस्य भो ॥ ५०
त्वत्कोपेन जगत्सर्वं संबाधं भवति ध्रुवम् । उपसंहर कल्याणि कोपमेतद्दुरासदम् ॥ ५१
इत्युक्त्वा सा पुनर्भूमौ दण्डवत्प्रणनाम च । तदा दक्षसुता गौरी कोपं मुक्त्वा समीक्ष्य तम् ॥ ५२
दक्षमेनं दुरात्मानं प्रोवाच वचनं पुनः । दूषणं देवदेवस्य यत्कृतं दक्ष सांप्रतम् ॥ ५३
तच्चैव तेन मच्चित्तं नितरामत्र वर्तते । मद्रूपेण न तथा सदा मे त्वत्कृतेन हि ॥ ५४
निरञ्जनं निराधारं निर्गुणं निरुपप्लवम् । सर्वेशं सर्वविद्यानामादिकर्तारमव्ययम् ॥ ५५
तत्त्वातीतं शिवं शान्तं शङ्करं प्रणतार्तिहम् । तामस प्रोक्तवान्मोहाद्दक्षो पापं तवेदृशम् ॥ ५६
सर्वसंहारकर्तृत्वात्तामस इत्यभवत् । तस्मै देवो हविर्भागस्तादिपूज्यो नचेतरः ॥ ५७
यन्नाम परमं पोता शिव इत्यक्षरद्वयम् । सकृज्जपति यत्पापी जनोमोक्षं स विन्दति ॥ ५८

यो विनिन्दति सर्वेशं संसारान्मोक्षकारकम् । तस्य पापस्य सहसा समायाति महद्भयम् ॥ ५९
एवं शिवस्य महिमा श्रूयते हि श्रुतौ तराम् । तस्मात्त्वमपि पापात्मा शिवनिन्दापरायणः ॥ ६०
विनश्यसि न सन्देहः क्षिप्रेणात्र शिवाज्ञया । इत्युक्त्वा सा महादेवी विमानं दिव्यमास्थिता ॥ ६१
निवृत्य सहसा प्राप कैलासं पर्वतोत्तमम् । तत्र दृष्ट्वा महादेवं प्रणम्य परया मुदा ॥ ६२
वृत्तान्तमुक्त्वा देवेशी प्रार्थयामास तद्वधम् । अशृण्वन्निव तस्येश्यं तदा शंभुरुमावचः ॥ ६३
पुनश्च शंकरी देवं प्रणम्य भुविदण्डवत् । शम्भो सर्वज्ञ विश्वेश विश्वरक्षापरायण ॥ ६४
प्रशान्तरागद्वेषस्त्वं करुणामृतसागर । उच्छिद्य यज्ञमेतस्य तंच संहर शीघ्रतः ॥ ६५
स तु पापी दुराचारः शिवनिन्दापरायणः । सर्वलोकहितं तस्मान्ममेप्सपूरणं तदा ॥ ६६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे त्रिंशोऽध्यायः ॥

---

॥ अथ एकत्रिंशोऽध्यायः ॥

॥ शिवेन दक्षयाग ध्वंसनाय वीरभद्रप्रेषणम् ॥

इति गौर्याः स्तुतिं श्रुत्वा महादेवोऽखिलाशनः । ससार मनसा वीरं वीराणां भक्तभद्रदम् ॥ १
वीरभद्रं महाकायं सर्वलोकैकनायकम् । तदा जयजयेत्युच्चैः प्रादुरासीदरिन्दमम् ॥ २
ललाटचण्डनयनवह्निकुण्डान्महेशितुः । महाद्रिशिखरप्रख्य शिरस्साहस्रवैर्युतः ॥ ३
द्विसहस्रभुजैः स्थूलैरायतैरतिसुन्दरैः । खड्गखेटगदाचक्र वज्रशूलधनुश्शरान् ॥ ४
मुसलप्रासनाराचमुखायुधततिं वहन् । विष्ण्वादिदेवनिकरमुण्डमालोज्ज्वलाकृतिः ॥ ५
करस्थितमहाघण्टाविजयारावभीषणः । स्फुरद्रक्तप्रभाभास्वज्जटामकुटमण्डितः ॥ ६
आरक्तपृथुलाकारो घोरदंष्ट्रो महाहनुः । नानारत्नौघ खचितशिञ्जन्मञ्जीरपादवान् ॥ ७
यमदृष्टिचयात्युग्रलोचन त्रिसहस्रकः । भीषणं शृङ्गमादाय नादयन् लीलया तराम् ॥ ८
घमघासापुटैर्वेद्दिमट्टहासमहारवः । वाराहं दन्तमादाय कच्छपाङ्गं तथा महत् ॥ ९
विष्णुब्रह्मादिदेवानामस्थिमालामनोहरः । संभ्राम्य खड्गं हस्तेन धून्वन् खेटमितस्ततः ॥ १०
षोडशमण्डानि सर्वाणि करेणच परीस्पृशः । धावन्नितस्ततस्तूर्णं कृत्वा कोलाहलारवम् ॥ ११
भोगिभोगसमग्रप्रभुजभूषणसर्पधान् । अनेकरत्नखचितभूषणैरपि भूषितः ॥ १२
भूतिभूषितसर्वाङ्गो रुद्राक्षकृतभूषणः । हरिचन्दनसंलिप्तललाटोरःप्रदेशवान् ॥ १३
दाक्षायण्यास्तदा कोपाद्भद्रकाळी भयंकरी । तादृशी निरगाच्चण्डा कृत्वा कोलाहलारवम् ॥ १४
भद्रकाळीवीरभद्रौ पार्वतीपरमेश्वरौ । कृतप्रदक्षिणौ नत्वा तस्थाते पुरतस्तयोः ॥ १५
वीरभद्रस्तदा देवं वीक्ष्य प्राह भयान्वितः । जय शम्भो महादेव क्षपद्वीर पिनाकधृक् ॥ १६
साज्ञापय भवद्दासं यत्रकुत्रापि शंकर । यद्वा हरिः किं नेतव्यो ब्रह्मा वा भवदन्तिकम् ॥ १७
तवाज्ञया जगत्सर्वं सुरानिन्द्रमुखानुत । राक्षसान् किन्नरान् मर्त्यांस्तलसह्यंकान् परानपि ॥ १८
मद्दीन्यापि विलेह्यय पेषयामि करेणत । किं करोम्यहमीशान तव स्मृतिपथं गतः ॥ १९
इत्युक्त्वा विनयेनायं तस्थौ बद्धाञ्जलिः पुरः । ततः प्रभुस्समुद्वीक्ष्य वीरभद्रं महाबलम् ॥ २०
भद्र वीर महासत्त्व महाज्ञापरिपालक । गुरुत्वा मामधुना दक्षस्सर्वान् देवान्यजत्यलम् ॥ २१

तत्र गत्वा हविर्भागं पृच्छ त्वं मामकं वरम् । दक्षश्चेत्तद्गृही चाशु समागच्छ मदन्तिकम् ॥ २२
न प्रयच्छति चेद्दक्षस्तदा तममरैस्सह । हत्वा शिरस्समुच्छिद्य यागमध्ये दुराशयम् ॥ २३
तिष्ठ तत्र तदाऽहञ्च समायास्यामि शीघ्रतः । इत्युक्त्वा प्रेषयामास वीरभद्रं महेश्वरः ॥ २४
अथ देवं प्रणम्याथ प्रतस्थे सहभावली । कृत्वा कोलाहलारावं परमानन्दनिर्भरः ॥ २५
ससर्ज वीरानतुलान्निश्वासोच्छ्वासयोस्तथा । रोमकूपेषु सर्वेषु नासाकर्णपुटेष्वपि ॥ २६
स्वेदबिन्दुषु नेत्रेषु जटाशीर्षद्वकेष्वपि । वक्षोबाहु गळेभ्यश्चान् जानुजङ्घाघ्रिकेष्वपि ॥ २७
नाभीकटीमुखेभ्यश्चैवमङ्गेभ्यात्मसमान्बहून् । गणान् भूतानिभूरीणि क्षणमात्रेण लीलया ॥ २८
तदानीं प्रस्थिता साऽपि भद्रकाळी शिवाज्ञया । काळीस्वसदृशा बह्व्यो नानावर्णास्ससर्ज ह ॥ २९
नीलरक्तबलक्षाभा पीतकर्बुरवर्णका । शार्दूलसिंहशरभगजाश्ववृषभानना ॥ ३०
भल्लूकवाळिनकाश्वगवयादिमुखास्तथा । नानायुधकरास्सर्वास्सर्वे नानाविधायुधा ॥ ३१
नानावर्णास्तथा सर्वे नानाविधमुखा गणा । नानाभूषणदीप्ताङ्गाश्चण्डवह्निविलोचना ॥ ३२
महासत्वा महावेगा ब्रह्मविष्ण्वस्थिमालिका । ब्रह्माण्डानामशेषाणां पिण्डीकरणपण्डिताः ॥ ३३
वसुमण्डानि सर्वाणि वाडवश्च क्षुदन्विता । एवं विधानि भूतानि वीरा काळ्यो विभीषणाः ॥ ३४
मोहिन्यश्चैव शाकिन्यो डाकिन्यो योगिनीगणा । भैरव्य काळरात्र्यश्च कृतकोलाहलारवा ॥ ३५
सर्वे सर्वाश्च सर्वाणि निर्जग्मुरनुसृत्य तौ । भानुकपादयस्सर्वे गणा वाद्यान्यताडयन् ॥ ३६
छत्रचामरकेत्वादिधारिणो निर्गता द्रुतम् । नानोपचारनिरता परे सर्वेऽपि निर्ययु ॥ ३७
पिनाकिदण्डिप्रमुखा धृतछत्रा विनिर्ययु । क्षणेन सर्वे दक्षस्य रुरुधुर्यागवेश्म तत् ॥ ३८
चकम्पिरे तदा सर्वे जना लोकाश्चतुर्दश । तदानीं वीरभद्रस्तु वीरान्वीक्ष्य परानपि ॥ ३९
आवृत्य शाला महतीं यूयं तिष्ठत हे गणा । ये तिष्ठन्त्यत्र शालायां भोक्तुमभ्यागतास्सुरा ॥ ४०
अन्येव तेऽन्यथा सर्वे निर्गमिष्यन्ति वञ्चका । स्यात्तथ्यमवधानेन युष्माभिस्तदिहाधुना ॥ ४१

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकत्रिंशोऽध्याय ॥

---

॥ अथ द्वात्रिंशोऽध्याय ॥

दक्षनिकटे वीरभद्रेण शिवाय हविर्भागदान चोदना ॥

इत्युक्त्वा वीरभद्रस्तु भद्रकाळी सहायवान् । विवेश यागसदनं सर्वदेवगणाकुलम् ॥ १
प्रविष्टे वीरभद्रेऽस्मिन्यागशालां मनोरमाम् । तदा गणा इमे यागशालामावृत्य पापिन ॥ २
तत्पालकान् भटान्सर्वान् हत्वा कृत्वा महारवम् । तस्थुस्ते सावधानेन वीरभद्रस्य शासनात् ॥ ३
वीरभद्रं तदा वीक्ष्य विष्णुब्रह्ममुखास्सुरा । सहायां तं भद्रकाळ्या भीता प्रोचु परस्परम् ॥ ४
कावेतावतुलाकारौ भ्रुकुटीकुटिलेक्षणौ । पार्वतीपरमेशानकोपोद्भूताविमौ ध्रुवम् ॥ ५
आययौ किंवशः कोपं कथं वा स्याद्भयंकरः । इति केचित्सुरा वाचमथ प्रोचुस्तदानता ॥ ६
विनाशकालस्सम्प्राप्तस्सर्वेषां नाकिनामिह । इत्यथ केचिदमरा व्यस्तमूचु परस्परम् ॥ ७
शिवस्य शिवभक्तस्य निन्दका येन पापिन । तथामाता भयदैषी वाक्यमेतत् ध्रुवं श्रुते ॥ ८
इदमेतद्धि दक्षेऽस्मिन्निदानीमिति चोचिरे । शिवनिन्दापराणाञ्च गोष्ठ्या ये निवसन्ति ते ॥ ९

विनश्यन्तीति वचनं वेदस्यास्मात्तु तत् ध्रुवम् । किमर्थं मतिरुत्पन्ना यागे दक्षस्य पापिनः ॥ १०
अनयाहि सुराणांच युगपन्मृतिरागता । अस्मानपि सुरान्सर्वान् स्वप्रयोजनकारिणः ॥ ११
मत्वा सर्वात्मना सत्वविहीनान् पशुजादिवत् । प्रवृत्तोऽयं महादेवं मुक्त्वा यागे सुनिश्चितः ॥ १२
तस्माद्देवागतो मृत्युस्सर्वेषामीश्वराज्ञया । इत्यूचुः केचिदमरा महाभयसमन्विताः ॥ १३
दाक्षायण्यवमानेन सर्वलोकजनन्यसौ । विनिर्गता ततश्शीघ्रं तत्फलं समुपस्थितम् ॥ १४
इति नानाप्रकारेण वदत्स्वेतेषु नाकिषु । वीरभद्रस्तदा काळ्याऽऽगत्य दक्षान्तिकं क्रुधा ॥ १५
कृत्वा कोलाहलारावं नादयञ्छृङ्गमद्भुतम् । विहस्य तस्थे पुरतो वीक्षितस्सुरपुङ्गवैः ॥ १६
शृङ्गध्वनिं समाकर्ण्य सुराः केचन दुद्रुवुः । अस्फुटच्च तदा मेरुर्धरित्र्या सह शीघ्रतः ॥ १७
मुमुहुः सर्वलोकस्थाः प्राणिनस्सकला अपि । भीतास्सुराश्च तत्रस्था मुमुहुः पतिता भुवि ॥ १८
शालायाश्च वहिर्देशं प्राप्य केचित्सुरास्ततः । वीरैरुच्चाटिताः क्षिप्राः पुनश्शालामवापिरे ॥ १९
एवमेतेषु सर्वेषु भयं प्राप्तेषु नाकिषु । मुमोह दक्षः पापिष्ठस्तदानीं बहुविह्वलः ॥ २०
पुनस्सञ्जातविज्ञानस्तदाऽत्यन्तं भयान्वितः । वीरभद्रं समीक्ष्यार्यं निजगाद वचस्तदा ॥ २१
कस्त्वं किमर्थं संप्राप्तः कुतो देशान्महाबल । इत्युक्तवति दक्षेऽस्मिन्वीरः प्राह गभीरवाक् ॥ २२
विद्धि मां देवदेवस्य महादेवस्य शूलिनः । आत्मजं तस्य यज्ञे ते हविरादातुमागतम् ॥ २३
तत् त्वं दक्ष हविश्शंभोर्देहि शीघ्रमिहाध्वरे । इत्युक्तो वीरभद्रेण दक्षः प्राह पुनर्वचः ॥ २४
न दीयते हविर्भागो यागेऽस्मिन्रुद्रस्य वै । मुक्त्वा तं तामसं देवान् हविर्भिः प्रीणयाम्यहम् ॥ २५
एवं वादिनि दक्षेऽस्मिन्नाम्नायो भयकंपितः । प्रणवेन समुत्थाय प्राह वाक्यं तदा द्विजाः ॥ २६
अध्वरेशं महादेवं हविर्भिः प्रीणयाधुना । तस्याज्ञया जगत्सर्वं समर्यादं हि वर्तते ॥ २७
स एवार्हति देवेशो हविषः प्रथमस्य हि । सत्यं सत्यं ब्रवीम्यद्य तव दक्ष प्रजापते ॥ २८
इति वेदवचश्श्रुत्वाऽप्ययं दक्षप्रजापतिः । न दातुमैच्छद्देवस्य हविर्वैरमहो द्विजाः ॥ २९
तदानीमेव वेदोऽसौ स्तुत्वा सांबं महेश्वरम् । वीरभद्रं प्रणम्याशु प्रणवेन तदाज्ञया ॥ ३०
स्वपदं प्राप तरसा ब्राह्मणानामधीश्वराः । एवमुक्त्वा गते वेदे वीरभद्रः पुनः क्रुधा ॥ ३१
दक्षं वीक्ष्य दुराचारं वेदसद्भागमध्वरे । उवाचैनं महासत्वशिवाचार्यं मनसा स्मरन् ॥ ३२
दक्षः — न मया दीयते भागो रुद्रस्यक्रूरकर्मणः । भूतैः प्रेतैः पिशाचैश्च सर्वदा संचरत्ययम् ॥ ३३
तस्माद्यज्ञे मदीयेऽसौ हविर्भोक्तुमसांप्रतम् । इत्युवाच दुराचारश्श्रुत्योर्नाशयद्वचः ॥ ३४
तस्य तद्वचनं श्रुत्वा वीरभद्रः प्रतापवान् । युष्माकममरास्सर्वे संमतं किं वचोऽस्यवै ॥ ३५
इति पप्रच्छ तत्रस्थान् ब्रह्मविष्णुमुखान्सुरान् । वीरभद्रस्य वचनमश्रृण्वन्त ह्यमराः ॥
तस्थुर्नम्राननास्सर्वे मोहविष्टनिजान्तराः ॥ ३६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे द्वात्रिंशोऽध्यायः ॥

॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

श्री वीरभद्रेण सपरिवारस्य दक्षस्य देवानाञ्च वधादि शिक्षणम् ॥

तदेतदखिलं दृष्ट्वा वीरभद्रो महाबलः । कृत्वा कोलाहलारावं ब्रह्माण्डं स्फोटयन्निव ॥ १
दण्डेनाताडयद्विष्णोरुरोमध्येऽतिवीर्यवान् । तदाभीं कौस्तुभं रत्नं पद्मा च तदुरोगता ॥ २
भिन्ना पपात शतशो भूमिपृष्ठे द्विजोत्तमाः । पतित्वा तरसा विष्णुर्मुमोह गतविक्रमः ॥ ३
विधातारं ततो मूर्ध्नि मुष्टिनाकुट्टयद्विभुः । पपात सोऽपि मोहेन यावत्तूर्णं प्रजापतिः ॥ ४
गायत्रीमपि सावित्रीं ब्रह्माणीमपि निर्गताम् । छिन्ननासाकुचाश्चक्रे करवालेन वीरपः ॥ ५
ततो देवाः परा भीता दुद्रुवुस्सर्वतो बहिः । बहिर्भूतैश्च वीरैश्च द्राविताः पुनरन्तरम् ॥ ६
ततस्तु चन्द्रं धावन्तं पादेनाताड्य सत्ववान् । पेषयित्वा यमस्यापि शिरश्चिच्छेद निष्ठुरम् ॥ ७
कपोले ताडयामास सूर्यस्याद्भुतविक्रमः । भग्ना दन्तास्तदा तस्य निपेतुः पृथिवीतले ॥ ८
भगस्योत्पाटयामास लोचने द्वे दुरात्मनः । इन्द्रं कोकिलरूपेण निर्यान्तमपि सोऽच्छिनत् ॥ ९
अग्नेर्हस्तांश्च रसनां हविर्भोक्तुरखण्डयत् । नासिकामग्निभार्यायाः खड्गेनाच्छिनदद्भुताम् ॥ १०
दण्डेन निर्ऋतिं ताड्य जघानामित्रहा तथा । मुसलेनाप्यलेनापां पतिं हत्वा महाबलः ॥ ११
अमारयत्ततो वायुं यान्तं परशुना द्विजाः । कुबेरं निजशूलाग्रे प्रोतयित्वा ननर्त ह ॥ १२
रुद्रास्त्वेकादश तदा सेशाना भयकंपिताः । वीरभद्रं प्रणेमुस्ते प्रणतार्तिप्रभञ्जनम् ॥ १३
तानेतान्वीरभद्रोऽसौ भर्त्सयित्वा मुमोच ह । असुरेन्द्रं शरेणायं निरस्तुं कृतधांस्तदा ॥ १४
मृगरूपेण धावन्तं यज्ञं यागगृहान्तरे । निरुध्य पुरतो गत्वा चिच्छेदास्त्रेण मन्युना ॥ १५
तदेतत्सर्वमालोक्य दक्षश्चिन्तामवाप्तवान् । मयि पश्यति वीरोऽयं यज्ञ देवानमारयत् ॥ १६
उक्तो हि शंकरस्यास्य महिमा ब्रह्मणा पुरा । ज्ञात्वा तं देवमीशानं तपः कृत्वा सुदारुणम् ॥ १७
ऐश्वर्यं प्राप्तवानसि कृपयाऽस्य महेशितुः । क्षामनुध्यात्तु देवोऽयं मयाऽज्ञेन विनिन्दितः ॥ १८
क्रियमाणे पुरा यागे ब्रह्मणा जनकेन मे । न दातव्यं हविश्शंभोरिति कुण्ठीकृतं खलु ॥ १९
मयाऽपि देवं तं मुक्त्वा समारब्धः क्रतुस्सुरैः । दधीचिना वचः प्रोक्तं न श्रुतं हितमिच्छता ॥ २०
दाक्षायण्या वचः पुत्र्या न श्रुतं सुतरां वचः । वीरोऽयं पार्षदैः पृच्छन्मयाऽत्र विमुखीकृतः ॥ २१
प्रणवेन समुत्थाय वेदेनोक्तश्च न श्रुतम् । अनर्थ एव देवानां विष्णवादीनां मयाऽऽर्जितः ॥ २२
कुपितं वीरभद्रञ्च दृष्ट्वा काळीञ्च तादृशीम् । आवृतानि च भूतानि ज्ञात्वा गन्तुमशक्नुवन् ॥ २३
भ्रमीरिव तदा भीतो मौनं तस्थे द्विजोत्तमाः । वीरभद्रस्समुद्धृत्य खड्गमादाय वेगतः ॥ २४
चिच्छेद तस्य मूर्धानं दक्षस्यास्य दुरात्मनः । निष्कृतिश्शिवनिन्दाया वीरेणात्रोपपादिता ॥ २५
अग्नौ प्रक्षेपयामास शिरश्छिन्नं दुरात्मनः । तदानीमभवद्भस्म केवलं तत् द्विजोत्तमाः ॥ २६
हतं दक्षं ततो दृष्ट्वा तत्पत्नी वेदवल्लिका । तत्पुत्र्यो बान्धवाश्चान्ये परियमुस्समंततः ॥ २७
वेदवल्यास्तदा कर्णावच्छिनत्परवीरहा । वीरभद्रस्तदान्यासां भद्रकाली बलोत्कटा ॥ २८
छित्वा शिरांसि सहसा कन्दुकांश्च चकार ह । देवर्षीणां मनुष्याणां भार्याश्चान्या मनोरमाः ॥ २९
अदृश्येतामिमौ दत्वा वीरकाल्योप्यनेककाः । तदाज्ञामवाप्याशु वीरकाल्योस्तयोर्महत् ॥ ३०
यागशालाबहिर्देशे स्थितं सैन्यं दुरासदम् । स्त्रियः प्राकारमतुलं प्रविश्य यागवेश्मनि ॥ ३१

कृत्वा कोलाहलारावं सुरानन्यान् द्विजाधमान् । अपीनलैर्निशितैः खड्गैः मुसलैस्तोमरैः परैः ॥ ३२
पादाघातेन हस्तैश्च जघ्नुश्च बहुधा द्विजाः । केषां शिरांसि भूतानि भिन्नन्त्यत्र दुरात्मनाम् ॥ ३३
गलान्दोर्भिश्च केषांचिद्बभञ्जस्थीनि कोपतः । चिच्छिदुश्च शरीराणि जिह्वाः केषां तदाच्छिदन् ॥ ३४
नेत्राण्युत्पाटयामासु श्शरीराण्यपाटयन् । भित्वाऽऽयुधैश्शरीराणि केषां रक्तानि चापिबन् ॥ ३५
आज्यस्थालीषु केषांचिच्छरीराणि दुरात्मनाम् । निक्षिप्य क्वथयित्वाऽग्नौ बुभुजुस्सुमनोहरम् ॥ ३६
इधुरान्त्राणि केषांचिन्माला इव विनिर्मिताः । शङ्खानामारवं चक्रुश्शिवसंकीर्तनं तथा ॥ ३७
पलायतपरानन्यान् सुरान्पादैरपेपथन् । मधुक्षीराज्यदध्यादि हवींषि लिलिहुस्तदा ॥ ३८
यागार्थं मागतान्मेषान्निष्पील्य चिखिदुस्तदा । मूत्रैरशामयन्वह्नीन् , कुण्डस्थान् कोपवैभवात् ॥ ३९
ददहुर्यागशालां तां कानि भूतानि कुत्रचित् । बिभिदुः कलशान् सर्वान् गङ्गायां मास्त्वपातयन् ॥ ४०
बिभिदुश्श्येनवेदीश्च कृत्वा कोलाहलारवम् । विमानानि रथानश्वान्वाहनानिव नाकिनाम् ॥ ४१
आयुधानिव भूषाश्च वह्नौ चिक्षिपुरुत्क्रुधा । एवं दक्षस्य कन्याश्च जामातॄन् बान्धवान् द्विजाः ॥ ४२
वाचामगोचरतया बाधन्तेस्मातिपापिनः । काकाश्श्येनाश्च गृध्राश्च तदा सर्वत्र तस्थिरे ॥ ४३
एवं नानाप्रकारेण हतेष्वेषु दुरात्मसु । गतमोहस्तदा विष्णुरुत्थितः कोपविह्वलः ॥ ४४
मृतास्स्वसेनास्संवीक्ष्य यागे विघ्नमुपस्थितम् । शिवनिन्दाफलमिदं नैव जज्ञे द्विजोत्तमाः ॥ ४५
योद्धुं वीरेण तस्यासीन्मतिरात्म विनाशिनी । हतं गरुडमज्ञात्वा सस्मारागमनाय तम् ॥ ४६
तस्मिन्ननागते विष्णुः कोपशोकसमन्वितः । पुनः स्वमाययोत्पाद्य तार्क्ष्यमन्यं महाबलम् ॥ ४७
आरुह्य पाञ्चजन्यञ्च शङ्खं दध्मौ जनार्दनः । तदा भूतेषु काळीषु ववर्ष निशिताञ्छरान् ॥ ४८
प्रतिजघ्निरे विष्णुं काळ्यो भूतानि चायुधैः । युध्यन्तं वीक्ष्य तं विष्णुं वीरभद्रः प्रतापवान् ॥ ४९
योद्धुं तेन मतिं चक्रे विहस्यैनं महाक्रुधा । तदा शिवाज्ञया तत्र रथः कश्चित्समागतः ॥ ५०
सहस्रवेदतुरगयुतश्चित्रध्वजावृतः । अनेकैरायुधैः पूर्णो दिव्यमालापरिष्कृतः ॥ ५१
गतमोहस्तदा धाता विष्णुं वीक्ष्य युधि स्थितम् । मखध्वंसं सुराणाञ्च मरणं भयकंपितः ॥ ५२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे त्रयस्त्रिंशोऽध्यायः ॥

---

॥ अथ चतुस्त्रिंशोऽध्यायः ॥

॥ विष्णुना श्रीवीरभद्र प्रसादकरणम् ॥

समयो मम रक्षाया इत्थमाप्त इति निश्चितः । स्वयं तु सारथिर्भूत्वा रथमारुह्य शीघ्रतः ॥ १
वीरभद्रस्य निकटमानयत्तं रथं परम् । अवरुह्य रथादस्मात् वीरभद्रं प्रणम्य सः ॥ २
शिवाज्ञया रथश्रेष्ठो भवते समुपस्थितः । अलंकुरु महासत्त्व स्थिते मयि तु सारथौ ॥ ३
भद्रकाळ्याऽनया वीरसमसागच्छ मे प्रभो । इत्युक्त्वा प्रणनामायं दण्डवत्पृथिवीतले ॥ ४
वीरभद्रस्ततस्तस्मिन् मुक्त्वा कोपं महाबलः । आरुह्य भद्रकाळ्या तं रथं सर्वायुधावृतम् ॥ ५
ब्रह्मणा कृतसारथ्यो विष्णो उपरि निर्ययौ । तदानीं माधवो वीरं निजगाद वचो द्विजाः ॥ ६
शिवनिन्दारतस्यास्य युक्ता दक्षस्य तावकी । न हि यस्यास्सुरास्तत्र सर्वे निकटवर्तिनः ॥ ७
इति विष्णोर्वचः श्रुत्वा वीरभद्रो महाबलः । ये विनिन्दन्ति देवेशं महापापा महेश्वरम् ॥ ८

तस्योष्ठ्यां निवसन्त्यन्ये ये च ते पापिनः स्मृताः । आश्रामभीयां सर्वेषां विधत्ते वैदिकी श्रुतिः ॥ ९
तथैव कृतवानसि त्वां न मुञ्चामि माधव । इत्युक्तो माधवः कोपाद्भूतेषु निशितान् शरान् ॥ १०
ववर्ष उग्रमहाघोरो युगपद्धर्ममेघवत् । तं दृष्ट्वा वीरभद्रोऽपि धनुरादाय निष्ठुरम् ॥ ११
उभया संयोज्य सहसा ववर्षास्त्राणि माधवे । पुनस्सहस्रं बाणानां निशितानां हरिः क्रुधा ॥ १२
मुमोच वीरभद्रेऽस्मिन् सर्वशत्रुविमर्दके । तान्बाणान्वीरभद्रोऽसौ छित्वात्यन्तपराक्रमः ॥ १३
बाणमेकं पुनर्विष्णो र्निटिले योजयच्छितम् । स्रवद्रुधिरवाहेन परिप्लुष्टो हरिस्तदा ॥ १४
पतित्वा भूतले क्षिप्रं मुमोह गतचेतनः । ससंभ्रमं समुत्थाय पुनर्नारायणो बली ॥ १५
ववर्ष सायकानुग्रान्वीरभद्रं प्रति क्रुधा । तांश्च सर्वानयं छित्वा कृत्वा किलिकिलारवम् ॥ १६
माहेयं सर्वशत्रुघ्नं सन्दधे मधुसूदने । महोणानेन मधुभिन्मुमोह भृशमातुरः ॥ १७
समुत्थितं पुनर्मोहात् क्षणेन मधुसूदनम् । कुरु युद्धं मयेत्याह वीरभद्रो महाबलः ॥ १८
तस्य तद्वचनं श्रुत्वा विष्णुः कोपाकुलान्तरः । ववर्ष देवतास्त्राणि शतशोऽथ सहस्रशः ॥ १९
तान्यच्छिनत्तदा वीरः प्रगल्भामरसायकैः । ततस्तु सन्दधे विष्णुर्ब्राह्ममस्त्रमरिन्दमम् ॥ २०
तदप्यच्छिनदेकेन वीरभद्रः प्रतापवान् । पुनश्च सायकान् घोरान्माधवः प्राहिणोत् क्रुधा ॥ २१
तानेकेन शरेणायं छित्वा शार्ङ्गं धनुर्वरम् । चिच्छेद वीरभद्रोऽयं लीलयैव द्विजोत्तमाः ॥ २२
आविध्यद्धृदं द्वाभ्यां सायकाभ्यां पुनर्बली । ततस्तु माधवः कोपात्तार्क्ष्यं पक्षत्वमागतम् ॥ २३
समीक्ष्यानेकरूपाणि स्वानि जग्राह शीघ्रतः । स तदा तानि रूपाणि माधवस्यातिमायिनः ॥ २४
ददाह चण्डनिटिलवह्निना क्षणमात्रतः । एक एव तदा विष्णु रेतसिञ्चकमुज्ज्वलम् ॥ २५
तत्याज सर्वशत्रुघ्नमुत्तुल्योपरि वेगतः । अमेन महताभ्याशमागतं तन्महाप्रभम् ॥ २६
सग्रहीत्पाणिना शीघ्रं लीलयाऽमितविक्रमः । ततो दण्डं समादाय कालदण्डमिवस्थितम् ॥ २७
संभ्राम्य महते तस्मिन् प्रयत्नेनाक्षिपद्धरिः । धूलीचकार तं वीरं स्वदण्डेनाभिताड्य च ॥ २८
पुनः किलिकिलारावं कृत्वा कोपाकुलाननः । खड्गमादाय वेगेन महान्तं भ्रामयन् हरिः ॥ २९
धावन्नितस्ततस्तूर्णं पादविक्षेपलाघवात् । वीरस्याभ्याशमगमत्सिंहस्येव मदद्विपः ॥ ३०
समायान्तं महावेगाद्वीरभद्रोऽरियातकः । स्तंभयामास हुंकृत्य ब्राह्मणानामधीश्वराः ॥ ३१
स्तब्धस्तस्थौ हरिस्तूर्णं चित्रार्पित इवाचलः । वीरभद्रस्ततः किंवा कर्तुमेतमचिन्तयत् ॥ ३२
पेष्टुं वा ताडितुं वापि न च विज्ञायते द्विजाः । तदाऽशरीरिणी वाणी श्रुता तत्र शिवाज्ञया ॥ ३३
कोपं संहर वीराद्य सर्वसंहारकारक । तां निशम्य शिवादेशैर्वैधं निश्चित्य वीर्यवान् ॥ ३४
उपसंहृतवान्मन्युं स्वात्मन्येवामरेश्वराः । ततो धाता त्वथाप्रसादवकहातिशीघ्रतः ॥ ३५
प्रणनामाञ्जलिकरो दण्डवत्प्रणयेन तम् । ममापराधं देवेश क्षमस्व करुणाकर ॥ ३६
इति स्तुत्वा तदा वीरं प्रसन्नमकरोत् द्विजाः । एतस्मिन्नेव समये विष्णुस्तममरेश्वरम् ॥ ३७
प्रणम्य दण्डवद्भक्त्या स्तुत्वा स्तोत्रशतैरपि । स्वागसो विनिवृत्त्यर्थं प्रार्थयामास भक्तिमान् ॥ ३८
वीरभद्र महासत्व शिवाज्ञापरिपालक । संसर्गादस्य पापस्य शिवनिन्दारतस्य हि ॥ ३९
स्वोचितं फलमस्माभिः प्राप्तं मूढात्मभिः प्रभोः । चराचराणि भूतानि भुवनानि शिवानि च ॥ ४०
ब्रह्माण्डान्यप्यशेषाणि भस्मानि तव वीक्षणात् । स्मितेन चाट्टहासेन निश्वासोच्छ्वासकैरपि ॥ ४१
तदस्माकं सुरेश्वीश तूलकल्पेषु देवप । लीलामात्रं विलसितं नात्र कार्या विचारणा ॥ ४२

कासि त्वं सर्वसंहर्ता क्वैते मशकास्सुराः । किं सेनया तव विभोरायुधैर्वा स्मितायुध ॥ ४३
त्वदधीनाखिलाब्रह्म बहुना किं महाबल । शक्तिरस्मि शिवस्याहं प्रकृत्याख्या जगत्प्रभोः ॥ ४४
प्राप्तं तस्मात्पुरा चक्रं यदन्यच्च शंकरात् । शिवपूजामहिम्नैव विष्णुत्वं प्राप्तवानहम् ॥ ४५
महाबल महासत्त्व क्षमस्वागो ममाधुना । इत्युक्त्वा प्रणनामायं वीरभद्रं पुनः पुनः ॥ ४६
कृपाक्षुके तदा वीरः प्रसन्नो माधवाय सः । तदन्तरे महादेवः प्रादुरासीद्वृषोपरि ॥
अंबया सह कल्याण्या नन्द्याद्यैश्च गणैस्सह ॥ ४७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे चतुस्त्रिंशोऽध्यायः ॥

---

॥ अथ पञ्चत्रिंशोऽध्यायः ॥

दक्षादीनां उज्जीवनं तैः कृत स्तुतिश्च ॥

तं दृष्ट्वा वीरभद्रोऽसौ महादेवं जगद्गुरुम् । प्रणम्य परया भक्त्या स्तुत्वा स्तोत्रशतैरपि ॥ १
तस्थौ बद्धाञ्जलिपुटः पुरतोऽस्य महेशितुः । तस्थतुश्च तदा विष्णुब्रह्माणौ भयकंपितौ ॥ २
प्रणम्य सांबमीशानं सगणं परमेश्वरम् । दाक्षायणी तदा गौरी दृष्ट्वा देवान्मृतिं गतान् ॥ ३
एतौ बद्धाञ्जलिकरौ विधिनारायणावपि । यागस्यापि तथा ध्वंसं मृतं दक्षमपि द्विजाः ॥ ४
कृपामूर्तिं कृपायुक्ता देवं वीक्ष्य वचोऽब्रवीत् । स्वामिन्नज्ञानतो देवं त्वामविज्ञाय शङ्करम् ॥ ५
इमां दशामनुप्राप्ता स्वसर्वैश्वत्यन्तगर्विताः । मन्निमित्ताद्यतस्तस्मात्सर्वानुज्जीवय प्रभो ॥ ६
इत्युक्त्वा सा महादेवी प्रणनाम महेश्वरम् । कृपामूर्तिर्वचस्तस्या हृदि कृत्वा महेश्वरः ॥ ७
वीरभद्रं समीक्ष्यैनं बद्धाञ्जलिपुटं पुरः । पुनरुज्जीवयाश्वेनान् वीरभद्र मदाज्ञया ॥ ८
इत्युवाच दयासिन्धुस्तदानीं ब्राह्मणोत्तमाः । ततश्शिवाज्ञां शिरसा वहन्वीरस्सुरानिमान् ॥ ९
समीक्ष्योज्जीवयामास कृपादृष्ट्या महाबलः । स्वापादिव ततोत्तस्थुस्सर्वे विनिहतास्सुराः ॥ १०
दक्षगोष्ठीनिवासोऽपि स्वप्ने दृष्ट इव स्मृतः । अथैते देवमीशान मंबिकासखमव्ययम् ॥ ११
प्रणम्य दण्डवद्भीता भक्त्या च परया युताः । स्तुत्वा स्तोत्रैर्महादेवं वाचमूचुश्च ते द्विजाः ॥ १२
दयासिन्धो महादेव परार्थैकप्रयोजन । महापापात्सुरास्सर्वे बहुकालफलप्रदात् ॥ १३
शिव दक्षस्य संसर्गसंभवादतिपापिनः । मोचिताश्शीघ्रकालेन वयं युगपदेव भो ॥ १४
कस्त्वां विना महादेव सुराणां मूढचेतसाम् । शरण्यश्शरणं लोकेष्वापदार्तिप्रभञ्जन ॥ १५
पुरा भागीरथीं पुण्यां शिरसा धृतवानसि । सर्वेषामेव देवानां रक्षार्थे पाणिपल्लवे ॥ १६
वह्निमप्यवहश्शंभो विषमप्यपिबः खलु । एवमादिभयेभ्यस्त्वमस्मान्रक्षितवानसि ॥ १७
तस्मात्त्वमेव न स्त्राता भीतानां परमेश्वर । नमस्तेऽस्तु महादेव नमो मीढुष्टमाय ते ॥ १८
मुण्डिने जटिने तुभ्यं सर्वरक्षापरायण । एवमुक्त्वा तदा देवाः प्रणेमुर्भक्तवत्सलम् ॥ १९
तानेतानमरान् सर्वान् विष्णुब्रह्ममुखाञ्छिवः । निरीक्ष्य करुणादृष्ट्या मन्दस्मितमुखांबुजः ॥ २०
एतेभ्यः प्रेषयामास रक्षार्थं ब्राह्मणोत्तमाः । प्रेषितास्तु ततो देवा महादेवं त्रियंबकम् ॥ २१
प्रणेमुर्दण्डवद्भक्त्या प्रीत्या च परया सह । स्रष्टा तदा महादेवं प्रणम्य प्रणतार्तिहम् ॥ २२
उज्जीवय महादेव दक्षमप्याश्रितार्तिहन् । स्वतन्त्रशक्ते सर्वेश सर्वभूतहितोद्यम ॥ २३

एवमभ्यर्थयद्देवं भक्तवश्यं कृपानिधिम् । तस्य तद्वचनं श्रुत्वा महादेवः पिनाकधृक् ॥ २४
वीरभद्रं समीपस्थमवलोकयदीश्वरः । विज्ञायेङ्गितमीशस्य वीरभद्रश्शिवाज्ञया ॥ २५
मातुकंपं गणेशानं तद्देहानयनाय तम् । प्रेषयामास बलवांस्तदानीं ब्राह्मणोत्तमाः ॥ २६
शीघ्रमेव तमानीय भातुकंपस्समागतः । भाजं शिरश्च दक्षस्य कबन्धे तस्य पापिनः ॥ २७
प्राणेन योजयामास शिवाज्ञापरिपालकः । ततो दक्षस्समुत्थाय स्वापादिव भयान्वितः ॥ २८
प्रणम्य वीरभद्रं तं स्मरन् पापमपि स्वकम् । तस्थे महत्या भीत्याऽयं बद्धाञ्जलिकरः पुरः ॥ २९
क्षिप्रेण च पुनश्शंभुं दृष्ट्वा सांबं वृषोपरि । प्रणनाम भयाविष्टः प्राञ्जलिः पुरुषर्षभाः ॥ ३०
वेपमानशरीरं तं वीक्ष्य शम्भुः कृपाकरः । माभी र्भवतु ते दक्ष प्रसन्नं विद्धि मामिह ॥ ३१
इति शंभोर्वचश्श्रुत्वा दक्षश्श्रोत्रसुखावहम् । प्रणनाम पुनर्भक्त्या प्राञ्जलिर्ब्राह्मणोत्तमाः ॥ ३२
कृतार्थोऽस्मि महादेव दर्शनेन तव प्रभो । मुक्त्वा त्वां देवदेवेशमवलंब्य सुरानिमान् ॥ ३३
फलञ्च भुक्तवानस्मि शीघ्रमेव तवाज्ञया । क्षमस्व मे महादेव मन्तुमेनं कृपानिधे ॥ ३४
नमो नमस्ते देवेश पुनर्भूयो नमो नमः । त्वदधीनमिदं शंभो जगदेतच्चराचरम् ॥ ३५
अतस्त्वद्विहितामाज्ञां क्षमते कोऽतिवर्तितुम् । आज्ञाभंगात्तव स्वामिन्मया प्राप्तमिदं फलम् ॥ ३६
इति ब्रुवति दक्षेऽस्मिन् बद्धाञ्जलिकरो द्विजाः । वीरभद्रं तदा गौरी वीक्ष्य प्रेमरसानना ॥ ३७
पस्पर्श पाणिना पृष्ठे तुष्ट्या परमया युता । ददावस्य वरान्भूयो बहून् दाक्षायणीमुदा ॥ ३८
तदा विष्णुमुखान् देवान्वीक्ष्य प्राह महेश्वरः । स्वकृतस्यास्य पापस्य फलं दत्तं मया सुराः ॥ ३९
इति देववचश्श्रुत्वा तदानीं ते तु नाकिनः । प्रणम्य शम्भुं गौरीञ्च वीरभद्रं महाबलम् ॥ ४०
तस्थुः प्राञ्जलयस्सर्वे जयशब्दाभिभाषिणः । स्थानान्तरं महासत्रशालायां ब्राह्मणोत्तमाः ॥ ४१
ततः प्रतस्थे भगवान् गौर्या सह महेश्वरः । वीरभद्रेण काल्या च गणैस्सर्वैः परीवृतः ॥ ४२
नानावादित्रनिनदपूरिताखिलदिङ्मुखाः । प्राप कैलासमचलं पर्वतानामधीश्वरम् ॥ ४३
तत्र सिंहासने स्थित्वा गौर्या साकं महेश्वरः । वीरभद्रं ससैन्यं तं भद्रकाल्या पदंप्रति ॥ ४४
प्रेषयामास भगवान्विश्वात्मा लोकपूजितः । शिवस्याज्ञामयं धृत्वा शिरसा बलिनांवरः ॥ ४५
प्रणम्य सोममीशानं भद्रकाल्या रथे स्थितः । प्रतस्थे सहसा वीरैः स्वसैरपि परीवृतः ॥ ४६
भातुकंपाख्यगणपकृतसारथ्यकर्मवान् । तुष्ट्या परमया युक्तस्स्वां पुरीं प्राप भूसुराः ॥ ४७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे पञ्चत्रिंशोऽध्यायः ॥

---

॥ अथ षट्त्रिंशोऽध्यायः ॥

महाशिवरात्रौ ज्योतिर्लिङ्ग रूपेण माविर्भावः ॥

ततो दक्षं विधिः प्राह पुत्रं दुःखभरान्वितम् । महामोहेन दक्ष त्वं किं कार्यं कृतवानसि ॥ १
देवतानामृषीणांच ब्राह्मणानां महात्मनाम् । केवलं मृत्युरेवात्र त्वया संपादितः खलु ॥ २
तथापि नाशिता कीर्तिं श्रीरप्यन्ये त्वदाश्रिताः । विनिन्द्य सांबमीशानमिदं प्राप्तं फलं त्वया ॥ ३
न केवलं महामोहो बभूवात्मज ते शिवे । मायया पूर्वमीशस्य महामोहो ममाप्यभूत् ॥ ४
समागत्य तदा शंभुर्मा रक्ष शिवरूपम् । तत्त्वं पूजय देवेशं सर्वश्रेयोविधायिनम् ॥ ५

दक्षः —

मोहः कदा बभूवासींस्तव शम्भौ कृपानिधौ । कथं ररक्ष भगवांस्तात त्वामेष मोहितम् ॥ ६
एतन्मे ब्रूहि वृत्तान्तं यथावृत्तं क्रमात् प्रभो । इति दक्षस्य वचनं समाकर्ण्य तदा विधिः ॥ ७
प्रोक्तमेव पुनर्वक्ष्ये पुत्र शृण्ववधानतः । इत्युक्त्वाऽयं महादेवं साक्षात्संसारभेषजम् ॥ ८
ध्यात्वा हृदब्जनिलये बद्धाञ्जलिकरोऽवदत् । चतुर्युगसहस्रान्तमहः प्रोक्त ममात्मज ॥ ९
रात्रिश्च तावती ज्ञेया निद्रा तस्यां सदा भवेत् । नार्कस्तदा न चन्द्रादिग्रह नक्षत्रमण्डलम् ॥ १०
सत्यलोकावधि तदा जगदेतज्जलावृतम् । यत्र पुर्यां भवानी सा द्वात्रिंशद्धर्मचारिणी ॥ ११
कामाक्षीति जगत्ख्याता सा काञ्ची वाञ्छितार्थदा । विनिक्षिप्ते घटे यद्वद्विपरीततयांबुधौ ॥ १२
बहिरेव जलं नान्तस्तद्वदेषा बहिर्जला । तदानीं ववृधेत्यन्तं कैलासः पर्वतेश्वरः ॥ १३
न्यग्रोधात्पतितं पर्णमेकं तस्याज्जलाशये । तस्योपरि हरिस्त्वेकश्शयित्वा विचचारह ॥ १४
शिशुरूपेण रात्र्यगते जलमध्ये भयंकरे । व्यतीत्य तां तदा विष्णुर्निशां सर्वविनाशिनीम् ॥ १५
वाराहं रूपमास्थाय जलमध्यगतां क्षितिम् । उत्थाप्य पूर्ववच्छीममास्थापयदयं सुत ॥ १६
यथापूर्वं प्रजास्सर्वा मयाप्युत्पादितास्तदा । शिवाज्ञया तदा पुत्र मम मोहोऽभवत्सुत ॥ १७
अहमेव जगत्कर्ता नान्यः कश्चन विद्यते । सुप्ते मयि जगत्सुप्तं प्रबुद्धे च प्रबुध्यते ॥ १८
देवाश्च दानवा यक्षाः स्थावरं जङ्गमं तथा । मदधीनं न मे कश्चित्कर्ता जगति विद्यते ॥ १९
अहमेव परं ब्रह्म योगिध्येयं सनातनम् । इत्थस्त्वेवं विनिष्क्रम्य सत्यलोकान्ममास्पदात् ॥ २०
मेरुमन्दरकैलासचक्रवालमुखादिषु । द्वीपेषु च समुद्रेषु नानालोकेषु गर्वितः ॥ २१
सञ्चरन्वीक्ष्य तत्रत्यान्यद्भुतानि क्रमादहम् । क्षीराब्धिं प्राप्तवानस्मि यत्र शेते हरिस्स्वयम् ॥ २२
तत्र दृष्ट्वा हरिं हतं मया भूमिर्यदुद्धृता । स्थापिता पूर्ववत्तस्मादहमेव जगत्पतिः ॥ २३
इति सञ्चिन्त्य मनसा शयानं भोगितल्पके । आस्फाल्य वक्षोमध्ये तमबोधयमहं सुत ॥ २४
ततस्ससंभ्रमं विष्णुस्समुत्थायावदत्क्रुधा । कस्त्वं ब्रूहीति तं वीक्ष्य प्रोक्तवानस्म्यहं द्रुतः ॥ २५
सोऽपि मद्वचनं श्रुत्वा विद्धि मां जनकं तव । कर्तारमपि सर्वस्य प्रोवाचैवं क्रुधान्वितः ॥ २६
इदानीमपि किं निद्राब्रह्दि यद्विपरीततः । सर्वलोकस्य धातारं माञ्चप्रे तवात्मजम् ॥ २७
मोहं त्यज पर तत्त्वं मां ज्ञात्वाशु सुखीभव । इति ब्रुवाणं मां वीक्ष्य प्रोवाचायं पुनः क्रुधा ॥ २८
मन्नाभिकमलाद्ब्रह्मन् समुत्पन्नः पुराऽऽत्मज । विस्मृत्य तद्भवानद्य विपरीतं वदत्यहो ॥ २९
मां विना मत्सुतस्यात्र तव काऽत्र निरीशता (स्वप्नसावद) । इति विष्णोर्वचश्श्रुत्वा पुनश्च प्रोक्तवानहम् ॥ ३०
समुत्पन्नोऽरणौ वह्निर्न तस्यात्मज उच्यते । तथा त्वत्तो मम पुरा प्रादुर्भावो मदिच्छया ॥ ३१
तादृश्यपि समुत्पत्तिस्तस्मे तव च विद्यते । स्तंभपुत्रमतस्त्वंत्व प्रवीम्यथ निरंकुशम् ॥ ३२
शप्तस्य पूर्वमुदिता भृगुणा तव दुर्मते । मयाहि दशजन्मानि सृष्टानि च कृतान्यहो ॥ ३३
स्रष्टुर्मम करोष्यत्र रक्ततां भजते तराम् । वदन्तमेवं मां वीक्ष्य पुनः प्राह जनार्दनः ॥ ३४
ममापि त्व यदि भवान् स्रष्टा तर्हि शिवेन तत् । पञ्चमं यच्छिरश्छिन्नं सृजतेतत्पुरो मम ॥ ३५
तस्मादहं जगत्कर्ता तव कर्ता विशेषतः । महामोहेन यत्किंचिदुक्तवानसि मत्पुरः ॥ ३६
ब्रुवत्येवं हरौ तस्मिन्नपाप्येव तदेरितम् । प्रवृत्तः कलहस्त्वेवमावयोर्बहुमयस्तदा ॥ ३७
अहंपूर्वमहंपूर्वं प्रवतोर्मोहगौरवात् । पुनश्च समयं कृत्वा यो जयेदपरं युधि ॥ ३८

स कर्तेति मद्राचिरायन्योन्यजयकांक्षिणौ । आयुधै विविधै युद्धं तुमुलं शीघ्रमाश्रितौ ॥ ३९
ततो नारायणः क्रुद्धो बाणं नारायणाभिधम् । मुमोच मययं घोरं जेतुकामतया तदा ॥ ४०
छित्वा तं तेनबाणेन पुनर्ब्रह्म हरौ क्रुधा । अप्रेययमहं तेन चिच्छेदैतदरिन्दमः ॥ ४१
इति प्रत्यस्त्रकुशलौ छित्वा छित्वा पुनःपुनः । विधिनारायणावाथां मदोन्मत्तौ गजाविव ॥ ४२
अयुधात्य महाघोरौ महावेगौ महाबलौ । पुनश्च नितरां क्रुद्धौ शिवास्त्रं सर्वघस्मरम् ॥ ४३
समुधाव महाघोरं परनाशजयैषिणौ । आवाभ्यां प्रेषितं घोरं तदस्त्रं निस्सृतं यदा ॥ ४४
समुद्राश्शोषितास्तेन पर्वतारेणुतां गताः । भस्फुटश्च तदा भूमिश्चकम्पे सपर्वमूर्धनि ॥ ४५
देवाश्च ऋषयो मर्त्या भीतास्सर्वेऽपि दुद्रुवुः । मृताश्च बहवः खिन्नाः केचिच्छिन्नांप्रिपाणयः ॥ ४६
अशिश्रयन् परे शीघ्रं कैलासमचलेश्वरम् । एवं दहति शैवास्त्रे लोकान्सर्वांस्तदा सुत ॥ ४७
नारदोऽभ्यागमत्तत्र तदानीमात्मजो मम । प्रोवाच वचनं वीक्ष्य विधिनारायणावुभौ ॥ ४८
कर्तारमीशमज्ञात्वा युवयोः प्राणदायिनम् । किं युध्येथे वृथा मूढौ महामोहपरायणौ ॥ ४९
मास्तु युद्धमिदानीं वां ज्योतिर्लिङ्गी महेश्वरः । प्रादुर्भविष्यत्यचिराद्बलसंशोधनाय हि ॥ ५०
इत्युक्त्वा निरगात्सोऽयं यथामार्गं तपोनिधिः । गतेऽप्यस्मिन्नाद्बुरूपौ सहस्राब्दान्तमावयोः ॥ ५१
अभवत्तुमुलं घोरं युद्धदुर्मदयोर्मृधम् । तदन्ते भगवाञ्छम्भुराविरासीज्जगद्गुरुः ॥ ५२
लोकोपद्रवमाकर्ण्य ज्योतिर्लिङ्गतया शिवः । माघकृष्णचतुर्दश्यां मध्येरात्रमतुल्यभाः ॥ ५३
तस्मिञ्ज्योतिषि लिङ्गे तदस्त्रं शैवं तदात्मज । तदद्भुतमुभावावामपश्याव परस्परम् ॥ ५४
ऊर्ध्वदृष्टी तदा काचिद्वागिजजृम्भे नभोऽन्तरे । रे रे देवौ हीनबलौ महामोहपरायणौ ॥ ५५
किं बलं युवयोर्मुक्त्वा महादेवबलं परम् । नास्ति नास्ति बलं सत्यमुच्यतेऽत्र मयाऽधुना ॥ ५६
यः प्रपश्यति लिङ्गस्य युवयोर्भास्वरूपिणः । ऊर्ध्वभागमधोभागं स वै बलवतां वरः ॥ ५७
वाचमेनां निशम्यैतां मावामित्थं तदात्मज । मुक्त्वा कोपं पुनर्गर्वयुक्तावत्यन्तमात्मनि ॥ ५८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे षट्त्रिंशोऽध्यायः ॥

---

॥ अथ सप्तत्रिंशोऽध्यायः ॥
ज्योतिर्लिङ्गस्य अरुणाचलतेनाविर्भावः ॥

ततो विचिन्त्य तां वाणीमावामासकुतूहलौ । पुरस्ताद्भास्वज्ज्योतिस्तद्ध्यालोक्य गर्वितौ ॥ १
अगणय्याशिवुध्या तदूर्ध्वाधोभागवीक्षया । कृतप्रतिज्ञावन्योन्यं हंसक्रोडस्वरूपिणौ ॥ २
सहस्रयोजनोच्छ्रायौ महावेगबलान्वितौ । ऊर्ध्वं द्रष्टुमहं विष्णुरधोभागं गतावुभौ ॥ ३
बहुदूरं ततो गत्वा विष्णुर्भग्नमनोरथः । अत्यन्तश्रान्तदेहोऽयं तदात्यन्तसुगन्वितः ॥ ४
पुनरागमनेऽशक्तः परं गन्तुं तथैव च । असमर्थस्तदा वेधं तंच त्यक्तुमयं सुत ॥ ५
सस्मार केवलं शम्भुं तदानीं रक्षकं परम् । ततशिशवाज्ञया तस्य बलं किञ्चिदभूद्द ॥ ६
निवृत्तस्सहसा सोऽय भूतलं प्राप्य माधवः । अधोभागमदृष्ट्वाऽस्य ज्योतिषः परमस्य सः ॥ ७
वेपमानशरीरोऽयं तस्थौ नत्वा पुरस्सुत । सहस्राब्दावधि तदा सोऽहं हंसस्वरूपवान् ॥ ८
उपर्युपरि गत्वाऽथ श्रमपरोऽतिदुःखितः । गन्तुमूर्ध्वमशक्तत्वादद्दष्ट्वा ज्योतिषश्शिरः ॥ ९

भ्रमितस्ततस्तूर्णं क्षण तत्रावसं सुत । तदानीं ज्योतिषस्तस्य वामभागात्प्रतस्थिरे ॥ १०
सिद्धा केचन योगीन्द्रा रुद्राक्षकृतभूषणा । हंसोऽयमधुनात्यन्तमज्ञानेन परीवृत ॥ ११
इत ऊर्ध्वं पद या चेद्गमिष्यति मरिष्यति (न संशय) । विष्णुरप्येतदज्ञात्वा ज्योतिश्शैव परात्परम् ॥ १२
अदृष्ट्वैतस्य महसो मूलभाग शुगन्वित । निवृत्तो नितरा खिन्न प्रणम्यास्ते भयान्वित ॥ १३
शिवस्यानुग्रहेणास्य महामूढस्य पक्षिण । प्राणास्तिष्ठन्त्यसन्देहो न चेन्मरणमेव हि ॥ १४
इति ब्रुवाणास्तेऽन्योन्य निर्ययुर्मत्पुरस्सुत । समाकर्ण्य वचस्तेषा महमप्यात्तचेतन ॥ १५
गतमोहस्तथा शीघ्र निवृत्तस्तन्महीतलम् । प्राप्य भीत्या महादेव स्तुत्वा स्तोत्रैरनेकधा ॥ १६
अदर्शय ततो विष्णु तत्र बद्धाञ्जलि भयात् । तदानीमावयो काचित्रुत्पन्ना शङ्कराज्ञया ॥ १७
पूजा कार्या महेशस्य ज्योतिष्यत्रेति शेमुषी । वृथैव भ्रान्तमावाभ्या विष्णो मोहवशादिह ॥ १८
इत्युक्त्वाऽऽवा तदाऽन्योन्य पूजाया कृतनिश्चयौ । अपूजयाव देवेश भक्त्या परमया सुत ॥ १९
आविरासीत्ततश्शम्भुर्ज्योतिर्मध्यादुमासख । अमाकृततनुश्श्रीमान् चन्द्रार्धकृतशेखर । २०
शुद्धस्फटिकसंकाशस्त्रिनेत्रो नीलकन्धर । वराभयकरश्श्रीमान् परश्वेण लसत्कर ॥ २१
त दृष्ट्वा देवमीशान शकर लोकशङ्करम् । प्रणम्य परया भक्त्या स्तुत्वा स्तोत्रैरनेकधा ॥ २२
आवयोरपराधोऽय क्षन्तव्यश्शङ्कर त्वया । त्व हि सर्वगुरुश्शम्भु स्सर्वलोकहितोद्यम ॥ २३
एवमप्रार्थयावावा महादेव त्रिशूलिनम् । स हि प्रसन्नो भगवान् चन्द्रचूडस्सुमङ्गल ॥ २४
प्रकल्प्य पूर्ववत्स्थान मावयोरस्वेच्छया सुत । प्रेषयामास विश्वात्मा ततोभावपि नौ शिव ॥ २५
ततोऽन्तर्धिमगात्तस्मिन्महति ज्योतिषि स्वयम् । तदेतदचलश्श्रीमाननलाख्यो महानभूत् ॥ २६
त प्रणम्यानलगिरिं ज्योतिर्लिङ्गस्वरूपिणम् । परित्यक्त महामोहावावामस्य कृपाबलात् ॥ २७
यत्रावापद प्राप्य सुखेनात्मज पूर्ववत् । मार्गशीर्षचतुर्दश्यामनलाचलमद्भुतम् ॥ २८
ज्योतिर्लिङ्गाकृति प्राप्य बहवो दग्धकिल्बिषा । संपूज्याभीप्सित प्राप्य कृपया तस्य शूलिन ॥ २९
कृपया तस्य देवस्य ज्ञान वेदागमोत्थितम् । लभन्त एकचित्ता ये तस्मिन्विन्यस्तमानसा ॥ ३०
शम्भो कृपा तवाप्यस्ति दाघाघौघो भवानिह । यतो बभूव विज्ञान तव शाकरमात्मज ॥ ३१
शरण प्राप्य देवेश सुखीभव निरङ्कुशम् । एवमुक्त्वा विधिस्तूर्णं देवैस्सह परीवृत ॥ ३२
पूजयित्वा पुराराति स्वपद प्राप्तवान् द्विजा । ततस्तु दक्षस्तरसा ब्रह्मणा प्रेरितस्स्वयम् ॥ ३३
काशीमवाप नगरीं सर्वपापप्रणाशिनीम् । लिङ्ग तत्र प्रतिष्ठाप्य स्वनाम्ना पुरविद्विष ॥ ३४
आगमोक्तेन मार्गेण दक्षेश्वरसमाह्वयम् । अपूजयदय भक्त्या सहस्राब्दान्तमात्मवान् ॥ ३५
प्रसन्ने च महादेवे प्रणम्य परया मुदा । तुष्टाव पुरत स्थित्वा दक्षश्शम्भोर्महेशितु ॥ ३६
वाञ्छित किं वदाद्य त्व दक्ष दास्याम्यह तव । प्रसन्न विद्धि मामत्र तव पूजाप्रभावत ॥ ३७
इति शम्भोर्वच श्रुत्वा दक्ष प्राह महेश्वरम् । न वाञ्छा वैष्णवे ब्राह्मे मम देव दयानिधे ॥ ३८
नाखेरिन्द्रस्य चान्यस्य पदे चालेत नश्वरे । गाणापत्य तव स्वामिन् कैलासे पर्वतोत्तमे ॥ ३९
भवनद्वारि देवेश ममास्तु सतत शिव । इति दृष्ट्वा महादेव तस्थे बद्धाञ्जलि पुर ॥ ४०
तथेत्युक्त्वा महादेव तत्रैवान्तरधीयत । दक्षस्तत प्राप्तवर कैलास पर्वतोत्तमम् ॥ ४१
गत्वा तत्रातिशुद्धात्मा गाणापत्यमवाप्य हि । तुष्ट्या परमया युक्तस्तस्थे तत्र द्विजोत्तमा ॥ ४२

इति श्री स्कान्दे महापुराण शकरसंहिताया शिवरहस्यखण्डे
दक्षकाण्डे सप्तत्रिंशोऽध्यायः ॥

॥ अथ अष्टत्रिंशोऽध्यायः ॥

श्री कालाग्नि रुद्रस्थान निरूपणम् ॥

दक्षस्य यागे ये देवाः स्थिताः पूर्वं द्विजोत्तमाः । ते भृशं कर्मशेषेण शूरपद्मेन बाधिताः ॥ १
षयः — यदुक्तं भवता पूर्वं शूरपद्मो महासुरः । अष्टोत्तरसहस्राणामण्डानामधिपो महान् ॥ २
श्रुतवानण्डविस्तारं शुकेणोक्तं महाकपे । विस्तरेण पुनस्तत्त्वं वक्तुमर्हसि तापस ॥ ३
इति तेषां वचश्श्रुत्वा तामसानामधीश्वरः । प्राह तान्वीक्ष्य सकलान् ब्राह्मणान्वेदपारगान् ॥ ४
शृणुध्वं ब्राह्मणा यूयं सर्वे विगतकल्मषाः । अण्डमेतन्मयोदितवे कथितं परमेष्ठिना ॥ ५
शतकोटिप्रमाणेन योजनानां समुन्नतम् । संपुटद्वितयाकारं मध्ये सुषिरसंयुतम् ॥ ६
अतीयाश्चर्यनिलयं वर्तते व्योम्नि केवलम् । स्थौल्यं भित्तेर्मितं कोटियोजनैरस्य वै द्विजाः ॥ ७
अधोभागे स्थिता भित्तिस्स्थूलाया कोटियोजनैः । उपर्यस्या महानास्ते रुद्रः कालाग्निसंज्ञितः ॥ ८
कोटियोजनमानेन दिव्ये गेहे समुन्नते । सिंहासनं महद्दिव्यं योजनानां सहस्रकैः ॥ ९
उन्नतं द्विसहस्रैश्च विशालं रत्नशोभितम् । तस्मिन्नास्ते सदा रुद्रैर्दशभिस्सहमानकैः ॥ १०
तेषां परिजनै रम्यै र्दशकोटिमितैरपि । परितस्सेव्यमानोऽयं खड्गखेटधनुश्शरान् ॥ ११
बिभर्ति सततं चास्य ज्वाला रुद्रस्य भीषणा । दशकोटिप्रमाणेन योजनानां समुन्नता ॥ १२
ज्वालाया ऊर्ध्वगो धूमो योजनैः पञ्चकोटिभिः । शरीरं दशसाहस्रैर्योजनैरुन्नतं प्रभोः ॥ १३
आदिकूर्मेणदेवोऽयं स्तूयमानोऽत्र राजते । अनन्तमहिमाधारः परमानन्द निर्भरः ॥ १४
ध्यायमानो महादेवं शिवं परमकारणम् । अधोभित्तिं समारभ्य ब्रह्माण्डस्य द्विजोत्तमाः ॥ १५
धूमान्तो योजनैस्सप्तदशकोटिप्रमाणकैः । उपर्यस्य च धूमस्य नरकाणि वसन्ति हि ॥ १६
बाध्यन्ते पापिनो यत्र नितरां यमकिङ्करैः । तानि कोटिभिरेकोनत्रिंशद्भिर्योजनैस्तथा ॥ १७
लक्षैर्द्वादशभिश्चैव कल्पितानि शिवेन हि । एतेषामूर्ध्वभागे च कूश्माण्डाख्यो विराजते ॥ १८
अनेककोटिगणपैस्तथा परिजनैरपि । सेव्यमानो महानीशो मुदा परमया युतः ॥ १९
कोटियोजनमेतस्य लक्षोनं भुवनं द्विजाः । एतदूर्ध्वं नभोशेयं योजनैर्नवलक्षकैः ॥ २०
केवलं तस्य चाप्यूर्ध्वं पाताळानि वसन्ति हि । सप्तैव तानि सहितैः त्रिलक्षैरष्टलक्षकैः ॥ २१
एतेषामुपरि ह्येवमण्डलप्रमाणकम् । कनिष्ठाख्यञ्च पाताळमष्टमं वेदवित्तमाः ॥ २२
एतस्मिन्नसुरा नागा राक्षसानि वसन्ति हि । नवलक्षैरितोऽप्यूर्ध्वं योजनैर्भुवनं महत् ॥ २३
हाटकेशाख्यदेवस्य वसतिर्ब्राह्मणोत्तमाः । तस्मिन्शिवसमीशोऽयं नानारुद्रगणैस्सह ॥ २४
परिचर्यारतैरन्यैः परितः परिसेवितः । पाताळानामयं कर्ता पठितानां महान्विभुः ॥ २५
अस्यापि भुवनस्योर्ध्वमाकाशः केवलस्तथा । कोटियोजनमानेन विंशल्लक्षाधिकेन च ॥ २६
तदूर्ध्वं भूमिरष्टाभिर्दिग्गजैश्च महाद्रिभिः । शेषेण विधृताऽशीतिलक्षयोजनमानतः ॥ २७
अब्धिद्वीपाचलैर्युक्ता वर्तते शंकराज्ञया । अण्डाधो भित्तिमारभ्य भूम्यन्तं ब्राह्मणोत्तमाः ॥ २८
पञ्चाशत्कोटि संख्यानि योजनानीति निश्चितम् । भूमेरुपरि विप्रेन्द्रा गणाः पैशाच गुह्यकाः ॥ २९
वायवो दशसंख्याका मेघाः किंपुरुषास्तथा । गरुडादिसिद्धदेवाश्च तथा विद्याधराख्याः ॥ ३०
यक्षा गगनगङ्गा च क्रमादुपरि संस्थिताः । एतेषामूर्ध्वगो भानुः पृथिव्या लक्षयोजनात् ॥ ३१
परिभ्रमति लोकांश्च भासयन्नामतेजसा । अत्रदेवास्त्रयस्त्रिंशत्कोटयो निवसन्ति हि ॥ ३२
इत ऊर्ध्वं शशीलक्षयोजनेन चरत्ययम् । चन्द्रस्योपरि ऋक्षाणि लक्षादेषामपि द्विजाः ॥ ३३

बुधशुक्रारदेवेज्यसूर्यपुत्रा यथोत्तरम् । सञ्चरन्ति द्विलक्षैश्च प्रत्येकं योजनै क्रमात् ॥ ३४
ऋषयस्सप्तनक्षत्रकास्तेषामुपरि लक्षत । इतोऽपि लक्षाद्विप्रेन्द्रा ध्रुवतारा व्यवस्थितम् । ३५
भुवर्लोकोऽयमाख्यातो भूमेरूर्ध्वं ध्रुवावधि । निवसन्त्यत्र मरुतस्तथा सप्तविधा अपि ॥ ३६
ऊर्ध्वं पञ्चाधिकाशीतिलक्षयोजनमस्य च । स्वर्लोकोऽत्र सुराधीशस्सुरैस्सर्वैर्विराजते ॥ ३७
अस्य चोर्ध्वं महर्लोको यावत्कोटिद्वयावधि । निवसन्त्यत्र मार्कण्ड प्रमुखा ऋषयो द्विजा । ३८
एतस्याप्युपरि ज्ञेयो जनो (जन) लोकोऽष्टकोटिभि । योजनैरत्र पितरो निवसन्ति शिवाज्ञया ॥ ३९
उपर्यस्य तपोलोको ज्ञेयो द्वादशकोटिभि । वसन्ति यत्र ब्रह्मिष्ठास्सनकाद्या महर्षय ॥ ४०
ऊर्ध्वमस्यापि विप्रेन्द्रा स्सत्याख्यो लोक ईरित । योजनानां षोडशभि कोटिभिर्वर्ततेऽत्र च ॥ ४१
कुर्वाणस्सृष्टिमनिशं स्रष्टा निवसति स्वयम् । अस्योर्ध्वं ब्रह्मणोलोकस्त्रिभिर्योजनकोटिभि ॥ ४२
यत्रास्ते पद्मभूर्नित्यं चतुरास्यो मुदान्वित । अस्योर्ध्वं विष्णुलोकोऽपि त्रिभिर्योजन कोटिभि ॥ ४३
विराजते हरिर्यत्र रममाणश्श्रियाऽनिशम् । एतेषामपि सर्वेषामूर्ध्वं लोकश्शिवस्य हि ॥ ४४
चतुर्भि कोटिभि ख्यातो योजनानां द्विजोत्तमा । अत्र सर्वेश्वरश्शम्भुर्गौर्या प्रमथैस्सह ॥ ४५
प्रकाशते स्वयञ्ज्योति परमात्मा परात्पर । उपर्यस्याण्डभित्तेश्च प्रमाण कोटियोजनम् ॥ ४६
योजनानि च पञ्चाशत्कोटिसंख्यान्यमूनि हि । भूमेरुपरि मित्यन्त ब्रह्माण्डस्य द्विजोत्तमा ॥ ४७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे अष्टत्रिंशोऽध्याय ॥

---

## ॥ अथ एकोनचत्वारिंशोऽध्याय ॥

### महामेरो वर्णनम् ॥

शृणुध्वं ब्राह्मणश्रेष्ठा स्सर्वे यूयमतन्द्रिता । द्वीपानि सागरानद्रीन् कथयामि वदानपि ॥ १
जम्बूद्वीपमिदं मध्ये पृथिव्या लक्षयोजनम् । तस्यापि मध्ये पृथुलं कनकाद्रिर्मनोरम ॥ २
भूमौ षोडशसाहस्रै प्रविष्टो योजनैरयम् । समुन्नतस्तथैवोर्ध्वं सचतुर्भिरशीतिभि ॥ ३
अथ षोडशसाहस्रै विशालो योजनैरयम् । द्वात्रिंशद्भिस्तथैवोर्ध्वं ब्राह्मणानामधीश्वरा ॥ ४
तिसृभिर्मेखलाभिश्च राजते गिरिराडयम् । ऊर्ध्वं या मेखला तस्या शिखराणि वसन्ति हि ॥ ५
बहूनि तेषां मध्यस्थे शिखरे सुमनोहरे । पुरं विधातु परमं गोपुराट्टालशोभितम् ॥ ६
मनोवतीति प्रथितं राजते काञ्चनध्वजम् । एवं विष्णो पुरं रम्यं शिखरे पूर्वदिग्गते ॥ ७
वैकुण्ठाख्यं विचित्राढ्यं शोभते ब्राह्मणोत्तमा । पुरमुत्तरपूर्वेऽस्मिञ्छिखरे सुमनोहरम् ॥ ८
मनोवतीति प्रथितं शङ्करस्य परात्मन । गोपुराट्टालवलभिप्राकारपरिमण्डितम् ॥ ९
एतेषामितरेष्वेषु शिखरेष्वष्टसु द्विजा । दिगीशानां विचित्राणि पुराणि निवसन्ति हि ॥ १०
मन्दराद्रिर्मेरुस्यास्य पूर्वदिग्भागत स्थित । सहस्रयोजनोच्छ्राय कदम्बोऽत्रविराजते ॥ ११
अरुणाख्यं सरो मेरो पूर्वभागे महत्खलु । अत्रास्त्युद्यानमतुलं नाम्ना चैत्ररथाभिधम् ॥ १२
मागभागे मन्दराद्रेश्च माल्यवानचलोत्तम । विशालायमुदग्वाधिं मेरोर्विभा विराजते ॥ १३
मेरोर्दक्षिणभागे तु गन्धमादनसंज्ञक । महान् हिरण्मयोऽयमचल पृथिवीसुरा ॥ १४
योजनैर्द्विसहस्रैश्च जम्बूवृक्षसमन्वित । विराजते यतस्तस्माज्जम्बूद्वीपमिदं स्मृतम् ॥ १५

मानसाख्यं सरो मेरोर्दक्षिणस्यां दिशि द्विजाः । उद्यानमत्र महितं महावनसमाह्वयम् ॥ १६
एतस्य याम्यभागे च निषधाख्यो महाऽचलः । रक्तवर्णोऽयमस्यापि याम्ये स्वर्णप्रभोऽचलः ॥ १७
हेमकूटाह्वयोऽस्यापि याम्ये विप्रा हिमाचलः । विगाह्यांभोनिधिं पूर्वं तिष्ठन्त्येते त्रयोऽचलाः ॥ १८
निषधो हेमकूटश्च हिमवानपि भूसुराः । विपुलाख्योऽचलो मेरोः प्रत्यग्दिशि तु संस्थितः ॥ १९
सहस्रयोजनोऽश्वत्थस्तिष्ठत्यतिसमुन्नतः । असितोदं सरो मेरोः प्रत्यग्भागे महत् द्विजाः ॥ २०
उद्यानं राजतेऽत्रान्यन्महद्भ्रसमाह्वयम् । एतस्याद्रेर्महानन्यो गंधमादनपर्वतः ॥ २१
तप्तकाञ्चनसङ्काशः प्रत्यग्भागे विराजते । दक्षिणांभोनिधिं सम्यगयमद्रिर्विगाहते ॥ २२
शुभाशुभाख्योऽप्यन्योऽद्रिर्मेरोरुत्तरभागतः । फुल्लदाडिमपुष्पाभो राजते ब्राह्मणोत्तमाः ॥ २३
सहस्रयोजनोच्छ्रायो वटोऽप्यत्र महीरुहः । मेरोरुत्तरभागे तु दिव्यमन्यन्महत्सरः ॥ २४
कल्यासमाह्वयञ्चान्यदुद्यानं राजतेऽत्र च । शुभाशुभाचलस्योदग्भागे नीलाभिधो गिरिः ॥ २५
एतस्योत्तरभागे च श्वेताख्यो गिरिरुत्तमः । अस्याप्युत्तरभागे च शृङ्गाद्रिश्चन्द्रकान्तिमान् ॥ २६
पश्चिमाम्भोनिधिं सम्यक्त्रयोऽपि व्याप्नुवन्ति हि । अभितः पर्वतैरेवं मेरुरास्ते समावृतः ॥ २७
मध्ये मेरोर्महादुर्गं रम्यमुत्तप्तकाञ्चनम् । मन्दराद्यास्तु चत्वारो मेरोरूर्ध्वं प्रमाणतः ॥ २८
विज्ञेया माल्यवान् स्थूलो दशसाहस्रयोजनैः । निषधाद्याख्रयो मेरोर्दक्षिणे द्विसहस्रकैः ॥ २९
स्थूलाः प्रत्यक्प्रदेशेऽपि गन्धमादनपर्वतः । योजनैर्दशसाहस्रैः स्थूलो ज्ञेयो द्विजोत्तमाः ॥ ३०
नीलाद्या गिरयस्सौम्ये (स्थौल्ये) प्रत्येकं द्विसहस्रकैः । शृङ्गाचलाब्ध्योर्मध्यं तु कुरुवर्षं प्रकीर्तितम् ॥ ३१
हिरण्यवर्षं विज्ञेयं शृङ्गश्वेताद्रिमध्यतः । श्वेतनीलान्तरं रम्यं वर्षं विप्राः प्रकीर्तितम् ॥ ३२
मध्यं माल्यवदंभोध्यो र्भद्राश्वाख्यं प्रसिद्धिमत् । मध्यं हिमाचलाब्ध्यो र्यद्वर्षं तद्भारताभिधम् ॥ ३३
मध्य किंपुरुषाख्यं तद्धिमवद्धेमकूटयोः । हेमकूटाचलस्यापि निषधस्यान्तरं द्विजाः ॥ ३४
हरिवर्षमिति ख्यातं प्रत्यग्भागे तु भूसुराः । गन्धमादनवार्ध्योर्यदन्तरे केतुमालकम् ॥ ३५
इलावृताख्य वर्षं तु मेरोरेवावृतं स्मृतम् । वासिनः कुरुवर्षे ये नीलवर्णा गतव्यथाः ॥ ३६
सर्वे कल्पतरोद्भूतफलाद्याहारजीविनः । विवाह्य सहजास्सर्वे वर्तन्ते ते कुटुंबिनः ॥ ३७
त्रयोदशसहस्राब्दजीविनस्ते द्विजोत्तमाः । अत्र केचिन्महाभागाः सिद्धास्स्फटिकसन्निभाः ॥ ३८
तावद्वर्षाणि जीवन्तस्सुखेन निवसन्ति ते । हिरण्यवर्षे न्यग्रोधफलाहारास्सुवर्चसः ॥ ३९
सर्वे द्वादशसाहस्रवर्षाः कल्हारभास्वराः । रम्यवर्षे जनास्सर्वे चन्द्रकान्तसमप्रभाः ॥ ४०
एकादशसहस्राब्दजीविनः खलु ते द्विजाः । त्रयोदशसहस्राब्दं भद्राश्वे जीविनो जनाः ॥ ४१
रक्तवर्णाश्च ते सर्वे सुकुमारांगयष्टयः । वर्षेऽस्मिन् भारते नानाक्रिया नानाविधाशनाः ॥ ४२
युगानुकूलधनाश्च तथैव नियतायुषः । वर्षे किंपुरुषाख्ये च सर्वे स्वादुफलाशिनः ॥ ४३
तप्तकाञ्चनसंकाशा दशसाहस्रवर्षकाः । हरिवर्षे फलाहाराश्चन्द्रकान्तसमप्रभाः ॥ ४४
सहस्राणां दश तथा वर्षाणां जीविनो जनाः । केतुमालाख्यवर्षे तु कल्हारकुसुमप्रभाः ॥ ४५
सहस्राणां दश तथा वर्षाणां जीविनो जनाः । कैतकानि फलान्येते भुञ्जन्ते ब्राह्मणोत्तमाः ॥ ४६
इलावृताख्यवर्षे तु शुद्धस्फटिकसन्निभाः । सर्वेऽपीक्षुरसाहारा द्वादशाब्द सहस्रकाः ॥ ४७
जीवन्ति गतशोकास्ते ब्राह्मणानामधीश्वराः । निर्जरा निर्गदा स्सर्वे वर्षेष्वष्टसु भूसुराः ॥ ४८
भारताख्येतु वर्षेऽस्मिन् जराव्याधिसमन्विताः । शुभाशुभानि कर्माणि येऽस्मिन् (वसिन्) भारतवर्षके ॥
कुर्वन्त्येतेऽन्यवर्षेषु नरकेषु न (च) यान्ति हि । कर्मभूमिरियं तस्मात्फलभूमिरितः परा ॥ ५०

हिमवद्धेमकूटाख्योर्मध्ये कैलासपर्वतः । राजते राजतैश्शृङ्गैर्नानारत्नविचित्रितैः ॥ ४१
अत्र देव्या महादेवः स्कन्दाद्यैस्तपोधनैः । विराजते स्तूयमानः परमानन्दनिर्भरः ॥ ४२
मन्दारे सर्वभूतानां विष्ण्वादीनां च सोऽद्रिराट् । ब्रह्माण्डमाशु निर्भिद्य वर्तते शंकराज्ञया ॥
ऋषयः — द्वीपस्यास्याधिपः कोऽयं सूत त्वं वर्णयाधुना ॥ ४३
इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकोनचत्वारिंशोऽध्यायः ॥

---

॥ अथ चत्वारिंशोऽध्यायः ॥

जम्ब्वादि सप्त द्वीपानां निरूपणम् ॥

सूत — इति तेषां वचश्श्रुत्वा प्राहैतांस्तापसेश्वरान् । स्वायंभुवाख्यो यो धातुः पुत्रः प्रियव्रताह्वयम् ॥ १
लेभे तनूजं परमं सर्वलक्षणसंयुतम् । सप्तद्वीपां वसुमतीमशासीदयमीश्वरः ॥ २
तस्यात्मजाः सप्तभवन् सप्तलोकेषु विश्रुताः । आग्नीध्रस्य पुत्रस्य जम्बूद्वीपमिमं ददौ ॥ ३
अन्येषामात्मजानां तु द्वीपान्यन्यानि दत्तवान् । एतस्याप्यभवन् पुत्रा नव सर्वत्र विश्रुताः । ४
तेषां विभज्य नवधा द्वीपमेतद् द्विजोत्तमाः । प्रदत्तानि हि वर्षाणि तत्तन्नामान्यनुक्रमात् ॥ ५
कुरुर्हिरण्मको रम्यो भद्राश्वो भरतस्तथा । तथा किंपुरुषश्चान्यो हरिरप्यतुलः परः ॥ ६
केतुमाल इलश्चैव विख्यातास्ते नवात्मजाः । वर्षमेतच्च विज्ञेयं भारतं भरतस्य हि ॥ ७
भरतस्य सुताश्चाष्टौ बभूवुः कन्यया सह । विभज्य नवधा वर्षं भारतं भरतोऽप्ययम् ॥ ८
अपत्येभ्यो ददौ धीमान्यथान्यायमरिन्दमः । तत्पुत्राणां च ये देशास्ते वै म्लेच्छभुवः स्मृताः ॥ ९
तत्कुमार्यास्तु देशोऽयं कुमारीखण्डसंज्ञकः । सहस्रयोजनायामो निवसन्त्यत्र कर्मठाः ॥ १०
अत्र भागीरथी पुण्या गौतमी यमुना तथा । सरस्वती कौशिकी च कावेरी नर्मदा तथा ॥ ११
कृष्णावेणी तुङ्गभद्रा कुशा च क्षीरनद्यपि । पाञ्चाली गोमती शूरी शिवी पापविनाशिनी ॥ १२
धूतपापा शङ्खवाही भारद्वाजी शिवा तथा । कावेरी चन्द्रभागा च सरयूर्वेणुपिङ्गला ॥ १३
सुवर्णमुखरी चान्या ताम्रपर्णी च कुण्डला । पिनाकिनी वेगवती तथा स्कन्दनदी शुभा ॥ १४
एवमाद्याः पुण्यनद्यः प्रवहन्त्यत्र भूसुराः । गिरयस्सप्त विख्याता महेन्द्रमलयौ तथा ॥ १५
मानुषः पारियात्रश्च शक्तिर्विन्ध्यश्च सह्यकः । काशी काञ्चीमुखान्यत्र सन्त्येतानि स्थलान्यपि ॥ १६
अष्टोत्तरसहस्राणि शिवस्थानान्यपि द्विजाः । अग्रहाराश्च बहवो वैदिकब्राह्मणालयाः ॥ १७
वैदिकैर्लोकमार्गेण स्वाचारानाचरन्ति ते । जम्बूद्वीपमिदं प्रोक्तं लक्षयोजनमानतः ॥ १८
आवृत्य लवणाम्भोधिरेतल्लक्षप्रमाणतः । लवणाम्भोधिमावृत्य शाकद्वीपः स्मृतः द्विजाः ॥ १९
द्विलक्षयोजनायाममनेकाश्चर्यसंयुतम् । प्रियव्रतात्मजोंऽशो नाम्ना गोमेदकः स्मृतः ॥ २०
उत्पाद्य तनयान् सप्त सप्तधैतद्विभज्य च । तेभ्यः प्रादाद्गिरिभेदास्सप्तवाश्र वसन्ति हि ॥ २१
सोमकस्सुमनाश्चन्द्रो दुन्दुभिश्च महागिरिः । वभ्राजिनो नारदीयो गोमेदाख्यश्च भूधराः ॥ २२
नद्यश्च सप्तसंख्याकाः प्रवहन्ति सुपावनाः । शिवा विपापा अमृता सुकृता मनुदत्तका ॥ २३
सिद्धिः क्रमाभिधा चान्या सर्वकामफलप्रदा । आवृत्य चैतं क्षीराब्धिर्द्विलक्षेण विराजते ॥ २४
क्षीराम्भोधिं समावृत्य कुशद्वीपः स्मृतः द्विजाः । चतुर्लक्षप्रमाणेन योजनानां च वै स्मृतम् ॥ २५

प्रियव्रतात्मजोऽन्यो वपुष्मानधिपः खलु । उत्पाद्य तनयान्सप्त सप्तधैतद्विभज्य च ॥ २६
प्रादात्तेभ्यो यथान्यायं सर्वशास्त्रार्थवित्तमः । शोणारूपा मतिर्धूम्रा नेत्रा पापविमोचना ॥ २७
वृत्तिरित्यत्र परमा नद्यस्सप्त सुपावनाः । उन्नतः कुमुदश्चैव कुमारो मेघदांलकौ ॥ २८
महिमा द्रोणकस्सप्त गिरयोऽप्यत्र भूसुराः । दध्यब्धिरेतदावृत्य चतुर्लक्षप्रमाणकः ॥ २९
एतस्याप्यभितः क्रौञ्चद्वीपं प्रियव्रतात्मजः । ज्योतिष्मानस्य तनुजास्सप्त संख्यास्तुधाह्विरे ॥ ३०
तेषां प्रादाद्विभज्यैतास्सप्तधास्सरित्गणम् । कुशेशयो हरिश्चैव पुष्पावर्तश्च विद्रुमः ॥ ३१
हिमाद्रिर्द्युतिमांश्चैव मन्दरस्सप्ततेऽचलाः । शिवा विधूतपापाच, हिमा पूर्णा विनीतका ॥ ३२
तथान्या शिलपापाचस्तंभा सप्तसरिद्वराः । अष्टलक्षप्रमाणेन योजनानामिदं द्विजाः ॥ ३३
घृताब्धिरेतदावृत्य साष्टलक्षप्रमाणकः । आवृत्य शाल्मलीद्वीपमेतत्षोडशलक्षकम् ॥ ३४
द्युतिः प्रियव्रतसुतस्सप्तैतत्संविभज्यच । सप्तपुत्रान्समुत्पाद्य तेभ्यः प्रादाद्यथाक्रमम् ॥ ३५
तिमिरस्सुरभिश्चैव वामनश्च विरुद्धकः । सप्तमतटोदुन्दुभिश्च पुण्डरीकोऽत्र सप्तते ॥ ३६
कुमुदा कचरी धात्री वामा पौण्डरिका तथा । मनोपमाच सन्ध्याद्या नद्यस्सप्त सुपावनाः ॥ ३७
आवृत्य षोडशेनैतदिक्षुरब्धिर्लक्षकेणहि । द्वीपं गोमेदकं विप्रा द्वात्रिंशल्लक्षयोजनम् ॥ ३८
हव्यः (भव्यः) प्रियव्रतसुतस्तस्यैतद्धर्ममार्गतः । उत्पाद्य तनयान् सप्तैतामेतद्विभज्यच ॥
दत्तवानत्र गिरयस्सप्तसंख्यायस्तद्धि ॥ ३९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे चत्वारिंशोऽध्यायः ॥

---

॥ अथ एकचत्वारिंशोऽध्यायः ॥

पुष्करद्वीप वर्णनम् ॥

सिंहकः क्रौञ्चकश्चैव चलकोऽस्तोदयाचलौ । आंबिकेयाभिधान्योऽपि रम्यकश्च महागिरिः ॥ १
मयाली धेनुका पुण्या कपर्दा सुकुमारका । कुमारभल्लवावेणुरसा सप्त सरिद्वराः ॥ २
स्वाद्वब्धिरेतदावृत्य द्वात्रिंशल्लक्षयोजनः । पुष्करद्वीपमावृत्य चैतद्धेयं द्विजोत्तमाः ॥ ३
योजनानाञ्चतुष्षष्टिर्लक्षमानेन विस्तृतम् । प्रियव्रतात्मजस्तत्र सवनोऽधिपतिः खलु ॥ ४
संबभूवतुस्तस्यापि तनयौ द्वौ महाबलौ । तयोर्विभज्य तद्द्वीपं दत्तवान्धर्मशास्त्रवित् ॥ ५
धूम्रश्च महेन्द्रश्च वरुणो नीलपर्वतः । वराहेन्द्रौच माहेन्द्रस्तैरमवर्षेश्वराः ॥ ६
कुटिलाच शिवोमिद्रे धरणी सुमनास्तथा । सिंहिकाच कुमार्यन्या सप्तनद्यस्सुपावनाः ॥ ७
द्वीपेऽस्मिन्नचलोऽन्योऽपि पञ्चाशल्लक्षयोजनः । निषमन्त्यत्र दिक्पालाश्चन्द्राद्याश्चोकविश्रुताः ॥ ८
योजनानाञ्चतुष्षष्टिर्लक्षेणावृत्यवारिधिः (तिष्ठति) । एतद्द्वीपं समावृत्य स्वादूदो राजते खलु ॥ ९
द्वीपेष्वेतेषु गिरयस्सप्त सुवर्णे । प्राकारवच्छिलाजाले समावृत्य पयोनिधीन् ॥ १०
आरभ्य मेरुं द्वीपानि सप्तमुद्रान्ति सप्त च । सहस्राणाञ्च पञ्चाशात्सहस्राट्यधिक तथा ॥ ११
दानद्वयेव समानां मानमेतद्धि निश्चितम् । दशकोटिप्रमाणेन स्वर्णभूमिस्ततो द्विजाः ॥ १२
चक्रवाळगिरिस्तांतु समावृत्य विराजते । स्थूलोर्ध्वं दशसादश्चैर्योजनानां प्रतिष्ठितम् ॥ १३
ततो महासमुद्रोऽपि सर्वविद्योत्तर दाहम् । योजनानाञ्च लक्षाणि मेखलाकारवत् स्थितः ॥ १४

एकोनविंशल्लक्षञ्च चत्वारिंशत्सहस्रकम् । पञ्चविंशच्च कोटीनां तमोलोकस्ततो द्विजाः ॥ १५
अण्डस्य भित्तिः पूर्वोक्ता ज्ञेया सा कोटियोजना । पञ्चाशत्कोटि विस्तारो मेरोर्दक्षिण पार्श्वतः ॥ १६
पार्श्वेष्वन्येषु विज्ञेयं मानमेवं द्विजोत्तमाः । मेरोरुत्तरभागेऽस्यो महान् कैलास पर्वतः ॥ १७
ब्रह्माण्डभित्तिनिकटे श्रीमानत्र विराजते । तत्र शम्भुर्गणैर्भक्तैः स्तूयमानपदांबुजः ॥ १८
विराजते महादेव्या नित्यं मुदितमानसः । अण्डस्यास्य बहिर्भागे रुद्रास्तिष्ठन्ति रक्षकाः ॥ १९
यल्लक्षणं यत्प्रमाणमिदमण्डं मयोदितम् । तल्लक्षणप्रमाणैश्च बहून्यण्डानि भूसुराः ॥ २०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
दक्षकाण्डे एकचत्वारिंशोऽध्यायः ॥

दक्षकाण्डस्समाप्तः ।

उ

ஸ்ரீராமஜெயம்.

श्री महागुरुभ्यो नमः ॥ अविघ्नमस्तु ॥ श्री विघ्नेश्वराय नमः ॥

श्री प्रणतार्तिहरायपरस्मैब्रह्मणेनमः ॥

# श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे

## ॥ उपदेशकाण्ड प्रारम्भः ॥



शिवम् ॥

परशिवो विजयते ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजं। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
विघ्नेश्वरं विश्ववन्द्यं विमलज्ञानबोधकम्। उपदेशकाण्डपूर्त्यर्थमुमापुत्रं नमाम्यहम् ॥
सृष्टिस्थित्यन्तहेतूनां त्रिमूर्तीनां च हेतवे। श्रीमत्पञ्चावरणेशाय परस्मैब्रह्मणे नमः ॥

### ॥ अथ प्रथमोऽध्यायः ॥

### श्रीमहाकैलास निरूपणम् ॥

ऋषयः —

अस्ति मेरोर्दक्षभागे महान् कैलासपर्वतः । समीपतोऽण्डभित्तेश्च भवतेति समीरितम् ॥ १
किं रूपोऽयमुनिश्रेष्ठ किं प्रमाणः किमुच्छ्रयः । एतत्सर्वं विशेषेण वक्तुमर्हसि तापस ॥ २

सूतः —

शृणुध्वं ब्राह्मणास्सर्वे गुह्याद्गुह्यतरं परम् । अस्तिमेरोर्दक्षभागे महान् कैलासपर्वतः ॥ ३
सांबस्य सगणस्यायं सभक्तस्येन्दुमौलिनः । संवासो योजनानाञ्च विंशत्कोटिभिरायतम् ॥ ४
औन्नत्येनतद्द्विगुणमस्य ज्ञेयं द्विजोत्तमाः । नवरत्नमयं तस्य मध्ये शिखरमुत्तमम् ॥ ५
तत्रालयं महेशस्य नानारत्नविचित्रितम् । प्राकारगोपुराट्टालवलभीभिर्विराजते ॥ ६
रत्नसिंहासने तत्र महाशम्भुस्सदाशिवः । प्रफुल्लकमलोल्लासपञ्चविंशन्मुखोज्ज्वलः ॥ ७
धृतनानायुधो भास्वत्पञ्चाशत्करमण्डितः । फुल्लरक्तांबुजाक्षश्रीशार्यविग्रहोज्वलः ॥ ८
विचित्ररत्नखचितभूषणैरपि भूषितः । अनेककोटिसूर्याभः परमानन्दविग्रहः ॥ ९
प्रमाणतनुदर्भोगान् दृश्यलक्षणवर्जितः । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥ १०
महासदाशिवस्सोऽयं राजते तत्र पर्वते । शक्तयः पञ्चविख्याताः रुद्राश्च पदवस्तथा ॥ ११
सिद्धाश्च ऋषयस्सर्वे परितस्समुपासते । सर्वैश्वर्येण संपन्नस्सर्वव्यापी सनातनः ॥ १२
सेवितः परिवारैश्च स्वस्वकार्यसमुद्यतैः । प्रावृत्य रत्नशिखर मेतदन्यानपि द्विजाः ॥ १३
एकादशातिरम्याणि सुवर्णरत्नमयान्यहो । मूर्तयः पञ्चचान्या दशांशोऽप्यष्टपि मूर्तयः ॥ १४
निवसन्ति महेशेशा दिशास्वेषु द्विजोत्तमाः । एतान्यपि परीवृत्य चन्द्रकान्तानि भूसुराः ॥ १५
यशोत्सङ्गासं तानि शिखराणि शिवस्य हि । अत्र विघ्नेश्वराद्याश्च मूर्तयोऽष्ट महेशितुः ॥ १६
शक्तयो नव संख्याका ह्यास्थौरेव विभूतयः । एताश्च पञ्चविंशत्या मूर्तयोऽतिमनोहराः ॥ १७

मातृकाश्चैकपञ्चाशत्संख्याका निवसन्ति हि । एकोत्तरसहस्रञ्च शिखराण्यभितो द्विजाः ॥ १८
अग्निकान्तानि सर्वाणि तान्येतानि महेशितुः । अष्टोत्तरशतञ्चात्र ताण्डवेशस्य मूर्तयः ॥ १९
सप्तकोटिमहामन्त्राः प्राप्ताश्चेशस्वरूपताम् । निवसन्ति महादेवं ध्यायन्तोहृदयांबुजे ॥ २०
एतेषामभितो विप्रा दशसाहस्रसंख्यया । तथैव चैकोत्तरया शिखराणि महान्ति हि ॥ २१
एतानि स्फटिकाभानि राजन्ते शङ्कराज्ञया । अत्र विघ्नेश्वरस्कन्दौ महाशास्ता च भैरवः ॥ २२
वसन्ति देवदेवस्य कुमाराः परया मुदा । नन्दिभृङ्गिमहाकाळ प्रमुखाश्च गणाधिपाः ॥ २३
वृषेश्वरोऽपि धर्मात्मा कामधेनुरभीष्टदा । दुर्गाद्याश्शक्तयश्चान्या भक्ताश्चण्डेश्वरादयः ॥ २४
तथाऽत्र मूर्तयः पञ्च नित्यं शिवपरायणाः । एतेषामभितो ज्ञेयं लक्षमेकोत्तरं द्विजाः ॥ २५
शिखराणि मनोज्ञानि रत्नकान्तीनि सन्ततम् । प्रत्यग्भागे स्थितेष्वत्र विष्णवः परमेश्वरम् ॥ २६
उपासते परं तत्वं ज्योतिर्लिङ्गाकृतिं शिवम् । निवृत्तेच्छाः पदप्राप्तौ मोक्षमेवाभिकांक्षिणः ॥ २७
अथोदक् शिखरेष्वेवं विधातारो महेश्वरम् । भजन्तो मोक्षमिच्छन्तो निवृत्ताः पदवाञ्छया ॥ २८
प्राच्याः स्थितेषु शिखरेष्विन्द्राद्या लोकपालकाः । वृषारूढं महादेवं ध्यायन्तो निवसन्त्यमी ॥ २९
दक्षिणाशामुखं देवं दक्षिणामूर्तिमव्ययम् । शिखरेषु च ' याम्येषु ऋषयस्संशितव्रताः ॥ ३०
ध्यायन्त्येकाग्रमनसा तत्वज्ञानाभिकांक्षिणः । दशलक्षं तथैकाग्रं शिखराणि महीसुराः ॥ ३१
राजन्ते परितश्चैषां स्वर्णकान्तीनि तानिहि । शिखरेष्वेषु विप्रेन्द्रा भूतानामधिपाः स्मृताः ॥ ३२
दशायुतानि (दशायुधानि) रुद्राश्च सिद्धविद्याधरास्तथा । तथा गरुडगन्धर्वा स्सुरभिश्च पयस्विनी ॥ ३३
चिन्तामणिः कल्पवृक्षश्शङ्खपद्मनिधी उभे । सुन्दर्यो रुद्रगणिका नानाश्चर्याण्यपि द्विजाः ॥ ३४
सामीप्यरूपां मुक्तिंच प्राप्तास्त्वत्र वसन्तिहि । एतेषामभितोऽन्यानि शिखराणि द्विजोत्तमाः ॥ ३५
राजतान्येषु संख्याच कोटिरेकाधिका मता । एतेषु शिव सूपाद्विद्विसहस्रमिता गजाः ॥ ३६
वळक्षा ' गणप्रमानो निवसन्ति शिवाज्ञया । अश्वास्तथा वेदमया विमानानि रथास्तथा ॥ ३७
एकपादो द्विपादश्च त्रिपादो बहुपादकाः । अपादाश्चैकवदना द्विव्यादिवदनाः परे ॥ ३८
तथा ह्यवदनाः केचिदेकद्वित्रिकरा द्विजाः । अकराश्चैकनयना द्वित्र्यादिनयनाः परे ॥ ३९
अनेकनयनाश्चान्ये तथा विनयनाः परे । मनुष्यवदनाः केचित्पक्षिवक्त्राः परेद्विजाः ॥ ४०
गजाश्वसिंहशार्दूलगोमायुवदनाः परे । ऋक्षवानरभल्लूकतरक्षुवदनाः परे ॥ ४१
एते भूतगणास्सर्वे नानारूपाश्शिवाज्ञया । निवसन्ति समुत्कृष्टाश्शिवेनात्र द्विजोत्तमाः ॥ ४२
दिव्यारामसहस्राणि दिव्यदीर्घाण्यनेकशः । काननानि च भूरीणि नानाश्चर्याणि सर्वतः ॥ ४३
ऋषयो नाकिनः केचिन्निवसन्ति द्विजोत्तमाः । सालोक्यरूपां मुक्तिं ये प्राप्ताश्शंकरपूजया ॥ ४४
भुक्त्वा तेऽपि महाभोगान्वसन्ति परया मुदा । अष्टादशोत्तरदशमेकादशसहस्रकम् ॥ ४५
तथैकादशलक्षञ्च कोटिरेका द्विजोत्तमाः । शिखराणामिमास्संख्या स्सर्वेषामिति निश्चिताः ।
एवं विराजते शंभोर्महाकैलास पर्वतः ॥ ४६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे प्रथमोऽध्यायः ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

श्री महाकैलासे नन्दीश्वरादीनां स्थाननिरूपणम् ॥

स्वर्णभूमिरधोभागे तस्यैतस्य द्विजोत्तमाः । कोटियोजनमानेन परिवृत्य विराजते ॥ १
अत्र रुद्रास्सहस्राणि ऋषयश्च तपोधनाः । सुबहूनि च भूतानि भुक्त्वा भोगान्यथेप्सितान् ॥ २
वर्तन्ते शिवभक्तास्ते शिवध्यानपरायणाः । प्राकारः स्वर्णभूमिं तां काञ्चनो राजतेऽमितः ॥ ३
कोटियोजनमानेन विशालोऽस्य समुन्नतिः । द्विकोटिका समुद्दिष्टा द्वाराण्यष्टात्र भूसुराः ॥ ४
गोपुराण्यष्टसंख्यानि तेषु द्वारेषु चासते । कोटिभौमानि दिव्यानि नानारत्नमयानि हि ॥ ५
तत्र प्राचि हरिद्भागे गोपुरं यद्विराजते । तद्द्वारि स्वगणैस्सार्धं विघ्नेशस्तिष्ठति द्विजाः ॥ ६
अग्निदिग्गोपुरद्वारि वीरभद्रो गणैस्सह । वर्ततेऽयं महासत्त्वो ब्राह्मणानामधीश्वराः ॥ ७
याम्यदिग्गोपुरद्वारि नन्दिकेशो गणाग्रणीः । गणैः स्वकीयैस्तत्रास्ते येनपालिरयं द्विजाः ॥ ८
नैर्ऋत्यां गोपुरद्वारि भैरवः स्वगणैस्सह । विराजते महासत्व दुःशंकराज्ञाविधायकः ॥ ९
प्रत्यग्दिग्गोपुरद्वारि सुब्रह्मण्यश्शिवात्मजः । स्वसेनाभिरयं तत्र तिष्ठत्यंबां हृदिस्मरन् ॥ १०
वायुदिग्गोपुरद्वारि दुर्गादेवी गणैस्सह । तिष्ठत्येषा महासत्वा शिवं ध्यात्वा द्विजोत्तमाः ॥ ११
उदग्दिग्गोपुरद्वारि महाकालो विराजते । देवं देवीं हृदि ध्यात्वा गणैस्साकमसौ महान् ॥ १२
ईशानगोपुरद्वारि महाशास्ता हरात्मजः । शास्त्यधर्मान्निशमीशाज्ञां शिरसा संवहन् द्विजाः (जगत्)
एवमेते महाभागाः पालयन्त्यखिलं जगत् । अनेकशिखरैरेवं महाकैलास पर्वतः ॥ १४
नानारत्नमयैर्दिव्यैः प्राकारेणापि संवृतः । नैनं पश्यन्ति पापिष्ठा राक्षसा दानवाः परे ॥ १५
भवान्तरेषु प्रळयेष्वेधतेऽण्डोपरि द्विजाः । कैलासेऽस्मिन्महादेवः सर्वानुग्रह कारकः ॥ १६
अनुग्रहं करोत्येव सर्वेषामात्मनां द्विजाः । जम्बूद्वीपस्थ कैलासे निग्रहानुग्रहावुभौ ॥ १७
विदधाति सदा शंभुः स्वेच्छया परमेश्वरः । ज्ञानस्वरूपौ कैलासावुभावपि महीसुराः ॥ १८
स्मरणादेतयोः पाप स्तृणाग्रं विनश्यति । शिवाश्रया धृतावेतौ न महां यतेते द्विजाः ॥ १९
ज्योतिर्मयौ विज्ञानन्ति पुराणार्थविशारदाः । महासदाशिवश्शंभु र्महाकैलासपर्वते ॥ २०
रुद्रस्तत्तैर्देवैश्च विष्णुपूर्वगणैरपि । महात्मभिस्तपोनिष्ठैर्मुनिभिर्नित्यं प्रपूजितः ॥ २१
सर्वैश्वर्येणसंपन्नो राजतेऽत्र महीसुराः । श्रीकण्ठाख्यो महादेवस्सर्वदेवैः परैरपि ॥ २२
जंबूद्वीपस्थकैलासे निग्रहानुग्रहावुभौ । करोति सर्वजीवानां स्वेच्छया ब्राह्मणोत्तमाः ॥ २३
भातीतपाद्धनःपन्था महादेवो महेश्वरः । एतयोरुभयोर्यस्मादतंते लोकरक्षकः ॥ २४
तस्मात्तया महद्भाति पूर्वोदिति भवान्वितः । ऊर्ध्वं ज्वलति यदिदं स्वर्गं रक्षति वृत्रहा ॥ २५
पृथिव्यादीनि भूतानि समर्यादानि भूसुराः । य इमं पठतेऽध्यायं शृणोति च समाहितः ॥ २६
श्रावयेच्छिवभक्ताग्र्या तेषामीशः प्रसीदति । आयुरारोग्यमैश्वर्यमसौ विन्दति मानवः ॥ २७
शिष्याय भक्तियुक्ताय कुशलाय प्रदर्शयेत् । यस्मै कस्मै न दातव्यं दर्शयेदेनमुत्तमम् ॥ २८
किमत्र बहुनोक्तेन गुह्याद्गुह्यतमं द्विजाः । उपमन्युरिमं श्रुत्वा व्याघ्रपादाद्धरीश्वरात् ॥ २९
प्राप कैलासमतुलं भुक्त्वा भोगान्यथेप्सितान् । उपमन्योरिमं श्रुत्वा कृष्णः कैलासमाप्तवान् ॥ ३०
इन्द्रात्पूर्वादुत्तरभुग्या कामरूपया भुवि स्थितान् । कैलासमगमद्धीमान् ब्राह्मणानामधीश्वराः ॥ ३१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

## श्री स्कन्द वाहन मयूर कुक्कुट चरितम् ॥

ऋषयः —

शूरपद्मो महाघोरः पुरा जातो हि सानुजः । सिंहाननस्तारकोऽस्य कनिष्ठौ बलशालिनौ ॥१
न विद्मः क्व गतावेताविति सूत महामते । बर्हिकुक्कुटयोर्देहौ शूरस्संगृह्य निर्गतः ॥२
इत्युक्तं भवता सूत हेतुना केन तद्वद । सूतः — शृणुध्वमृषयस्सर्वे यूयमत्रावधानतः ॥३
कल्पे कस्मिन् पुरा स्वामी मयूरञ्चाकभूषणम् । अधिष्ठाय विनिर्गत्य लीलयासञ्चरज्जगत् ॥४
प्राप्य कैलासमतुलं पर्वतानामधीश्वरम् । अवरुह्य मयूरात्स्वाद्वाहनानामधीश्वरात् ॥५
गिरेरधो मयूरं तं कुक्कुटं केतुरूपिणम् । संस्थाप्य पित्रोर्निकटमापायं ब्राह्मणोत्तमाः ॥६
अवालोकयतामस्य तदा वृत्तिमुभावपि । ब्रह्मविष्णुमुखा देवाः सेवितुं परमेश्वरम् ॥७
समागता व्यवस्थाप्य वाहनान्यत्र ते तदा । परमेशान्तिकं पश्चाद्ययुस्सर्वे द्विजोत्तमाः ॥८
वाहनानि तदा तेषां मयूरं कुक्कुटं परम् । अप्रणम्य स्थितानीह गर्वयुक्तान्तरात्मभिः ॥९
ज्ञात्वाऽवलेपं चत्वारि भूतान्येषां तदा द्विजाः । बोधयित्वा मयूरस्य कुक्कुटस्य महौजसः ॥१०
तदा मिलित्वा तेऽन्योन्यं मन्युना च समन्विताः । अद्रावयन् महावेगात्सर्वलोकेषु तान्यहो ॥११
लुण्ठयित्वा विधेर्लोकं विष्णोर्लोकं सुरेशितुः । वाहनानि च सर्वाणि मारयामासु रुक्कुधा ॥१२
तत्र तत्र स्थितान् देवानन्यानपि पथिस्थितान् । हाहाकारोऽभवद्भीमस्तदा सर्वत्र भूसुराः ॥१३
दग्ध्वैवंतानि भूतानि तत्तल्लोकान् क्षणात्पुनः । निवृत्य मिलितानीह पूर्ववत्तानि शीघ्रतः ॥१४
ततो विनिर्गतः स्कन्दः प्रेरितश्शंभुना पुनः । अनन्तकोटिभूतानि वर्तन्ते यत्र लीलया ॥१५
ताम्रचूडशिखण्डिभ्यां साकं तस्मात्स्थलात् स्थलम् । ततो विष्णुमुखा देवा नत्वाऽऽशु परमेश्वरम् ॥१६
प्राप्तानुज्ञा निवृत्तास्ते वाहनारोहणेच्छया । अदृष्ट्वा वाहनान्येते किमेतदिति विस्मिताः ॥१७
समागतैस्तत्र जनैः स्वस्वलोकनिवासिभिः । बोधिता भूतचेष्टां ते वाहनानां मृतिं तथा ॥१८
लोकानां लुंठनं चापि महादुःखसमन्विताः । समागत्य गुहं शीघ्रं प्रणम्य विनयानताः ॥१९
ऊचिरे तद्विशेषेण वृत्तान्तमनुपूर्वशः । कैस्समाचरितं चेत्थं दौष्ट्यं वदत हे सुराः ॥२०
स्वकशंका मम पुरा यूयमत्र मदाज्ञया । इति पृष्टा गुहेनैते विष्णुपूर्वास्सुरोत्तमाः ॥२१
मयूरकुक्कुटाभ्यां ते साकं भूतानि देवप । शूरस्यमेकं प्रथमं पद्मसंज्ञमतः परम् ॥२२
तारकं सिंहवक्त्रं च तानि चत्वारि मन्युना । वाहनान्यस्मदीयानि हत्वा भूतेषु पूर्ववत् ॥२३
वाहनस्य मयूरस्य कुक्कुटस्य शिखण्डिनः । वर्तन्ते देवसेनेश रक्ष रक्ष दयानिधे ॥२४
इति तेषां वचश्श्रुत्वा तानि भूतानि षण्मुखः । समाहूय सुरेशानामपकारो यतः कृतः ॥२५
तद्रूपमासुरे वंशे भवताद्य मदाज्ञया । शशापैतानि भूतानि चत्वार्येवं गुहस्तदा ॥२६
ततो भीतानि भूतानि प्रणम्य स्कन्दमव्ययम् । आगसो विनिवृत्त्यर्थं प्रसादं सुरनायक ॥२७
कृपया तदुचितामाज्ञामत्र रक्ष दयानिधे । स्वप्नेऽप्यसुरं जन्म नास्माभिः स्मर्यते भयान् ॥२८
इत्युक्त्वा ते प्रणेमुस्तं भक्त्यासक्तमव्ययम् । तानि भूतानि देवेशस्ततः प्राह कृपावशात् ॥२९

युष्माकमासुरञ्जन्म भवत्वद्य मदाज्ञया । तत्र जन्मन्यहं युष्मानाज्ञां दत्वा कृपावशात् ॥ ३०
पुनः प्राचीनरूपञ्च प्रदास्यामि न संशयः । इत्युक्तमात्रे देवेन शूरपद्माख्यके तदा ॥ ३१
उभे भूते महाभीते प्रणम्य स्कन्दमव्ययम् । देवदेव दयासिन्धो रक्षावां परयामुदा ॥ ३२
अकुर्वाव तपो घोरं बर्हिकुक्कुटरूपवः । कृपापात्रे भविष्यावः कदावेति सुरेश्वर ॥ ३३
तत्प्रसादेन भवता स्वासुरं जन्म भीषणम् । दत्तमस्मत्कृते मोक्षो भावि सर्वाधिपावयोः ॥ ३४
समाकर्ण्य तयोश्शूरपद्मयोर्वचनं गुहः । मन्दस्मितमुखोवाच मुक्तवान्व्यक्तमव्ययम् ॥ ३५
युवां प्रसिद्धौ जगति शूरपद्माख्ययैकधा । महासुरौ महाघोरौ भवतं देवघातकः ॥ ३६
तत्र जन्मनि दैत्यत्वात् मोचितोऽयं यदा तदा । बर्हिकुक्कुटरूपं वां तदा भूयान्मदाज्ञया ॥ ३७
इत्युक्त्वा तानि भूतानि प्रेषयित्वाऽमरेश्वरः । अवलोक्य सुरान्सर्वानात्मपार्श्वस्थितान् भयात् ॥ ३८
यत्तैर्या मारितास्सेना वाहनानि च हे सुराः । यथापूर्ववदेतानि भवन्त्वद्य मदाज्ञया ॥ ३९
एवमेतान् कृपां कृत्वा प्रेषयित्वा स्वकं पुरम् । आरुह्य बर्हिणं रम्यं नानालङ्कारमण्डितम् ॥ ४०
स्वपुरं प्राप देवेशः क्षणादेव महीसुराः । भूतान्यमूनि चत्वारि काश्यपस्य महात्मनः ॥ ४१
संबभूवुस्तथा पुत्रास्तदानीं ब्राह्मणोत्तमाः । तारकं सिंहवक्त्रंच यदा स्कन्दो जघान तौ ॥ ४२
भूताकारेण कैलासं ययतुः पूर्ववद्द्विजाः । शूरपद्मस्तु देवेन हतमात्रेण शीघ्रतः ॥ ४३
गृहीत्वा परमं रूपं बर्हिकुक्कुटयोर्द्विजाः । मुदं चकार देवस्य तदात्यन्तं सुरेशितुः ॥ ४४
इति सम्यङ्मयाऽऽख्यात शूरादीनां समुद्भवः । पुनरन्यद्द्विजश्रेष्ठाः श्रोतव्यं यद्ब्रवीमितत् ॥ ४५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे तृतीयोऽध्यायः ॥

---

## ॥ अथ चतुर्थोऽध्यायः ॥

### शूरपद्मस्य स्कन्द वाहनत्व प्राप्ति ॥

ऋषयः—सहजा शूरपद्मस्य भगिनीताऽजामुखीति या । माया या जननी तस्य क गते ते उभे मुने ॥ १
तयोर्वृत्तान्तमस्माकं वद सूत तपोधन । सूतः— समागता यदा शूरं युद्धकाले जनन्यसौ ॥ २
उक्त्वा विनिर्ययौ माया भीता मन्दरपर्वतम् । तद्रूपाऽजामुखी प्राप्य शूरादिषु मृतेष्वपि ॥ ३
क्षीरपर्वतं गिरिश्रेष्ठ मागच्छाशु सुते परे । इत्युक्त्वा प्रययौ माया सुतामजमुखीं तदा ॥ ४
ततः कालवशाद्दैत्याः शूरपद्मादयो हताः । मत्सुतेन्द्रहरिण्यौ तौ [illegible] ॥ ५
क्षीरपर्वतं गिरिवरमागत्याजामुखी तदा । दृष्ट्वा समातरं मायामालिङ्ग्य बहुधालपत् ॥ ६
मथोचस्तनुजां माया भ्रातरस्तु ते दुःखमात्मजे । शूरपद्मस्तव भ्राता मयूरं कुक्कुटं वपुः ॥ ७
प्रदीश्य महाविष्णुभ्यां वन्दितं पद्मभाषितः । गुहवाहनकैश्वर्यं मनन्य सदृशं परे ॥ ८
भूताकारेण कैलासे तौ सिंहमुखतारकौ । वर्तेते तत्र सन्तोषान्महदैश्वर्यं शालिनौ ॥ ९
इति माया वचश्श्रुत्वा पप्रच्छैनां तदात्मजा । मातरेते महापापाः कथमेषामियं गतिः ॥ १०
यदेतत्सर्वतोऽपायं पृच्छाम्ये महामातरात् । माया — कस्मिन् कल्पे पुरा कश्चिच्छाकद्वीपे नृपोत्तमः
प्रभाकराख्यो धर्मात्मा सत्यवागनसूयकः । बभूव तस्य नृपतेस्सुकुमारी सधर्मिणी ॥ १२
तस्यामुत्पादयामास यमलौ द्वौ सुतौ नृपः । पृथक्भातौ तथा धान्यौ चावारसुकुमारकाः ॥ १३

चकार च महीपालः पुत्राणाञ्च यथाक्रमम् । पितृमातृपितृभ्रातृनामानि प्रथितान्यथम् ॥ १४
शूरपद्माख्यकौ पूर्वौ यमलौ प्रथितौ भुवि । सिंहतारकनामानावन्यावपि सुतावतः ॥ १५
राज्ये पुत्रान्व्यवस्थाप्य प्रभाकरमहीपतिः । प्रतस्थे भार्यया तप्तुं तपोवनमनुत्तमम् ॥ १६
शूरादयो यथान्यायं राज्यं बभुस्तेन्द्रिताः । तदा समागतोऽगस्त्यश्शूरपद्माख्ययोस्तयोः ॥ १७
भवद्गुहमाहात्म्यं सर्वपापनिकृन्तनम् । सिंहतारकयोरेवं तृणबिन्दुस्तपोनिधिः ॥ १८
तथा वृषभयोगीच योगिनां प्रवराबुभौ । समागत्य क्रमेणैतौ सर्वलोकोपकारकौ ॥ १९
पुण्यं दुर्गामहाशास्त्रोर्माहात्म्यं तत्ववेदिनौ । तदा जगदतुस्सर्वं यात्ते सस्थायथारुचि ॥ २०
त इमे भूभृतश्श्रुत्वा ऋषीणां वचनं महत् । केनापि पुण्यपाकेन बभूवुर्भक्तिसंयुताः ॥ २१
शूरपद्माख्ययोर्भक्तिरुभयोष्षण्मुखेऽभवत् । सिंह तारकयोर्दुर्गा महाशास्त्रोरजायत ॥ २२
मयूररूपमादाय शूरोयोदुसियेव तम् । पद्मस्तु कुक्कुटाकारं गृहीत्वा षण्मुखस्य सः ॥ २३
केतुरूपस्तथा प्रीतिं कर्तुमैच्छन्महाबलः । सिंहतारकनामानौ सिंहदन्तिशरीरिणौ ॥ २४
तथा दुर्गामहाशास्त्रोर्वाहनत्वं समीयतुः । एवमेते महीपालास्तत्तद्वाहाभिकांक्षिणः ॥ २५
तेषां पदानि संवोढुं सर्वदा भक्तिसंयुताः । पुत्रेषु राज्यं निक्षिप्य तपस्तप्तुं प्रतस्थिरे ॥ २६
चत्वारिंशत्सहस्राणि तेपिरे ते तपो भृशम् । तदा देवा गिरिं सर्वे कैलासं परमेशितुः ॥ २७
सेवार्थं संगतास्स्वानि वाहनानि गिरेरधः । व्यवस्थाप्यस्वयं प्राप्ताः परमेशान्तिकं मुदा ॥ २८
तद्वाहनानि सर्वेषां ब्रह्मविष्णुमुखादिनाम् । मयूरं कुक्कुटं प्राप्य स्कन्दस्य परमेशितुः ॥ २९
दुर्गाया वाहनं सिंहं महाशास्तुर्गजं तथा । वीक्ष्य प्रोचुर्वचस्तानि गरुडादीनि बालिके ॥ ३०
भवत्पदाप्तये पुत्राः प्रभाकरमहीभृतः । तपश्चरन्ति सुमहत्पञ्चाग्न्यन्तरगा भृशम् ॥ ३१
इति तेषां वचः श्रुत्वा मयूरादीनि कोपतः । अस्मदीयपदप्राप्तिः कथमेषां भवेदिति ॥ ३२
समागत्य तपस्स्थानं निशाम्याग्नीन् बृहच्छिखान् । युष्माभिरेतत्सुमहत्किमर्थं तप्यते तपः ॥ ३३
इति पृष्टा महीपालाश्चत्वारो बर्हिपूर्वकैः । जगदुर्वाञ्छितं तेषां वेपमानशरीरिणः ॥ ३४
यस्मात्त्वं पदान्येषामस्माकं बर्हिपूर्विणाम् । इच्छेयास्सन्मुखानाशु भूतानि भवताऽधुना ॥ ३५
शापित्वैवं ययुः स्थानं बर्हिपूर्वाणि शीघ्रतः । अनुसृत्य महीपालास्तत्स्थानं प्रापिरे तदा ॥ ३६
तत्सन्मुखा महादुःखात् स्तुत्वा बर्हिमुखानि ते । भूतान्यमूनि चत्वारि वीक्ष्य बर्हिमुखान्यतः ॥ ३७
प्रसन्नानि गिरं प्रोचु रेवैव वसताधुना । युष्मादिष्टं भवत्वग्रे चिरकालेन सत्यतः ॥ ३८
इति तेषां वचश्श्रुत्वा भूतान्येतानि बालिके । अण्डावरण (भरण) भूतेषु मिलितान्यवसन्मुदा ॥ ३९
ततस्सुरा महादेवं प्रणम्य परमेश्वरम् । निवृत्ताः स्वानि वाहानि समारुह्य मुदान्विताः ॥
ययुः पदानिस्वान्याशु विष्णुब्रह्ममुखास्सुते ॥ ४०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुर्थोऽध्यायः ॥

---

प्राप्या वाहनता श्रेष्ठा युवाभ्यामेतयोरिति । तस्य तद्वचनं श्रुत्वा तौ सिंहकरिणौ परौ ॥ ३१
सारूप्यं भवतस्स्वामिन् लोलुप्योरिहावयोः । कृत्यमेतत्त्वयादेव व्यवस्थापितमद्य किम् ॥ ३२
उक्तवन्तौ तु तौ वीक्ष्य पुनः प्राह वृषेश्वरः । एतद्वाहनतां प्राप्य वसतं मदनुज्ञया ॥ ३३
मां ध्यात्वा दीर्घकालेन मत्सारूप्यमवाप्स्यथ । इति व्यवस्थितिं चक्रे वृषभो वाहनेश्वरः ॥ ३४
तथैव तौ सिंहगजौ वाहनत्वमवापतुः । पुनः कालेन महता ध्यात्वा वृषभमव्ययम् ॥ ३५
अवापतुस्स्वरूपं तच्छिवस्य प्राप्य तस्य तौ । स्यक्त्वा दुर्गां च शास्तारं मोदेनेऽतिसुखान्वितौ ॥ ३६
तदा तु दुर्गाशास्तारौ नन्दिकेशं गणेश्वरम् । विवाहौ वाहने रम्ये यथावत्तुरमुं स्तुते ॥ ३७
तदा विचार्य शैलादिर्सिंहद्वयश्चैव तारकम् । उभे भूते महासत्वे वाहनत्वे युयोज ते ॥ ३८
शिवाज्ञया तयोर्दुर्गा महाशास्त्रोर्वैरातने । इत्युक्तं वृषसारूप्यमात्मजे ते मयाऽधुना ॥
वाहयोः सिंहगजयोः पूर्वयोरुभयोरपि ॥ ३९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

अजामुख्या पूर्वजन्मचरितम् ॥

ततो मायात्मजा मायामपृच्छत्साविविसिता । स्ववृत्तान्तं भगवन्विष्टा ब्राह्मणानामधीश्वराः ॥ १

माया —

गोमेदाख्ये महाद्वीपे त्रिशिराख्योद्विजोत्तमः । शुभदाह्वाऽभवत्तस्य भार्या धर्मपरायणा ॥ २
तस्यामजीजनद्बालां त्वां त्रिशिरोऽतिसुन्दराम् । चित्ररेखेति विख्याता तदा त्वं पृथिवीतले ॥ ३
भूचक्राख्यपुरे कश्चिद्द्विजन्माभिधो द्विजः । बभूव तस्य मतिमान् पुण्डरीकोऽग्रजो वरः ॥ ४
विवाह्य विधिना बालां द्विजन्मा सुमनोहराम् । नीत्वा त्वां स्वपुरे रम्ये न्यवसद्विष्णुभक्तिमान् ॥ ५
ततः कालेन विप्रस्य प्रमत्तोऽभूद्धरिस्स्वयम् । प्रसन्नेतु हरौ विप्रो गृहीत्वा रत्नमुत्तमम् ॥ ६
दिने दीनारशतकवसुदिव्यप्रभावृतम् (प्रभावत) । अनेकशिष्यैश्शास्त्रैरावृतो वेदपारगः ॥ ७
नित्याध्यायी जितक्रोधो नित्यं धर्मपरायणः । अन्नदानैकनिरतस्स्वर्णदानपरोऽनिशम् ॥ ८
तस्य विप्रस्य पत्नी त्वं रूपयौवन गर्विता । बभूविथ महापापा, वशगा मन्मथस्य हि ॥ ९
तदाऽन्यपुरुषासक्ता दृष्ट्वा दृष्ट्वा क्वचित् क्वचित् । क्रमेण वीतलज्जा त्वं तच्छिष्यान् ब्राह्मणोत्तमान् ॥ १०
पुनरभ्यागतान् यत्पूज्यतीनपि तपस्विनः । दानार्थमागतानन्यान्वैश्यान् स्वातुं समागतान् ॥ ११
मोहयित्वा स्ववशगान् बलाद्रमय खलु । बहुना किं नरं यथा वश मदनमोहिता ॥ १२
भवस्तथाय विप्रेन्द्रस्त्वयि स्नेहवशात् भृशम् । न परित्यक्तवान्प्रलापय परिशेषधिम् ॥ १३
जानन्नपि स्थिरस्तूष्णीमभावान स्वात्मजे । तदा समागतश्शिष्यैर्दुर्वासास्तपसां वरः ॥ १४
प्रत्यग्रदीक्षमायान्तं तव भर्ता द्विजोत्तमः । स्वशिष्यैस्स्वगृहं रम्यं निनाय बहुमानतः ॥ १५
निवासं कल्पयित्वाऽस्य कुत्रचिन्मण्डपं स्वयम् । अन्तःपुरं प्रविश्यास्य रूपैर्भिक्षामनुज्वलम् ॥ १६
त्वमेव दाया शीघ्रेण समागच्छान्तिकं मम । इत्युक्त्वा प्रेरयामास त्वामेव द्विजसत्तमः ॥ १७
तथेति त्वं गृहीत्वाशु भिक्षां परमशोभनाम् । गत्वा तपोधनाभ्याशं भिक्षां नीलोत्पलोपमः ॥ १८

न स्वीचकार तां भिक्षां कृता भिक्षाऽमुना यतः । तदैनं तापसश्रेष्ठं दृष्ट्वा त्वं काममोहिता ॥ १९
निवृत्तेव क्वचित्कोणे स्थित्वा सुतनृपीश्वरम् । शाखां गत्वा तदङ्गपाशमालिङ्गितवती सदा ॥ २०
प्रबुद्धे तु ऋषौ तस्मिन् पलायनमभिप्सिता । वीथ्यां रथ्यास्थले कश्चिद्वटवृक्षो महोन्नतः ॥ २१
वर्तते बहुशाखस्य मूले मेषाश्च शिश्यिरे । तेषां मध्यं भयाविष्टा प्रविष्टा ननुशालिशे ॥ २२
उत्थितस्तापसश्शिष्यं धर्मगुप्ताह्वयं निजम् । वृत्तान्तमुक्त्वा तां पापां गृहीत्वाऽऽगच्छ मेऽन्तिकम् ॥
इति तं प्रेषयामास दुर्वासास्तापसां निधिः । धर्मगुप्तो विनिष्क्रम्य विलोक्य सदनाद्बहिः ॥ २४
अदृष्ट्वा त्वामृषिं प्राप्य न दृष्टेत्यवदन्नया । ऋषिरेव ततो ज्ञात्वा दृष्ट्या ज्ञानमय्या सुते ॥ २५
रथ्यायां वटवृक्षस्य मूले मेषसमूहगाम् । तत्र गत्वा भयाच्छीघ्रं त्वं गुप्ता वर्तसेऽत्र किम् ॥ २६
वृक्षाग्रे व्योम्नि तिष्ठाशु दुराचारे मदाज्ञया । शापित्वाऽऽगच्छतु जवात् धर्मगुप्तैवमीदृशीम् ॥ २७
इत्युक्त्वा प्रेषयामास धर्मगुप्तं तपोधनः । स तथेति विनिर्गत्य दृष्ट्वा त्वामजमध्यगाम् ॥ २८
शशाप तत्क्षणेनायं वटवृक्षोपरि स्थिताम् । तस्यां रात्र्यां व्यतीतायां प्रातःकाले तपोधनः ॥ २९
समाप्य नियमान्सर्वान् ददर्शैनां वटे स्थिताम् । ददृशुश्च जनास्सर्वे विस्मयोत्फुल्लमानसाः ॥ ३०
पुण्डरीकस्य पत्न्येषा वटवृक्षोपरि स्थिता । किमेतदिति साशङ्कं वदन्तोऽन्योन्यमद्भुतम् ॥ ३१
पुण्डरीकस्तदाश्चर्ये स्वसमभ्येत्य तपोनिधिम् । प्रणम्य विनयानम्रः प्रोवाच वचनं द्विजाः ॥ ३२
प्रेषितैषा मया स्वामिन् भिक्षां दातुं कुटुम्बिनी । भवते तापसश्रेष्ठ नागता पुनरेव सा ॥ ३३
वर्तते वटवृक्षाग्रे सर्वेषां विस्मयावहा । फलं पापस्य कस्यैतद्वदैतदपि सुव्रत ॥ ३४
इति तस्य वचः श्रुत्वा ऋषिर्वृत्तान्तमीदृशम् । उक्त्वैषा स्तंभिता तत्र मया पापैवमाहृतम् ॥ ३५
पुण्डरीकस्ततः कोपाद्दर्पिणा भवताऽधुना । शक्यते चेदृशं कर्तुं स्त्रीषु पापरतास्वपि ॥ ३६
पापप्रकटने पाप तत्कर्तुंहि भवेदिदम् । ३७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षष्ठोऽध्यायः ॥

---

## ॥ अथ सप्तमोऽध्यायः ॥

### दुर्वासश्शापेन अजामुखीत्वप्राप्तिः ॥

निशम्यास्य वचः कोपात्तपस्वी प्रत्युवाच तम् । किं वृथा तेऽभिमानोऽयं पत्न्येषेति विमूढधीः ॥ १
अनया मारिताः केचिद्ब्राह्मणा दुष्टशीलया । षण्ढानां व्रतभङ्गश्च चक्रैषा दुरात्मिका ॥ २
अनया पापबुद्ध्याऽन्ये बभूवुः पापिनो द्विजाः । तव पत्नी यदि भवेदियं पश्य तदा भवान् ॥ ३
आहूय गच्छतु श्रीमान् तारयित्वा महीरुहात् । इति तस्य वचश्श्रुत्वा तामाह्वयदसौ द्विजः ॥ ४
तदा वृक्षादियं किञ्चिदवरोहवती सुते । ये चान्ये पुरुषा भूयमनया कृतमैथुनाः ॥ ५
अवतारयताऽप्येना मद्वाक्यान्महीरुहात् । इति प्राह ऋषिश्रेष्ठस्तत्रस्थान् वीक्ष्य भूसुरान् ॥ ६
पुण्डरीकोऽपि मूढेयस्तस्यां मोहवशादयम् । अनुमेने द्विजान्सर्वानाह्वाने मदनातुरः ॥ ७
तद्विज्ञप्त्याश्च तथाऽयाचे ये द्विजास्तत्रसङ्गताः । ते सर्वे तामिमां पापामाह्वयामासुरुन्मुखाः ॥ ८
तेषामाह्वानमात्रेण वृक्षमध्यमियं स्थिता । पुण्डरीकस्तत्र चण्डकोपानलसमावृतः ॥ ९
कथं तिष्ठति मध्येऽस्य समाहूता द्विजैरियम् । सर्वैरपि वदाथ त्वं कारणं तापसाधुना ॥ १०

इत्युक्तवन्तं तं वीक्ष्य पुनः प्राह तपोधनः । इतोऽपि बहवस्सन्ति त्वद्भार्यापतयो द्विजाः ॥ ११
नागतास्ते दुराचारास्तत्र तत्र निवासिनः । इत्युक्त्वा वीक्ष्य तां पापां वृक्षमध्यनिवासिनीम् ॥ १२
त्वयाभिसारिता येऽन्ये तानुक्त्वोच्चैर्भटावितः । अवरुह्य गृहं गच्छ त्वं पापे नामतो द्विजान् ॥ १३
तथेति तद्वचः श्रुत्वा स्वकर्मोः कुलटावधूः । नामान्युक्त्वा द्विजानां सा प्रधानस्कन्धमाश्रिता ॥ १४
विस्मृता बहवस्सन्ति मत्संयुक्ता महीसुराः । वर्णिनोऽन्ये गृहस्थाश्च यतयोऽपि तपोधनाः ॥ १५
बभूवुर्व्रतभङ्गोऽभूदिति ते स्वकजीविनः । यत्संदर्पणमात्रेण बहवो ब्राह्मणोत्तमाः ॥ १६
इत्युवाच पुनश्चैषा दुराचारा हि तापसम् । तच्छ्रुत्वा तापसश्रेष्ठः पुनश्च क्रोधविह्वलः ॥ १७
दुश्शीलां कुलटां पत्नीं पुण्डरीकोऽयमग्रजः । ज्ञात्वाऽपि नहि जग्राह भार्यामन्यां सुशीलिनीम् ॥ १८
उपेक्ष्य तद्वधे त्वामेनां न परित्यक्तवानयम् । त्वया कृतानि पापानि यानि क्रूराणि दुर्जने ॥ १९
फलप्रदानि तान्यस्य नात्र कार्या विचारणा । उवाचैवं सुते वीक्ष्य त्वामृषिः पूर्वजन्मनि ॥ २०
समाकर्ण्य वचश्शिष्यैः पुण्डरीकस्ततोऽब्रवीत् । शैवस्त्वं वैष्णवानस्मान् ज्ञात्वैवं कृतवानसि ॥ २१
आरोप्य पापं यत्किञ्चित् द्वेषमात्रेण तापस । इति ब्रुवन्तं तं वीक्ष्य तापसः क्रोधविह्वलः ॥ २२
भगार्थं पापरक्तायामेतस्यां रक्तवान्यतः । भगचिह्नो भवाशु त्वं शिष्यैरेतैर्दुरात्मभिः ॥ २३
निन्द्यस्त्वं वैदिकं मार्गं कुशास्त्रासक्तमानसः । सहैभिर्ब्राह्मणैः पापैर्भवे भवपराङ्मुखः ॥ २४
आचार्यपत्नीगमनाद्दुरात्मानो द्विजाधमाः । भवन्तु पत्न्यो युष्माकं दुश्शीलास्त्वभिसारिकाः ॥ २५
शापित्वैवमृषिश्रेष्ठो वीक्ष्यैनां वटवृक्षगाम् । बलाद्रन्तुं यतोऽस्मांस्त्वं पश्यसीह दुराशिके ॥ २६
आसुरीभव शीघ्रं त्वं मद्वचोगौरवादिह । गूढासि मेषयूथे त्वं ततोऽप्यजमुखीभव ॥ २७
गच्छावरुह्य पापिष्ठे वृक्षादस्माद्यथेच्छया । शप्तमात्रे ऋषिवरे भीता त्वं वटवृक्षतः ॥ २८
अवरुह्य क्षणेनैव विनयेन तपोधनम् । प्रणम्योक्तवती वाचं वेपमानाश्रयश्रिका ॥ २९
भर्तारंमम कोपेन तच्छिष्यान्माञ्च तापस । शपित्वैतादृशं कर्म कृतवानसि निष्ठुरात् ॥ ३०
तथापि मे त्वयि ऋषौ कोपगन्धो न विद्यते । वर्तते प्रीतिरतुला रक्षैनां त्वमृषीश्वर ॥ ३१
येन केन प्रकारेण शरणागतवत्सल । इत्युक्त्वा प्रणनामैषा बहुवारं सुते भयात् ॥ ३२
ततो ऋषिवरस्तुष्टः कृपया वीक्ष्य तामिमाम् । त्वत्कृतानि दुराचारपंकानि क्षालितानिहि ॥ ३३
प्रकटीकरणव्याजाच्चान्यथा चेष्टितं मया । तद्भुक्त्वा कर्मशेषेण दैत्यजन्मनि निन्दिते ॥ ३४
स्वेच्छया स्वैरिणी सर्वान् पुरुषानतिमोहिता । रमित्वा प्राप्य मां काले कांश्चिद्रतिमोहिता ॥ ३५
कृत्वा सम्भोगमतुलमुत्पाद्य तनयावुभौ । महाशास्त्रगणस्पर्शाद्दग्ध्वा पापानि कृत्स्नशः ॥ ३६
श्रीपर्वतं नगश्रेष्ठं प्राप्य वैराग्यमुत्तमम् । ततः कालेन कैलासं गत्वा परमशोभनम् ॥ ३७
कृतगौरीसपर्या च मोक्षमेष्यस्यनुत्तमम् । इत्युवाच तपस्वी त्वां शिवभक्तवरस्सुते ॥ ३८
तथैव त्वं समुत्पन्ना दैत्यवंशे सुता मम । यथेच्छयेदृशं भोगं भुक्त्वा मदनमोहिता ॥ ३९
प्राप्तासि पर्वतश्रेष्ठं श्रीपर्वतमनुत्तमम् । तथैतत्कथितं तेऽद्य युष्मद्वृत्तं सुते मया ॥ ४०
इतः परं त्वं कैलासं प्राप्य गौरीसपर्यया । मोक्षमेष्यसि सन्देहो नास्त्यत्र त्वमिहात्मजे ॥ ४१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तमोऽध्यायः ॥

---

॥ अथ अष्टमोऽध्याय ॥

मन्त्रामुखीमातु मायाया पूर्वजन्म कथनम्॥

मन्त्रामुखी — श्रुत मदीय वृत्तान्त भवत्या सम्यगीरितम् । तवपूर्व यदायाध श्रोतुमिच्छा ममाधुना ॥ १
इति पुत्र्या वचश्श्रुत्वा माया प्राह गिरंपुत्र । शृणु वत्से पुरा पत्नी दित्याश्चयाह तपस्विन ॥ २
काश्यपस्यात्मजपुत्रा भूयासो मम दानवा । तान्सर्वानमरा युद्धे मारयामासुरुल्वणम् ॥ ३
ततस्सञ्जातदु खाह पुत्रशोकेन कर्शिता । श्रीशैल पर्वतश्रेष्ठमनुमागस्य मन्युना ॥ ४
हनिष्ये तान्सुरान्सर्वानुत्पाद्य तनयान् परान् । कृतसंकल्पचित्तैव पतित्वा पर्वतात् क्षितौ ॥ ५
प्राणांस्त्यक्त्वाऽसुरे वंशे जातासि ननु पुत्रिके । शूरपद्ममुखान्दैत्यान् काश्यपात्तपसा परात् ॥ ६
जनयित्वाऽमरान् सर्वान् पीडिताम्वीक्ष्य मत्सुतै । हतहत्यातदा त्वा च पूर्वजन्मनि सुन्दरीम् ॥ ७
वीक्ष्य अक्षतपूर्वा पुत्रीमजीजनमहो सुते । नगच्छामि पुनस्तस्य निकट पुत्रवाञ्छया ॥ ८
श्रीशैलेऽस्मिन् गिरिश्रेष्ठे शिवकैङ्कर्यकारिणी । कैलासं पर्वतश्रेष्ठमन्ते प्राप्य मुदान्विता ॥ ९
गौर्या परिचितिं कृत्वा मोक्षमेष्याम्यसंशयम् । श्रीशैलात्पर्वतश्रेष्ठात्पतित्वाह यदा सुते ॥ १०
त्यक्तप्राणा तदाऽस्य तमृषिर्दुं लब्धवानयम् । अथदिपना काश्यपस्तु दितिमन्या पुत्रस्त्यजाम् ॥ ११
विवाह्य त्यक्तमोहोऽयं वर्तते पुनरात्मजे । कालत्रयपरिज्ञान शुक्रस्य कृपया मम ॥ १२
अस्ति तत्प्रोक्तमधुना यथावदनुपूर्वशः । तदेतदजकन्धेपा मातुर्वाक्य यथाक्रमात् ॥ १३
समाकर्ण्याथ सन्तोषात्प्रणम्य जननीं तदा । श्रीपर्वत गिरिश्रेष्ठे समाज्ञा परमेशितुः ॥ १४
परिचर्यां विधायान्ते कैलास पर्वतोत्तमम् । अवाप्य तत्र श्रीगौर्यां परिचर्यां विधाय सा ॥
मोक्षमाप समाशाशु पुनरावृत्ति दुर्लभम् ॥ १५

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टमोऽध्याय ॥

---

॥ अथ नवमोऽध्याय ॥

विभूति महिमा निरूपणम्॥

ऋषय — यदुक्त भवता सूत पुराणार्थ विशारद । उपदेशमगस्त्याय कृतवानभिभूरिति ॥ १
किमस्योपदिदेशायमुमापुत्र कृपावलात् । तन्नोऽतिस्पष्टतामेत्र शृण्वतामद्य नो मुने ॥ २
सूतः — शृणुध्वमृषयस्सर्वे यूय पुण्यवता वरा । माहात्म्य भस्मनः पुण्य रुद्राक्षस्याथवा तथा ॥ ३
शिवनामोच्चारणस्य तथा शिवव्रतस्य च । शिवपुण्यस्य माहात्म्य द्रोहस्याकरण प्रभो ॥
(शिवद्रोहस्यपातकम्) ४
माहात्म्य शिवपूजायास्सर्वंभुक्ति समीरितम् । शिवनाम्ना सहस्र च शिवयोगस्य वैभवम् ॥ ५
शिवज्ञानस्य माहात्म्यमेतत् सर्वं द्विजोत्तमा । उपदिष्टमगस्त्याय स्कन्देनामित तेजसा ॥ ६
कथयिष्यामि तत्रोऽद्य यथावत्त्कृपावलात् । कस्यानुकस्योपचलत्सेदेवंस त्रिधामतम् ॥ ७
भस्मनात्सर्वपापघ्न (पापाना) ग्लस्णादपिशिवकरम् (शिवेशितु) । भस्मेति समाख्यात भुक्तिमुक्तिफलप्रदम् ॥
यद्दं धारयेद्भस्म मन्त्रित विधिवन्नर । कोटिशत्यस्य सिध्यन्ति नश्यन्ति दुरितान्यपि ॥ ९
यथा देवस्य माहात्म्य दुर्ज्ञेय पार्वतीपतेः । तथैव भस्मनः प्रोक्त वेदवेदाङ्गपारगे ॥ १०

सत्यं ज्ञानं दया श्रद्धा वह्निर्वायुर्जलं स्थलम् । व्योमादीनिच सर्वाणि भस्मान्येतानिवै द्विजाः ॥ ११
ब्रह्मविष्णुमुखैर्देवैर्ऋषिभिश्च तपोधनैः । ब्राह्मणैःक्षत्रियैर्वैश्यैश्शूद्रैरन्यैश्च संकरैः ॥ १२
स्त्रीभिश्च धार्यमेतद्वै भस्मास्यन्तं शिवप्रियम् । अष्टैश्वर्याणि सिध्यन्ति धारणादस्य मन्त्रतः ॥ १३
अत्रापि सिद्ध्यइशंभौ भक्तिः परमकारणे । सर्ववश्यकरञ्चैतत्सर्वं सौभाग्यदं परम् ॥ १४
भूतप्रेतपिशाचाश्च राक्षसा दुर्जनाः परे । भस्मदर्शनमात्रेण त्रस्ता धावन्ति दूरतः ॥ १५
तथापस्मारकुष्ठाद्या नश्यन्ति व्याधयः क्षणात् । धार्यं भस्म सदा सद्भिस्त्रिपुण्ड्रोद्धूळनात्मना ॥ १६
उद्धूळनं त्रिपुण्ड्रंच मनसापि न लंघयेत् । श्रुत्या विधीयते यस्मात्तत्यागी पतितो भवेत् ॥ १७
उद्धूळने त्रिपुण्ड्रेच तन्माहात्म्य कथासु च । येषाञ्च जायते श्रद्धा ते महापाप संयुताः ॥ १८
भस्मना सजलेनैव धारयेच्च त्रिपुण्ड्रकम् । उत्तमांगे ललाटे च गळे वक्षसि नासिके ॥ १९
उभयोः पार्श्वयोश्चैव भुजयोरुभयोस्तथा । बाहुमध्ये च करयोः पृष्ठे ककुदि भूसुराः ॥ २०
धृतं पञ्चदशस्थाने त्रिपुण्ड्रं येनकेनवा । स शिवस्सहरिर्ब्रह्मा स वन्द्योवापि पातकी ॥ २१
वर्णानामाश्रमाणाञ्च मन्त्रतोऽमन्त्रतोपि वा । त्रिपुण्ड्रोद्धूळनं प्रोक्तं जाबालैरादरेण च ॥ २२
उद्धूळनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन सादरम् । आमनन्ति मुनिश्रेष्ठा श्श्वेताश्वतरशाखिनः ॥ २३
उद्धूळनं त्रिपुण्ड्रं च सम्यगज्ञाननाशनम् । आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थिताः ॥ २४
तथाप्यज्ञान विच्छित्तिर्ज्ञानादेव तु केवलात् । अज्ञानस्य तु विज्ञानं बाधकं खलु नेतरात् ॥ २५
येन पाशुपतं सम्यग्धृतमाचरितं द्विजाः । तस्मात् ज्ञानं विजायेत घनाज्ञान निवारकम् ॥ २६
उद्धूळनं त्रिपुण्ड्रञ्च मुमुक्षुस्सम्यगाचरेत् । समागते पुरा कस्मिन् प्रळये माधवस्तदा ॥ २७
वटपत्रे स्वयं शिश्ये समुद्रजलमध्यगे । तदानीं भगवानीशस्तत्राजगाम स्वयम् ॥ २८
अङ्गुष्ठदघ्नो यस्यासीदम्भोधिस्सुमहानपि । तं दृष्ट्वा पुरुषश्रेष्ठं हरं तं माधवस्तदा ॥ २९
को भवानिति पप्रच्छ मोहाविष्ट निजान्तरः । तदा तस्मै ददौ भस्म पुरुषोऽयं महान् द्विजाः ॥ ३०
गृहीत्वा तद्धरिर्धृत्वा ललाटेऽभवयद्बहु । तदानीमात्तविज्ञानस्स्वात्मानं स्मृतवानयम् ॥ ३१
ददर्श च महादेवं चन्द्रार्धकृतशेखरम् । युवानं पुरुषश्रेष्ठं त्रिणेत्रं कालकन्धरम् ॥ ३२
तं दृष्ट्वा देवमीशानं समुत्थायाशु माधवः । प्रणम्य दण्डवद्भक्त्या पप्रच्छागमनं प्रभोः ॥ ३३

शिवः —

स्रष्टारं सर्वलोकानां स्वगुणप्रणतोऽस्म्यहम् । तवेयं मायी मयाध्यक्ष जनार्दन महाश्रया ॥ ३४
ममैव शक्तिस्त्वं विष्णो त्वत्तस्याज्ञनिरस्य च । एवमुक्त्वा विधायैनं पत्नीं सर्वेश्वरस्तदा ॥ ३५
रमयामास विश्वात्मा विश्वसंरक्षणोद्यमः । तदापतच्छिवस्याशु वीर्यं काञ्चनसन्निभम् ॥ ३६
तन्नाभिकमलाद्ब्रह्मा पञ्चास्योऽजनि भूसुराः । ससर्ज स प्रजास्सर्वास्सर्वेशस्याज्ञया प्रभुः ॥ ३७
सोऽहङ्कारवशात्पश्चाद्भैरवेणांबुजोद्भवः । निकृत्तैकशिरास्तस्माच्चतुर्मुख समाह्वयः ॥ ३८
भस्मधारणमात्रेण विष्णोरपि महीसुराः । विनष्टं हि घनाज्ञानं पुत्रोऽप्यासीच्चतुर्मुखः ॥ ३९
पुरा सर्वान् सुरान्विप्रान् वीरभद्रो महाबलः । सर्पासुरेण घोरेण पञ्चमेढ्रासुरेणच ॥ ४०
पापेनान्यसुरेणापि मारितान् क्रूरकर्मभिः । भस्मनोज्जीवयामास वीरोऽयं प्राणिनस् द्विजाः ॥ ४१
भस्मावकुण्ठिततनोः वामदेवमहामुनेः । भक्तेन भक्तमात्रेण पवनानामधीश्वरः ॥ ४२
अनेकजन्म संसिद्ध महापातककञ्चुकः । भस्यजद्ब्रह्मरक्षस्त्वं तथा मोक्षमवाप्तवान् ॥ ४३

द्राविडेषु द्विजः कश्चित् प्रथितः कुत्सिताशयः । सर्वस्त्रीनिरतः पापी सर्वत्राशी दुरात्मवान् ॥ ४४
मृतः कस्मिन् द्विजग्रामे कर्मणा स्वेन भूसुराः । आबध्य रज्जुं तत्पादे बहिर्निन्युर्जना इमम् ॥ ४५
तं पापं यमदूताश्च नरकं निन्युरञ्जसा । ललाटे तस्य बोर्द्धके वक्षस्यप्यग्रजन्मनः ॥ ४६
सारमेयस्समागत्य भक्षितुं तं द्विजाधमम् । चचार भस्मलिप्तात्मपादोऽयं ब्राह्मणोत्तमाः ॥
तावताऽयंद्विजश्शीघ्रं सद्गतिं प्राप्तवान् खलु ॥ ४७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे नवमोऽध्यायः ॥

---

॥ अथ दशमोऽध्यायः ॥

भुजबलाख्यराज्ञः विभूत्युपेक्षया कष्टप्राप्तिः ॥

अथान्यद्भस्ममाहात्म्यं प्रवक्ष्यामि द्विजोत्तमाः । शृणुध्वं सावधानेन यूयं सर्वे समाहिताः ॥ १
अस्ति वङ्गाधिपः कश्चित् राजा भुजबलाह्वयः । दानशौण्टस्सज्जनेष्टः प्रजापालनतत्परः ॥ २
स कदाचित्संक्रमणेरवेः पुण्यतिथौ नृपः । दातुं दानानि भूरीणि विप्रेभ्यो मतिमान् ददौ ॥ ३
तदा समागता विप्रा नानादेशनिवासिनः । सुशीलाख्यो द्विजश्रेष्ठो वैदर्भविषयाद्द्ययम् ॥ ४
समागतस्समाकर्ण्य तस्य दानानि भूसुराः । दृष्ट्वा तं ब्राह्मणश्रेष्ठं सर्वे विप्राः प्रणम्य ते ॥ ५
सुशीलोऽयं सदाचारस्स्वाध्यायनिरतस्तथा । सर्वशास्त्रार्थतत्त्वज्ञस्सर्वेश्वरमनास्सदा ॥ ६
अस्मै देयं द्विजेन्द्राय दानं प्रथमतो नृप । दत्वैतस्य धनं किञ्चिदक्षयं फलमश्नुते ॥ ७
इत्यूचुर्ब्राह्मणास्सर्वे राजानं वीक्ष्य ते तदा । स तेषां वचनं श्रुत्वा तथेत्येनं द्विजोत्तमम् ॥ ८
आजुहाव कृतोद्योगो राजा भुजबलो महान् । द्विजः — धार्यंभस्मत्वया राजंस्त्रिपुण्ड्रोद्धूळनात्मना ॥
अन्यथा तव दानानि निष्फलानि महान्त्यपि । अधृत्वा भस्म यत्किञ्चित्कृतं कर्म महीपते ॥ १०
निष्फलं तद्भवत्येव नात्र कार्या विचारणा । इति विप्रवचश्श्रुत्वा राजा द्रव्यमदेन सः ॥ ११
प्रोवाच सोऽवलेपेन ब्राह्मणं तं द्विजोत्तमाः । धार्यं भस्म मया विप्र त्वदर्थं केन हेतुना ॥ १२
अधृत्वा भस्म दानेषु किं शक्तिर्नास्तिवा मम । धृत्वा भस्म प्रदातव्यं नियमः कोऽयमीदृशः ॥ १३
इति ब्रुवन्तं भूपालं पुनः प्राह महीसुरः । यस्य भस्मनि भूपाल बुद्धिस्तद्धारणेऽप्रिया ॥ १४
न जायतेऽस्य पापस्य लक्ष्मीर्नश्यति च क्षणात् । दारिद्र्यंच भवेत्तस्य जायते व्याधयस्तथा ॥ १५
न्यूनान्यङ्गानि पापस्य भवेयुर्नात्रसंशयः । पुत्रादयोऽस्य नश्यन्ति शापकी च भवेदपि ॥ १६
तस्माद्धार्यं नृपश्रेष्ठ कर्मादौ भस्म पावनम् । प्रतिग्रहीतुस्तद्द्रव्यं वर्धते नेतरन्नृप ॥ १७
इति तस्य वचः श्रुत्वा विप्रस्य स महीपतिः । विहस्य वाचं प्रोवाच परिहासेन भूसुराः ॥ १८
पुण्यात्मनोऽपि मे विप्र कथं दारिद्र्यसंभवः । कथं पुत्रादिनाशोऽपि कथं देहेषु हीनता ॥ १९
दूरतो व्याधयस्तस्मात् यत्किञ्चित्प्रोच्यते त्वया । भवेयुरेते यदिवा तदा त्वां प्राप्य भूसुर ॥ २०
भस्मादायच ,धृत्वैतद्दुरितानि निवर्तये । इदानीं त्वं गृहाणाशु दानं मद्दत्ततो द्विज ॥ २१
इति तस्य वचश्श्रुत्वा सापहासं महीसुरः । उत्थाय मास्तु मे दानं तावकं भूप संप्रति ॥ २२
इत्युक्त्वा प्रययौ विप्रस्स्वं देशं ब्राह्मणोत्तमाः । श्रौतिस्म च तदा भूभृन्महिषीञ्चप्रता यत ॥ २३
एवं कतिपये काले याते सोऽयं महीपतिः । व्याधिना महता क्रान्तस्सस्थौ वेश्मनि केवलम् ॥ २४

महामारीप्रकोपेन मृता सेना तदा मम । शत्रुणोत्साटितस्तस्मान्नगरात्सदुरात्मवान् ॥ २५
भीतस्तत्र वनं प्राप भार्यया सह भीषणम् । तत्र जग्राह तद्भार्यां व्याघ्रः कश्चिन्महाबलः ॥ २६
भार्ययापि परित्यक्तस्तदाऽयं दीनमानसः । चचार केवलः पापी क्षुत्पिपासासमन्वितः ॥ २७
भिक्षाञ्च याचितुः कश्चिद्दत्तवान्नास्य पापिनः । यदा तदायं चौर्येण चकारोदरपोषणम् ॥ २८
एवं दिनेषु कतिषु नीतेष्वेतेन पापिना । कदाचिदेनं पापिष्ठं चोरयन्तं कचित् द्विजाः ॥ २९
दृष्ट्वा क्षणेन नगरपालकाऽऽबध्य रज्जुना । नीत्वा बहिः पुरस्यास्य पाणीपादौ च चिच्छिदुः ॥ ३०
क्षुत्पिपासाकुलोऽत्यन्तं पुनः कर्मवशेन सः । विदर्भाधिपतेः प्राप नगरं कुण्डिनं द्विजाः ॥ ३१
भिक्षावृत्त्यावसत्तत्र कृपणोऽत्यन्तमातुरः । एतस्मिन् समये विप्राः प्रिया याऽस्य दुरात्मनः ॥ ३२
गृहीता येन स व्याघ्रश्शार्दूलेन हतो मृतः । सापि प्राप महापापा पुरं तत्कर्मशेषतः ॥ ३३
छिन्ननासा चौर्यवशादियञ्च क्षुत्समाकुला । आधिव्याधिसमाक्रान्तौ कृमिक्लिन्नव्रणावुभौ ॥ ३४
क्रोशन्तौ देहि देहीति भिक्षां चेरतुरत्रतौ । परस्परानभिज्ञौ च परस्परमहाकृपौ ॥ ३५
सुशीलस्य गृहद्वारे कदाचित्प्रापतुर्द्विजाः । क्रोशन्तौ तौ सुशीलोऽयं दृष्ट्वा दीनमना भृशम् ॥ ३६
युवां कौ कस्य पापस्य भुञ्जेथे फलमीदृशम् । इत्युवाच द्विजश्रेष्ठो महापापाविमौ द्विजाः ॥ ३७
राजा—वङ्गाधिपोऽहं प्रथितो नाम्ना भुजबलाह्वयः । केनापि घोरपापेन दशामेतामवाप्तवान् ॥ ३८
इति तस्य वचः श्रुत्वा द्विजोऽत्याश्चर्यसंयुतः । कृत्वाङ्गुलिं नासिकायां वीक्ष्य सत्वरमुं द्विजाः ॥ ३९
जानातिवा भवानद्य किं मां दृष्टस्त्वया पुरा । इत्युवाच सुशीलोऽयं ब्राह्मणानामधीश्वरः ॥ ४०
राजा—न मे स्फुरति यत्किञ्चिद्दृष्टपूर्वमपि द्विज । क्षणे क्षणे मतिभ्रान्तिस्स्वामिन्नुज्जृम्भते मम ॥ ४१
द्विजः—धार्यं भस्म मया प्रोक्तं न श्रुतञ्च त्वया पुरा । दत्त्वा दानानि भूरीणि द्रव्ययौवनगर्विणा ॥ ४२
निमन्त्रितोऽप्यहं दानं नास्तित्युक्त्वाऽऽगमं पुनः । नूनं भस्मावमानेन प्राप्तेयं निष्ठुरा दशा ॥ ४३
श्रुत्वा सुशीलवचनं वृत्तं स्वप्नवदस्मरत् । प्रणनाम ततो राजा दण्डवत्पृथिवीतले ॥ ४४
आबद्धपाणिः प्रोवाच वचनं पृथिवीपतिः । समागतोऽस्मि विप्रेन्द्र दानं नाङ्गीकृतं त्वया ॥ ४५
मया च न धृतं भस्म भवदाज्ञा च लङ्घिता । दोषेणानेन विप्रेन्द्र घोरा प्राप्ता दशा ध्रुवम् ॥ ४६
तदद्य भवता स्वामिन्प्रशमनीयो महापदः । दत्वा भस्मेति तं विप्रं प्रणनाम महीपतिः ॥ ४७
ततस्सुशीलः पुण्यात्मा भस्मादात्पातिपावनम् । धृत्वैतत्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ४८
ऐश्वर्यं लभते शीघ्रं दारांश्चाप्यधिगच्छति । विपन्नविजयं तद्वद्व्याधिमोक्षं समाप्नुयात् ॥ ४९

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे दशमोऽध्यायः ॥

---

॥ अथ एकादशोऽध्यायः ॥

भुजबलराजः विभूतिधारणात् कष्टनिवृत्तिः ॥

इत्युक्त्वा प्रददौ तस्मै सुशीलोऽयं द्विजोत्तमः । तदादायव्यधौ भस्म स्वशरीरे सुपावनम् ॥ १
तत्क्षणात्संबभूवुस्तच्छिन्नपाण्यंघ्रयो द्विजाः । विनष्टा व्याधयस्सर्वे पूर्वाकारो बभूव हि ॥ २
ततस्स्वं रूपमालोक्य राजाश्चर्यसमन्वितः । प्रणम्य दण्डवद्भूमौ तस्थौ बद्धाञ्जलिःपुरः ॥ ३
तं दृष्ट्वाऽस्य वधूर्दिव्यनासाचाश्चर्यसंयुता । स्वभर्तारं विदित्वैनं भूपालं ब्राह्मणोत्तमाः ॥ ४

भार्याऽहं ते महीपाल व्याधिग्रस्तकलेवरा । समादाय महर्षेस्तद्भस्म देहि सुपावनम् ॥ ५
भूत्वैतस्वीतशोकाऽहं भवाम्यद्य न संशय । इति तस्या वचश्श्रुत्वा प्रत्युवाच नृपस्तु ताम् ॥ ६
दोषेण केन नासा ते विच्छिन्ना ब्रूहि त मम । पत्नी — निर्जगाम यदा दान मास्त्वित्युक्त्वा द्विजोत्तम ॥ ७
तदाऽहमबुध दौष्ट्याद्ध्य यौवन गर्विता । दुर्निमित्तमिद विप्र तद् गृहीत्वा प्रतिग्रहम् ॥ ८
गच्छेत्यवोच वचन परिहासान्नृपोत्तम् । दोषेण तेन नासा मे छिन्नेय सत्यमीरितम् ॥ ९
इति तस्या वचश्श्रुत्वा राजा निश्चित्य तत्त्वयम् । प्रणम्य दण्डवत्कृत्वा ब्राह्मणानामधीश्वरम् ॥ १०
प्रियैषा मम विप्रेन्द्र तेन दोषेण सत्यत । छिन्ननासा तदाऽभ्येना रक्ष त्व करुणानिधे ॥ ११
इति ब्रुवन्त त विप्रो मास्तु भीतिरिति ब्रुवन् । ददौ भस्म समादाय स्त्रियै देयमिति द्विजा ॥ १२
गृहीत्वा तन्नृपश्रेष्ठ प्रादात्पत्न्य सुपावनम् । सा समादाय भक्त्या तत् सर्वाङ्गेष्ववलेपयत् ॥ १३
तदानीं ववृधे नासा पूर्ववद्भस्म गौरवात् । व्याधयोऽपि गतास्सर्वे पूर्वरूपमगाद्दतम् ॥ १४

तत प्रहृष्टमनसौ दंपती तौ धृताञ्जली । प्रणम्य दण्डवत्कृत्वा स्तुत्वैन तस्थतुर्द्विजा ॥ १५
एतस्मिन् समये विप्रा विदर्भविषयाधिप । विचित्ररथनामाय श्रुत्वैतद्धृष्टमानस ॥ १६
समागत्य द्रुत विप्र प्रणम्य भुविदण्डवत् । स्वामि-मातुलपुत्रोऽय रक्षित पृथिवीपति ॥ १७
कुत्रवागत इत्येव विचारोऽभून्महान्मम । भवत्कृपावशाद्दृष्ट इत्युक्त्वाऽय महीपति ॥ १८
परिरभ्य ददौ तस्मै पटान् भूषणमुज्ज्वलम् । तद्भार्यायाश्च वसन समीचीनमदात् द्विजा ॥ १९
उपचारवचोऽप्युक्त्वा निनाय स्वगृह पुन । भोजयामास तौ तत्र दंपती भक्ष्यभोजनै ॥ २०
संभाष्य बहुधान्योन्य उपचार पुरस्सरम् । प्रेषयामास पश्चात्तन्नगर प्रति भूमिप ॥ २१
तुरगमान् बहून् भृत्यान् भटानपि विधाय च । तत प्रतस्थे नृपतिर्महत्या सेनया युत ॥ २२
सुशीलस्य गृह प्राप्य शिवैकमनसस्तदा । प्रणम्य दण्डवत्कृत्वा भार्यया सह भूमिप ॥ २३
भगवन् भवता सम्यगावामत्र सुरक्षितौ । भवत्कृपावशादद्य स्वदेश प्रास्थितोह्यहम् ॥ २४
यथा शत्रूञ्जयिष्यामि देहि भस्म तथा मम । इत्युक्त्वा विनयानम्र नृप वीक्ष्य द्विजोत्तमा ॥ २५
मास्तु भीतिर्नृप रिपोर्भस्मनोऽस्मान्महत्तरात् । इत्युक्त्वा भस्म संमन्त्र्य ददौ तस्मै द्विजोत्तम ॥ २६
तदादाय स्वके काले धृत्वा भस्म सुपावनम् । प्रणम्य त द्विजश्रेष्ठ लब्धानुज्ञ कृताञ्जलि ॥ २७
प्रतस्थे प्रीतिसंयुक्त सेनया च समन्वित । एतदागमन श्रुत्वा पापी कश्चन राक्षस ॥ २८
हत्वाऽस्य शत्रून् स्ववशे कृत्वा देश तदीयकम् । बाधयन्नित्यमत्यर्थं प्रजास्तस्या दुरात्मवान् ॥ २९
निर्ययौ नगरादेन हन्तुकाम क्रुधायुत । ततो दृष्ट्वा तु वदन तस्य भस्मावकुण्ठितम् ॥ ३०
मुक्त्वा रक्षोवपुर्घोर दिव्य वपुरवाप्तवान् । भुजबल — दृष्ट्वा त देवमाश्चर्यात्कोभवानिति भूपति

वृत्तान्त श्रोतुकामोऽय पप्रच्छ द्विजपुङ्गवा । प्रोच्यते नृपतिश्रेष्ठ वृत्तान्तमनुपूर्वश ॥ ३२
इत्युक्त्वा त समाहूय स्वय नगरमुत्सुकम् । तत्र वेश्म महच्चारु नानारत्नविचित्रितम् ॥ ३३
प्रापयित्वैनमारोप्य सिंहासनमनुत्तमम् । सुमुहूर्ते सुलग्ने च पट्टबन्धं च भस्मना ॥ ३४
विधाय गीतवाद्यैश्चाथमङ्गलनिस्वनै । परिवृत पौरजनै परित परया मुदा ॥ ३५
शृणु राजन् प्रवक्ष्यामि चरित्रमवधानत । पश्चिमाशाधिप पूर्वं वरुणोऽहं महीपते ॥ ३६
पीडितो राक्षसै पापैरसुरैरग्निमस्वगै । पुरन्दरस्य निकटमगाम भयविह्वल ॥ ३७

तत्र वृत्तान्तममुना पृष्टोऽहमवदं किल । बाधन्ते राक्षसाः पापा दैत्याश्च जगदप्रियाः ॥ ३८
न शक्यते ममावासो गन्तुं तैरावृतो यतः । इत्युक्त्वेन्द्रस्य निकटमवसं तेन भूपते ॥ ३९
तदानीमागतस्तत्र कुम्भभूस्तपसांनिधिः । तं दृष्ट्वा देवराजासौ प्रणम्यार्घ्यादिपूजया ॥ ४०
पूजयित्वाऽऽसने स्थाप्य स्वयं तस्थौ तदाज्ञया । तस्मिन्नवसरे तत्र नारदोऽप्यागतः किल ॥ ४१
स्थित्वायमासने रम्ये पूजितस्तेन भूपते । युवां शृणुत मद्वाक्यं भूलोके किञ्चिदद्भुतम् ॥ ४२
दृष्ट्वा समागतश्चेदं युवयोरहमन्तिकम् । काश्मीरविषयाधीशो वज्रदेहीति विश्रुतः ॥ ४३
राजासौ जितसामन्तस्सुधर्माख्यं पुरोहितम् । विद्याहीनं समुद्वीक्ष्य जगाद वचनं तदा ॥ ४४
किं नाभ्यस्ता त्वया विद्या ब्राह्मणानामलंक्रिया । अनक्षरमुखं भाति श्मशानसदृशं तव ॥ ४५
इति भूपवचः श्रुत्वा पुनः प्राह पुरोहितः । अभ्यस्तापि मया विद्या केन दोषेण वा मम ॥ ४६
नायाति तस्माद्गोविन्दं समाराध्य जगत्प्रभुम् । प्राप्नुयामि ध्रुवं विद्यामित्युक्त्वा स महीसुरः ॥ ४७
आराधयामास हरिं वेदमन्त्रैरनेकधा । ततः प्रसन्नः प्रददौ विद्यां तस्मै हरिस्स्वयम् ॥ ४८
अन्तर्दधे पुनः क्षिप्राद्धरिर्दत्वा वरं मुदा । लब्धविद्यस्तदैवायं सुधर्मः प्रीतिसंयुतः ॥ ४९
जगाम भूपनिकटं सर्वविद्वज्जनालयम् । राज्ञे निवेदयामास स्ववरप्राप्तिमादरात् ॥ ५०
ततस्तुष्टिमवापायं वज्रदेही महीपतिः । ब्राह्मणान्मेळयित्वाथ चक्रे यागं सुशोभनम् ॥ ५१
चक्रे दानानि भूरीणि विद्वद्भ्यः परयामुदा । तदा सुधर्मस्तर्कोक्त्या खंडयामास पण्डितान् ॥ ५२
नास्य कश्चित्पुरो विद्वानुत्तरं दातुमीश्वरः । यदा तदायं पारुष्यात्पण्डितानवमानयत् ॥ ५३
तदा चतुर्मुखस्तत्र सर्वलोकपितामहः । वृद्धब्राह्मणवेषेण समुत्थायाब्रवीद्वचः ॥ ५४
विद्या हि विनयोपेता त्रिषु लोकेषु शस्यते । सा चेदविनयोपेता गर्ह्यते सकलैर्जनैः ॥ ५५
तस्मात्त्वं पण्डितोऽप्येतान्मावमंस्था हि पण्डितान् । न सोऽस्ति कश्चित्पुरुषो विद्वानाजन्मतः क्षितौ ॥ ५६
इति तस्य वचश्श्रुत्वा कोपेनायं वचोऽब्रवीत् । तिष्ठतूष्णीं न कर्तव्यं पाण्डित्यं भवताधुना ॥ ५७
विद्यया परिहीना ये विवाहस्ते मूढबुद्धयः । सभ्या एते न संदेहस्तस्मात्त्वं मूढचेतनः ॥ ५८
किं जानासि वृथा मानी स्थविरः खलु केवलम् । इति निन्दावचश्श्रुत्वा विप्रवेषमसौ त्यजन् ॥ ५९
चतुर्भिर्वदनैस्तत्र लक्षितः कोपविह्वलः । बुद्धिरुक्ता मया स्वान्त तव पण्डित मानिनः ॥ ६०
न जानाति भवान्किञ्चिद्विद्यालेशमदेन हि । मां च गर्हयति स्वान्ते मुक्त्वा मूढेन चेतसा ॥ ६१
तस्मात्तवास्तु जिह्वेयं न स्पन्दयतु पापिनः । शपित्वैवमजः क्षिप्रस्तत्रैवान्तरधीयत ॥ ६२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकादशोऽध्यायः ॥

---

॥ अथ द्वादशोऽध्यायः ॥

श्री दधीचिवक्त्र भस्मना ब्राह्मणयोः कष्ट निवृत्तिः ॥

तदैव स्तंभिता जिह्वा न चचालास्य पापिनः । केवलं मूकवत्तस्थे तत्रैवास्थानमण्टपे ॥ १
दृष्ट्वैतदद्भुतं राजा किमेतदिति चिन्तयन् । विचारमाप नितरां तदानीं वृत्रहन्नृपे ॥ २
पुनर्विंशुद्धमनुजं सुधर्मस्य महीपतिः । इतःपरं किं कर्तव्यं विशुद्ध मतिमान् खलु ॥ ३

इति राजवचश्श्रुत्वा जगादवचनं द्विजः । माराध्य देवमधुना पुण्डरीकाक्षमादरात् ॥ ४
प्रापयामि यथापूर्वं वाचमव्याहतं क्वचित् । इत्युक्त्वा पूजयामास भ्राता विष्णुमनन्यधीः ॥ ५
तदाऽऽविरासीत्तस्याशु पुण्डरीकेक्षणः प्रियात् । प्रसीद भगवन्विष्णो भक्तानामभयप्रद ॥ ६
शापात्समुद्धराश्वेनं भवद्भक्तमजस्य भो । विशुद्धस्य वचश्श्रुत्वा प्राह विष्णुर्जगन्मयः ॥ ७
मत्तो यत्प्रसादेन लब्ध्वा विद्यामुना पुरा । युक्तं किं विदुषश्शिशान् दूषितुं पक्षोक्तिभिः ॥ ८
विनयेन समोपेता विद्या सर्वत्र पूज्यते । विदुषामवमानेन शशापाजः कुधा भृशम् ॥ ९
तस्मादेनं समुद्धर्तुं शापादस्मान्नशक्यते । इति विष्णोर्वचश्श्रुत्वा पुनर्वाचमुवाच सः ॥ १०
दासाः खलु वयं स्वामिंस्तव लोकगुरोस्ततः । क्षमस्व मन्तुमेनं त्वं शापादुद्धर शीघ्रतः ॥ ११
इति वाक्यं निशम्यास्य विष्णुस्सर्वजगन्मयः । पुनर्विद्या प्रवृत्ता चेद्विदुषो दूषयिष्यति ॥ १२
मालोच्य मनसाचैवं जगादवचनं तदा । किं वृथा क्रियते यत्नस्त्वयाऽशक्येऽत्र कर्मणि ॥ १३
शापान्मोचयितुं शक्तिर्नास्ति मे ब्रह्मणोऽधुना । इति ब्रुवन्तं गोविन्दं रुषा वीक्ष्याब्रवीद्वचः ॥ १४
त्रिशंकुमाश्रितं पूर्वं विश्वामित्रोऽपि तापसः । त्रिदिवं प्रेषयामास स्वतपोगौरवादयम् ॥ १५
न ते दयाऽस्ति तन्मात्रं स्वाश्रिते पुरुषोत्तम । इति तस्य वचः क्रूरं श्रुत्वा कोपाकुलो हरिः ॥ १६
विनिन्दयसि मां मोहाद्यस्मात् त्वं मामसमाप्ततः । परिक्षीणो भवेत्युक्त्वा तिरोधानमथाश्रयत् ॥ १७
विशुद्धं विष्णुना शप्तं विज्ञाय स महीपतिः । विचारयाय चात्यर्थं किमेतदिति चात्मनि ॥ १८
विशुद्धोऽपि क्रमेणायं क्षयमापाद्विप्रपाणिषु । शिरः प्रक्षीणकाले तु राजा केदारमीश्वरम् ॥ १९
महोत्सवे महासेनस्सेवितुं प्राप भक्तितः । सुधर्मं तं विशुद्धं च समाहूय महेश्वरम् ॥ २०
दृष्ट्वा प्रणम्य भक्त्याशु स्तुत्वा स्तोत्रैरनेकशः । गोपुरद्वारमागत्य तस्थे ताभ्यां महीपतिः ॥ २१
तदानीमृषयः केचित्प्रणम्य परमेश्वरम् । केदारनाथं सन्तोषाभिवृत्ताः प्रापुरत्र ते ॥ २२
प्रणम्य तानथ भूपालः पापयुक्तौ प्रदर्शयन् । प्रार्थयामास युष्माभिर्मोचनीयाविति द्विजौ ॥ २३
ब्रह्मविष्ण्वोस्तु विज्ञाय शापं प्राप्ताविमौ द्विजौ । शापान्मोचयितुं चैतावशक्ताः पृथिवीपतिम् ॥ २४
आशीर्भिर्योजयित्वाशु स्वं स्व स्थानमवापिरे । मोचकः कश्चिदस्तीति निवसन्पृथिवीपतिः ॥ २५
परिश्रान्तिमवाप्यायं यदा दुःखितमानसः । तदानीमागतस्तत्र दधीचिस्सह शिष्यकैः ॥ २६
केदारनाथं देवेशं संप्रणम्याथ भक्तितः । तं दृष्ट्वा तपतां श्रेष्ठं राजा परमया मुदा ॥ २७
प्रणम्य प्रश्रयानम्रः प्रार्थयामास भक्तितः । रक्ष रक्ष द्विजावेतौ ब्रह्मविष्ण्वोर्महाकृपे ॥ २८
शापं प्राप्तौ स्वकीयेन दोषेणास्मत्पुरोहितौ । इति राज्ञो वचश्श्रुत्वा ऋषिः परमया मुदा ॥ २९
भस्मादाय ददौ पूतं भस्मकं पापसन्ततेः । तदादाय नृपश्रेष्ठो क्षेपयामास विप्रयोः ॥ ३०
तदानीं ववृधे तस्य विशुद्धस्य वपुस्ततम् । सुधर्मस्यापि रसना समजायत पूर्ववत् ॥ ३१
तदेतदद्भुतं दृष्ट्वा सर्वेऽप्याश्चर्यमापयुः । भस्मावलेपनाच्छापान्मुक्तावेतौ द्विजावुभौ ॥ ३२
ब्रह्मविष्ण्वोस्ततो भस्ममहिमा केन गण्यते । वचदेही महीपालस्तदाश्चर्यं समन्वितः ॥ ३३
दधीचिं तपतां श्रेष्ठं प्रणनाम महीतले । तावुभौ भ्रातरौ विप्रौ प्रणम्य ऋषिसत्तमम् ॥ ३४
भवता रक्षितावावां माहात्म्याद्भस्मनो मुने । ज्ञायते भवता भस्म महिमा शङ्करेण वा ॥ ३५
इत्युक्त्वा दण्डवद्भूमौ नमन्तौ तंच भूमिपम् । आशीर्भिर्योजयित्वाऽर्ध्यं स्वाश्रमं प्रययौ मुदा ॥ ३६

तदाप्रभृति तौ विप्रौ भस्मोद्धूलितविग्रहौ । बभूवतुः परं श्रेयः कुंभोद्भवपुरन्दरौ ॥ ३७
नारदस्य वचश्श्रुत्वा तावुभौ ऋषिदेवपौ । आश्चर्याविष्टमनसौ भस्ममाहात्म्यमद्भुतम् ॥ ३८
भावयन्तौ मिथस्तुष्टौ तस्थतुः परया मुदा । तदाऽहं तत्र विमना यत्किञ्चिन्मनसा स्मरन् ॥ ३९
तिष्ठत्ययं कथामार्गे पुरन्दर सुरेश्वर । बाधन्ते राक्षसा मध्यं समुद्रस्य समाश्रिताः ॥ ४०
दैत्यैस्तो विनाशाय तेषां यत्नं कुरुष्व भो । अगादेवं तदाऽगस्त्यः कोपाकुलितमानसः ॥ ४१
किमुच्यते त्वया भ्रान्त प्रतिपक्ष्यावयोर्वचः । माहात्म्ये वर्ण्यमाने तु भस्मनः पापहारिणः ॥ ४२
तिष्ठत्ययं कथामार्गे इत्यश्लाघ्यतया यतः । तस्माद्दुरात्मन सहसा राक्षसो भवदोपतः ॥ ४३
शपितश्चैवमगस्त्योऽयं समाहूय पुरन्दरम् । माहात्म्य श्रवणेनात्र भस्मनस्तर्जितेन सः ॥ ४४
प्रयासो राक्षसान्हन्तुं न कश्चिन्मघवन्निति । समुद्रतीरमासाद्य भस्मवाचाभिमन्त्रितम् ॥ ४५
धृत्वा ललाटे करयोरालोड्य स महानृषिः । आजुहावांबुधिं पाणिं प्रसार्य स महाऋषिः ॥ ४६
तदानीमागतोऽम्भोधिः करे नीहारबिन्दुवत् । प्राशयामास तं ध्यात्वा महादेवमृषीश्वरः ॥ ४७
दंष्ट्रेन्द्रासुरान् पापान्राक्षसानपि दुर्जनान् । एवमुक्त्वा ददौ भस्म सुरेशाय घटोद्भवः ॥ ४८
तदावाप्यामरेशोऽपि धृत्वा सर्वशरीरके । राक्षसानसुरान्सर्वान् जघानायं महीपते ॥ ४९
ततः पयोधिमुक्त्वाऽयं प्रतस्थे स्वाश्रमाय च । तदानीं मघवाञ्छीघ्रं मामाहूय महीपते ॥ ५०
ऋषेरस्याशमासाद्य सान्त्वयन्नब्रवीद्वचः । न किञ्चिदपि जानाति मूढोऽयं तपतांवर ॥ ५१
रक्षैनं कृपया स्वामिन्नित्युक्त्वा प्रणनाम हि । प्रसन्नः प्राह वचनमगस्त्यो वीक्ष्य मामपि ॥ ५२
भविष्यति महीपालः कश्चिद्भुजबलाह्वयः । दृष्ट्वाऽस्य भस्मनिटिले रक्षोवपुरिदं द्रुतम् ॥ ५३
त्यक्ष्यत्ययं शरीरं स्वं समेष्यति यथा पुरा । पश्चिमाशामनुप्राप्य पालयिष्यति च भुवम् ॥ ५४
इत्युक्त्वा प्रययौ शीघ्रं स्वाश्रमं प्रति तापसः । तथैवाहं समागत्य न्यवसं पत्तने स्वके ॥ ५५
रक्षोवपुरनुप्राप्य घोरमत्यन्त गर्हितम् । दृष्ट्वा त्वन्निटिले भस्म प्राप्तवान्मामकं वपुः ॥ ५६
इत्युक्त्वा स्वभटानाशु सस्मार वरुणात्तदा । तदानीमागतास्सर्वे भटास्तस्य महाबलाः ॥ ५७
तैरयं स्वदिशं प्राप पश्चिमां तुष्टमानसः । स्वपदं प्राप तरसा भस्मसन्दर्शनात् द्विजाः ॥ ५८
श्रुत्वा चरित्रमस्याशु राजा भुजबलस्तराम् । अत्यन्ताश्चर्यसंयुक्तो भस्मन्यासक्तमानसः ॥ ५९
भस्मावलिप्तसर्वाङ्गो भस्मशय्यारतस्सदा । पुत्रमित्रकलत्रैश्च भुक्त्वा भोगान्यथेप्सितान् ॥ ६०
कैलासं प्राप देहान्ते मुदा परमया द्विजाः । य एतद्भस्ममाहात्म्यं शृणुयात्सावधानतः ॥ ६१
श्रावयेद्वा पठेद्वापि स याति परमां गतिम् । पुत्रकामो लभेत्पुत्रं धनकामो लभेद्धनम् ॥ ६२
विद्याकामः परां विद्यां मोक्षार्थी मोक्षमाप्नुयात् । स्वर्णस्तेय सुरापान ब्रह्महत्यादि पातकैः ॥ ६३
मुच्यते नात्र सन्देहो नियमाच्छ्रवणात् द्विजाः । बहुनोक्तेन किं विप्रा शृणुध्वं भाषितांतराः ॥ ६४
ब्रह्महत्यादिपापानां प्रायश्चित्तमिदं स्मृतम् । सर्वोपनिषदां सारं साक्षात्सर्वेश्वरात्मकम् ॥
कृतार्था यूयमधुना वेदवेदाङ्गकोविदाः ॥ ६५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्वादशोऽध्यायः ॥

---

॥ अथ त्रयोदशोऽध्यायः ॥

श्री रुद्राक्षधारणात् मर्कट कुक्कुटयोः राजमन्त्रिकुले जनिः ॥

अथ रुद्राक्षमाहात्म्यं वर्णयामि द्विजोत्तमाः । सर्वाघौघहरं पुण्यं पठतां शृण्वतामपि ॥ १
भक्तिहीनोऽथवा भक्तो मूर्खो मूर्खतरोऽपि वा । रुद्राक्षं धारयेद्यस्तु मुच्यते पातकैरयम् ॥ २
महाव्रतमिदं प्राहुर्मुनय स्तत्वदर्शिनः । रुद्राक्षधारणात्पुण्य कैवल्य सदृशं भवेत् ॥ ३
सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः । सुरास्सर्वे नमन्त्येनं यथारुद्रस्तथैव सः ॥ ४
अभावे तु सहस्रस्य बाह्वोष्षोडश षोडश । एक शिखायां करयोर्द्वादश द्वादश द्वयोः ॥ ५
द्वात्रिंशत्कण्ठदेशेतु प्रत्येकं कर्णयोश्च षट् । धारयेद्यस्तु रुद्राक्षान्रुद्रवत्पूज्यते हि सः ॥ ६
मुक्ताप्रवालस्फटिकरौप्यवैडूर्य काञ्चनैः । धारयेद्यस्तु रुद्राक्षान् स रुद्रो नात्र संशयः ॥ ७
केवल वापि रुद्राक्षान्रुद्रमुद्रां बिभर्ति यः । तं न स्पृशन्ति पापानि तमांसीव विभावसुम् ॥ ८
रुद्राक्षमालया जप्तो मन्त्रोऽनन्तफलप्रदः । अरुद्राक्षजपः पुंसां तावन्मात्रफलप्रदः ॥ ९
यस्याङ्गे नास्ति रुद्राक्ष एकोऽपि बहुपुण्यदः । तस्य जन्मनिरर्थं स्यात्त्रिपुण्ड्ररहितं यथा ॥ १०
मूर्ध्निविन्यस्य रुद्राक्षं यः स्नाति मतिमान्नरः । गङ्गास्नानफलं तस्य जायते नात्र संशयः ॥ ११
केवलं वापि रुद्राक्षान्रुद्रमुद्रां बिभर्ति यः । तं न स्पृशन्ति पापानि बहुजन्मोद्भवानि च ॥ १२
पूजयेद्यस्तु रुद्राक्षं मुक्त्वा तोयाभिषेचनम् । यत्फलं लिङ्गपूजायां तदेवाप्नोति निश्चितम् ॥ १३
एकाननाः पञ्चमुखा स्तथैकादशाननाः । चतुर्दशमुखाः केचिद्रुद्राक्षा लोकपूजिताः ॥ १४
भक्त्यैतान्पूजयेन्मर्त्यो दरिद्रोऽपि श्रियं लभेत् । शृणुध्वमवधानेन पुण्याख्यानानि भूसुराः ॥ १५
नन्दिग्रामे पुरा काचिन्महानन्देति विश्रुता । बभूव वारवनिता सर्वावयवसुन्दरी ॥ १६
छत्रं पूर्णेन्दु सदृशं यानं स्वर्णविराजितम् । चामराणि सुदण्डानि पादुके च हिरण्मये । १७
विचित्राण्यम्बराण्यस्याश्शय्याश्चन्द्रप्रभानिभाः । गावो महिष्यश्शतशो दासाश्च बहुसेवकाः ॥ १८
गन्ध कुङ्कुम कर्पूर कस्तूरी लेपवस्तुकाः । भूषणानि वराग्र्याणि कोटिसंख्याधिकं धनम् ॥ १९
शिवपूजारता नित्यं सत्यधर्म परायणा । महाशिवकथासक्ता शिवनाम जपोत्सुका ॥ २०
शिवभक्तान् द्विजान् दृष्ट्वा प्रणमन्ती सदामुदा । विनोद हेतोरप्येषा नाट्यमण्डप मध्यगम् ॥ २१
रुद्राक्षभूषितं चैकं मर्कटं चैव कुक्कुटम् । करतालैश्च गीतैश्च सदा नर्तयति स्वयम् ॥ २२
पुरश्च विहसत्पुंश्चसखीभिः परिवारिता । रुद्राक्षैः कृतकेयूर कर्णाभरण कुण्डलः ॥ २३
मर्कटश्शिक्षया तस्याः परं नृत्यति बालवत् । शिखाग्रे बद्धरुद्राक्षः कुक्कुटः कपिनासह ॥ २४
चिरं नृत्यति नृत्यज्ञः पश्यतां चित्तमावहन् । कालेन निधनं प्राप्ताविमौ मर्कट कुक्कुटौ ॥ २५
भद्र सेनाख्य नृपतेः काश्मीराधिपवेश्मनि । मर्कटस्तनयो नाम्ना सुधर्मस्समभूदिह ॥ २६
कुक्कुटस्तदमात्यस्य तारकाख्यसुतोऽभवत् । तावुभौ परमस्निग्धौ कुमारौ रूपसुन्दरौ ॥ २७
विद्याभ्यासरतौ बालौ सहक्रीडां प्रचक्रतुः । तावुभौ सर्वगात्रेषु रुद्राक्षकृतभूषणौ ॥ २८
हारकेयूर मकुटकुण्डलादि विभूषणम् । हेमरत्नमय मुक्त्वा रुद्राक्ष दधतुस्तौ ॥ २९
रुद्राक्षमालिनौ नित्यं रुद्राक्ष वरकङ्कणौ । रुद्राक्षकण्ठाभरणौ सदा रुद्राक्षकुण्डलौ ॥ ३०

कुले महति सञ्जातौ तौ भुक्त्वा भोगमीप्सितम् । पूर्वाभ्यासेन रुद्राक्षे श्रद्धाभक्ति समन्वितौ ॥
कालेन शाम्भव प्राप्तौ पद परमशोभनम् ॥ ३१

इति श्री स्कान्दे महापुराणे शङ्करसंहिताया शिवरहस्यखण्डे
उपदेशकाण्डे त्रयोदशोऽध्याय ॥

---

॥ अथ चतुर्दशोऽध्याय ॥

चित्रादाविर्भूतेन विष्णुना रुद्राक्ष महिमानुवर्णनम् ॥

पुरा पुष्करदेशस्य राजासीत्सौम्यनामवान् । सदा दुर्मार्गे निरतो नित्य वेश्यारतिप्रिय ॥ १
तस्य भार्या वसुमती रूपयौवनशालिनी । राज्ञो वेश्याभिगमन स्वात्मन्यरतिमीक्ष्य सा ॥ २
दु खाक्रान्तेन मनसा चिन्तामाप निरन्तरम् । भार्या पुरोहितस्येत्य ततस्तस्यमताह्वयाम् ॥ ३
विज्ञाप्य राज्ञो दुश्चेष्टा निजदु खस्य कारणम् । त्वय्यस्मिन्नभिरतिस्तस्य केनया हेतुना भवेत् ॥ ४
इति पृच्छतीमेना सा पुन प्रत्यभाषत । रुद्राक्षधारण भद्रे सर्ववश्यकर परम् ॥ ५
सर्वपापहर नृणा सर्वव्याधिनिकृन्तनम् । भूतप्रेतपिशाचाद्या न च हिंसन्तित नरम् ॥ ६
न च दशन्ति सर्पाश्च धार्यते यै न वा यथा । इत्युक्त्वैक ददौ तस्या रुद्राक्ष सा सुपावनम् । ७
सा तदादाय विश्वासात्कण्ठदेशे बबन्ध हि । तस्यामासक्तहृदयस्तद्राशौ स महीपति ॥ ८
प्रविश्य भवन तस्यास्तया प्रेम्णेऽति मोहित । एवमेव दिवारात्र क्रीडयामास ता नृप । ९
तदा विचारकाभावात्सेना तस्य महीपते । इतस्ततस्तु दुद्राव मुक्त्वैत मदनातुरम् । १०
स पल्लवसहसा कश्चिद्विरोधाय पुर नृप । चतुरङ्गबलैस्साक कृतकोलाहलारव ॥ ११
श्रुत्वैतत्स महीपालस्सैनया चावशिष्टया । प्रत्यग्रहीत्समायान्त कृतकोलाहलारव ॥ १२
राज्ञोऽस्य सेना सा शीघ्राद्दुद्रावेतस्ततस्तराम् । एकाकी प्राप नगर राजासावतिधावनात् ॥ १३
प्राप्याशु भवन स्वस्य पत्न्यै सर्व विबोध्य च । तस्याश्चाशाविनिर्मुक्त स्वराज्ये दु खितान्तर ॥ १४
तदाऽस्य महिषी प्राह राजान वीक्ष्य दु खितम् । जयो भविष्यति क्षिप्र धृते रुद्राक्षभूषणे ॥ १५
अस्मिन्नर्थे न सन्देह कर्तव्यो भवता प्रभो । श्रोतव्यस्ते पुराणेषु कुशलोऽय पुरोहित ॥ १६
इति तस्या वचश्श्रुत्वा समाहूय पुरोहितम् । श्रुत्वा रुद्राक्षमाहात्म्य सर्व दु ख निवारकम् ॥ १७
बभार स महीपालो रुद्राक्षाणा सहस्रकम् । वसुमत्यपि तद्भार्या दधौ तावत्सुपावनम् ॥ १८
तत प्रतस्थे युद्धाय सन्नद्धोऽय महीपति । नियोज्य पत्नीं सारथ्ये सेना स्वस्य यतोनहि ॥ १९
प्रविश्य तान् रिपून्हत्वा दध्मौ शङ्ख महारवम् । पश्चाऽस्य देश स्ववशे कृत्वा प्राप पुरस्वकम् ॥ २०
तत्र स्वभवन प्राप्य भार्यया सह भूमिप । माहात्म्य नितरामस्य वर्णयन् परयामुदा ॥ २१
स्वदेशस्थान् जनान् सर्वान् चक्रे रुद्राक्षधारिण । तस्यास्ता सुकुमारौ द्वौ कुमारौ सर्वलक्षणौ ॥ २२
तत्रैकोऽति रथाश्वोऽस्य स्मृतश्चविरथारव्यया । बभूवतस्तथा कन्ये सर्वलक्षण सयुते ॥ २३
आद्या सर्वकलाख्या स्मृता शिवाङ्गनाख्यया । एतयोरपि रुद्राक्ष बबन्धाथ महीपति ॥ २४
ब्रह्मनाथस्य तनुज कमलाक्षाह्वयो युवा । वसन् करळदेशेऽस्य विवाहाय कुमारिकाम् ॥ २५
ज्येष्ठा सर्वकलाख्या ता राज्ञोक्तेनैव धर्मत । तद्राशौ भवनकस्मित्तावुभौ दपती युतौ ॥ २६
तदानी कमलाक्षोऽस्य भूषणानि ग्रिय करे । दत्वा स्वीयानि तस्याश्च पेटिकाया विधाय स ॥ २७
सयोगायाह्वयामास ता भार्या मदनातुर । न धार्यते त्वया पूत रुद्राक्ष वरभूषणम् ॥ २८

तन्मया सह सङ्गस्ते न युक्तः खलु सर्वदा । इति भार्यावचश्श्रुत्वा कमलाक्षो वचोऽब्रवीत् ॥ २९
धार्यते भूषणं दिव्यं नानारत्न विचित्रितम् । तस्मादस्य किमाधिक्यं रुद्राक्षस्य वरानने ॥ ३०
इति तस्य वचः श्रुत्वा भार्या वचनमब्रवीत् । नधार्यते महामोहाद्रुद्राक्षं वरभूषणम् ॥ ३१
महापातक शेषेण दृशोऽयं न हि संशयः । न तेन सह वासोवा संयोगोपिहि युज्यते ॥ ३२
अस्मिन्नर्थे पुराणानि प्रमाणानि न संशयः । अथवा तव विश्वासः कस्मिन्वास्ति नरोत्तमे ॥ ३३
श्रोतव्यो मत्पुरस्सोऽयं सर्वशास्त्रार्थ कोविदः । इति भार्या वचश्श्रुत्वा राजा प्राह पुनर्वचः ॥ ३४
इममर्थं यदिब्रूयात्संमतो मम पण्डितः । भविष्यामि तदा भार्या तवाहं पुरुषोऽपि सन् ॥ ३५
भविष्यसि त्वं पुरुषस्सत्यमुक्तं वरानने । लीलयैवं वचः प्राह भार्या वीक्ष्यायमग्रतः ॥ ३६
तस्य तद्वचनं श्रुत्वा तथेत्यङ्गीचकार सा । तस्यां रात्र्यां व्यतीतायां दंपती तौ समुत्थितौ ॥ ३७
कल्याणमण्टपं प्राप्तौ सर्वाभरणभूषितौ । तदानीमागतास्तत्र ब्राह्मणः केचनोत्तमाः ॥ ३८
द्रष्टुं कल्याणमनयोर्भूपालाश्च समागताः । समागतानियं वीक्ष्य भर्तारमवदत्सुधीः ॥ ३९
संमतस्तव कोवास्या वेषु विप्रेषु भूमिपः । रुद्राक्षस्य वरिष्ठत्वं प्रष्टुं तद्वक्तुमप्यहो ॥ ४०
इति तस्या वचश्श्रुत्वा स्मितपूर्वमभाषत । पतिः — कल्याणमण्टपे ह्यस्मिन् शेषशायी जनार्दनः ॥ ४१
विश्वरूपी चित्रकुड्ये वर्तितिष्ठति वरानने । यद्येषोक्तं यदि तदा त्वयोक्तं तथा भवेत् ॥ ४२
उत्थाय तरसा स्थित्वा बद्धाञ्जलि पुटेन वै । इति भर्तुर्वचश्श्रुत्वा तथेत्युक्त्वा पुनश्च सा ॥ ४३
बद्धाञ्जलिपुटा विष्णु विश्वरूपिणमाह हि । अस्ति चेन्महिमा विष्णो रुद्राक्षस्याघहारिणः ॥ ४४
रुद्राक्षधारिणां पाप कृतं पुण्यफलप्रदम् । कृतं च पुण्य पापाय येनारुद्राक्षधारिणा ॥ ४५
अयमर्थो यदि हरे सत्यो वेदान्त संमतः । सर्वा विबुद्धस्मर्यत्र विश्रुतस्तव संमतः ॥ ४६
तथा वदाधुना शीघ्रमुत्थायास्माद्गृहाद्गतः । स्थित्वा सुखासनं स्वामिन् यथातथ्यं शिवाज्ञया ॥ ४७
इत्युक्तमात्रेण हरिः चित्ररूपी भयान्वितः । सत्यं सत्यं त्वया प्रोक्तं सर्ववेदान्तसंमतम् ॥ ४८
माहात्म्यमस्य देवेशः केवल वेद शङ्करः । जातेन यत्र कुत्रापि जातौ मर्त्येन शोभने ॥ ४९
धार्यते पावनं स्वाङ्गे रुद्राक्षं वरभूषणम् । स एव धन्यः पूज्यश्च विश्वेऽहं तस्यसेवनः ॥ ५०
बहुनोक्तेन किं साध्वि सर्वधार्यमिदं ध्रुवम् । इत्युक्त्वा वासुदेवोऽयं पुनश्चित्रस्थो यथा पुरा ॥ ५१
तदेतदद्भुतं दृष्ट्वा सर्वे तत्र जना स्थिताः । आश्चर्यमापुरत्यर्थं तस्यां विश्वासमाययुः ॥ ५२
कमलाक्षोऽपि राजायमाश्चर्येण समन्वितः । विचारमाप चात्यर्थं स्मृत्वा स्ववचनं हृदि ॥ ५३
तदानीं तं समावृत्य तस्या भृत्यवधूजनाः । राजंस्त्वमधुना शीघ्रं मुक्त्वा पुरुषलक्षणम् ॥ ५४
स्त्रीचिह्नैर्वस्त्रभूषाद्यैर्भव सवचनं स्मरन् । परिहासवचः श्रुत्वा नृपोऽयं व्रीळयानतः ॥ ५५
स्वयं भृत्यजनान् प्राह यद्येषा पुरुषो भवेत् । तदानीमहमेतस्या भवेय वल्लभा वधूः ॥ ५६
इत्युक्तमात्रेण तदा पुरुषोऽभूदियं वधूः । कमलाक्षोऽपि सहसा स्त्रीत्वं प्राप शिवाज्ञया ॥ ५७
कमलाक्षीति विख्याता तदारभ्येयमङ्गना । सोऽयं सर्वकलावल्लभाख्यया प्रथितो भुवि ॥ ५८
कमलाक्षी प्रणम्यैनं भर्तारं वीक्ष्य चाब्रवीत् । प्रयच्छ मम, रुद्राक्षं सर्वपापविनाशनम् ॥ ५९
सर्ववेदान्तसंसिद्धं साक्षादीशात्मकं परम् । न ज्ञायतेऽस्य माहात्म्यं केनापि त्रिपुरापहम् ॥ ६०
दत्तं भक्त्या समादाय दधौ स्वाङ्गे मुदान्विता । तावुभौ दंपती भक्त्याभुक्त्वा भोगांश्च तस्थतुः । ६१
कमलाक्षपिता योऽसौ पद्मनाभाह्वयो नृपः । केरळीं तं समुद्दिश्य संप्रयान्तं महीपतिम् ॥ ६२

मम पुत्रोऽगमत् सोऽयं कमलाक्षो महीपते । सुता तथापि संजाता पुत्रवत्यं सुशोभनम् ॥ ६३
अत्याश्चर्यमिदं दृष्टमनयोश्चरितं नृप । अस्ति मे तनयोऽप्यन्यो विबुधाख्यो महामतिः ॥ ६४
तस्य ते कन्यकामन्यां यथातां विवाहनायकां । प्रयच्छ विधिना राजन् सर्वलक्षणसंयुताम् ॥ ६५
महानाथवचः श्रुत्वा सौम्यवान् पृथिवीपतिः । तथेति च ददौ कन्यां विबुधस्यात्मजां पराम् ॥ ६६
विबुधोऽपि विवाहेतां धृतरुद्राक्षभूषणाम् । आनयित्वा स्वकं देशं प्राप कल्याणचेतसः ॥ ६७
तत्र स्थित्वातु विपुलान् भोगांश्च बुभुजे तथा । सौम्यवान् महानाथोऽपि धृतरुद्राक्षभूषणौ ॥ ६८
कथयन्तौ च माहात्म्यं पुराणेषु प्रसिद्धिमत् । भुक्त्वा भोगांश्च विपुलान् दृष्ट्वा हरस्य शोभनम् ॥ ६९
अन्ते च परया प्रीत्या पुत्रपौत्रकलत्रकैः । श्रीमत्कैलासमतुलं प्रापतुर्ब्राह्मणोत्तमाः ॥ ७०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुर्दशोऽध्यायः ॥

---

॥ अथ पञ्चदशोऽध्यायः ॥

रुद्राक्षधारण महिम्ना मार्जारेण स्वर्गात् कल्पवृक्षानयनम् ॥

अथान्यदपि रुद्राक्षमाहात्म्यं वर्णयाम्यहम् । सिन्धुदेशे पुरं किंचिद्भूचक्राख्यं सुशोभनम् ॥ १
तत्र कश्चिद्द्विजश्रेष्ठस्सुप्रदीपाह्वयो महान् । रुद्राक्षमालाभरणो रुद्रे विन्यस्तमानसः ॥ २
पुत्राः पौत्रास्तदीया ये सर्वे रुद्राक्षभूषणाः । एवं वसन् सुप्रदीपो नियमञ्च चकारवै ॥ ३
रुद्राक्षधारिणामन्नं दास्याम्यहमनुत्तमम् । नेतरेषां महापापकलुषीकृतचेतसाम् ॥ ४
श्रुत्वाऽस्य नियमं कश्चिद्योगाङ्काख्यो यतीश्वरः । योगमार्गैकनिरतस्सर्वशास्त्रार्थकोविदः ॥ ५
समागतः पुरं शीघ्रात्सर्वैर्बहुमतो जनैः । न धारयत्ययं पुण्यं रुद्राक्षं वरभूषणम् ॥ ६
तस्मादेनमसौ विप्रस्सुप्रदीपो महामतिः । नाङ्गीचकार भिक्षांच नोक्तवानस्य योगिनः ॥ ७
एवं दिनेषु कतिषु गतेष्वयमतिक्षुधा । गृहेषु भिक्षाव्याजेन तद्गृहद्वारमागतः ॥ ८
तमागतञ्च विज्ञाय सर्वे तद्गृहवासिनः । नाङ्गीचक्रुस्स्थितास्तूष्णीमज्ञानन्त इवान्तरे ॥ ९
सुप्रतीपस्स्वयं पश्चाद्विनिर्गत्य गृहाद्बहिः । किमर्थमागतं गच्छ भिक्षा नास्ति गृहे मम ॥ १०
गृहेष्वन्येषु सर्वेषु भिक्षामट यथेच्छया । रुद्राक्षधारिणामन्नं नेतरेषां च मद्गृहे ॥ ११
न धार्यते त्वया विप्र रुद्राक्षं सर्वपापहम् । इति तस्य वचः श्रुत्वा गच्छ गच्छ पुरो मम ॥ १२
भिक्षा न दीयते तुभ्यमित्युवाच द्विजोत्तमः । एवं निशम्य वचनं सुप्रदीपस्य धीमतः ॥ १३
कथा बभाषे वचनं परुषाक्षरसंयुतम् । निशम्य वचनं तस्य योगिनो निष्ठुरं तदा ॥ १४
सुप्रतीपात्मजाः क्रुद्धास्तमपृष्ट्वा दुराशयम् । तदीयेनैव दण्डेन निरस्यन् दूरतो द्विजाः ॥ १५
ततस्ससंभ्रमं क्रुद्धस्सन्यासी तत्पुराधिपम् । सालंकाख्यं समासाद्य सर्वमस्मै न्यवेदयत् ॥ १६
सालंकोऽपि नृपश्रेष्ठः श्रुत्वा तदनुपूर्वशः । स्वकीयै रानयामास सुप्रतीपं भटैस्तदा ॥ १७
सन्यासिनं समायान्तं भिक्षार्थं तव वेश्मनि । किमुच्चाटयितुं युक्तमदत्वा तं बलात्पुनः ॥ १८
परुषं वचनं चोक्तं स्वकीयैः पुत्रकैर्बत । इति राज्ञो वचश्श्रुत्वा सुप्रतीपोऽब्रवीद्वचः ॥ १९
न सन्यासाश्रमो राजन्विना रुद्राक्षधारणम् । रुद्राक्षधारणं ह्यङ्गं सर्वस्यैवाश्रमस्य च ॥ २०

रुद्राक्षधारणेनैव मुक्तिर्ज्ञानाच्च केवलात् । इति वेदाश्च चत्वारो वदन्ति किल सादरम् ॥ २१
किञ्चास्ति नियमः कश्चिन्मम राजन्निमं शृणु । रुद्राक्षधारिणामद्य दास्याम्यहमनेनसाम् ॥ २२
स धन्यो मम राजेन्द्र यो वा कोवाऽस्तु मानवः । स पूज्यस्तर्हि धर्मात्मा यथा देवो महेश्वरः ॥ २३
नेतरेषाञ्च डमानामद्य दास्याम्यनुत्तमम् । न पूज्योऽय महापापी वरीयानाश्रमेष्वपि ॥ २४
सुप्रतीपस्य वचनं श्रुत्वा राज्ञोऽस्य सन्निधौ । सन्यासी स पुनः कोपादिदं वचनमब्रवीत् ॥ २५
किं साध्यमस्ति रुद्राक्षधारणेन मम द्विज । किमायाति धृते तस्मिन्रुद्राक्षे तव भूसुर ॥ २६
गत्वाऽहमधुना शीघ्रं देवलोकमनुत्तमम् । पुष्पाणि योगमाहात्म्यात्कल्पवृक्षस्य चानये ॥ २७
यदि शक्तिस्तव भवेदेव रुद्राक्षधारणात् । तदा त्वयोक्तमखिलं सत्यमेव भविष्यति ॥ २८
इति तस्य वचश्श्रुत्वा योगिनोऽस्य महीसुरः । यदि गत्वा पुरं दैवं योगाभ्यासेन केवलम् ॥ २९
आनयिष्यसि पुष्पाणि त्वमाशु सुरशाखिनः । तदास्ति मद्गृहे कश्चिन्मार्जारशिशुरुज्ज्वलः ॥ ३०
देवलोकं समासाद्य पूजितस्सकलैस्सुरैः । सुशीघ्रं धृतरुद्राक्षः कल्पवृक्ष सु शोभनम् ॥ ३१
आनयिष्यति रुद्राक्षधारणेनैव सत्यतः । सुप्रतीपवचः श्रुत्वा यतिः कोपाकुलस्तदा ॥ ३२
एवं यदि भवेदाश्चर्यं तव विप्र तदादितः । वन्द्यो मम भवान्विप्र भविता नात्र संशयः ॥ ३३
रुद्राक्षधारणं श्रेष्ठं तदा सर्वेषु कर्मसु । उक्त्वैवं योगमार्गस्थ, पदपस्तु सकलेष्वपि ॥ ३४
प्राणानायम्य विधिना समाधिश्रयदुज्ज्वलः । गत्वा सुरपुरं शीघ्रात्कल्पवृक्षप्रसूनकम् ॥ ३५
समानीयागमन्मध्ये सभायां भूमिपार्थितम् । ददौ प्रसूनं भूपस्य हस्ते तत्सुरशाखिनः ॥ ३६
दृष्ट्वा तदद्भुतं सर्वे महदाश्चर्यसंयुताः । तुष्टुवुस्तं नृपेन्द्राद्यास्सर्वे तत्र सभासदः ॥ ३७
एवं योगिनमानीय कल्पवृक्षप्रसूनकम् । समागतमयं दृष्ट्वा सुप्रतीपो महीसुरः ॥ ३८
स्वपुत्रं प्रेषयामास स्वगृहं प्रति बुद्धिमान् । मार्जारशिशुमानेतुं धृतरुद्राक्षभूषणम् ॥ ३९
स तु शीघ्रं गृहं गत्वा समानिन्ये सभान्तरे । तं समादाय मार्जारं सुप्रतीपोऽब्रवीद्वचः ॥ ४०
राजन्रुद्राक्षमाहात्म्याद्द्रष्टा स्वर्लोकमद्भुतम् । मार्जारोऽयं देवतरुं समानेष्यति शीघ्रतः ॥ ४१
इत्युक्त्वा पाणिना विप्रस्तमम्बरतलेऽक्षिपत् । तदानीमागतं तत्र विमानमति शोभनम् ॥ ४२
पश्यत्सु तत्र सर्वेषु जनेष्वारुह्य तत्पुनः । स्वर्गलोकं ययौ शीघ्रं मार्जारोऽपि महीसुर ॥ ४३
तमायान्तं सुराधीशो विधाय सहसा बली । प्रत्यग्रहीत्समारुह्य गजमल्लं स्वसेनया ॥ ४४
अवरुह्य गजात्तूर्णमभ्याशं प्राप्य तस्य च । भक्तिनम्रो विमानस्थं गजस्कन्धे विधाय च ॥ ४५
विज्ञायागमनं तस्य मनसा वृत्रहा सुधीः । आघ्राय च शिरस्तस्य नेत्रयोस्तं विधाय च ॥ ४६
स्वीयैस्तमर्णैरेनं समलङ्कृत्य बुद्धिमान् । विधाय पूजामत्यर्थं पुनस्तत्र सुरद्रुमम् ॥ ४७
सुप्रतीपवचश्श्रुत्वा शिष्टाभ्याशे महात्मनः । उक्त्वैव वृक्षमतुलं प्रेषयित्वा सुरेश्वरः ॥ ४८
वेदसिद्धाख्य देवं प्रेषयित्वाऽमुना सह । मार्जारं तं यथापूर्वं व्योमयाने विधाय च ॥ ४९
प्रणम्य परया प्रीत्या प्रेषयामास देवपः । इत्थं संप्रेषितस्तेन मार्जारोऽयं मरुत्वता ॥ ५०
आरुह्याशु विमानं तद् व्योममार्गमथाश्रयत् । क्षणेन तत्सभामध्यं प्राप ताभ्यां परिष्कृतः ॥ ५१
अवरुह्य विमानात्स्वादस्याभ्याशे द्विजन्मनः । प्रदक्षिणत्रयं कृत्वा प्रणम्य विनयेन च ॥ ५२
तस्थौ तस्याग्रतस्तस्यां सभाया ब्राह्मणोत्तमः । भक्त्या प्रदक्षिणीकृत्य वेदसिद्धाख्योऽमरः ॥ ५३
प्रणम्य सुप्रतीपं तं जगादेन्द्र वचस्तदा । निष्कण्टकमहं स्वर्गं कृपया तव वैपदम् ॥ ५४

पालयामि सदा स्मृत्वा भवन्तं त्वां शिवप्रियम् । इति देवेन्द्रवचनमुपश्रुत्याऽयं पूजितोऽसुरा ॥ ५५
स्वर्गं तदनुमत्याशु विमानेनाप सोऽमरः । कल्पद्रुमोऽपि तं विप्रं विधाय त्रिःप्रदक्षिणम् ॥
प्रणम्य परया भक्त्या तस्थे तस्याग्रतो द्विजाः ॥ ५६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चदशोऽध्यायः ॥

---

॥ अथ षोडशोऽध्यायः ॥

श्री रुद्राक्षधारणमहिम्ना मार्जारशिशोः देवलोके इन्द्रसत्कारः ॥

दृष्ट्वैतदखिलं राजा विस्मयाविष्टमानसः । उत्थाय तरसा विप्रं प्रणम्य विनयेन च ॥ १
भयेन च समाविष्टो मार्जारं वीक्ष्य तं तदा । प्राप्तस्त्वया कथं स्वर्गस्तत्रेन्द्रेण च किं कृतम् ॥ २
किमुक्तं वचनं ब्रूहि मार्जार वद तत्त्वतः । इति राज्ञो वचश्श्रुत्वा सुमतीपशिवं स्मरन् ॥ ३
स्वर्गलोकस्त्वया प्राप्तो दृष्टश्च सुरपुङ्गवः । पूजितस्तेन मार्जार शिशो तत्त्वं शिवाज्ञया ॥ ४
मुक्त्वाशु वचनाच्छांकिं वद सर्वं सदुत्तरम् । इति ब्रुवति विप्रेन्द्रे तस्मिन्रुद्राक्षभूषणे ॥ ५
मार्जारोऽपि समुत्थाय बद्धाञ्जलिपुटोऽब्रवीत् । आरुह्य सुन्दरं दिव्यं विमानमहमुत्तमम् ॥ ६
स्वर्गमापं सुरेशो मां दृष्ट्वा प्रत्यग्रहीन्मुदा । ततस्ससंभ्रमं दृष्ट्वा चावरुह्य गजाद्द्रुतम् ॥ ७
पाणिभ्यां मां समालिङ्ग्य शिरश्चाघ्राय भक्तितः । गजस्कन्धं समारोप्य भूषयन् भूषणैः स्वकैः ॥ ८
वृत्तान्तमखिलं ज्ञात्वा कल्पवृक्षामराद्विभो । योजयित्वा मया साकं विधायापचितिं पराम् ॥ ९
प्रेषयामास मतिमान् भक्त्या परमया सह । तदानीं तस्य महिषी शची प्रोवाच देवपम् ॥ १०
मार्जारोऽयमिमां पूजां कथमर्हति देवप । कोऽयं समागतः कस्माद्देशादेतद्वद प्रभो ॥ ११
इति तस्या वचः श्रुत्वा सुरेशः प्राह तां पुनः । बिभर्त्ययं परं पुण्यं रुद्राक्षं रुद्रभूषणम् ॥ १२
स एव धन्यः पूज्योऽपि सर्वैर्देवैश्च मानुषैः । धार्यते येन रुद्राक्षं देहिनां पावनं प्रिये ॥ १३
न ज्ञायते त्वया किंवा रुद्राक्षमहिमा प्रिये । अत्र पुण्यां कथां मत्तः श्रृणुष्वावहिता प्रिये ॥ १४
पूर्वेद्युश्शङ्करं प्राप्य प्रेतराट्सहकिङ्करैः । प्रणम्य परया भक्त्या मन्दरे चारुकन्दरे ॥ १५
पृष्टः प्रोवाच देवेन स्वस्यागमनमत्र च । धर्मः — जय शंभो महादेव भक्तवत्सल विश्वप ॥ १६
त्वयैवेदं पुरा दत्तं पदं मम महेश्वर । क्रियते च मया पूजा भक्तानां तव पावनी ॥ १७
भवाब्धिपोते भगवंस्त्वयि ये विमुखा जनाः । पीड्यन्ते पापिनस्ते वै नरके दुःखसागरे ॥ १८
त्वया कृता च मर्यादा कुत्रवा वितथा भवेत् । धर्माधर्माह्वयौ मार्गौ कल्पितौ भवता प्रभो ॥ १९
सुखं धर्मफलं शंभो दुःखं पापफलं तथा । विनिर्मितं भगवता देवदेवेन शङ्कर ॥ २०
तद्धेतुस्स्वर्गनरकौ भवतैवहि कल्पितौ । तदत्र मामकैर्दूतैः पीडितं नरके भृशम् ॥ २१
महापापिनमासाद्य भवदीयगणाः प्रभो । दिव्यं विमानमारोप्य नानारत्नविचित्रितम् ॥ २२
सन्ताड्य मामकान् दूतान् कैलासं निन्युरे बत । इति ब्रुवति कीनाशे भयाकुलितमानसे ॥ २३
प्राह गंभीरया वाचा भैरवस्तं शिवाग्रतः । किमस्य पुण्यं मतिमन्नास्ति कीनाश शोभनम् ॥ २४
इह जन्मनि सत्यं त्वं यदात्र शिवसन्निधौ । इति तस्य वचश्श्रुत्वा भैरवस्य स धर्मराट् ॥ २५
चित्रगुप्तं निजाभ्याशे स्थितं हस्तसंज्ञयावदत् । चित्रगुप्तस्ततो देवं प्रणम्याञ्जलिहस्तवान् ॥ २६

जगाद भैरव वीक्ष्य प्रश्रयावनत पुर । प्रसीद देवदेवेश करुणाकर भैरव ॥ २७
देशे कलिङ्गसंज्ञे यत्पुर व्याघ्राभिध महत् । तत्रास्तेऽय महापापी जामिनाख्यो महाखल ॥ २८
जारजस्यास्य पापस्य जननी व्यभिचारिणी । जारौघवशात्पापामृतैषा किल दैवप ॥ २९
जारेण रक्षित पापी जनकेनैवदुष्धी । कालेन यौवने प्राप्ते महाव्यामोहकारणे ॥ ३०
चौर्य कृत्वापि दुष्टात्मा कामबाणेन पीडित । दासीसमरतो नित्य सवयोभिश्च लाहरे ॥ ३१
द्रव्याभावात्पुन कस्मिन् दिवसे जनकघ्नतम् । जघान वतपापिष्ठ कपटेन दुरात्मवान् ॥ ३२
मद्यपायी सदा तद्ग्रामभोज्यतिवञ्चक । स्तेय कुर्वन् दिने कस्मिन् दृष्टोऽय ग्रामपालकै ॥ ३३
ताडित पीडितो नित्य निहत पितृकानने । नकिञ्चिदस्य पापस्य पुण्यम् जन्मनि विद्यत ॥ ३४
दिनान्यपिव चत्वारि मृतस्यासन् जगत्प्रभो । बाधितो नितरा दूतैस्त्वदीयैरय प्रभो ॥ ३५
सन्ताड्य तान् भृश दूतान् भवदीया महेश्वर । मोचयित्वा दुरात्मान कैलास निन्यिरे प्रभो ॥ ३६
न किञ्चिदपि जानेऽह पुण्यमस्य दुरात्मन । इत्युक्त्वा चित्रगुप्तोऽय तस्थे बद्धाञ्जलि पुर ॥ ३७
तमाह भैरवो वीक्ष्य चित्रगुप्त सयन्त्रिव । चक्रवाकस्य भूपस्य सुता सर्वांगसुन्दरी ॥ ३८
सखौ गृहे स्वकीये सा हारवर्यं मनोहराम् । निधाय मल्लिकावल्या रुद्राक्षप्रोतमध्यमाम् ॥ ३९
गृहीत्वोड्डीय ता काक कश्चिद्गगनमार्गत । अभ्यागतस्तत्रश्छिन्ना हारयष्टिर्मनोहरा ॥ ४०
तदा तन्मध्यरुद्राक्षमेतस्य छिन्नमूर्धनि । पपात किल पुण्येन केनाप्यस्यातिपावनम् ॥ ४१
निमग्न रक्तसस्पर्शाच्चिष्ठलयापि चान्तक । तेन पुण्येन कैलासं प्राप्तवानयमन्तक ॥ ४२
अहो रुद्राक्षमाहात्म्य मया वक्तु न शक्यते । स वेत्ति रुद्रो भगवान् भक्तरुद्राक्षको न वा ॥ ४३
तदेतत्सर्वमाकर्ण्य शैलादिकपितोऽवदत् (हर्षितागवान्) । तिष्ठते देहिनो यस्य देहे रुद्राक्षमुत्तमम् ॥ ४४
कैलासमेव यातीति किमाश्चर्यं शिवप्रियम् । अस्थि केशादि गङ्गाया मृताना यदृच्छालत ॥ ४५
पतित यदि ते शीघ्र कैलास यान्ति वै यम । तस्मादेतस्य कैलासप्राप्तिर्नैवाद्भुत किल ॥ ४६
इति नन्दीशवचन श्रुत्वातौ भयकम्पितौ । चित्रगुप्तयमौ नत्वा देवदेव त्रियम्बकम् ॥ ४७
विचिन्तयन्तौ माहात्म्य रुद्राक्षस्याघहारिण । प्रतस्थाते महेशस्य चाज्ञया स्वपद प्रति ॥ ४८
प्रस्थित त पुनरपि समाहूय महेश्वर । अद्यप्रभृति रुद्राक्षधारिणो मम वल्लभान् ॥ ४९
आरात् दृष्ट्वा यम भयात्त्वा तान्नमस्य व्रज । दूतानामपि शिक्षैषा कर्तव्या चाममादृत ॥ ५०
ममप्राणाधिका भक्ता मस्रुद्राक्षधारिण । न तान् प्रत्यभिचारस्ते सत्य सत्यमिहोच्यते ॥ ५१
इति शम्भोर्वचश्श्रुत्वा तथा कृत्वा मनस्ययम् । प्रणम्य परया भक्त्या निर्जगाम पद प्रति ॥ ५२
दृष्टैतदखिल शम्भोस्सन्निधौ गतवासरे । ममात्यन्तमभूत्प्रीति प्रतिरुद्राक्षधारिणम् ॥ ५३
तन्मया वल्लभे पूजाकृताद्याखिलभुजस्तराम् । इति देवेशवचन श्रुत्वेन्द्राण्यपि विस्मिता ॥ ५४
मामादाय कराग्रया सा मूर्ध्न्याघ्राय नरेश्वर । कृत्वा स्वनेत्रयोर्भक्त्या प्रेषयामास भूमिप ॥ ५५

गदितमिति निशम्य तत्र वृत्त दिविनृपति पृषदंशकेन सत्यम् ।
अधिकमपमियाय भक्तिमस्मिन्नधिगतविस्मयमानसो द्विजेन्द्रा ॥ ५६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षोडशोऽध्याय ॥

॥ अथ सप्तदशोऽध्यायः ॥

श्रीरुद्राक्षधारणात् शान्तिकस्य भद्रकाल्यनुग्रहः ॥

ततः प्रणम्य राजाऽसौ सुप्रतीपं द्विजोत्तमम् । भक्त्या तस्यापि रुद्राक्षं ययाचे धर्तुमात्मवित् ॥ १
रक्ष मां शरणं प्राप्तं कृतमन्तुं द्विजोत्तम । कृतार्थोऽस्मि कृतार्थोऽस्मि दर्शनालापतस्तव ॥ २
इति ब्रुवति राजेन्द्रे सहसोत्थाय स व्रती । प्रणम्य परया प्रीत्या द्विजश्रेष्ठमुवाच ह ॥ ३
रुद्राक्षधारणात्त्वं वै रुद्रोऽस्यनघ केवलम् । क्षमस्व मत्कृतं मन्तुं दयार्द्रान्तर सर्वदा ॥ ४
न कुप्यन्ति महात्मानः कृतागस्स्वपि देहिषु । स्तुत्वैवमास्थितावेतौ बद्धाञ्जलिपुटावुभौ ॥ ५
सुप्रतीपो निजाभ्याशे स्थापयित्वाऽब्रवीत्कथाम् । देशे मकरसंज्ञेऽस्ति पुरं पद्मकराभिधम् ॥ ६
तत्रास्ते ब्राह्मणः कश्चित्सुगुप्ताख्यो महामतिः । तस्यासंस्तनयाः पञ्च ब्राह्मणस्य सुमेधसः ॥ ७
तेषामवरजः कश्चिच्छान्तिसंज्ञोऽस्ति पुण्यवान् । धूळिक्रीडां वितन्वानः कश्चिद्रुद्राक्षमाप्तवान् ॥ ८
तद्बध्वा निजकण्ठेऽयं सर्वदा तिष्ठति व्रतिन् । न शृणोति वचः पित्रोर्भ्रातॄणां भ्रान्तवत्सुधीः ॥ ९
दरिद्रोऽपि न याच्ञासु स्वेच्छया न प्रवर्तते । तद्भ्रातरोऽपि चत्वारः पितृभ्यां सहितायतिन् ॥ १०
याच्ञावृत्त्योदरं नित्यं पोषयन्ति स्वकीयकम् । न याति कुत्रचिद्गेहं मुक्त्वाऽयं ब्राह्मणोत्तमः ॥ ११
यवागुमात्रमप्येष पीत्वा दत्तं तु यच्च तैः । तिष्ठत्येवं चिरं कालं धृतरुद्राक्षभूषणः ॥ १२
द्विषन्त्येनमशृण्वन्तं वचनं भ्रातरस्तथा । तदानीं केरळाधीशो नृपः कश्चन तापसः ॥ १३
नारं बलिं भद्रकाल्याः प्रत्यब्दं विदधात्ययम् । तस्मिन् देशे नरं क्रेतुं लभ्यते न प्रयत्नतः ॥ १४
ततोऽयं प्रेषयामास माकरे विषये भटान् । दत्वा बहूनि द्रव्याणि क्रेतुं नरमनिन्दितम् ॥ १५
विचार्याभ्यागतास्तेपि तत्र तत्र द्विजालये । क्रमेणास्य गृहं प्राप्य वृत्तान्तं सर्वमूचिरे ॥ १६
श्रुत्वैतद्द्रव्यमादाय ते पितृभ्रातरस्तदा । ददुरेनमिमे तेभ्यश्शान्तिकं शान्तमानसम् ॥ १७
स तेषामनुमत्यैतान् प्राप्य सन्तुष्टमानसः । केरळाधीशनगरे तस्थौ पौरोहिते गृहे ॥ १८
पुनर्बलिदिने स्नात्वा शान्तिको धृतभूषणः । गन्धावलिप्तसर्वाङ्गश्श्रुत्वा पौरोहितं वचः ॥ १९
पुरोहितेन भवनं राज्ञः प्रापातिहृष्टधीः । दृष्ट्वैनं स तु राजापि बल्यर्थं निश्चितान्तरः ॥ २०
काळीभवनमापायं साकं तेनामुना द्रुतम् । संपूज्य तां तदा दिव्यैर्धूपैर्दीपैरनेकशः ॥ २१
पुष्पैर्नानाविधैर्भक्ष्यैर्भोज्यैर्मांसैश्च शोणितैः । स्थाप्यैनं पुरतस्तस्थे भद्रकाल्यास्सशान्तिकम् ॥ २२
दृष्ट्वैनं शान्तिकं काळी धृतरुद्राक्षभूषणम् । भीता प्रणम्य मनसा सहसोत्थाय सा पुनः ॥ २३
हत्वा पुरोहित कोपात्पपौ रक्त दुरात्मनः । शान्तिकं तं समीक्ष्यैषा जगाद वचनं तदा ॥ २४
न समस्ते जगत्यस्मिन् ब्राह्मणानामधीश्वर । यतस्त्वया गळे पूतं रुद्राक्षं धार्यते कृतिन् ॥ २५
धन्योऽसि त्वं महासत्व स्थिरचित्त दृढव्रत । स त्वं रुद्रो न सन्देहस्संपूज्यश्च सुरोत्तमैः ॥ २६
वरं वरय पुण्यात्मन् वाञ्छितं ते ददाम्यहम् । इति काळ्या वचः श्रुत्वा शान्तिकः प्राह तां तदा ॥ २७
यदि देयो वरो मह्यं मय्यपि प्रीतिरस्ति चेत् । अयं नरबलिर्मास्तु प्रत्यब्दं तव चेश्वरि ॥ २८
प्रयच्छ वाञ्छित तस्मै राज्ञे सन्तुष्टमानसा । इति तस्य वचश्श्रुत्वा तथा दत्वा वरंच तम् ॥ २९
राजान वीक्ष्य सा प्राह पुनर्वचनमीश्वरी । पूजयैनं नृप सदा रुद्राक्षवरभूषणम् ॥ ३०
रुद्रवद्वचनं चास्य श्रुत्वा स्थातुं त्वमर्हसि । तव कन्यां प्रयच्छाद्य पाणिग्रहणमार्गतः ॥ ३१
एवं स्थितं चेद्भवतस्सर्वाभीष्टं भविष्यति । यस्मादेनं पुरोधास्ते बल्यर्थमनयन्नृप ॥ ३२

दोषेणानेन निहतस्सन्निधौ तव सत्पत । मृतोऽस्य तनयोऽप्यस्य मृता भार्याऽप्यनिन्दिता ॥ ३३
दग्ध च गेह सुमहत् वह्निना धरणीपते । एव द्विषन्ति ये भ्रातृपितरस्तेऽतिपापिन ॥ ३४
चोरैरपहृतद्रव्या कुष्ठादिव्याधिपीडिता. । क्षुत्तृष्णापीडिता नित्य निराहारा निरालया ॥ ३५
अटन्ति देशाद्देशेते निमग्ना दु खसागरे । य एव धृतरुद्राक्ष पूजयन्ति महेश्वरम् ॥ ३६
ते दग्धकिल्बिषा नित्य मोदन्ते देववत्क्षितौ । इति काव्या वचश्श्रुत्वा राजाऽथ प्रीतिसयुत ॥ ३७
विधिना ग्राहयामास पाणि दुहितुरुत्पलम् । भवनञ्च विधायास्य नानारत्नविचित्रितम् ॥ ३८
प्रादाद्राजा दिनचैन (राजादिचिह्नच) हृष्टैशवदपूजयत् । शान्तिकोऽप्येकरुद्राक्षधारणस्येदृश फलम् ॥ ३९
आलोच्य कण्ठबाहुसमणिबन्धशिरस्स्वपि । बभार किल रुद्राक्ष सहस्राधिकसंख्यया ॥ ४०
भार्यया सहितस्तस्थे मन्दिरे क्रीडयन्मुदा । श्रुत्वैतस्याखिल वृत्तमस्य ये पितृसोदरा ॥ ४१
मदीय इति निश्चित्य त देश प्रापुरञ्जसा । परित्यक्तद्विजाचारा मणक्लिन्नशरीरिण ॥ ४२
तान् दृष्ट्वाऽथ मुदा गेहमानयित्वाऽतिसुन्दरम् । स्नापयित्वातु तैलेन दिव्य वस्त्र प्रदापच ॥ ४३
रुद्राक्षमालया सर्वानभूषयदय व्रतिन् । तेऽपि रुद्राक्षमाहात्म्यात्त्यक्तकुष्ठादिरोगिण. ॥ ४४
दिव्याम्बरधरा नित्य दिव्याभरणभूषिता । भुक्त्वा भोगान् सुविपुलान् शान्तिकेनामुना सह ॥ ४५
कैलासं प्रापुरतुल प्रीत्या परमया युता । अजानतापि रुद्राक्ष मणिभ्रान्त्याऽमुना व्रतिन् ॥
घृतमस्य फल सम्यक् श्रुत किल महामते ॥ ४६
ज्ञात्वा ये शिवभूषण परतम स्वर्गापवर्गप्रद रुद्राक्ष विधिनाऽमुना निजतनौ सम्यक् सदा बिभ्रति ।
तेषा दग्धनिजैनसामिहफल जानाति कोवा सुधीस्त्यक्त्वा शङ्करमम्बिका गणपति सत्य मया कीर्तितम् ॥ ४७

इति श्री स्कान्दे महापुराणे शङ्करसहिताया शिवरहस्यखण्डे
उपदेशकाण्डे सप्तदशोऽध्याय ॥

---

॥ अथ अष्टादशोऽध्याय ॥

सूर्यपुर चरित वर्णनेन विभूतिरुद्राक्ष महिमानुवर्णनम् ॥

सुमतीपस्य वचन श्रुत्वाऽऽश्चर्यसमन्वित । तदाप्रभृति रुद्राक्ष धत्ते रुद्रस्य भूषणम् ॥ १
दग्धाघौघो निज कर्म योग मुक्त्वा यतीश्वर । प्राप्याशु शिवयोगित्व शिवस्यैव प्रसादत ॥ २
मुक्तिमाप शिवज्ञानात्पुनरावृत्तिदुर्लभाम् । तत आरभ्य राजापि रुद्राक्षाभरणोज्वल ॥ ३
अनेककालमखिल राज्य कृत्वाऽरिवर्जितम् । भुक्त्वा च विपुलान् भोगान्मानुषानन्दसयुत ॥ ४
पुत्रेषु राज्य निक्षिप्य शिवलोक ययौ द्विजा । सुमतीपोऽपि रुद्राक्षमाहात्म्यमनुवर्ण्य स ॥ ५
स्वगृह प्राप्य परया प्रीत्याऽनेकाब्दमुज्वल । भुक्त्वा भोगान् बहुविधान् पुत्रै पौत्रैस्समन्वित ॥ ६
शिष्यै प्रशिष्यैस्सहितो बन्धुभिर्भार्यया स । दिव्य विमानमारुह्य देवस्त्रीभिर्विभूषितम् ॥ ७
देवदुन्दुभिनिर्घोषै पुष्पवृष्टिभिरुच्चकै । देवर्षीणा गणैरग्रे याचिभि परिवीतवान् ॥ ८
इन्द्रेण प्रेषित कल्पवृक्षमाभरण तथा । उज्जयिन्या महाकालमहेशस्य प्रदाय च ॥ ९
मार्जारेणामुना साक शिवलोक ययौ मुदा । तत कालेन सायुज्यमवाप परमेशितु ॥ १०
ऋषय — वर्णित भवता सूत माहात्म्य भस्मन पुरा । रुद्राक्षस्यापि माहात्म्य वर्णित सर्वसंमतम् ॥ ११
भस्मधारणमात्रेण सर्वाभीष्ट भवत्यलम् । किमर्थं धार्यमेवचेत् रुद्राक्ष तापसेश्वर ॥ १२

एतं नस्संशयं छिन्धि पुराणार्थविशारद । अन्यो न त्वदृते छेत्ता संशयस्यास्ति पण्डित ॥ १३
भवादृशाना महतां सत्सु श्रोतृषु तापस । न वाच्यमस्ति परमं रहस्यमपि पावनम् ॥ १४
इति तेषां वचश्श्रुत्वा सूतः पौराणिकोत्तमः । प्राह गम्भीरया वाचा मन्दस्मितमुखाम्बुजः ॥ १५
शृणुध्वमृषयस्सर्वे यूयं विगतकिल्बिषाः । धृतश्च केवलं भस्म वारिणा स्वेदबिन्दुना ॥ १६
दृष्ट्या स्पर्शनेन सम्पर्काज्जनानामपि भूसुराः । पवमाद्य प्रमृष्टेन्द्रिय भवति देहिनाम् ॥ १७
भूतप्रेतपिशाचाश्च राक्षसव्यालतस्कराः । व्याघ्रसिंहादयो यस्मात्सर्वे मर्मभिदस्सदा ॥ १८
हिंसन्ति भस्महीनमरुद्राक्ष महीसुराः । तस्माद्रुद्राक्षमनिशं कण्ठकर्णकरादिषु ॥ १९
भस्मना सह धर्तव्यं स्वात्मनो हितमिच्छता । न चैतद्भस्म वह्निप्राक्षालनाय वा जलादिभिः ॥ २०
भूतप्रेतपिशाचाश्च न च हिंसन्ति राक्षसाः । न दशन्ति च सर्पास्ते भस्मरुद्राक्षधारिणम् ॥ २१
धर्तव्यमेतत्सूत्रेण सौवर्णेनाथवा द्विजाः । राजतेन च ताम्रेण रुद्राक्षञ्च गलादिषु ॥ २२
यज्ञोपवीते वाचैकं भस्मना सर्वदा द्विजाः । तस्मात्सर्वप्रयत्नेन भस्मरुद्राक्षभूषणः ॥ २३
न बिभेति च शत्रूणां यथा निर्भय एव च । अत्रेतिहासं परमं कथयामि महीसुराः ॥ २४
अस्ति कश्चिन्महीपालो देशे सवितृसञ्ज्ञके । श्रीमत्सूर्यपुरे रम्ये सिन्धुसेनाह्वयो महान् ॥ २५
स तु सिंहाभिध भूप विन्ध्यदेशाधिप रिपुम् । काकलास्यपुराधीश युधि जित्वा महाबलः ॥ २६
द्रावयामास विप्रेन्द्रा महारण्ये ससेनया । स तु तत्र वने सिंहश्चिर कालं वसन् पुनः ॥ २७
तपसाराध्य गोविन्द सर्वशत्रुनिबर्हणम् । चक्र सुमहदापाय शत्रुसंहारकारकम् ॥ २८
चक्रप्रदानसमये प्रसन्नो माधवस्तदा । पञ्चावृत्त्यैतदतुलं भवेच्छत्रुनिबर्हकम् ॥ २९
ततः परं मदुग्राशं समेष्यति महीपते । इत्युक्त्वान्तर्दधे देवः क्षणाद्दृष्टैतदद्भुतम् ॥ ३०
तल्लब्ध्वा स महीपालो क्षणान्निर्गत्य काननात् । सिन्धुसेन ससेन तमावृत्य सहसा बली ॥ ३१
युद्धं कृत्वा पुनश्चक्र योजयामास भीषणम् । तच्चक्र सहसा सेना हत्वा सर्वा विनैव तम् ॥ ३२
आजगाम पुनस्तस्य कर परमभीषणम् । एकाकी सिन्धुसेनोऽथ वनमापातिभीषणम् ॥ ३३
तत्राश्रम वसिष्ठस्य सञ्चरन् प्राप भूसुराः । तत्र दृष्ट्वा महात्मान वसिष्ठ गौतम परम् ॥ ३४
कौशिक नारदादींश्च महर्षीन् सम्प्रणम्य स । भो भो विज्ञानतपसा ऋषयस्संशितव्रताः ॥ ३५
ईश सर्वेश्च दृशास्य मां जानन्तु मनीषिणः । सोऽहं पराजितो युद्धे शत्रुणा तुल्यतेजसा ॥ ३६
इदानीं शरणं प्राप्तो भवतः पुण्यगौरवात् । तदुपायेन केनापि विजयो मे भवेद्ध्रुवम् ॥ ३७
वदन्तु भगवन्तस्तं तमुपायमृषीश्वराः । इति तस्य वचश्श्रुत्वा सर्वे ते तापसोत्तमाः ॥ ३८
प्रोचुस्त्वं समालोच्य विजयोपायमुत्तमम् । धृत्वा ससेनया भस्म रुद्राक्षञ्च जयप्रदम् ॥ ३९
युद्धं कृतश्चेद्विजयो भविष्यति न संशयः । सेनाश्च भवतस्सर्वा भस्मरुद्राक्षवर्जिताः ॥ ४०
निहतास्तेन शत्रुणा राजन्नेकस्त्वमवशिष्टवान् । इति तेषां वचश्श्रुत्वा संशयाकुलितान्तरः ॥ ४१
राजा प्रोवाच वचनं प्रश्रयावनतो ऋषीन् । शत्रुणा प्रेषित चक्रमिदानीं भोस्तपोधनाः ॥ ४२
हत्वाऽऽशु सेनाकलकला मुक्त्वा मां केन हेतुना । निवृत्त्य निर्गतं भूयो भस्मरुद्राक्षवर्जितम् ॥ ४३
सेनाश्च निहतास्सर्वा भस्मरुद्राक्षहीनतः । इत्युक्तः तापसश्रेष्ठाः भवद्भिस्संशयस्ततः ॥ ४४
इति तस्याकर्ण्यैको वचनं तपतां वरः । त्वया नृप धृतं भस्म रुद्राक्षं च जयप्रदम् ॥ ४५
हेतुना तेन चक्रं त्वन्मुक्त्वा त्वां निर्गतं ध्रुवम् । राजा — न धृत्वा भस्म रुद्राक्ष मयाप्यायोधनं कृतम् ॥ ४६

कस्तूरी चन्दनालिप्तो मुक्तादामविभूषितः । प्रवृत्तोऽहं मृधे नीलरत्नमुक्ताविभूषितः ॥ ४७
एतावदेव जानेऽहं केवलं तापसोत्तमाः । तथापि मुक्त्वा मां चक्रं दत्त्वा सेना विनिर्ययौ ॥ ४८
इति राज्ञो वचश्श्रुत्वा ऋषयस्संदितान्तराः । शोधय त्वमिहेदानीं मुक्तादामाश्मदामच ॥ ४९
इत्युक्त्वा मौक्तिकं दाम शोधयामासुरञ्जसा । तत्र दृष्ट्वैक रुद्राक्षमेतस्मै तमदर्शयन् ॥ ५०
दृष्ट्वैतद्विस्मयाविष्टो तस्थेऽसौ भयकंपितः । केनवृत्तमिदं भूप कुत आरभ्य धार्यते ॥ ५१
यद् त्वमेतदालोच्य यथार्थं नोऽद्य सन्निधौ । राजा — यदाहं युद्धसन्नद्धः प्रतस्थे त्वरया गृहात् ॥ ५२
तदा वणिक्कश्चनैतदुपहारेण दत्तवान् । रणवेगेन धृत्वैतत्प्रवृत्तो रणमण्डले ॥ ५३
न शोधितश्च दामैतन्मौक्तिकं रणसंभ्रमात् । एतस्येति वचः श्रुत्वा ऋषयस्तेऽतिविस्मिताः ॥ ५४
माहात्म्यादस्य राजंस्त्वं जीवितो नात्र संशयः । पराजितो मृतबलो हन्तुं चक्रे विनिर्गते । ५५
इतः परञ्च धृत्वा त्वं भस्म रुद्राक्षमुत्तमम् । बलैश्च भस्म रुद्राक्ष धारकैः परिवीतवान् ॥ ५६
विनिर्गतश्चेद्युद्धाय विजयो भविता ध्रुवम् । नान्योऽस्त्युपायो विजये भस्म रुद्राक्षयोः परः ॥ ५७
इति वाक्यं निशम्यैषां विनिश्चित्य तथेति सः । धृत्वा भस्म च रुद्राक्षं युद्धाय कृतनिश्चयः ॥ ५८
प्रतस्थे स्वयमेकाकी वनाद्धृत्वा धनुर्वरम् । तदानीं मिलितास्तस्य भटाः केचन सायुधाः ॥ ५९
तेषां भस्मच रुद्राक्षं दत्वाऽयं परमोद्यमः । सिंहस्य नगरं शीघ्राद्रुरोध स्वबलैस्सह ॥ ६०
विनिर्गत्याशु सिंहोऽपि कृतकोलाहलो बलैः । प्रेषयामास तच्चक्रं सर्वशत्रुनिबर्हणम् ॥ ६१
महारवेण तच्चक्रं प्राप्य तत्परसैन्यकम् । दृष्ट्वा तान् भस्म रुद्राक्ष धारिणो रुद्रतेजसः ॥ ६२
प्रणम्य परया भीत्या विधायैषां प्रदक्षिणम् । विनिर्ययौ पुनः पाणिं प्रयोक्तुस्तस्य भूसुराः ॥ ६३
दृष्ट्वैतत्सोऽतिखिन्नस्तः प्राप भग्नो वनं द्रुतम् । श्रुत्वाचैतस्य वृत्तान्तं सिंहः कालेन बुद्धिमान् ॥ ६४
तपश्चचार सुमहदुद्दिश्य वरुणं द्विजाः । प्रसन्ने यादसां पत्यौ पप्रच्छ वरमुत्तमम् ॥ ६५
अपेक्षिता यदा वृष्टिर्मया यादसपते प्रभो । तदैव शीघ्रतो भूयात्प्रसन्नो यदि सर्वदा ॥ ६६
तथेत्युक्त्वा जगामाशु वरुणस्वालयं प्रति । इति लब्धवरसिंहसिन्धुसेनं परेऽहनि ॥ ६७
माजुहाव रणायाय कृतकोलाहलारवः । प्रत्यग्रहीत्सिन्धुसेनस्तं सिंहं युद्धगर्वितम् ॥ ६८
तदा ससार वरुणं सिंहो मध्यन्दिनेऽपि सः । समाययौ महावेगाज्ज्वालाकारतयाऽम्पतिः ॥ ६९
वृष्ट्या सेनाः परिक्लिष्टा उभयोरपि तास्तदा । सिन्धुसेनस्य सेनासु केवलं भस्मधारिणः ॥ ७०
ये भटास्ते महावृष्ट्या प्रभूताभविभूतयः । संबभूवुस्तदा सिंहश्चक्रमादाय भीषणम् ॥ ७१
युयोज सिन्धुसेनस्य सेनास्वतुलविक्रमः । तच्चक्रं सहसाऽऽक्रम्य सिन्धुसेनबलं महत् ॥ ७२
आवृत्य भस्मना हीना न रुद्राक्षान् भटान् बहून् । हत्वा मुक्त्वाशु रुद्राक्षधारिणोऽमुञ्च भूमिपम् ॥ ७३
अथाप त्वरया हस्तं सिंहस्यास्य महौजसः । सिन्धुसेनोऽल्पसेनत्वाद्धृत रुद्राक्ष भूषणैः ॥ ७४
भटैः कैश्चित्सहैवाशु वनं प्राप सुदुःखितः । तत्र दृष्ट्वा ऋषीन्पूर्वान् वसिष्ठादीन्प्रणम्य सः ॥ ७५
धृतभस्मा स रुद्राक्षो भस्म रुद्राक्षधारिभिः । बलैर्युध्यद्वचश्श्रुत्वा प्रविष्टो रणमण्डलम् ॥ ७६
चक्रं युयोज सेनासु सोऽस्मदीयासु तापसाः । तच्चक्रं सहसाऽऽगत्य त्वरया दूरान्मदीयकान् ॥ ७७

मया सह भिचतुरान्भुक्त्वा प्रतिययौ मठम् । इत्युवाच कपीनेव समीक्ष्यातिभयान्वितः ॥ ७८

इति कथितममी निशम्य राज्ञा निजहृदयेषु विचिन्त्य तत्क्षणेन ।
अनवरतमिमं बिभर्ति योऽङ्गे न स मृतिमेति परायुधैः क्षितीश ॥ ७९

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टादशोऽध्यायः ॥

---

## ॥ अथ एकोनविंशोऽध्यायः ॥

### स सैन्यस्य सिन्धुसेनस्य विभूतिरुद्राक्षधारण महिम्नाजयः ॥

इति तेषां वचश्श्रुत्वा पुनराह कपीनयम् । धृत्वा भस्म च रुद्राक्षं केचिद्भस्मावकुण्ठिताः ॥ १
परे प्रवृत्ता युद्धाय ततो वृष्टिरभूत्तराम् । तदा वृष्ट्या परिक्लिन्नास्सेनास्ता उभयोरपि ॥ २
ततश्चक्रं मुमोचायं सिंहश्शत्रुनिबर्हणम् । तेन घोरेण निहतास्सेना मम तपोधनाः ॥ ३
इति राज्ञो वचश्श्रुत्वा ऋषयस्तत्रकारणम् । ऊचुर्नृपं समीक्ष्यैते मनसालोच्य भूसुराः ॥ ४
येषां प्रमृष्टं क्षितिप भस्म वृष्ट्यातिपावनम् । त एव निहता युद्धे रुद्राक्षेण विवर्जिताः ॥ ५
जीविनो भस्म रुद्राक्षधारिणो भवता सह । पुरा त्रिपुरदैत्यानां भस्म रुद्राक्षधारिणाम् ॥ ६
नासीद्भयं महद्भयोऽपि देवेभ्यो भूपते तदा । ब्रह्म विष्णुमुखा देवाश्चाभिचारेण कर्मणा ॥ ७
भूतान्युत्थाप्य भीमानि प्रेषयामासुरञ्जसा । तानि सर्वाणि तान् दृष्ट्वा भस्म रुद्राक्ष भूषणान् ॥ ८
निवृत्य सहसा जग्मुर्भीतभीतानि भूमिप । पुनश्च विमुखान् भस्म रुद्राक्षेषु विधाय तान् ॥ ९
ब्रह्म विष्णुमुखा देवा विशावैनैतानमारयन् । तस्मात्त्वमपि राजेन्द्र भस्म रुद्राक्ष भूषणैः ॥ १०
स्वभटैस्सहितो युद्धे शत्रून्द्रावय निर्भयः । धर्तव्यं भस्मना सार्कं रुद्राक्षं वरभूषणम् ॥ ११
केवलं भस्म वृष्ट्याद्यैः प्रमृष्टं भवति ध्रुवम् । रुद्राक्षस्यतु वृष्ट्याद्यैर्न प्रमोक्षो भवेन्नृप ॥ १२
मृतास्तव भटा एते केवलं भस्मधारिणः । वृष्ट्या प्रमृष्टं तद्भस्म महत्या सत्यमीरितम् ॥ १३
इति तेषां वचश्श्रुत्वा राजा निश्चित मानसः । तथेति तान् प्रणम्याशु रुद्राक्षं भस्मना सह ॥ १४
धृत्वा भटानां रुद्राक्षं दत्वाऽयं भस्मना सह । भूतिभूषित सर्वाङ्गैस्सह रुद्राक्ष भूषणैः ॥ १५
विनिर्गत्य भटैस्सार्धं सर्वैरमित विक्रमः । आजुहावाशु तं सिंहं सिंहं शरभवत् द्विजाः ॥ १६
ततः प्रतस्थे युद्धाय सिंहश्चक्रायुधो महान् । तदाशु तुमुलं युद्धं बभूवहि तयोर्मिथः ॥ १७
ततश्चक्रं मुमोचायं सिंहः किलिकिलारवः । तच्चक्रं वीक्ष्य तान् सर्वान् भस्मरुद्राक्ष भूषणान् ॥ १८
प्रदक्षिणत्रयं कृत्वा प्रणम्य सहसा ययौ । ततः कोपेन सस्मार वरुणं निजतापहम् ॥ १९
वृष्टिश्चासीत्तदा स्थूला सेनयोरुभयोर्द्विजाः । भस्मानि तेषां लुप्तानि सिन्धुसेनानुयायिनाम् ॥ २०
तदन्वीक्ष्यायमयुतचक्रं पुनरपि द्विजाः । अलुप्त भस्मनोऽप्येतान्रुद्राक्षवरभूषणान् ॥ २१
दृष्ट्वा भटान्ययौ नत्वा भीत्या चक्रं द्विजोत्तमाः । दृष्ट्वैतत्सहसा सिंहः पलायनमशिश्रयत् ॥ २२
वनं प्रति महाभीत्या ससेनो ब्राह्मणोत्तमाः । सिन्धुसेनोऽपि सहसा कृत्वा कोलाहलारवम् ॥ २३
गत्वाऽस्य नगरं धीरो देशं स्वीयं विधाय च । स्वदेशवर्तिनां भस्मरुद्राक्षाणि महामतिः ॥ २४
दत्वा तान् भस्मरुद्राक्षधारिणश्च विधाय सः । भस्मरुद्राक्षयोस्स्मृत्वा माहात्म्यमत्रसत्स्वयम् ॥ २५
चिरकालमुषित्वाऽत्र भोगान् भुक्त्वा सुपुष्कलान् । स्वदेशस्थजनैस्सर्वैर्बन्धुभिस्स्वैश्चबन्धुभिः ॥ २६

प्राप कैलासमतुलं विमानमधिरुह्य सः । क्रमेण मोक्षं चापायं ब्राह्मणानामधीश्वराः ॥ २७
स तु सिद्धोऽपि वैराग्याद्रागद्वेषौ विहायच । धृत्वा भस्मच रुद्राक्षं जीवन्मुक्ततया भृशम् ॥ २८
स्थित्वा देहावसानेऽयं मोक्षमापातिदुर्लभम् । तस्मात्सदैव रुद्राक्षं धर्तव्यं भस्मना द्विजाः ॥ २९
रुद्रस्याक्षतया विप्रा रुद्राक्षमिति कीर्तितम् । रुद्राक्षधारके शंभुः परिपूर्णकटाक्षवान् ॥ ३०
रुद्राक्षधारकास्सर्वे रुद्राकाराः प्रकीर्तिताः । रुद्राक्षस्यास्य माहात्म्यं येऽभ्यर्च्यन्ति पठन्ति वा ॥ ३१
श्रावयन्ति नरास्तेवै साक्षाद्रुद्रस्वरूपिणः । आयुरारोग्यमैश्वर्यं पुत्रान् पौत्रानिहाप्यते ॥
अन्ते सायुज्य मोक्षंच लभन्ते नात्रसंशयः । ३२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनविंशोऽध्यायः ॥

---

॥ अथ विंशोऽध्यायः ॥

श्री पञ्चाक्षरीजपपरया कलावत्या तद्भर्तुः दशरथस्य सकल पातक निवृत्तिः ॥

सूतः — भस्मरुद्राक्षयोर्विप्रा माहात्म्यं वर्णितं खलु । पञ्चाक्षरस्य माहात्म्यं शृणुध्वमवधानतः ॥ १
पञ्चाक्षरं महामन्त्रं पञ्चपातकनाशनम् । यस्य वाचकं लब्ध्वा सद्गुरोर्नियमाच्छुचिः ॥ २
जपत्यनुदिनं मर्त्यस्सधन्यो लोकपावनः । न तस्य पापगन्धोऽपि दर्शनात्पापहारिणः ॥ ३
न च भेदोऽस्य महतः परेण ब्रह्मणा सह । अत्रेतिहासं युष्माकं वर्णयामि महीसुराः ॥ ४
पापाद्विमुक्ता मुक्ताश्च बहवोऽस्य मनोर्जपात् । अस्ति काशीपतिः कश्चिद्वज्रबाह्वाह्वयो नृपः ॥ ५
तस्यासीत्कन्यका काचित्कलासु निपुणामती । कलावतीति विख्याता बहुपुण्ययुताहि सा ॥ ६
काशीपतेर्गृहं प्राप कदाचिन्मुनिपुङ्गवः । दुर्वासा कृपया त्वस्यै बहुपुण्यवतीति सा ॥ ७
उपादिशन्महामन्त्रं पञ्चाक्षरमुमापतेः । तदारभ्य शिवे भक्त्या सदा पञ्चाक्षरी रता ॥ ८
तां कन्यां प्रददौ पुण्यां वज्रबाहुर्महीपतिः । राज्ञे दाशरथाख्याय पाञ्चालेशेश्वराय च ॥ ९
स तामुद्वाह्य विधिना स्वदेशमनयत् द्विजाः । पञ्चाक्षरीजपपरां परतत्वविनिश्चयाम् ॥ १०
रात्रौ शयने राजा कामबाणेन पीडितः । आलिङ्गनोत्सुकः प्राह नर्मयुक्तं वचो द्विजाः ॥ ११
सा तस्येङ्गितमाज्ञाय धीधैर्येनमवदद्द्विजाः । नास्ति पञ्चाक्षरी मन्त्रस्तव सर्वाघनाशकः ॥ १२
न निषिद्धपरित्यागो मधुमांसादिभोजिनः । नचान्यनारीविरतिः केवलं भोगिन (देहिन) स्तव ॥ १३
तस्मात्त्वमधुना राजन्मत्स्पर्शाय निस्पृहाम् । इति तस्या वचश्श्रुत्वा राजा मदनपीडितः ॥ १४
आलिङ्गनं तव भवेदिति लोलस्य मे प्रिये । न तिष्ठन्त्यधुना प्राणा विनैवालिङ्गनं तव ॥ १५
तस्मात्प्राणान्प्रयच्छाशु दत्त्वैवालिंगनं त्वया । एवमुक्तेऽपि विमुखीं ज्ञात्वैतां मदनातुरः ॥ १६
सस्वजे तां बलाद्राजा प्रविष्ट इव तद्वपुः । ददह्यङ्गे तदा तस्या वह्निवद्धरणीपतिः ॥ १७
पपात दूरान्मुक्त्वैनां हा हेत्युक्त्वाऽतिदुःखितः । किमेतदिति पप्रच्छ भार्यां वीक्ष्य महीपतिः ॥ १८

(कलावती) :—

तव पञ्चाक्षरी विद्या जपोनास्त्यघनाशकः । सद्गुरुं प्राप्य तां लब्ध्वा पश्चान्मां स्पृश भूमिप ॥ १९
पञ्चाक्षरी परा या मे दहत्यङ्गं नरेन्द्र नृप । इत्थमस्या वचश्श्रुत्वा राजासौ निश्चिताशयः । २०
वरेण्यस्तरसां श्रेष्ठं गर्गं प्राप्य तपोनिधिम् । उपदेशमवापायं श्रीमत्पञ्चाक्षरी मनोः ॥ २१

प्रविष्टायाञ्च विद्यायां दीपाद्दीपमिव द्विजा. । निर्जग्मु काकरूपेण महापातक कोटय ॥ २१
चित्तशुद्धिमवापाथ शुद्धदेही महीपति । अनुज्ञयाप स्वगुरो भवन प्रियमुज्ज्वलम् ॥ २२
भार्यया सह तद्दारभ्यानुदिन द्विजा. । शौडपित्वा महानन्दाद्भोगान् भुक्त्वा यथेच्छया ॥ २४
पुत्रानुत्पाद्य महतश्चिर काल सुखीवसन् । अन्ते च भार्यया साकं कैलासं प्राप्य पावनम् ॥
तत्र स्थित्वा चिर काल मोक्ष चाप द्विजोत्तमा ॥ २५
इति श्री स्कान्दे महापुराणे शकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे विंशोऽध्याय ॥

---

॥ अथ एकविंशोऽध्याय ॥
तुरीयाश्रमतोपि गार्हस्थ्यस्य पञ्चाक्षरात् माहात्म्यम् ॥

सूत —देशोवाङ्गवर्षसंज्ञेऽस्ति माल्य नामपुरं महत् । ब्राह्मण कश्चनास्त्यत्र सुबुद्धाख्यो महामति ॥ १
तस्यात्मजो धर्मनामा चासीद्धर्म इवापर । तद्ग्रामे विपुलाख्योऽन्यो नियमत्यग्रजो महान् ॥ २
तस्यात्मजावुभावास्ता पितृवाक्यानुवर्तिनौ । चन्द्रसेनाह्वयो ज्येष्ठो मृदुश्चन्द्र इवापर ॥ ३
धर्मश्च चन्द्रसेनश्च समवयस्कौ द्विजात्मजौ । उपनीताविमौ काले ब्रह्मचर्यञ्च चेरतु ॥ ४
विद्याभ्यासरतौ नित्य विनीतौ बुद्धिशालिनौ । चिदानन्दाह्वय प्राप्य तावेतौ यतिना वरम् ॥ ५
शुश्रूषमाणौ वचन निशम्यास्य महात्मन । तस्यनुभक्तिसंयुक्तौ सदाचारानुवर्तिनौ ॥ ६
तौ वीक्ष्य स यतिभक्तौ करुणाविष्टमानस । सुवाचैवा ब्रह्मचारिभ्यामाश्रमसत्तमो महान् ॥ ७
गृहीतव्यो विधानेन साक्षान्मोक्षैक साधन । इत्युवाच यतिश्रेष्ठ संश्रयाश्रनतावुभौ ॥ ८
निशम्य वचन तस्य तावेतौ ब्राह्मणौ तदा । स्वपित्रोर्निकट प्राप्य वृत्तान्त समवोचतु ॥ ९
तथेति विपुलो वाच समुतस्य निशम्य स । चकारानुमतिं प्राप्य यतीश सप्रणम्य तम् ॥ १०
अनुज्ञया पितुर्य चन्द्रसेनो महामति । तुरीयमाश्रम प्राप विद्वानभ्यतीश्वरात् ॥ ११
स्वाश्रमानुगुणाचार कामक्रोधादिवर्जित । वशीकृतेन्द्रियग्रामोऽय कन्दमूलफलाशन ॥ १२
गत्वाऽरण्य सुदुष्प्राप तस्थे तत्रामहायवान् । धर्मोऽपि पितर प्राप्य सन्यासो मे भवत्वलम् ॥ १३
सर्वशास्त्रार्थतत्त्वज्ञाच्चिदानन्द यतीश्वरात् । इत्युक्तवानिद श्रुत्वा वचन तत्पिता तदा ॥ १४
सुबुद्ध प्राह धर्म त दु खाकुलितमानस । पुत्रस्त्वमेकपवास्य वशस्य महतो मम ॥ १५
नाप्योरसस्ततस्त्वे भविमन् न सन्यासाश्रमोचित । पुत्रेषु भार्यां निक्षिप्य वलीपलित विग्रह ॥ १६
प्रव्रजेद्ब्राह्मणो नोचेत्पततेव न सशय । तस्मात्त्वमधुना विप्र न सन्यासाश्रमोचित ॥ १७
इत्युक्त वचन श्रुत्वा पित्रा धर्मस्सुदु खित । चिन्तयन्मनसा तस्थे केवल ब्राह्मणोत्तमा ॥ १८
तदानीमागतस्तत्र भृगुर्वै वारुणिर्महान् । शिष्यैस्तु बहुभिस्साक तस्मिन् ग्रामे यतीश्वर ॥ १९
त दृष्ट्वा नवता श्रेष्ठ सुबुद्ध प्राह बुद्धिमान् । धर्मोऽय मत्सुत स्वामिन् ब्रह्मचर्याश्रमे वसन् ॥ २०
तुर्याश्रम समभ्येतु प्रवृत्तो वारितो मया । नैत विना म कुलस्य सुतोऽन्यश्च तपोधन ॥ २१
पुत्रोऽयमेको मतिमान् ममाभूद्बहुकालत । एतस्य बुद्धिरुचिता समुत्पाद्या त्वया यते ॥ २२
इति तस्य वच श्रुत्वा भृगुश्च नवता वर । वीक्ष्य धर्मं निजाभ्यशे वसन्त प्राह सुस्वरा ॥ २३
गृहीतव्यस्त्वया धर्म गृहस्थाश्रम उत्तम । न समास्तस्य सर्वेऽपि यतस्तदुपजीविन ॥ २४

कन्यां कनकसंपन्नामसमानयं गोत्रजाम् । उद्वाह्य स्वोचिताचारं कृत्वा त्वं स्थातुमर्हसि ॥ २५
न विलप्य पितुर्वाक्यं सर्वश्रेयोविधायकम् । भृगोरिति वचश्श्रुत्वा धर्मः प्राह पुनर्वचः ॥ २६
मत्सखा मत्समश्चायाच्चन्द्रसेनो महामतिः । तुरीयमाश्रमं प्राप सुमहत्फलमुत्तमम् ॥ २७
तस्मान्ममाप्यभिरतिस्सर्वथा चरमाश्रमे । इत्युक्तिमस्य संश्रुत्य तर्जयस्तं भृगुस्तदा ॥ २८
स्थातव्यं भवता धर्म गृहस्थाश्रम उत्तमे । पञ्चाक्षरीं परां विद्यां लब्ध्वा त्वं नियमान्वितः ॥ २९
जपित्वाऽनुदिनं तिष्ठ स्वधर्ममनुपालयन् । चन्द्रसेनादपि फलं भविष्यति तवाधिकम् ॥ ३०
श्रीमत्पञ्चाक्षरीमन्त्रजपादनघ केवलम् । इत्युक्त्वोपदिदेशास्य श्रीमत्पञ्चाक्षरीमनुम् ॥ ३१
विवाहं कारयित्वाऽस्य पाणिसंग्राहमार्गतः । निर्जगाम पुनश्शीघ्रं स्वाश्रमं प्रति तापसः ॥ ३२
विवाह्य धर्मो मतिमान् श्रीमत्पञ्चाक्षरीपरः । क्रीडयित्वा तया सार्धं पुत्रानुत्पाद्य कालतः ॥ ३३
तस्थेऽत्र परया प्रीत्या चिरकालं गृहाश्रमी । ततः कालेन तं ग्रामं चन्द्रसेनो यतीश्वरः ॥ ३४
आगत्य धर्मं दृष्ट्वैनं वात्सल्येस्ववशादयम् । न सन्यासाश्रमो धर्मे सर्वदुःखविवर्जितः ॥ ३५
प्राप्तस्त्वया गृही भूत्वा किं फलं लब्धवानसि । हा जन्म नष्टं मतिमन् गृहस्थस्य तवाधुना ॥ ३६
मत्साम्यस्य समो नास्ति सर्वभन्धविवर्जनात् । लब्ध्वाऽहमाश्रमश्रेष्ठं तीर्त्वा शोकपयोनिधिम् ॥ ३७
कृतकृत्योऽभवं तस्मादाश्रमोऽयं महत्तरः । तपोबलान्मम सुरा ब्रह्मादाद्याः कपूर्वकाः ॥ ३८
आकर्षयामि सकलानिन्द्रादीनद्य मत्र च । इति तस्य वचश्श्रुत्वा धर्मोऽयं प्राह तं गृही ॥ ३९
न दुःखं मम यत्किञ्चित् गृहस्थस्यापि मत्यतः । ममापीन्द्रमुखा देवा वशगास्संशयो नहि ॥ ४०
इत्युक्तवन्तं तं वीक्ष्य चन्द्रसेनोऽब्रवीद्वचः । आकर्षयाद्य शक्रमधुना तवमां यत्नात् ॥ ४१
इत्युक्तश्चेन्द्रमस्मार स्वर्गलोकनिवासिनम् । ततस्समाययौ शक्रस्तस्याग्रतो द्विजोत्तमाः ॥ ४२
तं दृष्ट्वोत्थाय सहसा चन्द्रसेनो यतीश्वरः । पूजयित्वा प्रणम्यैनं पुनश्चाप्रेषयद्दिवम् ॥ ४३
ततः पञ्चाक्षरीं जप्त्वा धर्मोऽयं सुरनायकम् । सस्मार मतिमानत्र पञ्चाक्षरमनोर्बलात् ॥ ४४
तदानीमागतस्तत्र शीघ्रं सुरवरो महान् । प्रदक्षिणं विधायास्य प्रणतिञ्चाकरोत् द्विजाः ॥ ४५
सम्भाव्य तं महत्यन्तं प्रेषयामास देवपम् । दृष्ट्वैतच्चन्द्रसेनोऽथ विस्मयाविष्टमानसः ॥ ४६
मानय त्वमिहाद्याज सर्वलोकपितामहम् । इत्युवाच स तं धर्मं पुनश्चाथ भयान्वितः ॥ ४७
स तथेति च धातारं सस्मार निरिलेश्वरम् । स्मृतमात्रेण धातापि समागत्य द्विजोत्तमम् ॥ ४८
प्रदक्षिणं विधायाशु सम्भाव्य स्वपदं ययौ । चन्द्रसेन सर्मीक्ष्याथ धर्मः प्राह महामतिः ॥ ४९
मान्नेतस्मत्स्वयाऽद्य विधिर्योगबलात्परे । इत्युक्तिमस्य संश्रुत्य ससाराग्र तपोधनाः ॥ ५०
तथापि नागतस्तत्र स्मृतोऽपि स विधिस्तदा । तदा सर्वेऽपि तं धर्मं शिवं यथेत्यपूजयन् ॥ ५१
चन्द्रसेनस्समीक्ष्यैवं कृपानुलित मानसः । प्रणम्य धर्मं पप्रच्छ श्रुतोऽयं महिमा तव ॥ ५२
यस्तदाप्यसमां हादरिभ्मन धर्मवर्ता यर । निशम्यास्य वचो धर्मस्सत्यं प्रोवाच तापुरः ॥ ५३
पञ्चाक्षरी महामन्त्रमहिमास्य तपोधन । न समोऽस्य च मन्त्रस्य मन्त्रोऽन्यत्यन्न सर्वथा ॥ ५४
माहात्म्यमस्य कोऽवेत्ति गुरुत्वा देवं इत्यवम् । इति तस्य वचश्श्रुत्वा चन्द्रसेनोपि योगिराट् ॥ ५५
पञ्चाक्षरं महामन्त्रं सम्प्राप्यधर्मतो द्विजा । अधिया तं महामन्त्रमहोरात्रमतन्द्रितः ॥ ५६
धर्मेण सार्धं पुण्यात्मा जीवन्मुक्ततया चिरम् । स्थित्वा शोभितस्ते पद्याद्विधलोकमनुत्तमम् ॥ ५७

प्राप्य स्त्रियाश्च विपुलान् भोगान् भुक्त्वा मुदान्वितः ।
कालेन शिवसायुज्यं धर्मेण सह चाप्तवान् ॥ ५८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकविंशोऽध्यायः ॥

---

॥ अथ द्वाविंशोऽध्यायः ॥

पञ्चाक्षरमहिम्ना मृतानामप्युद्धारणम् ॥

कथयामि कथामन्यां श्रीमत्पञ्चाक्षरी मनोः । शृणुध्वमवधानेन ब्राह्मणानामधीश्वराः ॥ १
कौशिकारण्ये महादेशे पुरं विक्रमसंज्ञकम् । अस्ति तत्र द्विजः कश्चिन्मानदस्सर्ववञ्चकः ॥ २
सोऽयं विद्वेष्य विप्रेन्द्रं सूर्यशर्माभिधं परम् । मुक्तस्वाऽयं वञ्चनामार्गे न शक्यो जेतुमार्जवात् ॥ ३
आलोच्य मनसा चैवं मानदस्तं प्रणम्य तम् । अद्यप्रभृत्यहं दासस्तव शुश्रूषणोद्यतः ॥ ४
अङ्गीकुरुष्व मामद्य शिष्यत्वेनैव केवलम् । इति तस्य वचश्श्रुत्वा तथेत्येनमुवाच सः ॥ ५
तदाप्रभृति विश्वासमेतस्मिन्नाप भूसुराः । रन्ध्रकालं समीक्ष्यार्थं मानदो वञ्चकःस्थितः ॥ ६
पुनः कदाचित्पापात्मा सूर्यशर्माणमाह हि । स्थीयते सावधानेन रात्रावद्य गृहाद्बहिः ॥ ७
स्थातव्यं भवता चान्तर्गृहे निद्रां विहाय च । इत्युक्त्वा मानदस्तस्मै व्याघ्रमाशङ्क्य वञ्चकः ॥ ८
वनप्रदेशग्रामत्वाद् ग्रामस्यास्य महीसुराः । ततस्तु मानद पापी गामेकां तद्गृहाद्बहिः ॥ ९
नीत्वा चर्मेच वैयाघ्रमाच्छाद्यास्याश्शरीरतः । व्याघ्रोऽयमागतः क्रूर इत्युक्त्वाऽन्तर्गृहं तदा ॥ १०
प्राप्यैनं ज्ञापयित्वाशु धनुरादाय सुस्थिरम् । दत्त्वानेन गृहाद्बाह्ये गत्वाऽस्मै तमदर्शयत् ॥ ११
वीक्ष्यैनं सूर्यशर्माऽपि व्याघ्र एवेति निश्चयात् । मुमोच बाण निशितमुपर्यस्य महाबलः ॥ १२
पपात तच्छराविद्धा गौरियं रुधिराप्लुता । महीतले ममाराशु हा द्विजानामधीश्वराः ॥ १३
संस्थाप्य तं पुनस्तत्र मानदः परवञ्चकः । व्याजेन केनचित्पापी गृहस्यान्तरमाप्य सः ॥ १४
शेते यत्र गृहे भार्या सूर्यशर्मद्विजस्य सा । तत्र गत्वाऽऽत्मवत्प्राह तामथ परवञ्चकः ॥ १५
न स्थातव्य त्वयाप्यत्र गेहे चोरभय महत् । त्वत्पुत्रशयनागारे स्थातव्यमवधानतः ॥ १६
त्वद्गृहे भार्यया सार्कं त्वत्पुत्रः स्थातुमर्हति । भार्यया सहितः पुत्रस्सावधानेन तिष्ठतु ॥ १७
इत्युक्त्वा प्रेषयामास पुत्रवेश्मनि तामथ । सूर्यशर्मगृहे पुत्रं प्रापयामास भार्यया ॥ १८
तस्याप्युपदिदेशायं मानदः परवञ्चकः । आहूतो येन केनापि तिष्ठत्वं मौनतो गृहे ॥ १९
सहैव भार्यया विद्वन्नित्युक्त्वायं दुरात्मवान् । यत्रास्ते सूर्यशर्मापि तत्रागत्य महाखलः ॥ २०
जारस्समागतः कश्चिद्गृहे तव दुरात्मवान् । तिष्ठत्यनेन भार्या ते दुष्टा नर्मविधाय सा ॥ २१
दृष्टैतदधुना शीघ्रं मयाप्यत्रागत सखे । तस्मात्त्वदुचिता शिक्षा कर्तव्या मानिना त्वया ॥ २२
इत्युक्त्वा सुदृढ खड्ग दत्त्वैनं गृहमानयत् । स तथैवेति विश्वासादाजुहाव निजस्त्रियम् ॥ २३
भार्यया सह तत्पुत्रश्श्रुत्वाऽप्यस्य गिर तदा । तस्थेऽस्य बोधनान्मौनमासन्नमरणो द्विजाः ॥ २४
तदासौ सूर्यशर्मातु भित्त्वोपरि गृहस्य सः । प्रविश्य खड्गमादाय जार एवेति निश्चयात् ॥ २५
समारयन्निज पुत्र स्नुषामपि महीसुराः । रात्रौ तस्यां व्यतीतायां बहिर्गृहमचार सः ॥ २६
तदा पुत्रगृहाद्भार्या निर्ययौ प्रातरात्मनः । तां दृष्ट्वा सविचारेण त्वरया स्वगृहं ययौ ॥ २७

तत्र पुत्रं मृतं वीक्ष्य स्नुषया खड्गपातनात् । शोकमोहसमाविष्टः पतितस्स भूतले यत ॥ २८
उच्चैरुवाच दुःखेन पञ्चाक्षरमनुत्तमम् । पुनश्च धैर्यमास्थाय गेहान्निर्गत्य बाह्यतः ॥ २९
ददर्श शस्त्रनिहतां गामयं रुधिरप्लुताम् । दृष्ट्वैतामपि सोऽत्यन्तं दुःखाकुलितमानसः ॥ ३०
तदों नमश्शिवायेति जजाप परमं मनुम् । ततस्तु मानदश्शीघ्रं गत्वाऽयं ब्राह्मणान्तिकम् ॥ ३१
सूर्यशर्मा व्यतीतायां रात्रौ पुत्रं स्नुषामपि । गामप्येकां महाकोपादमारयदसौ द्विजाः ॥ ३२
तस्मादेनं महापापं बहिष्कृत्य द्विजाधमम् । उच्चाटयत विद्वांसो ग्रामादस्माद्दुराशयम् ॥ ३३
मानदस्य वचश्श्रुत्वा सर्वे तद्ग्रामवासिनः । दृष्ट्वैतत्कोपसंयुक्ता महापापभयादमी ॥ ३४
किं कृतं भवता सूर्यशर्मन् पापस्य कारिणा । त्वं गच्छास्माद्वनं ग्रामादधुना पापगौरवात् ॥ ३५
अन्यथाज्ञा भवेद्भूतं ब्राह्मणापशदाधुना । इति तेषां वचश्श्रुत्वा सूर्यशर्माऽब्रवीद्वचः ॥ ३६
कृतमेतन्मया विप्राः कर्म न ज्ञानतो निशि । अज्ञानेन कृतं पापमिदं सत्यं समीरितम् ॥ ३७
प्रातर्दृष्ट्वा मृतानेतान्मया पञ्चाक्षरी मनुः । जप्तस्तदधुना पापगन्धो नास्ति मम द्विजाः ॥ ३८
इत्थं निशम्य वचनं प्राहुरेनं द्विजाः पुनः । नास्ति पापं यदि तदा त्वया दत्तं तृणं वृषः ॥ ३९
भक्ति शीघ्रं समागत्य धर्मोऽयं प्रोच्यते यतः । इति तेषां वचः श्रुत्वा सूर्यशर्माब्रवीद्वचः ॥ ४०
चेतनोऽयं वृषोऽस्तीति नैतत्संशोधनं द्विजाः । किन्तु केदारनाथस्य प्राकारे ये वृषाः स्थिताः ॥ ४१
कृत्रिमास्ते समागत्य मया दत्तं तृणं यदि । भक्षयन्ति तदैवास्तु मम पापस्य शोधनम् ॥ ४२
इति तस्य वचश्श्रुत्वा तथेति ब्राह्मणास्तदा । प्रीत्या तस्थुस्समीक्ष्यैतदेनस्संशोधनं द्विजाः ॥ ४३
प्रेषयित्वा स्वमनुजांस्तृणान्यानीय भूसुराः । स्थाप्य केदारनाथस्य सन्निधौ तान्ययं पुनः ॥ ४४
बद्धाञ्जलिपुटो भूत्वा शिवमन्त्रमनुस्मरन् । ये वृषा गोपुरे शंभोः प्राकारेचैव ये वृषाः ॥ ४५
चित्रेषु ये वृषास्सर्वे शिवध्यानपरायणाः । पञ्चाक्षरी परा नित्यं परतत्त्वैकमानसाः ॥ ४६
हत्या समुद्भवो दोषो नास्ति मे यदि सर्वथा । पञ्चाक्षरीमहामन्त्रजपादद्य महौजसः ॥ ४७
तृणान्येतानि खादन्तु भवन्तस्ते समागताः । इत्युक्त्वाऽथ जजापाशु पञ्चाक्षरमनुत्तमम् ॥ ४८
तत्र तत्र स्थितास्सर्वे श्रुत्वैतद् वृषभास्तदा । अवरुह्य समभ्येत्य चखादुस्तानि सुस्वराः ॥ ४९
विसृज्य गोमयञ्चाथ ननन्दितस्तोभकैर्द्विजाः । वीक्ष्य तान् ब्राह्मणानेनं समाप्राय प्रदक्षिणात् ॥ ५०
निवृत्य गत्वा सस्थाने क्षणात्तस्थुर्द्विजोत्तमाः । दृष्ट्वैतद् ब्राह्मणास्सर्वे भयाकुलितमानसाः ॥ ५१
प्रणम्यैनं महात्मानं शुद्धमस्मान्महौजसः । क्षमस्वागस्त्वमस्माकं महात्मन् ब्राह्मणोत्तम ॥ ५२
माहात्म्यं तव को वेत्ति मन्त्रस्य महतस्तथा । इति स्तुत्वा महात्मानं तस्थुस्तेऽञ्जलिपाणयः ॥ ५३
तदाऽस्य भार्या प्रोवाच साध्वी वचनमुत्तमम् । पञ्चाक्षरीजपादद्य तृणानि वृषभा अमी ॥ ५४
भक्षयन्तिस्म तत्स्वामिन् अज्ञाननिहतं स्नुषाम् । उज्जीवयाशु गामेनां पञ्चाक्षरजपात्प्रभो ॥ ५५
निशम्यास्या वचस्सर्वे तथेत्यूचुर्द्विजा अमी । कोऽतिभारस्त्वयैतेषां पुनरुज्जीवने द्विज ॥ ५६
उज्जीवयाशु माहात्म्यान्मन्त्रस्यानघ तान् पुनः । इति तेषां वचश्श्रुत्वा पुनरप्येव भूसुरः ॥ ५७
पञ्चाक्षरीमहामन्त्रं पञ्चपातकनाशनम् । तज्जापकानां न पुनर्जनिरस्ति यदि ध्रुवम् ॥ ५८
तदा मृतमिदं स्वापादिवोत्तिष्ठतु शीघ्रतः । इत्युक्त्वाऽञ्जलिहस्तोऽयं जजाप परमं मनुम् ॥ ५९
तदानीमुत्थितः पुत्रः स्नुषा गौरपि सा द्विजाः । दृष्ट्वैतदद्भुतं सर्वे ब्राह्मणास्तं महीसुरम् ॥ ६०
शिव एवेति निश्चित्य प्रणम्य मनसा सह । अनुज्ञया ययुस्सर्वे स्वगृहाणि महीसुराः ॥ ६१

सूर्यशर्मा पुनरयं जपन् पञ्चाक्षरीमनुम् । बहुकालं परानन्दात्कृत्वा भोगान्यथेप्सितान् ॥ ६२
सदारसुतपश्वादि स्वजनैस्सहितः पुनः । देवर्षीणां गणैर्जुष्टं विमानमतिशोभनम् ॥ ६३
आरुह्य परया प्रीत्या देवदुन्दुभिनिस्वनैः । विकीर्यत्पुष्पवृष्ट्यौघैश्शिवलोकं ययौ द्विजाः ॥ ६४
तत्र स्थित्वा चिरं कालं प्रीत्या रुद्रगणैस्सह । सायुज्यं ब्रह्मणश्शंभोरवाप ब्रह्मणोत्तमाः ॥ ६५
य एतस्य विरोध्यासीन्मानदः परवञ्चकः । स तु भीत्याशु तं देशं मुक्त्वा देशान्तरं गतः ॥ ६६
निस्स्वो विधुरो नित्यमन्तस्ताप समन्वितः । कृमिक्लिन्नशरीरोऽयं व्याधिना महता हतः ॥ ६७
चिरकालं मृतः पापी नरकेऽद्यापि बाध्यते । तस्मात् द्विषन्ति ये मर्त्या मर्त्यं पञ्चाक्षरीपरम् ॥ ६८
महापातकसंयुक्तास्ते यान्ति नरकं ध्रुवम् । पञ्चाक्षरीपराणां ये सुहृदः पुण्यगौरवात् ॥ ६९
यान्ति ते परया प्रीत्या शिवलोकमनुत्तमम् । तस्मात्पञ्चाक्षरीमन्त्रः पञ्चपातकनाशनः ॥
जप्यो नित्यं प्रयत्नेन सर्वैरेव तपोधनाः ॥ ७०

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्वाविंशोऽध्यायः ॥

---

॥ अथ त्रयोविंशोऽध्यायः ॥

अज्ञानतोपि शिवनाम उच्चारण वैभवात् महा पातकिनोपि कैलासप्राप्तिः ॥

पञ्चाक्षरस्य माहात्म्यं वर्णितं खलु भूसुराः । शिवनाम्नांच माहात्म्यं शृणुध्वमवधानतः ॥ १
शिवः पशुपतिश्शंभुश्शङ्करश्चन्द्रशेखरः । मृत्युञ्जयो विरूपाक्षो नीलकण्ठो महेश्वरः ॥ २
भवो भर्गो महादेवो हरो रुद्र उमापतिः । एवमादीनि नामानि सन्ति दिव्यान्युमापतेः ॥ ३
तेषु चैकमनेकं वा यो जपत्यनिशं नरः । स एव धन्यः पुण्यात्मा वन्द्यश्च सकलैस्सुरैः ॥ ४
स भोगान् विपुलान् भुक्त्वा कैलासं प्राप्य भूसुराः । उषित्वाऽत्र चिरं कालं सायुज्यं ब्रह्मणः परम् ॥ ५
प्राप्नोति सत्यमेतद्वो वर्णितं ब्राह्मणोत्तमाः । ज्ञात्वा ये शिवनामानि पविशाण्युच्चरन्ति ते ॥ ६
शिवलोकं समासाद्य शिवसायुज्यमुत्तमम् । यान्तीत्येतत् द्विजश्रेष्ठा नैवाश्चर्यमिदं ध्रुवम् ॥ ७
उच्चार्याज्ञानतश्शंभोश्शिवलोकमवापिरे । बहवस्तेषु युष्माकं कतिचिद्वर्णयामि तान् ॥ ८
देशे गौतमसंज्ञेऽस्ति कन्दुकाख्यं महत्पुरम् । तत्रास्ति कश्चिद्व्याळाख्यो ब्राह्मणः पापवर्जितः ॥ ९
तस्यासीत्तनयः कश्चिद्वीर्यवान् पापकर्मकृत् । मद्यपायी महामायी मांसमुख्याद्यविक्रयी ॥ १०
मांसादिविक्रयी द्रव्यलोभाद्दोषदुराशयः । मुक्त्वाऽयं ब्राह्मणाचारं हीनाचाररतोऽवसत् ॥ ११
तस्यैवं वर्तमानस्य चिरकालं दुरात्मनः । समाययावन्त्यकालः क्षणादेव महीसुराः ॥ १२
पुत्रास्तदानीमेतस्य शयनाभ्याशमेत्य ते । एवमूचुः केन दातव्यं कियद्वस्माभिरच्युत ॥ १३
उत्तमर्णश्च कस्मात्ते अधमर्णः कुतो यथा । इति तेषां वचश्श्रुत्वा मांसविक्रयणोद्भवम् ॥ १४
उक्त्वा द्रव्यं पुनर्मद्यविक्रयी तद्धनंच सः । मद्यं कस्यचिदन्त्यस्य ऋणं शिवमिति ब्रुवन् ॥ १५
अत्यजत्प्राणमद्यस्तदानीं ब्राह्मणोत्तमाः । बद्धुं तदागतास्तूर्णं यमदूता भयानकाः ॥ १६
दुद्रुवुस्ते शिवगणास्तान् सन्ताड्य निजायुधैः । कालं संप्राप्य ते दूताः प्रोचुर्वृत्तान्तमञ्जसा ॥ १७
स तु निर्गत्य सहसा सेनया परिवारितः । अभ्याशमाययौ भीमो गणानां परमेशितुः ॥ १८
समायान्तं महाघोरं दृष्ट्वा ते शिवकिङ्कराः । सन्ताड्य तस्य तास्सेना द्रावयित्वा बलादमुम् ॥ १९

तदीयेनैव बध्वा तं पाशेन शिवकिङ्कराः । प्रधानपुरुषं ज्ञात्वा यमस्यैनं महाबलाः ॥ २०
श्रीमत्कैलासशैलस्य गुहां निन्युरघो द्रुतम् । दृष्टो यदि यमस्तस्मैतैर्हन्यते नात्र संशयः ॥ २१
ज्ञात्वा प्रधानं तं कालं भाषणस्य ददुर्द्विजाः । बध्वा तं कुत्रचिद्वृक्षे विधायाश्वस्य पालकम् ॥ २२
स्वयमेते महात्मानो वीर्यवन्तं द्विजोत्तमम् । शिवलोकं समानीय तत्र देवस्य सन्निधौ ॥ २३
भुक्त्वा वयुर्निजावासमाज्ञया परमेशितुः । सेवयित्वा महादेवं तदर्थे सारूप्यभागयम् ॥ २४
निशम्य कालवृत्तान्तं यमो दूतमुखैस्तदा । भजोवतीति विख्याते शिखरे मेरुपर्वते ॥ २५
समासीनं महादेवं सेवयित्वा गतो यमः । दुःखेन महताऽविष्टो चिन्ताक्रान्तमानसः ॥ २६
कैलासं त्वरया प्राप्य नन्दिकेशं व्यजिज्ञपत् । अथ नन्दी यमं प्राह भयाविष्टं समीक्ष्य सः ॥ २७
प्राणात्ययेऽयं पुण्यात्मा शिवनाम सुपावनम् । जगाद तेन पुण्येन महता शिवरूपताम् ॥ २८
मवाप नात्र सन्देहः कर्तव्यो भवता यम । ज्ञानतोऽज्ञानतोवापि शिवनामाघहारकम् ॥ २९
ये वदन्ति महात्मानः प्राणापक्रमणे यम । न तान्प्रत्यधिकारस्ते शंभोराज्ञेदृशीखलु ॥ ३०
अर्थेह्यननुभूते स्यात्सन्देहः प्राणिनां यम । अनुभूतं त्वया पूर्वं नामोच्चारण वैभवम् ॥ ३१
किं विस्मृतं तदधुना त्वं स्मर्तुं पुनरर्हसि । पूर्वं किराते लुब्धाधे महापापे मृते तदा ॥ ३२
चित्रगुप्तं समाहूय धर्माधर्मविचारणा । कृताद्धि भवता धर्मं मार्गनिष्ठेन सन्ततम् ॥ ३३
चित्रगुप्तस्ततोवाच विचार्य मनसा भृशम् । नैतस्य धर्मलेशोऽपि घातकस्यात्र देहिनाम् ॥ ३४
सोऽयं प्रतिदिनं प्रातरुत्थाय धनमग्यगः । हन्तिकांश्चिद्दुराचारः पथिकान् द्रव्यलोभतः ॥ ३५
तथा बध्वा परान् पापी नयत्यनुदिनं यम । परान् प्रहरति क्रुद्धो व्याधैर्बहुभिरावृतः ॥ ३६
आहरैनं दृढं बध्वा प्रहरैनं कशैर्भृशम । खड्गेन संहरास्यैनमिति निष्ठुरभाष्ययम् ॥ ३७
मद्यशायी महापापी मांसभुग्जद गर्वितः । बहुनात्र किमुक्तेन नास्ति पुण्यं दुरात्मनः ॥ ३८
तदाशु शिक्षा कर्तव्या भवता यमकिङ्करैः । प्राणोत्क्रमणकालेऽपि प्रहराहरसंहर ॥ ३९
इत्युक्त्वा निजपुत्राणां जीवोपायं तु पृच्छताम् । ममारायं महापापी सर्वदा सर्वघातकः ॥ ४०
इति तस्य वचश्श्रुत्वा मनसा त्वं विचार्य च । नैनं प्रत्यधिकारोऽस्ति चित्रगुप्त महामते ॥ ४१
सारूप्यभाजनं शंभोरयं पुण्यविशेषतः । रे रे दूता दुरात्मानो मुञ्चध्वैनं गच्छताधुना ॥ ४२
वन्द्योऽयं मम पुण्यात्मा सर्वदा शंभुबुद्धितः । प्राणोत्क्रमणकालेऽयं प्रहराहर संहर ॥ ४३
इति -ब्रुवन्ममाराशु नामोच्चार्य महेशितुः । इत्युक्त्वा त्वं महाभीत्या प्रणेमिथ तदा यम ॥ ४४
तदत्र भवता शंभोर्नामस्मरणे वैभवम् । स्मर्तव्यं सावधानेन स्थातव्यञ्चाप्रमादिना ॥ ४५
तं व्याधं दिव्यमारोप्य विमानं शाङ्करा गणाः । श्रीमत्कैलास मचलं नीत्वा देवस्य सन्निधौ ॥ ४६
स्थापयित्वा यम गतास्तव दूताः पुरा खलु । इत्थं निशम्य वचनं शैलादेर्धर्मराडयम् ॥ ४७
मयाऽत्र मस्थितं स्वामिन् गतं सेवार्थमीशितुः । नयाऽधिकारः कालोऽसौ न जानातीदृशं प्रभो ॥ ४८
नामोच्चारणमाहात्म्यं शङ्करस्य परात्मनः । तद्रक्ष भगवन् कालं बाध्यमानं स्वकैर्गणैः ॥ ४९
यमस्य वचनं श्रुत्वा नन्दी प्राह पुनर्यमम् । महाकालगणाः कालं बध्वा निन्युर्यमाधुना ॥ ५०
महाकालस्य निकटं गत्वा त्वं संप्रणम्य तम् । उक्त्वाऽस्य मदनुज्ञाञ्च कालं मोचय शीघ्रतः ॥ ५१
इत्युक्त्वा प्रेषयामास नन्दी तं समवर्तिनम् । स तथेति विनिर्गत्य महाकालं गणाधिपम् ॥ ५२
संप्राप्य भीत्या परया प्रणम्याञ्जलिपूर्वकम् । वृत्तान्तं निखिलं चोक्त्वा कालं मोचयितुं यमः ॥ ५३

गणाध्यक्षस्य वचनं नन्दिकेशस्य चाब्रवीत् । निशम्यैतं महाकालो यममेनञ्चुकोप हि ॥ ४४
विस्मृतं किं यम पुरा वृत्तमद्य दुराशय । एतावदस्य वचनं निशम्याथ यमोऽवदत् ॥ ४५
न विस्मृतं महाकाळ पुरावृत्तं मया प्रभो । इदानीमपि तिष्ठामि स्मृत्वैवैतद्गणाग्रणी ॥
इत्युवाच महाभीत्या ब्राह्मणानामधीश्वरा ॥ ४६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रयोविंशोऽध्यायः ॥

---

॥ अथ चतुर्विंशोऽध्यायः ॥

सङ्करजातीयस्य नामकीर्तनेन शङ्करनामोच्चारण फलम् ॥

ऋषय —

महाकालेन किं पृष्ठं पुरा वृत्तं तपोधन । न विस्मृतमिति प्राह यमस्तद्वक्तुमर्हसि ॥ १

सूत —

द्विजस्सौराष्ट्रदेशेऽस्ति तीव्रदारयो महाधन । तस्यासीत्तनय कश्चित्कौशिकाख्यो महाबल ॥ २
स्तेयी दुराशयो नित्यं मधुमांसादि भोजन । सञ्चरत्यनिशं शूद्रैस्सवयोभिश्च तादृशैः ॥ ३
स्नेह कृत्वाऽथमन्येन केनचित्पापकारिणा । चण्डालोचितमाहारं भुङ्क्ते लज्जा विवर्जित ॥ ४
सोऽथ कदाचिच्चण्डाळनारीं रूपोपशोभिताम् । वर्तयन्ननया साकं प्रस्थितस्सञ्चवर्तना ॥ ५
दृष्ट्वैनं तत्पतिं पापं चण्डाळ क्रोधविह्वळ । वध्वा तया दुराचारं सन्ताड्य निजभार्यया ॥ ६
चिच्छेद शेफं पापस्य खड्गेन निशितेन स । तद्दु खेन चिरं कालं स्थित्वा पश्चान्ममार ह ॥ ७
बबन्धुरेनं विप्रेन्द्रा यमदूतास्तदा भृशम् । ततश्शिवगणाश्शीघ्रं संप्राप्यैनं तु कौशिकम् ॥ ८
दिव्यं विमानमारोप्य कैलासे शिवसन्निधौ । स्थापयित्वा यमस्यैतान् दूतान् सन्ताड्य निर्ययु ॥ ९
तदैव यमदूतास्तु यमं प्राप्याति दु खिता । वृत्तान्तं कौशिकस्यैतदुक्त्वा स्वेषाञ्च ताडनम् ॥ १०
रुधिराप्लुत सर्वाङ्गा रुरुदुर्गद्गदस्वरा । श्रुत्वै तेषाञ्च वचनं प्रतस्थे सहसा यम ॥ ११
शिवान्तिकं समुद्दिश्य श्रीमत्कैलास पर्वते । स ददर्श महाकाळं गणानामग्रणीं यम ॥ १२
अधस्तादचलेशस्य समासीनं वरासने । तं दृष्ट्वा कौशिकस्यैतद्वृत्तान्तमभिधाय स ॥ १३
पुनस्स्वकीयदूताना पीडामप्यवदत् द्विजा । श्रुत्वैतत्समहाकाळ कोपेन महता युत ॥ १४
नैतस्य पापलेशोऽपि कौशिकस्य महात्मन । बाल्येऽथ क्रीडयामास शम्भुनाम्ना द्विजोत्तम ॥ १५
स तं शम्भुर्महात्माऽस्य प्रियबकवराह्वयम । चकार यामकाल तद्द्वौ नाम महेशितु ॥ १६
एष स्वसुहृदा शम्भुस्सकेतेन महामति । चकार शम्भोर्नामानि पवित्राणि महामति ॥ १७
यस्मादयं त्र्यम्बकाख्या दधौ पुण्या तु कौशिक तस्मा देतस्य कैलास प्राप्ति स्सत्य मयेरितम् ॥ १८
महाकाळयमश्रुत्वाप्येवं मूढो यम पुन । नैतावताऽस्य पापस्य श्रीमत्कैलास पर्वते ॥ १९
सन्निधौ देवदेवस्य निवासस्सम्भविष्यति । इत्युक्त्वोल्लङ्घ्य वचनं महाकाळस्य धर्मराट् ॥ २०
प्रतस्थे तं विहायाशु महादेवस्य सन्निधिम् । महाकाळस्तदा कोपादेनमाहूय भूस्तुरा ॥ २१
उल्लङ्घ्यते मम वचनं यथा यम दुरात्मवान् । इत्युक्त्वा ताडयामास निजदण्डेन वक्षसि ॥ २२

दण्डेन ताडितस्तस्य मूर्छामाप यमस्तदा । रुधिराप्लुतसर्वाङ्गो महापर्वत सन्निभः ॥ २३
तत्याज मूर्छां तां कालः क्षणेनायं यदा तदा । समाययौ विधाताऽत्र सेवां कृत्वा महेशितुः ॥ २४
वृत्तान्तमेतच्छ्रुत्वाऽसौ महाकालं प्रणम्य सः । क्षन्तव्योऽयं त्वया मन्तुं र्यमस्य गणनायक ॥ २५
इत्युक्त्वा प्रार्थयामास बहुवारं द्विजोत्तमाः । अधुना कौशिकदर्शमोक्षसन्निधौ वर्तते महान् ॥ २६
शिवस्य देवदेवस्य नाम्नां माहात्म्यमुत्तमम् । कोवेत्ति मुक्त्वा देवेशं नीलकण्ठमुमापतिम् ॥ २७
तस्मात्त्वमद्य प्रभृति मामप्रमादी भवान्तक । इत्युक्त्वा मोचयित्वैनं जगाम स पितामहः ॥ २८
तस्य तद्वचनं श्रुत्वा मोचितोऽयं यमस्तदा । महाकालं प्रणम्याशु स्वपदं प्राप भूसुराः ॥ २९
तदेतदन्तकेनोक्तं न विस्मृतमिति द्विजाः । इत्येवं सोऽन्तकः प्राह महाकालं प्रणम्य सः ॥ ३०
नवाधिकारी कालोऽयं न जानाति किमप्यतः । यद्भस्तवगणैस्स्वामिन्मोचितव्यस्त्वया प्रभो ॥ ३१
यथाऽहं कृपया पूर्वं मोचितो भवता प्रभो । अन्तकस्य वचश्श्रुत्वा महाकालो महाबलः ॥ ३२
प्रेषयित्वा गणं कञ्चिन्मोचयामास भूसुराः । महाकाल गणैर्मुक्तः कालस्संप्राप्य तं यमम् ॥ ३३
तदैतौ तं महाकालं प्रणम्य भयकंपितौ । प्रस्थितौ स्वपदायाशु प्राप्यानुमतिमस्य च ॥ ३४
मध्ये मार्गे यमं प्राह कालोऽयं तद्भटाधिपः । ममाधिकारो भवतो निकटे मास्तु संप्रति ॥ ३५
पश्यांगं रुधिराप्लुतं सर्वत्रैव व्रणांकितम् । गच्छेदेतत्क्षणे प्राणो न मोक्षो यदि मे भवेत् ॥ ३६
इति कालस्य वचनं निशम्याह यमः पुनः । किमर्थं शांकरान् दृष्ट्वा गणांस्त्वं कालमूढधीः ॥ ३७
न त्यक्तवान् कौशिकं तं धर्मिष्ठं पापमेववा । दृष्ट्वा शंभुगणान्यद्वा मुक्त्वा तंच शिवप्रियम् ॥ ३८
वृत्तान्तमुक्तं यदि चेत्पश्चात्तदुचितां क्रियाम । नाहं करोमिवा काल फलं भुक्तमतस्त्वया ॥ ३९
पुरा मयाधिकारस्थादज्ञात्वा शाम्भवं भयम् । कन्तुकाख्ये महादेशे कदलीपुरमद्भुतम ॥ ४०
नन्दकः क्षत्रियस्तत्र तद्देशाधिपतिर्महान् । तस्यास्ति भार्या दुश्शीला दर्शनात् कामदा नृणाम ॥ ४१
रूपलावण्य संपन्ना कामदाख्या महान्विता । सैषा नित्यं दुराचारा व्यभिचाररता भृशम् ॥ ४२
मुक्त्वा राजानमपरं पुरुषं यत्र कुत्रच । सुन्दरं रमते दृष्ट्वा स्वयमाहूय कामदा ॥ ४३
चण्डालानपि पापिष्ठा रमते मानवर्जिता । शूद्रं दुर्बुद्धिमाख्येयं क्रीडयित्वाऽमुना सह ॥ ४४
दधौ गर्भं पुनश्चैनं मुक्त्वा प्राप परं द्विजम् । वसुवेधीति विख्यातं पापशेषेण सा पुनः ॥ ४५
क्रीडयित्वाऽमुना पापा पूर्णगर्भाऽसूतसुतम् । वसुवेधी मृतः पापी चिरकालेन भूसुराः ॥ ४६
ततो निर्गत्य सा पश्चान्मुक्त्वा पत्रं शिशुं स्वकम् । शूद्रं तमाप दुर्बुद्धिं प्राक्तनं दुष्टधीरियम् ॥ ४७
क्रीडयित्वा चिरं कालमनेनैषा दुरात्मना । महापापानि भूरीणि चकार किल कामदा ॥ ४८
पुनर्नावं समारुह्य तेन साकं दुरात्मना । द्वीपान्तरं समभ्येतुं ययावंभोधिमध्यमम् ॥ ४९
वायुना ताडिता नौस्सा भिन्नांभोनिधि मध्यगा । तदा ममार पापिष्ठा तेन साकं पयोनिधौ ॥ ५०
यमदूतास्तदा बध्वा तेनैनां नरकार्णवे । निपात्य मारकैर्घोरैरावध्नंस्तत्क्षणात् किल ॥ ५१
तदानीं शाङ्कराः काल समागत्य महाबलाः । सन्ताड्य स्वायुधैर्घोरैर्मोचयित्वैनमञ्जसा ॥ ५२
दिव्यं विमानमारोप्य पशुद्भावपदं प्रति । तदा शिवगणान् दृष्ट्वा सोऽहं क्रोधसमन्वितः ॥ ५३
किमर्थमेनं पापिष्ठं पापामेनांच भो गणाः । दिव्यं विमानमारोप्य कृपया नयथाधुना ॥ ५४
एवं वदुवचोऽश्रौचमधिकारो नवो यतः । श्रुत्वा मदीयवचनं ते सर्वे क्रोधविह्वलाः ॥ ५५
बध्वा मां दृढपाशेन संताड्य भृशमुद्भटाः । अधस्ताच्चक्रवाळस्य कोटरे कुत्रचिद् गृहे ॥ ५६

निपात्याधोमुखं भूतमेकमाहूय दुर्बलम् । दत्वा मदधिकारं ते तस्मै भूताय काल हा ॥ ५७
तं शूद्रमेनां पापिष्ठां निन्युर्हि शिवसन्निधिम् । तस्यतुस्तत्र तावेतौ श्रीमत्कैलास पर्वते ॥ ५८
सेवार्थं चन्द्रचूडस्य विधिविष्णू समाहितौ । वृत्तान्तमेतत्प्रोवाच चित्रगुप्तो मखद्विषम् ॥ ५९
श्रुत्वा हरिस्तदा दुःखाद्ब्रह्मणा सहितः स्वयम् । प्रतस्थे बोधितुं शंभुं शिवलोकं प्रति द्रुतम् ॥ ६०
तत्र विघ्नेश्वरं दृष्ट्वा कैलासे तौ सुराधिपौ । ऊचतुस्तं प्रणम्याशु वृत्तान्तं मम मन्दतः ॥ ६१
श्रुत्वैतन्मम वृत्तान्तं ज्ञात्वा विघ्नेश्वरस्तदा । कोपेन महता युक्तः प्रोवाच वचनं द्विजाः ॥ ६२
साकं शिवगणैरेषः प्रवृत्तः कलहाय हि । यमस्तदुचिता शिक्षा कृतातैरस्य दुर्मतेः ॥ ६३
इति विघ्नेशवचनं निशम्यैतौ भयान्वितौ । क्षमस्व मन्तुमेनं त्वं सर्वविघ्नाधिप प्रभो ॥ ६४
न जानाति यमो मूढो नूनमोऽयं दुराशयः । इत्युक्त्वा तौ गणाध्यक्षं नेमतुर्दण्डवत्क्षितौ ॥ ६५
ततः प्रसन्नः प्रोवाच भगवान् गणनायकः । वीरभद्रगणैरेव यमो नीतो महाबलैः ॥ ६६
चक्रवाळगिरावास्ते संप्रत्यप्येस शीघ्रतः । आनय त्वमिहेदानीं यमभेन सुदुःखितम् ॥ ६७
अचलाख्यं ततो भूतमेवमुक्त्वा गणेश्वरः । प्रेषयामास भगवान् दयया काल केवलम् ॥ ६८
इति तस्य वचश्श्रुत्वा भूतो निर्गत्य शीघ्रतः । आनयामास मां काल गणेशस्यान्तिकं द्रुतम् ॥ ६९
विघ्नेश्वरं प्रणम्याहं पार्श्वे यस्याऽन्तिकेऽवसम् । तदा प्रोवाच भगवान्मां वीक्ष्यापद्मसन्निभ ॥ ७०
त्वयैतौ पीडितौ पापबुध्या यम नचान्यथा । न च जानासि सुकृतं पुण्ययोस्तयोर्यम ॥ ७१
दुर्बुद्धेरस्य शूद्रस्य बीजं गर्भे दधावियम् । पुनश्च विप्रं प्राप्यैषा वसुबोधिं महाविटम् ॥ ७२
असूत पुत्रं तद्गेहे कालपाकेन वै यम । ममार स यदा विप्रस्तदैषा तं शिशुं स्वकम् ॥ ७३
मुक्त्वा द्विजगृहे प्राप दुर्बुद्धिमियमन्तक । ववृधे विप्रगेहेऽसौ शिशुस्त्वाहसुतोऽन्तक ॥ ७४
तस्थे कृषिञ्च कुर्वाणो विप्रवेश्मनि शूद्रवत् । विप्रस्य वसुबोधेर्या भार्याऽऽसीन्मानिनी यम ॥ ७५
सा तं द्विपश्च पुत्रत्वात्संकरत्वाच्च संकरम् । नाम चक्रेऽर्थवत्तस्य शूद्रपुत्रस्य सत्यवाक् ॥ ७६
वदन्ति तमिमं लोकास्सत्पुत्पन्नाहि शाकरम् । यसादय शंकराख्यां दधावद्यानयोस्सुतः ॥ ७७
तेन पुण्येन महता कैलास प्राप्तिरेतयोः । शिवस्य देवदेवस्य नाम्नां सर्वाघहारिणाम् ॥ ७८
माहात्म्यं तत्वतो वेत्ति कोवा यम सुशोभनम् । ज्ञात्वा ये तु महादेव नाममाहात्म्यमुत्तमम् ॥ ७९
पुत्रानुत्पाद्य विधिना नाम चक्रुर्महेशितुः । तेषां फल मया वक्तुं न शक्यं वर्षकोटिभिः ॥ ८०
इत्थं निशम्य वचनं विघ्नेशस्यामितौजसः । अथकंपितसर्वाङ्गो गन्तुं स्मृत्वा स्वकं तदा ॥ ८१
प्रणम्य दण्डवत्प्रीत्या भूतले काल भक्तितः । ममापराधो देवेश क्षन्तव्योऽयं गणेश्वर ॥ ८२
एवं संप्रार्थयन् भक्त्या दयालु भक्तवत्सलम् । प्रार्थितो ब्रह्मविष्णुभ्यामेवमेव प्रणम्य सः ॥ ८३
मामाह वीक्ष्य कृपया काल भीतमनाथवत् । इतः परं त्वं मतिमान् समीक्ष्य नामवैभवम् ॥
जगत्यत्रमहेशस्य तिष्ठस्वेतन्मयेरितम् ॥ ८४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुर्विंशोऽध्यायः ॥

---

॥ अथ पञ्चविंशोऽध्यायः ॥

शिवनाममहिम्ना सान्दीपिनि मुनिपुत्रोज्जीवनम् ॥

एवमुक्त्वा गणाध्यक्षो मत्पदञ्च यथापुरा । दत्त्वा मां प्रेषयामास भूतमाहूय विघ्नराट् ॥ १
ततोऽहं ब्रह्मविष्णुभ्यां प्रणम्य गणनायकम् । स्वपदं प्राप्य तिष्ठामि चाप्रमादेन सन्ततम् ॥ २
तदद्य भवता काल स्थातव्यं ह्यप्रमादिना । उच्चरन्तिच ये मर्त्याश्शिवनाम सुपावनम् ॥ ३
ज्ञानतोऽज्ञानतोवापि नास्ति तेषामघं ध्रुवम् । सत्यं सत्यं पुनस्सत्यमनुभूतं मयेरितम् ॥ ४
नोचेन्मम तवाप्येषामाज्ञा भवति शाङ्करी । मया प्रतिदिनं सेवा प्रतीक्ष्यावसरं विभोः ॥ ५
कर्तव्या ब्रह्मविष्णुभ्यां तत्रास्त्यवसरो मम । अधिकारस्त्वया कार्यस्सावधानेन सन्ततम् ॥ ६
तस्मान्मम वचश्श्रुत्वा स्थातव्यं ह्यप्रमादिना । बिभर्ति ये महादेवनाम सर्वाघनाशनम् ॥ ७
मातरं पितरं दृष्ट्वा तस्य तं गच्छ दूरतः । तस्मात्सर्वप्रयत्नेन स्थातव्यं ह्यप्रमादिना ॥ ८
इति कीनाशवचनं कालश्श्रुत्वा भयान्वितः । न शक्यते मया कर्तुमधिकारो महांस्तव ॥ ९
जायते भीतिरत्यन्तं ममाशुपदमीश्वर । इति कालस्य वचनं निशम्याह यमः पुनः ॥ १०
भीतिस्तव कुतोवास्त्यास्सर्वे मद्वशगायतः । दृष्टमात्रेण सर्वेऽपि बिभ्यति प्राणिनो ध्रुवम् ॥ ११
पुरा सान्दीपिनेः पुत्रो महाशीलो महामतिः । सत्यावच्युत गोविन्द मुकुन्दादीनि कीर्तयन् ॥ १२
नामानि विष्णोः पयसि शुद्धे कालावहारके । जग्राह कश्चिन्नक्रस्तं पयोमध्यगतं बली ॥ १३
बुभुजे च क्षुधाविष्ट स्समाकृष्याशु दूरतः । तदा मृतमिमं बालं मम दूता महाबलाः ॥ १४
आनिन्युर्लोकमस्माकं निश्शङ्काहि हरिप्रियम् । तदा सान्दीपिनिश्श्रुत्वा मृतं पुत्रं महाह्रदे ॥ १५
शोकमोहसमाविष्टो मूढवद्विललाप हि । पुनः स्वशिष्यौ तौ कृष्णबलभद्रौ महाबलौ ॥ १६
वीक्ष्य प्रोवाच मतिमानाचार्यो दक्षिणां स्वकाम् । नक्रग्रस्तं मम सुतं यदिचेदानयिष्यतः ॥ १७
दक्षिणा सैवमधुना परमा परमार्थतः । इति तस्य वचश्श्रुत्वा गुरोस्तौ बलशालिनौ ॥ १८
महाह्रदे पतित्वाशु हत्वा नक्रं च तं तदा । न ददर्श गुरोः पुत्रं दुःखाकुलितमानसौ ॥ १९
यमलोके विनिश्चित्य शीघ्रमाययतुः किल । आगत्य लोकमस्माकं तदा तौ प्रश्रयान्वितौ ॥ २०
स्तुत्वा मां मोचयित्वैनं गुरुपुत्रमिमौ पुनः । प्रापयामास निकटं गुरोस्सान्दीपनेरुभौ ॥ २१
ततस्सान्दीपिनेः पुत्रो मतिमान् भयविह्वलः । सङ्कीर्तितानि नामानि मुकुन्दस्य मयाऽनिशम् ॥ २२
तथापि यमदूता मां निन्युर्लोकं यमस्य हि । एवमालोच्य मनसा कालकालस्य शूलिनः ॥ २३
महादेवस्य भीमस्य ब्रह्मणः परमात्मनः । यानि नामानि दिव्यानि प्रथितानि जगत्त्रये ॥ २४
कीर्तयंस्तानि पुण्यात्मा तीर्त्वा मृत्युभयं चिरम् । उषित्वा प्राप्य कैलासं शिवदूतैः परीवृतः ॥
स्थित्वाऽत्र सुचिरं कालं मोक्षमाप्नोति दुर्लभम् ॥ २५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चविंशोऽध्यायः ॥

---

॥ अथ षड्विंशोऽध्यायः ॥

शिवभक्त नामसीकरणेन चोरस्यापि कैलासगमनम् ॥

पुष्करायणं पुरा विप्रं विष्णुभक्तं महामतिम् । यम दूतास्समभ्येत्य मल्लोकमनयन् किल ॥ १
तदा तं वीक्ष्य विद्वांसं दूतान् प्रत्यवदं वचः । अन्योऽस्ति पुष्करस्तत्र ग्रामे पापी दुराशयः ॥ २
आनेतव्यो भवद्भिस्तं मुक्त्वैनं वीतकिल्बिषम् । इति तद्वचनं श्रुत्वा मुक्त्वा तं ब्राह्मणोत्तमम् ॥ ३
अस्मदीयाः परं विप्रं पुष्करारव्यमिहानयन् । तदाप्रभृति पुण्योऽयं मनसाऽऽलोच्य बुद्धिमान् ॥ ४
जप्तानि हरिनामानि मया सर्वाणि सन्ततम् । तथापि यमदूता मामनयन् स्वपुरं किल ॥ ५
एवं विचिन्त्य नामानि शिवस्य परमात्मनः । जजापानुक्षणं भक्त्या समस्ताघहराणि सः ॥ ६
जीवन्मुक्तस्सपुण्यात्मा शिवनामप्रभावतः । स्वच्छन्दं सञ्चरन्भूमावव्याहत मनोरथः ॥ ७
शिवलोकमनुप्राप्य सर्वैश्वर्यं समन्वितः । भुक्त्वाऽथविपुलान् भोगान्मोक्षञ्च प्राप्तवान् किल ॥ ८
यद्दुनार्कि पुराकाल रामं दशरथात्मजम् । दुष्टनिग्राहकं शिष्टपरिपालनतत्परम् ॥ ९
अवतारं परं विष्णोरहमेवानयं किल । तदत्र विस्मते केन हेतुना भवता वृथा ॥ १०
मुक्त्वा त्रियंबकं शंभुं मृत्युञ्जयमुमासखम् । कालातीतं महादेवं नीलग्रीवं कपालिनम् ॥ ११
तद्भक्तान् सर्वधात्मज्ञान् सदाचार परायणान् । भयं भवति देवेभ्यस्तेभ्यो वा (ना) स्माकमन्तरे ॥ १२
महाशावर्तिनस्सर्वे विघ्नेशं तत्प्रियानपि । सत्यं सत्यं पुनस्सत्यं ननुभूतं मयेरितम् ॥ १३
तदत्र भवता मुक्तभीतिलेशेन सन्ततम् । अस्मदीयोऽधिकारोऽसौ कर्तव्यः काल पूर्ववत् ॥ १४
शृणुष्वेकमना भूत्वा पुनर्वाक्यं ममाधुना । जपन्ति ये महादेव्या दिव्यनामानि सन्ततम् ॥ १५
विघ्नेश्वरस्य नामानि स्कन्दस्य च महात्मनः । भैरवस्यच नामानि वीरभद्रस्य तान्यपि ॥ १६
महाशास्तुश्च नामानि नन्दीशस्य गणाग्रणेः । महाकाळादि नामानि तथैवाञ्चायुधस्य च ॥ १७
वृषभस्य च नामानि भक्तानां शङ्करस्य च । जपन्ति ये महात्मानो विश्वस्यपि निरन्तरम् ॥ १८
न तान्प्रत्यधिकारो नः पापवृष्टिविवर्जितान् । दृष्ट्वा तान् दूरतो भीत्या गच्छामि शिववल्लभान् ॥ १९
तस्मात्त्वमपि तान् पुण्यान् दृष्टमात्रेण दूरतः । प्रणम्य गच्छ भीत्याशु प्रमादी भव मा पुनः ॥ २०
अत्रेतिहासं परमं शृणु त्वमवधानतः । पुराऽऽसीद् ब्राह्मणः कश्चिद्वारवीति रविप्रभः ॥ २१
मागधे विषये विद्वानपि पापवशात्पुनः । वेश्यासङ्गरविनित्यं स्तेयी पापी दुराशयः ॥ २२
महारण्यं प्रविश्यास्ते दिवा रात्रौ च पत्तनम् । प्रविश्य तस्करत्वेप ग्रामपालैरलक्षितः ॥ २३
चोरयन्तं पुनर्दृष्ट्वा कदाचिद् ग्रामपालकाः । हन्तुमेनं तदाऽऽजग्मुरनुद्रुत्य महाजवात् ॥ २४
तान् दृष्ट्वाऽयं भयाविष्टः प्राणसंरक्षणोद्यमः । अधावदतिवेगेन महारण्ये सुदूरतः ॥ २५
अनुदुद्राव तं कश्चिद् ग्रामपालो महाबलः । ताडयैनं सदा चोरं मारयैनमिति ध्रुवम् ॥ २६
धावन्तं तं समीक्ष्याशु सशब्दं श्रान्तिसंयुतम् । महाबलो महासत्वो व्याघ्रः कश्चिद्गुहान्तरात् ॥ २७
निर्गत्य तु महाकोपात्सन्ताड्यामारयत्किल । व्याघ्रेन च हते क्रूरे ग्रामपाले महाबले ॥ २८
त्यक्तभीतिरयं देशं केरळं प्राप काल हा । चकार तत्र मतिमान् नाम तस्य नवं तदा ॥ २९
हत्वाऽर्द्धं व्याघ्रपादेन ग्रामपालं वधोद्यमम् । रक्षितोऽस्मान्ममाधास्तु व्याघ्रपादाभिधेस्त्वयम् ॥ ३०
वेधाय नाम तस्यासिन्निति देशान्तरेऽवसत् । तदा प्रभृति तद्देश जनाश्चाजुहुवुस्तथा ॥ ३१
तथमप्यनिशं व्याघ्रपादेत्युक्त्वा चचारह । सोऽयं पुनः कालवशान्ममार किल भूसुरः ॥ ३२

ल तदा दूता मदीयाश्चागता खलु । तान् दूतान् सहसाऽऽगत्य शिवदूता महाबला ॥ ३३
त्य स्वायुधैरेन पुनर्दिव्यविमानकम् । आरोप्य देवर्षिगणैरभितोवृतमुज्वलम् ॥ ३४
न्दुभिनिर्घोषैरभित पुष्पवृष्टिभि । एव नानोपचारेण निन्युश्शम्भोश्चान्तिकम् ॥ ३५
। स कृपया शम्भु प्राहैन भक्तवत्सल । मद्भक्तस्य पर नाम व्याघ्रपादस्य यत्त्वया ॥ ३६
ज्ञानतो वापि तेन पुण्येन शोभन । चिरकालमुषित्वाऽत्र कैलासे सर्वसम्मते ॥ ३७
। च मम सायुज्य प्राप्तोपि हि न सशय । इत्युक्त्वा स्वान्तिके देवस्तमस्थापयदीश्वर ॥ ३८
त्नवसरे शम्भोरन्तिके नन्दिसमत । गत्वा प्रणम्य तस्थेऽह बद्धाञ्जलिपुटोऽग्रत ॥ ३९
ड्वोचञ्च वृत्तान्त शम्भुनाऽह दयालुना । ततस्तु शम्भुर्मा वीक्ष्य प्रोवाच वचन तदा ॥ ४०
नामानि ये मर्त्या विभ्रत्यपि जपन्ति वा । न तान् प्रत्यधिकारस्ते मया दत्त पुरा यम ॥ ४१
। तावका दूता किमेन बद्धुमुद्यता । आज्ञा भविष्यति क्षिप्रादेव ज्ञात्वा कृत यदि ॥ ४२
। शम्भोर्वचश्श्रुत्वा भयाकुलितमानस । प्रणम्याह तदा शम्भुमवोच वचन भयात् ॥ ४३
ज्ञानतद्गभो कृत मन्तु कृपानिधे । क्षमस्व मय्यपि प्रीति कर्तव्या पूर्ववत्प्रभो ॥ ४४
ुक्त्वा दण्डवद्भूत्वा नमस्कार कृतो मया । प्रणमन्त तदा वीक्ष्य षण्मुखश्शङ्करात्मज ॥ ४५
ाच वचन धीर निवसञ्छम्भुसन्निधौ । स्वेच्छया सञ्चरन्योगी सदानन्दशिवप्रिय ॥ ४६
। दृष्ट्वा नारकिणो बाधितान्यमदूतकै । उच्चैर्हरहरेत्याह तान्वीक्ष्य दययान्वित ॥ ४७
ा नारकिणामेषा हरशब्दे श्रुते सति । नानारत्नविचित्राणि विमानानि समाययु ॥ ४८
ह्य तानि ते सर्वे त्यक्तदु खा मुदान्विता । कैलासमापु परम यत्र देवो विराजते ॥ ४९
केषु च शून्येषु तदा त्व शम्भुसन्निधिम् । समागत्य महादेव प्रणम्य भयकम्पितः ॥ ५०
ान्त प्रोक्त्यानेतद्धरशब्दसमुद्भवम् । तदा त्वा वीक्ष्य देवेशश्शङ्कर करुणाकर ॥ ५१
तेषा यातना मृत्यो नरकेषु महत्स्वपि । यैश्श्रुत नाम परम धृतमुच्चारित तु वा ॥ ५२
ानतोऽज्ञानतोवापि प्रसङ्गादपि लोभत । देव्या मम गणेशस्य सुब्रह्मण्यस्य वा यम ॥ ५३
णानामपि भक्ताना श्रुतमुच्चारित ध्रुवम् । नाम तेषामथ नास्ति नरकेष्वपि यातना ॥ ५४
तत्पितृणा बन्धूना नरकेभ्योऽभय ध्रुवम् । इत्युक्तवान् किलेशानश्शङ्करश्चन्द्रशेखर ॥ ५५
त किमागतोऽसि त्व मूढवद्यम शाङ्करम् । सन्निधिं देवदेवस्य गच्छगच्छ दुरात्मवान् ॥ ५६
ति स्कन्दस्य वचन श्रुत्वाऽह भयविह्वल । प्रणम्य दण्डवद्भक्त्या तोषयित्वाशु षण्मुखम् ॥ ५७
दाज्ञयाऽह मल्लोकमागतवानसि वै किल । तदद्य भवता काल श्रुता पुण्या कथा खलु ॥ ५८
त परञ्च त्व शम्भोर्नाममाहात्म्य मुत्तमम् । तदीयानाच माहात्म्य स्मृत्वा मनसि सन्ततम् ॥ ५९
माद्देन विना तिष्ठ पुनरप्यत्र मे पदे । ये शम्भुभक्तनामानि श्रृण्वन्ति च पठन्ति वा ॥ ६०
तान् दृष्ट्वा दूरत काल गच्छगच्छ महाशय । इति वाक्य यमस्याय श्रुत्वा कालस्तदादित ॥ ६१
शिवस्य नाममाहात्म्य स्मृत्वा मनसि सन्ततम् । भक्तनाम्नाच माहात्म्यमप्रमादेन चापसत् ॥ ६२
ादशाङ्कशाङ्करस्यैतान् दृष्ट्वा गच्छति दूरत । तस्मात्साम्नाच महात्म्य कोवा जानाति तत्त्वत ॥ ६३
ात मयापि यत्किञ्चिदुपम्य कथित द्विजा । यच्चच्छम्भुनामानि जपित्वा म्रियमाणिरे ॥ ६४
मायूषि केचित्पूर्णानि पुत्रानपि तथा परे । अरोगत्व तथा चान्ये सरोगा बहुकालतः ॥ ६५
जरावार्धक्यनिर्मुक्ता केचिद्यौवनशालिन । भूतप्रेत पिशाचेभ्यो विषाद्युग्रमृगादपि ॥ ६६

विभ्यति परे मर्त्या शंभुनाम प्रभावतः । केचिज्जितारयो युद्धे यान्ति सिद्धिं चापरे द्विजाः ॥ ६७
क्षितावपि सर्वाणि नामोच्चार्य महेशितुः । प्रापुः केचन धर्मिष्ठा ब्राह्मणानामधीश्वराः ॥ ६८
धृत्वा भस्मरुद्राक्षं नामैशस्य जपन्ति च । न वेत्ति तेषां माहात्म्यं साक्षादीश्वररूपिणाम् । ६९
पठन्ति महात्मानश्शृण्वन्ति श्रावयन्ति या । माहात्म्यं शंभुनाम्नां ते भुक्त्वा भोगान् सुपुष्कलान् ॥
पुत्रारोग्यमैश्वर्यं पुत्रान्छात्रान्ध्यवाप्य हे । अन्ते च शिवसायुज्यं प्राप्नुवन्ति द्विजोत्तमाः ॥ ७१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षड्विंशोऽध्यायः ॥

---

॥ अथ सप्तविंशोऽध्यायः ॥

चोरस्य सोमवारे अज्ञानादुपवासेनापि कैलास प्राप्तिः ॥

शृणुध्वमृषयस्सर्वे वक्ष्ये शिवव्रतान्यपि । यदनुष्ठानमात्रेण सिध्यन्तीष्टानि देहिनाम् ॥ १
सोमवारव्रतं श्रेष्ठमार्द्रादर्शनमुत्तमम् । उमामहेश्वरञ्चान्यच्छिवरात्रिव्रतं परम् ॥ २
केदारव्रतमन्यच्च कल्याणाख्यं द्विजोत्तमाः । शूलव्रतं महापुण्यं वृषभाख्यं परं स्मृतम् ॥ ३
एतान्यष्टौ महादेवप्रियाणि प्रथितानि च । शुक्रवारव्रतं गौर्यास्सर्वलोकेषु विश्रुतम् ॥ ४
आश्वयुक्पूर्वफल्गुन्यां व्रतमन्यदुमाप्रियम् । नवम्यां तु व्रतं पुण्यं मासि चाश्वयुजे सिते ॥ ५
व्रतानि त्रीणि पार्वत्याः पुण्यान्येतानि भूसुराः । विघ्नेश्वरस्यापि व्रतं शुक्रवारे सुपावनम् ॥ ६
चतुर्थ्यां तु व्रतं पुण्यं प्रोष्ठपन्मासिके सिते । मार्गशीर्षे तथा मासि व्रतं षष्ठ्यां सुपावनम् ॥ ७
त्रीणीमानि गणेशस्य सर्वपापहराणि वै । षण्मुखस्य व्रतं पुण्यं शुक्रवारे द्विजोत्तमाः ॥ ८
कृत्तिकाख्यमनुष्ठेयं व्रतं परमपावनम् । स्कन्दषष्ठ्याख्यमपरं सर्वलोकेषु विश्रुतम् ॥ ९
एतानि त्रीणि भूदेवास्सर्वाभीष्टप्रदानि हि । भैरवस्यापि देवस्य भानुवारव्रतं महत् ॥ १०
तुलायां संस्थिते भानौ सेवरोधा महीसुराः । अनुष्ठेयं भरण्यां हि व्रतं सर्वाघनाशनम् ॥ ११
व्रतानि त्रीणि भूदेवा भैरवस्य महात्मनः । वासवे वीरभद्रस्य माङ्गले व्रतमद्भुतम् ॥ १२
सर्वाण्येतानि ये मर्त्याश्चरन्ति विधिनाऽथवा । इह भुक्त्वा चिरं कालं भोगांस्तेतु महौजसः ॥ १३
शिवलोकमनुप्राप्य तत्र स्थित्वा चिरं ततः । अन्ते च मोक्षमाप्नोति परं सत्यं मयेरितम् ॥ १४
वक्ष्येऽहं विधिमेतेषां माहात्म्यमपि भूसुराः । सोमवारव्रतस्यादावनुष्ठानविधिं परम् ॥ १५
वक्ष्ये क्रमेण भूदेवाश्शृणुध्वमवधानतः । प्रथमं कृत्तिकामासे सोमवारं तु यत् स्मृतम् ॥ १६
तस्मिन्नुषसि चोत्थाय ध्यात्वा देवं त्रियंबकम् । स्नात्वा शुद्धजले सन्ध्यां समाराध्य विधानतः ॥ १७
समाराध्य महादेवं सर्वकल्याणकारणम् । शिवभक्तान् स्त्रियस्साध्वीरर्चयित्वा शिवं शिवाम् ॥ १८
विभाव्य भोजयित्वाऽथ चैकभुक्तञ्चरेत् स्वयम् । शिवार्चना विहीनो यस्स्नात्वा पयसि निर्मले ॥ १९
नित्यकर्म विधायाथ गत्वा शंभ्वालयं शुभम् । अर्चयित्वाऽत्र देवेशं बिल्वपत्रैरखण्डितैः ॥ २०
कारयित्वाऽभिषेकञ्च शुद्धैः पञ्चामृतादिभिः । निवेदयित्वा नैवेद्यैर्वित्तशाठ्यं विहाय च ॥ २१
ब्राह्मणान् भोजयित्वाऽथ शिवभक्तान् जितेन्द्रियान् । भुञ्जीयादव्रतश्चैवा उपवासमथाचरेत् ॥ २२
एवमागममार्गेण सोमवारव्रतं परम् । आचरेद्यस्तु मतिमान् सर्वपापैः प्रमुच्यते ॥ २३
इह भुक्त्वा चिरं भोगानन्ते कैलासमाप्नुयात् । सोमवारव्रतं पूर्वमनुष्ठाय पतिव्रता ॥ २४

गिनी राजपुत्री वर्णिनौ द्वौ समागतौ । उमामहेश्वरौ ध्यात्वा दंपती रूपमास्थितौ ॥ २५
ग्रामास भक्त्यैतौ दंपतीति विनिश्चिता । तद्भावनाभावितौ तौ दंपतीव बभूवतुः ॥ २६
पारस्य माहात्म्यापारावधर्यमीदृशम् । एवमादि वसिष्ठोऽपि ऋषीणां प्रवरो द्विजाः ॥ २७
तेतदनुष्ठाय प्राप भार्यामरुन्धतीम् । विभुः पूर्वमनुष्ठाय व्रतमेतन्महीपतिः ॥ २८
शोऽपि वरं पुत्रं लब्धवानस्य वैभवात् । सोमशर्माप्यनुष्ठाय सोमवारव्रतोत्तमम् ॥ २९
र्वमाप परमेश्वरस्य प्रसादतः । यज्ञशर्मा महाराजश्शत्रुभिः परिपीडितः ॥ ३०
मेतदनुष्ठाय निस्सपत्नो बभूव ह । मृत्युमप्यजयत्पूर्वं कीचकाख्यो महीसुरः ॥ ३१
स्वयंमधापाटवसिंहाख्यः पृथर्षभः । वेदाङ्गोऽपि महाबुद्धिरनुष्ठाय व्रतोत्तमम् ॥ ३२
वलोकमवापायं स शरीरः प्रियान्वितः । धर्मशीर्योऽप्यनुष्ठाय मोक्षमाप महीसुरः ॥ ३३
शीलोऽप्यनुष्ठाय मोक्षमाप महीसुरः । व्रतमेतदनुष्ठाय पुत्रमिश्रकलमर्कः ॥ ३४
भवेद्भोगानतुलान् कैलासं प्राप्य तैस्सह । तत्र स्थित्वा चिरं कालमपवर्गमवाप सः ॥ ३५
मेतद्विधाय सत्यसन्धात्मजः पुरा । महाखलो महापापी स्तेयी वेश्यांगनारतिः ॥ ३६
टनामा पापिष्ठः स्तेयं कृत्वा दुरात्मवान् । वेश्यागृहं विवेशायं रन्तुं तां ब्राह्मणोत्तमाः ॥ ३७
। केचन सपद्मा ग्रामपालास्समाययुः । तानागतानयं ज्ञात्वा भीतः प्राद्रवने द्रुतम् ॥ ३८
ऐस्तस्मिन्दिने चासीत्सोमवाराख्य तद्दिनम् । न लब्धवानन्न दिने विराटोऽयं वनं गतः ॥ ३९
म्समूलफलाहारश्चचारास्मिन् वने द्विजाः । दष्टो महाभुजङ्गेन परेद्युस्स ममार हि ॥ ४०
धुं तमेनं सहसा यमदूतास्समागताः । तदानीं शिवदूतास्तमागत्य च महाबलाः ॥ ४१
व्यं विमानमारोप्य सन्ताड्य यमदूतकान् । प्रस्थिताश्शिवलोकाय ब्राह्मणानामधीश्वराः ॥ ४२
दैव यमदूतास्तु बाधिताश्शिवकिंकरैः । वृत्तान्तमेतत्सकलं यमायाशु व्यजिज्ञपन् ॥ ४३
स्वैतन्निर्वैरी शीघ्रं यमो दूतपुरीस्तदा । प्राप्यमार्गे शिवगणान् प्रणम्य प्रश्रयान्वितः ॥ ४४
तमेनेन किं पुण्यं दुराचारेण सन्ततम् । दिव्यं विमानमारोप्य किमानयथ भोगणाः ॥ ४५
मया ज्ञायते पुण्यमेकं चास्य विचारितम् । पुण्यैरनेकैः प्राप्यो हि शिवलोको महात्मनाम् ॥ ४६
र्थं यमस्य वचनं श्रुत्वैते शांकरा गणाः । निराहारः कृतस्नानो वृत्त्यायं सोमवासरे ॥ ४७
कन्दमूलफलाहारश्चचारारण्यमध्यगः । सोमवारव्रतं दैवात् पुण्यपाकेन केनचित् ॥ ४८
अज्ञानतोऽपि संप्राप्तं यमैतेन व्रतोत्तमम् । सर्पदष्टो ममारायं वने तस्मिन् परेऽहनि ॥ ४९
न पुण्यप्रभावेन शिवलोकाय गच्छति । स्थित्वा तत्र चिरं कालं मोक्षं च प्राप्स्यति ध्रुवम् ॥ ५०
ज्ञया देवदेवस्य महादेवस्य चागताः । वयं तस्य दुष्टाखोरं मुक्त्वा त्वं गन्तुमर्हसि ॥ ५१
इति तेषां वचश्श्रुत्वा यमोऽपि भयकंपितः । प्रणम्यैतांश्च तं पुण्यं स्वपद प्राप भूसुराः ॥ ५२
शिवलोकमयं प्राप्य विराटोऽपि शिवप्रियः । सन्निधौ देवदेवस्य स्थित्वाऽनेकाब्दमुज्ज्वलः ॥ ५३
अन्ते च मोक्षं प्रापाय ब्राह्मणानामधीश्वराः । सोमोऽप्येतदनुष्ठाय सोमत्वं प्राप्य शङ्करात् ॥ ५४
प्रसन्ने च महादेवे प्रणम्य परया मुदा । सोमवारव्रतं नाम भवत्वेतन्मम प्रभो ॥ ५५
सोमवारव्रतञ्चैतद्याचरन्ति महद्व्रतम् । ये तेषां कृतपुण्यानां भगवंस्त्वत्प्रसादतः ॥ ५६
भवन्तु वाञ्छितानीश मोक्षमन्ते भवत्वलम् । इति वव्रे वरं विप्रास्तदानीं चन्द्रमा अपि ॥ ५७
दत्वा शंभुर्वरं तस्मै सहसाऽन्तरधीयत । तस्माद् व्रतमिदं पुण्यं सोमवारे शिवप्रियम् ॥ ५८

चरन्ति येऽव्रतं तेषां सोमदर्शं भुवमासलः । प्रसन्नः प्रददेत्सर्वं सत्यमुक्तं द्विजोत्तमाः ॥ ५९
सोमयाव्रतस्यैतं माहात्म्यं शंकरप्रियम् । पठन्ति येच शृण्वन्ति श्रावयन्ति जनाद्विजाः ॥
तेऽत्र भुक्त्वा महाभोगानन्ते मोक्षमवाप्नुयुः ॥ ६०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तविंशोऽध्यायः ॥

---

## ॥ अथ अष्टाविंशोऽध्यायः ॥

### आर्द्रायव्रतानुष्ठानेन श्रीनटराज प्रसादः ॥

आर्द्राव्रतञ्च वक्ष्येऽहं सर्वकल्याणकारणम् । आदित्ये चापगे ऋक्षं रौद्रं यत् प्रथितं भुवि ॥ १
तद्दिने प्रातरुत्थाय शुचिर्भूत्वा समाहितः । ध्यात्वा नटेशं हृदये समस्तापप्रणाशकम् ॥ २
वहिर्गृहाद्विनिर्गत्य स्नात्वा शुद्धोदके वरे । नित्यकर्म विधायाशु गत्वा शंभोर्वरालयम् ॥ ३
तत्राभिषेकं विधिना विधाय परमेशितुः । नानाविधञ्च नैवेद्यं विधायानन्तवैभवात् ॥ ४
आज्यैर्दीपान् पृथूनत्र सन्निधौ परिकल्प्य च । प्रणम्य देवदेवेशं शङ्करं परया मुदा ॥ ५
नटेशस्यापि विधिना विधायानन्तवैभवात् । अभिषेकञ्च नैवेद्यं दीपानारोपयेद् घृतैः ॥ ६
दर्शयित्वा महादेवं गृहं प्राप्य सुनिर्मलः । उपोष्य तद्दिनं विद्वान् परेद्युररुणोदये ॥ ७
समुत्थाय शुचिर्भूत्वा ध्यात्वा देवं त्रियंबकम् । समाप्य नित्यकर्माणि शिवभक्ताञ्जितेन्द्रियान् ॥ ८
भोजयित्वा स्वयं पश्चाद्भुञ्जीयाच्छङ्कराशया । एवं कुर्याद्व्रतं रौद्रे नक्षत्रे परमेश्वरम् ॥ ९
चरन्ति ये महात्मानो व्रतमेतच्छिवप्रियम् । तेषां भुक्तिश्च मुक्तिश्च करस्था नात्र संशयः ॥ १०
व्रतमेतदनुष्ठाय मुञ्जकेशो महामुनिः । नृत्तं विलोक्य देवस्य नटेशस्य महात्मनः ॥ ११
विधूतकिल्बिषो विप्रा जीवन्मुक्तो बभूव हि । पतञ्जलिर्महायोगी कार्कोटोऽपि महोरगः ॥ १२
व्रतं रौद्रविधानेन विधाय परया मुदा । विलोक्य देवदेवस्य नृत्तं नृत्तेश्वरस्य तौ ॥ १३
नित्यत्वमापतुर्विप्रा जन्ममृत्युविवर्जितम् । व्याघ्रपादो महायोगी व्रतस्यास्य च वैभवात् ॥ १४
उपमन्युमृषिश्रेष्ठं लब्धवानात्मजं द्विजाः । नृत्तं विलोक्य देवस्य जीवन्मुक्तो बभूव हि ॥ १५
व्रतमेतदनुष्ठाय विपुलाख्यो द्विजोत्तमः । दिव्यं विमानमारुह्य सशरीरश्शिवप्रियः ॥ १६
गत्वा कैलासमचलं तत्र दृष्ट्वा महेश्वरम् । प्रणम्य परया भक्त्या पुनर्गत्वा निजं गृहम् ॥ १७
स्थित्वाऽत्र विपुलान् भोगान् भुक्त्वा भार्यासमन्वितः । पुनर्विमानमारोप्य देवर्षीणां गणैर्वृतः ॥ १८
शिवलोकमनुप्राप्य सर्वैश्वर्यसमन्वितः । स्थित्वाऽत्र विपुलान् भोगानन्ते सायुज्यमाप्तवान् ॥ १९
एवमेतद्व्रतं पुण्यमधिष्ठाय परे द्विजाः । वाञ्छितान्यपि लब्ध्वान्ते मोक्षमापुर्द्विजोत्तमाः ॥ २०
अस्मिन्रुद्रतिथौ शंभुः परमानन्दनिर्भरः । सर्वेषामपि रक्षार्थं करोत्यानन्दताण्डवम् ॥
तस्माद्व्रतमिदं पुण्यं व्रतानामुत्तमं द्विजाः ॥ २१

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टाविंशोऽध्यायः ॥

---

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

### सिन्धुसेनराज्ञः उमामहेश्वर व्रतानुष्ठानेन पुनाराज्यलाभः ॥

उमामहेश्वरं नाम व्रतं वक्ष्ये द्विजोत्तमाः । वृश्चिकं पूषणि प्राप्ते पूर्णमास्यामिदं व्रतम् ॥ १
अस्यां प्रातस्समुत्थाय शुचिर्भूत्वा समाहितः । स्नात्वा शुद्धजले नित्यकर्म सर्वं विधाय च ॥ २
सौवर्णं राजतं वाथ द्रव्यलोभविवर्जितः । विग्रहं देवदेवस्य विधायोमामहेश्वरम् ॥ ३
पूजयेद्भक्तिसंयुक्तः पूजाद्रव्यैरनेककैः । नैवेद्यं विविधं दद्यान्निजवित्तानुसारतः ॥ ४
प्रणम्य प्रार्थयित्वाऽथ व्रजेद्देवालयं प्रति । तत्राभिषेकं मतिमान् कारयेत्परमेशितुः ॥ ५
पञ्चामृतादिभिर्दिव्यैर्नैवेद्यञ्च समर्पयेत् । निवेदयित्वा तांबूलमुपचारांश्च कारयेत् ॥ ६
प्रणम्य प्रार्थयित्वाऽथ गृहं यायात् स्वकं सुधीः । दत्वा दानञ्च भक्तेभ्यो ब्राह्मणेभ्यो यथाबलम् ॥ ७
भुञ्ज्याद्भक्तैरेकवारमद्यात् स्वादुफलानि वा । पिष्टं वा तण्डुलोद्भूतमपूपं वा शिवप्रियैः ॥ ८
मध्याह्ने चैव मतिमान्व्रतव्रतया द्विजाः । नियमेनास्य माहात्म्यं शृणुयात्तदनन्तरम् ॥ ९
भक्ताय कस्मै प्रतिमां दद्याच्चां शिवयोगिने । एवमागममार्गेण ये चरन्ति व्रतं महत् ॥ १०
तेषामत्रातिसुलभा लक्ष्मीर्मुक्तिः परत्र च । एतद्व्रतमनुष्ठाय तृणबिन्दुर्महामुनिः ॥ ११
अचक्षुः प्राप परमं चक्षुः फुल्लाब्जसन्निभम् । विधवाऽपि व्रतं प्राप्य काचित्पुत्रमवाप सा ॥ १२
प्रापान्ते शिवलोकञ्च व्रतस्यास्य प्रभावतः । विष्णुः कृष्णावतारेऽसौ व्रतमेतच्छिवप्रियम् ॥ १३
अनुष्ठाय सन्तोषाद्भार्यया बहुपुत्रकान् । गायत्रीमपि सावित्रीं पुरा पङ्कजसंभवः ॥ १४
लब्धवान् परया प्रीत्या व्रतस्यास्य प्रभावतः । जयन्तं लब्धवानिन्द्रः पुत्रमेतत्प्रभावतः ॥ १५
वसिष्ठोऽप्यग्निहोत्रार्थं कामधेनुमवाप्तवान् । शतानन्दमृषिश्रेष्ठं गौतमोऽपि महामुनिः ॥ १६
आत्मजं प्राप्तवानेतच्चरित्वा व्रतमद्भुतम् । व्रतमेतदनुष्ठाय जनकोऽपि महीपतिः ॥ १७
सुषुवे जानकीं सीतां साक्षाल्लक्ष्मीं द्विजोत्तमाः । व्रतमेतदनुष्ठाय चित्राङ्गोऽपि महीपतिः ॥ १८
स्वर्गलोकं समासाद्य देवेन्द्रेणापि पूजितः । ऊर्वश्या क्रीडयित्वाऽत्र सर्वावयवशोभया ॥ १९
कल्पद्रुमं गृहीत्वाऽथ पुनर्भूलोकमाप्य च । स्थित्वाऽत्र सुचिरं कालं पुत्रानुत्पाद्य पण्डितान् ॥ २०
पट्टबन्धं विधायास्य सुमुहूर्ते द्विजैस्सह । आरुह्य मणिशोभाढ्यं विमानं काञ्चनं द्विजाः ॥ २१
श्रीमत्कैलासमचलं गत्वाऽत्र निवसञ्चिरम् । पश्चाच्च प्राप्तवान्मोक्षं परस्य ब्रह्मणो द्विजाः ॥ २२
सुधर्माख्यः पुरा विप्रश्शास्त्रार्थज्ञानवर्जितः । नायाति शास्त्रमभ्यस्तमपि मन्दधियोऽस्य च ॥ २३
हसन्ति तमिमं केचिन्मन्दबुद्धिरितीर्ष्यया । तदा व्रतमिदं दिव्यमुमामाहेश्वरं परम् ॥ २४
चचार विधिना विप्रो भक्तियुक्तेन चेतसा । तदा सरस्वती शुद्धा सर्वविद्यास्वरूपिणी ॥ २५
उमायाः कृपया नित्यं चकारास्यास्यमध्यगा । तदानीमेव शास्त्रार्थास्सर्वेऽप्यस्यास्फुरद् द्विजाः ॥ २६
यथाऽस्य शास्त्रं स्फुरति न तथाऽन्यस्य भूसुराः । राजा तदैनमाहूय दानं बहुधनं ददौ ॥ २७
तदाश्चर्यनतास्सर्वे जना विद्याप्रभावतः । विद्यादानं चकारायं बहूनाञ्च द्विजन्मनाम् ॥ २८
पुत्रान्विनीतानुत्पाद्य सर्वशास्त्रार्थकोविदान् । प्राप्यान्ते शिवलोकञ्च विमानेनातिराजता ॥ २९
तत्र गणाधिपत्यञ्च लब्धवानीश्वराज्ञया । सिन्धुसेनो महीपालश्शत्रुणा द्रावितो युधि ॥ ३०
मुक्त्वा स्वनगरं भीतो भार्यया प्राप वै वनम् । तत्रावसच्चिरं कालं कन्दमूलफलाशनः ॥ ३१
अगस्त्यं तपतां श्रेष्ठं ददर्शात्र समागतम् । प्रणम्य तं स्ववृत्तान्तमुक्तवान्श्रद्धयान्वितः ॥ ३२
तदा व्रतमिदं प्राह तस्मै स मुनिपुङ्गवः । चचार भार्यया सार्धं व्रतमेतदनुत्तमम् ॥ ३३

अनुष्ठिते व्रते तस्मिन् समाप्ते गुह्यकेश्वर । कुबेरोऽप्याययावत्र शिवस्याज्ञावशात् द्विजा ॥ ३४
त्वद्राज्ये त्वां पुनस्स्थाप्य पट्टबन्धं विधाय च । निहत्य शत्रून् सकलान् पुनर्गच्छामि मत्पदम् ॥ ३५
शिवाज्ञयाहमधुना चागतोऽत्र महीपते । इत्युक्त्वैव समाहूय चतुरङ्गबलैस्सह ॥ ३६
गजस्कन्धं समारोप्य भार्यया पट्टभद्रया । रिपुमुच्चाटयित्वाशु नगरादस्य सर्वतः ॥ ३७
पट्टबन्धं चकारास्य राज्ञोऽस्य गुह्यकेश्वर । दत्वा धनानि भूरीणि चोक्त्वा संभाषणं मिथः ॥ ३८
स्वपदं प्राप परया प्रीत्यास्यानुमतो द्विजा । चिरकालमयं राजा भुक्त्वा भोगान्यथेच्छया ॥ ३९
कैलासगिरिमासाद्य मोक्षञ्च प्राप्तवान्मुदा । व्रतमेतच्चरित्वाऽन्ये यद्यपरसन्ति मानुषाः ॥ ४०
वाञ्छितान्यपि लब्ध्वान्ते मोक्षमापुर्द्विजोत्तमाः । माहात्म्यं ये व्रतस्यास्य शृण्वन्तिच पठन्तिच ॥
ते भुक्त्वा भोगमखिलं यान्ति ते च परां गतिम् ॥ ४१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनत्रिंशोऽध्यायः ॥

---

॥ अथ त्रिंशोऽध्यायः ॥

चतुर्विध शिवरात्रि निरूपणम् ।

शिवरात्रिव्रतं वक्ष्ये सर्वकल्याणकारणम् । चतुर्विधमिदं विप्रा नित्यमासादिभेदतः ॥ १
चतुर्ष्वपि शिवं यामेष्वर्चयेन्निशि सर्वदा । नित्या नित्येति विख्याता शिवरात्रिरियं द्विजाः ॥ २
सोमवारेण संयुक्ते दश मासेषु केषुचित् । शिवरात्रिरियं ख्याता योगजेति महाशुभा ॥ ३
मासेमासे द्वितीया या कृष्णपक्षचतुर्दशी । सा मासशिवरात्रीस्यात्साक्षान्मोक्षप्रदायिनी ॥ ४
तृतीया माघमासे या प्रथमा शुक्लपक्षगा । तदारभ्यैकभुक्तेन यावत्कृष्णत्रयोदशी ॥ ५
सङ्कल्प्य नियमेनैव स्थित्वा नित्यं समाहितः । परेद्यु प्रातरुत्थाय चतुर्दश्यां महेश्वरम् ॥ ६
अनन्तगुणकल्याणमपरिच्छिन्नवैभवम् । ज्वालामालासहस्राढ्य महालिङ्गाकृतिं शिवम् ॥ ७
हृत्पद्ममध्यगं ध्यात्वा स्नात्वा पयसि निर्मले । अर्चयेल्लिङ्गमीशस्य रात्रौ यामेषु सुव्रता ॥ ८
शिवरात्रिरियं माघप्रथमादिरितीरिता । तुरीयामपि वक्ष्येऽद्य शिवरात्रिं महीसुराः ॥ ९
माघकृष्णचतुर्दश्यां प्रातरुत्थाय शङ्करम् । ध्यात्वा हृत्पद्मनिलये स्नात्वा शुद्धोदके शुचिः ॥ १०
नित्यकर्म विधायाथ रात्रौ यामेषु शङ्करम् । अर्चयेल्लिङ्गरूपस्य सुखाया निद्रां विधानतः ॥ ११
एवं चतुर्विधा प्रोक्ता शिवरात्री शिवप्रिया । एतद्रात्रिषु शुद्धात्मा निर्निद्रश्शिवमर्चयेत् ॥ १२
स्नात्वा परेद्युस्सर्वाणि कर्माण्यपि विधाय च । नियमश्चैव सहितो भुञ्जीयाद्दान शुचि ॥ १३
एतास्वपि विप्रेन्द्राश्शिवरात्रिश्चरेत्तु यः । एका द्वेवाथ तिस्रोवा चतस्रोवा यथाबलम् ॥ १४
तस्य पुण्यं मया वक्तुं न शक्यं कल्पकोटिभिः । इह भुक्त्वा चिरं कालं भोगान् संख्यानुसारतः ॥ १५
अन्ते स मोक्षं यातीति किमाश्चर्यं द्विजोत्तमाः । विष्णुरेतद्व्रतं पूर्वमनुष्ठाय विधानतः ॥ १६
विष्णुत्वं लब्धवानेवं महादेवप्रसादतः । प्राप्तवान् सर्वसम्पत्त्यं ब्रह्माप्यस्य प्रसादतः ॥ १७
परिवैतद्व्रतं पूर्वमिन्द्रोऽपीन्द्रपदमाप्तवान् । गणाधिपस्य संप्राप्ता देवाः केचिच्छुचिहिताः ॥ १८
बहवो ऋषयः पूर्वमनुष्ठाय व्रतोत्तमम् । मोक्षमापुर्द्विजश्रेष्ठाः पुनरावृत्तिवर्जितम् ॥ १९
धनाधिपत्वं धनदः प्राप्तवानस्य वैभवात् । संप्राप्तो वायुवरुणौ शक्तिं सर्वातिशायिनीम् ॥ २०

कल्मषपादः क्षोणीशश्श्रुत्वैतद्व्रतमाद्भुतम् । अनुष्ठाय विधानेन ब्रह्महत्यां विमुक्तवान् ॥ २१
शापान्मुक्तस्स्वकं देशं पुनर्लब्ध्वास्य वैभवात् । षष्टाब्दमितिको भोगांश्च भुक्त्वा परमदुर्लभान् ॥ २२
मोक्षञ्च प्राप्तवानन्ते शिवस्यैव प्रसादतः । व्याधः कश्चिद्वनमगाद् विल्ववृक्षं समाश्रितः ॥ २३
शिवरात्रिं न जानाति निराहारो महावने । उच्छिद्य बिल्वपत्राणि पातयित्वा तरोरधः ॥ २४
तस्थे जागरतया रात्रौ वृक्षस्योपरि मुहुः । निराहारतयाप्येषु ममारायं विधेर्बलात् ॥ २५
शिवलोकमवापायं शिवरात्रिप्रभावतः । नीचनारी पुरा वृद्धा महाव्याधिवशं गता ॥ २६
शिवरात्रावलब्धान्ना तस्थेऽसावुपवासतः । उषित्वा रात्रिमेनां सा ममारोपद्विजोत्तमाः ॥ २७
दिव्यं विमानमारुह्य दिव्यदेहमवाप्य च । शिवलोकं ययौ विप्राश्शिवस्यैव प्रसादतः ॥ २८
शिवरात्र्यागमं वक्ष्ये शृणुध्वमवधानतः । पुरा नाहो नरात्रिश्च न सन्ध्यांशश्च केवलः ॥ २९
शिवस्त्वसि संहारकाले महति चावसत् । एकोमा साक्षिणी तस्य चतुष्षष्टिकलान्विता ॥ ३०
हृत्पद्मनिलये शंभुं पूजयित्वाऽवसत् द्विजाः । संप्राप्तायां पुनस्सृष्टौ यथापूर्वं द्विजोत्तमाः ॥ ३१
तदा देवी महादेवं प्रणम्य करुणाकरम् । यस्माद्रात्रौ मया शंभो पूजितस्त्वं हृदंबुजे ॥ ३२
तस्मादेतासु भो देव चतसृष्वपि रात्रिषु । ये पूजयन्ति यामेषु भगवन्तं जगद्गुरुम् ॥ ३३
वाञ्छितानि भवन्त्वीश तेषां त्वत्कृपयाऽत्र च । मुक्तिर्भवतु देवेश परत्रापि जगत्पते ॥ ३४
शिवरात्रिव्रतञ्चैतन्नाम्नाख्यातं भवत्वलम् । य आचरेद्व्रतं शम्भोश्शिवरात्रिषु पुण्यवान् ॥ ३५
तस्याक्षयं फलं भूयात्सिध्यन्तीष्टानि भो प्रभो । इति लब्ध्वा वरं देवी प्रसन्नादीश्वरात्स्वयम् ॥ ३६
चरित्वा व्रतमेतत्सा प्रथमं ब्राह्मणोत्तमाः । न्यवसच्छङ्कराभ्याशे परमानन्दनिर्भरा ॥ ३७
हेरंबस्कन्दपूर्वाश्च शिवपुत्रा गणेश्वराः । नन्दि भृङ्गि महाकालप्रमुखाश्च महाबलम् ॥ ३८
चेरुस्तथा ब्रह्मविष्णू पुरा ह्येतौ परस्परम् । ज्योतिर्लिङ्गाकृतेश्शंभोरदृष्ट्वाद्यन्तमद्भुतम् ॥ ३९
शिवरात्राविमौ शंभुं रात्रावर्चयतां द्विजाः । ततः प्रसन्नो भगवान् प्रादुरासीत्तयोः पुरः ॥ ४०
तं दृष्ट्वा देवमीशानं स्तुत्वा स्तोत्रवरैरिमौ । प्रणम्य परया भक्त्या तस्थतुः प्रश्रयान्वितौ ॥ ४१
सोढ्वाऽपराधमुभयोर्वरं दत्वाशु वाञ्छितम् । अन्तर्धिमाययौ शम्भुरखण्डानन्दविग्रहः ॥ ४२
तस्मादेतस्य माहात्म्यं मया वक्तुं न शक्यते । न शक्यतेऽस्मद्गुरुणा व्यासेनापि द्विजोत्तमाः ॥ ४३
सनत्कुमारो योगीन्द्रो वक्तुं जानाति वा न वा । श्रुत्वैतद् व्रतमाहात्म्यं नन्दिकेशो महेश्वरात् ॥ ४४
परमानन्दकल्लोलपारावारो बभूव हि । यथा माहात्म्यमीशस्य मनोवाचामगोचरम् ॥ ४५
तथैतद्व्रतमाहात्म्यं मनोवाचामगोचरम् । य इमं पठतेऽध्यायं शृणोति शिवसंमतम् ॥ ४६
स भोगान् विपुलान् भुक्त्वा पुत्रानुत्पाद्य चास्तिकान् । अन्ते च प्राप्य कैलासं मुक्तिं याति द्विजोत्तमाः ॥ ४७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रिंशोऽध्यायः ॥

---

## ॥ अथ एकत्रिंशोऽध्यायः ॥

### कन्यामासे अनुष्ठेय केदार व्रतम् ॥

केदारव्रतमाहात्म्यं सर्वकल्याणकारणम् । वक्ष्ये शृणुध्वमृषयस्सावधानेन संयुताः ॥ १
मासे भाद्रपदे शुक्लपक्षेऽष्टम्यां व्रतं शिवदम् । आरभ्य विधिना विप्रा एकविंशद्दिनावधि ॥ २
अनुष्ठेयमुते (मृते) तस्मिंस्तत्समाप्ति दिनेऽपि च । अनुष्ठाय विधानेन भुञ्जीयान्नियमान्वितः ॥ ३
आचरेद्य इमं मर्त्यस्सर्वाभीष्ट फलप्रदम् । स भुक्त्वा विपुलान् भोगानन्ते मोक्षं च गच्छति ॥ ४
व्रतमेतदनुष्ठाय पुरा गौरी महीसुराः । अर्धं प्राप्तवती शंभोश्शरीरस्यामितौजसः ॥ ५
विष्णुरेतदनुष्ठाय वैकुण्ठस्याधिकारिताम् । अवाप्तवांस्तथा ब्रह्मा हंसवाहनतामयात् ॥ ६
अपि शत्रून् पुरा दैत्यानष्टदिक्पालका द्विजाः । अनुष्ठाय व्रतमिदञ्चम्भुरस्य प्रसादतः ॥ ७
कश्यपस्सत विख्याता व्रतमत्यन्तशोभनम् । चरित्वा ब्राह्मणशापान्मोक्षमापुस्तदैव ते ॥ ८
पुरा भाग्यवती काचित् तथा पुण्यवती परा । अनुष्ठाय व्रतमिदमैश्वर्यं प्रापतुर्द्विजाः ॥ ९
विशुद्धात्मा पुरा विप्रो व्रतमेतच्छिवप्रियम् । अनुष्ठायाप्तवान् पुत्राञ्छतसंख्यानतुल्यकान् ॥ १०
इदं व्रतमनुष्ठाप्य तेषामपि महात्मनाम् । भुक्त्वा भोगानसौ विप्रास्तैस्साकं निजपुत्रकैः ॥ ११
शिवलोकमवाप्यान्ते मोक्षमापातिदुर्लभम् । बहवस्सन्ति नियमाद् व्रतमेतच्छिवप्रियम् ॥ १२
आसवन्तः पुरा मोक्षमनुष्ठाय द्विजोत्तमाः । तस्मात्पठन्ति शृण्वन्ति येऽध्यायमिदमुत्तमम् ॥
ते भुक्त्वा भोगमतुलं मोक्षं यान्ति शिवाज्ञया ॥ १३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकत्रिंशोऽध्यायः ॥

---

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

### मीनमासे अनुष्ठेय कल्याण व्रतम् ।

सूतः —

कल्याणाख्यं व्रतं पुण्यं सर्वकल्याणकारणम् । वक्ष्येऽहं वेदविच्छ्रेष्ठाश्शृणुध्वं पुण्यगौरवात् ॥ १
मीनेरवौ शुक्लपक्षे नक्षत्रेचोत्तरे शुभे । प्रातरेव समुत्थाय तद्दिने नियमान्वितः ॥ २
ध्यात्वा कल्याणवपुषौ पार्वतीपरमेश्वरौ । बहिर्गत्वा जले शुद्धे स्नात्वा नियमपूर्वकम् ॥ ३
नित्यकर्म विधायाथ पूजयेत्परमेश्वरम् । आत्मार्थनायकं देवं शिवपूजापरायणः ॥ ४
शिवपूजाविहीनोऽपि नित्यकर्मविधाय सः । काञ्चनेन विनिर्माय पार्वतीपरमेश्वरौ ॥ ५
कुंभं स्थाप्य विधानेन पूरयित्वा जलैश्शुभैः । अभिषेकविधानेन चाभिषिच्य जगद्गुरुम् ॥ ६
विवाहविधिना शंभोः कल्याणञ्चाम्बिकाशिवौ । साकं जनैश्च अगतां कारयेन्मतिमान् द्विजाः ॥ ७
निवेदयित्वा नैवेद्यं नानाव्यञ्जनसंयुतम् । ब्राह्मणान् वेदविदुषश्शिवभक्तान् जितेन्द्रियान् ॥ ८
सभार्यांश्चैव सहितान् दत्वा दानैश्च तोषयेत् । भोजयेच्च ततस्तांस्तु पायसैर्भक्ष्यभोज्यकैः ॥ ९
ततश्शिवालयं गत्वा देवं देवीं प्रणम्य च । दत्वोपहारं देवाय यथाशक्ति समुद्भवम् ॥ १०
प्रदक्षिणत्रयं कृत्वा प्रणम्य मनसा शिवम् । स्वगृहं प्राप्य तरसा शिवभक्तैर्द्विजोत्तमैः ॥ ११

भुञ्ज्याद्रात्रौ शिवं ध्यात्वा परमान्नं फलान्वितम् । दर्भेषु शयनं कुर्याद्रात्रावस्यां प्रतिद्विजाः ॥ १२
पुनः प्रातस्समुत्थाय कृतकृत्यादिकनित्यः । दद्याद्देवस्य देव्याश्च प्रतिमे द्वे मनोहरे ॥ १३
शिष्ययोरुभयोर्भक्त्या द्विजयोः शिवभक्तयोः । भुञ्ज्यादस्मिन्दिने भक्त्या पक्वान्नतया द्विजाः ॥ १४
कुर्यादेवं व्रतमिदं यस्तु सर्वाघनाशकम् । स भोगान्विपुलान् भुक्त्वा स्वेच्छया शङ्करप्रियः ॥ १५
प्राप्यान्ते पर्वतश्रेष्ठं कैलासं शङ्करालयम् । तत्र गत्वा चिरं भोगान्मोक्षं याति शिवाज्ञया ॥ १६
व्रतमेतदनुष्ठाय पुरा विष्णुर्जगन्मयः । भार्यामवाप परमां महालक्ष्मीं द्विजोत्तमाः ॥ १७
ब्रह्मा सरस्वतीं प्राप वृत्रारिश्च पुलोमजाम् । अश्विनीप्रमुखास्ताराः दक्षशीच प्रासवान्ततः ॥ १८
सप्तविंशति संख्याका भार्यास्तेन पुरा किल । सूर्योऽपि तेजसां राशिरूपां प्राप प्रियां पराम् ॥ १९
लोपामुद्रामगस्त्योऽपि चरित्वैतद्व्रतं महत् । भार्यामवाप विप्रेन्द्रा ऋषीणां प्रवरः पुरा ॥ २०
विष्णोः कुमार्यावमृतवल्ली सौन्दर्यवल्लिके (चन्द्रवल्याख्यके परे) । पुरा व्रतमिदं पुण्यं चरित्वास्य प्रभावतः ॥
स्कन्दप्रसादं लब्ध्वैते पुनश्च स्वेच्छया जनिम् । संप्राप्य देवसेनाख्यां लवल्याख्यां क्रमादिमे ॥ २२
स्कन्दमेव पतिं लब्ध्वा देवसेना धुरन्धरम् । रेमाते तेन पत्या प्रीत्या ते ब्राह्मणोत्तमाः ॥ २३
व्रतमेतच्चरित्वाऽन्या वेदांगस्य महामुनेः । पुत्री सुकेशी (सुकेशा) लावण्यसिन्धुः श्रीनन्दिकेश्वरम् ॥ २४
कैलासवासिनं शंभुगणानामग्रणीं परम् । भर्तारं प्राप्य देवस्त्रीगणैरासेव्यते स्वयम् ॥ २५
सत्यपूर्णाह्वयस्यास्तां महर्षेर्मुनयोरुभे । पूर्णा पुष्कलिकाख्ये ते पुरा पुण्यमिदं व्रतम् ॥ २६
चरित्वा कन्यके पत्न्यौ महाशास्तुर्बभूवतुः । रतिं प्राप प्रियां मारो व्रतस्यास्य प्रभावतः ॥ २७
सीता च जानकी रामं पतिमाप्तवती पुरा । पुरा जांबवती कृष्णं पतिमाप्तवती द्विजाः ॥ २८
सोमरस्तवतां श्रेष्ठश्चरित्वा व्रतमद्भुतम् । प्रह्लीः प्राप्य स्त्रियो रम्याश्शुभलक्षण संयुताः ॥ २९
बहवोऽन्ये व्रतमिदं चरित्वा सर्वपापदम् । स्वभार्याभिश्च सहिता भुक्त्वा भोगान्यथेच्छया ॥ ३०
पुत्रांश्च लब्ध्वा परमान्ते कैलासमाप्य च । मोक्षमापुर्द्विजश्रेष्ठाः पुनरावृत्तिवर्जितम् ॥ ३१
भार्यार्थी लभते भार्यां सर्वलक्षण संयुताम् । व्रतमेतदनुष्ठाय स्वल्पकालेन भूसुराः ॥ ३२
कन्या तु लभते कामतुल्यं पतिमनिन्दितम् । चरित्वा दंपती पुत्रान् लेभाते व्रतमुत्तमम् ॥ ३३
कांक्षितान्यपि सर्वाणि लभन्तेऽस्य प्रभावतः । एतद्व्रतस्य माहात्म्यं किञ्चिदुक्तं मया द्विजाः ॥ ३४
न शक्यते मया वक्तुं माहात्म्यं चास्य कृत्स्नशः । पठन्ति य इमं पुण्यमध्यायं संशितव्रताः ॥ ३५
शृण्वन्ति तेषां महतां भवेत् सर्वञ्च वाञ्छितम् । अन्ते च शिवसायुज्यं लभन्ते नात्रसंशयः ॥ ३६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्वात्रिंशोऽध्यायः ॥

---

॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

मकरमासानुष्ठेय शूलव्रतम् ॥

शूलव्रतञ्च वक्ष्येऽहं सर्वाभीष्टफलप्रदम् । मकरस्थे रवौदर्शे प्रातरुत्थाय बुद्धिमान् ॥ १
ध्यात्वा हृदब्जनिलये धृतशूलमुमासखम् । सर्वैककल्याणनिलयं चन्द्रशेखरमीश्वरम् ॥ २
बहिर्गत्वा कृतस्नानश्शिवतीर्थे शिवं स्मरन् । समाप्य सन्ध्याकर्माणि स्वगृह्योक्तप्रकारतः ॥ ३
विधाय विग्रहं शंभोर्धृतशूलमुमासखम् । काञ्चनेनापरीप्सेन सर्वावयव सुन्दरम् ॥ ४

अभिषेकविधानेन कृत्वाभिषवणक्रियाम् । भक्ष्यं बहुविधं कृत्वा परमान्नसमन्वितम् ॥ ५
निवेदयेन्महेशाय भक्त्या सर्वेश्वराय च । दद्यान्मध्याह्नसमये दानं शक्त्यानुसारतः ॥ ६
शिवभक्ताय विप्राय धृतरुद्राक्षमालिने । ततश्शिवालयं गत्वा प्रदक्षिणविधानतः ॥ ७
दत्त्वा शिवाय यत्किञ्चित् प्रणम्य परमेश्वरम् । शिवभक्तैर्द्विजैस्साकमश्नीयादेकवारतः ॥ ८
स्थित्वा रात्रावनाहारः परेद्युः प्रातरुत्थितः । विधाय नित्यकर्माणि नित्यवद्ब्राह्मणोत्तमाः ॥ ९
दद्यात् स्वगुरवे शंभोर्विग्रहं तद्द्विजोत्तमाः । भुञ्जीयाच्च ततो भक्तैस्सहैव नियमान्वितः ॥ १०
अनुष्ठेयं व्रतमिदमेवमेव द्विजोत्तमाः । व्रतमेतद्विधानेन ये चरन्ति नरोत्तमाः ॥ ११
ते जित्वा सकलाञ्छत्रून्व्याधीनपि महत्तरान् । पूर्णानि लब्ध्वाचायूंषि पुत्रान्वंशाभिवर्धकान् ॥ १२
सर्वेञ्च कांक्षितं लब्ध्वा भुक्त्वा भोगानखण्डितान् । अन्ते च शिवसायुज्यं यान्ति सत्यं मयेरितम् ॥ १३
व्रतमेतदनुष्ठाय विष्णुर्दैत्याधमं पुरा । कालनेम्याह्वयं घोरं जघान किल भूसुराः ॥ १४
पुरा परशुरामोऽपि जामदग्निर्महाबलः । कार्तवीर्यार्जुनं शत्रुं हतवानस्य वैभवात् ॥ १५
शिरोव्याधिर्हरेः पूर्वं शशामैतत्प्रभावतः । ब्रह्मणोऽप्युदरव्याधिश्शशामैतत्प्रभावतः ॥ १६
सुधर्माप्यस्य माहात्म्यान्मृत्युमप्यजयत् द्विजाः । चरित्वैतद् व्रतं पुण्यं मेधाग्निरोऽपि महीपतिः ॥ १७
सहस्रसङ्ख्यान् संप्राप्य पुत्रान् पौत्रांश्च पण्डितान् । भुक्त्वा भोगांश्च विपुलान् कैलासं प्राप भूसुराः ॥ १८
बहवोऽन्ये चरित्वैतल्लब्ध्वाभीष्टं निजं द्विजाः । कैलासं प्रापुरतुलं शङ्करस्य वरालयम् ॥ १९
तस्मादेतद्व्रतं ये तु चरन्ति विधिना द्विजाः । दूरतो याति दुरितं तेषां सत्यं मयेरितम् ॥ २०
ऐश्वर्यं यान्ति परमीश्वरस्य प्रसादतः । व्रतस्यैतस्य माहात्म्यं वीरभद्रो महाबलः ॥ २१
भानुकम्पाय महते गणानामधिपाय च । उक्तवानिति मे प्राह व्यासस्साक्षान्महीसुराः ॥ २२
ये पठन्त्यमुमध्यायं सर्वपापैकनाशनम् । तेषां मृत्युभयं नास्ति शृण्वतामपि भूसुराः ॥ २३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रयस्त्रिंशोऽध्यायः ॥

---

॥ अथ चतुस्त्रिंशोऽध्यायः ॥

वृषभमासे अनुष्ठेय वृषभव्रतम् ॥

शृणुध्वमृषयस्सर्वे वृषभव्रतमुत्तमम् । वृषभस्थे दिवानाथे शुक्लपक्षेऽष्टमीतिथौ ॥ १
प्रातरेव समुत्थाय महादेव वृषोपरि । समासीनं सह ध्यात्वा देव्या चिद्रूपया शुचिः ॥ २
स्नात्वा जलचरे सन्ध्यामुपास्य नियमान्वितः । निर्माय विग्रहं शंभोः काञ्चनं राजतं सुधा ॥ ३
वृषोपरिस्थितं देव्या श्रीपार्वत्या सहातुलम् । पञ्चामृतादिभिर्दिव्यैरभिषिच्य विधानतः ॥ ४
निवेदयेच्च गुडान्नं पायसादि विशेषतः । विधिना पूजयित्वैव दद्यात् द्रव्यं च शक्तितः ॥ ५
विप्राय शिवभक्ताय सदाचारपराय च । ततश्शिवालयं गत्वा दद्याद्देवाय किञ्चन ॥ ६
प्रदक्षिणनमस्कारान्विधायानन्तरं मुदा । स्वगृहं प्राप्य मतिमान् शिवभक्तैर्द्विजोत्तमैः ॥ ७
फलेप्सुरथमुनिसत्तमाः चरेदुत । गुडान्नं पायसान्नं वा भुञ्ज्यादेकमेकसद् द्विजाः ॥ ८
सायं सन्ध्यां वन्दयित्वा नित्यकर्म समाप्य च । पाठयेद्वा पुराणं च शृणुयाद्विशि भूसुराः ॥ ९
शुद्धतल्पे ततो निद्रामनुभूय सुखं द्विजाः । पुनः प्रातस्समुत्थाय परेद्युर्नियमान्वितः ॥ १०

नित्यकर्मविधानाय विप्रद शंकरस्य तम् । शिवभक्ताय विदुषे दद्याद्विप्राय भक्तित ॥ ११
एव व्रतमिदं ये तु चरन्ति मनुजोत्तमा । तेषामायुर्धनं विद्यारोग्यज्ञानप्रभूतय ॥ १२
सम्भवन्तीति चित्र किं ब्राह्मणानामधीश्वरा । विष्णु पुरा व्रतमिदं चरित्वा विधिना द्विजा ॥ १३
ऐश्वर्यमाप परममीश्वरस्य प्रसादत । पक्षिराज च गरुड वाहन लब्धवान् द्विजा ॥ १४
इन्द्रोऽपि लब्धवान्विप्रा ऐरावतमनुत्तमम् । चरित्वैतद्व्रत वह्निरजमापाथवाहनम् ॥ १५
यमोऽपि महिष प्राप महाकाय द्विजोत्तमा । तथाच निर्ऋतिर्विप्रा नरवाहनमुज्वलम् ॥ १६
यादसा पतिरध्याप मकर वाहन परम् । कृष्णसार पुरा वायुर्लब्धवानस्य वैभवात् ॥ १७
कुबेर पुष्पक दिव्य विमान प्राप भूसुरा । पुरेशानोऽपि विप्रेन्द्रा वृषभ धर्मरूपिणम् ॥ १८
सप्ताश्वमेकचक्रञ्च रथ सूर्योऽपि लब्धवान् । विमान प्राप चन्द्रोऽपि नानारत्नविचित्रितम् ॥ १९
विश्वसेनाह्वयो राजा महाराष्ट्रजनेश्वर । वसिष्ठ तपता श्रेष्ठ प्राप्याय विनयान्वित ॥ २०
अपृच्छदद्भुत किञ्चिदतीतानागतादिकम् । तथावदद्वसिष्ठोऽपि त्रिकालज्ञानिना वर ॥ २१
तदा राजातिसंतुष्ट प्रणम्यैनमृषीश्वरम् । कथा वा विधया ब्रह्मन्नेव त्व श्रोकवानसि ॥ २२
तदेतत्तव दासाय नमामि त्वा जगद्गुरुम् । इति तस्य वच श्रुत्वा राज्ञोऽसौ मुनिपुङ्गव ॥ २३
वृषभाख्य व्रत पुण्यमनुष्ठितमनुत्तमम् । तत्प्रभावात् स्फुरती मे त्रिषु कालेषु वस्तु यत् ॥ २४
व्रतस्यैतस्य माहात्म्यात्सर्वामीष्ट भविष्यति । इति विप्रर्षिवचन निशम्य स महीपति ॥ २५
आश्चर्येण च संयुक्तस्स्वयमेतच्चचार हि । ततोऽय लब्धवान्राजा त्रिकालज्ञानमद्भुतम् ॥ २६
भुक्त्वा भोगाश्च विपुलानन्ते कैलासमाप्तवान् । चरित्वैतद्व्रत ब्रह्मा त्रिकालज्ञानमाप्तवान् ॥ २७
सन्तुष्टोऽपि महीदेवश्चरित्वा व्रतमद्भुतम् । अष्टावपि सिद्धयो रम्यास्संप्राप्य गतिमाप स ॥ २८
विधृताख्यो महीपाल पुरैतद्व्रतमद्भुतम् । अनुष्ठाय शरीरेण सप्तपाताललोककान् ॥ २९
ब्रह्मविष्णिवन्द्रपूर्वाणा लोकेष्वपि चरन् सदा । अद्भुतान्यपि सर्वाणि तत्रस्थानि समीक्ष्य स ॥ ३०
स्वपुत्रेभ्यो वसुनेव चरित्वा बहुकालत । कार्यसिद्धिमवाप्यान्ते शिवयोगित्वमाप्तवान् ॥ ३१
एव व्रतमिद केचिच्चरित्वा पुण्यगौरवात् । काङ्क्षितान्यपि सर्वाणि लब्ध्वान्ते मोक्षमापिरे ॥ ३२
ये पठन्त्यमुमध्याय शृण्वन्ति श्रावयन्तिवा । कैलास यान्ति परम ते तु नून द्विजोत्तमा ॥ ३३
एव शिवव्रतान्यष्टौ कथितानि मया क्रमात् । अन्यान्यपिच वक्ष्येऽह शृणुध्व ब्राह्मणोत्तमा ॥ ३४

इति श्री स्कान्दे महापुराणे शंकरसंहिताया शिवरहस्यखण्डे
उपदेशकाण्डे चतुस्त्रिंशोऽध्याय ॥

---

॥ अथ पञ्चत्रिंशोऽध्याय ॥

मेषमास शुक्रवारे अनुष्ठेय गौरीव्रतम् ॥

शुक्रवारव्रत वक्ष्ये देव्याश्सर्वाघहारकम् । मेषगते रवौ शुक्लपक्षे शुक्रस्य वासरे ॥ १
प्रातरेव समुत्थाय ध्यात्वा गौरीं मनोहराम् । स्नात्वा शुद्धजले शुद्धो नित्यकर्म समाप्य च ॥ २
स्वात्मान भावयन्गौरीरूपमुज्ज्वलकान्ति च । शुद्धोदकै पूरयित्वा कुम्भमेक मनोहरम् ॥ ३
तत्रावाह्य महादेवीमर्चयेद् गन्धपुष्पकै । निवेदयित्वा नैवेद्य पायसाद्यन्नसंभवम् ॥ ४
मणी सुमङ्गलीर्वापि कन्यावापि मनोहरा । भस्मरुद्राक्षसर्वाङ्गा गन्धपुष्पैस्समर्च्य च ॥ ५

दद्याद्दानं यथाशक्ति ताभ्यश्शुद्धान्तरो द्विजाः । शिवालयमनुप्राप्य तत्र देवीं त्रियम्बकम् ॥ ६
प्रदक्षिणविधानेन नमस्कृत्वा यथाविधि । दत्वा शक्त्यनुसारेण यत्किञ्चिद्भक्तिसंयुतः ॥ ७
व्रतं समाप्य नियमान्मध्याह्ने निशि वा द्विजाः । भुञ्जीयाद्दध्यन्नं शुद्धैर्भक्तैरपि समन्वितः ॥ ८
फलान्यपूपं वा शुद्धमव्रतमश्नुवेदुत । एवं यस्तनुते मर्त्यश्शुक्रवारव्रतं महत् ॥ ९
तस्य प्रसन्ना श्रीगौरी सर्वाभीष्टं ददेद्ध्रुवम् । चरित्वैतद्व्रतं शुक्रश्शुमानिप्राप्य भूसुराः ॥ १०
स्वनाश्चैतद्व्रतं भूपादिति प्राप परं महत् । एवं दत्वा परं तस्मै दयाघन्तर्धिमीश्वरी ॥ ११
महालक्ष्मीश्चरित्वैतल्लक्ष्मीत्वं प्राप्तवत्यलम् । सर्वविद्याधिपत्यं च वाणीप्रापास्य वैभवात् ॥ १२
अनुष्ठाय महीपाला केचिद्राज्यमवापिरे । विद्यां लक्ष्मीं द्विजाः केचित्पुत्रांश्च प्रापुरञ्जसा ॥ १३
वैश्याः केचन शूद्राश्च व्रतमेतदुमाप्रियम् । चरित्वा प्रापुरखिलमभीष्टं ब्राह्मणोत्तमाः ॥ १४
केचिद्व्रतमिदं कृत्वा भुक्त्वा भोगानखण्डितान् । अन्ते सालोक्यसामीप्यसारूप्याण्याप्य भूसुराः ॥ १५
सायुज्यं प्रापुरतुलं पुनरावृत्तिवर्जितम् । द्वितीयं व्रतमीश्वर्याः प्रवक्ष्ये सर्वपापहम् ॥ १६
मासेचाश्वयुजे शुक्लपक्षेच यम (पूर्वोक्त) तारके । अनुष्ठेयं व्रतमिदं गौर्याः प्रीतिकरं परम् ॥ १७
अस्मिन्दिने समुत्थाय नित्यकर्म समाप्यच । पूजयित्वा महादेवीं शुक्रवारप्रकारतः ॥ १८
दद्याद्दानंच भक्तेभ्यो यथाशक्ति समुद्भवम् । देवालयमनुप्राप्य देवं देवीं प्रणम्यच ॥ १९
दत्वा धनं यथाशक्ति गृहं प्राप्य स्वकीयकम् । मुद्गं शर्करया युक्तं दद्यात्कुरिता शुभम् ॥ २०
भुञ्जयात्परेद्युरन्नं शिवभक्तैस्सहामलं । एतद्व्रतमनुष्ठाय पुरेन्द्राणी मनोरमा ॥ २१
प्राणनायकतामाप सुरेशस्य महीसुराः । उमादेव्यप्यनुष्ठाय व्रतमेतदुमाप्रियम् ॥ २२
भास्करस्य प्रिया भूत्वा तच्छरीरस्थकर्कशम् । व्याधिजं धारयामास ब्राह्मणानामधीश्वराः ॥ २३
बहवोऽन्ये चरित्वैतत्सद्गतिं प्रापिरे द्विजाः । व्रतं नवम्यां वक्ष्येऽहं सर्वाभीष्टफलप्रदम् ॥ २४
आरभ्य प्रथमाश्विन्यां कुम्भे स्थाप्य महेश्वरीम् । शुक्रवारमेवैव नित्यमभ्यर्चयेच्छिवाम् ॥ २५
नवम्यां प्रातरुत्थाय शुचिर्भूत्वा समाहितः । स्नात्वा पुण्यजले संध्यामभिवाद्य विधानतः ॥ २६
अर्चयित्वा महादेवीं भक्तवाञ्छार्थदायिनीम् । अर्चयित्वा स्त्रियश्शुद्धास्सर्वाभरणभूषिताः ॥ २७
ताभ्यो वस्त्राणि सूक्ष्माणि नवम्यं प्रददेत्परं । भोजयेत्पायसान्नाद्यैस्सापूपैर्व्यञ्जनान्वितैः ॥ २८
स्वयं भुञ्ज्याच्च मतिमान् भक्तैस्साकं द्विजोत्तमाः । परेद्युः प्रातरुत्थाय दशम्यां नियमान्वितः ॥ २९
नित्यकर्म समाप्याथ दर्शयित्वा शिवालयम् (त्र्यक्षम्) । शिवभक्तैस्सहधीमान् भुञ्जीयाद्ब्राह्मणोत्तमाः ॥ ३०
एतद्व्रतं पुरा विष्णुश्चरित्वाऽजयदात्मनः । शक्रस्तथान्ये विजयशक्तिं वीरामिथामपि ॥ ३१
विद्याशक्तिं भाग्यशक्तिं बलशक्तिं परामपि । लब्ध्वेह भुक्त्वा परमान् भोगानपि सुदुर्लभान् ॥ ३२
शिवलोकमनुप्राप्य शिवसायुज्यमापिरे । तस्मादिदं व्रतं पुण्यं ये चरन्ति नरोत्तमाः ॥ ३३
सर्वांश्चकीर्त्यनुवाप्य ते यान्ति परमं पदम् । ये पठन्त्यमुमध्याय व्रतमाहात्म्यमद्भुतम् ॥
शृण्वन्ति येऽत्र ये सर्वे सद्गतिं यान्ति भूसुराः ॥ ३४

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चत्रिंशोऽध्यायः ॥

---

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

### वृषभमासे शुक्रवारे विनायक व्रतम्, विनायक चतुर्थी व्रतञ्च ॥

विघ्नेश्वरस्य वक्ष्येऽहं व्रतं परमपावनम् । वृषभस्थे दिवानाथे शुक्लपक्षे भृगोर्दिने ॥ १
प्रातरेव समुत्थाय शुचिर्भूत्वा समाहितः । नित्यकर्म समाप्याथ सौवर्णं राजतं तु वा ॥ २
ताम्रं गणेशं संपाद्य चावाह्याऽभ्यर्चयेद् द्विजाः । पुष्पैर्नानाविधैश्शुभ्रैः पत्रैरपि मनोहरैः ॥ ३
निवेदयेच्च देवाय मोदकादीन्मनोहरान् । शिवालयमनुप्राप्य तत्र विघ्नेश्वरं शिवम् ॥ ४
कृतप्रदक्षिणो दत्वा यथाशक्ति धनं मुदा । नमस्कृत्य विधानेन गृहं प्राप्य स्वकीयकम् ॥ ५
दत्वा द्विजेभ्यो दानानि यथाशक्ति समुद्भवम् । दद्यात्फलमपूपं वा शुद्धमन्नमुत द्विजाः ॥ ६
स्नात्वा परेद्युः कर्माणि समाप्य विधिपूर्वकम् । विघ्नेशप्रतिमां दद्याच्छिवभक्ताय धीमते ॥ ७
भारतीपादशानं पश्चाच्छिवमर्कैस्सहमती । एवमेतद्व्रतं पुण्यमनुष्ठाय पुरा ऋषिः ॥ ८
अत्रिस्सूर्यशशाङ्कौ द्वावलभत्तनुजौ परौ । ब्रह्मा ब्रह्मत्वमापास्य प्रभावाद्ब्राह्मणोत्तमाः ॥ ९
शङ्खपद्मनिधी प्राप्य कुबेरोऽप्यस्य वैभवात् । देवा मनुष्या ऋषयः पुरैतद्व्रतमुत्तमम् ॥ १०
अनुष्ठाय प्रिया भूत्वा विघ्नेशस्यामितौजसः । शिवलोकमनुप्राप्य मोक्षमापुर्द्विजोत्तमाः ॥ ११
विनायकचतुर्थ्याञ्च विधिना यश्चरेद्व्रतम् । विनायकप्रियकरं सर्वपापहरं परम् ॥ १२
स भुक्त्वा विपुलान् भोगान्विघ्नेशस्य प्रसादतः । विघ्नेश्वरस्य लोकञ्च प्राप्नोति न च संशयः ॥ १३
विष्णुः पूर्वमनुष्ठाय चतुर्थीव्रतमद्भुतम् । विघ्नेशस्य प्रियो भूत्वा भुक्त्वा भोगानिवमानमः ॥ १४
पुण्डरीकनिभं नेत्रं लब्ध्वा गौर्याश्च शापतः । मुक्तो विष्णुत्वमापाशु पुनश्च ब्राह्मणोत्तमाः ॥ १५
पुरा ब्रह्मादयो देवा व्रतस्यास्य प्रभावतः । दृष्ट्वा विघ्नेश्वरं भक्त्या प्रणेमुर्भक्तिसंयुताः ॥ १६
विनायकस्तदा नृत्तं चक्रे सुललितं द्विजाः । शशी तदद्भुतं नृत्तं चक्रे दृष्ट्वा स्मयन् स्वयम् ॥ १७
तं शशाप गणाधीशो हसन्तं तं हिमद्युतिम् । अतस्तस्मिन्दिने कोऽपि नेक्षेत तुहिनद्युतिम् ॥ १८
योऽवलोकयते मर्त्यः पापीयान् भवति ध्रुवम् । तस्मिन् दिने पुरा कृष्णश्चन्द्रं वीक्ष्य महिसुराः ॥ १९
महान्तमपि शापञ्च प्राप्तवान् जनगर्हितम् । तस्मादिदं व्रतं पुण्यं सर्वपापप्रणाशनम् ॥ २०
यश्चरेत्तद्गणेशस्य प्रियो भोगानखण्डितान् । भुक्त्वान्ते शिवसायुज्यं याति सत्यं मयेरितम् ॥ २१
विधानेन व्रतं षष्ठ्यां विघ्नेशस्यात्यद्भुतम् । षष्ठ्यस्सद्गतिं प्रापुश्चरित्वा तत्प्रसादतः ॥ २२
विद्युन्माली पुरा राजा व्रतं षष्ठ्यां गणेशितुः । चरित्वा व्याधिना मुक्तो वज्रदेहमवाप्य च ॥ २३
तिलोत्तमां स्त्रियं लब्ध्वा क्रीडयित्वा तया सह । पुत्रानुत्पाद्य परमान् भुक्त्वा भोगान्यथेच्छया ॥ २४
कैलासं, प्राप परमं सशरीरो मनोहरम् । विघ्नेश्वरप्रियो भूत्वा मोक्षमाप द्विजोत्तमाः ॥ २५
एवं व्रतमनुष्ठाय बहवो मोक्षमापिरे । विघ्नेश्वरव्रतान्येवं कथितानि मया द्विजाः ॥ २६
ये पठन्तीममध्यायं शृण्वन्ति श्रावयन्ति वा । ते भुक्त्वा भोगमतुलं मोक्षं यान्ति द्विजोत्तमाः ॥ २७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्त्रिंशोऽध्यायः ॥

---

॥ अथ सप्तत्रिंशोऽध्याय ॥

सकल भोगमोक्षप्रद स्कन्दषष्ठीव्रतादि ॥

अन्यद्व्रत प्रवक्ष्यामि सुब्रह्मण्यस्य वै द्विजा । तुलाराशि गते सूर्ये पूर्वस्मिन् भृगुवासरे ॥ १
समुत्थाय शुचिर्भूत्वा प्रातरेव षडाननम् । ध्यात्वा हृदम्बुजनिलये नित्यकर्म समाप्य च ॥ २
व्रतञ्चरेद्विधानेन सर्वपापहर परम् । कृत्तिकाव्रतमन्यच्च स्कन्दषष्ठिव्रत परम् ॥ ३
व्रतानि त्रीणि ये मर्त्याश्चरन्त्यागममार्गत । ते भुक्त्वा विपुलान् भोगानन्ते मोक्ष गुहाश्रया ॥ ४
ब्रह्मविष्ण्वादयो देवाश्चरित्वैतानि भूसुरा । जघ्नुर्दैत्यान्महाघोराञ्शमभयानान्पुरा ॥ ५
कर्तृत्वञ्च दिशा प्रापुर्दिक्पाला पुनरप्युत । मुचुकुन्दो महीपालश्शत्रूञ्जित्वा रणे पुरा ॥ ६
गणाधिपत्य सप्राप चरित्वैतानि भूसुरा । नारदप्रमुखा पूर्व तापसानामधीश्वरा ॥ ७
नित्यत्व प्रापुरतुल पुनरावृत्तिदुर्लभम् । पुत्रानापु पुराकेचिदपुत्रा ब्राह्मणोत्तमा ॥ ८
ऐश्वर्यं ज्ञानयोगाश्च मोक्षञ्चापु पुरा परे । त्रिष्वेतेष्ठुव्रतश्चैक यश्चरेद्गुहसमतम् ॥ ९
स लब्ध्वा वाञ्छित सर्वं शिवलोकमनुत्तमम् । प्राप्य मोक्ष व्रजत्यन्ते गुहस्यैव प्रसादत ॥ १०
त्रीणि व्रतानि यो मर्त्यश्चरतिस्कन्दसमतम् । माहात्म्य तस्य कोवेत्ति गुहतुल्यस्य भूसुरा ॥ ११
य इम पठतेऽध्याय यश्शृणोति गुहप्रियम् । स भुक्त्वा विपुलान् भोगान्मोक्ष याति महीसुरा ॥ १२

इति श्री स्कान्दे महापुराणे शकरसहिताया शिवरहस्यखण्डे
उपदेशकाण्डे सप्तत्रिंशोऽध्याय ॥

---

॥ अथ अष्टत्रिंशोऽध्याय ॥

यमयातना निवृत्तिपूर्वक कैलासप्रद भैरव वीरभद्रयो व्रतम् ॥

त्रीणि व्रतानि वक्ष्येऽह भैरवस्य महात्मन । मकरस्थे रवौ भानोर्वारे प्राथमिके तथा ॥ १
चैत्राश्वयुजमासकयोर्भरण्योरुभयोरपि । ब्राह्मे मुहूर्ते उत्थाय भैरव मनसा स्मरन् ॥ २
समाप्य नित्यकर्माणि सौवर्णं राजत तु वा । ताम्रज विग्रह वापि भैरवस्य महात्मन ॥ ३
निर्माय पूजयित्वैन पुष्पैर्नानाविधैरपि । निवेदयेच्च नैवेद्य पायसाद्यन्नसभवम् ॥ ४
प्रदक्षिणनमस्कारान् कृत्वा स्तोत्रपुरस्सरम् । दद्याच्च शिवभक्तेभ्यो दान शक्त्यानुसारत ॥ ५
शिवालयमनुप्राप्य तत्र देव त्रियम्बकम् । भैरवञ्चापि देवेश प्रदक्षिणविधानत ॥ ६
नमस्कृत्वा ददेद्भक्त्या यथाशक्ति समुद्भवम् । स्वगृह प्राप्य मध्याह्ने शिवभक्तैस्समन्वित ॥ ७
अथवा फलमपूप वा भक्तश्चैकवारत । परेद्यु प्रतिमा भक्त्या दद्याद्गुरवे भैरवीम् ॥ ८
एव चरति यो मर्त्यो भैरवस्य व्रतान्यपि । स भुक्त्वा विपुलान् भोगान् स्वेच्छया ब्राह्मणोत्तमा ९
शिवलोकमनुप्राप्य भैरवस्य कृपावशात् । अन्तेच मोक्ष याम्तीति मैवाश्चर्यं द्विजोत्तमा ॥ १०
व्रतमेतदनुष्ठाय पुरा सूर्यो महाप्रभ । भैरव कवच प्राप सूर्यकोटिसमप्रभम् ॥ ११
तस्माच्चरति यो मर्त्यो व्रतान्येतानि भूसुरा । स भुक्त्वा विपुलान् भोगानन्ते मोक्षञ्च विन्दति ॥ १२
अन्यद्व्रत प्रवक्ष्यामि वीरभद्रस्य धीमत । भौमवारे समुत्थाय प्रातरेव द्विजश्शुचि ॥ १३
नित्यकर्माणि सर्वाणि समाप्य विधिपूर्वकम् । रौप्येण काञ्चनेनापि वीरभद्र महाफलम् ॥ १४
विनिर्मायाभिषेकाद्यैरर्चयित्वा यथाविधि । निवेदयेच्च नैवेद्य नानाभक्ष्यसमन्वितम् ॥ १५

शिवभक्ताय विदुषे दद्याद्दानञ्च शक्तितः । ततश्शिवालयं गत्वा प्रणम्य परमेश्वरम् ॥ १६
वीरभद्रञ्च मतिमान् प्रदक्षिणविधानतः । दत्त्वोपहारं यत्किञ्चिद् गृहं प्राप्य स्वकं पुनः ॥ १७
भुञ्जीयाच्छिवभक्तैश्च साकं मौनं महीसुराः । परेद्युः प्रतिमां दद्याच्छिवभक्ताय भक्तिमान् ॥ १८
एवमेतद्व्रतं यस्तु वीरभद्रस्य पावनम् । आचरेत्तस्य पुण्यस्य वीर्यं तेजश्च संपदः ॥ १९
चरित्वैतद्व्रतं ब्रह्मा शंभोस्सुतत्वमाप्तवान् । कल्पवृक्षं शचीं प्राप सुरेशोऽपि महीसुराः ॥ २०
ब्राह्मणा बहवः पूर्वं शिवज्ञानमवापिरे । भूपालाश्च पुराप्रापुरैश्वर्यं विजयं परम् ॥ २१
वैश्याश्शूद्राश्च बहवश्चरित्वैतद्व्रतं महत् । पुत्रान् लब्ध्वा वरान् भोगान् भुक्त्वा मोक्षमवापिरे ॥ २२
तस्मादेतद्व्रतं ये च चरन्ति मनुजोत्तमाः । ते लब्ध्वा विजयं पुत्रान् वीरभद्र प्रसादतः ॥ २३
अन्ते च शाङ्करं धाम यान्ति सत्यं मयेरितम् । अध्यायं ये पठन्त्येतं शृण्वन्ति श्रावयन्ति वा ॥
ते भुक्त्वा भोगमतुलं यान्ति शम्भोः परं पदम् ॥ २४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टत्रिंशोऽध्यायः ॥

---

॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

पशुपुण्यात् शिवपुण्यं श्रेष्ठम् ॥

एवं व्रतानि सर्वाणि कथितानि मया द्विजाः । इदानीं शिवपुण्यानि शृणुध्वमवधानतः ॥ १
शिवस्य देवदेवस्य लिङ्गरूपस्य भूसुराः । तथैव शिवबेराणामुमायाष्षण्मुखस्य च ॥ २
विघ्नेशस्य गणादीनां भक्तानामपि भूसुराः । सालोक्यादि पदप्राप्तौ भक्तानां शङ्करेच्छया ॥ ३
प्राकाराट्टालवल्लभिप्रासादादीन्यनेकशः । आलयानि मनोज्ञानि विदध्याल्लोभवर्जितः ॥ ४
एताश्च निर्मिमेद्भक्त्या ताम्रस्वर्णशिलादिभिः । प्रतिष्ठाञ्च विधानेन कारयेत्सति संभवे ॥ ५
अभिषेकमलङ्कारं स्रग्भिः कुर्याद्विधानतः । वस्त्राणि गन्धनैवेद्यमेतेषां परिकल्पयेत् ॥ ६
दीपान् प्रकल्पयेत् स्थूलानुपचारांश्च कारयेत् । गाश्च संपादयेद्भक्त्या कन्या अपि च कल्पयेत् ॥ ७
क्षेत्राणि दद्याद्वित्तानुसारादारामकानि च । वापी कूपतटाकांश्च वृक्षान्देवाय कल्पयेत् ॥ ८
वाहनानि रथादीनि कल्पयेत्परमेशितुः । उत्सवान् कारयेद्विद्वान् महाविभवविस्तरम् ॥ ९
आलयादीनि जीर्णानि पुनरेव समुद्धरेत् । प्रदक्षिणनमस्कारान् कुर्यान्नित्यमतन्द्रितः ॥ १०
एवमादीनि पुण्यानि शिवस्य परमात्मनः । कुर्यान्नित्यं प्रयत्नेन श्रेयसे भूसुरोत्तमाः ॥ ११
शिवार्चकाय गुरवे दद्यान्निर्माय मन्दिरम् । गृहोपकरणं धान्यं धनं दद्याद्यथाबलम् ॥ १२
स्वगुरुं प्रणमेत् दृष्ट्वा कुर्याच्चैव प्रदक्षिणम् । एवं समुदकार्याणि नित्यं कुर्यादतन्द्रितः ॥ १३
गृहाणि शिवभक्तेभ्यो दद्यान्निर्माय भक्तिमान् । गृहोपकरणादीनि वस्त्राण्यपि च भूसुराः ॥ १४
तथा शिवपुराणानि भस्मरुद्राक्षकान्यपि । शिवलिङ्गानि पुण्यानि तथैवाभरणान्यपि ॥ १५
अन्नञ्च भक्तिमान्दद्याद्भक्तेभ्यो भूसुरोत्तमाः । पुरतो वीक्ष्य भक्तांश्च दृष्ट्वोत्तिष्ठेत भक्तिमान् ॥ १६
नमस्कुर्याच्च मतिमान् संभाष्य बहुमानतः । एवमादीनि कार्याणि शिवभक्तस्य निर्वहेत् ॥ १७
शिवस्याश्च शिवाचार्यभक्तानां भक्तिमुज्ज्वलाम् । एतेषामपि कार्यस्य न विघ्नं मनसा स्मरेत् ॥ १८
वाचा च मनसा चैव शरीरेण धनेन वा । कुर्यात्सहायमनिशं भक्तेभ्यः परया मुदा ॥ १९

शिवाय गुरवे चैव शिवपुण्यरताय च । एतानि शिवपुण्यानि स्मृतानि मुनिसत्तमैः ॥ २०
एतानि शिवपुण्यानि ये कुर्वन्ति नरोत्तमाः । ते भुक्त्वा विपुलान् भोगान् पूज्यमानो महीतले ॥ २१
पुत्रपौत्रसमृद्धास्ते भुक्त्वा भोगानखण्डितान् । काञ्चनेन विमानेन शिवलोकमवाप्यते ॥ २२
कल्पकोटिसहस्राणि मोदन्ते शिवसंमताः । अन्ते च शिवसायुज्यं प्राप्नुवन्ति नसंशयः ॥ २३
इत्थं निशम्य वचनं सूतस्य मुनिसत्तमाः । अपृच्छन् संशयाविष्टा भक्तानां लक्षणं मुदा ॥ २४
शिवस्य लक्षणं पूर्वं गुरोरपि च लक्षणम् । इति तेषां वचः श्रुत्वा सूतः पौराणिकोत्तमः ॥ २५
प्रोवाच लक्षणं भूयो भक्तानां परमेशितुः । शिवभक्ता महात्मानस्सन्ति देवेषु केचन ॥ २६
दैत्येषु यातुधानेषु यक्षगन्धर्वभोगिषु । मुनीश्वरेषु मर्त्येषु ब्राह्मणेषु नृपेष्वपि ॥ २७
ऊरुजेष्वपि शूद्रेषु सङ्करेष्वपि सर्वशः । वर्णाश्रमव्यवस्थाच नैषां सन्ति मुनीश्वराः ॥ २८
केवलं शिवभाक्तास्ते सर्वे माहेश्वराः स्मृताः । अतिवर्णाश्रमाः प्रोक्तास्सर्ववेदेषु संमताः ॥ २९
तेषां बाह्यानि चिह्नानि दश सन्ति मुनीश्वराः । त्रीण्यान्तराणि चोक्तानि दश सन्ति महात्मनः ॥ ३०
प्रथमं भस्मरुद्राक्षधारणं समुदीरितम् । द्वितीयं गुरुसेवाच शिवस्तोत्रं तृतीयकम् ॥ ३१
नामोच्चारणमीशस्य चतुर्थं परिपठ्यते । पञ्चमं देवदेवस्य पूजनं ब्राह्मणोत्तमाः ॥ ३२
शिवालयस्य पुण्यस्य दर्शनं षष्ठमीरितम् । तथा शिवपुराणानां श्रवणं सप्तमं द्विजाः ॥ ३३
नमस्कारं तु भक्तानामष्टमं कथितं खलु । नवमं शिवभक्तानां गृहे भोजनमीरितम् ॥ ३४
दानञ्च दशमं ज्ञेयं शिवभक्ते गुरावपि । एवं बाह्यानि चिह्नानि कथितानि दश द्विजाः ॥ ३५
आन्तराण्यपि चिह्नानि मनसः प्रथमो जपः । पूजा च मानसीज्ञेया द्वितीया परमेशितुः ॥ ३६
साक्षात्कारस्तृतीयस्तु ब्रह्मणो ब्राह्मणोत्तमाः । इमानि त्रीणि चोक्तानि पुराविद्भिर्मुनीश्वरैः ॥ ३७
आन्तराण्यपि बाह्यानि येषां सन्ति यदा द्विजाः । तदा भाक्तानि चिह्नानि संभवन्ति महात्मनाम् ॥ ३८
कण्ठे विकारः प्रथमो गद्गदाख्यश्शरीरजः । जिह्वास्पन्दो द्वितीयस्तु स्फुरणं चोष्ठयोरपि ॥ ३९
कंपनञ्च शरीरस्य चतुर्थं भक्तिलक्षणम् । रोमाञ्चः पञ्चमोज्ञेयष्षष्ठः स्वेदोऽपि कीर्तितः ॥ ४०
स्खलनं सप्तमं ज्ञेयमष्टमं बाष्पनिर्गमः । रोदनं नवमं चिह्नं दशमं पारवश्यकम् ॥ ४१
एतानि दश चिह्नानि भाक्तान्युक्तानि शूलिना । त्रिविधान्यपि चिह्नानि येषां सन्ति महात्मनाम् ॥ ४२
ते भक्ताश्शाङ्करा ज्ञेयास्सर्वलोकैकपावनाः । अथवा शिवभक्ता ये भस्मरुद्राक्षधारिणः ॥ ४३
तेषु पूर्वोक्तचिह्नानि न ज्ञायन्ते यदा तदा । तान् दृष्ट्वा प्रणमेद्भक्त्या शिवभक्तान् शिवप्रियः ॥ ४४
ये वै शिवं गुरुं भक्तान् प्रणमन्ति स्तुवन्त्यपि । कांक्षितान्यपि सर्वाणि लब्ध्वा ते परयामुदा ॥ ४५
भुक्त्वा भोगान् सुविपुलान् पुत्रैः पौत्रैस्समन्वितः । अरोगा दृढगात्राश्च स्थित्वात्र बहुकालतः ॥ ४६
अन्ते विमानमारुह्य नानारत्नविचित्रितम् । सौरलोकस्थितैर्देवैश्चन्द्रलोकस्थितैरपि ॥ ४७
तथान्यैर्देवलोकस्थैर्दिक्पालैर्जगदीश्वरैः । ब्रह्मणा विष्णुनाचापि तथैव ऋषिसत्तमैः ॥ ४८
एतैरन्यैश्च सकलैरग्रतोयायिभिर्मुदा । देवदुन्दुभिनिर्घोषैः पुष्पवर्षैरितस्ततः ॥ ४९
नृत्यद्भिरप्सरोवृन्दैर्गायद्भिः किन्नरैर्वृतः । दिव्यं शरीरं संप्राप्य शिवलोकं शिवप्रियम् ॥ ५०
गत्वाऽत्र सन्निधौ शंभोः स्थित्वा प्राप्य सरूपताम् । अन्तेच शिवसायुज्यं लभन्ते ब्राह्मणोत्तमाः ॥ ५१
तस्माच्च शिवपुण्यानां माहात्म्यं वर्णितुं मया । शक्यं यथा वै माहात्म्यं शङ्करस्य महात्मनः ॥ ५२
एवमेव पुरा देवी शिवपुण्यमनुत्तमम् । श्रुत्वा महेश्वराद्भक्त्या प्रीत्या परमयायुता ॥ ५३
सख्याश्रयेण संयुक्ता सहसोत्थाय चासनात् । प्रदक्षिणत्रयं कृत्वा प्रणम्यच महेश्वरम् ॥ ५४

भवत्रीरस्तुस्मिता वाक्यं प्रसन्नं वीक्ष्य शङ्करम् । अनेन शिवपुण्येन प्राणिनः परमेश्वर ॥ ५५
विदित्वा त्वां गतिं यान्तु तव सायुज्य रूपिणीम् । इत्युक्तश्शिवया देवः करुणारूपया पुरा ॥ ५६
ज्ञातुं न सुलभं लोकैमेव पुण्यमनुत्तमम् । पशुपुण्यानि सर्वाणि कृत्वा शुद्धान्तरात्मभिः ॥ ५७
एकोऽहं शिवपुण्यानि ज्ञातुं शक्यानि लेशतः । अन्येषां केवलानान्तु शिवपुण्यं कुतो भवेत् ॥ ५८
तस्मात्सर्वप्रयत्नेन पशुपुण्यमनेकशः । चरित्वा शिवपुण्येषु मनो भवति नान्यथा ॥ ५९
इत्युक्तं देवदेवेन देव्य पूर्वं द्विजोत्तमाः । अथात्र वक्ष्ये युष्माकं कथां पुण्यां मनोरमाम् ॥ ६०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनचत्वारिंशोऽध्यायः ॥

---

## ॥ अथ चत्वारिंशोऽध्यायः ॥

### विश्वामित्र वसिष्ठादि मुनिशापात् शिवपुण्येन मोक्षणम् ॥

पुनश्च शिवपुण्यस्य माहात्म्यं वर्णयामि वः । शृण्वन्तु सावधानेन ब्राह्मणानामधीश्वराः ॥ १
अस्ति कश्चिन्महीपालः कोसलानामधीश्वरः । अजाह्वयश्चतस्रोऽस्य समजायन्त कन्यकाः ॥ २
रूपलावण्यसंपन्नास्सुकुमाराङ्गयष्टयः । कल्याणमण्डपश्चक्रे तासां स मतिमान्नृपः ॥ ३
आनयामास तनयांश्चाशामति मनोहरान् । तस्थुस्ते राजतनयास्समागत्यात्र मण्डपे ॥ ४
ततः प्रतस्थिरे ताश्च कन्यास्तान्राजपुत्रकान् । समुद्वीक्ष्यैवपुथः स्वेष्टस्तस्य जहुः करान्निमाः ॥ ५
प्रथमा निषधाधीशं महेन्द्रं पतिमाप हि । सानन्दं कंबुदेशेशं द्वितीया वाळभत्पतिम् ॥ ६
कांबोजाधीशमपरं सुमालिं प्राप नायकम् । कोङ्कणेशं चतुर्थी च विशालाक्षमगात्पतिम् ॥ ७
एवमापुः पतीनेता मालास्स्कन्धे विधाय च । कल्याणं कारयामास नानाविभव विस्तरम् ॥ ८
राजाऽसौ परया प्रीत्या बन्धुसंमानतत्परः । तेषां वराणां भूरीणि ददौ द्रव्याणि पार्थिवः ॥ ९
भूषणानि च वस्त्राणि कटकानि तथैव च । पुत्रीणामपि दत्त्वैवं बहुमानेन पार्थिवः ॥ १०
चतुरङ्गबलं तेषां परिकल्प्य सुबुद्धिमान् । कन्यकाभिश्च संयोज्य स्वदेशगमनाय तान् ॥ ११
प्रेषयामास पुण्यात्मा प्रीत्या परमया सह । ततः प्रतस्थिरे राजकुमारास्ते सुसंयुताः ॥ १२
बहिः पुराद्विनिर्गत्य स्वदेशगमनाय ते । संभूय तस्थिरेऽन्योन्यं वार्तां कृत्वा महीसुराः ॥ १३
तदानीमागतस्तत्र विश्वामित्रो महामुनिः । आजुहाव महीपालसुतानेतान् स्वनामतः ॥ १४
तेतु वाद्यारवैर्वार्त्तांव्यासक्ते नान्यमानसाः । अश्रुत्वा वचनं तस्यतस्तापसेशस्य भूसुराः ॥ १५
ततः कोपेन महता विश्वामित्रो महामुनिः । मुक्त्वा राजकुमारांस्तांश्चतस्रो राजकन्यकाः ॥ १६
शशाप तान् भटान् सर्वान् द्रव्याण्यपि वराण्यपि । भवन्तु भस्मसात्सद्य इति राज्ञां तपोनिधिः ॥ १७
ततः क्षणेन सर्वाणि भस्मभावमवापिरे । कुमारास्ताश्च तत्पल्ल्यस्सर्वाश्च भयकंपिताः ॥ १८
मतस्तान् तापसश्रेष्ठस्समीक्ष्याह वचस्तदा । नालोकयत मां यूयं न श्रुतं कर्णयोर्वचः ॥ १९
तस्मश्चरत घोरेऽस्मिन्नन्धभावं वने गताः । बाधिर्यं भवतामद्य भवतात्शापितामिह ॥ २०
ग्रामे पुरे वा युष्माकं न निवासो भवत्वलम् । भार्याभिस्सह संभोगो नैवास्तु नृपपुत्रकाः ॥ २१
निपतिष्यन्ति मूर्धानो भविष्यन्ति यदा तदा । शपित्वैवमृषिर्गात् स्वाश्रमाय मुनीश्वराः ॥ २२
तथैव तच्छापवशात्ते सर्वे राजपुत्रकाः । चेरुरन्धाश्च बधिरा वने तस्मिन् सुदुःखिताः ॥ २३

स्त्रीभिः प्रदर्शिता मार्गं कन्दमूलफलाशिनः । एवमेतेषु भूपेषु विचरत्सु वनेष्वथ ॥ २४
अगस्त्यस्तपतां वर्यस्तदानीमाययाविह । तं दृष्ट्वा तपतां श्रेष्ठं तास्स्त्रियो भर्तृभिस्सह ॥ २५
प्रणम्य भृशदुःखार्ताः स्ववृत्तान्तं व्यजिज्ञपन् । इतः परं कदाऽस्माकं शापान्मोक्षो भविष्यति ॥ २६
केनोपायेन तथ्यं त्वं वद कारुण्यवारिधे । शरणं त्वां प्रपन्नास्स्मो रक्षास्मांस्तापसेश्वर ॥ २७
इत्थं निशम्य वचनं तासां तेषां घटोद्भवः । कृपया केवलं प्राह तदुपायमृषीश्वरः ॥ २८
शिवपुण्यं यदि कृतं भवद्भिः सर्वपापहम् । शापमोक्षो भवेन्नूनमैश्वर्यञ्च भविष्यति ॥ २९
राज्यञ्च स्ववशे याति नात्र सन्देहकारणम् । अन्तेच शिवसायुज्यं भविष्यति यथेच्छया ॥ ३०
शिवपुण्यं विना नैव सद्गतिर्देहिनामिह । अत्रेतिहासं युष्माकं शृण्वतां कथयाम्यहम् ॥ ३१
कीचकाख्ये पुरे पूर्वं साधारणमहीपतिः । भार्ययाऽन्तःपुरे रम्ये तस्थे क्रीडारतोऽनिशम् ॥ ३२
तदा वसिष्ठस्तपतां वरिष्ठोऽस्य गृहाङ्गणे । समागत्यावसत्तत्र घटिकाः काश्चिदात्मवान् ॥ ३३
विनिर्गत्य ततो राजा भार्यया सह तापसम् । प्रणम्य प्रश्रयानम्रस्तस्थे बद्धाञ्जलिः पुरः ॥ ३४
तदा कोपेन तं प्रेक्ष्य राजानं प्राह तापसः । मयाऽऽगत्यात्र घटिका नीता द्वित्रिचतस्रकाः ॥ ३५
इयन्तं कालमन्वीक्ष्य गृहद्वारि स्थितोऽस्म्यहम् । न निर्गतोऽसि यस्मात्त्वं दर्पान्मूढ महीपते ॥ ३६
तद्वने चरतां तेऽद्य भूयाद्भार्यासखस्य च । वसन्ति येऽत्र नगरे जनास्ते मृगपक्षिणः ॥ ३७
भवन्तु पत्तनं चैतद्वनं भूयाद्भयङ्करम् । शप्त्वैवमृषिवरः स्वाश्रममायाशु निर्ययौ ॥ ३८
तथैव सर्वं सञ्जातं वसिष्ठस्य तपोबलात् । चचार व्याधरूपेण वनेऽस्मिन् भार्यया नृपः ॥ ३९
तदानीमागतस्तत्र तृणबिन्दुर्महानृषिः । वृत्तान्तं सर्वमावेद्य पप्रच्छ स्वागतं नृपः ॥ ४०
सोऽथ कृपावशादेतौ समुद्वीक्ष्य ऋषीश्वरः । शिवपुण्यं विचार्याशु सर्वदुःखविमोचकम् ॥ ४१
वनेऽस्मिन् विद्यते किंवा शिवस्थानं शिवप्रियम् । इति पप्रच्छ तं व्याधं तापसानामधीश्वरः ॥ ४२
सोऽब्रवीदविदूरेण ब्रह्मेश्वरमनुत्तमम् । तच्छ्रुत्वा तपतां श्रेष्ठः पुनः प्राह समीक्ष्य तौ ॥ ४३
युवामत्र शिवस्थाने तृणं पर्णं लतामपि । दूरीकृत्य सदा शंभोः कुरुतञ्च प्रदक्षिणम् ॥ ४४
प्रणम्य सांबमीशानं वसतञ्च शिवालये । स एव भगवानीशो युवां रक्षतु मा चिरम् ॥ ४५
इत्युक्त्वा स्वाश्रमायायं जगाम ऋषिसत्तमः । तस्य तद्वचनं श्रुत्वा तथैवैतौ प्रचेरतुः ॥ ४६
व्यतीयुरेतयोस्तत्र दिनान्येकादशाञ्जसा । ततो वनमिदं भूयो नगरं समजायत ॥ ४७
जनाश्च मृगपक्षित्वं मुक्त्वा स्वत्वमवापिरे । भार्यया सह राजत्वं प्राप्तवान् सोऽपि भूपतिः ॥ ४८
राज्यञ्च चक्रे पत्या प्रीत्या पूर्ववदात्मवान् । शिवपुण्यप्रभावेन पूर्वरूपमिहागतम् ॥ ४९
एवं विचार्य चक्रेऽयं शिवपुण्यं सुविस्तरम् । देहान्ते सद्गतिं प्राप भार्यया सह भूमिपः ॥ ५०
तस्माद्यूयञ्च पुण्यानि शङ्करस्य महात्मनः । कृत्वा राज्यं धनं रूप भजतात्र शिवाज्ञया ॥ ५१
इति ब्रुवन्तं तं भूयः प्रणम्यैते सभार्यकाः । कथं कार्यं परं पुण्यं वदास्माकमृषीश्वर ॥ ५२
इत्युक्त्वा प्रणतिं चक्रुर्दण्डवत्तस्य पादयोः । तदानीमाययावत्र शिवविप्रदिशयप्रियः ॥ ५३
शंभुममृतेशानमभयमाराधवत्सलम् । तं दृष्ट्वा तपतां श्रेष्ठः कुम्भभूराहनद्रुतम् ॥ ५४
त्वं हि लोकगुरुः पुष्पगिरिसन्तानजो महान् । शिष्यानङ्गीकुरु क्षिप्रमेतानपि सुदुःखितान् ॥ ५५
भवताराधितं शंभुममृतेशमघौघदम् । सेवयित्वाऽस्य सविधे परिचर्याञ्च कारय ॥ ५६
यथा भवेयुरेते वै सुखिनो दुःखसागरात् । तथाऽद्य कृपया विद्वन् कुरु लोकगुरुर्यतः ॥ ५७
इत्युक्त्वा योजयित्वैन कैलासाय ययौ स्वयम् । गतेऽस्मिंस्तापसश्रेष्ठे प्रणम्यैते शिवद्विजम् ॥ ५८

एव च कृपया विद्वन् प्रार्थयामासुरास्तिका । निशम्य वाक्यमेतेषा सोऽय तु खातुरोभृशम् ॥ ५९
मास्तु दु ख महाभागा युष्माक शिपुतीश्वरे । भक्तरक्षापरे नित्य भक्तिगम्ये सनातने ॥ ६०
मुद्गलाख्य पुरा विप्र काश्यपस्य महात्मन । शिष्योऽय तस्य निकटे पठित्वा शास्त्रमास्थित ॥ ६१
पठत्येकदिने तस्मिंस्तस्योपर्यपतज्जलम् । तदा शशाप त कोपात् काश्यपस्तपसा वर ॥ ६२
यस्मादुपरि मे भ्रान्त पपातास्य जल तव । तेन त्वमाशु महिषो भूयाद्रवेण सयुत ॥ ६३
तस्य तच्छापमात्रेण बभूव महिषाकृति । चचार नगराद्बाह्ये भक्षयस्तृणसन्ततिम् ॥ ६४
तत्र शक्तीश्वरेशस्य प्राकारनिकट गत । परितस्तृणजालानि चचार त्रि प्रकारत ॥ ६५
तृण प्राकारभित्तौ यत्तत्सर्वञ्च चचार स । ध्वजदण्ड समागत्य सन्निधिञ्चावलोकयत् ॥ ६६
तदैव शापान्निर्मुक्त स्व रूप प्राप सुन्दरम् । देव प्रदक्षिणीकृत्य नमश्चक्रे पुन पुन ॥ ६७
तत्सर्वं मनुजास्तत्र समीक्ष्याश्चर्यमापिरे । शिवपुण्यस्य माहात्म्य वर्णयन्तिस्म सन्ततम् ॥ ६८
यद्ज्ञानेन महिष सञ्चरस्तृणसन्ततिम् । दारुण माहिष रूप मुक्त्वा स्व रूपमास्थित ॥ ६९
तस्मात्पुण्यस्य माहात्म्य कोवेत्ति परमेशितु । इत्युक्त्वाऽन्योन्यमनिश तस्थिरे मनुजोत्तमा ॥ ७०
तस्माद्यूयञ्च पुण्यानि चरतात्र महेशितु । कानि पुण्यानि भगवन्ननुष्ठेयानि शूलिन ॥ ७१
तद्वदात्र दयासिन्धो पापिना नो मुनीश्वर । इति तेषा वच श्रुत्वा प्राहतास्तापसेश्वर ॥ ७२
चत्वार पुत्रयूयमसृतेश परात्परम् । सदा प्रदक्षिणीकृत्य प्रीणयध्वमतन्द्रिता ॥ ७३
एकात्र शम्भुमन्दिर समार्जय विलेपय । अभिषेकजलञ्चान्या शम्भोरानयतु प्रभो ॥ ७४
इतरान्यपुष्पाणि समानयतु शूलिन । कन्दमूलफलञ्चान्या नैवेद्यायानयत्विह ॥ ७५
इत्युक्त्वा प्रेरयित्वा तानामीयैतान् द्विजोत्तमा । तस्मिन्दिने महादेव पूजयामास भक्तित ॥ ७६
परेद्युस्साधन तेषा समानीय ददौ स्वयम् । पूजयामास स शिव नित्य तैस्तैर्दिशान्द्विज ॥ ७७
भक्त्यैते तस्थिरे द्वये निवेद्य फलमूलकम् । दिनान्येव गतान्येषामेकविंशतिसङ्ख्यया ॥ ७८
ततो द्वाविंशतिदिने नेत्राण्येषा बभूविरे । श्रोत्राणि समजायन्त पूर्ववच्छङ्कराज्ञया ॥ ७९
आश्चर्येण तु संयुक्ता प्रणस्यैते महेश्वरम् । पुन प्रदक्षिणञ्चक्रुर्दिवसानष्ट भक्तित ॥ ८०
ततो भूतानि सर्वाणि चतुरङ्कुरलान्यपि । स्वयभुवु पदार्थाश्च यथापूर्वं शिवाज्ञया ॥ ८१
स्त्रियश्चतथा पुरुषा पूर्ववद्यौवन ययु । तदा शिवद्विज सर्वं प्रणेमुर्भक्तिसयुता ॥ ८२
कृपया तव विप्रेन्द्र मोक्ष प्राप्ता स्वतापत । श्रुत्वैवमुपचार स प्रोक्तवान् वीक्ष्य तानयम् ॥ ८३
शिवपुण्य कृत यस्माद्युष्माभिर्योक्षकिल्बिषे । तत्प्रभावादिय वस्तु श्रोत्रादीनि सचाप ॥ ८४
युष्मदीया पदार्थाश्च तत यथागता ध्रुवम् । ततो महर्षिशापाच्च मोक्षो नात्र विचारणा ॥ ८५
इतो यूय स्वक राज्य कुरुत स्वस्वराष्ट्रया । शिवपुण्य सदा कृत्वा तिष्ठताथाप्रमादत ॥ ८६
इति तस्य वच श्रुत्वा गुरोरेते नृपात्मजा । प्रणम्य त गुरु पश्चादमृतेश परात्परम् ॥ ८७
प्रीणयामासुरेते तमभिषेकविधानत । चतुरस्यच नैवेद्य भक्ष्यभोज्यादिभिर्भृशम् ॥ ८८
भित्वा यत्नत्र परितो महादेवालयस्य तत् । गुरुनाम्ना पुरञ्चैक लोकधर्मीति विश्रुतम् ॥ ८९
निर्माय प्रतिमन्तस्ते मण्टप गोपुर तथा । रथमुत्सवमन्यच्च कारयामासुरुत्सवा ॥ ९०
तेन स्वगुरवे दत्वा धन भूरि नृपात्मजा । राज्य तदाज्ञया स्वीय प्राप्यैते पर्यामुदा ॥ ९१
निष्कण्टक महासत्याश्चतुर्दशाभो कृपायरात् । भूरीणि शिवपुण्यानि चक्रुस्तत्र स्वराज्यके ॥ ९२
पुत्रानुत्पाद्य कालेन विनीतान् शास्त्रकोविदान् । भरताय प्रमाथन धर्मिरमादञ्च तस्थिरे ॥ ९३

कदाचिद्राजतनयास्तस्थिरे कुत्रचिद्गृहे । तदानीमागतस्तत्र दुर्वासास्तपतां वरः ॥ ९४
तमागतममी दृष्ट्वा प्रणेमुर्भक्तिसंयुताः । केन पापेन भगवन्नस्माकं तपतां वर ॥ ९५
अन्धत्वं बधिरत्वञ्च संप्राप्तं तद्वदात्र नः । सर्वज्ञस्त्वं यतस्तस्माद्वक्तुमर्हसि तापस ॥ ९६
इति तेषां वचः श्रुत्वा क्षणं ध्यात्वा ऋषीश्वरः । प्राह तान्विनयानम्रान्वीक्ष्य शङ्करभक्तिमान् ॥ ९७
पुरं यवनदेशेऽस्ति महदादित्यसंज्ञकम् । विश्वावस्वाह्वयः कश्चिद्वणिग्भूरिधनो महान् ॥ ९८
चत्वारस्तनयास्तस्य भवन्तस्संबभूविरे । स्वव्यापारपरानित्यमासन्विध्युक्तमार्गतः ॥ ९९
तस्मिन् पुरे शिवस्थानमादित्येश्वरसंज्ञकम् । अस्ति तत्र पुमान् कश्चिच्छिवालयविनिर्मकः ॥ १००
स तु युष्मान् समभ्येत्य पप्रच्छ द्रव्यमात्मवान् । शङ्करालयनिर्माणं कर्तुमभ्युद्यतः स्वयम् ॥ १०१
दास्याम इति तत्तस्मा उक्तवन्तस्तदा मुदा । श्वः श्वः श्व इति तं भक्तं समवर्तयतानिशम् ॥ १०२
तमपश्यथागतं भक्तं युष्मद्व्यापारतत्पराः । आहूता अपि तद्वाक्यं न वै शृणुथ गर्वतः ॥ १०३
युष्मान्विमुक्त्वा स्वस्थोऽयं तस्थौ शङ्करमंदिरे । ततो नावं समारुह्य गताद्वीपान्तरं प्रति ॥ १०४
यूयं तत्र मृतिं प्राप्ताः कालपाशेन बन्धिताः । यस्माद्दास्याम इत्युक्तं शिवपुण्याय वै धनम् ॥ १०५
तावता जगदीशार्थं युष्माकं राजसूनवः । न दत्तं यद्धनं तस्मै न दृष्टो न श्रुतं वचः ॥ १०६
तेन युष्मद्धनं सर्वं गतमान्ध्यञ्च सङ्गतम् । बाधिर्यं चागतं शंभोः प्रीणनेन पुनर्नृपाः ॥ १०७
संप्रबुध्य नेत्राणि श्रोत्राण्यपि यथा पुरा । राज्यञ्च सकलं युष्मद्वशे पूर्ववदेवहि ॥ १०८
इति तस्य वचः श्रुत्वा तापसस्य नृपात्मजाः । तथेति ते विनिश्चित्य दुर्वाससममुं मुनिम् ॥ १०९
प्रणम्य परया भक्त्या प्रेषयित्वाऽऽश्रमायतम् । पालयन्तो निजं देशं नीतिमार्गेण ते नृपाः ॥ ११०
शिवपुण्यानि भूरीणि तत्र तत्र विधाय च । चिरकालममी भोगान् भुक्त्वा निष्कण्टकं मुदा ।
अन्ते विमानमारुह्य दिव्यं कैलासमापिरे ॥ १११

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चत्वारिंशोऽध्यायः ॥

---

## ॥ अथ एकचत्वारिंशोऽध्यायः ॥

कुमारिका अपि यथाभक्त्या शिवपुण्येन कैलासमापिता ॥

शंभुदेशे पुरं किञ्चिन्मायाख्यमतिसुन्दरम् । सद्बुद्धिरिति विख्यातस्तत्रास्ति पृथिवीपतिः ॥ १
तस्याऽऽसंस्तनयाश्चाष्टौ भीमाद्याः प्रथितौजसः । समजायत कन्यैका सर्वलक्षणसंयुता ॥ २
विभज्य नवधा देशं पुत्रेभ्यो दुहितुर्ददौ । स्वयं प्राप्य वनं तत्र तपस्तप्त्वा सुदुश्चरम् ॥ ३
मोक्षमाप महादेवप्रसादान्मुनिपुङ्गवाः । कुमारास्तेच कन्याच राज्यञ्चक्रुरनिन्दिताः ॥ ४
सा कुमारी विशेषेण सर्वधर्मरता सदा । तां द्रष्टुं धर्मनिरतां मुनयस्तत्र सुव्रताः ॥ ५
आजग्मुस्तत्र वेश्म तस्याः परमशोभनम् । तत्र दृष्ट्वा कुमारीं तां सदा धर्मरतां परम् ॥ ६
सन्तोष्य वाग्भिरर्घ्याभिः पृच्छन् कुशलं द्विजाः । कुशलं तव भक्तायाश्शिवपुण्यं च सुव्रते ॥ ७
क्रियतेऽहर्निशं भद्रे सर्वं धर्मास्त्वया भृशम् । न तुल्या तव लोकेऽस्मिन् स्त्रीषु सर्वासु सर्वथा ॥ ८
इति तेषां वचः श्रुत्वा कुमारी प्राह तानिदम् । नैव जानामि पुण्यानि तापसानामधीश्वराः ॥ ९

पतिपुण्य वरमिति युष्माभिस्समुदीरितम् । कथैव पतिपुण्य के सद्गतिं प्रापुरुत्तमा ॥ १०
तच्छ्रोतु महती वाञ्छा वर्तते मम तापसा । इति तस्या वच श्रुत्वा तेषा मध्ये महातपा ॥ ११
गौतम प्राह पुण्यात्मा कथा परमपावनाम् । पुर पाञ्चालदेशेऽस्ति शोभनाख्य मनोहरम् ॥ १२
माधवाख्यो द्विजस्तत्र महानासीन्महीसुरा । तस्यासीत्तनया नाम्ना सुन्दरीति मनोरमा ॥ १३
सैषा करिपुरस्थस्य पुष्करस्य द्विजन्मन । भार्या भूत्वा महैतन तस्थे मन्तोपसंयुता ॥ १४
सैषा कर्मवशाच्चारी स्ववेश्मासन्नवेश्मनि । ब्राह्मण काञ्चनाभासमत्यन्तमभिचारिणी ॥ १५
तदेतत् ज्ञातवास्तस्या पति कालेन भूसुरा । यष्ट्यैना ताडयामास कशघातेनैव निष्ठुरम् ॥ १६
सा पति मारयामास कालेन विषदानत । सा पुनर्विधवा भूत्वा जारासक्तातिरागिणी ॥ १७
सञ्जातेष्वपि पुत्रेषु मारयामास तानपि । न पपातौषधेनापि गर्भस्त्वेको यदा तदा ॥ १८
ज्ञात्वैना बान्धवास्सर्वे तत्यजुर्दुश्चारिणीम् । तैस्त्यक्ता सा पुन प्राप देशाद्देशान्तर भिया ॥ १९
एकदासूत तनय दशमेमासि सा पुन । मारयित्वा शिशु त च निर्घृणा विषदानत ॥ २०
पुनश्च जारासक्ता सा चिक्रीड व्यभिचारिणी । तास्ताश्च विषदानेन मारयित्वाऽऽप तद्धनम् ॥ २१
पुनश्च धनिन कश्चित् द्विज प्राप्त यदृच्छया । रराम वञ्चनाबुध्या तस्मा अपि ददौ विषम् ॥ २२
तस्मिन् व्यर्थं विष सर्वं समजायत वै यदा । एकदा सा पुनर्विप्र तमाहूय वनान्तरे ॥ २३
क्रीडयित्वा च त सुप्त पाषाणेन जघान हि । जहार च धन तस्य सर्वं पापा यदृच्छया ॥ २४
ज्ञात्वाऽथ तस्या दौरात्म्य राजा प्रणिधिभिस्तदा । स्तनौ नासा च तस्याश्चाक् छित्वा दूरीचकार ताम् ॥ २५
सा पुन पुरुषैश्छिन्ननासापाण्यैश्च सङ्गता । कृत्वा निषिद्धकर्माणि शतान्येषाऽति साहसात् । २६
कदाचिदेको विप्र (ग्र) स्ता छिन्नहस्तेन ताडयत् । ममार तत्क्षण साऽपि यमदूता यमान्तिकम् । २७
निन्युस्ता नरके घोरे पातयामासुराज्ञया । नरके पीड्यमाना ता शिवदूताश्शिवाज्ञया ॥ २८
समभ्येत्य महासत्त्वा विमानमधिकप्रभम् । आरोप्य द्रावयित्वा तान्यमदूतांश्च निष्ठुरान् ॥ २९
निन्यु कैलासमचल यत्र शम्भुर्विराजते । तत्र देवाधिदेवस्य सन्निधौ न्यवसत्सुखम् ॥ ३०
सा दृष्ट्वा साप्युमादेव्यास्सखीवर्गैस्तदा द्विजा । सखीभिस्सा सम देव्यास्सन्तोषेण भृशस्थिता ॥ ३१
तदेतदखिल दूता यमस्य निकट गता । प्रोचुश्शिवगणै पीडा कल्पितामायुधैर्भृशम् ॥ ३२
श्रुत्वैतद्धर्मराजोऽपि चित्रगुप्त गणाग्रणीम् । किंपुण्यमस्या मतिमन्नालोच्य प्रोच्यतामिह ॥ ३३
इति तस्य वच श्रुत्वा चित्रगुप्तोऽब्रवीदिदम् । नैतस्या पुण्यलेशोऽपि विद्यते पापशोमुषी ॥ ३४
एवमाह यदा वीक्ष्य धर्मराज स धर्मवान् । तदानीमागतस्तत्र नारदस्तपता वर ॥ ३५
त दृष्ट्वा स्वप्रणम्याशु पप्रच्छ मुनिपुङ्गवम् । कस्माद्देशात्त्वया प्राप्तो देशोऽय तपता वर ॥ ३६
किं विचित्र त्वया दृष्ट श्रुत सर्वं वदाघमे । इति कालस्य वचन निशम्य स तु तापस ॥ ३७
कैलासात्पर्वतश्रेष्ठादागतोऽस्मि शिवालयात् । तत्र काचित् स्त्रिय दूतैस्त्वदीयै पीडिता भृशम् ॥ ३८
मोचयित्वा गता दूताश्शिवस्य परमात्मन । सन्निधौ स्थापयित्वा ता मिथ प्रोचुश्च मण्टप ॥ ३९
कुर्वन्त्या अनिश पापमप्यस्या पुण्यगौरवात् । जन्मान्तरार्जिताधन पाषाणेन जघान तम् ॥ ४०
तद्गृहीत्वाऽश्म तत्रस्था शम्भोश्चमुर्वरालयम् । तेन पुण्येन सा प्राप शिवसन्निधिमुज्ज्वलम् ॥ ४१
विधूय सर्वपापानि प्रीत्या परमया युता । इति तेषा वचश्श्रुत्वा ह्यागतोऽस्मि तवान्तिकम् ॥ ४२
त्य निशम्य वचन नारदस्य स धर्मराट् । चित्रगुप्त समीक्ष्यैव तथेत्याह स धर्मराट् ॥ ४३

दुराचाराऽपि साऽज्ञानात्कृतपुण्या यदीदृशीम् । गतिं प्राप तत कृत्वा शिवपुण्य शिवप्रियम् ॥ ४४
ज्ञात्वा चरन्ति ये मर्त्यास्तेषा पुण्यमनुत्तमम् । कोवेत्ति तत्वतश्शम्भु मुक्त्वा परमकारणम् ॥ ४५

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकचत्वारिंशोऽध्याय ॥

---

॥ अथ द्विचत्वारिंशोऽध्याय ॥

अज्ञानेनापि शिवाराधनत बाल चोरयो कैलासप्राप्ति ।

तत प्राह कुमारीं तामगिरा वीक्ष्य तापस । वङ्गदेशेऽस्ति भूपालो महाशुद्धाह्वयो महान् ॥ १
स तु राजा वन गत्वा मृगयामास वीर्यवान् । त जघान महान्कश्चिद्व्याघ्रस्सत्ववताम्वर ॥ २
ततोऽस्य मन्त्री चोरैस्तु युद्ध कृत्वा ममारस । राजपत्नी पूर्णगर्भा तदा पुत्रमजीजनत् ॥ ३
ततस्सा पितृगेहाय गत्वा तत्रावसत् द्विजा । पुन कालेन पुत्रेण साकमेषा शिवालयम् ॥ ४
विनिर्माय शिवञ्चापि प्रतिष्ठाप्य स्वनामत । पूजान्ते देवदेवेश प्रणम्य प्रीतिसयुता ॥ ५
नित्य स्वगृहमायाति भक्त्या परमया सह । ता कदाचित्सुतस्तस्या पप्रच्छ पितर स्वकम् ॥ ६
कुत्रेति सेवयित्वेश महादेवपरायण । तदानीमाययावत्र चतुरङ्गबलैस्सह ॥ ७
महाधानस्य पितरमानयित्वा स्वप मुदा । योजयित्वा सुतेनैन पद्मपाच पत्या मुदा ॥ ८
स्वदेश कल्पयित्वाऽस्य पूर्ववद्देवनायक । प्रेरयित्वा स्वकधाम ययौ कन्ये शिवाज्ञया ॥ ९
राजा स्वदेश संप्राप्य पत्न्या पुत्रेण संयुत । कृत्वा तु राज्य स्ववशे चोरान् हत्वा बहूनयम् ॥ १०
घोर चोरवरिष्ठ त बध्वा कारागृहे नृप । स्थापयित्वाऽस्य भवन लुण्ठयित्वा महाक्रुधा ॥ ११
नित्य त बाधयामास घोरैरेव भटैरयम् । तत्रत्यास्सकलाघोर हन्तुमूचुर्नृपान्तिकम् । १२
गत्वा तेषा वच श्रुत्वा तथेत्याह महीपतिः । निष्कृत्य शिरस्त दूताश्शिवस्य परमात्मन ॥ १३
दिव्य विमानमारोप्य निन्यु कैलासपर्वतम् । वीक्ष्यैतद्विस्मयाविष्टो राजा तस्थे तदोन्मुख ॥ १४
तदानीमागतस्तत्र गर्ग पुण्यवता वर । त प्रणम्य महीपालस्सर्वं तस्मै न्यवेदयत् । १५
स तु ध्यात्वा क्षण तस्य पुण्यमाह त्रिकालवित् । पताकास्थित दृष्ट्वा समादायपृथु भवान् ॥ १६
शिवालय निर्मिमाय दावमध्ये विधाय तम् । तेन पुण्येन महता पाप सर्वं विधूय स ॥ १७
दिव्य विमानमारुह्य प्राप्य कैलासमुत्तमम् । अन्ते च शिवसायुज्य गमिष्यति च भूपते ॥ १८
तदाप्रभृति राजाऽसौ शिवपुण्य शिवप्रियम् । विधाय सद्गतिं प्राप शिवस्यैव प्रसादत ॥ १९
शिवपुण्य चकाराय यस्माद्भूमिपतिर्महान् । तत्प्रमायारसमागत्य चतुरङ्गबलैस्सह ॥ २०
शाक्रो बलानि भूरीणि जह्रे विपुलतापहम् । दयाऽस्य निर्ययौ स्वर्गं सहसा देवतैस्सह ॥ २१
पुनश्च राज्य स्ववशे कृत्वा भूमिभृताम्वर । महताव प्रभावेन राज्य कृत्वा शिवप्रियम् ॥ २२
शिवपुण्यानि सर्वाणि कृत्वान्ते मोक्षमाप्तवान् । यस्माच्छिवालयायासीद्दण्डो घोरस्य पापिन ॥ २३
तेन पुण्येन महता सोऽपि प्राप शिवालयम् । एव कुमार्यै स ऋषि कथामेतामुवाच ह ॥ २४
तामाह तपता वर्यो वसिष्ठोऽपि ऋषिर्महान् । गुञ्जापुरे द्विज कश्चिच्चित्ररूपाह्वयो महान् ॥ २५

तस्यासीद्विधुघोनाम तनयः पापकर्मकृत् । तं पुरा नृपतिः कोपाद् बहिश्चक्रे दुराशयम् ॥ २६
निर्गत्य स वनं प्राप्य पथिकान् पापचेतनः । सन्ताड्य सञ्जहारायं तेषां द्रव्याणि कन्यके ॥ २७
इत्थं चचार कतिचिद्दिनानि सुदुरात्मवान् । तं कदाचिन्महीपालः प्रेषयित्वा स्वकान् भटान् ॥ २८
बध्वाऽऽनीय गजस्याग्रे स्थापयामास वै तदा । प्रेरितोऽपि गजस्तस्य न चिक्षेप शिरः क्षितौ ॥ २९
किन्तु प्रदक्षिणीकृत्य स्वस्कन्धे स्थापयच्च तम् । राजा तदेतदालोक्य विस्मयाकुलितान्तरः ॥ ३०
आरोपयद्गजश्रीमान् स्कन्धे पापिनमप्यमुम् । न जघान किमेतद्वा इति तस्थे तदोन्मुखः ॥ ३१
तमाह वीक्ष्य स गजः क्षितीशं विस्मयान्तरम् । बालोऽयं कारयामास भवनं परमेशितुः ॥ ३२
एकाभिर्विनिर्माय सवयोभिश्च संयुतः । तेन पुण्येन महता महात्माऽयं दुरासदः ॥ ३३
न चैव शक्यते हन्तुं मयाऽपि ब्रह्मणापि वा । सर्वेषामपि पूज्योऽयं शिवपुण्यप्रभावतः ॥ ३४
गजस्यैवं वचः श्रुत्वा पुनराश्चर्यसंयुतः । मुमोच तं नृपश्रेष्ठो भक्त्या परमयायुतः ॥ ३५
स तु देशान्तरं गत्वा सञ्चरन् बहुकालतः । समाययौ पुनरिमं देशं मार्गवशात्किल ॥ ३६
तं वीक्ष्य स नृपश्रेष्ठस्सन्तोषेण समन्वितः । दत्वा बहुधनं तस्मै शिवपुण्यस्य वैभवात् ॥ ३७
प्रेषयामास मतिमान् स्वेच्छया कन्यके नृपः । तदाप्रभृति मुक्त्वाऽयं स्तेयं सर्वजुगुप्सितम् ॥ ३८
भुक्त्वा यथेच्छया भोगानन्ते दिव्यं विमानकम् । आरुह्य परया प्रीत्या शिवलोकं जगाम हि ॥ ३९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्विचत्वारिंशोऽध्यायः ॥

---

॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

शिवालय धर्ममहिमा ॥

वीक्ष्य तां काश्यपो प्राह कथां पापप्रणाशिनीम् । वेदारण्याख्यनगरे राजा भोगाह्वनामकः ॥ १
स ममार महापापी कालेन परहिंसकः । निन्युस्तं कालपाशेन बध्वा दूता यमस्य वै ॥ २
निपात्य नरके घोरे ताडयामासुरुत्क्रुधा । तं पापं नरके घोरे बाध्यमानं शिवाज्ञया ॥ ३
शिवदूतास्समागत्य विमानमतिसुन्दरम् । आरोप्य सहसा निन्युश्शिवस्य परमं पदम् ॥ ४
ततश्शिवगणान् दूता यमस्य त्वरयान्विताः । समभ्येत्यास्य पुण्यानि पप्रच्छुर्भयकंपिताः ॥ ५

शिवगणाः —

कनकाख्योऽस्य तनयस्सिकताभिर्महेश्वरम् । निर्माय क्रीडयामास बालत्वाद्यमदूतकाः ॥ ६
तेन पुण्यप्रभावेन पिता तस्यायमीदृशः । उत्तीर्य नरकाद्घोराच्छिवलोकमवाप हि ॥ ७
इति तेषां वचः श्रुत्वा यमदूता भयान्विताः । प्रापुर्निवृत्य स्वपदं तथेति कृतनिश्चयाः ॥ ८
अजानताऽपि पुत्रेण शिवपुण्यमघौघहम् । कुर्वता मोचितश्शीघ्रं नरकादतिघोरतः ॥ ९
शिवपुण्यस्य माहात्म्यं ज्ञात्वा ये तु चरन्ति वै । तत्पितॄणां गतिं कोवा तत्त्वतो वेत्ति मानवः ॥ १०
एवमुक्त्वा ऋषिवरे स्थिते तूष्णीं तदा पुनः । जमदग्निरपि प्राह कथां पापप्रणाशिनीम् ॥ ११
अस्ति चन्द्रपुरे कश्चिद्विशुद्धाख्यो महामतिः । मन्त्री तस्याभवन्पुत्रास्त्रयोऽतिबलशालिनः ॥ १२
तत्र पुत्रावुभौ पापौ दुराचारानुवर्तिनौ । दुराचाराह्वयः कश्चिद्दुर्गुणाख्यः परः स्मृतः ॥ १३
विधाय तस्य भवनाद् बहिर्भवनमेककम् । स्थापयामास मतिमान्मन्त्री तौ तनयौ मुदा ॥ १४

तौ खिन्नमानसौ कालात् मुक्त्वैतत्पुरमुज्ज्वलम् । चौर्याय प्रस्थितौ तत्र ग्राममार्गे यदृच्छया ॥ १५
तदा मध्यन्दिने चण्डरश्मितप्तावुभावपि । समायान्तं द्विजं कश्चिद्धृतपक्वान्नमीक्ष्य तौ ॥ १६
ताडयित्वा करेणैव गृहीत्वा तस्य दूरत । शोषयामासतुस्तत्रौ पाथेयश्रान्तिदूषितौ ॥ १७
दृष्ट्वात्र चूर्णद्वयदमपूपञ्च मनोहरम् । क्षेपयामासतुश्चूर्णं भक्षयित्वा तदापरम् ॥ १८
बध्वा तं ब्राह्मणं वृक्षे ययतु स्वेच्छयाच तौ । ततः कालेन दृष्टौ तौ चोरमार्गरतौ नृप । १९
शिरश्चिच्छेद कोपेन सहसा मतिमान् नृप । ततो दूतास्समभ्येत्य यमस्यातिभयङ्करा ॥ २०
निकटं प्रापयामासुर्धर्मस्यैव स्वप्रभोस्तदा । पुण्यं विचारयामास चित्रगुप्तं समीक्ष्य स ॥ २१
तयोर्धर्मं समीक्ष्याह चित्रगुप्तोऽपि धर्मवान् । नास्ति पुण्यं प्रभो किञ्चिदनयो पापकर्मिणो ॥ २२
प्रक्षिप्तं चूर्णमेताभ्यां यद्वने पुण्यगौरवात् । तत्तत्र विश्वनाथेशमन्दिरायाभवत्किल ॥ २३
तेन पुण्येन महता त्यक्तपापाविमौ प्रभो । चित्रगुप्ते वदत्येवं तदानीं शङ्कराज्ञया ॥ २४
दूतास्समागतास्तत्र शिवस्य परमात्मन । काञ्चनेन विमानेन शतस्तम्भावृतेन च ॥ २५
तान् दृष्ट्वा धर्मराजोऽपि प्रणनाम भयान्वित । अज्ञानेन कृतं सर्वं सोढुमर्हथ भोषणा । २६
न जानन्त्येतयो पुण्यं मदीया दूतका इमे । इत्युक्त्वा दण्डवद्भूय प्रणनाम पुनः पुनः ॥ २७
ततो यमस्य मन्तुं तं सोढ्वा तौ मन्त्रिपुत्रकौ । दिव्यं विमानमारोप्य शिवस्थानमयदन्तिकम् ॥ २८
तत्र तौ परया प्रीत्या तस्थतुश्शम्भुसन्निधौ । शिवपुण्यस्य माहात्म्यं शम्भुर्वेत्ति नचापर ॥ २९
माह पुण्यां कथां पश्चाद्विश्वामित्रोऽपि तापस । पुराऽहं हेमकूटाद्रौ समासीनं जगद्गुरुम् ॥ ३०
धातारं सर्वलोकस्य प्रस्थितोऽस्मिच सेवितुम् । नमस्कृत्वा विधातारमृषिभिस्सार्धमास्थित ॥ ३१
तदानीमागतस्तत्र सदाशिवदुर्गणेश्वर । परीवृतो गणै कैश्चित्परमात्मपरायण ॥ ३२
तं दृष्ट्वा सहसोत्थाय बद्धाञ्जलिकरो विधि । तस्थे भक्त्या समायुक्तो देवर्षीणां गणैस्सह ॥ ३३
भगवत्यैतमापाय मेरुं शम्भोर्वराक्षयम् । प्रतिष्ठशासने पश्चाद्वयमप्यास्थितास्तत ॥ ३४
ततोऽहं वीक्ष्य धातारमपृच्छं कोऽयमीदृशः । उत्थितं त्वां गणयति नैव वीक्ष्यापि गर्वित ॥ ३५

ब्रह्मा —

सोऽयं सामन्तनगरे सदाचिन्त्याह्वयो महान् । दृष्टीवलो दरिद्रश्च सर्वदा खिन्नमानस ॥ ३६
किंतु निर्दयौ स्वस्य महिषं कृपणो यत । तद्गृहे कोऽपि महिषं नैव तस्य कुमारिके ॥ ३७
स तु दुःखेन महता बध्वा तं महिषं पुन । निवृत्याभ्यायतो तत्र वृश्चिक कक्षनाऽभवत् (कक्षनत्यधाह) ३८
समाराय व्यतीतेषु दिनेषु त्रिषु कण्टके । रात्रौ नियामकाभावान्महिषस्तस्य सत्त्ववान् ॥ ३९
रज्जुमुच्छिद्य सहसा निर्भयो तद्गृहाद्बहिः । चक्रेऽप्यराद्धपेशस्य महिषैश्चाककर्पके ॥ ४०
न्यवसत्पूर्वरात्रि सामतस्तान्महिषान्पुन । योजयित्वातु चक्रेण हपक्रामयणाय च ॥ ४१
मत्वा प्रेरयामासुर्महिषैस्साकमप्यमुम् । दूरं गत्वा ततोऽस्मानमधरोप्यतु यत्रके ॥ ४२
निवृत्य प्रेरयामासुर्महिषानीशसन्निधौ । ततो विज्ञाय महिषं परकीयमिमं नतः ॥ ४३
तस्य त्याद्विमुखस्यैव दूरमद्रावयत् रज्जु । भवत्याप्यस्य महिषं चक्रे घ त्रे सता यत ॥ ४४
माघस्याद्यमानमासि न्यपुच्छम्भोर्दिश्यास्यं प्रति । तेन पुण्यप्रभावेन पापीपाऽप्यम सूपे ॥ ४५
विधूत किल्बिषोऽस्माकं पापं पूज्यश्च सर्वदा । न मे पूज्योपमेकाप्य महात्मा शिवपुण्यवान् ॥ ४६
किंतु विष्णोरपीशानहृपया पूज्य एव स । इत्युक्तवान् विधाता मां वीक्ष्य पुण्यं महेशितुः ॥ ४७

शक्यते मया वक्तु शम्भो पुण्यमनुत्तमम् । इत्युवाच ऋषिश्रेष्ठ कन्यका वीक्ष्य ता द्विजा ॥ ४८
। ता भरद्वाज कथामाह परा स्वयम् । पुरा कश्चनगोपालो ददर्श लिङ्गरूपिणम् ॥ ४९
ाप्य शिवलिङ्ग त क्रीडयामास बाल्यत । पुष्पाणि सर्वाण्याहृत्य पूजयत्यनिश मुदा ॥ ५०
न परिकल्प्यैव पक्व सर्वमनोहरम् । फलानि मृत्तिका सर्वामुपहारं करोत्यलम् ॥ ५१
क्रीडयतस्तस्य भक्तिश्रद्ध महेश्वर । समीक्ष्य परया प्रीत्या कृपासयुक्तमानस ॥ ५२
स्य धन भूरि तस्मै प्रादान्महेश्वर । कल्पित लिङ्गभावेन रत्नलिङ्ग चकार तत् ॥ ५३
न तस्य महित दिव्यरत्नमय बभौ । एव विधाय देवेश प्रादुरासीन्महेश्वर ॥ ५४
दृष्ट्वा मायमीशान प्रणनाम पुन पुन । एतत्सर्वं समालोक्य राजानो विस्मय गता ॥ ५५
मुस्ते महादेव बद्धाञ्जलिपुटा अमी । गोपालबाल त सर्वे ऋषयश्चामरा अपि ॥ ५६
वज्यातिसंतुष्टा प्रीत्या परमया सह । प्राप्नोषि श्रीकराख्या त्वमित प्रभृति पुण्यत ॥ ५७
भविष्यति महानन्दगोप इति श्रुत । तस्य पुत्रो हरिस्तद्वद्भविष्यति न संशय ॥ ५८
कत्वान्तर्दधे देवस्तत्रैव परमेश्वर । तत प्रीतिमवाप्याय भुक्त्वा भोगान्यथेच्छया ॥ ५९
। जगाम परम श्रीमत्कैलासपर्वतम् । तस्माद्धि शिवपुण्याना माहात्म्य सर्वपापहम् ॥ ६०
वा कुर्वन्ति विद्वांसस्तेषा पुण्यस्य वैभवम् । शिव एव विजानाति सत्यमुक्त हि कन्यके । ६१
सप्तर्षिभि प्रोक्त शिवपुण्यमनुत्तमम् । श्रुत्वा परमया प्रीत्या प्रणम्यैतानृषीश्वरान् ॥ ६२
थे बद्धाञ्जलिका तेषामेवाग्रतस्तदा । आशीर्भिर्योजयित्वैता ते सर्वे तापसोत्तमा ॥ ६३
: पुण्य शिवस्य त्व सर्वदा वीतकिल्बिषा । कृपा भवतु देवस्य त्वयि शम्भोर्महात्मन ॥ ६४
मुक्त्वा प्रययुश्शीघ्र स्वाश्रमाय मुनीश्वरा । तत स्वदेश सा बाला पूजार्थं परिकल्प्य च ॥ ६५
वालयानि भूरीणि तत्र तत्र विधाय च । मण्टप गोपुर सौध वापीकूपतटाककान् ॥ ६६
धाय शम्भोर्देवस्य तत्रतत्र स्थलेष्वपि । उत्सवान्विविधाश्चैपान् कारयामास भक्तित ॥ ६७
यज्ञानमनुप्राप्य ससारोन्मूलक परम् । भुक्त्वा सुविपुलान् भोगान् शिवलोकमनुत्तमम् ॥ ६८
पान्ते परया प्रीत्या देवर्षीणा गणैर्वृता । वाद्यानामारवैस्तद्वत्पुष्पवर्षैश्च शोभिता ॥ ६९
। तस्थे महादेवसन्निधौ परया मुदा । तत्र स्थित्वा चिर काल मोक्षमाप द्विजोत्तमा ॥ ७०

इति श्री स्कान्दे महापुराणे शकरसहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रिचत्वारिंशोऽध्याय ॥

---

॥ अथ चतुश्चत्वारिंशोऽध्याय ॥

चोरस्यापि शिवानुग्रह लाभ ॥

मथ वक्ष्ये युष्माक शिवपुण्यस्य वैभवम् । यच्छ्रुत्वा सर्वपापानि मुच्यन्ते देहिनामिह ॥ १
र विराट (मारट्ट) देशोऽस्ति सीमन्ताख्य महत्तरम् । तत्रागरसमृद्धिमसमर्थ शास्त्रार्थकोविद ॥ २
त्युग्रस्सोमक भूपो वेदशागमतत्पर । गत्वाऽथ पुष्करं देश कदलीवनसकुलम् ॥ ३
गोपयित्वा फलान्याशु कदलीना दुरात्मवान् । निर्ययौ वनमार्गेण स्थापयित्वा शिरस्यपि ॥ ४
दा त पालका दृष्ट्वा यत्नेन पापकर्मिणम् । मानयन् भूपनिकटमनेकनृपसकुलम् । ५
दृष्ट्वा समहीपालदधुर्वैतस्य च दुष्कृतिम् । चिच्छेदैक कर शास्ता चोराणामुग्रशासन ॥ ६

सन्ताड्य सम्यक्तं पापं दूरतोऽद्राव्ययत्प्रभुः । पुनस्स्वकर्मणा पापी चौर्यबुद्धिरहर्निशम् ॥ ७
शृङ्गारवनमभ्येत्य राज्ञो मन्दिरतो बहिः । फलानि चोरयित्वाऽत्र कदलीनां दुराशयः ॥ ८
ययौ प्रतिदिनं तं तु दिने कस्मिंस्तु पालकाः । दृष्ट्वा बध्वा दृढं पापं राजसन्निधिमानयन् ॥ ९
स तु राजा तमाज्ञप्ते तस्कराणाञ्च तस्करम् । पादौ च जानुपर्यन्तं पाणिं हस्तावधि क्रुधा ॥ १०
छेदयित्वा यथा दण्डं मोचयामास वीर्यवान् । अपरेद्युर्समारायं तद्व्याधापीडितो भृशम् ॥ ११
निर्युक्तं यमदूतास्तु यमस्यान्तिकमञ्जसा । विचार्य स तु तत्पापं धर्मराजो दयानिधिः ॥ १२
दूतान् स्वकीयान् संप्रेक्ष्य प्राहस्म वचनं तदा । करोत्ययं सदा पापं बुद्धिपूर्वतया खलः ॥ १३
कदाचिदयमाविश्य भूपस्य कदलीवनम् । गत्वाऽत्र कदलीकाण्डे फलवृन्दमुपाहरत् ॥ १४
चौर्येण स विनिर्गत्य पुनर्मार्गमगात्खलः । तं दृष्ट्वा पुरपालास्तु दूरतोऽद्रावयत्क्रुधा ॥ १५
फलवृन्दमसौ त्यक्त्वा भीत्या धावन्महाखलः । हाटकेशाख्य देवस्य शम्भोरमिततेजसः ॥ १६
आलये परमे पुण्यैः पूर्वजन्मान्तरार्जितैः । दृष्ट्वा प्रातरिदं सर्वं कदलीफलजालकम् ॥ १७
राज्ञे व्यजिज्ञिपन् सोऽपि ददौ शंभोरिदं महान् । अभिषेकाय देवस्य परात्परतरस्य च ॥ १८
चक्रिरे ते फलैश्शंभोरभिषेकक्रियां तदा । तेनास्य सर्वपापानि गतानि विलयं भटाः ॥ १९
यात्वयं देवदेवस्य पदं प्रति महाभटाः । इत्युक्त्वा प्रेषयामास समस्तान् स्वभटान् पुनः ॥ २०
तस्याज्ञां शिरसाऽऽदाय ते भटा मुमुचुश्च तम् । तदानीमाप्तबोधोऽयं समुत्तस्थे यथास्वपन् ॥ २१
उत्थितस्तरसोवाच वृत्तान्तं सकलं त्विदम् । तच्छ्रुत्वा भूपमुख्यास्ते जनाश्चाश्चर्यमापिरे ॥ २२
तदानीमेव तत्राशु शिवदूताश्शिवाज्ञया । दिव्यं विमानमानीय पश्यत्स्वेषु समागताः ॥ २३
आरोपयित्वा तं प्रापुश्शिवस्य परमं पदम् । सन्निधौ देवदेवस्य स्थित्वाऽयं बहुकालतः ॥
प्रयाणान्ते च सायुज्यं पुनरावृत्तिदुर्लभम् ॥ २४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुश्चत्वारिंशोऽध्यायः ॥

---

॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

शिवतटाक पुष्पारामादीनां फलमहिमा ॥

पुनरन्यां कथां विप्रास्संशृणुध्वमतन्द्रिताः । पुरा केचिन्महात्मानो ऋषयस्संशितव्रताः ॥ १
तस्थुस्तपस्या सपत्नीकं गन्धमादनपर्वते । तदानीमागतस्तत्र कण्वोनाम महामुनिः ॥ २
तं दृष्ट्वा तापसश्रेष्ठास्ते सर्वे परया मुदा । प्रणम्य चासने रम्ये स्थापयित्वा यथाविधि ॥ ३
कुतस्समागतश्चाद्य त्वया कण्व महामुने । किंवा दृष्टं त्वयाऽऽश्चर्यं वक्तुमर्हसि तापस ॥ ४
इति तेषां वचश्श्रुत्वा प्राहैतान् स महामुनिः । ब्रह्मलोकान्मया प्राप्तो देशोऽयं ब्राह्मणोत्तमाः ॥ ५
तत्र दृष्टं मयाऽऽश्चर्यं तच्छृणुध्वमतन्द्रिताः । मालवाख्ये महादेशे कल्याणाख्यं पुरं महत् ॥ ६
भार्गवो वैष्णवश्चात्र वणिजौ प्रथितावसौ । महाखलौ महापापौ सर्वदा वञ्चनोद्यतौ ॥ ७
दिवा वणिग्भिर्मिलितौ वाणिज्यं कुरुतस्तथा । रात्रौ तु वणिजः पुत्रा (हत्वा) नाहूय स्वस्ववेश्मनि ॥ ८
मद्यकामं प्रदायैतान् दत्वा वञ्चनया खलु । तेषां द्रव्याणि सर्वाणि अहरन्तुष्टमानसौ ॥ ९

वनप्रदेशवासत्वात्पथिकानपि सङ्घतान् । रात्रौ हत्वा तदीयानि द्रव्याण्यपि च जह्नतुः ॥ १०
प्रातर्वणिग्भिर्मिलितौ तिष्ठतो नगरेऽवसत् । एतत्कृतानां पापानां सङ्ख्या नैवोपलभ्यते ॥ ११
कदाचिदेतौ पापिष्ठौ कृत्वा सङ्केतमात्मना । वणिजस्सङ्घतान् दृष्ट्वा गोप्याः कस्या गृहे निशि ॥ १२
धनिनो द्रव्यलोभाच्चौ निद्रां संशोध्य वञ्चकौ । मोहकौषधमेतेषामुपरि स्थाप्य शीघ्रतः ॥ १३
द्रव्याण्याहृत्य पापिष्ठौ गोपीवेश्मस्थितान्यमू । ययतुर्दूरतोऽरण्ये शून्ये शंभोर्वरालये ॥ १४
तत्राज्यं तद्गृहे लब्धं चौर्येणैतौ दुराशयौ । संयोज्य दशया दीपं तत्र कृत्वा दयाग्निना ॥ १५
विभज्य तद्धनं सर्वं यथांशेन दुराशयौ । ययतुर्मार्गमालोक्य नगरं प्रति तौ पुनः ॥ १६
तदैव रात्रिर्गलिता सूर्ये प्रातोदये सति । प्रातर्विबुद्धा गोपालाश्चुक्रुशुर्गतमोहकाः ॥ १७
तेषां तदारवं श्रुत्वा ग्रामपालास्त्वरान्विताः । प्रतस्थिरे पदकृच्छ्रा धृतनानाविधायुधाः ॥ १८
विलोक्य मार्गं सहसा दृष्ट्वैतौ वणिजात्मजौ । आबध्य रज्जुभिस्तूर्णमानीय च नृपान्तिकम् ॥ १९
मुमुचुस्ते भटास्सर्वं वृत्तान्तं च व्यजिज्ञिपन् । तच्छ्रुत्वा सहसा भूपश्छेदयामास तच्छिरः ॥ २०
तदानीमेव ते शंभोर्दूता दिव्यं विमानकम् । आनीयारोप्य तमेतौ शिवलोकं ययुर्मुदा ॥ २१
तत्र देवाधिदेवस्य तस्थतुर्निकटे मुदा । चौर्यप्राप्तेन चाज्येन निकटे शङ्करस्य यत् ॥ २२
आरोपितो वरो दीपो ह्यमूभ्यां सर्वपापहः । तेन पुण्येन विप्रेन्द्रा विधूयाखिलमप्यघम् ॥ २३
संप्राप्तौ देवदेवस्य सन्निधिं दुर्लभान्तराम् । तच्छ्रुत्वा ते महात्मानस्सर्वेऽपि यमिनां वराः ॥ २४
आश्चर्यमापिरेऽत्यर्थं शिवपुण्यस्य वैभवैः । इति कण्वेन कथितामृषिणा सत्कथामिमाम् ॥ २५
श्रुत्वाऽथ वामदेवोऽपि महर्षिः प्राह सत्कथाम् । देशे कुलण्डसंज्ञेऽस्ति कपित्थाख्यं महत्पुरम् ॥ २६
तत्र कश्चिच्चतुर्थोऽस्ति कण्टकाख्यो महाखलः । सतु चौर्यरतो नित्यं ग्रामेषु नगरेष्वपि ॥ २७
कदाचिच्चौर्यसंप्राप्तं धनं भूरि दुराशयः । मत्स्येश्वरस्य पुरतस्तटाके गतपाथसि ॥ २८
पङ्कमध्ये जुगोपायं खनित्वा चोरमार्गतः । गत्वा यथेच्छया पापी परेद्युस्तत्र चागतः ॥ २९
सङ्खात्वा तत्स्थलं दुःखात्तत्रतत्रच कर्दमम् । तीरे दूरीचकारायं संशोध्यच पुनः पुनः ॥ ३०
ततो लब्ध्वा धनं पङ्के कुत्रचित्सुव्यवस्थितम् । भुक्त्वा चिरमनेनायं भोगान् सुविपुलान् छती ॥ ३१
ममार तं महात्मानं शिवदूताश्शिवप्रियम् । दिव्यं विमानमारोप्य शिवलोकञ्च निन्यिरे ॥ ३२
दृष्ट्वाऽहं शिवदूतांस्तान् कोऽयं सुकृतिनांवरः । अपृच्छमूचुस्ते दूताश्शिवस्य परमात्मनः ॥ ३३
अयं शिवतटाकस्थपङ्कान् दूरीचकारहि । तेन पुण्यप्रभावेन शिवलोमवाप्तवान् ॥ ३४
तदर्थमेव लोकोऽपि मण्डितः कैशुपूर्वकैः । इति तेषां वचः श्रुत्वा शिवपुण्यस्य वैभवम् ॥ ३५
स्तुत्वैव मनसा विप्राः प्राप्तवानस्मि चाभवे । एवमुक्तां कथां श्रुत्वा वामदेवमहर्षिणा ॥ ३६
सदा (शता) नन्दोऽब्रवीत्पश्चात्कथां पापप्रणाशिनीम् । ककुदाख्यं पुरं रम्यमस्ति कांचीकदेशगम् ॥ ३७
शोभनाख्योऽवसत्तत्र ब्राह्मणोऽतिदरिद्रवान् । जीवत्ययमुपादानभूयैवानुदिनं द्विजाः ॥ ३८
तदन्यकाले तद्ग्रामे प्रयायां नियमत्ययम् । तत्र मार्गवशात् प्राप्ता मुकुन्देशार्चकाद्विजाः ॥ ३९
आमर्दगोळपुण्याख्य गिरिसन्तानजाः खलु । वर्षत्यब्दे महाराबे वृष्टिधारा निरन्तरे ॥ ४०
तदानीं तान् समुद्वीक्ष्य शोभनस्सहसोत्थितः । नायाति किं ममैश्वर्यमेवं निवसतोऽनिशम् ॥ ४१
इति तस्य वचःश्रुत्वा प्राह कश्चिच्छिवद्विजः । शिवार्चकोऽहं सर्वस्य गुरुरित्येव विश्रुतः ॥ ४२
शिवधर्मीति मामाहुस्सर्वेऽप्यत्र निवासिनः । निशम्यैतद्वचोऽस्माकं कृतार्थो भव पण्डित ॥ ४३

इति तस्य वचश्श्रुत्वा समुत्थाय कृताञ्जलिः । कृपया तव विप्रेन्द्र कृतार्थोऽस्मि न संशयः ॥ ४४
त्वद्वक्त्रश्रवणेनैव चेहामुत्र सुखं भवेत् । इत्युक्त्वा प्रणमन्तं तं पुनः प्राह शिवद्विजः ॥ ४५
पुष्पारामं महेशस्य पूजितस्य मयाऽनिशम् । निर्माय तत्र पुष्पाणि गृहीत्वाऽर्चितुमीश्वरम् ॥ ४६
आनयस्व विशुद्धात्मा चाद्यप्रभृति मद्गिरा । तस्मिन्दिने तवायाति सुखं शंभोः कृपाबलात् ॥ ४७
तथेति स बहिर्गत्वा पुष्पाराममकल्पयत् । ततः प्रसूने सञ्जाते प्रवृत्तोपचितौ द्विजाः ॥ ४८
तदानीमागतस्तत्र स्वयमिन्द्रस्सुराधिपः । दत्वा द्विजाय पीयूषं तुष्ट्या परमया युतः ॥ ४९
उवाच वचनं रम्यं ब्राह्मणं वीक्ष्य तं सुरः । इह भुक्त्वा चिरं भोगान् मम लोकं सुरालयम् ॥ ५०
आगच्छान्तेति तुष्ट्या त्वमित्युक्त्वाऽञ्जली कृतेऽमुना । ययाविन्द्रः पुनः स्वर्गं सहसा पूजितोऽमुना ॥ ५१
ततो द्विजोऽयं पुष्पाणि गुरुहस्ते ददौ शुचिः । आदाय तानि पुण्यात्मा चार्चयामास शङ्करम् ॥ ५२
पतितानि यदा तानि शिवमूर्ध्नि सुपावने । तदा प्रसन्नो भगवान्वीक्ष्यैनं प्राह भूसुरम् ॥ ५३
स्वयं पुष्पवनं रम्यमारोप्य परया मुदा । स्वयं गृहीत्वा पुष्पाणि यस्मान्मे दत्तवानसि ॥ ५४
तान्यहं परया प्रीत्या मूर्ध्न्यङ्गीकरोम्यहम् । तेन पुण्यप्रभावेन भुक्त्वा भोगानिहातुलम् ॥ ५५
अन्तेच स्वयमिन्द्रत्वं संप्राप्य परया मुदा । तत्र देवैश्च सकलैः पूजितः प्रत्यहं मुदा ॥ ५६
शिवलोकमनुप्राप्य सर्वैश्वर्यसमन्वितम् । भुक्त्वाऽत्रापि परान् भोगान्मुक्तो भवसि निश्चयम् ॥ ५७
इत्युक्त्वा धनदं वीक्ष्य निकटे परिवर्तिनम् । एतस्य वचनं श्रुत्वा दत्वाऽस्यच धनं बहु ॥ ५८
शृण्वंस्तदुक्तिमनिशं तिष्ठचेति महेश्वरः । इत्युक्त्वाऽन्तर्दधे शीघ्रं सर्वैश्च गणनायकैः ॥ ५९
ततोऽयं शोभनोऽभ्येत्य शिवधर्मिणमात्मवान् । प्रणम्य परया भक्त्या प्रोवाच वचनं मुदा ॥ ६०
तव दर्शनमात्रेण ममैतत्सकलं गुरो । समागतं न सन्देहः कृतार्थं विद्धि मां गुरो ॥ ६१
पुष्पारामप्रभावेन महेशोऽपि प्रसेदिवान् । इत्युक्त्वाऽस्यानुमत्यायं भुक्त्वा भोगानखण्डितान् ६२
देवेन्द्रत्वं ततः प्राप्य तत्र भुक्त्वा चिरं सुखम् । अन्तेच शिवसालोक्यं प्राप्याथापि चिरं वसन् ॥
सायुज्यं प्राप्तवान् पश्चात्परस्य ब्रह्मणो द्विजाः ॥ ६३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चचत्वारिंशोऽध्यायः ॥

---

## ॥ अथ षट्चत्वारिंशोऽध्यायः ॥

अज्ञानतः कृतानामपि शिवधर्माणां क्रमेणफलनिरूपणम् ॥

एवमुक्त्वा सदानन्दो कथां पापप्रणाशिनीम् । विरतेच कथां प्राह वशिः परमतापसः ॥ १
पुराऽभूत्कुण्योतिषां देशे सर्वजित्सदातिमान् नृपः । तस्यासंस्तनयाः पापाश्शतमेकोत्तरं खलु ॥ २
स एकः पुण्यवांस्तेषु सर्वधर्मपरायणः । ते शतं तनया ब्रह्महत्या चौर्यमसत्कथकम् ॥ ३
कृत्वातु क्रूरकर्माणो वर्तन्ते हिंसकाश्चसदा । मद्यपानरता नित्यं मांसभोजनतत्पराः ॥ ४
परस्त्रीगमनोत्सुकाश्च सर्वदा परवञ्चकाः । भक्षयैतान् दुराचारानिति राज्ञाऽप्रमत्तानपि ॥ ५
महाराक्षसनामानं राक्षसं प्रोक्तवानलम् । सोऽपि तान् राक्षसः पापान् भक्षितुं कुत्सितान्तरः ॥ ६
उत्पीड्य पादान् हस्तांश्च दक्षिणांशोपिमक्षिपत् । निपेतुस्ते तदा काश्यां केदारेऽपि सुपावने ॥ ७
श्रीपर्वते महाशैले दर्शनान्मुक्तिदायके । श्रीमद्दक्षिणकैलासे शिवलोकप्रदे शुभे ॥ ८

काञ्चीपुरे महारम्ये कलिदोषविवर्जिते । स्मरणान्मोक्षदे नृणामेकाम्रेश कृपाबलात् ॥ ९
तथाऽरुणाचले पुण्ये श्रीमद्वृद्धाचले शुभे । चिदम्बरसभायाञ्च यत्र नृत्यति शङ्कर ॥ १०
स्वात्मानन्दामृतास्वाद परमानन्दनिर्भर । मध्यार्जुने महापुण्ये कुम्भघोणे शिवप्रिये ॥ ११
एवमादिषु पुण्येषु शिवेतुर्नगरेष्वमी । मृता पतनमात्रेण तत्र तत्र महीसुरा ॥ १२
यस्माद्देते मृता क्षेत्रेष्वेषु पापा अपि प्रभो । तेन पुण्यप्रभावेन विमानानि शिवेच्छया ॥ १३
आरुह्य यान्ति परया प्रीत्याऽतीव मनोहरा । इत्यूचुस्सत्यलोकस्थमुनिभिस्सह भो गणा ॥ १४
शाम्भवीया महात्मानो महाबलपराक्रमा । एवमन्येऽपि तत्रस्था महात्मानो ऋषीश्वरा ॥ १५
शिवपुण्यवता पुण्या कथाश्चोचु परस्परम् । इत्युक्त्वा तान्नृपीन्वीक्ष्य सूत पौराणिकोत्तम ॥ १६
पुन स्वय कथा पुण्या शम्भोरमिततेजस । प्रोवाच ऋषिवर्येभ्यश्श्रोतृभ्यस्सावधानत ॥ १७
पुर सौराष्ट्रदेशेऽस्ति कनकाख्य सुशोभनम् । चोर कश्चन तत्रास्ति महाक्रूरो महाखल ॥ १८
कदाचिद्धनमभ्येत्य राज्ञ पौरोहिते गृहे । चोरयित्वा धन भूरि प्रतस्थे परवञ्चक ॥ १९
तदा कश्चन त दृष्ट्वा चुक्रोश ब्राह्मण क्रुधा । त जघान दुरात्माय शस्त्रेण स ममार च ॥ २०
तदाराव समाकर्ण्य राज्ञा प्राप त्वरान्वित । तदानीमेव त चोर ग्रामपाला महाबला ॥ २१
आबध्य राज्ञ पुरतो मुमुचुश्च दुराशयम् । ततश्शशास मतिमान्राजा वीक्ष्यातिवञ्चकम् ॥ २२
ग्राहाय ग्रसते नित्य मनुष्यान्सागराद् बहि । महासरश्शिवतापाञ्च महाकायाय पालका ॥ २३
इति राज्ञो वचश्श्रुत्वा तथा चक्रुरमी भटा । ग्राहोऽपि त तथा गृह्य शिरसा केवल महान् ॥ २४
तीरेऽस्मिन् प्रापयामास जनेऽस्मिन् पश्यति द्रुतम् । आश्चर्यमापिरे तत्र स्थितास्सर्वे जना अहो ॥ २५
राजा तु स्वभटान् क्रूरानुवाच पुनरेव स । एतैरन्यायुधैरेन मारयन्तु महाखला ॥ २६
एषु व्यर्थश्रम प्राप्तेष्वथो राजाऽपि विस्मित । पुनरस्यौषध किञ्चिद्दत्त्वोऽस्यन्तरमन्वत ॥ २७
शोषयामास त पश्चात् स्वभटैरेव तत्र स । न ददर्शौषध किञ्चिद्राजाय शोषितेऽपि च ॥ २८
ततो विचार्य मनसा प्रापस्थानाख्य मण्टपम् । चोरेण साक भूपालो निजवेश्मनि सुन्दरे ॥ २९
स्वपञ्जरस्थसुनटायाश्च शुको हस्तेच तिष्ठति । संस्थाप्य त च पुरतस्त्रिकालज्ञ महीपति ॥ ३०
पप्रच्छ वीक्ष्य धर्मात्मा विनयेन समन्वित । मम पत्न्यास्सुशीलाया दत्तश्चास्या पुरा भवान् ॥ ३१
तुष्टया वीक्ष्य तच्छील शुकदेववरप्रिय । तस्मात्वा पृच्छते किञ्चिद्वक्तुमर्हसि सत्वत ॥ ३२
चोरयन्नितरा पापी बहुधा शासितो मया । तथापि शासन तस्मिन् सर्वं व्यर्थमभूत्खलु ॥ ३३
ग्राहाय ग्रसते दत्तस्तेन मुक्तस्तथाप्ययम् । भटैश्शस्त्रवरैस्तद्वच्छासितोऽपि बिभेति न ॥ ३४
किमत्र कारण विद्वन्वद मे त्व यथार्थत । इत्यादिष्टो महीशेन शुक प्रोवाच सत्वत ॥ ३५
शृणु त्वमवधानेन भूपालानामधीश्वर । सोऽय कुशापुरे रम्ये विप्रकमयणिजस्सुत ॥ ३६
चित्रभानुरिति ख्यातस्सदा वेश्यारति प्रिय । तस्यैव वर्तमानस्य धन सर्व व्यय गतम् ॥ ३७
स तु रिक्त पुनर्भूत्वा चौर्यासक्तमना अभूत् । अथ तत्राग्रहारेषु दग्ध्वा वेश्मानि भूरिश ॥ ३८
तदानीमन्तरालज्ञ वीक्ष्याथ परवञ्चक । चोरयित्वा धन भूरि विक्रीय नगरेषु तत् ॥ ३९
दत्त्वैतद्धनमेते वेश्याभ्यस्सदा मन्मथपीडित । एव दग्धेषु पश्वो दग्धा वेश्मसु पापिना ॥ ४०
स्त्रियश्च ब्राह्मणाश्चान्ये बहवोऽनेन भूपते । सोऽथ कस्मिन्दिने पापी भुक्त्वाऽरव्य मद्रपुरम् ॥ ४१
दग्ध्वाऽत्र बहो पापिष्ठो गा प्राप्य सरणि ययौ । ददर्श तत्र मार्गेच गौरेश पीलपीलिता ॥ ४२
पादे हाणा पपाताशु भुज्यभ्याशेऽत्र कस्यचित् । अचलेशाख्य शम्भोर्यदालय तस्य भूपते ॥ ४३

न शशाक च तामेव समुत्थापयितुं यदा । तदायमेतां देवायेत्युक्त्वा तस्मै ययौ मुदा ॥ ४४
गाश्चान्याश्चोरयित्वाय विक्रीय नगरेऽवसत् । चोरयित्वाथमधुना तव पौरोहिते गृहे ॥ ४५
शुष्मत्कर्मवापाय वन्धित पालकैरत । या गौरनेन पुण्येन शिवायेति विसर्जिता ॥ ४६
ता कीलकीलिता पादे तत्रत्या पोष्य शाम्भवे । शूलमुद्राङ्किता कृत्वा मुमुचुश्च महीपते ॥ ४७
तत्क्षीरमधुना शम्भोरभिषेकाय चाभवत् । तेन पुण्यप्रभावेन चास्मिन् सर्वं त्वदीयकम् ॥ ४८
शासनं व्यर्थतां प्राप शिवपुण्यमहो परम् । इत पर त्वयाप्येष पूज्यो नून महात्मयम् ॥ ४९
न च हिंसन्ति सर्पास्त राक्षसाश्च पिशाचका । भुक्त्वा भोगास्य चान्ते शिवलोके चिरायते ॥ ५०
गोरोमणा ब्रह्मकल्पानामेकैकस्य सहस्रकम् । स्थित्वा पुनश्च सायुज्य यास्येव परमात्मन । ५१
इति तस्य वच श्रुत्वा राजा विस्मितमानस । त चोरं स्वासने स्थाप्य दत्वा भूरिधन नृप । ५२
गृह भार्या विधायास्य पर भोगमकल्पयत् । अवलोकयतिस्तैन शुक भूयो महीपति ॥ ५३
अथैन वीक्षमाण स शुक प्राह कथा पुन । अहं पुरा महालक्ष्म्या करमाश्रितवान् नृप ॥ ५४
विष्णुलोके सदारम्ये विष्णुना समलङ्कृते । तदेन्द्राणी महालक्ष्मीं प्रीणयित्वा सपर्यया ॥ ५५
मामवाप्तवती राजन्मयि प्रीत्या सुरप्रिया । तदा प्राह वचो विष्णु स्मेरान्वीक्ष्य भूपते ॥ ५६
अलङ्कुर्वन्तु नितरामिदानीं मामक पदम् । इति विष्णुवचश्श्रुत्वा रमा पप्रच्छ माधवम् ॥ ५७
को विशेषोऽयमधुना विशेषालङ्कृते प्रभो । इति पृष्टवतीं वीक्ष्य प्रियां विष्णुरुवाच ह ॥ ५८
सुपार्श्वविषये कश्चिद्वर्वर्याख्यपुरे वसन् । कपिलाख्यो द्विजाभासस्सदा चौर्येण जीवति ॥ ५९
चोरयित्वा गृहस्थस्य गामेकां सुदुराशयः । दुग्ध्वा पीत्वा तदीयञ्च क्षीरं तस्थे स्वके गृहे ॥ ६०
श्रुत्वा तदेतद्वृत्तान्त यजमानस्समाययौ । तदागम समाकर्ण्य गामेनां सुदुरात्मवान् ॥ ६१
परग्रामे गृहस्थस्य कस्यचिद्वेश्मनि स्वयम् । तदा बध्वाऽवसत्तत्र छन्नवेष प्रियेऽत्र स ॥ ६२
उषित्वा तां निशां तत्र प्रातर्गां चोदयन्ययौ । तदा मार्गे समायान्त यजमानस्समीक्ष्य ताम् ॥ ६३
गां गृहीत्वा दुरात्मानं राज्ञे प्रोवाच तस्करम् । तदाऽस्य च महीपाल पाटयामास लोचने ॥ ६४
तद्दुःखेन ममाराय दुरात्मा सर्पदष्टक । तमेन शम्भुगणास्समारोप्य मनोरमे ॥ ६५
विमान शिवलोकञ्च नयन्त्यद्य परात्परम् । तस्य मार्गवशाल्लोको मण्डनीयो ममाधुना ॥ ६६
सदा पापरतस्यापि तस्य पुण्यं शृणु प्रिये । यजमानभिया रात्रौ परग्रामे निधाय गाम् ॥ ६७
तत्रावध्य गृहस्थस्य कस्यचिद्वेश्मनि स्थित । गृहस्थश्शिवभक्तोऽस्य दुग्ध्वा क्षीरं तदीयकम् ॥ ६८
पपावस्यानुमत्या हि महात्मा सर्वपावन । तेन पुण्याग्निना दग्धान्येनांस्यस्य प्रियेऽधुना ॥ ६९
अत एवास्य लोकोऽपि शिवस्य परमात्मन । इति विष्णोर्वचः श्रुत्वा शिवपुण्य रमा तदा ॥ ७०
सर्वातिशयमेवैतज्ज्ञे भूपाल सा पुन । इति राजा समाकर्ण्य शुकस्य वचन मुदा ॥ ७१
शिवपुण्यस्य माहात्म्य ज्ञात्वा सम्यक् द्विजोत्तमा । शुकञ्च प्रेषयित्वाऽन्त स्वय भक्तिसमन्वित ॥ ७२
कृत्वा शिवस्य पुण्यानि शिवलोकमवाप हि । पुनरन्यां कथां वक्ष्ये शृणुध्व ब्राह्मणोत्तमा ॥ ७३
सुमतेर्मत्स्य देशस्य राज्ञोऽभूत्तनयो महान् । स पञ्चवार्षिक श्रीमान् बालोऽतिरथनामत ॥ ७४
स तु केकयदेशस्य राज्ञः पुत्रीं तु मेनकाम् । विवाह्य विधिना राजस्तया क्रीडां चकार हि ॥ ७५
गृह एव सखीवर्गं इव धूल्यादिना द्विजा । तदास्य ज्वरातिसारणामभूत्केनापि हेतुना ॥ ७६
तदा मतिरभूत्तस्य सेवार्थं परमेशितु । पित्रे निवेदयामास सेवितुं परमेश्वरम् ॥ ७७

प्रतस्थे प्रियया साकमनुमत्या पितुस्तदा । हरीशाख्यमासाद्य तत्पुरस्य सुशोभनम् ॥ ७८
तत्रेश्वरं प्रणम्याथ भक्तियुक्तेन चेतसा । वेदधर्मिणमासाद्य तत्र देवालयाधिपम् ॥ ७९
विप्र वेदविदां श्रेष्ठ प्रणम्योवाच सुस्मितम् । जानासि किं महात्मंस्त्वं मामिहासन्नमात्मन ॥ ८०
इति तस्य वच श्रुत्वा प्राहेदं स च भूसुर । जानाम्येव महाराज कुमार मात्सप्रभम् ॥ ८१
कोवा राजकुमार त्वां न जानाति जनेश्वर । प्रत्युवाच पुनाराजकुमारे विप्रपुङ्गवम् ॥ ८२
केवलोऽपि जनो वेत्ति चास्मिञ्जन्मनि मां द्विज । प्राग्भवे मां यदा त्वं यदि जानासि पण्डित ॥ ८३
इति तस्य वच श्रुत्वा पुन प्राह महीसुर । कोवा प्राग्भववृत्तान्तं जानातीश्वरवन्नृप ॥ ८४
इति ब्रुवन्त स प्राह पुनर्वीक्ष्य नृपात्मज । श्रूयतामवधानेन प्रोच्यते प्राग्जनिर्मम ॥ ८५
विक्रमाख्ये पुरे गौडविषयेऽतीवशोभन । ब्राह्मणोऽहं मृतौ मातापितरौ बाल्य एव मे ॥ ८६
तदानीं पोषकाभावाच्छूद्रया परिवर्धित । मृता सापि मदीयेन दुरितेनैव भूसुर ॥ ८७
तदा जालेन मीनानि गृहीत्वानुदिनं यष्टी । विक्रीय जीवितो नित्यं मृगया प्राप्य वै मृगान् ॥ ८८
विक्रीय मधुमांसादीञ्छण्डत्वैरपि सज्जन । अस्मिन् पुरे यमास्येव हीनवृत्त्या महीसुर ॥ ८९
तदापणे त्वं द्रव्यस्य ताम्बूलं केतुमागत । तदानीं निर्गत कश्चिच्छिन्नपाशा शृङ्खला गज ॥ ९०
तं दृष्ट्वा दुद्रुवुस्सर्वे तत्रस्थास्तत्र तत्र च । तदा त्वमपि दूरेण दुद्राविथ महाभयात् ॥ ९१
तं संभ्रमवशात्काचस्तव हस्तात्पपात हि । बहुधा स विमृष्टोऽपि न दृष्ट खलु तावक ॥ ९२
काचाभावाद्विचारोऽभूत्तव ताम्बूलक प्रति । विक्रीयाह तदा मध्यमागत पुरतस्तदा ॥ ९३
दृष्ट्वा तदानीं मां काच पृष्टवांस्त्वं महापणे । भूयाच्छ्यस्तव क्षिप्राद् ब्रुवन्नेव महीसुर ॥ ९४
तदाहं त्वां समुद्दीक्ष्य भविष्यामि नृपो यदि । तदानीं दीयते काचस्तव सत्यं मयेरितम् ॥ ९५
इति ब्रुवन्तं मां वीक्ष्य परिहासेन केवलम् । को भारस्तव भूपत्वमिति विप्रोक्तवानसि ॥ ९६
तदान्तिके समासीना मम भार्याब्रवीदिदं । भविष्यसि महीपालो ध्रुवं मामक पति ॥ ९७
तदानीमहमेतस्य महिषीस्यामुतान्यथा पञ्चमादिवचश्चोक्त्वा दत्त्वा काचं यथाबलम् ॥ ९८
गतोऽस्मि ननु भूदेव चण्डालश्रणिका तदा । तदा पिशाचगोमायुर्दंष्ट्रवान् मां तया सह ॥ ९९
ततो मृतोऽहं प्राक्तस्मात्तस्मान्न पश्चान्मृता खलु । काचदान प्रभावेन शिवपुण्याय ते तदा ॥ १००
राजाहं मत्स्यदेशस्य बभूव खलु भूसुर । साऽपि केकयदेशेशपुत्री भूत्वा मम प्रिया ॥ १०१
मामेव पतिमापैषा मद्वाक्यपरिपालिनी । त्वत्संभाषणपुण्येन तदानीं भूसुरोत्तम ॥ १०२
जातिस्मृतिरभूदस्या प्राग्जन्मस्फुरणात्मिका । तदुक्ता भवते ब्रह्मन् प्राग्भवोत्पत्तिरात्मन ॥ १०३
इदानीं शंभुपूजार्थे यद्यद्द्रव्यमपेक्षितम् । तदादाय महात्मंस्त्वं कृतार्थं कुरु मामिह ॥ १०४
एवमुक्त्वा प्रणम्यैनं भार्यया सह भूमिप । दत्त्वा द्रव्याणि भूरीणि पुनस्तस्मै शिवात्मने ॥ १०५
गत्वाऽशु स्वगृहं विप्रोक्तवृत्तान्तं प्राह तद्यथावत् । तच्छ्रुत्वा पितरौ तस्य तौ विस्मयमवापतु ॥ १०६
स तु कालेन पुत्राश्च समुत्थाय महायशा । शिवपुण्यानि भूरीणि कुर्वंस्तस्थावतन्द्रित ॥ १०७
शासन् सन् स बहून् देशान् निष्कण्टकमरिंदम । महतीं श्रियमासाद्य महानासीत्स भूमिप ॥ १०८
तत्रेन्द्रोऽपि समासाद्य तं दृष्ट्वा धरणीपतिम् । दत्त्वा कनकमालाश्च रत्न चिन्तामणिं तथा ॥ १०९
संभाष्य तं महात्मानं वाचा मधुरया तदा । स्वलोकं प्राप्तवानिन्द्र पश्चात्तस्यानुमोदनात् ॥ ११०
एवं भुक्त्वा चिरं कालं पुत्रानुत्पाद्य पण्डितान् । पुत्रेषु राज्यं निक्षिप्य प्रिया साकमरिंदम ॥ १११

आरुह्य रत्नशोभाढ्यं विमानमति सुन्दरम् । शिवलोकमनुप्राप्य शिवस्यैव प्रभावतः ॥
मोक्षं च प्राप्तवान् पश्चात्परस्य ब्रह्मणो द्विजाः ॥ ११२

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्चत्वारिंशोऽध्यायः ॥

---

॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

शिवपुराण लेखनाय अज्ञानतोपि पुस्तकदानेन कैलास प्राप्तिः ॥

अथान्याञ्च प्रवक्ष्यामि कथां सर्वाघहारिणीम् । यच्छ्रुत्वा सर्वकामांश्च मोक्षञ्चापुर्नरोत्तमाः ॥ १
पुरा स्वर्गमगाद्योगी वृषभाख्यो महानृषिः । जयन्तस्तं महात्मानं सुरेशतनयस्तदा ॥ २
समुत्थाय प्रणम्याशु प्रीणयित्वाऽर्घ्यपूर्वकैः । संस्थाप्य चासने रम्ये स्वयं बद्धाञ्जलिः स्थितः ॥ ३
तं वीक्ष्य प्राह योगीशः पिता कुत्र गतस्तव । इति तस्य वचश्श्रुत्वा जयन्तः प्राह तापसम् ॥ ४
विकर्तनं पार्थिवञ्च दूताश्शंभोः परात्मनः । आरोपयित्वातिमहद्विमानमतिसुन्दरम् ॥ ५
शिवलोकं समायान्ति संप्रति प्रथितौजसः । तद्दर्शनार्थं मघवान्निर्ययौ तत्पुरोऽधुना ॥ ६
इति ब्रुवति माहेन्द्रे जयन्ते वचनं तदा । समागतश्शचीनाथस्तत्रैवाशु महायशाः ॥ ७
समागतमृषिर्दृष्ट्वा क्व गतोऽसीत्यभाषत । स तु प्राह प्रणम्यैनं शक्रो वृषभयोगिनम् ॥ ८
विकर्तनं पार्थिवञ्च शिवदूताश्शिवप्रियाः । शिवलोकं नयन्त्यद्य तद्दर्शनं महोत्सवः ॥ ९
समागतस्तदर्थं वै गतोऽस्मि तपतांवर । अन्यथा त्वयि योगीशे साक्षादीशस्वरूपके ॥ १०
समागत्य स्थितेऽप्यत्र नोपेक्षा क्रियते मया । इत्युक्तवन्तं देवेशं योगीशः पुनराह हि ॥ ११
किं कृतं पुण्यमित्युक्तमेताभ्यां शिवदूतकैः । तदेतद्वद देवेन्द्र यथा तेभ्यश्श्रुतं त्वया ॥ १२
इति तस्य वचः श्रुत्वा देवेन्द्रः प्राह तापसम् । कर्णकुब्जदेशे च पुरं वीरट्टनामकम् ॥ १३
तत्र राज्ञः कुमारोऽयं विकर्तो मन्त्रिणः परः । अक्षक्रीडारतौ नित्यं पितृवाक्यमतीत्य च ॥ १४
तावुभौ नगरं मुक्त्वा तदन्यं देशमापतुः । तत्रापि द्यूतमार्गैकनिरतौ दुष्टसंयुतौ ॥ १५
अकृत्यकारिणौ नित्यमशेषजनवञ्चकौ । चोरैरनेकैस्संयुक्तौ चक्रतुर्श्चौर्यमन्वहम् ॥ १६
तदा कामपुरं रम्यमनेकाढ्यनिषेवितम् । लुण्ठयामासतुः पापौ बहुभिस्तस्करैर्युतौ ॥ १७
तदा सर्वेऽप्यमी चोरा गृहीत्वाऽऽशु पदार्थकान् । निर्गत्य नगरस्यास्य बहिर्मारात्ति दुःखिताः ॥ १८
कश्चित्तण्डुलभारार्तः पेटिकामितरो वहन् । एतौ निर्ययतुर्दूरं पुरस्यास्य बहिः स्थले ॥ १९
कुत्रचित्तमिमं भारमवतीर्यातिदुःखितौ । क्षणं विश्रम्य तौ पश्चात्तमुद्रोद्घुमियेषतुः ॥ २०
महाकष्टवन्तौ तौ दृष्ट्वा पथिकं ब्राह्मणं तदा । शिरस्यारोपयैनं त्वमावयोरिति चोचतुः ॥ २१
इत्युक्त्वा पेटिकां मुक्त्वा शोधयामासतुस्तदा । तत्रैकं पुस्तकं रम्यमनक्षरमदृश्यत ॥ २२
तन्निराकृत्य तौ पेटीं छादयित्वा यथा पुरा । शिरस्यारोपसमये ब्राह्मणः किञ्चिदुक्तवान् ॥ २३
क्षुधितोऽहं त्वनशनश्शिवभक्तो महीसुरः । रुद्राक्षधारको नित्यं शिवलिङ्गार्चने रतः ॥ २४
भस्मोद्धूलितसर्वाङ्गस्सदाचारपरायणः । मह्यं तण्डुलदानेन तवाक्षय्यफलं भवेत् ॥ २५
इति तस्य वचः श्रुत्वा पार्थिवः प्राह तं पुनः । भूमौ निपतितानेतान् गृहीत्वा गच्छ तण्डुलान् २६

न दास्यामि पुनर्धान्यांस्तण्डुलान् गच्छ मा चिरम् । धिक्कर्तनोऽपि प्राहैनं शिरस्यारोप्य पेटिकाम् ॥ २७
गृहाण पुस्तकञ्चैनदनक्षरमिहात्मवान् । इत्युक्त्वा ययतुर्देशं परमेतौ दुराशयौ ॥ २८
अक्षक्रीडारतौ नित्यं स्त्रियमेकां सुरूपिणीम् । उभावपि महापापौ क्रीडयामासतुस्तदा ॥ २९
तस्माद्वैषम्यमापन्नौ परस्परमिमावुभौ । अन्योन्यशस्त्रघातेन मम्रतुश्च दुराशयौ ॥ ३०
शिवभक्तो द्विजस्सोऽयं तण्डुलांस्तञ्च पुस्तकम् । गृहीत्वा स्वगृहं प्राप्य पक्त्वा तण्डुलकानमून् ॥ ३१
बुभुजे पुस्तके शैवपुराणानि लिलेख सौ । पपाठानुदिनं भक्तान्मेळयित्वा बहूनपि ॥ ३२
तेन पुण्यप्रभावेन शिवदूताशिवाज्ञया । आरोप्यातिमहच्चित्रं विमानमतिसुन्दरम् ॥ ३३
नृत्यद्भिरप्सरस्सङ्घैर्गायद्भिः किन्नरैरपि । देवदुन्दुभिनिर्घोषैश्शिवलोकञ्च निन्यिरे ॥ ३४
तत्र देवाधिदेवस्य सन्निधौ तस्थतुर्मुदा । तौ दृष्ट्वाऽहं ततो देवं शङ्करं लोकशङ्करम् ॥ ३५
प्रणम्य ताभ्यां भक्ताभ्यां विसृष्टोऽस्मि समागतः । तत्र तौ शिवसारूप्यं लब्ध्वा ब्रह्मादिदैवतैः ॥ ३६
स्तूयमानौ सुखेनैव तिष्ठतश्शङ्कराज्ञया । इत्युक्त्वा शिवपुण्यस्य माहात्म्यं केन सुव्रहन् (सुव्रह) ॥ ३७
श्रायते तत्वतश्शैवं वामदेवोऽब्रवीत् द्विजाः । पुनश्च वामदेवोऽसौ कथामेकां जगाद हि ॥ ३८
शैवं लोकमहं गत्वा परमाकाशमध्यगम् । तत्र दृष्ट्वा महादेवं सांबं सगणमव्ययम् ॥ ३९
अनुभूय सुखं तेन ब्रह्मणा वै विपश्चिता । विसृष्टस्तेन कामात्लोकामरूप्यनु सञ्चरन् ॥ ४०
अहमत्रमहमत्रादो ह्यउ गायन्विनिर्गतः । क्रमेणावरुह्यन्भूमिं लोकान् लोकानधो अधः ॥ ४१
भूमौ कुटकदेशस्य सौभाग्यमतिनाकजम् । अद्राक्षं तत्र सौभाग्यपुरमस्ति यथार्थवत् ॥ ४२
अतिघण्टाह्वयोऽत्रास्ति स्वकण्ठध्वनिना द्विजाः । क्रीडन् स बाल्ये पृथुकैः राजवीथ्यामनारतम् ॥ ४३
कदाचिदेकं रुद्राक्षमद्राक्षीत्बहुपुण्यदम् । तं प्रादाच्छिवभक्तस्य पुत्राय निजरातये ॥ ४४
स तं गृहीत्वा रुद्राक्षं गृहमभ्येत्य सत्वरम् । स्वपित्रे धृतरुद्राक्षमालालङ्कृतमूर्तये ॥ ४५
दर्शयित्वाभ्यनुज्ञातः कण्ठदेशे तमादधत् । अतिघण्टो द्विजोऽप्यस्य वृद्धत्वं कालपाकतः ॥ ४६
कालधर्मं गतो लोके जनानां दुरतिक्रमम् । दिव्यं विमानमारोप्य तं गणाश्शिवसंमताः ॥ ४७
शिवभक्ताय रुद्राक्षो दत्तो बाल्ये त्वनेन वै । तेन पुण्येन महता जितो लोकश्शिवस्य तु ॥ ४८
शंसन्तस्तमथानिन्युश्शिवलोकमनामयम् । तत्र तत्र पथि ब्रह्मविष्णुपूर्वैस्सुरेश्वरैः ॥ ४९
संभावितो विमानेन भासयन् स दिशो दश । अतिघण्टोऽतिवेगेन शिवलोकमगादिति ॥ ५०

महेन्द्राय महायोगी वामदेवोऽब्रवीद्वचः (वृषभो ऋषिसत्तमः) ।
शिवपुण्यस्य माहात्म्यं पश्येति स सविस्मयः ॥ ५१
कैलासमचलं प्राप स्वपात् स्वैरगतिर्वशी । श्रुतं मुनीश्वरैरद्य शिवपुण्यमतन्द्रितैः ॥
भवद्भिर्भाग्यवच्छ्रेष्ठैः किं भूयः श्रोतुमिच्छथ ॥ ५२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तचत्वारिंशोऽध्यायः ॥

---

॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

शिवपुराण श्रवण महिम्ना सर्वार्थलाभः ॥

ऋषयः —

श्रुतानि शिवपुण्यानि त्वत्तस्सूत महामते । साक्षादिव शिवादद्य कृतार्थास्स्मो वयं पुनः ॥ १
तत्तदाख्यानसहितान्याश्चर्याणि च सांप्रतम् । पुराणानि महेशस्य शिवस्य परमात्मनः ॥ २
ये शृण्वन्ति नरश्रेष्ठाश्श्रद्धया वेदवित्तमाः । तेषां फलं किमाख्यातं पठतामपि सादरम् ॥ ३
वद सर्वमशेषेण सेतिहासञ्च पुण्यदम् । पृष्टो मुनिवरैरेवं सूतः प्रोवाच हृष्टधीः ॥ ४
साधु साधु महाप्राज्ञा मुनयस्संशितव्रताः । युष्माभिरद्य यत्पृष्टं तदेतद्धितमात्मनाम् ॥ ५
पुराणान् शृण्वतां पुण्यं शिवस्य शिवदायिनः । इयत्तया परिच्छेत्तुं नालमीशोऽपि भूसुराः ॥ ६
प्रियेतदङ्गमीशस्य •भक्तिभाजामुदीरितम् । मत्कथाश्रवणे भक्तिः" स्वरनेत्राङ्गविक्रिया ॥ ७
इति देवेन कथितं देव्यै पूर्वं मुनीश्वराः । श्रोतव्यस्सततं ,शंभुर्मन्तव्यश्चोपपत्तिभिः ॥ ८
ज्ञात्वा च सततं ध्येयो वेदान्तैरिति शङ्करः ।
पुराणश्रवणादन्यदीशोपास्ति न साधयेत् (उपास्तिर्न साधुमत्) ॥ ९
तस्मात्तत्सदृशं पुण्यं नास्ति नास्ति श्रुतौ स्मृतौ । शिवादिशिवपुराणानि ये पठन्ति मुदान्विताः ॥ १०
पदं तेषां हि निर्दिष्टं शाङ्करं विमलात्मनाम् । शृण्वतामपि वै भक्त्या मुनयो नात्र संशयः ॥ ११
तस्माच्छिवपुराणानि श्रोतव्यानि निरन्तरम् । विहाय सर्वमपरं कृत्यजातं विचक्षणैः ॥ १२
श्रोतव्यं पठितव्यं च पुराणं शांभवं सदा । अत्रेतिहासं मुनिभिर्वर्णितं ब्रह्मवादिभिः ॥ १३
तदद्य संप्रवक्ष्यामि श्रुतं व्यासान्मया पुरा । साल्वदेशे महीभागे पुरमस्ति महत्तरम् ॥ १४
कामखण्डमिति , ख्यातं स्वर्गखण्डमिवापरम् । ब्राह्मणैः क्षत्रियैर्वैश्यैर्वेदविद्भिरधिष्ठितम् ॥ १५
शूद्रैरपि महाभागैः स्ववर्णाश्रमतत्परैः । अनुलोमैस्तथान्यैश्च प्रतिलोमैश्च सङ्कुलम् ॥ १६
वसन्ति तत्र यतयो महाव्रतपरायणाः । विद्यार्थिनश्च शतशो वसन्ति ब्रह्मचारिणः ॥ १७
दीनान्धकृपणानाथास्शतशोऽथ सहस्रशः । यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ॥ १८
एवं गृहस्थानाश्रित्य तत्र जीवन्ति भिक्षवः । तेषां मध्ये महात्माऽस्ति सन्यासी विजितेन्द्रियः ॥ १९
इन्द्रियाणि यदेतेन विजितानि महात्मना । जितेन्द्रिय इति ख्यातो नाम्नाऽसौ यतिसत्तमः ॥ २०
तमिमं ब्रह्मविद्वांसं शिवभक्तं दृढव्रतम् । कुशारं सर्वशास्त्राणां सर्वत्र समदर्शिनम् ॥ २१
सर्वे संभूय पृच्छन्ति ब्राह्मणाद्या हिताहितम् । तदुक्त्या हि ते पुण्याः प्राप्य श्रेयांसि सन्ततम् ॥ २२
संपूजयन्ति बहुधा ब्राह्मणाद्या जितेन्द्रियम् । तत्रैको ब्राह्मणश्रेष्ठश्श्रीगुप्तो नाम विश्रुतः ॥ २३
श्रुतिस्मृति पुराणस्सदाचाररतश्शुचिः । तस्यासन् पुण्यभूयसावाद्यो पुत्रा महात्मनः ॥ २४
दान्तस्तु प्रथमः पुत्रस्त्वनुशान्तोनुजोऽभ्यतु । ज्ञामोविज्ञामस्मिन्नाथ्यः प्रसिद्धाव्योऽधकारणः ॥ २५
मकारणाश्च ते सर्वे वेदशास्त्रार्थपारगाः । सर्वे संभूय पित्राऽऽस्ते गुप्तिमाश्चोपजीविनः ॥ २६
कदाचिदेते तनया ब्राह्मणस्य हिताहितम् । प्रष्टुकामा महात्मानं जितेन्द्रियमुपागमन् ॥ २७
तं प्रणम्य महात्मानं सर्वे प्राञ्जलयो द्विजाः । एकान्ते सन्निधौ तस्य परिवार्योपतस्थिरे ॥ २८
स तानपि यतिर्विप्रान् प्रोवाच वदतां वरः । यूय महात्मनः पुत्रा ब्रह्मचर्ये व्यवस्थिताः ॥ २९
सुखं वो वर्णितामत्र किमागमनकारणम् । अथ ते संमुपीड्य विनयेन महामुनिम् ॥ ३०

प्रोचुः प्राञ्जलयस्सर्वे प्रश्रयेण तपोधनम् । भगवन् जन्मसाफल्यं जातमद्य महामुने ॥ ३१
निरीक्षिता वयं हि त्वत्कृपया करुणात्मनः । वयं दारिद्र्यनिहता दरिद्रतनया यतः ॥ ३२
अस्माकमपि वै वाञ्छा भिन्ना कर्मानुसारिणी । अस्माभिरपि वाञ्छेयं प्राप्यते केन वै प्रभो ॥ ३३
वदेदानीमुपायं तत्त्वदन्तेवासिनामिह । इति पृष्टेषु तेष्वेवं प्रत्येकं पृष्टवान् यती ॥ ३४
तत्राग्रे प्रथमः प्राह ज्येष्ठो ज्येष्ठोऽहमप्यहं पुनः । वयमष्टौ समुत्पन्ना भ्रातरश्श्रुतिपारगाः ॥ ३५
कदा विवाह्य वै कन्यां सुखीस्यामितिमेमतिः । एकश्च बहुपुत्राणां पितास्यामिति वै मतिः ॥ ३६
अन्योऽसौ व्याधितोऽत्यर्थं व्याधिशान्तिमभीप्सति । विद्यामन्योतिमहतीं संपदन्येनचार्थ्यते ॥ ३७
योगी स्यामिति चैवान्यो योगिनस्स्वरूपा यलात् । अन्योऽसौ स्वशरीरेण शिवलोकमभीप्सति ॥ ३८
निस्स्वत्ववाञ्छा चान्यस्य भूलोके मुनिसत्तमाः । अस्माकमीदृशी वाञ्छा चित्तेतु परिवर्तते ॥ ३९
न शक्नुमो वयं प्राप्तुं वाञ्छां प्रत्येकमात्मभिः । तदुपायं वदेदानीं येन वाञ्छितमाप्नुमः ॥ ४०
श्रुत्वैतदखिलं तेषामभीष्टं स यतीश्वरः । विमृश्य मनसा भूयस्तानुवाच कृताञ्जलीन् ॥ ४१
यूयमष्टौ समुत्पन्ना ब्राह्मणाद्वेदपारगात् । कुरुध्वं शिवपुण्यानि शिवारामादिकान्यतः ॥ ४२
अचिरात्तेन पुण्येन प्राप्नुयस्तश्च वाञ्छितम् । समाहुरथ ते सर्वे वयं तन्त्रीवशंगताः ॥ ४३
अत एवहि जीवामो मुष्टिमात्रेण सांप्रतम् । तृणश्चापि न शक्तास्सञ्छेत्तुं ब्रह्मन् कुतः पुनः ॥ ४४
अन्यानि पुण्यकर्माणि धनहीना इमे यतः । तस्मात्तत्तादृशोपायं कृपया वद नः प्रभो ॥ ४५
इति श्रुत्वा वचस्तेषां पुनः प्राह जितेन्द्रियः । यूयं शिवपुराणानि शृणुध्वं ब्राह्मणात्मजाः ॥ ४६
सादरं तेन पुण्यानि कृतान्येव न संशयः । यो वेद एकन्तु लोके स तदिष्टफलं लभेत् ॥ ४७
इत्युक्ते तेन सन्तुष्टास्सप्रश्रयममी पुनः । इदमद्यहि नश्शक्यं सम्यगुक्तं महामुने ॥ ४८
किन्तु शक्ता वयं नैव पठते दातुमप्यणु । ईदृशेभ्यः कथं श्राव्यपुराणानि क ईदृशः ॥ ४९
किं कुर्मोऽद्य महाभाग कथमेतद्भविष्यति । जितेन्द्रियः — इतो विदूरे नगरादग्रहारोऽस्ति पुत्रकाः ॥ ५०
नाम्ना ऋषिपुरं तत्र कलिजिद् द्विजसत्तमाः । ब्राह्मणशिवभक्ताग्र्यस्सकलश्रुतिपारगः ॥ ५१
वसन्ति ब्राह्मणास्तत्र ये ते सर्वेऽपि तादृशाः । तेषामेव सदाभ्याशे श्रोत्रियाणां महात्मनाम् ॥ ५२
सदा शिवपुराणानि कलिजित्पठति स्वयम् । धनाढ्यो बहुभाग्यश्च सर्वदा शिवपूजकः ॥ ५३
स तु नैवतु गृह्णाति कांचनापि शिवाश्रमी । ददाति शिवभक्तेभ्यो भोजनानि मुदान्वितः ॥ ५४
यूयं शिवपुराणानि शृणुध्वं तन्मुखात्सुखम् । इति तस्य वचश्श्रुत्वा सर्वे ते ब्रह्मचारिणः ॥ ५५
तं नमस्कृत्य सहसा विसृष्टास्तेनवै मुदा । क्षणादृषिपुरं प्राप्य प्रणम्य कलिजिद्द्विजम् ॥ ५६
तदन्तेवासिनो भूत्वा वसन्तिस्म यथासुखम् । शतशिवपुराणानि पठतो द्विजसत्तमात् ॥ ५७
श्रोतृभिस्सह तत्रस्थैस्तैस्सर्वैर्ब्राह्मणैस्सह । श्रद्धया सहिता भूत्वा नित्यं कलिजितोमुखात् ॥ ५८
शुश्रुवुर्द्दृष्टमनसो लब्धस्वामीष्टसिद्धयः । शिवापदानश्रवणाद्धर्षगद्गदकन्धराः ॥ ५९
ध्यायन्तश्शिवमेवैकमनसो मुनिबालकाः । नियमेनतु संकल्प्य मासमेकमतन्द्रिताः ॥ ६०
सर्वे कलिजितं भक्त्या पूजयन्तो दिवानिशम् । तेषांतु दुरितं सर्वं जन्मान्तरशतार्जितम् ॥ ६१
प्रक्षीणमभवत् क्षिप्रं कृष्णपक्षौषधीशवत् । पुण्यराशिस्समृद्धोऽभूत्पूर्वपक्षशशाङ्कवत् ॥ ६२
दुरितक्षयपुण्याभ्यां स्वस्वामीष्टञ्च लेभिरे । व्याधितो व्याधितोमुक्तः स्वर्णकान्तिरभूत् क्षणात् ॥ ६३
स्त्रीकामस्यापि पुत्रस्य ग्रामणीस्तत्पुरे धनी । विद्वांश्चतदस्तस्यैव चाभवन् कन्यकाश्शुभाः ॥ ६४
चक्रिरे तं पतित्वेन पित्रा च प्रतिपादिताः । वैवाह्यं च धनं दत्त तस्मै तेन द्विजन्मना ॥ ६५

स सर्वं धनमादाय तामिस्तार्थं कृतार्थधीः । शंसञ्छिवपुराणानां श्रवणं फलमुत्तमम् ॥ ६६
पुरं प्राप्य सुखं तत्र मुमुदे चिरमद्भुतम् । अन्यस्यापि ददौ राजा धनं पुत्रार्थिनो बहु ॥ ६७
स तेनोद्वाह्य वनितां तस्यां पुत्रान् शुभान् बहून् । शीघ्रमुत्पादयामास पुराणश्रवणादहो ॥ ६८
विद्याकामोऽपि तनयस्तेषां मध्ये द्विजन्मनाम् । अवाप सर्वविद्यासु कौशल्यं कृपयेशितुः ॥ ६९
प्रससादास्य वाग्देवी स्वयमेव सरस्वती । राज्यैश्वर्यार्थिनोऽन्यस्य तनयस्य द्विजन्मनः ॥ ७०
ममार राज्याधिपतिः कश्चिद्राजा महत्तरः । अदृष्टतनयोऽस्यार्थं विषयोऽस्याप्यकंपत ॥ ७१
तदन्तरेऽस्य सचिवैर्धृतमेभो महागजः । तमिमं ब्राह्मणसुतं सिंहासनमुपानयत् ॥ ७२
स तेन लब्धराज्योऽथ भुङ्क्तेस्मैश्वर्यमुत्तमम् । योगसिद्धिपरस्यापि सिद्धो योगश्शुभप्रदः ॥ ७३
स तेन सिद्धकायस्सन् स्वैरचारी बभूव ह । अङ्गुल्यग्रनिपातेन भूमेस्सर्वत्र कंपनम् ॥ ७४
परकायप्रवेशादिसिद्धयोऽस्याप्युपागमन् । यस्य वाञ्छाशरीरेण शिवलोकसमागमे ॥ ७५
जगाम तेन पुण्येन शिवलोकमनामयम् । सशरीरस्सुखं प्राप तत्र मोक्षमनन्तरम् ॥ ७६
एते शिवपुराणानां श्रवणेन द्विजात्मजाः । प्रपेदिरे ते स्वाभीष्टं ब्रह्मभूयमनन्तरम् ॥ ७७
तस्माच्छिवपुराणानि श्रोतव्यानि मुमुक्षुभिः । एवमन्येच बहवो लोके शिवपुराणतः ॥ ७८
श्रवणेन परां सिद्धिं प्राप्तास्सुखमयन्ततः । असङ्ख्याता महात्मानः प्रापिरे गतिमुत्तमम् ॥ ७९
श्रुत्वा शिवपुराणानि पशवः पक्षिणो मृगाः । प्रापुयुस्सहसा सर्वे शिवलोकमनामयम् ॥ ८०
आथर्वणीश्रुतिर्विप्रा वदत्येवमिति श्रुतम् । युष्माभिरपि सर्वत्र नात्र कार्या विचारणा ॥ ८१
यस्मिञ्छिवपुराणानि देशे विप्राः पठन्ति वै । तत्रस्थास्तृणगुल्माद्याः शिवलोकमवाप्नुयुः ॥ ८२
इतीश्वरेण कथितं देव्यै पृष्टेन सादरम् । तस्माच्छिवपुराणानि ये शृण्वन्ति पठन्ति च ॥ ८३
किमु वक्तव्यमेतेषां गतिरस्ति परेति च । भक्त्या शिवपुराणानि यत्र यत्र पठन्ति वै ॥ ८४
शृण्वन्ति च सदा मर्त्या भक्तिभावेन चेतसा । तत्र तत्र शिवस्साक्षात्सान्निध्यं कुरुतेध्रुवा ॥ ८५
कर्णे शिवपुराणानां श्रोतॄणां परमेश्वरः । अपर्णया सहैवास्ते नात्र कार्या विचारणा ॥ ८६
पठतामपि जिह्वाग्रे पार्वतीशः प्रसन्नधीः । वसत्येव सदाकालं जगत्त्रयकृतालयः ॥ ८७
मर्त्याश्शिवपुराणानि शृण्वन्तमपि वा सकृत् । पठन्तमपि संपूज्य स्वस्वाभीष्टमवाप्नुयुः ॥ ८८
भक्त्या शिवपुराणानां वक्तारं द्विजसत्तमाः । श्रोतारमपि वा लोके योऽर्चयेत्तर्पयेत्कृती ॥ ८९
तेन देवाश्च मुनयस्तर्पिता नात्र संशयः । ये वै शिवपुराणानि पठते शृण्वतेऽपि वा ॥ ९०
कन्यादानं प्रयच्छन्ति भूदानमपि वा च गाम् । हिरण्यं वस्त्रमन्यद्वा भूषणानि मुदान्विताः ॥ ९१
तेन पुण्येन सहसा शैवं पदमवाप्नुयुः । यानि यानि तु वै तेभ्यो मुदा दत्तानि भूतले ॥ ९२
तानि तानि शिवायैव दत्तान्येव न संशयः । ये लिखन्ति पुराणानि शिवस्य परमात्मनः ॥ ९३
पुस्तके काकले वापि भक्तिश्रद्धासमन्विताः । यावन्ति चाक्षराणिस्युः पत्रे पत्रे द्विजोत्तमाः ॥ ९४
एकैकस्याक्षरस्यैककल्पं शिवपुरे वसेत् । लिखित्वा ये पुराणानि पठते ब्राह्मणाय ते ॥ ९५
शिवभक्ताय दत्त्वैव कुलकोटिं समुद्धरेत् । इह भोगानसौ भुक्त्वा पुत्रपौत्रसमन्वितः ॥ ९६
काञ्चनेन विमानेन चान्ते शिवपुरं व्रजेत् । भक्त्या शिवपुराणानि प्रतिगृह्णाति ये द्विजाः ॥ ९७
ते स्वयत्नेन वै भोगान् भुक्त्वा निर्धूतकल्मषाः । व्योमयानेन दिव्येन शातनागायुतेन ते ॥ ९८
शिवलोकमनुप्राप्य मोदन्ते शिवसन्निधौ । ये शिवायतने विप्राश्श्रद्धया परया सह ॥ ९९

त्वा शिवपुराणार्थं सरस्वत्यालयं शुभम् । वितानाद्यैरलंकृत्य सुधालेपनपूर्वकम् ॥ १००
त्र तानि प्रतिष्ठाप्य गीतवादित्रमङ्गलैः । प्रत्यहं धूपदीपाद्यैर्नैवेद्यैः पूजयन्ति ते ॥ १०१
वाप्य कोटिलिङ्गानां प्रतिष्ठाफलमुत्तमम् । भुक्त्वा भूमण्डले भोगान् देवासुरसुदुर्लभान् ॥ १०२
ाश्रनेन विमानेन किंकिणीजालमालिना । सिद्धविद्याधरादीनां लोकानभ्येत्य वै क्रमात् ॥ १०३
त्र तत्र महाभोगान् भुक्त्वा संभाविताश्च तैः । इन्द्रादिलोकपालैश्च प्रजानांपतिभिः क्रमात् ॥ १०४
ताकृताश्च ततः पश्चात् ब्राह्ममासाद्य वै पदम् । परार्धकालपर्यन्तं तत्र तेनापि सत्कृताः ॥ १०५
वैकुण्ठभवने पश्चान्महाविष्णुसमाश्रितम् । उषित्वा वैष्णवान् भोगाननुभूय चिरं द्विजाः ॥ १०६
स्य चाप्यायुषामन्ते स्कन्दलोकमनन्तरम् । उमालोकञ्च गोलोकं क्रमेणाभ्येत्य कालतः ॥ १०७
शिवलोकमनुप्राप्य मोदन्ते शिवसन्निधौ । तस्माच्छिवपुराणानि श्रोतव्यानि द्विजोत्तमाः ॥ १०८
नित्यञ्च पठितव्यानि पुस्तकेषु विलिख्य च । दातव्यानि द्विजाग्र्येभ्यश्शिवभक्तेभ्य आदरात् ॥ १०९
तैरेव प्रतिगृह्याशु पठितव्यानि सन्ततम् । अश्रद्धया पुराणानि पठन्ति न पठन्ति च (पाठयन्ति पठन्तिवा) ॥ ११०
शृण्वन्ति च न शृण्वन्ति (श्रावयन्ति) ते वै निरयगामिनः । सदाशिव पुराणानि शिवभक्तैर्मुदायुतैः ॥ १११
पठितव्यानि भक्त्या वै श्रोतव्यानि पुनः पुनः । अलं शङ्करभक्तानामन्यशास्त्रावलंबनैः ॥ ११२
मगन्तव्याग्रहारस्य पदवीश्रवणेन किम् । न पठन्ति पुराणानि न शृण्वन्ति च ये द्विजाः ॥ ११३
शिवभक्ता अपि च ते शिवद्रोहीसमाः स्मृताः । ये शृण्वन्तीदमाख्यानं श्रद्धयाऽत्र पठन्ति वै ॥ ११४
तेषां सर्वपुराणानां पठतां फलमीरितम् । एतस्याख्यानमात्रस्याप्यर्थज्ञो ब्राह्मणोत्तमाः ॥ ११५
शिवभक्तोऽथवान्यो वा सर्वस्याल्लोकपावनः । स एव सर्वतीर्थेषु स्नातो यज्ञेषु दीक्षितः ॥ ११६
सर्वलोकप्रियश्चैव सर्वलोकप्रियश्च वै । शिवस्यविष्णोर्देवानां ब्रह्मणश्चापि वा प्रियः ॥ ११७
तस्मादेव मुनीश्वराः प्रतिदिनं शैवानि भक्त्या परं श्रेयः प्राप्तिपथानि कर्णपुटकैर्युक्तैः पुराणान्यहो ।
पेयान्येव विमुक्तये नरवरैर्भक्तैरयत्नेन ते मुक्तिं यान्ति शिवेन साकमथवा सायुज्यमन्ये प्रियम् ॥ ११८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टचत्वारिंशोऽध्यायः ॥

---

॥ अथ एकोनपञ्चाशोऽध्यायः ॥

शिवद्रव्यापहारिणां पुत्राणामपि राज्ञा वधः ॥

ऋषयः —

कथितानि त्वया सर्वाण्यख्यानानि श्रुतानि च । कृतार्थाः स्म वयं सूत त्वया वै नात्र संशयः ॥ १
शिवद्रोहस्तु संप्रोक्तस्त्वया सूत प्रसङ्गत. । शिवद्रोहस्तु कोवात्र वर्णयस्व यथातथम् ॥ २
यस्य नास्ति प्रतीकारः प्रायश्चित्तशतैरपि । पृष्टः कोवा शिवद्रोह इति सूतो महर्षिभिः ॥ ३
प्राह तान् सकलान्वीक्ष्य सर्वशास्त्रार्थकोविदः । शिवस्य च शिवायाश्च सुब्रह्मण्येभवक्त्रयोः ॥ ४
गुरुभक्तगणानाञ्च षण्णामेषां द्विजोत्तमाः । द्रव्याण्युपेक्षया प्रज्ञाहीनभक्षणकादिना ॥ ५
विनाशयेद्यो मूढात्मा शिवद्रोही स ईरितः । उपेक्षा नाम सा प्रोक्ता यैरेषां ह्रियते धनम् ॥ ६
तद्विलोक्यापि तिष्ठेद्यस्तस्य प्रोक्ता मनीषिभिः । प्रज्ञाहीनमिदं प्रोक्तं ह्रियमाणं परैरदः ॥ ७
यो वै विचारयेन्मूढो न सम्यक्तस्य पापिनः । एतेषां परिचर्यायामलसस्यापि तत्स्मृतम् ॥ ८
एषामपहरेद्यस्तु तस्य भक्षणमीरितम् । एवं धनं धान्यजातं पशुमासरणं तथा ॥ ९

आलयं भवनं क्षेत्रं वृक्षानारामकानपि । वापीकूपतटाकांश्च पदार्थानेवमादिकान् ॥ १०
स्वयं विनाशयेद्यो वै विनाशकमतोऽथ वा । विनाशकान्तेवासश्च विनाशकनिरीक्षणम् ॥ ११
श्रवणञ्च तथा तस्य स्पर्शनं पापिनस्तथा । तद्वाक्यपालनं तद्वच्छिवद्रोहाः प्रकीर्तिताः ॥ १२
एतान् वह्नपि शंभ्वादीञ्छिवस्थानान्यपि द्विजाः । वेदान् विभूतिं रुद्राक्षमागमानपि शाङ्करान् ॥ १३
तथा शिवपुराणानि शिवसंबन्धकान् परान् । विनिन्दयति मूढात्मा शिवद्रोही स ईरितः ॥ १४
विनिन्दकस्य निकटे वर्तनं श्रवणं तथा । वीक्षणं स्पर्शनं तस्य तेन संभाषणं तथा ॥ १५
तद्वाक्यश्रवणं तद्वच्छिवद्रोहस्स ईरितः । एतान्निवेशने पण्णां तीर्थे पुण्यवनेऽपि च ॥ १६
अन्येषु शिवसंबन्धस्थलेष्वघविरोधिषु । उच्छिष्टं यः करोत्यत्र शिवद्रोही स ईरितः ॥ १७
कुर्वतस्तत्रदुच्छिष्टं वीक्षणं स्पर्शनं तथा । तेन संभाषणञ्चैव शिवद्रोहास्समीरिताः ॥ १८
एवमादि शिवद्रोहं कृत्वा केचन पापिनः । प्राप्येह भव (भय) दुःखानि बाध्यन्ते यमकिङ्करैः ॥ १९
अद्यापि नरकेष्वेतान् वक्ष्ये कांश्चन भूसुराः । वङ्गदेशाधिपः कश्चित् कीलकाख्यो महीपतिः ॥ २०
राजगिर्याह्वयं सोऽयं नगरं शास्ति भूपतिः । तस्यासंस्तनयाश्शूराः पापजित्प्रमुखा द्विजाः ॥ २१
पापजिच्छूरजिच्चैव वीरजिद्घोरजित्तथा । चत्वारस्ते समुद्दिष्टास्सर्वयुद्धविशारदाः ॥ २२
तपसा तोषयित्वैते श्रीरुद्रमरिमर्दनम् । बलं प्राप्य परं सर्वशत्रुसंहरणक्षमम् ॥ २३
जित्वा दिशश्च सकला राजसूयं महाक्रतुम् । चक्रुर्विविधसंभारैश्चत्वारोऽपि महाबलाः ॥ २४
पितृवाक्यमलङ्घ्यैव नित्यं तिष्ठन्ति पण्डिताः । कीलकोऽपि तदा तेषां पिता गोकर्णकं ययौ ॥ २५
शिवरात्रौ महादेवं सेवितुं परमेश्वरम् । शिवरात्रिव्रतं कृत्वा तत्रासौ व्यवसत्सुधीः ॥ २६
षण्मासान्नियमेनैव ध्यात्वा सांबं त्रियंबकम् । ततः स्वदेशं संप्राप भटैरतिबलैरयम् ॥ २७
चत्वारस्तनयास्तस्य पितुरग्रे प्रतस्थिरे । तैः प्राप भवनं रम्यं सर्वातोद्यरवैस्सह ॥ २८
तत्र सिंहासने स्थित्वा प्रेरयित्वा भटान् स्वकान् । स्वपुत्रान् प्रेषयित्वाऽयं स्वस्ववेश्म स भूपतिः ॥ २९
अन्तः पुरं स्वयं गन्तुमियेष मतिमानयम् । तथा तत्पुरमध्यस्थं शिवराजगिरीश्वरम् ॥ ३०
ये पूजयन्ति विप्रेन्द्राश्शैवाश्शिवविभाविताः । आययुस्ते नृपं द्रष्टुं शिवपूजापरायणम् ॥ ३१
तदा पप्रच्छ तान्राजा शिवविप्रान् समागतान् । स्वागतं वो महादेवपूजासंसक्तचेतसाम् ॥ ३२
पूजा चलति किं शंभोः पूर्ववन्न्यूनवर्जितम् । एवं क्षितिभुजा पृष्टा जगदुस्ते शिवद्विजाः ॥ ३३
त्वत्प्रभावाच्चलत्येव पूजा न्यूनविवर्जिता । प्रसन्नो नितरां शंभुः पूर्ववद्राज ते किल ॥ ३४
पुत्रैस्तव शिवद्रोहः कृतः खलु महीपते । इति तेषां वचः श्रुत्वा पुनः प्राह महीपतिः ॥ ३५
कोवा द्रोहः कृतस्तैस्तु शिवस्य परमात्मनः । त्यक्तशङ्का वदन्त्वद्य भवन्तः पारमेश्वराः ॥ ३६
इति राज्ञो वचश्श्रुत्वा ते प्रोचुर्वचनं तदा । वीरजित्तव पुत्रोऽयमिष्टकानां शतद्वयम् ॥ ३७
गृहीत्वा स्वगृहेशस्य प्रकाराङ्गमद्भुतम् । निर्ममाथ तदास्माभिश्शिवद्रोहो भवेदिति ॥ ३८
तदुल्लङ्घ्य वचो हार्षीदधिकारी दुराशयात् । तथा विचिन्त्य प्रमुखास्तत्क्रियानिरता नपि ॥ ३९
राजद्रव्यमिदं सर्वं राजा वेत्स्यति स्वयम् । तदा कोवा भवेद्दोष इति चोचुर्दुराशयाः ॥ ४०
एवमुक्त्वैव ते पापा इष्टका मनयन् खलु । तदेवानुसृत्यैव गताः स्मो धरणीपते ॥ ४१
अधोधामैतदखिलं वृत्तं वीरजितस्तदा । सोऽपश्चकार चोपेक्षां पुत्रस्ते प्रेरको यतः ॥ ४२
तदा दुःखेन संयुक्ता निर्गताः स्म यथालयम् । पापाद्विशुद्धिरस्माकमस्मात्केन भवेदिति ॥ ४३
द्रव्याणामपुनर्वापमिति चिन्ता बभूवहि । घोरजिच्छाङ्करं चूतं द्रुममेकं समुन्नतम् ॥ ४४

छित्वा चकार दुर्बुद्धिर्यागशाला मनोहराम् । तदानीं त प्रति प्रोक्तमस्माभिर्वचन मुधा ॥ ४५
छेत्तव्योऽयं त्वया वृक्षो न शिवालयमण्डप. । महान्दोषो भवेन्नून समतानामिहाधुना ॥ ४६
इत्य निशम्य वचनमस्माक धोरजित्पुन. । क्रियते यागशाला हि कोदोषस्ते न वा भवेत् ॥ ४७
इत्युक्त्वा प्रेषयामास चास्मानुल्लङ्घ्य मद्वच: । पूर्वेद्युः प्रेरितश्शूरजिता कृष्णस्तु तावकः ॥ ४८
शिवारामप्रसूनानि निनायास्मै भटः स्वयम् । आदाय तानि पापात्मा ममार सह भार्यया ॥ ४९
तदा कृते निषेधेऽपि न च शुश्राव पापवान् । मस्मिन्दिनेऽपि पुष्पाणि चाहृत्य स ययौ गृहम् ॥ ५०
एवमेभिस्त्रिभिर्द्रोहं शिवस्य परमात्मनः । कृत समीक्ष्य पुण्यात्मा शिवकार्यविचारक ॥ ५१
वीरव्रतो विरक्तोऽयं प्राणांस्तत्याज भूपते । पोपकश्शिवद्रुहाणां मार्ताण्डोऽपि ममार हि ॥ ५२
तथा पुष्पवन यस्तु विचारयति केसरी । विक्रमाख्यो अष्टौ प्राणान् सदाशिवपरायणः ॥ ५३
एव प्राणान्महात्मानस्त्रयस्तत्यजुरुज्ज्वला । वय प्राणान् परित्यक्तु शिवद्रोहतया नृप ॥ ५४
मराकृतानास्तेऽस्याश्रमागत्यैवावच यत । एतच्छ्रुत्वा वचो राजा चकार श्रोत्रयो. करौ ॥ ५५
पापजिन्नाम तनय समाहूय महीपति । आनयामास तान् पुत्रास्तेन त्रीनपि तान् भटान् ॥ ५६
परिचर्यारतान् पापाञ्छशास पुरत स्वयम् । एवमाशा विधायैषा राजा श्रावस्त्येश्वरालयम् ॥ ५७
पूजागृह यागशाला भित्वा वृक्षानपीष्टकाः । चकार शाङ्कर धाम परम नूतन महत् ॥ ५८
तस्य कोशगृहद्वारमुद्घाट्याथ च यद्धनम् । तत्सर्वं महसानीय मुण्डमालां मनोहराम् ॥ ५९
किरीटमन्याभरण चकार स महीपतिः । समभिषेकञ्च नैवेद्य कारयामास वै महत् ॥ ६०
तमलङ्कारयामास भूषणैस्तैर्महेश्वरम् । कुर्वन् निष्कृतिं पश्चाच्छिवद्रोहस्य भूपतिः ॥ ६१
शिवकार्याय ये वेह तत्यजुर्जीवितकिल्बिषा । विनिष्कृतिर्भवेत्तेषा केन वेति विचिन्तयन् ॥ ६२
प्राणत्यागं विना नैव निष्कृतिश्च भवेदिति । विचार्यचैव मनसा वह्निकुण्डे महानलम् ॥ ६३
प्रज्वाल्य निश्चयित्वाऽय कर पापजितस्तथा । भार्यया रत्नवत्या च गृहीत्वा क्रमात्मवान् ॥ ६४
पपात भावयन्नन्तश्शिवमेव परात्परम् । तदा शीतोऽभवद्वह्निर्जलयत्तस्य निश्चयात् ॥ ६५
ये तत्यजुश्शिवद्रोह दृष्ट्वा प्राणान्महायशा । वीरव्रतश्च मार्ताण्डस्तथा विक्रमकेसरी ॥ ६६
तान् ददर्शाशु पुरतश्शङ्कराज्ञासमुत्थितान् । तदा पपात वृष्टिश्च पौष्पी देवकरच्युता ॥ ६७
देवदुन्दुभयो नेदुर्जितांबुधिमहारवाः । तदा प्रसेदिवान्छम्भुर्वृष कैलाससन्निभम् ॥ ६८
मारुह्य चाद्रिजाकान्तो वृतो नानाविधैर्गणै । प्राहगम्भीरया वाचा राजान वीक्ष्य शङ्कर ॥ ६९
अहो तव मति. पुण्या सर्वलोकातिशायिनी । त्वत्समो नास्ति लोकेऽस्मिन्नपि भक्तिश्च तेऽतुला ॥ ७०
तस्मान्निष्कण्टक राज्य कृत्वा कालमनेककम् । पुत्रान्विनीतानुत्पाद्य कृत्वा पुण्यं मदीयकम् ॥ ७१
भुक्त्वा भोगांश्च विपुलानन्ते प्राप्नुहि मत्पदम् । इत्युक्त्वा त महादेवस्तत्रैवान्तरधीयत ॥ ७२
प्रसेदिवांस्ततो विष्णु: प्रसन्नेच महेश्वरे । ददौ विमानमेतस्मै सभार्याय महात्मने ॥ ७३
ततः प्रसन्नश्शक्रोऽस्य पुत्रस्य गजमुत्तमम् । दत्वा पापजिदाख्यस्य कीर्तयन्वचनैरमुम् ॥ ७४
आशीर्भि र्योजयित्वाशु स्वर्लोक प्राप्तवान् हरि. । एव देवैर्बहुमतस्सन्तोषेण गृह गत· ॥ ७५
पुत्रेण भार्यया सार्कं भुक्त्वा भोगानखण्डितान् । पुनर्विनीतानुत्पाद्य पुत्रान्धर्मार्थकोविदान् ॥
शिवपुण्यानि भूरीणि कृत्वाऽन्ते मोक्षमाप्तवान् ॥ ७६

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनपञ्चाशोऽध्याय. ॥

॥ अथ पञ्चाशोऽध्यायः ॥

देवालयस्थित कदलीफलापहारात् नरकादि दुःखप्राप्तिः ॥

शिवालयश्रीकार्यार्थमिष्टकाश्च तथा सुधाः । संपादिता हरद्रोही प्रायश्चित्तविवर्जितः ॥ १
शिवालयार्थमानीता इष्टकाश्च सुधामपि । समादिदेशानयेति धीरजिद्राजनन्दनः ॥ २
तासां यो हारको हारिनाम वीरजितो भटः । आनीता यैश्च भृत्यैस्ता भटास्तेपीह भूतले ॥ ३
दण्डितास्तस्य पश्चैते परत्रच कृतागसः । नीता यमभटैश्शीघ्रमतिघोरे निपातिताः ॥ ४
अद्याप्यनुभवन्त्येव घोरास्तास्ताश्च यातनाः । शिवारामतरुच्छेदशिवद्रोहस्य भूयसः ॥ ५
छेदनार्थं कृतादेशो घोरजिद्राजनन्दनः । अधिकारी विक्रमाख्यश्छेत्तारश्शतपूर्वकाः ॥ ६
तेपीह निगृहीताश्च नरकेच निपातिताः । यमदूतैर्महाघोरैरतिघोरे महत्तरे ॥ ७
अद्यापि यातनाभिस्ते पीड्यन्ते बहुधाभटैः । उद्यानपुष्पहरणमहाद्रोहस्य शूलिनः ॥ ८
शूरजिन्नृपतिस्तस्य भार्याच कुसुमाग्यमू । भटैरानीय पुष्पाणिदधतुर्निशि तावुभौ ॥ ९
तौ तयोरधिकारीच तीक्ष्णाख्यस्तद्भटाश्चते । अद्यापि पीडितास्सर्वयमदूतैः परत्रच ॥ १०
बहुधा पीडितास्तीव्रे निरयेच निपातिताः । अद्यापि यातनास्तीव्रा भुञ्जते हातिकुत्सिते ॥ ११
एते सर्वे दुरात्मानः कल्पकोटिशतादपि । पारं न निरयांबोधेः प्राप्नुवन्ति कदाचन ॥ १२
सर्वेषामपि पापानां प्रायश्चित्तं श्रुतौस्मृतौ । निर्दिष्टं हि पुराणैश्चमुनिभिश्च महत्तरैः ॥ १३
शिवद्रोहस्य चैकस्य प्रायश्चित्तं मुनीश्वरैः । महत्तरैर्ननिर्दिष्टं शास्त्रे वेदेऽपि वा क्वचित् ॥ १४
शिवद्रोहीह घोरेषु नरकेषु च यातनाः । अनुभूयैव कल्पानामनन्तानि निरन्तरम् ॥ १५
तत्रैव पच्यते कष्टं हा हा द्रोहस्य वैभवम् । ये हरन्तीह देवस्य फलानि कदलीतरोः ॥ १६
तेषां वच्मि कथां सर्वे शृणुध्वं सावधानतः । अङ्गदेशे महीपालो विधाता नाम नामतः ॥ १७
सत्यसन्धो महाधीरस्सर्वायुधविशारदः । धर्मेण रक्षतस्तस्य पृथिवीं पृथिवीपतेः ॥ १८
कदाचिन्नारदः प्राप सभामैन्द्रीमिवाङ्गिराः । तमागतमृषिं दृष्ट्वा सहसोत्थाय भूपतिः ॥ १९
प्रणम्य परया भक्त्या ददावासनमुत्तमम् । उपविष्टं मुनिं प्राह प्राञ्जलिर्विनयान्वितः ॥ २०
स्वागतं ब्रह्मपुत्राय महते भवतेऽधुना । वयं कृतार्था भगवन् दर्शनेन तव प्रभो ॥ २१
तथापि ते सुखांयोऽआह्निरं शुश्रूषुरादरात् । माज्ञापय महायोगिन् प्रसीद करवाणि किम् ॥ २२
समागतं त्वयेदानीं कुतः कार्यमिहास्ति किम् । इति ब्रुवन्तं राजानं नारदः प्रत्यभाषत ॥ २३
नान्यदस्ति महीपाल त्वया संभाषणादृते । पितुस्त्वयाद्य सन्देशं वक्तुकामस्समागतः ॥ २४
येन्द्रीं सभां सुधर्माख्यामध्यास्ते जनकस्तव । भवन्तं मन्मुखेनाह पुण्यकृत्यं कुरुष्व नृप ॥ २५
कुरु पुण्यमहोरात्रं पुण्येन स्वर्गतिर्नृणाम् । उक्त्वेति नारदो भूपमथ तस्य पुरोहितम् ॥ २६
अन्तिकस्थं समालोक्य प्रोवाच ब्रह्मन्निति । पुरोधास्त्वं महीभर्तुस्त्वत्पितृमुखश्शृणु भाषितम् ॥ २७
यमकिन्यां यमभटैर्बाध्यमानो वचोऽब्रवीत् । मामालोक्य महीं यान्तं प्रणम्य स कृताञ्जलिः ॥ २८
मुने राज्ञो विधातुस्त्वं यन्तासि यदि नारदः । तत्र मे तनयो यज्ञांस्तस्य राज्ञः पुरोहितः ॥ २९
अजिताख्यो विनीतात्मा वर्तते तेन सत्कृतः । तस्मै कथय सन्देशं मदुक्तं मुनिसत्तम ॥ ३०
श्रुपन्तमिरयं यास तमपुष्पमनन्यधीः । वदामि तव पुत्राय यमकस्पमनाहितः ॥ ३१
अहं तत्र गमिष्यामि विधातुः पृथिवीपतेः । सभां तत्रापि ते पुत्रं दृष्ट्वा ब्रूयां त्वयेरितम् ॥ ३२
इति ब्रुवन्तं मामाह पिता तव सुदुःखितः । मयोत्कोशस्वरूपेण धनानि प्रतिगृह्णता ॥ ३३

गृहीतानि पुनर्लोभात् पुण्यलेशोऽपि नादृतः । पुत्रोऽपि हृदयं मेऽद्येत्यमुं नाचिन्तयत्तदा ॥ ३४
धनानि तानि सर्वाणि बहून्यपि गृहान्तरे । स्थूणमूले विनिक्षिप्य नान्यस्मै प्रोक्तवानहम् ॥ ३५
इदं कृतमिदं कार्यमिति चिन्ताकुलन्तु माम् । गृहीत्वा सहसा निन्युर्यमदूता यमान्तिकम् ॥ ३६
बाधन्ते मां दिवारात्रं यमदूता भयङ्कराः । तदद्यास्तु नमस्तुभ्यं तद्गृहीत्वा धनं बहु ॥ ३७
पुत्रपुण्यं कुरुष्वेति वदशीघ्रं तु मा चिरम् । भूदानं कन्यकादानं गोदानानि बहून्यपि ॥ ३८
तिलधान्यादि दानानि ददस्वेति वद प्रभो । पुनश्च गङ्गाप्रभृतिनदीतीरेषु पुत्रक ॥ ३९
सहस्रभोजनं कुर्याद्ब्राह्मणेभ्यो मुदान्वितः । सघृतं ससितापूपं सूपव्यञ्जनपूरितम् ॥ ४०
येन केनाप्यहं तीर्णयातनः स्वर्गमाप्नुयाम् । तथाद्य नारदमुने कथयस्व नमस्तव ॥ ४१
मयेति पित्रा ते प्रोक्तं तत्कुरुष्व यथामनः । इति राजानमपि तं पुरोहितसुतं मुनिः ॥ ४२
उक्त्वा जगाम त्रिदिवं सद्यः स्वैरगतिस्तदा । विधाता राजशार्दूलस्सोऽपि तस्य पुरोहितः ॥ ४३
जग्मतुर्विस्मयं भूयो भूयः स्मृत्वा मुनेर्वचः । चक्रतुस्तौ मतिं पुण्ये स्वपितुर्वाक्यगौरवात् ॥ ४४
अजितः स्वगृहस्थूणमूलादुद्धृत्य तद्धनम् । राज्ञापि च पुनर्दत्तं पुण्यार्थं भूरि तद्धनम् ॥ ४५
अजितस्सर्वमेवैतद्गृहीत्वा स्वस्त्यान्वितः । गङ्गादीनां नदीनाञ्च तीरेषु च पुरेषु च ॥ ४६
पुण्यक्षेत्रेषु सर्वेषु काशीकाञ्चीपुरादिषु । भोजयामास वै नित्यं ब्राह्मणानां सहस्रकम् ॥ ४७
दीनान्धकृपणानाथदरिद्राणां परश्शतम् । भूदानानि च गोदानान्ययुतानि ददौ मुदा ॥ ४८
कोटिकन्याप्रदानानि ब्रह्मणेभ्यो ददौ कृती । मार्गे मार्गे प्रपां कृत्वा जलदानमकारयत् ॥ ४९
पुष्पारामाणि भूरीणि रोपयामास तद्धनैः । समुद्रकबन्धमार्गेषु तटाकानपि भूरिदाः ॥ ५०
स्नात्वा स्नात्वा च तत्रापि रोपयामास वै द्रुमान् । एकस्मिंस्तीर्थतीरेऽसावेकस्मिन्दिवसेऽजितः ॥ ५१
यच्चकार सकृत्पुण्यं तेनैव सुकृतेन वै । तत्पिता तेन पुण्येन नरकात्त्रिदिवं गतः ॥ ५२
दिव्यं विमानमारुह्य दिव्यस्त्रीशतसंकुलम् । अनुभूय चिरं कालं स्वर्गभोगमनुत्तमम् ॥ ५३
अन्येषु दिवसेष्वेषु यानि पुण्यान्यकारयत् । तेनोत्तरोत्तरं स्वर्गे पिता लेभेऽधिकं सुखम् ॥ ५४
एवं नदीनां तीरेषु कृत्वा पुण्यान्यसौ चिरम् । कालेन नर्मदां प्राप्य विन्ध्यपादे महत्तराम् ॥ ५५
स्नात्वा सन्तर्प्य देवर्षीन् कृतसन्ध्याविधिर्द्विजाः । दानान्यपि च दत्वाऽत्र ब्राह्मणानाञ्च भोजनम् ॥ ५६
एकस्मिन्दिवसे तत्र ब्राह्मणानाञ्च भोजनम् । प्रयच्छत्यजिते तस्मिन् घृतसूपफलैस्सह ॥ ५७
नालभ्यासीत् द्विजाग्र्याणां केषां चित्कदलीफलम् । ततस्सर्वेषु भुञ्जत्सु तूष्णीं तिष्ठत्सु वै तदा ॥ ५८
अजितो दुःखितो भूत्वा समाहूय पुरोहितम् । शीघ्रं विप्रवरेदानीं कदलीफलमानय ॥ ५९
शतं नालभमूत्सद्यो यत्र कुत्रापि माचिरम् । उक्तवन्तमुवाचेदमभेदानीं सुदुर्लभम् ॥ ६०
अन्यग्रामात्तदानीतं श्वः परश्वो भविष्यति । भोक्तव्यं ब्राह्मणैरद्य नियमोऽत्र कथं भवेत् ॥ ६१
विन्ध्याटव्यां विशेषेण येषां नालभमूत्फलम् । तेभ्यः प्रयच्छ द्विगुणं श्वः परश्वो विशङ्कया ॥ ६२
इति वादिनि वै तस्मिन्नजितस्य पुरोहिते । अजितस्तं पुनः प्राह कण्ठे निक्षिप्य वै करम् ॥ ६३
अवश्य व्रतभङ्गो मे न भवेद्येन केनचा । तथा कुरु ममाभीष्टं पुरोहित नमोऽस्तु ते ॥ ६४
इत्युक्ते तेन वै तस्मिंश्चिन्तामतिमहीयसीम् । अवाप्तवन्तं परममाधिनाच्च समन्वितम् ॥ ६५
अन्तिकस्थो द्विजः प्राह पुरोहितमिदं वचः । पश्यात्र पश्चिमे भागे वृक्षषण्डसमाकुलम् ॥ ६६
भीमेश्वरमिदं स्थानं भीमेश्वरसमाह्वयम् । अनेककदलीषण्डैरलङ्कृतमिदं पुरम् ॥ ६७

तत्र वै शतनिष्कस्याप्यस्त्येव कदलीफलम् । सुतीर्थाख्ये वदत्येवं त्वरया स पुरोहितः ॥ ६८
स्वभृत्यान् प्रेषयामास दत्त्वा बहुपणं मुदा । गत्वा तत्रेश्वरस्थाने तदीयाः पुरुषास्तदा ॥ ६९
पणार्थं पूजकानेते पप्रच्छुः कदलीफलम् । पूजका नोऽद्य नैवाल्पं देवायास्य परमेशितुः ॥ ७०
नैव दद्मः फलं यूयं गच्छतेत्यवदद्रुषा । ततस्ते सहसाभ्येत्य फलार्थं ये समागताः ॥ ७१
राजाधिकारिसविधे पणान् दत्त्वा फलार्थिनः । तेन साकं समागत्य पुरुषानिदमब्रुवन् ॥ ७२
विद्यन्ते योऽत्र कदलीफलानि सुबहून्यहो । इत्युक्त्वोपरि संत्यज्य पणान्राजोपसेवकाः ॥ ७३
एकस्मिन् कदलीवृक्षे यावन्ति फलितानि हि । तान्यादाय महाप्रीत्या ब्राह्मणेभ्यः फलान्यदुः ॥ ७४
यावतां नालमभवद् ब्राह्मणानामशङ्कितम् । पुरोहितोऽधिकारी च नृत्ताश्वस्त्वरया च तौ ॥ ७५
यावदीशार्चका राज्ञे न वदेयुस्त्वरान्विताः । तावद्गत्वाऽथ वै राज्ञे पूर्वमाचख्यतुर्भयात् ॥ ७६
अजितस्यतु वृत्तान्तमन्नदानस्य वैभवम् । अजितोऽयमातिप्रीत्या तीर्थे तीर्थे च सर्वदा ॥ ७७
अन्नदानपरोऽत्यर्थं स्वर्णदानपरश्च वै । मृष्टान्नं ब्राह्मणेभ्यो हि प्रयच्छति क्षतीतराम् ॥ ७८
तदर्थमद्य पूर्वेद्युर्भीमेश्वरशिवालये । शतन्दशपणान् दत्त्वा विक्रीतं कदलीफलम् ॥ ७९
भुञ्जते स्म द्विजास्सम्यक् पूर्वेद्युर्नर्मदातटे । तदुपश्रुत्य राजापि सन्तोषेण पुरोहितम् ॥ ८०
अधिकारिणमप्याशु प्रेषयामास पूर्ववत् । अजितस्यापि सुप्रीतो ददौ प्रियमुपायनम् ॥ ८१
तौ गृहीत्वा जग्मतुश्च राज्ञा दत्तमुपायनम् । गतयोस्तु ततः पश्चाद्भीमेशालयपूजकाः ॥ ८२
राजानमेत्य तत्कर्म समाचख्युश्शुचाकुलाः । राजन् कदाचिदपि वा शंभोस्तु कदलीफलम् ॥ ८३
अभिषेकश्च नैवेद्यमपविघ्नं भवेदिति । अस्माभिर्नैव विक्रीतमभिषेकनिवेदने ॥ ८४
यथा भीमेशितुर्विघ्नो न भवेत्तत्तथाकुरु । अचमत्याध नरसर्वानजितस्य पुरोहितः ॥ ८५
सहाधिकारिणाभ्येत्य दत्त्वा दशपणान् बलात् । छित्त्वा गुच्छं स्वहस्ताभ्यां जग्मतुः पृथिवीपते ॥ ८६
इयतापिच कालेन न दृष्टं पुनरीदृशम् । शिवद्रोहमजानानौ निन्यतुः कदलीफलम् ॥ ८७
श्रुत्वापि राजा तद्वाक्यं तूष्णीमास्ते स्म यन्निव । दत्ताः किल पणास्तेन देवाय क्रयतो धनम् ॥ ८८
इतः परं नैवमिति प्रेषयामास तान्नृपः । तमेवं वादिनं भूपं निन्दन्तो मनसाऽर्चकाः ॥ ८९
अयमेव शिवद्रोही न तावित शुचान्विताः । जग्मुर्भीमेश्वराभ्याशं राजाऽपि भवनान्तरम् ॥ ९०
राजाऽपहारिणस्सर्वान्मुमोचयदशङ्कितः । तेन पापेन महता पितरं तस्य भूभुजः ॥ ९१
नरके पातयामासुरिन्द्रलोकात्सुदारुणे । सोऽपि राजा तदारभ्य पीडितो राजयक्ष्मणा ॥ ९२
अन्तरेऽण्दिनादेव ममार पृथिवीपतिः । पातितस्सोऽपि नरके यमदूतैर्भयंकरैः ॥ ९३
सामन्तेन हृतं तस्य राज्यञ्च नगरञ्च तत् । पुरोहितश्च सहसा नेत्रे उत्पाट्य वै रुषा ॥ ९४
देशाद्विवासयामास सोऽपि प्रभ्राम भूतलम् । नेत्रव्रणेन तेनैव ममार विजने क्वचित् ॥ ९५
तत्रापि नरके घोरे पातयामासुरञ्जसा । यदा शिवालयाक्रीतं शिवार्थंकदलीफलम् ॥ ९६
तदानीमेव जनको निरये पातितः पुनः । क्रमेण मरणं प्राप्तमजितस्य पुरोहितम् ॥ ९७
तस्यापि पितरं घोरे निरये पातयन् क्षणात् । येनेदं ब्राह्मणेनोक्तं तदानीं कदलीफलम् ॥ ९८
भीमेश्वरालयेऽस्तीति सोऽपि पञ्चत्वमागतः । सान्वयः पतितो घोरे रौरवेऽतिभयङ्करे ॥ ९९
राजाधिकारी नृत्तोऽपि सर्पदष्टो ममार हि । पातितश्चापि निरये शासनेन यमस्य वै ॥ १००
फलानि तानि यैर्विप्रैर्भक्षितानि महात्मभिः । तेषां महोदरव्याधिरासीत्कष्टं द्विजन्मनाम् ॥ १०१
महागदेन तेनैव पञ्चत्वञ्च प्रपेदिरे । सान्वयाश्च महाघोरे नरके पातिताः क्षणात् ॥ १०२

कदलीफलगुच्छस्यच्छेत्ता हस्तेन केसरी । ब्राह्मणस्सोऽपि हस्ताग्रपिळकाभिन्नदोर्हतः ॥ १०३
निरये सान्वयोघोरे यमदूतैर्निपातितः । इत्थं राजापुरोधाश्च तदीयश्च पुरोहितः ॥ १०४
राज्ञोऽधिकारी भृत्याश्चयका मोकार एव ते । छेत्तारश्च सान्वयास्सर्वे नरके युगकोटिषु ॥
अद्याप्यनुभवन्त्येव यातना न हि निष्कृतिः ॥ १०५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चाशोऽध्यायः ॥

---

॥ अथ एकपञ्चाशोऽध्यायः ॥

शिवभूम्यपहारात् नरकादिबहुविध दुःख प्राप्तिः ॥

शृणुध्वमृषयो भूयश्शिवक्षेत्रापहारिणः । दुर्गतिं यान्तियामत्र वक्ष्यिमतामद्य मानवाः ॥ १
विप्रास्तत्परिहाराय शृणुध्वमवधानतः । श्रीशैलेऽस्ति महीभागे मूचकाख्य महत्पुरम् ॥ २
तत्रास्ति सविता नाम ब्राह्मणो वेदपारगः । शान्तो बहुधनी विद्वांस्तस्य पुत्रास्त्रयोऽभवन् ॥ ३
तेषां ज्येष्ठो महाभागो धार्मिको विनयान्वितः । हरीश्वराख्य तत्रास्ति स्थान शम्भोरुमापतेः ॥ ४
तस्मै देवाय वै धीमान् भागमेकमदात्स्वयम् । नैवेद्यार्थं द्विजश्रेष्ठो विरक्तोऽथ दिनान्तरे ॥ ५
सन्त्यज्यात्मधन भूरि ययौ बदरिकाश्रमम् । तत्र चक्रे तपो रम्य ध्यायञ्छिवपदाम्बुजम् ॥ ६
तच्छेत्रमञ्जसा कर्षन्छिवदेवश्रद्दिद्दक्षवः । ततस्तस्य पिताऽभ्येत्य हरोध विलपन्नृपा ॥ ७
पुत्रो मे चित्तसम्भ्रान्तमना यत्किञ्चिदाचरत् । निर्गतश्च गृहाद्भूयो वनान्तरमगान्नृपम् ॥ ८
किं पारयनुवया दत्तमस्माकं वदताधुना । धर्मशास्त्रमवध वा दत्त भ्रान्तेन सूनुना ॥ ९
परिहास्यमिद किं वा चर्योयोगस्तु कीदृशः । भ्रान्तेन चास्वतन्त्रेण दत्त नैतद्भवेत्स्मृतौ ॥ १०
नैव दत्त वृथा भ्रान्ता गच्छतेत्यवदन्नृपा । तेन दत्तमदत्त तदित्येव बहुधाऽवदत् ॥ ११
तेषां तेन तदान्योन्य कलहस्तु महानभूत् । राज्ञे निवेदयामासुरन्योन्यमविवादिताः ॥ १२
विहस्य राजा त विप्र दत्त देवाय तत्पुनः । न निवर्तेत वि(वृ)थथ कर्षपाथम न संशयः ॥ १३
शिवमन्यद्धन भुङ्क्ष्व गच्छ दुष्टेत्यभर्त्सयत् । तदारभ्यैव तत्क्षेत्र शिवक्षेत्रमभूत्पुनः ॥ १४
तस्मिन्राजनि वै नष्टे कलहे समुपस्थिते । पुनस्तद् ब्राह्मणः क्षेत्र जहार कलहान्तरे ॥ १५
सामन्तराजा तद्राज्य जहार बलवास्तदा । स तु नीतिपरो राजा धर्मेणापालयन्महीम् ॥ १६
पुनश्च देवाधिहृतस्तस्मै राज्ञे न्यवेदयन् । सोऽपि राजा तमाहूय धान्य भूयोऽप्यदापयत् ॥ १७
गतभोगसमुद्भूतधान्यान्यपि च दापयत् । सर्वस्वमपि तस्यैतदपराधस्य दापयत् ॥ १८
पुनश्च त स्वविषयान्निराकारयन्नृपः । दुःखितस्सोऽपि विप्रोऽपि देशाद्देशान्तर भ्रमन् ॥ १९
समाप्य मगधं देशमद्राक्षीत्तस्य भूपतिम् । तस्मै निवेदयामास स्ववृत्तान्तमथान्वयः ॥ २०
स राजा तद्द्विज माभैर्माभैर्विभेति भाषयन् । अद्यप्रभृति विप्रेन्द्र मत्पदे मामसमान्तरम् ॥ २१
समभ्येत्य कृतार्थीस्य मत्र तिष्ठ पुरे सुखम् । तस्मिन्क्षिति स्थिते तत्र तस्य राज्ञः पुरोहितः ॥ २२
विज्ञानतावयस्तु तं प्राह शिवद्रोहितमो भवान् । भवन्त किमुपादत्त राजा मुक्तोपपातकम् ॥ २३
शिवद्रोहिणमापाश्त हन्यादेवाविचारयन् । अविचार्य शिवद्रोही वध्य इत्युच्यते बुधैः ॥ २४
त्वया हतशिवद्रोहपातकस्त द्विजाधम । त्वां हन्मि नोपेदधुना स्याद्वतस्य मर्दनमः ॥ २५

त्याज्या मयाऽसवोऽद्येति कस्यचित्पृथिवीपतेः । पुरुषस्य करात् खड्गमादायास्याच्छिनच्छिरः ॥ २६
तच्छ्रुत्वाऽस्मै चुकोपाशु राजा मौर्ख्यात्पुरोधसे । तस्यापि क्रोधताम्राक्षः पुरोधाश्शिर आच्छिनत् ॥ २७
शिवद्रोही स विप्रश्च राजा च निहतौ क्षणात् । पुरोहितेन किमिति सशङ्का नृपसेवकाः ॥ २८
छेत्तुं प्रहर्तुमुद्युक्तास्ताडितुश्च कृपाणिनः । अन्योन्यश्चाच्छिदन् सर्वे प्रक्रुद्धाश्च परस्परम् ॥ २९
ताडयामासुरन्योन्यं दैवेन हतबुद्धयः । एतत्सर्वं समालोक्य सुमित्रो राजनन्दनः ॥ ३०
पुरोहितं समभ्येत्य प्रणम्य स कृताञ्जलिः । भो भो विशान्त भगवन् भवता किमिदं कृतम् ॥ ३१
किमर्थं संहृतो विप्रो देशान्तरसमागतः । राजा च संहृतः क्षिप्रं ब्राह्मणेन त्वयाऽधुना ॥ ३२
निमित्तमत्र किं ब्रह्मन् वद मह्यं हि पृच्छते । कथं ह्येते भटा ब्रह्मन्नन्योन्यं निधनं गताः ॥ ३३
त्वमेव साक्षादीशान इति मे निश्चिता मतिः । वद ब्रह्मन्यथातत्त्वं मत्यसाराहि साधवः ॥ ३४
विशान्तोऽथ पुनश्शान्तः प्रोवाच नृपनन्दनम् । अयं देशान्तराद्विप्रश्शिवक्षेत्रापहारकः ॥ ३५
असंभाष्यो जनैर्दुष्टो मानितः पृथिवीभुजा । संहृतस्तत्क्षणादेवमाततायविशंकितम् ॥ ३६
तत्साहाय्यपरो राजा श्रेयसे संहृतो मया । ईशाभावप्रसादेते चान्योन्यं निहता भटाः ॥ ३७
श्रुत्वैतदखिलं पुत्रो राज्ञः प्रोवाच तं पुनः । भीतभीतः प्रणम्यैनं कृताञ्जलिपुटः स्मयन् ॥ ३८
साधु साधु त्वया विद्वन् संहृतः परमेशितुः । क्षेत्रापहारी लोकेऽस्मिन्नाततायी न संशयः ॥ ३९
तत्साहाय्यपरो राजा तद्भटाश्च स्वयं हताः । इदानीं मम विज्ञप्तिं कर्णे कृत्वा विधीयताम् ॥ ४०
एते कृतैनसः क्षिप्रमस्यच्छ्रेयोऽभिवृद्धये । निगृहीता न सन्देहस्सत्यमुक्तं द्विजाधुना ॥ ४१
छिन्धि मेऽद्य शिरो ब्रह्मन् सजीवास्सन्त्विमे भटाः । अपराधं क्षमस्वाद्य प्रसीद द्विजपुङ्गव ॥ ४२
पुनराह द्विजो राजकुमारं प्रहसन्निव । त्वं राजपुत्र कुशलबुद्धिरेव न संशयः ॥ ४३
पितुः कृतापराधस्य ह्यत्वोत्थानं न सांप्रतम् । जनानां पुनरुत्थानं साधु प्रार्थितवानसि ॥ ४४
भटानिति पुनस्सांस्रूथकार शिवतेजसा । अन्योन्यं प्रहरन्तोऽपि तत्क्षणेन निवारिताः ॥ ४५
दृष्ट्वैतदखिलं राजकुमारः स्वपुरोहितम् । सविस्मयस्तदा भूयः प्रणनाम पुनः पुनः ॥ ४६
तदैव सहसा तत्र पुष्पवृष्टिर्दिवश्च्युता । देवदुन्दुभयो नेदुर्दिवि संकुलनिस्वनाः ॥ ४७
आविरासन्नभोदेशाद्गणेन्द्राश्शिवसम्मताः । सविमानास्समभ्येत्य प्रोचुस्ते तं पुरोहितम् ॥ ४८
इदमत महाबुद्धे कृतकृत्योऽसि भूसुर । आरुह्येदं विमानाग्र्यमायाहि शिवमन्दिरम् ॥
नन्दीश्वरसमादेशाच्छ्रीमत्कैलासपर्वतम् । इति तेतं समारोप्य विमानं सर्वगामिकम् ॥
सपुत्रपौत्रमखिलं सबन्धुसखिसंमतम् । भ्राजमानं स्ववपुषा निन्युः कैलासमुत्तमम् ।
स्वपुत्रदत्तं सवितानाम विप्रो द्विजाधमः । अपहृत्य शिवक्षेत्रमिहैवासीच्च निर्धनः ॥
विनेशुस्तस्य पुत्राश्च भार्या दुहितरः स्नुषाः । स्वयञ्च निर्धनो भूत्वा देशाद्देशान्तरं गतः ॥ ५
तथापि स्वहनिहतो ब्राह्मणेन विशेषतः । यमदूतैरतिक्रूरैर्निरयेषु निपातितः ॥
अनेककल्पपर्यन्तमद्यापि न निवर्तते । राजा च तस्य चाकस्मात्साहाय्यनिरतो हतः ॥
निरयेषु च दाः तत्साहाय्यतोऽसाधुसङ्गमः । सर्वेषामेव जन्तूनां हेतुरश्रेयसे ध्रुवम् ॥
अद्यापि राजा निस्तीर्णो निरयादेव भूसुराः ॥ ५६

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकपञ्चाशोऽध्यायः ॥

॥ अथ द्विपञ्चाशोऽध्यायः ॥

यमेन युधिष्ठिरं प्रति शिवद्रव्यापहारि नरक प्रदर्शनम् ॥

अतःपरं प्रवक्ष्यामि मुनयो द्विजसत्तमाः । पशूञ्छिवस्य ये लोके हरन्ति मनुजाधमाः ॥ १
ते यान्ति यां गतिं मूढास्तदीयां वच्म्यहं कथाम् । पाण्डुपुत्रो महाराजो युधिष्ठिरसमाह्वयः ॥ २
सत्यसन्धो महाभागो धर्मपुत्रः प्रतापवान् । शत्रूञ्जित्वा भ्रातृभिस्सर्वैर्दुर्योधनपुरोगमान् ॥ ३
अवतीर्य महीभारमनन्तमहिमास्पदः । अन्ते जगाम स दिवं सशरीरः प्रतापवान् ॥ ४
मध्येमार्गं दिवः प्राप्य पितरं धर्ममात्मनः । प्रणम्य तस्थिवांस्तत्र धर्मराजेन पूजितः ॥ ५
चित्रगुप्तादयस्तत्र धर्माधर्मविचारकाः । इदमूचुस्सदोमध्ये यमं प्राञ्जलयो द्विजाः ॥ ६
अजातशत्रुर्भगवन्नतीव सुकृती कृती । दिवं प्रयातस्सुकृतैर्दुरापमकृतात्मभिः ॥ ७
पुराऽनेन नरेन्द्रेण शत्रून् संहरता रणे । असत्यमुक्तमेकं हि निर्बन्धेन महीभुजा ॥ ८
तस्यापशान्तये देव नरकानेष पश्यतु । तथेति तद्वचश्श्रुत्वा यमोऽनेन महीक्षिता ॥ ९
सह पातालमभ्येत्य दर्शयामास वै क्रमात् । नरकान्यातनास्सर्वास्तत्रत्यानां दुरात्मनाम् ॥ १०
तत्रानलाख्यनरके भुञ्जानान्यातनाश्शतान् । विलोक्य सहसा भीतो धर्ममालोक्य धर्मराट् ॥ ११
पप्रच्छ प्राञ्जलिस्तिष्ठन्नेभिरेनस्तु किं कृतम् । एतत्प्रब्रूहि भगवन् पृच्छते मह्यमीश्वर ॥ १२
इति पृष्टो यमः प्राह पुत्रमालोक्य निर्दिशन् । शिवद्रोहपरा ह्येते शृणुध्वं सावधानतः ॥ १३
कुशावर्ते महीभागे देशेऽस्ति वसुधापुरम् । तत्र कश्चिद्द्विजश्रेष्ठः पुण्यदारैरनिन्दितः ॥ १४
विप्रो मणिरिति ख्यातस्तमिन्द्रः स्वर्गमानयत् । एकं तस्मै ददौ दिव्यं भूषणं प्रीतिमानसः ॥ १५
इदमाभरणं विद्धि नित्यं निष्कसहस्रकम् । प्रसूते तत्समादाय कुरु पुण्यमतन्द्रितः ॥ १६
भूलोके त्वरयेत्याशु विससर्ज पुनश्च तम् । तथेति भूमिमासाद्य पुनःपुण्यं चकार सः ॥ १७
कदाचित्सकलान् धर्मानन्वतिष्ठत् द्विजाग्रणीः । गोदानानि सहस्राणि ददौ प्रीतमना द्विजः ॥ १८
तत्रैतेषां सहस्रेषु वसन्तेश्वरशूलिनः । एका गौस्सङ्गता ताभिस्तामपि प्रददौ द्विजः ॥ १९
एकोत्तरसहस्रं तद्वस्तु बुध्येति हृष्टधीः । अभ्येत्य चुक्रुशुस्तस्मै शिवालयसमर्चकाः ॥ २०
मुख्यगां देवदेवस्य वसन्तेश्वरशूलिनः । आक्रुष्टोऽपि च रुष्टोऽपि तानेवमवदद् द्विजः ॥ २१
महेन्द्रेण धनं दत्तं विभूषणसमुद्भवम् । वसन्तेशेन च पुनर्गौरियं दानहेतवे ॥ २२
गच्छतेति च तानुक्त्वा न मुमोच तदा च गाम् । अर्चकाः खिन्नमनसो राज्ञे सर्वं न्यवेदयन् ॥ २३
न विचारितमेतेन राज्ञापि विमुखेन वै । तन्मन्त्री निकटे तिष्ठन्राजानं प्रत्यभाषत ॥ २४
राजन् किमिति नोपेक्षा कार्या देवपशुं प्रति । असाधुरयं दण्ड्यो हि शिवद्रोहविचारतः ॥ २५
राजा तमाह देवेन्द्रप्रियोऽसौ द्विजसत्तमः । अस्माभिर्नैव दण्ड्योऽसौ येनकेनच गच्छतु ॥ २६
मन्त्री :— शिवद्रोहीश्वरे राज्ञि न स्थातव्यं मयाऽधुना । उक्त्वैवं निर्जगामाशु वनं प्रकृतिपुङ्गवः ॥ २७
आलयाधिकृतास्सर्वे विनिन्द्य पृथिवीपतिम् । शिवद्रोहभयेनेति जग्मुः स्वं स्वं निकेतनम् ॥ २८
एवं गते बहुतिथे विशालो राजपुङ्गवः । सुधीरमाह्वयामास वनं कोपेन संश्रितम् ॥ २९
आहूतेऽपि विशालेन सुधीरो नागतो वनात् । सुधीरस्तु कालेन निर्धनस्समपद्यत ॥ ३०
खिन्नश्चिन्तां परां प्राप कुटुम्बभरणाय वै । देवेन्द्रस्तु विदित्वैतत्सुधीरस्य मनोगतम् ॥ ३१
प्रेषयामास सुरभिं कामधेनुं सुरारिहा । सुधीरस्य कुटुम्बं त्वं रक्ष धेनो यशस्विनि ॥ ३२

वने वसति पुण्यात्मा वित्तहीनोऽथ सर्वदे । तदाज्ञां शिरसा धृत्वा कामधेनुस्त्वरान्विता ॥ ३४
वनं शीघ्रमनुप्राप्य तत्कुटुंबं बभारवै । भक्ष्याद्यैर्भक्ष्यहं धेनुर्वने कामदुघुत्तमा ॥ ३५
सुवीरेतिष्ठति सुखं कुटुंबेन वनान्तरे । विशालः कुपितोऽत्यर्थं वनं प्राप ससैनिकः ॥ ३५
बलात्कारेण तं सद्यो गृहीतुं वनवासिनम् । मध्येमार्गं महीपालमपरेद्युर्वने द्विपः ॥ ३६
त्वरयाभ्येत्य हस्तिस्स मदेन छिन्नशृङ्खलः । हाहेति विलपन्तस्ततःसैनिका नगरं प्रति ॥ ३७
निवृत्तास्तत्क्षणादेव निहते तत्र राजनि । अभिषिक्तश्चित्रसेनो राज्ये तत्सूनुरञ्जसा ॥ ३८
सुवीरमभिवर्धं महत्समाश्रयदरण्यतः । सुवीरः पुनराहेदं राजानं द्रुतवञ्चतः ॥ ३९
स तु विप्रमणिद्रोही शिवस्य यदि दण्डितः । मागमिष्येऽहमविहन्निति स्वैरन्ययोदयत् ॥ ४०
तदानीमेव भूपालकुमारः कुशलाय वै । आहूय तं विप्रमणिमतीव पदपाभरम् ॥ ४१
चोरोऽसि विप्र दुष्ट त्वं शिवधेनुमपाहरः । आदात् द्विजन्मने यत्त्वं चोर पचासि भूसुर ॥ ४२
चोरो मुञ्चति वै दोषं निगृहीतोनु पद्मम । (चोरदोषं भजेद्राजा निगृहीतो न वध्यमिति चपाठः)
इत्यसौ निगृहीतश्च कुमारेण महाधिया ॥ ४३
सन्तुष्टोऽथ महानिन्द्रः प्रादुर्भूय तदैव तु । गृहीत्वाऽऽभरणं तंतु सुवीराय ददौ मुदा ॥ ४४
पुष्पवृष्टिः पपाताशु सुरेन्द्रपुरुषाहता । गते महेन्द्रे सहसा देवलोकं यथापुरा ॥ ४५
गोप्रतिग्रहकर्तारं कच्छदेशकृतालयम् । वसुनामानमवनीपतिपुत्रः प्रतापवान् ॥ ४६
शिवालयपशुस्स्वेयमिति ज्ञात्वापि दुष्टधीः । कृत्वा प्रतिग्रहं देशाद्देशान्तरसमागतम् ॥ ४७
तद्देशेशाज्ञकालस्य पुरुषैर्विदितागसम् । स राजा तत्र तां गाञ्च सहसा निजसेवकैः ॥ ४८
आनयामास सहसा स्वभटैः स्वात्मशुद्धये । गां देवाय पुनर्दत्वा तस्यनेत्रे द्विजन्मनः ॥ ४९
अपास्य विषयात् स्वस्मात्पुनस्तं प्रैषयत्क्षणात् । सोऽपि कालेन निधनं प्राप विप्रो विलोचनः ॥ ५०
दाता प्रतिग्रहीता च राजा चोपेक्षकस्तयोः । नीताः यमभटैर्भीमैरसिसेते निपातिताः ॥ ५१
मनलास्याभिधे घोरे नरके कालमक्षयम् । तेषां वंशोद्भवाश्चापि युधिष्ठिर निपातिताः ॥ ५२
श्रुत्वेति वाक्यं स्वपितुर्धर्मपुत्रोऽतिविस्मितः । मनुजया पितुः प्राप त्रिदिवं व्योमयानतः ॥ ५३
सूतः — उक्तं मयाऽद्य हरणात्पशोर्देवस्य यां गतिम् । प्रापुर्दाता गृहीता च तटस्थस्तदुपेक्षकः ।
तदीयाख्यानमधुना किं भूयश्श्रोतुमिच्छथ ॥ ५४

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
*उपदेशकाण्डे द्विपञ्चाशोऽध्यायः ॥*

---

॥ अथ त्रिपञ्चाशोऽध्यायः ॥

देवतास्वापहारिणः अग्निज्वालायुत वयस्तम्भे बन्धनम् ॥

अतःपरं प्रवक्ष्यामि दत्तां वृषभमुद्रिताम् । हर्तां वृषभीं नारीं हरस्य शृणुताधुना ॥ १
पुरा चतुर्मुखो देवो दिदृक्षुरखिलं जगत् । आरुह्य हंसं सुश्वेतं चचार त्वरया मुदा ॥ २
प्राप्य संयमिनीं कालाक्षरकान्तलोकपम् । तन्मध्ये कतिचिद्दृष्ट्वा निरयान् पद्मसंभवः ॥ ३

अत परं न गन्तव्यमित्यचोचत्सवाहनम् । इमे दुरात्मनिलया नावलोक्या मया इति ॥ ४
ततो हंसस्तमाहेत्य किमेते नरका प्रभो । नैवावलोकिता देव त्वया किं चात्र कारणम् ॥ ५
ब्रह्माह तं शिवद्रोहनिरतावासभूमय । एते नैवावलोक्यास्स्युर्निवृत्ताविति तौ तदा ॥ ६
नरकाणाञ्च तेषान्तु मध्ये ज्वलितपावके । यज्ञस्तम्भे नियद्धेन पुरुषेण कृतं स्वन ॥ ७
मध्राधि हंस पप्रच्छ किमेतेन कृतं स्विति । ब्रह्मा शृण्वस्य वृत्तान्तमिति प्रोवाच तत्कथाम् ॥ ८
सौराष्ट्रदेशे नगरी सौराख्या विदिता शुभा । वैश्यस्तत्र सुदत्ताख्यो धार्मिको धनवान् कृती ॥ ९
अकृत्रिमेण वाणिज्यं करोति बहुधा सदा । भद्रकालीपदाम्भोजसपर्यानिरतोऽन्वहम् ॥ १०
विख्यातस्सर्वदेशेषु सर्वभूतदयापर । सायात्रिकी सौख्याय सुखेनार्णवमभ्यगात् ॥ ११
द्वीपान्तरात्समादाय बहुकालमतन्द्रित । निवृत्तोऽर्णवमध्येतु वायुना निहतप्लव ॥ १२
दध्यौ सुदत्तोमनसा भद्रकालीमनन्यधी । तदानीमेव तद्भक्त्या भद्रकाली महार्णवात् ॥ १३
तं सा ससैन्यं सधनं प्रापयामास तद्गृहम् । दृष्ट्वैतदखिलं सर्वे सुदत्तं तमपूजयन् ॥ १४
कदाचित्तस्य कल्याणे प्रवृत्ते नागरा जना । तद्गृहं प्राप्यमुमुदुर्भुक्त्वानानासत्कृता धनैः ॥ १५
नटा विटाश्च गणिकाश्शैलूषा वन्दिनस्तथा । सौरेश्वरालयस्याश्च नरानार्यश्च सत्कृता ॥ १६
सर्वेऽपि प्रेषितास्तेन ससत्कारमतोऽन्तरे । सौरेश्वरालये काचिद्रमणी वृषचिह्निता ॥ १७
तां दृष्ट्वा मोहितो वैश्यस्तस्या रूपेण कामुक । स्वगृहे स्थाप्य तां तन्वीं तयारात्रौच संगत ॥ १८
प्रातस्तां गन्तुमिच्छन्तीं शिवायतनकर्मणे । संमार्जनकरीं भूयश्चेटीमन्यामचोदयत् ॥ १९
सा चेटीं प्रेषयामास संमार्जनपटीयसीम् । तां दृष्ट्वाऽधिकृतास्सर्वे वैश्यचेटीं विना तथा ॥ २०
अपृच्छन्वैश्यमाहूय मुञ्च त्वं वृषचिह्निताम् । किमत्रचानया चेट्या नचैवार्हा शिवालये ॥ २१
पृष्टवास्स्वपि तेष्वेव नामुञ्चद्धनगर्वित । त ऊचुर्वृषभीं मुञ्च नार्हा चेटी तवालये ॥ २२
तथा स्वपत्नी त्वत्पार्श्वान्यपार्श्वं गमिष्यति । एवमेवेति चोक्तेऽपि सापि चेटी तथान किम् ॥ २३
तथापि नैच्छत्सा मोक्तुं राज्ञे प्रोचुश्शिवाश्रिता । राजा मन्त्रिणमाहूय मोचयेति जगाद ताम् ॥ २४
मन्त्री वैश्यस्तु धनवान् भद्रकालीप्रियोद्यमम् । न निग्राह्य कथं मोच्या वृषभीनृपसत्तम ॥ २५
राजा कोपेन स प्राह काळीकारुण्यवीक्षितम् । गच्छेत्युक्तेपि सचिवो नैच्छद्धीत्या नृपस्तदा ॥ २६
स्वयं निर्गत्य भवनाद्वैश्यद्वारि ससैनिक । मुञ्चेति निग्रहोद्युक्तो वैश्यश्च सहसा रुषा ॥ २७
तदा सस्मार वै काळीं वैश्य स्वाभीष्टदेवताम् । सा सन्निधाय तं प्राह त्वं द्रोही परमेशितु ॥ २८
उक्त्वा तमेव राजानमथ प्रोवाच काल्यमुम् । वैश्यो द्रोही महेशस्य प्राप्नुते निग्रहस्य हि ॥ २९
यथेष्टं शिक्षयैनं त्वमित्यन्तर्धानमास्थिता । ततो राजाऽस्य सर्वस्वमादाय वृषभीं पुन ॥ ३०
प्रेषयामास सहसा शिवायतनकर्मणे । सा स्नात्वा तु यथापूर्वं संमार्जनरताऽभवत् ॥ ३१
ततो वैश्यं पुना राजा मारयित्वाऽस्य योषित । कृतवान् वृषभीं मुदा चक्रे सौरेश्वरालये ॥ ३२
संमार्जनकरीं शीघ्रं तां पापविनिवृत्तये । मन्त्रिणञ्चापि साहाय्यकारिणं द्रोहिणोऽच्छिनत् ॥ ३३
स तु वैश्योऽथवै यज्ञस्तम्भे बद्धोऽनलान्तरे । मसद्विष्णुर्पाशनास्ता मृशं रोदिति दुःखित ॥ ३४
सस्थाय शुश्रुवे घोरो स्वोऽस्मामिर्महास्वन । अन्यत्रापिच शब्दोऽयं मन्त्रिणो नृपतेरयम् ॥ ३५
साहाय्येनापि तस्यास्य निर्धूमाङ्गारमध्यत । तदिमे नरका घोरा नास्माभिर्वीक्षिता क्षण ॥ ३६

कथयन्निति वै ब्रह्मा तेन स्वं लोकमाश्रयत् । इति सूतवचःश्रुत्वा ऋषयो भीतमानसाः ॥
शिवमेव तदा सांबं मनसा शरणं ययुः ॥ ३७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रिपञ्चाशोऽध्यायः ॥

---

॥ अथ चतुःपञ्चाशोऽध्यायः ॥

शिवालय तैलजंबीर फलापहारिणां अनादिकालादारभ्य नरकवास कथनम् ॥

शृणुतातः परं विप्राश्शंभोस्तैलापहारिणः । लिकुचस्य फलस्यापि कथां कथयतो द्विजाः ॥ १
शतानन्दो महायोगी शिवभक्तो मुनीश्वरः । प्रत्यहं स महायोगी पर्यटतिस्म जगत्त्रयम् ॥ २
कैलासे देवमभ्येत्य किं वदन्तीं वदत्ययम् । लोकानामपि वृत्तान्तमेवं कालं नयत्यसौ ॥ ३
कदाचिद्यमलोकं तां प्राप संयमिनीं पुरीम् । तत्र संभावितोऽत्यर्थं यमेन नरकान् पुनः ॥ ४
तेन साकमनुप्राप्य ददर्श मुनिपुङ्गवः । तत्र दृष्टेषु निरयेष्वसौ केचिदन्तरे ॥ ५
पच्यमानाननपृच्छत्किमेतैः पापं कृतं वद । तमुवाच यमो नाहं जानामि मुनिपुङ्गव ॥ ६
पूर्वैरपि यमैरेते बाध्यन्तेस्स महीनमः । शिवद्रोहिण इत्येतन्मात्रमेव श्रुतं मया ॥ ७
तमेवं वेत्ति स पुनर्जगाम ब्रह्मणस्सभाम् । तत्र तं परिपप्रच्छ प्रणम्य कमलासनम् ॥ ८
पूर्वमेव निमग्नानां नरकेषु शिवद्रुहाम् । सोऽपि तान् कांश्चिदुक्त्वाऽथ्याशाहं वेद्मिपरान्मुने ॥ ९
मत्पूर्ववेधसोनैतान्वेत्ति जानन्ति धातया । स मुनिस्तं पुनः प्राह ब्रह्मणा विदितं न किम् ॥ १०
तमुवाच पुनर्ब्रह्मा मया सृष्टं तु यन्मुने । तत्सर्वं वेद्म्यहं किन्तु पूर्वमेव स्थिता इमे ॥ ११
अथवा मत्कृता सृष्टी रक्षा विष्णुकृतापि च । नावाभ्यां वा शिवेनैव परिपूर्णेन वस्तुना ॥ १२
किं त्वावामधिकारित्वे तद्वियुक्तौस्व आत्मजौ । तत्कृतात्तमहाभागौ भवाव ऋषिसत्तम ॥ १३
ततो जगाम वैकुण्ठं तत्र विष्णुमपृच्छत । महर्षिं सोऽपि सत्कृत्य वादतो वेत्तितान्युवम् ॥ १४
अन्यान्नवेद्मि मत्पूर्वकालमेवस्थितानिमान् । एतान्सर्वमशेषेण वेत्ति सर्वज्ञ ईश्वरः ॥ १५
इत्युक्तवति तेनापि कैलासमगमन्मुनिः । तत्र सर्वेश्वरेशानं पप्रच्छ प्रणमन्मुनिः ॥ १६
भो स्वामिन्निरये पूर्वं ब्रह्मविष्ण्वोश्च केचन । पच्यन्त इति तैरुक्तं शिवद्रोहिण इत्यपि ॥ १७
कृतस्तु तैर्भवद्द्रोहः कोवावद महेश्वर । ततो नन्दिनमाहूय भगवान् प्रमथेश्वरः ॥ १८
गच्छ नन्दिन्यदामुष्मै यत्पृष्टं मुनिनास्तु ते । विदितं मत्प्रसादेनेत्युक्त्वा तौ विससर्ज वै ॥ १९
ततो नन्दी स्वभवनमानीय मुनिमादरात् । यथाव्युपमना महान् प्रष्टुमर्हसि तत्पुमाम् ॥ २०
अहं विदितवृत्तान्तं करोमि त्वां मुनीश्वर । शतानन्दः - अहं नरकमग्नानामाश्चर्येण शिलादज ॥ २१
तत्र तत्र च ये घोरे पच्यमानान्दुरात्मनः । दृष्ट्वापृच्छं यमं विश्वसृजं विष्णुश्च तैः पुनः ॥ २२
यद्यातकालं शैलादे पापाचाराश्शिवद्रुहः । पच्यन्ते तान्वदेदानीं त्वं सर्वज्ञो जगत्प्रभुः ॥ २३
अग्निमध्ये महाघोरे कटाहे तैलपूरिते । अधोमुखास्तु पच्यन्ते सर्पाङ्गेष्वपि कीलिताः ॥ २४
अयस्ताम्रशलाकाभिरग्निशाभिरक्षिणोः । श्रोत्रयोर्नासिकाग्रे च जिह्वायां मस्तके तथा ॥ २५
रोमकूपेष्वयस्सूचीरग्नितप्ता निरायते । बाध्यन्ते सततं घोरे तद्वैवस्व कथां वद ॥ २६
यस्तोरेवमन्योन्यमीश्वराराधनोद्युक्तौ । ब्रह्मविष्णू च संप्राप्तौ तौ च तादात्म्यपदस्तताम् ॥ २७

शतानन्दोऽयमधुना नन्दीशं प्रणुमुद्यतः । नरके पच्यमानांस्तान्ताभ्यामपि भो वद ॥
श्रोतव्यमद्भुतमिदमिति तौ तं शिलादजम् । स्वामीष्टमिति तं तस्मै विज्ञाप्यानुमतौ स्थितौ ॥
ततः प्रोवाच भगवान्नन्दीशंकरवल्लभः । नन्दिकेश्वरः – विदर्भदेशे राजाऽभूद्दिश्वसेनोऽस्ति नीतिमान् ॥
सर्वशास्त्रार्थकुशलो धनुर्वेदस्य पारगः । कदाचिन्मृगयासक्तश्श्रान्तो विपिनमण्डले ॥
सिद्धेश्वरेश्वरस्थानमण्टपं प्राप्यसत्वरम् । शिष्येधिरूढशयनस्तत्रैव शिवसन्निधौ ॥
श्रान्तमुद्वीक्ष्य राजानं दक्षिणः परिचारकः । तस्याङ्गमर्दनकरः पादसंवाहकस्सदा ॥
तैलार्थं पणमादाय पुरं बभ्राम सर्वतः । जंबीरस्य फलं चापि नैव लेभे पुरे तदा ॥
शिवालयं समभ्येत्य तैलं दीपार्थमागतम् । अभिषेकार्थकलशानि जंबीरस्य फलानि च ॥
कुडुपद्वयतैलञ्च चत्वारि च फलानि च । बलादादाय दक्षोऽस्याचङ्गमर्दनमाचरत् ॥
स्नापयित्वा नृपं श्रान्तं दानधर्मानकारयत् । तदानीमेव संप्राप्य शिवालयदिदृक्षवः ॥
राजानं धृतवृत्तान्तमकुर्वन्भयवेपिताः । राजा श्रुताश्रुतप्रायो जगाम नगरं स्वकम् ॥
तूष्णीमेव च कालेन ममार पृथिवीपतिः । विनिन्द्य पृथिवीनाथं जग्मुरीशाधिकारिणः ॥
राजानमपि तं पापं तच्छ्रान्तिनघमेराट् । दूतैः स्वैस्सहसाऽऽनीय सर्वेषु निरयेष्वपि ॥
संपीडयित्वाऽतिमहत्कालमत्र महानले । निक्षिप्य तं तैलघटे यमोऽप्यदहतोऽनिशम् ॥
संपीडयति हा कष्टमेकस्यैतादृशे परे । दक्षोऽप्यनलकुण्डेषु पच्यते हायनान् बहून् ॥
मध्ये त्वनेकेह्यनयोर्ब्रह्मणो विष्णवो गताः । कुतोऽन्ये वज्रिनिवहा ब्रह्मणोऽह्नि चतुर्दश ॥
अनयोर्वंशसंभूताः पच्यन्तेऽत्रैव यातनाः । आभ्यामतः परंचापि कालो नेयोऽक्षयो महान् ॥
इति नन्दीश्वराच्छ्रुत्वा शतानन्दोऽति हृष्टधीः । पप्रच्छ पुनरेवैनं शिवस्वर्णापहारिणः ॥
यां गतिं प्राप्नुवन्त्येते तां कथां भगवन्वद ॥ ४५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुःपञ्चाशोऽध्यायः ॥

---

॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

अज्ञानतः शिवस्वर्णयज्ञोपवीतापहरणात् सपरिवारस्य रोगनरकादि प्राप्तिः ॥

शतानन्दः —

त्वत्तश्श्रुता कथाह्येषा शिवतैलापहारिणः । येभ्योऽप्यत्रापि निरयेष्वन्ये पापास्तु भुञ्जते ॥
यातनास्तैः कृतं किं वा कर्मभूमौ दुरात्मभिः । येषां द्वारेषु नवसु द्रवः स्वर्णस्य पूर्यते ॥
खण्डशश्च शरीराणि छिद्यन्ते यमकिङ्करैः ।
नन्दिकेश्वरः — कलिङ्गदेशे राजाऽभूच्चन्द्राङ्गो नाम वीर्यवान् ॥ ३
वीरबाहुरुनामास्य जज्ञे पुत्रो महारथः । तस्मिन्निधाय वै भारं राज्यस्य पृथिवीपतिः ॥
तोषयित्वाशु तपसा ब्रह्माणं परमेष्ठिनम् । ब्रह्मलोकं जगामाशु पुनरावृत्तिदुर्लभम् ॥
तस्मिञ्छासति तत्पुत्रे दानधर्मरतेऽवनीम् । यज्ञेश्वराभिधः कश्चित्कदाचिद् ब्राह्मणः स्वयम् ॥
गच्छन् सकाशं वै राज्ञो दानार्थी श्रुतिपारगः । उपायनार्थं जग्राह मालामेकां शिवालयात् ॥
सोमेश्वराभिधेशाननिलयात्कुसुमोज्ज्वलाम् । तामिमर्पयिस्रजं राज्ञः कण्ठे निक्षिप्य साशिषम् ॥

प्रतिगृह्य जगामासाद्दानं यज्ञेश्वरो द्विजः । तया स्रजाऽस्य देवस्य स्वर्णयज्ञोपवीतकम् ॥ ९
अज्ञात्वा पूजकैस्त्यक्तं गृहीतं तेन च स्रजा । राज्ञः कण्ठे च निक्षिप्तं पश्चादन्वेषितं च तैः ॥ १०
यज्ञेश्वरोऽपि वै पृष्टः स्वर्णयज्ञोपवीतकम् । इयं राज्ञो मया क्षिप्ता स्रजा कण्ठे स पृच्छ्यताम् ॥ ११
ते त्वमेवेति तं प्राहुस्त्वन्तु यूयमिति ब्रुवन् । जगाम भवनं तूष्णीं राज्ञः क्रोधबलेन सः ॥ १२
शिवाधिकारिणोऽभ्येत्य तमपृच्छन्नृपं स्रजा । यज्ञोपवीतमानीतं सौवर्णं ब्राह्मणेन ते ॥ १३
दीयतां नृपशार्दूल सोमेशस्य मनोहरम् । पृष्टेऽपि तूष्णीमास्तेऽसौ राजा मौर्ख्येन (तेजसा) चेतसा ॥ १४
तदानीं तस्य च गुरुरामर्दनगिरेर्गुरोः । वंश्यः कारणनामासौ शिवद्विजकुलोद्भवः ॥ १५
यज्ञोपवीतं देवस्य सौवर्णं दीयतां पुनः । महतोऽपि शिवद्रव्यं मूलं दोषस्य हि श्रुतम् ॥ १६
कामरूपे पुरा देशे राज्ञः पुत्रो बहुशिशुः । खेलञ्छिवालये बाल्ये दृष्टवान् पणमेककम् ॥ १७
ददौ हस्ते पितुस्तञ्च त्वरयैत्य गृहान्तरम् । उक्तवान् पणमेकञ्च दृष्टोऽयं खेलता मया ॥ १८
शिवालये क्वचित्तात पणं रक्ष ममार्जितम् । तदानीं तमनुप्राप्य पृष्टवन्तश्शिवाश्रिताः ॥ १९
शिवालयस्थितं वस्तु शिवस्यैव प्रदीयताम् । इति पृष्टोऽपि राजा तन्नैच्छद्दातुं सुतार्जितम् ॥ २०
परिपूर्णस्य देवस्य शिवस्य किमनेन वै । इति संप्रेक्ष्य तान् सर्वान् पणं कोशे न्यवेशयत् ॥ २१
तस्यामेव तु वै रात्र्यां दग्धं राज्ञो गृहं महत् । द्रव्यञ्च चोरितं चोरैरन्तरा नृपतिर्मृतः ॥ २२
भयेन नृपपुत्रं तं सामन्तोऽभ्येत्य चाच्छिनत् । इहैव राजा पुत्रोऽपि शिवद्रव्यापहारतः ॥ २३
निहतौ नरकेऽद्यापि पीड्यते इति शुश्रुम । पुराणश्रवणे काले पुराणज्ञेन भाषितम् ॥ २४
तदीशस्योपवीतं तत्सौवर्णं देहि पार्थिव । उक्तोऽपि गुरुणा राजा तूष्णीमास्ते विशंकितः ॥ २५
पुरोधसे मन्त्रिणे च प्रोचुस्तांश्चाधिकारिणः । उदासीनावभूतां तौ तस्मिन् काले विधेर्बलात् ॥ २६
पुनः पुनस्ते पृच्छन्तः शिवभक्तेऽधिकृतो यथा । अन्यायज्ञोपवीतञ्च सौवर्णं परमेशितुः ॥ २७
आनर्चुरीश्वरं देवं यथापूर्वं शिवद्विजाः । यज्ञेश्वराभिधो विप्रो यातो नष्टदरिद्रताम् ॥ २८
कालेन च मृतो मन्त्री पुरोधाश्च हतः क्षणात् । मृतोऽन्ते सोऽपि वै राजा दुष्कर्मा समजायत ॥ २९
तेनैव कुष्ठरोग्यासौ राजा स (विट्) क्रिमिणा हतः । तानेतानिरयेष्वेवं चतुरो यमकिङ्कराः ॥ ३०
दुष्पाकस्य कालपाकेन निष्ठुरत्वाद्धि वै मुने । तस्मात्पापभयात्सर्वे निरयेषु निपातिताः ॥ ३१
निस्तीर्णनरका नैते कदाचिदपि वै मुने । [illegible]पिता पुण्यैर्ब्रह्मलोकं गतः पुरा ॥ ३२
सोऽपि पापेन पुत्रस्य नरकेषु निपातितः । श्रुत्वैतदखिलं योगी शतानन्दो महातपाः ॥ ३३
भीतभीतस्तदा प्रष्टुमास्ते सांब स्मरन् हृदा । पुनश्च तमुवाचेदं नन्दी शङ्करवल्लभः ॥ ३४
एतेषां नरकाभ्यासे ये पच्यन्तेऽतिपापिनः । तेषां चरित्रं वक्ष्यामि शृणुष्वैकमना द्विजः ॥ ३५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चपञ्चाशोऽध्यायः ॥

---

॥ अथ षट्पञ्चाशोऽध्यायः ॥

शिवपूजक द्रव्यापहारात् दुर्गतिप्राप्तिः ॥

सूतः — अतः परं प्रवक्ष्यामि गुरुद्रव्यापहारिणः । यां गतिं प्राप्नुवन्त्येते तां कथां शृणु सांप्रतम् ॥ १
नन्दीश्वरः पुनः प्राह शतानन्दं तदा मुनिम् । स्वयंतोलाय समिधे महाविष्णोर्दिशायुगः ॥ २

शतानन्द महाप्राज्ञ गुरुद्रव्यापहारिणः । एतेषां नरकाभ्याशे पतन्ते कालमक्षयम् ॥ ३
गौडदेशे महीभागे पुरी गौडीति विश्रुता । वज्रपालाभिधस्तत्र सार्थवाहो वणिक्पतिः ॥ ४
पुण्यवानतिसंपन्नस्सूर्यपूजापरायणः । प्रत्यहं पूजनं कुर्वन् कृत्वा वेदिं मृदा शुभाम् ॥ ५
नमस्करोति देवाय सविशेऽभ्यर्च्य सूनकैः । मृदाकृतां समुद्धृत्य वेदिं पूर्वस्थितां पुनः ॥ ६
इष्टकाभिस्सनिर्मातुमियेष वणिगादरात् । तत्पुरेऽन्विष्यता तेन कुत्रापि वणिजेष्टकाः ॥ ७
लेभिरे नैव सर्वत्र यताश्चतिशयोऽथ सः । तत्र गौडेश्वरस्यैव पूजकस्य महात्मनः ॥ ८
तद्गौडगिरिसन्तानसमुद्भूतस्य वै तदा । तत्पुरुषाख्यस्य गुरोर्मठे शैवद्विजस्य वै ॥ ९
देवपूजालयं कर्तुं तेन संपादितेष्टकाः । श्रुत्वा प्रसन्नो वैश्यः पप्रच्छ पुरुषेण ताः ॥ १०
यदा नैच्छत्स वै दातुं पणाश्च प्रेषिताः पुनः । ततोऽपि नैच्छत्सगुरुर्वणिक्त प्राप्य पृष्टवान् ॥ ११
प्रत्याख्यातः पुनस्सोऽपि शोचन् स्वगृहमाययौ । प्रत्याख्यातः स्वयं प्राप्तोऽप्यहमित्यन्वचिन्तयत् ॥ १२
एतस्मिन् समये राज्ञो वैद्यस्सौभरिराख्यया । वैश्यस्य निकटं प्राप सुहृत्तस्य क्रियापरः ॥ १३
पणार्थी तेन स वणिक्प्रोवाच बहुधा शुचन् । इष्टकाः प्रार्थिता विद्वन् गुरोस्तत्पुरुषाभिधात् ॥ १४
न लब्धाश्च ततो मानो भग्नो मे भिषगुत्तम । तेन खेदपरः प्रातः कुत्राप्येवमभूधमे ॥ १५
स वैद्यस्तमाश्वास्य स्वयं यातोऽन्तिकं गुरोः । तमिष्टकास्ताः पप्रच्छ वणिगर्थे भिषक्पतिः ॥ १६
प्रत्याख्यातस्सतेनापि मत्सरग्रस्तमानसः । आश्वास्य वणिजं वैद्य श्व प्रातः पश्य मे बलम् ॥ १७
सर्वास्ता नाशयाम्येव व्यर्थमेव गुरोर्गृहात् । प्रतिज्ञायगतो वैद्यः परश्वो राजवेश्मनि ॥ १८
गजस्य गद उत्पन्नो महाराजप्रियस्य वै । आहूय हस्तिपं वैद्यो हस्ती रोगेण पीड्यते ॥ १९
विनश्यति न सन्देहश्चिकित्सा न कृता यदि । वचसा मम सद्यस्त्वमिष्टकास्समुपानय ॥ २०
चूर्णैस्तासां तथान्यैश्च मिश्रितैरौषधान्तरैः । कृतैस्तु पोट्टलैर्हस्ती मुक्तरोगो न चान्यथा ॥ २१
इष्टकाश्च गुरोर्गेहे पुरुषाख्यस्य सन्ति वै । अद्यैवानय राज्ञा त्व सद्यो हस्ती सुखी भवेत् ॥ २२
इति तस्य वच श्रुत्वा हस्तिपो मनुजैस्सह । गुरोर्गृहादिष्टकास्ता नीत्वा चूर्णान्यकारयत् ॥ २३
वैद्योऽपि चान्यैर्यैः कश्चित्तच्चूर्णैरपि तत्क्षणम् । अचिकित्सद्गजं राज्ञां सद्य एव ममार सः ॥ २४
प्रात काले गजं राज्ञे मृतं प्रोवाच हस्तिप । चिकित्सितश्च बहुधा राज्ञा सौभरिणा नृप ॥ २५
श्रुत्वा राजा गजं नष्टं विषसादातिखिन्नधीः । प्रातस्तत्पुरुषोऽभ्येत्य चुक्रोशास्मै हृतेष्टकः ॥ २६
पूर्वेद्यु पृष्टवान्वैश्यस्सोऽपि मां सौभरिर्भिषक् । मया संपादिता देवगृहार्थं ता नृपोत्तम ॥ २७
न दत्त मत्सरेणैव तेन सर्वा विनाशिताः । श्रुतवृत्तान्त इत्येव राजा सम्यग्विचार्य सः ॥ २८
घातवान् स शिवद्रोहकारणेन हतो गजः । ततो हस्तिपतिं क्रुद्धश्शिरश्छेदमकारयत् ॥ २९
तदीयाश्चापि पुरुषान्राजा तत्पापशान्तये । वैद्यमाहूय सर्वस्वमादायास्य तदा रुषा ॥ ३०
चिच्छेद च शिरस्तस्य सद्य एव नृपोत्तम । पृष्टवान्वैद्यमाहूय किं कृतं भवतेत्ययम् ॥ ३१
सौभरिः प्राह महता प्रयत्नेन चिकित्सितः । तथापि नैव शान्तोऽस्य गदस्सद्यो हतो गजः ॥ ३२
तमाह नृपशार्दूलस्त्वं गुरुद्रोहमाचरः । इष्टकापहृता तेन पञ्चत्वमगमद्गजः ॥ ३३
त्वाञ्चाद्य सूदयिष्यामीत्येव वदति भूभुजि । मन्त्री तमाह नृपतिं भवान् पूर्वं गदार्दितः ॥ ३४
तदाश्विनौ समभ्येत्य चिकित्सां चक्रतुस्तत्र । ताभ्यां पुनश्चाभिहितं जिगमिषुभ्यां दिवं प्रति ॥ ३५
इमञ्च सौभरिं प्रेक्ष्य विषये तव भूपते । येषां व्याधिसमुत्पत्तिस्तेषामावामिमं द्विजम् ॥ ३६
अधिष्ठाप चिकित्साय एवमुक्त्वा दिवं गतौ । अनेन कारणेनैव नैव शास्यो भिषग्वरः ॥ ३७

अनेनच कृता यत्र चिकित्सा व्याधिते जने । तत्र कोऽपि मृतो नैव गजमेक विना नृप ॥ ३८
निगृहीतो यदि ह्येषस्तदा कोवा चिकित्सक । इति मन्त्रिवच श्रुत्वा पुन प्राह नृपश्च तम् ॥ ३९
यद्यसौ निगृहीतस्स्यादीश्वरोऽस्ति चिकित्सक । स एव प्रथमो वैद्यो भिषगित्येव हि श्रुति ॥ ४०
त्वमेवैन दुरात्मान मन्त्रिञ्छिक्षय माचिरम् । अविचार्य शिवद्रोही मन्त्रिणा शिक्षितो भिषक् ॥ ४१
इष्टकाभिस्ततो राजा सौवर्णाभिर्गुरो पदे । समाभ्य प्रार्थयामास क्षमस्वागो ममाधुना ॥ ४२
प्रणनाम गुरु भक्त्या राजा प्रीतस्तदा गुरु । राजानुत्तिष्ठचोत्तिष्ठेत्येव वादिनि वै गुरौ ॥ ४३
पुष्पवृष्टिरभूत्तत्र देवदुन्दुभिनिस्स्वनै । तदैस्य महाविष्णू तमूचतुर्नृपसत्तमम् ॥ ४४
भवान्तोतिपरो राजाव्नावाभ्यामिष्टमर्थय । ततस्तौ प्रार्थयद्राजा नेष्टो मेऽन्यो वर प्रभू ॥ ४५
मम देशे गदो मास्तु जनेष्वपि कदाचन । अयमेव वरो मह्यमस्त्वेवमिति चोचतु ॥ ४६
अन्तर्हितौच तौ देवौ राजानुज्ञाप्य वै गुरुम् । चकार राज्य धर्मेण बहुकालमतन्द्रित ॥ ४७
सराज्यस्यापि तस्यैव सुभिक्षो विषयोऽभवत् । यैरिष्टकाहृता पापैस्ते सर्वे निरय गता ॥ ४८
भाव्यन्तेऽद्यापि ते सर्वे तेषा नैवतु निष्कृति । पूर्वोक्तनिरयाणाञ्च निकटे श्रूयते एव ॥ ४९
वदेतेषामिति प्राह शतानन्द शिलादज । श्रुत्वा शिलादजात्सर्व शतानन्दो भयार्दित ॥
तदानीमभवत्तूष्णीं पुनश्शम्भुमचिन्तयत् ॥ ५०

इति श्री स्कान्दे महापुराणे शकरसहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्पञ्चाशोऽध्याय ॥

---

॥ अथ सप्तपञ्चाशोऽध्याय ॥

शिवभक्तस्य मह्मापद्वारात् दुर्गति प्राप्ति ॥ ,

शिवभक्तधन हृत्वा दूषयित्वा च तान्पुन । तद्दोषान्नरके घोरे पतितानां दुरात्मनाम् ॥ १
कथा प्रवक्ष्ये विप्रेन्द्राश्शृणुध्वमवधानत । सिन्धुदेशाधिप कश्चित्करनामा महिपति । २
लालानन्दपुर शास्ति सर्वरत्नविचित्रितम् । उपास्य स महाराजश्शाक्त नृसिंहमनन्तकम् ॥ ३
लब्धवान्वज्रमतुल सर्वशत्रुनिबर्हणम् । जित्वारातींस्ततस्सर्वान्साम्राज्य चक्रे भय विना ॥ ४
तदा जितेषु रिपुषु मधुनामा महीपति । असुरेन्द्र महासत्वमुपास्य चिरकालत ॥ ५
मेलयित्वाऽसुरान् काश्चिन्महाबलपराक्रमान् । रुरोध चास्य नगर महासाल महाधनम् ॥ ६
तदात्यन्तमवापाथ विचार करभूपति । विजयाख्यो वसत्यस्य निकटे भटपुङ्गव ॥ ७
सतु प्राप्य कर भूपमब्रवीद्वचन तदा । मास्तु भीतिर्महाराज विजये मयि तिष्ठति ॥ ८
उपास्यते मया नित्य नृसिंहस्सर्वशत्रुहा । तत्प्रसादान्ममाग्रक स्यातु शक्नोति मानव ॥ ९
इत्युक्त्वा निर्ययौ शीघ्र योद्धुमेन महाबलम् । सस्मार नारसिंहञ्च सर्वशत्रुनिबर्हणम् ॥ १०
आविरासीत्सभगवान्नारायेण समर्चित । क्षणात्तानसुरान् सर्वांश्चखाद घननिस्स्वन ॥ ११
मधुञ्च त महासत्व बुभुजे स हरिस्तदा । एव हत्वा रिपून् सर्वान् क्षणादन्तरधीयत ॥ १२
दृष्ट्वैतदद्भुत राजा विजय स्वभट कर । पूजयामास नितरा देवबुध्या तदादित ॥ १३
तस्याग्रजश्शारनामा चक्रे दौष्ट्य तदा भृशम् । सोऽन्य कस्मिन्दिने चेड्यागमने लालसस्तराम् ॥ १४
तद्ग्रामवासी धर्माख्यशूद्रो यस्य रत्नसदा । भस्मरुद्राक्षसंपन्नस्तस्यां सत्तोऽयमण्पदो ॥ १५

धर्मस्य वस्त्रं वेश्यायां ज्ञात्वा वेश्यास्तमप्ययम् । स्वयं धृत्वा ययौ तूर्णीं दुष्टश्शूरो यतस्तराम् ॥ १६
न ददौ प्रार्थितस्तेन बहुधापि दुरात्मवान् । प्राहैतद्विजयस्यायं शूरश्चेषाञ्च तत्पितुः ॥ १७
सोऽप्युपेक्षां चकारायं विजयो मूढचेतनः । तदा कोपाकुलो धर्मो भूतिरुद्राक्षधारकः ॥ १८
राजानं करनामानं प्राप्यैतच्च जगाद ह । ध्रियते च मया नित्यं भस्म सर्वाघनाशनम् ॥ १९
रुद्राक्षाणि च भूरीणि ध्रियन्तेऽहर्निशं मया । तन्मदीयं भवान् भूप वस्त्रं शूरहृतं कृतिन् ॥ २०
आदाय दातुं पुण्यात्मञ्छिवभक्तो यतोऽर्हति । शिवभक्तधनं केन चापहर्तुञ्च शक्यते ॥ २१
तस्य तद्वचनं श्रुत्वा तथेत्युक्त्वा महीपतिः । विजयं तं तदाहूय राजा प्राह वचः कटु ॥ २२
शिवभक्तस्य वसनं पुत्रेण हृतमात्मनः । दापयैतन्महामूढ नोपेक्षां कर्तुमर्हसि ॥ २३
इति राज्ञो वचः श्रुत्वा नृपं प्राह पुनर्वचः । शिवभक्तो नचैवायं दासीगन्ता निरन्तरम् ॥ २४
कथं वा भस्मरुद्राक्षधारणेन शिवप्रियः । क्वास्य भक्तिर्महेशे शङ्करे सकलात्मनाम् ॥ २५
इति तस्य वचः श्रुत्वा नृपः प्राह पुनर्वचः । न पूज्यते शिला किं वा लिङ्गभावेन कल्पिता ॥ २६
न नमस्क्रियते सर्वैर्विद्वद्भिर्देवतैरपि । तद्वद्विभूतिरुद्राक्षधारणेनैव केवलम् ॥ २७
पूज्यते मनुजैस्सर्वैः कायवाङ्मनसैरपि । योवा कोवा नरस्तस्मान्मुक्त्वा जल्पसमीदृशम् ॥ २८
प्रयच्छ वस्त्रमादाय पुत्रहस्तात्त्वमधुना । इति कोपाकुलो राजा तमाह वचनं कटु ॥ २९
पुनश्च प्राह वचनं धिक्कृत्यैनं दुराशयम् । त्वमेव त्वत्सुतं दुष्टं भर्त्सयन् कटुवाक्यैः ॥ ३०
न दापयासि मूढात्मन् ज्ञातवानहमन्यतः । न दापयसि तस्मात्त्वं गच्छ गच्छ ममान्तिकात् ॥ ३१
इत्युक्त्वा प्रेषयित्वैनं भर्त्सयन्वचनैर्नृपः । तत्सुतं शूरनामानमाहूय क्रोधविह्वलः ॥ ३२
त्वया दुरात्मन् वसनं शिवभक्तस्य वै हृतम् । शिवद्रोही ततस्त्वं तु वध्य एवाविचारतः ॥ ३३
अविचार्यं शिवद्रोही वध्य इत्युच्यते बुधैः । इत्युक्त्वा स्वस्य पुरतश्शशासैनं महीपतिः ॥ ३४
अन्यथा तु शिवद्रोहो मम चेति विचारयन् । तत् दृष्ट्वा तत्पिता दुःखाद्विजयः कोपितान्तरः ॥ ३५
धर्मं नृपान्तिकासीनमथमस्य दुरात्मवान् । निर्ययौ स्वगृहं वाक्यैर्दूषयन्पौरुषैरमुम् ॥ ३६
तच्छ्रुत्वा स महीपालः कोपाकुलितमानसः । पुत्रं ज्ञात्वा शिवद्रोहनिरतं दुष्टचेतसम् ॥ ३७
वाग्दूषणं करोत्येष महापापी दुराशयः । पुरतश्शिवभक्तस्य ममेदानीं भयं विना ॥ ३८
तस्माद्वध्यश्च पापिष्ठो वध्य एवाऽविचारतः । विचार्य मनसा चैवमानयामास तं गृहात् ॥ ३९
अवरुध्य गृहं तस्य महाधनमनुत्तमम् । ततस्समागतस्सोऽयं कोपेन महता युतः ॥ ४०
राज्ञो निकटमागत्य नृसिंहं मनसा स्मरन् । तदाविरासीत्सहसा नृसिंहः कोपविह्वलः ॥ ४१
महाक्ष्वेलरवैरुग्रैर्बधिरीकृतदिङ्मुखः । तमेव भर्त्सयन् पापं विजयं दुष्टमानसम् ॥ ४२
निन्दयामासिथ यतश्शिवभक्तं शिवप्रियम् । तस्मात्त्वामधुना पापिन् हनिष्यामि न संशयः ॥ ४३
इत्युक्त्वा तं गृहीत्वाशु पाणिभ्यां स हरिस्तदा । नृपस्य पुरतः स्थाप्य चोत्पाट्यैनममारयत् ॥ ४४
ततः प्राह नृपं वीक्ष्य नारसिंहो महाबलः । शिवद्रोहं विना राज्यं निष्कण्टकमरिन्दम ॥ ४५
शाधि त्वमाचरन्धर्मं मार्गेण शासयन्द्रोहिणस्तथा । यदा मां स्मरसि क्षिप्रमात्तदागत्य तवान्तिकम् ॥ ४६
संहरिष्यामि शत्रूंस्ते दास्यामि च तवेप्सितम् । निहतश्शङ्करद्रोही मया भक्तोऽपि मामकः ॥ ४७
पालयञ्छिवभक्तांश्च सुखेन वस भूपते । इत्युक्त्वान्तर्दधे शीघ्रं नृसिंहस्तत्र भूसुराः ॥ ४८
ततः स्वभवनं प्राप्य राजा तुष्ट्या समन्वितः । धर्मं तं बहुभिर्वस्त्रैः प्रीणयित्वा धनैरपि ॥ ४९
प्रेषयामास पुण्यात्मा दत्वा वस्त्रं तदीयकम् । तेन दोषेण विजयं शूरं तत्सुतमप्यहो ॥ ५०

नरकेऽस्मिन्महाघोरे पीडयन्त्यधुना भटाः । श्रुत्वाऽस्य चरितं घोरं शतानन्दो महामुनिः ॥ ५१
पुनरस्मिन्महाघोरे पीडितान् पापकर्मिणः । पप्रच्छ नन्दिनं साक्षात्सर्वेशं करुणाकरम् ॥ ५२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तपञ्चाशोऽध्यायः ॥

---

॥ अथ अष्टपञ्चाशोऽध्यायः ॥

शिवनिन्दकादीनां नरक प्राप्तिः ॥

अतः परं प्रवक्ष्यामि शिवनिन्दारतात्मनाम् । भस्मनिन्दापराणाञ्च गुरुनिन्दारतात्मनाम् ॥ १
रुद्राक्षनिन्दकानाञ्च रुद्रभक्तापकारिणाम् । तेषां वक्ष्याम्यहं घोरनरकेष्वपि यातनाम् ॥ २
शृण्वन्तु परिहाराय मुनयस्संशितव्रताः । ओनकाख्ये महादेशे पुरमस्ति तदाख्यया ॥ ३
ओनकाख्यं पुरं तत्र राजा परमधार्मिकः । कलाधर इति ख्यातः कलाधर इवापरः ॥ ४
विद्वद्भिर्ब्राह्मणश्रेष्ठैस्सह कालं नयन्नसौ । धर्मेण पालयामास पृथिवीं पृथिवीपतिः ॥ ५
तस्मिन् कदाचिदास्थानमण्टपस्थो महात्मभिः । कविभिः पण्डितैस्सिद्धैर्योगिभिर्यतिभिश्च वै ॥ ६
कथाप्रसङ्गे संवृत्ते चान्योन्यस्य द्विजन्मनाम् । तत्र कश्चित्पाशुपतभारत्याख्यो यतीश्वरः ॥ ७
राजानं वीक्ष्य हृष्टात्मा कलाधरमभाषत । शृणु राजन् परं श्रेयश्श्रेयसां सकलात्मनाम् ॥ ८
शिव एव सदोपास्यो ज्ञेयो ध्येयश्च मुक्तये । स एव हि परं ब्रह्म तत्त्वञ्च परमं नृप ॥ ९
परञ्ज्योतिः परन्धाम शिव एव परायणम् । कारणं कारणानाञ्च दैवतानाञ्च दैवतम् ॥ १०
प्रणमन्तीह ये देवं ते कृतार्था नचेतरे । तेषामेव परा मुक्तिर्भोगस्तेषां महात्मनाम् ॥ ११
अष्टैश्वर्यप्रसिद्धिश्च सार्वभौमत्वमद्भुतम् । स्वर्गाधिपत्यं ब्रह्मत्वं विष्णुत्वं चापि भूपते ॥ १२
तदानीमपरो वासुदेवभारतिराख्यया । असहिष्णुश्शिवाधिक्यं महाराजानमाह्वयत् ॥ १३
शिवोऽसौ तामसो रुद्रश्चर्मास्थिशवभस्मधृत् । श्मशाननिलयोऽत्यर्थं भूतप्रमथसंवृतः ॥ १४
सदा भोगरतो लोके स तु किं ब्रह्म भूपते । भुजङ्गाभरणोऽत्यर्थं भोगमोक्षप्रदस्स किम् ॥ १५
इति निन्दापरे वासुदेवभारति मुण्डिनि । कर्णौ पिधाय वै पाशुपतभारतियोगिराट् ॥ १६
अज्ञात्वा शिवमाहात्म्यमुक्तमेतेन भिक्षुणा । तत्तत्संहारनष्टानां विष्णूनां ब्रह्मणामपि ॥ १७
तेषामस्थीनि भस्मानि कपालानि महेश्वरः । भविष्यद्वर्तमानानां स्वाक्षय्यत्वं प्रबोधयन् ॥ १८
अनित्यत्वञ्च वै तेषां धत्तेमुग्धेन्दुशेखरः । शवानां शयनं प्रोक्तं श्मशानमिति सूरिभिः ॥ १९
सर्वेषाञ्च सर्वसंहारे श्मशानं परिकीर्तितम् । तत्रैक एव वै रुद्रो नृत्यत्यंबिकया सह ॥ २०
अतः श्मशाननिलयः प्रोक्तस्संहारकृद्विभुः । अज्ञात्वा शिवमाहात्म्यं लोको याति पराभवम् ॥ २१
इत्युक्त्वा पुनराहेदं शिवभक्तो यतीश्वरः । भवाञ्छापहतः पूर्वं ब्रह्मणो नात्र संशयः ॥ २२
एकदण्डात्रिदण्डाश्च ये च भक्ता हरे तव । ते वै पाषण्डिनस्सन्तु दर्शनात्पातकप्रदाः ॥ २३
तस्य त्वं प्रथमं पात्रं शापस्य परिमोहितः । कथ्यसे त्वमपव त्वं भस्मरुद्राक्षवर्जितः ॥ २४
त्वया संभाषणे दोषो महानस्ति न संशयः । पुरा दक्षेण संभाष्य देवाश्च ऋषयोऽमलाः ॥ २५
ज्ञानादिशवरुद्रहरस्यो दण्डिताश्च महैनसः । यस्य फाले न भस्मास्ति नास्ति रुद्राक्षमालिका ॥ २६

तं ब्राह्मणमपि प्राज्ञो वर्जयेच्छ्वपचं यथा । तस्मात्त्वद्दर्शने दोषो महान् संभाषणेऽपि च ॥ २७
तदानीमत्र सदसि ब्राह्मणो ब्रह्मकेसरी । संवीक्ष्य तं पाशुपतभारतिं प्राह मोहितः ॥ २८
किं भस्मनाधृतेन स्याद्रुद्राक्षतरुसंभवैः । बीजैर्धृतैर्विमुक्तिस्स्याद्विनाज्ञानं बुधेरितम् ॥ २९
लिप्तेन भस्मना किं स्याद्धृतैर्बीजैस्तरूद्भवैः । एतादृशानि वाक्यानि राजस्थाने वदेश्च किम् ॥ ३०
तच्चाह योगी पाशुपतभारतिर्यतिसत्तमः । वेदागमपुराणानि श्रुतानि ब्रह्मबन्धुना ॥ ३१
नैव ते नैवमुक्तानि ज्ञानिनोऽज्ञानिनोऽपि वा । पापिष्ठस्यापि वै मुक्तिर्भस्मरुद्राक्षधारिणः ॥ ३२
इति सर्वत्र वेदेषु पुराणेष्वागमेष्वपि । बहुधाभ्यस्यते लोके सर्वैरपि महात्मभिः ॥ ३३
तापसैश्च धृतं भस्म तथा रुद्राक्षमालिका । शिवेन सदृशा लोके भस्मरुद्राक्षधारिणः ॥ ३४
पापिष्ठा अपि ते पूतास्तदन्ये पापिनः स्मृताः । एवमुक्तेऽपि वै ब्रह्मकेसरी ब्राह्मणाधमः ॥ ३५
पुनरेव कुतर्कोक्तिं प्रोवाच सदसीदृशीम् । ततो दृष्ट्वा पाशुपतभारतिर्भूपतिं तदा ॥ ३६
महात्मभिः कृते शास्त्रप्रसङ्गे पृथिवीपते । एताभ्यां तु कुतर्कोक्तिरुच्यते तव सन्निधौ ॥ ३७
तमाह तस्य वै शिष्यस्त्वं सन्यासी गुरोऽधुना । किं फलं कलहेनात्र गच्छावावामितोऽधुना ॥ ३८
उक्ते पुनः पाशुपतभारतिश्शिष्यमब्रवीत् । शिवद्रोहितमावेतौ द्वेषेणाभ्यां च नः किमु ॥ ३९
हानिः केति तदा प्राह शिष्यः किं चात्र नः फलम् । गच्छतां नरकं स्वर्गं गच्छावावां प्रभोऽधुना ॥ ४०
वदन्तमेवं सन्यासी सोऽन्योऽपि शिवसंमतः । अधुनैवञ्च कथिते ह्येवमार्यां नृपाङ्गणे ॥ ४१
उचितं नैव गमनमुत्तरादुत्तरं ब्रुवे । इत्युक्ते सति वै शिष्यो दुरात्मातीव कोपनः ॥ ४२
भगवन्नत्र तिष्ठ त्वं गच्छामीति विनिर्गतः । तं ब्रह्मकेसरी प्राह शिष्येणैव तवोत्तरम् ॥ ४३
दत्तं विनिर्गतश्चैव तव को मार्गदर्शकः । नेत्रे गते मतिश्चापि गता तव यतीश्वर ॥ ४४
तदानीं तत्र परमशान्ताख्यो ब्राह्मणोत्तमः । शिष्योऽहमस्य तिष्ठामि दर्शयिष्यामि पद्धतिम् ॥ ४५
दुरात्मा गच्छतु शिवद्रोही शिष्यो न चास्य सः । अहं शिष्योऽस्मि ते ब्रह्मंस्त्वं वै साक्षाच्छिवः स्मृतः ॥ ४६
शुश्रूषां ते करिष्यामि प्रत्यहं ज्ञानचक्षुषः । अधीतवेदशास्त्रोऽहं भस्मरुद्राक्षधार्यहम् ॥ ४७
योग्योऽस्मि तव शिष्यत्वे परिगृह्णातु मां भवान् । इत्यन्तिकस्थं पाशुपतभारतिर्ब्राह्मणं तदा ॥ ४८
कराभ्यां च स्पृशन्नङ्गं जग्राह च करं तदा । शिवभक्तस्य पुत्रस्त्वं शिवभक्तो विशेषतः ॥ ४९
इति शंसति तं तत्र यतीशेऽत्रान्तरे द्विजाः । भद्राख्यः प्राह सन्यासी न त्वं जानास्यमुं शृणु ॥ ५०
वेदपापतिरसौ विप्रो बालकोऽसि यतीश्वर । त्वमित्युक्ते पुनश्चाह भूतिरुद्राक्षधारिणः ॥ ५१
शुद्धास्सर्वत्र पूतास्ते तेषां दोषो न विद्यते । शिवभक्तस्य वै निन्दा त्वयात्र क्रियते द्विज ॥ ५२
राजानं प्रेक्ष्य पाशुपतभारतिः प्राह तं तदा । शिवनिन्दापरं वासुदेवभारतिमद्य वै ॥ ५३
ब्रह्मकेसरिणं भस्मरुद्राक्षाणां च निन्दकम् । शिष्यं मम गुरुद्रोहरतं वसुसमाह्वयम् ॥ ५४
निन्दकं शिवभक्तस्य भद्राख्यं नृपसत्तम । शिक्षयाशु महीपाल चतुरस्त्वं न चेदहम् ॥ ५५
शिक्षामि किं वदेदानीमिति वादिनि योगिनि । अब्रवीच्च महीपालः प्रज्ञाचक्षुषमानमन् ॥ ५६
स्वमहिम्नाद्य वै स्वामिन् लब्धचक्षुः क्षणेन वै । शिक्षयैतानिति क्षिप्रं सर्वं पश्यामहे वयम् ॥ ५७
उक्ते क्षणे पाशुपतभारतिश्शिवपद्मभः । स्वमहिम्ना लब्धचक्षुः कोपेन महता वृतः ॥ ५८
मयैतेषां चतुर्णां तु मूर्धस्वशनयः क्षणात् । पतन्तु पश्यतो राज्ञः पुरस्तादशपद्यती ॥ ५९
हतास्तेऽशनिपातेन चत्वारोऽपि क्षणेन वै । पुनश्चाह स सन्यासी राजानं भीतमास्थितम् ॥ ६०

भवताऽङ्गीकृता राजन् शिवद्रोहपरा जनाः । यतस्ते मद्गिरा नैव शिक्षिताश्च महैनसः ॥ ६१
ततो मम तु शापेन खरो भव नृपाधुना । भीतभीतोऽथ नृपतिः प्रणम्य यतिसत्तमम् ॥ ६२
कृताञ्जलिपुटो मूर्ध्नि व्यजिज्ञपदमुं यतिम् । अज्ञानानुष्ठितं स्वामिन् क्षमस्वागो ममेदृशम् ॥ ६३
प्रणिपातावधिः क्रोधो महतामिति हि श्रुतिः । तमाह क्रोधताम्राक्षः पुनस्संन्यासिपुङ्गवः ॥ ६४
प्रायश्चित्तं श्रुतौ दृष्टं स्मृतावपि महैनसाम् । शिवद्रोहप्रसक्तस्य न कुत्रापि च निष्कृतिः ॥ ६५
मया किमिह कर्तव्यमहङ्ग्वीदृशं तव । भवतो मोचनं नास्ति नृप जन्मनि जन्मनि ॥ ६६
इत्युक्त्वा निर्जगामाशु तदा पाशुपतो यतिः । तथैव तस्य शापेन राजा पापेन तेन वै ॥ ६७
गार्दभीं योनिमापन्नश्चत्वारोऽशनिना हताः । महारमसु कृताह्वेनो नैव जीर्यंति कुत्रचित् ॥ ६८
यमदूतैश्च ते भूयश्चत्वारोऽशनिना हताः । अष्टाविंशति कोटीषु नरकेषु निपातिताः ॥ ६९
अधोमुखोर्ध्वपादास्ते बाध्यन्ते दण्डपाणिभिः । श्रोत्राक्षिनासिकास्येषु चरद्भिः क्रिमिणां कुलैः ॥ ७०
सततं तुद्यमानाश्च निरुद्धवासा निरन्तरम् । पारं न दृश्यते तेषां कल्पकोटिशतेष्वपि ॥ ७१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टपञ्चाशोऽध्यायः ॥

---

## ॥ अथ एकोनषष्टितमोऽध्यायः ॥

### देवालयादिषु अशुद्धिकरणेन नरक प्राप्तिः ॥

अतः परं प्रवक्ष्यामि पुनरन्यां कथां द्विजाः । शृणुध्वं श्रद्धया यूयं मन्मुखान्मुनिपुङ्गवाः ॥ १
कलिङ्गेऽस्ति महीभागे कटकाख्यं महापुरम् । तत्र राज्ञः कुमारोऽभूद्विरागो नाम वीर्यवान् ॥ २
सुतश्चो मन्त्रिपुत्रस्तु सुनन्दाख्यः पुरोधसः । मुकुन्दो द्वारपालस्य चत्वारोऽन्योन्यरातयः ॥ ३
सर्वेऽपि समकाल ते सर्वविद्यासु शिक्षिताः । स्वकर्मनिरता नित्यं दानधर्मकृतोद्यमाः ॥ ४
तीर्थयात्रामतिस्तेषां कदाचिदुदभूत् द्विजाः । पितृभिश्च कृतानुज्ञास्संगृह्य च धनं बहु ॥ ५
कटकादन्तिके ग्रामं प्रापुस्ते सुपुराभिधम् । तत्रेश्वरालये शंभोस्सुरेश्वरमहेशितुः ॥ ६
तां रात्रिं वस्तुकामास्ते समालोक्य परस्परम् । तां रात्रिं न्यवसद्राजकुमारो मन्त्रिनन्दनः ॥ ७
भिक्षागिरेर्मण्ठेवासं चकार शिवयोगिनः । पुरोहितसुतश्चापि सुनन्दोऽपि मुदान्वितः ॥ ८
विबुधाख्यस्य भक्तस्य शिवस्य न्यवसद्गृहे । द्वाःस्थपुत्रस्तदारामे निवासमकरोत्स्वयम् ॥ ९
भुक्त्वा ब्राह्मणगेहेषु नीत्वा ताञ्च निशां पुनः । अन्येद्युरपरग्रामं प्रस्थिताः काल्य एव ते ॥ १०
मध्येमार्गं मुनिश्रेष्ठं गौतमं ददृशुश्च ते । चत्वारोऽपि च तं दृष्ट्वा प्रणम्य विनयान्विताः ॥ ११
न्यवेदयन्निजवृत्तान्तं तीर्थयात्राकृतं तथा । तानालोक्य मुनिः प्राह न युष्माकं फलिष्यति ॥ १२
तीर्थयात्रा यतो यूयमद्य क्षीणायुषो भृशम् । अज्ञात्वापि शिवद्रोहो युष्माभिर्विहितैः कृतः ॥ १३

सापद्मालेऽत्र युष्माकं चतुर्णां पश्यता भुवम् । श्रुत्वाऽपृच्छन् मुनेऽस्माभिः शिवद्रोहोऽत्र कः कृतः ॥ १४
यद् येन कृतं पातमायुर्गौतम हे द्विज । गौतमः — शृणु राजकुमारात्र पूर्वं शुद्धैवमन्दिरे ॥ १५
त्वया निस्सारिताः केशा दूषिता सन्निधिश्च तैः । मन्त्रिपुत्रेणच मठे तांबूलष्ठीवनं कृतम् ॥ १६
पुरोहितसुतेनापि शिवभक्तगृहे कृतम् । गण्डूषं तान्समाक्रान्तं पादेन शिवयोगिना ॥ १७
अघं कृतं शिवारामे द्वाःस्थपुत्रेण मोहतः । उद्यानं दूषितं तेन शिङ्घाणष्ठीवनेनच ॥ १८
समस्तोऽपि कृतं सर्वैः पूर्वमुनिनेरितम् । किमनेनेति जग्मुस्ते नमस्कृत्य मुनीश्वरम् ॥ १९
तस्मिन्नेव क्षणे राजपुत्रस्याभूच्छिरोव्यथा । मन्त्रिपुत्रो गले बद्धो महागुल्मेन गदेन वै ॥ २०
पुरोहितसुतस्यापि रसना गलिता बहिः । द्वाःस्थपुत्रस्य नासाग्रात्पपात रुधिरं बहु ॥ २१
मृतास्सर्वे क्षणेनैव नरकेषु निपातिताः । राजपुत्रस्य शिरसि सीसद्रवमवाकिरन् ॥ २२
खण्डशश्च शिरश्छित्वा सिषिचुश्चाग्निधारया । एवमादिभिरन्यैश्च पीड्यन्ते यमकिङ्करैः ॥ २३
ताम्रद्रवञ्च जिह्वायां तप्तमापूरितं पुनः । गण्डूषणं कृतं येन तस्य दन्तास्समुद्धृताः ॥ २४
नासिकायाञ्च नाराचाश्चान्यस्यापि निपातिताः । एवमादिभिरन्यैश्च यथार्हं यातनाशतैः ॥ २५
पीड्यन्तेस्म सदाकालमहोकष्टं हि दुष्कृतम् । एतेषां पूर्वजाश्चापि पितृमातृपितामहाः ॥ २६
इदानीमपि नैतेषां निष्कृतिर्नरकालयात् । एवमेवमनेकेऽपि सन्तिते पीदृशीं दशाम् ॥ २७
प्रापुरेव न सन्देहः प्रसङ्गेनापि पापिनः । श्रुत्वैतन्नन्दिनस्तस्माच्छतानन्दो मुनीश्वरः ॥ २८
प्रणम्योवाच भो नन्दिन् श्रुत्वैतच्चरितं मम । शरीरं कंपतेऽत्यर्थं मनश्चापि द्रवत्यथ ॥ २९
देवाश्च विष्णुप्रमुखा एवमेतद्वचोचिरे । तानुवाच ततो नन्दी ममाप्येवं तु वः किमु ॥ ३०
एतादृशानां पापानां प्रायश्चित्तं हि दुर्लभम् । शिवस्येति तदा प्राप सर्वैरेतैश्शिवान्तिकम् ॥ ३१
तत्र देवञ्च देवीञ्च प्रणम्य परया मुदा । स्तुतिश्चकार सोऽप्येवं ब्रह्मविष्ण्वादयोऽपि च ॥ ३२
शतानन्दोऽपि स मुनिः प्रणनाम शिवं शिवाम् । शतानन्दमथालोक्य शिवश्शीतांशुभूषणः ॥ ३३
भवता मुनिशार्दूल यद्वक्तव्यमस्ति तद् । श्रुतं किल मुखादेव नन्दिनः प्रमथेश्वरात् ॥ ३४
इति ब्रुवन्तमीशानं शतानन्दो मुनीश्वरः । श्रुतमेव मया सर्वं त्वन्मुखादिव नन्दिनः ॥ ३५
एवमेवं कृतानुज्ञो निर्जगाम शिवान्तिकात् । ब्रह्मविष्ण्वादयो देवा विसृष्टाश्च पिनाकिना ॥ ३६
नन्दीचापि कृतानुज्ञो द्वारदेशञ्जगाम वै । तत्र तेनाभ्यनुज्ञाता ब्रह्मविष्ण्वादयस्सुराः ॥ ३७
शतानन्दोऽपि भगवान् स्वं स्वं प्रापुरथालयम् । इति सूतान्मुनिवराश्श्रुत्वाद्भुतकथामिमाम् ॥
प्रशशंसुस्तदा सूतं पुनःपुनरनर्गलम् ॥ ३८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनषष्टितमोऽध्यायः ॥

---

॥ अथ षष्टितमोऽध्यायः ॥

अज्ञानकृत शिवापचारस्यापि नरकानुभवः ॥

ऋषयः — अज्ञानतः कृतं राजतनयाद्यैः किलाधुना । महान्धैस्तत्फलं भुक्तं विचित्रनरकेषु किम् ॥ १
अज्ञानात्कर्म यत्किञ्चिदपकारात्मकं मनाक् ॥ २
महात्मभिश्च विद्वद्भिश्शिवभक्तैः कृतं यदि । नरकेषु कदाचिदपि सूत सर्वज्ञ सुव्रत ॥ ३
तस्याप्यनुभवो दृष्टश्श्रुतोवा भवता वद ।

सूतः — ज्ञानादज्ञानतो वापि भक्तैरपि महात्मभिः । अपचारात्मकं कर्म यत्समाचरितं शिवे ॥ ४
तस्यैवानुभवो दृष्टो नान्यस्य पशुकर्मणः । सोमशर्मा पुरा विप्रश्शिवशर्मा च भूसुराः ॥ ५
तावुभौ सुमहात्मानौ सर्वज्ञौ च दृढव्रतौ । एकदा देवसेवार्थं गतौ देवालयं प्रति ॥ ६
तत्र दृष्ट्वा लिङ्गमूर्तिं शिवं त्रिदशनायकम् । प्रदक्षिणं तदा शंभोश्चक्राते ब्राह्मणावुभौ ॥ ७
तदानीं पुनरेकेन दीपश्शान्तोऽङ्गवायुना । न दृष्टस्तेन सोऽन्येन दृष्टो नोक्तश्च तं प्रति ॥ ८
स्वयं वा न चकारास्य पुनर्दीपसमुद्भवम् । निर्गतौ च यथापूर्वं कालेन विलयं गतौ ॥ ९
ताभ्यां या यातनाः प्राप्ताश्शक्यास्ता वर्णितुं न च । पुनश्च पुण्यशर्मान्यश्शिवभक्तश्शिवालये ॥ १०
नाशोन्मुखं पुनर्दीपं यथापूर्वं चकार सः । अङ्गुल्या तं नखाग्रेतु तैलं किञ्चित्ससञ्जवै ॥ ११
तेनापि नरके घोरे यातनास्सेहिरे चिरम् । अनन्तरं सारमेयस्सञ्जातो बहुधा चिरम् ॥ १२
तथा सुमतिसंज्ञोऽपि शिवयोगी जितेन्द्रियः । शिवार्थे प्रतिगृह्णाति भिक्षामन्यद्धनं बहु ॥ १३
ददाति तद्धनं सर्वं शिवपूजादिकर्मसु । नाळिकेरान् गृहीत्वायं तज्जलैः परमेशितुः ॥ १४
कारयित्वाभिषेकं तैरसि तत्सारमान्तरम् । तेनास्य नरके घोरे यातना समभायत ॥ १५
स्कन्दालये घृतेनान्यो वैश्यो भक्त्या दिने दिने । दीपानुद्दीप्य बहुधा कुर्वन् देवं प्रदक्षिणम् ॥ १६
तत्राम्लशाकं सुबहु विचित्य प्रत्यहं स्वयम् । तेनापि नरके तीव्रे यातनास्सेहिरे भृशम् ॥ १७
वज्रदन्ताभिधः कश्चिद्बधिरो योगिपुङ्गवः । देवालयं महत्पुण्यं निन्दितं पापिनाऽन्तिके ॥ १८
तत्रस्थितं यदेतेन बधिरेणापि सुव्रताः । अनुभूता पुराऽसह्या वज्रदन्तेन यातनाः ॥ १९
मेधहीनोऽस्ति सन्यासी भारत्याख्यो मुनीश्वराः । निद्रापरं शिवाभ्याशे पादेनास्खलितोयतिः ॥ २०
विलङ्घ्य दर्शयित्वा तं पापिनं परमेश्वरम् । जगाम तेन पापेन तीव्राः पीडाश्च सेहिरे ॥ २१
तस्माज्जितेन्द्रियैश्चापि योगिभिश्च महात्मभिः । ज्ञातिभिश्च शिवद्रोहो नानुष्ठेयः कदाचन ॥ २२
शिवालये तदा शंभोरपचारः कृतो यदि । अनुभूय फलं पश्चादन्ते मुक्तिश्च तादृशाम् ॥ २३
शिवद्रोहस्तु वै तस्माद्भेतव्यो विजानता । शिवद्रोहपराणां तु समीपे च न संवसेत् ॥ २४
इति सूतात्समाकर्ण्य मुनयस्संशितव्रताः । विस्मयं परमं गत्वा भयेनच चकंपिरे ॥ २५
परिहृत्य शिवद्रोहं तपांसि सफलानि न । कथा श्रुता यदेतेषां पापिनां श्रवणेन नः ॥ २६
प्रायश्चित्तं तदेतस्य शिवपञ्चाक्षरस्मृतिः । दध्युश्च हृदयांभोजे देव्या सह पिनाकिनम् ॥ २७
सूतोऽपि वक्ता चैतेषां तत्पापविनिवृत्तये । दध्यौ शिवमुमाकान्तं वदन् पञ्चाक्षरीं मुदा ॥ २८
भाक्तेऽतिष्ठद्धृदयश्चैषामेव तु सन्निधौ । पुनस्तु पूजामाहात्म्यमपृच्छंस्तं मुनीश्वराः ॥ २९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षष्टितमोऽध्यायः ॥

---

॥ अथ एकषष्टितमोऽध्यायः ॥

बिन्दुनादात्मकस्य लिङ्गस्य पूजामहिमा ॥

सूतः — अतः परं प्रवक्ष्यामि पूजामाहात्म्यमीशितुः । यच्छ्रुत्वा मनुजस्सद्यो मुक्तिपारं गमिष्यति ॥ १
पूर्वकल्पे महादेवः स्वाहन्ते जगत्पतिः । संहृत्य सकलं विश्वं स्वात्मनोऽव्यतिरेकिवत् ॥ २

शक्त्या तु परया विप्रा ननर्तैको निशां स्वकाम् । शर्वर्यन्ते यथापूर्वं सृजेयमिति शङ्करः ॥ ३
प्रजा तस्मादभूच्छंभोः पुराणी मुनिसत्तमाः । भवनान्यन्यथापूर्वमप्यङ्गान्यपिचलीलया ॥ ४
सङ्कल्पमात्रेण तदा ससर्ज सकलं शिवः । तिस्रो मूर्तीः स्वात्मनैव सृष्टिस्थित्यन्तहेतवे ॥ ५
अप्राकृतवपुश्शीलाश्रुद्रानपि गणानपि । देवांश्च ऋषिभिस्सार्धं पितॄनपि नरानपि ॥ ६
अन्यच्च जगतां नाथः स्थावरं जङ्गमञ्जगत् । रुद्रान्मातृगणांश्चैव प्रमथान् प्रमथाधिपान् ॥ ७
भूतानि भूतपैरेवं देवासुरमहोरगान् । ऋषीन् पितृगणान्देवो लीलया सकलञ्जगत् ॥ ८
उच्चावचानि भूतानि तया शक्त्या जगत्पतिः । विष्ण्वादीनां महर्षीणां केषाञ्चिदधिकारिणाम् ॥ ९
वेदागमपुराणानि शास्त्राणि विविधान्यपि । अध्यापयामास गुरुः स्थितान्यात्मनि लीलया ॥ १०
शशास तान् पुनर्देवो विष्ण्वादीनमरप्रभुः । मां पूजयत वै देवा भक्त्या भावपुरस्सरम् ॥ ११
भावानुरूपफलदः प्रतिज्ञा या मया कृता । ततोऽधिकारं युष्माकं कल्पयामि हरे विधे ॥ १२
ततस्साञ्जलिहस्तास्ते प्रणम्य भवमूचिरे । परिपूर्णोऽसि भगवन् पुरुहूत पुरुष्टुत ॥ १३
श्रुतो वेदागमेष्वीश कथं पूज्यो हि नो वद । केनाकारेण वै देवः सर्वरूपः स्मृतः प्रभो ॥ १४
विश्वरूपाय वै देव वेदो वदति भो नमः । वयं कं विग्रहं तेषु केन संपूज्य शङ्कर ॥ १५
भवाम ते प्रसादस्य पात्रभूता जगत्पते । ईश्वरः — यस्यां कस्याञ्च वै मूर्तौ पूजितोऽप्यह मादरात् ॥ १६
प्रसन्नो वाञ्छितं दद्यां यस्य कस्यापि वा सुराः । किन्तु लिङ्गार्चकानान्तु शीघ्रमेवास्म्यभीष्टदः ॥ १७
लिङ्गमूर्तौ सदाकाले विना मन्त्रादिसत्क्रियाम् । प्रसन्नो निवसाम्येव भक्तिभाजां विमुक्तये ॥ १८

देवाः —

किं लिङ्गं भवताख्यातं केन लिङ्गी त्वमव्ययः । कथं वा लिङ्गसंज्ञास्य वद विस्तरतो विभो ॥ १९
ईश्वरः — अव्यक्तं लिङ्गमाख्यातमनन्तमजरं ध्रुवम् । गुणत्रयं तदेवाहं सृजत्यवति हन्ति च ॥ २०
तदेव मम लिङ्गन्तु तस्य रूपं चतुर्विधम् । परो विन्दुः परो नादस्त्वपरौ विन्दुनादकौ ॥ २१
उपर्यधो भागनिष्ठाश्चत्वारोऽपि सुरेश्वराः । अपरो विन्दुनादौ स्यात्तदूर्ध्वमपरो ध्वनिः ॥ २२
तदूर्ध्वे परविन्दुस्स्यात्परनादस्तदूर्ध्वकः । प्रणवो वेदिरस्यायं नादो लिङ्गाकृतिस्सुराः ॥ २३
विन्दुनादमये तस्मिन् लिङ्गे सन्निहितस्सदा । तस्माल्लिङ्गार्चकानांतु सद्यः प्रीतोऽस्म्यभीष्टदः ॥ २४
तस्मिन् लिङ्गेत्वहं पूर्णकलया सर्वदा सुराः । जगच्च सकलं तस्मिन् तिलेतैलमिव स्थितम् ॥ २५
प्रलये लीनमत्रैव सर्गे सृष्टञ्च तेन तत् । तत्स्वरूपं पुनर्लोके लिङ्गवेद्यात्मकं विदुः ॥ २६
तस्मात्सवेदिके लिङ्गे लिङ्ग्यहं संस्थितस्सदा । सवेदिकमिदं लिङ्गं रत्नकाञ्चनराजतैः ॥ २७
शिलाभिर्दारुभिर्मृद्भिर्गन्धपारदपूर्वकैः । सलक्षणं विधायैव पूजयध्वमतन्द्रिताः ॥ २८
वेदागमोक्तविधिना सर्वकालमतन्द्रिताः । पूजां कुर्वन्ति ये नित्यं मुक्तिभाजो भवन्ति ते ॥ २९
दानानि बहवो यज्ञास्तपांसीन्द्रियनिग्रहः । सर्वं लिङ्गार्चनस्यैव कोट्यंशेनापि नो समाः ॥ ३०
तस्माल्लिङ्गार्चकानां तु नैव जन्म न संसृतिः । तस्मात्तु लिङ्गमूर्तौ मां सदाशिववपुर्धरम् ॥ ३१
भावपूतेन मनसा पूजयन्तु जगत्त्रये । ब्रह्माण्डेषु च सर्वत्र तत्र तत्राप्यहं सुराः ॥ ३२
लिङ्गमूर्तिमधिष्ठाय पूज्यो वेदोक्तवर्त्मना । केदारे च तथा काश्यां श्रीगिरौ सर्वसिद्धिदे ॥ ३३
श्रीमद्दक्षिणकैलासे वटारण्ये महत्तरे । काञ्चीपुरेऽरुणाद्रौ च श्रीमद्वृद्धाचले तथा ॥ ३४
चिदंबरे कुम्भघोणे मध्यार्जुनमहालये । ममास्थानमनोभीष्टवसतौ कमलालये ॥ ३५

हालास्ये च महास्थाने सेतौ रामेश्वराभिधौ । स्थानेषु चैवमादौ च प्रत्यक्षं लिङ्गरूपधृक् ॥ ३६
निवसामि सदाकालमुमया सह हे सुराः । तस्मान्मां लिङ्गमूर्तिस्थं पूजयत्वखिलं जगत् ॥ ३७
यूयञ्चेत्यभिधायैवं तिरोऽभूज्जगतां पतिः । तत्र तत्राण्डदेशेषु पुरुहूतः पुरुष्टुतः ॥ ३८
पूज्यमानस्सदा सर्वैः पञ्चकृत्यरतस्सदा । चिक्रीडगणपैस्सार्धं देवीस्कन्दविनायकैः ॥ ३९
कैलासे च तथा तत्र महाकैलासपर्वते । मन्दरे च महामेरौ चक्रवाळगिरौ तथा ॥ ४०
शिवलोके च सान्निध्यं तत्र तत्राप्यनुग्रहम् । कुर्वन् सर्वात्मनामीशः स्थितः स्थाणुर्जगन्मयः ॥ ४१
ततो विष्णुमुखा देवा ऋषयश्च तपोधनाः । स्वस्वाभीष्टप्रसिध्यर्थं कृत्वा लिङ्गं सवेदिकम् ॥ ४२
स्थानेषु च नदीतीरे पर्वताग्रेषु सादरम् । उपचारैस्समभ्यर्च्य षोडशैरुमया शिवम् ॥
पदं प्रापुर्यथार्हं ते प्रसन्नादीश्वरेश्वरात् ॥ ४३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकषष्टितमोऽध्यायः ॥

---

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

### काश्यादि क्षेत्रेषु विष्ण्वादिदेवकृत शिवाराधनं ॥

ऋषयः — केषु स्थानेषु देवेशमारराधुस्सुरर्षयः । विविच्य वद विस्तारात्सूत नो निखिलं क्रमात् ॥ १
सूतः — शृणुध्वमृषयस्सर्वे क्रमशो वच्मि सुव्रताः । तदा विष्णुरमेयात्मा शङ्करप्रियकिङ्करः ॥ २
काशीं प्राप्याविमुक्ताख्यामेकवर्षायुतं ततः । कुर्वंस्तपो महद्घोरं लिङ्गमूर्तिं सदाशिवम् ॥ ३
भक्त्या संपूज्य देवेशात् प्राप्तवान्वरमुत्तमम् । प्रसन्नात् पार्वतीशानात् वैष्णवं पदमुत्तमम् ॥ ४
सर्वरक्षाधिकारित्वे चाभिषिक्तो यथाविधि । शङ्खं चक्रं गदां खड्गं शार्ङ्गाद्यान्यायुधान्यपि ॥ ५
महालक्ष्मीपतित्वञ्च पीतमम्बरमद्भुतम् । रथं पक्षिरथाधीशं ददौ सर्वं सदाशिवः ॥ ६
जगद्रक्षेति चाज्ञप्तो देवदेवेन शूलिना । तदादि च तथा विष्णुश्शिवलोकादधः स्थिते ॥ ७
लोके स्थितो ररक्षासौ जगत्त्रयमतन्द्रितः । छत्रं रत्नमयं तद्वच्चामरे मणिदण्डके ॥ ८
बिभ्रतीभिस्सुरस्त्रीभिस्सेव्यमानस्तु पार्श्वतः । यमुवास महाविष्णुर्विष्णुलोकः स्मृतस्तु सः ॥ ९
सेव्यमानस्तु तत्रैव ब्रह्माद्यैस्सुरयोगिभिः । दुष्टानां निग्रहं कुर्वन् शिष्टानामपि रक्षणम् ॥ १०
महदैश्वर्यसंपन्नो ह्यवसत्कमलापतिः । काञ्चीस्थानमनुप्राप्य ब्रह्मा संपूज्य शूलिनम् ॥ ११
शैले लिङ्गेऽभिषिच्येशं वरं प्राप सुदुर्लभम् । अधिकारञ्च वै सृष्टेरभिषेकपुरस्सरम् ॥ १२
सरस्वतीपतित्वञ्च लेभे हंसञ्च वाहनम् । छत्रञ्चन्द्रसमं शुभ्रं चामरद्वयमेव च ॥ १३
विष्णुलोकादधोभागे देवर्षिगणपूजितः । उवास लोकं स्वमयं महता वैभवेन वै ॥ १४
ब्रह्मलोकस्स विख्यातो नाम्ना तस्यैव सुव्रताः । इति लेभे वरं शंभोर्ब्रह्मा लिङ्गार्चनाबलात् ॥ १५
इन्द्रश्श्रीपर्वते प्राप्य पूजयामास भावतः । भवं भवानीसहितं प्रसादाप वरान्बहून् ॥ १६
स्वर्गाधिपत्यं देवानामाधिपत्याभिषेकतः । पुलोमजापतित्वञ्च गजमैरावताभिधम् ॥ १७
उच्चैःश्रवसमश्वेशं वज्रञ्चायुधमद्भुतम् । द्रुमांश्च कल्पकान्धेनूः कामदांश्च महायशाः ॥ १८
चिन्तामणिं तथा रत्नमुर्वश्याद्यप्सरस्स्त्रियः । प्राच्या दिशोऽधिपत्यञ्च प्रसन्नात्प्राप शङ्करात् ॥ १९

तथैव स्वर्गलोकस्थो भुञ्जन् दिव्यसुखं मुहुः । अमृतास्वादनं कुर्वंस्तिष्ठत्यद्यापि वज्रभृत् ॥ २०
अरुणाद्रौ तथैवाग्निरभिषिच्य सदाशिवम् । अनेकविभवैस्सार्धं संपूज्याप वरानयम् ॥ २१
अग्नीनामाधिपत्यञ्च दक्षिणप्राच्यधीशताम् । कृताभिषेको देवेन छागं वाहनमुत्तमम् ॥ २२
आयुधानि च शक्त्यादि स्वाहाञ्च दयितां शुभाम् । तथैवेशाज्ञया लेभे दक्षिणाप्राग्दिगीश्वरः ॥ २३
अग्नीनामधिपो लेभे तिष्ठत्येवाग्निरद्भुतः । केदारारण्ये महाक्षेत्रे यमोऽपि यमिनां वरः ॥ २४
प्रसाद्य देवदेवेशं प्रापानेकानयं वरान् । दक्षिणाशापतित्वञ्च महिषं वाहनोत्तमम् ॥ २५
कालदण्डाद्यायुधानि सर्वेषामात्मनां पुनः । समवर्तितया नीत्वा पुण्यापुण्ये विचार्य च ॥ २६
पुण्येन स्वर्गतिं तेषां पापेन नरके स्थितिम् । यातनाश्चापि नरके तत्तत्पापानुरूपतः ॥ २७
अन्यानपि महाभागान्मध्यस्थान्महितौजसः । चित्रगुप्तञ्च कार्यस्थं ददावस्य शिवः स्वयम् ॥ २८
तदादि धर्मराड्भोगी संयमिन्यां शिवाज्ञया । अनुभूयामितां लक्ष्मीमास्तेऽद्यापि प्रतापवान् ॥ २९
गोकर्णे च शिवस्थाने निर्ऋतिः परमेश्वरम् । समभ्यर्च्य ततः प्राप प्रसन्नाज्जगतीपतेः ॥ ३०
दक्षिणापरदिक्पालभावञ्च विधिपूर्वकम् । यजतां फलदातृत्वं खड्गञ्चाप्यायुधोत्तमम् ॥ ३१
अभिषिक्तश्चाधिपत्ये रक्षसामपि सर्वशः । अद्याप्यनुभवन्नास्ते दत्तां देवेन संपदम् ॥ ३२
जम्ब्वारण्ये समभ्यर्च्य प्रचेताः परमेश्वरम् । प्रापार्णवाधिपत्यञ्च यादसामप्यपामपि ॥ ३३
वाहनञ्चापि मकरमभिषेकपुरस्सरम् । पश्चिमाशाधिपत्यञ्च पाशाद्यैरायुधैस्समम् ॥ ३४
तथैव लब्ध्वा तत्सर्वं महता प्राभवेन सः । वर्ततेऽद्यापि सन्तुष्टो महातेजाः प्रतापवान् ॥ ३५
वायुर्दक्षिणकैलासे कालहस्तिमहापुरे । समभ्यर्च्य महादेवमुपचारैरनन्यधीः ॥ ३६
वरमाप महेशानात् प्रसन्नादीश्वरेश्वरात् । पश्चिमोत्तरदिक्पाल्ये चाभिषिक्तः प्रतापवान् ॥ ३७
वायूनामाधिपत्यञ्च ध्वजाद्यायुधपूर्वकैः । मृगञ्च वाहनं लेभे सोऽद्याप्यप्रतिमो भुवि ॥ ३८
सिद्धेश्वराभिधे सिद्धवटे संपूज्य शङ्करम् । कुबेरः परया भक्त्या वरानाप महेश्वरात् ॥ ३९
उत्तराशापतित्वेन यक्षभद्रो बभूव च । निधीनाञ्च नराणाञ्च पतित्वं चापि पुष्पकम् ॥ ४०
विमानमपि देवेशाद्यक्षेशत्वञ्च वाहनम् । नरं प्रतापसंयुक्तो वर्ततेऽद्यापि तत्सखा ॥ ४१
ईशानोऽपि महादेवं कमलालयवासिनम् । संपूज्य पत्रपुष्पाद्यैरुपचारैरनेकधा ॥ ४२
प्रसन्नेन तदा पृष्टः काऽपेक्षेति पिनाकिना । प्रणम्य वरयामास वरमाममनन्यधीः ॥ ४३
समानानि च नामानि समानवपुरायुधम् । समानमपि तच्चिह्नं यद्यदस्ति शिवस्य तु ॥ ४४
वृषञ्च वाहनं तद्वत् प्रागुदीचीदिगीशताम् । एतत्सर्वमसौ लेभे संप्रार्थ्येशं स्वयं वशी ॥ ४५
अन्तेऽधिकारस्य पुनस्सायुज्यं परमेश्वरः । दत्वाऽन्तर्धानमापेदे सोऽप्यद्यापि प्रतापवान् ॥ ४६
काञ्च्यामेव पुरा सूर्यः कमलैरीश्वरेश्वरम् । अभ्यर्च्यानन्यया भक्त्या प्रसन्नादाप्तवान्वरम् ॥ ४७
ऋग्यजुस्सामवेदानां मण्डले वसतिस्सदा । तदर्हञ्च रथं लेभे सप्ताश्वपरिमण्डितम् ॥ ४८
ग्रहाणामाधिपत्यञ्च ज्योतिश्चक्रस्य सर्वतः (चक्रस्य सर्वदा) । कृताभिषेको देवेन दिनानामधिपोऽभवत् ४९
कुम्भघोणमनुप्राप्य चन्द्रश्शङ्करवल्लभः । भक्त्याऽभ्यर्च्य महादेवं तत्र (पद्मैः) मुक्तामयैश्शुभैः ५०
वरमाप शिवात् प्रीतान्नक्षत्रेशत्वमद्भुतम् । हिमांशुत्वं द्विजेशत्वमोषधीशत्वमेव च ॥ ५१
विभूषणत्वमीशस्य सुदुर्लभमवाप सः । प्रत्यहं तावुभौ मेरोः प्रदक्षिणपरौ मुदा ॥ ५२
शिवावासस्य सततं ग्रहैरन्यैश्शिवप्रियैः । भौमो बुधो गुरुश्शुक्रश्शनिश्चेते च पञ्च च ॥ ५३

मध्यार्जुने च हालास्ये सेतौ श्वेतवने (वटवने) मुदा । केदारेऽप्येव पञ्चैते पञ्चस्वपि पिनाकिनम् ॥ ५४
प्रसाद्य परया भक्त्या प्रसन्नादापिरे वरान् । ऊर्ध्वमण्डलतस्सोमसूर्ययोरुपरि स्थितिम् ॥ ५५
आधिपत्यञ्च सुमहल्लोकानां सुखदुःखयोः । सर्वैरपि च पूज्यार्थं सर्वोपद्रवशान्तये ॥ ५६
देवासुराणामाचार्यौ गुरुशुक्रौ कृतौ तदा । ईश्वरेणैव देवेन प्रसन्नेन मुनीश्वराः ॥ ५७
तथापि ऋषयः पूर्वं देवदेवं सभापतिम् । चिदम्बरे समभ्यर्च्य मध्ये दभ्रसदः प्रभुम् ॥ ५८
अवापुर्वरमीशानात् ग्रहाणामुपरिस्थितिम् । पुनर्देहान्तरे मुक्तिं मुमुदुः प्राप्य ते वरम् ॥ ५९
सर्वशास्त्रार्थविज्ञानकुशलाश्च तदाज्ञया । वसिष्ठाद्या महात्मानस्तेऽद्यापि महितौजसः ॥ ६०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्विषष्टितमोऽध्यायः ॥

---

॥ अथ त्रिषष्टितमोऽध्यायः ॥

काश्यादिषु ध्रुवादिकृत शिवार्चनम् ॥

सूतः — ध्रुव औत्तानपादिस्तु काश्यां विश्वेश्वरं शिवम् । समभ्यर्च्य महेशानात् प्रसादादाप्तवान्वरम् ॥ १
नक्षत्रमुनिमुख्यानां मण्डलोर्ध्वे स्थितिं पराम् । मेधीभूतो ग्रहाणाञ्च भ्रामयन्नेव तान्मुदा ॥ २
सर्वोपरि कृतावासस्थिरस्त्वद्याप्यवर्धभ्रमन् । कुम्भघोणे पुरा शेषस्सर्वेषां भोगिनां वरः ॥ ३
प्रसाद्य परमेशानं भुवो भारं बभार वै । महाप्रतापसंयुक्तो वहतेऽद्याप्ययं धराम् ॥ ४
एवं स्थानेषु सर्वेषु भूम्यां पर्वतमूर्धसु । नदीनाञ्चैव तीरेषु देवाश्च मुनयोऽसुराः ॥ ५
सिद्धाश्च गरुडा यक्षा विद्याधरमहोरगाः । किन्नराश्च मुनिश्रेष्ठास्तथा किंपुरुषादयः ॥ ६
मनुष्याश्च महादेवं भक्त्याराध्य सदाशिवम् । स्वं स्वं पदमनुप्राप्य सुखिनो मुदमापिरे ॥ ७
नागानां गरुडानाञ्च गन्धर्वोरगरक्षसाम् । किन्नराणां मनुष्याणां किंपुरुषाणाञ्च सर्वशः ॥ ८
आपुरीशवरात्ते ते ह्याधिपत्यमकुण्ठितम् । मेघानामधिपाश्चान्ये दिग्गजा येच केचन ॥ ९
अष्टौ च ये महानागास्सप्तापि च महीधराः । ये येऽधिपाः स्थिता येषां ते ते देवप्रसादतः ॥ १०
लब्धाधिपत्या विज्ञेया नान्यथा मुनिसत्तमाः । तस्माच्छ्रेयोर्थिभिस्सर्वैः स्वात्मनो मनुजोत्तमैः ॥ ११
शिवपूजा सदाकार्या भुक्तिमुक्तिफलप्रदा । शिवपूजाप्रभावेन केचित्सिद्धा बभूविरे ॥ १२
तथापि सिद्धविख्याता योगिनः कपिलादयः । अनेके लोककर्तारो ह्यनेके नित्यतां गताः ॥ १३
शिवलोकं ययुः केचित्सालोक्यमपरे जनाः । सामीप्यमपि सारूप्यं सायुज्यमपि सूरयः ॥ १४
देवासुरमनुष्येषु शिवपूजाप्रभावतः । अधिकैश्वर्यसंपन्ना विख्याता भुवनत्रये ॥ १५
केचिदैश्वर्यलाभेन मुक्ता मोहवशं गताः । भ्रष्टाः पुनश्च संसाराच्छिवं पूर्ववदापिरे ॥ १६
जयार्थिनश्च बहवस्समभ्यर्च्य जगत्पतिम् । विजित्य शत्रून् संग्रामे शशासुः पृथिवीं पुनः ॥ १७
बलार्थिनश्च बहवो बलं सुबहु लेभिरे । पुत्रान् पुत्रार्थिनोऽन्येपि दारानपि मनोहरान् ॥ १८
पशुकामः पशूनश्वानश्वकामाश्च लेभिरे । सौभाग्यं कान्तिमद्रूप त्याग सत्यं पराक्रमम् ॥ १९
प्रसिद्धिञ्च जगत्यस्मिन् सर्वांमिष्टञ्च लेभिरे । अर्थेष्वेतेष्वनेकेषु सेतिहासेषु काञ्चन ॥
संग्रहेण कथाभागा वर्ण्यन्ते श्रृणुताधुन ॥ २०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रिषष्टितमोऽध्यायः ॥

---

॥ अथ चतुष्षष्टितमोऽध्यायः ॥

भृगुमहर्षिणा विष्णवे शापदानम् ॥

सूतः — विष्णुः पुरा पुरारातिमाराध्य पुरुषं परम् । ऋषिशापसमुद्भूतविनिपाताननेकशः ॥
निर्धूयाभीष्टपुत्रश्रीराज्यलाभमवाप्तवान् । तेषु कांश्चिदितीहासान् महापुण्यान्वदामि वः ॥ २
एकदा कलहे वृत्ते ब्रह्मविष्ण्वोः परस्परम् । कर्ताऽहं जगतां न त्वमहं न त्वमिति क्रुधा ॥ ३
तयोरहङ्कृतेश्शान्तिं कुर्वन् सर्वेश्वरेश्वरः । उत्पाद्य भैरवं तेन मण्डलस्थं स्वयं रवेः ॥ ४
नखाग्रेण विधेस्तस्य पञ्चमं मूर्धमूर्ध्वगम् । उर्वारुकफलं पक्वकोमलं लीलयेश्वरः ॥ ५
सञ्छिद्य तत्कपालेन भैरवेण धृतेन च । विष्णोरहङ्कृतेश्शान्तिं स्कोभिक्षाछलेन वै ॥ ६
विनोदयिष्यन् भिक्षार्थं प्रेषयामास भैरवम् । विष्णुश्शिरां ललाटात्प्राच्छिद्य रक्तं निजं ददौ ॥ ७
रक्तस्य विरहान्मूर्छामवाप पुरुषोत्तमः । पुनश्च भैरवेन्द्रस्य करस्पर्शेन निर्व्यथः ॥ ८
मूर्छां विहाय सहसा लब्धसंज्ञः पुनर्हरिः । अहंकारः कृतोऽस्माभिश्शासितास्तेन वैधयम् ॥ ९
तत्पापविनिवृत्त्यर्थं शिवपूजां प्रकुर्महे । मध्यार्जुनं समासाद्य समभ्यर्च्य जगद्गुरुम् ॥ १०
मेने कृतार्थमात्मानं पूतं सर्वेश्वरार्चनात् । कृपया देवदेवस्य प्रसन्नस्य पिनाकिनः ॥ ११
विष्णुलोकं यथापूर्वं जगाम गरुडेन सः । पुनश्चाप्येकदा विष्णुरहङ्कारमदोद्धतः ॥ १२
ब्रह्मणा स्पर्धमानोऽसाधीश्वरोऽहमिति क्रुधा । महालिङ्गाकृतेर्मूलमदृष्ट्वा पुनरुत्थितः ॥ १३
प्रणवस्य च वेदानामशृण्वन्वचनं हितम् । तत्पापविनिवृत्त्यर्थमरुणाचलमाश्रितः ॥ १४
तत्रेश्वरं समाराध्य प्रसादेनास्य वै विभोः । अपपापविमुक्तात्मा जगाम भवनं स्वकम् ॥ १५
पुनश्चाप्यकरोद्विष्णुरेकदाऽसुरनिग्रहम् । पराजये तु देवानां देवासुरमहाहवे ॥ १६
तदानीं तुमुले युद्धे विष्णुना सूदिता भृशम् । भृग्वाश्रमं समासाद्य भृगुपत्नीं तपस्विनीम् ॥ १७
ययाचिरे शरणमासेदुरसुरा हरिनिर्जिताः । तदाश्रममपि प्राप विष्णुश्चक्रधरः स्वयम् ॥ १८
संहरन्नसुरांस्तत्र भृगुपत्न्या निवारितः । नैवाश्रमः प्रवेष्टव्यस्त्वयाऽसन्निहिते मुनौ ॥ १९
न हन्तव्या न हन्तव्या दितिजा मदुपासकाः । मया दत्ताभयास्सर्वे मामाहिंसीर्जनार्दन ॥ २०
दुष्टानामभयोऽनिष्टो जगतामिति हि क्रुधा । चक्रेण संहरन् देव्याश्चिच्छेदच शिरस्तदा ॥ २१
तेषामभयदात्र्याश्च भृगुपत्न्या जनार्दनः । निर्गते च ततस्तस्मिन्नाश्रमान्मधुसूदने ॥ २२
ददर्श भृगुरभ्येत्य दैत्यैस्सहनिजां प्रियाम् । निकृत्तशिरसं ज्ञानदृष्ट्या विज्ञाय माधवम् ॥ २३
चुकोप हरयेऽत्यर्थं हन्त्रे दैत्यैः स्त्रिया अपि । शशापद्विष्णुमयनौ जन्मान्यस्त्वस्य कोटिशः ॥ २४
तत्र तत्र स्त्रियाचापिवियोगोस्त्विति दुःखदः । जगत्यस्यैव ये भक्तास्सन्तु पापण्डिनस्तु ते ॥ २५
शप्त्वैवमात्मनः पत्नीं सन्धायोज्जीव्य विद्यया । मृतसञ्जीविनीत्येव सिद्धया परमेश्वरात् ॥ २६
ततो विष्णुस्समाकर्ण्य भीतभीतोऽसुरार्दनः । तच्छापविनिवृत्त्यर्थं काञ्चीमभ्येत्य कामदाम् ॥ २७
संपूज्य देवदेवेशं दृष्ट्वा देवं वृषोपरि । प्रणम्याभ्यर्थयच्छापमोक्षं भीतेन चेतसा ॥ २८
मद्भक्तैर्यत्कृतं विष्णो तैः कर्तव्यं तदन्यथा । अहं न पारयाम्येव प्रतिज्ञैषा मया कृता ॥ २९
इति केशवमाभाष्य हरिकेशः स्वयं शिव । भृगुमाह महादेवः स्मृतमात्रागतं मुनिम् ॥ ३०
विमोचय हरिं शापात् भृगो बहुजलिप्रदात् । मदर्चनारतं (गतं) विद्धि भक्तश्च मुनिसत्तम ॥ ३१
दशास्तु जन्म तद्विष्णोरेकास्मिंस्तत्र जन्मनि । स्त्रिया वियुक्तोऽचिरं दुःखी भवतु नान्यतः ॥ ३२

मदाज्ञया कुरुष्वेदं मद्भक्तानां त्वमग्रणीः । तथास्त्विति मुनिः प्राह प्रणम्य परमेश्वरम् ॥ ३३
तदा पुनरुमाकान्तं रमाकान्तः प्रणम्य तम् । प्रार्थयामास भगवन् दशस्वपि च जन्मसु ॥ ३४
ममाज्ञाननिवृत्त्यर्थं निग्रहानुग्रहौ कुरु । त्वमेव देवदेवेश दयालो भक्तवत्सल ॥ ३५
तदुपश्रुत्य भगवानस्मिन्नन्तर्धिमाययौ । नारायणोऽपि भगवान् स्वमेवाश्रममाश्रयत् ॥ ३६
पुनश्चाप्येकदा विष्णुर्वेदोद्धरणकर्मणे । शाफरीं योनिमासाद्य संहरिष्यन् स तस्करम् ॥ ३७
वेदानां सोमकं दैत्यं विनिगृह्य च लीलया । वेदांश्च वेधसे दत्त्वा यथापूर्वं जनार्दनः ॥ ३८
अहङ्कारेण तेनैव चार्णवानाञ्च भेदनम् । कुर्वन् सर्वान् समाकृष्य भक्षयामास माधवः ॥ ३९
ततो भीता विरिञ्च्याद्याः शङ्करं लोकशङ्करम् । कैलासवासिनं देवं प्रीणयित्वा व्यजिज्ञपन् ॥ ४०
देवेनापि समादिष्टश्शास्ता योगी तदाज्ञया । कैवर्ततां समासाद्य माधवं मत्स्यरूपिणम् । ४१
विनिगृह्याक्षियुगलं कुरुविन्दमणिप्रभम् । नखाग्रेण समादाय शिवाग्रे विनिवेदयन् ॥ ४२
निधायैनं नमस्कृत्य तस्थौ योगी कृताञ्जलिः । तदा ब्रह्मादयो देवा महादेवं समार्थयन् ॥ ४३
वयं मत्स्येन देवेश पीडिता भृशमीश्वर । सोऽयं विनिगृहीतश्च जगतां हितकाम्यया ॥ ४४
तस्यास्याक्षियुगं श्वेतत्वचास्त्वाभरणे मणिः । इति संप्रार्थितो देवैस्तदक्षियुगलं मणिम् ॥ ४५
दधार मुण्डमालायां यथाविधिसमाहितः । गतमोहः पुनर्विष्णुर्ध्यात्वा देवं जनार्दनः ॥ ४६
शिवपूजाप्रभावेन पूर्वं सोमकमर्दनम् । मोहेनैव ततः पश्चाज्जगन्ति तमसावृतः ॥ ४७
शासितोऽसि जगद्धात्रा कृतार्थोऽसि ततः कृतः । एतद्दोषनिवृत्त्यर्थं पूजयिष्यामि शङ्करम् ॥ ४८
इति काञ्चीपुरीं प्राप्य पूजयामास तत्र तम् । मत्स्यरूपाय वै तस्मै प्रससाद पिनाकधृक् ॥ ४९
वरेण छन्दयामास मत्स्यरूपं जगत्पतिः । वृतो वरश्च तेनापि निग्रहोऽयमनुग्रहः ॥ ५०
ममास्तु देवकृपया मत्स्यरूपं तु मां जनाः । ये यजन्ति जगत्यस्मिंस्तेषामिष्टप्रदो भव ॥ ५१
कृपया तव देवेश वरदोऽस्मि महेश्वर । मयाचरितमागस्त्वं तितिक्ष जगदीश्वर ॥ ५२
इतीशोऽभिहितः पूर्वं विष्णुना मत्स्यरूपिणा । दत्त्वाऽन्तर्धानमगमल्लोकानां हितकाम्यया ॥ ५३
विष्णुश्च वैष्णवं लोकमासाद्यापालयत्स्वकम् । पुनश्च विष्णुरन्यस्मिन्युगे कूर्मत्वमेत्य वै ॥ ५४
मन्थानं मन्थरं कृत्वा योक्त्रं कृत्वा च वासुकिम् । देवासुरगणैस्सार्कं ममन्थ क्षीरसागरम् ॥ ५५
अमृतञ्च समासाद्य तेन गर्वेण मोहितः । सुरान् संक्षोभयामास सागरैस्सह कच्छपः ॥ ५६
ततो देवासुरास्सर्वे देवं गत्वा व्यजिज्ञपन् । तदानीं देवदेवोऽसौ विघ्नराजमरिन्दमम् ॥ ५७
तन्निग्रहार्थमाचष्टे देवानां हितकाम्यया । शुण्डाग्रेण तदा कूर्ममादाय गणनायकः ॥ ५८
सम्यगुत्तानितं कृत्वा संपीड्यास्यैव कर्परम् । देवेष्वपि च पश्यत्सु शिवाग्रे सन्न्यवेशयत् ॥ ५९
तदानीमीश्वरो देवान् समालोक्येदमब्रवीत् । अनेन कच्छपास्या मे किं भावि वदताधुना ॥ ६०
ततोऽब्रुवन् प्रणम्येशं ब्रह्मादिविबुधेश्वराः । अरक्षस्त्वमनेनास्मान्विक्रमेण महेश्वर ॥ ६१
तस्यैव चापकाशेन तवाङ्गेऽस्तु विभूषणम् । कूर्पास्थि मुण्डमालायां नायकत्वमुपैत्विदम् ॥ ६२
विष्णोरपीदं दृष्ट्वा तु नाहङ्कारो भवेत्पुनः । विज्ञापितस्सुरैरेवं विश्वेशोऽधात्तदस्थि तत् ॥ ६३
विष्णुश्च गतसंमोहो विश्वेशार्चाविधेर्बलात् । स्वमागारं समासाद्य सनकादिभिवन्दितः ॥ ६४
एकदा पीडितो देवा हिरण्याक्षेण वैरिणा । विष्णुं शरणमभ्येत्य सर्वाचख्युस्ततो भयम् ॥ ६५
ददौ तु तेषामभयमसुरारिस्सुराग्रणीः । वाराहं रूपमासाद्य महानासापुटाननः ॥ ६६
हिरण्याक्षमसौ हत्वा महीमप्युज्जहार ताम् । तेन गर्वेण स हरिरर्णवानाञ्च भेदनम् ॥ ६७

सतानां भूधराणाञ्च चकार सुमहद्वपुः । दृष्ट्वा त तादृशं विष्णुं देवास्सब्रह्मकास्तदा ॥ ६८
नवजितशम्भुदेशाय वराहाद्वयमागताम् । ततो देवादिदेवोऽपि वराहस्यास्य निग्रहे ॥ ६९
सुवक्षण्यं शिशुं पुत्रं सन्दिदेशात्मनः प्रभुः । तदाज्ञया कुमारोऽपि वराहं पर्वताकृतिम् ॥ ७०
जग्राह शृङ्गे हस्ताभ्यां परिभ्राम्य च लीलया । संहृत्य शृङ्गमस्यैकं निदधे सन्निधौ विभोः ॥ ७१
कपर्दगतचन्द्रांशं द्वितीयमिव शङ्करः । दधावाभरणत्वेन देवानामपि पश्यताम् ॥ ७२
अङ्कमारोप्य तं पुत्रं लालयामास हृष्टधीः । ब्रह्मादयोऽस्य विबुधा नमस्कृत्य यथायथम् ॥ ७३
अगमुर्देवं तदा विष्णुर्वीतमोहस्समुत्थितः । पुनश्च पूर्ववद्देवं समाराध्याप निर्वृतिम् ॥ ७४
एकदाथ पुनर्विष्णुर्हिरण्यं दानवेश्वरम् । संहरिष्यन् समभ्यर्च्य शिवं लब्धवरोबली ॥ ७५
नृसिंहवपुरास्थाय वक्षो भित्वा नखैः पुनः । पपौ क्रोधेन तद्रक्तं संहृत्यासुरसैनिकान् ॥ ७६
महङ्कारेण तेनैव सर्वान् संहर्तुमुद्यतः । ततो देवा भयाविष्टाश्शरणं प्रापुरीश्वरम् ॥ ७७
वीरभद्रं तदा देवस्सन्दिदेशास्य निग्रहे । शरभं रूपमास्थाय वीरभद्रः प्रतापवान् ॥ ७८
गृहीत्वा नारसिंहं तं द्विधाकृत्वात्मलीलया । भित्वा त्वचमतिस्वच्छामुपायनमुपाहरत् ॥ ७९
तदाप्रभृति देवोऽपि नारसिंहाम्बरोऽभवत् । सोऽपिदेवं समाराध्य विगतैना बभूवह ॥ ८०
एकदा पुनरेवैष बलिनिग्रहमाचरन् । बभूव काश्यपसुतो वामनो मधुसूदनः ॥ ८१
ईश्वरात्तवरोऽभ्येत्य यागशालामथावत । पदत्रयमितां भूमिमात्मनः स्थितये पुनः ॥ ८२
प्रतिगृह्य ततो भूमिमेकेनैव पदा दिवम् । विक्रम्यान्यपदालाभाद्बलिं कारागृहान्तरे ॥ ८३
निवेश्य राज्यं भूयोऽपि देवेन्द्राय त्रिविक्रमः । दत्वाऽण्डमेतद्भ्रमं स्वाङ्घ्रिणा संवर्धयन्पुनः ॥ ८४
ततो देवैर्महादेवो ज्ञात्वा वृत्तान्तमस्य तु । भैरवं संदिदेशास्य निग्रहे भैरवाकृतिम् ॥ ८५
सोऽपि तं त्वरयाऽभ्येत्य वृद्धमण्डान्तमच्युतम् । प्रहृत्योरसि हस्तेन निपात्योत्कृत्य च त्वचम् ॥ ८६
आत्मनः कञ्चुकत्वेन दधावानीलकोमलम् । तस्यास्थ्यपि महद्दीर्घं कङ्कालाख्यं दधौ करे ॥ ८७
ततो जग्मुर्निरातङ्कास्तदा सर्वे सुरादिवम् । उपेन्द्रोऽपि महादेवं समाराध्य यथापुरम् ॥ ८८
शान्तापराधस्सम्भूज्जगाम च यथागतम् । एवं दशावतारेषु निगृहीतः पिनाकिना ॥
पश्चादनुगृहीतश्च वक्ष्ये शृण्वन्तु तत्कथाम् ॥ ८९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुष्षष्टितमोऽध्यायः ॥

---

## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

### भृगुशापानुसारेण विष्णोः दशावतारप्राप्तिः ॥

सूतः — जामदग्न्योऽथ रामोऽभूद्भगवान् पुरुषोत्तमः । भृगुशापेन तेनैव रेणुकायाञ्च तत्प्रियाम् ॥ १
तत्राकार पिता रामं नाम्ना रूपादनिन्दमम् । उपनीतश्च कालेन रामः पित्रावदर्पिणा ॥ २
शुश्रूषणपरो नित्यं श्रद्धयाऽनन्यमानसः । केनापिकारणेनैव कदाचित्पितृचोदितः ॥ ३
रामोमातुश्शिरश्छेदं रेणुकायाश्चकार ह । ततः प्रीतेन मनसा रामः प्रोक्तो महर्षिणा ॥ ४
पुत्र शुश्रूषया प्रीतं मां विद्धि वरयाधुना । वरान्यो यो वरोऽभीष्टस्तं तं सर्वं ददामि ते ॥ ५
इति रामोवचः श्रुत्वा पितुर्वव्रे वरानिमान् । मातुः पूर्ववदुत्थानं वरं वव्रे स आदितः ॥ ६

पितुः कोपपरित्यागं कोपनस्याधिकं मुनेः । तस्यापि शिवपूजायां श्रद्धावत्वमनारतम् ॥ ७
वरत्रयं तदा रामो लब्ध्वात्मपितुरन्तिकात् । वनमाप तपश्चर्तुं शिवपूजापरायणः ॥ ८
तस्मिन् गतेऽर्जुनो यावत्यक्तकोपं मुनीश्वरम् । कृतवीर्यसुतो धेनुं कामोपपदमूषिताम् ॥ ९
प्रत्याख्यातो यदा राजामुनिना कृतवीर्यजः । कोपेनास्य शिरश्छेदं कृत्वा माहिष्मतीमगात् ॥ १०
जमदग्निप्रिया साऽपि रेणुकाग्निं विवेश ह । महत्यैव तदा वृष्ट्या शशामाग्निश्चितागतः ॥ ११
सा पुनर्दग्धवसना रेणुका ऋषिमानिनी । दुःखेन महताक्रान्ता लज्जयाच वराङ्गना ॥ १२
निंबपत्रैस्समाच्छाद्य नग्नावूरुनितंबकौ । चण्डालश्रेणिमासाद्य कञ्चित्कालमुवास ह ॥ १३
तत्र पोत्राभिधः कश्चिन्मातङ्गाख्याच कामिनी । ररक्षतुस्तां पिशाचैरभितस्तां क्षुधातुराम् ॥ १४
एतत्सर्वमशेषेण श्रुत्वा रामो वनंगतः । ईशादाराधनात्तुष्टात्संप्राप्य च परश्वधम् ॥ १५
क्षत्रियांवोधिवद्धवाउवलनस्तु वभूव ह । कार्तवीर्यार्जुनं हत्वा क्षत्रियानपरानपि ॥ १६
अस्तृजैव ततस्तेषां निवापाञ्जलिमातनोत् । नीरेन विन्दुसरसि श्रद्धया पितुरात्मनः ॥ १७
मातरंच समासाद्य पक्कणस्थां प्रणम्य ताम् । ग्रामाद्बहिस्तया सार्धं कञ्चित्कालं निनाय सः ॥ १८
शुश्रूषयाच सन्तोष्य मातरं तादृशीं पुनः । वीरहत्या निवृत्त्यर्थं क्षयद्वीरमुपास्य सः ॥ १९
काश्यपाय महीं दत्वा सर्वां वीर्यार्जितामिमाम् । वैकुण्ठभवनं प्राप्यकेरळान्पुनर (पुनःकेरळम्) द्रुतम् २०
पुरा दशरथो राजा पुत्रकामो महेश्वरम् । अयजत्पुत्रकामेष्ट्या वसिष्ठाद्यैश्च तापसैः ॥ २१
ततो महेश्वरस्याज्ञावशेन मधुसूदनः । रामो दाशरथिर्जज्ञे कौशल्यायां नृपप्रियाम् ॥ २२
सीतया पितृवाक्येन लक्ष्मणेन वनंगतः । तत्र सीतां राक्षसेन्द्रो रावणो जनकात्मजाम् ॥ २३
जहार वञ्चयित्वा तं रामं तत्र सलक्ष्मणम् । तद्वियोगाग्निसंतप्तो रामो लक्ष्मणसंयुतः ॥ २४
अगस्त्यमुनिमासाद्य रुरोद भृशदुःखितः । अगस्त्येनोपदिष्टोऽसौ रक्षसां निधनं प्रति ॥ २५
शिवमभ्यर्च्य लब्धास्त्रो बध्वा सेतु बलीमुखैः । रावणं सगणं संख्ये विजित्यहरियूथपैः ॥ २६
सीतां वैश्वानरे शुद्धामयोध्यामनयत्प्रियाम् । तत्र पट्टाभिषिक्तोऽसौ चक्रे राज्यमकण्टकम् ॥ २७
लोकापवादभीत्यैव पुनस्सीतां वनेऽत्यजत् । तस्यां भूमौ विलीनायां शुशोच भृशमातुरः ॥ २८
अश्वमेधेन देवेशं रामोऽभ्यर्च्य महेश्वरम् । सरय्वां तनुमुत्सृज्य भ्रातृभिस्सह राघवः ॥ २९
क्षीराब्धिमाससाद स्वं स्थानं पूर्ववदच्युतः । अवतारस्सतु पुरा स्त्रीदुःखसह ईरितः ॥ ३०
तमसाच वृतो यस्मान्नवेदात्मानमात्मना । द्वापरेच युगेऽप्यस्मिन् स एवपुरुषोत्तमः ॥ ३१
वसुदेवसुतो जज्ञे रोहिण्यां रामनामकः । तत्र रक्षोगणं हत्वा कृत्वा कार्यं महत्पुनः ॥ ३२
आराध्यच महादेवमंबिकासहितं प्रभुम् । योगमार्गरतो रामो वैकुण्ठं प्राप्तवान् बली ॥ ३३
पुनश्च वसुदेवस्य देवक्यां कृष्णरूपधृत् । जज्ञे विष्णुरमेयात्मा भृगुशापनियन्त्रितः ॥ ३४
तत्राभ्यर्च्य सुराधीशं शिवं शम्भुं जपन्पुनः । उपमन्युं समासाद्य विधिना तेन दीक्षितः ॥ ३५
शैवमुख्यतमोऽत्यर्थं भक्त्याऽऽराध्य च शङ्करम् । भूभारमपनीयाथ विष्णुलोकं जगाम ह ॥ ३६
पुनश्चापि कलेरन्ते कलिजा दुष्प्रजाः स्वयम् । संहरिष्यन् हयग्रीवो जातो विष्णुर्घोरसजः ॥ ३७
तत्र संपूज्य देवेशं लिङ्गमूर्तौ सदाशिवम् । कृपया तस्य निर्जित्य तिष्यजातानसज्जनान ॥ ३८
विष्णुरूपं यथापूर्वं लब्ध्वाऽगमपदमाथ सः । एवं दशावतारेषु निगृहीतश्च पञ्चसु ॥ ३९
शिवेनानुगृहीतश्च शापान्मुक्तो भृगोरिति । एतेऽवतारः कल्पेषु बहुधा वर्णिता द्विजैः ॥ ४०
वैष्णवेषु पुराणेषु निग्रहोनैव वर्णितः । देहत्यागेन तस्यैव सूचितोऽनुग्रहो' (निग्रहो) द्विजाः ॥

निगृहीतः कुमारेण वीरभद्रादिभिर्गणैः । सूचितस्स तु मत्स्याक्षिकूर्मास्थिक्रोडश्रृङ्गकैः ॥ ४२
सिंहचर्मशिरोमुण्डत्रिविक्रमहास्थिभिः । शिवांगाकल्पमध्यस्थैः पुराणश्रुतिचोदितैः ॥ ४३
ततो देवा हरिब्रह्मप्रमुखाः परमेश्वरम् । दृष्ट्वा भीतेन मनसा त्यक्त्वाऽहंकारमात्मनः ॥ ४४
कर्मसु स्वेषु वर्तन्त इति वेदविदो विदुः । एकदा विष्णुभवनं पुरोपेन्द्रस्समाययौ ॥ ४५
स्वमेवमूर्तिभेदस्थं प्रद्युम्नादिवदच्युतः । मिथः संभाषणं कृत्वा कञ्चित्कालमवस्थितः ॥ ४६
एतस्मिन् समये कण्वः काश्यपस्य सुतो महान् । वैकुण्ठभवनं प्राप विष्णुसंभाषणोत्सुकः ॥ ४७
स दृष्ट्वा तौ समाधान्ते शिवभक्तं दृढमतम् । न ह्यवलोकयतामक्ष्णा नासनं ददतुश्च तौ ॥ ४८
नवाचश्चाप्यवदतामासातां मौनमुद्रया । तौ तदा तादृशौ दृष्ट्वा चुकोप मुनिसत्तमः ॥ ४९
यच्छापात्सान् शिवस्येशान्मात्वा तूष्णीं बभूविथ । विष्णोऽतस्त्वमनेकानि जन्मानि भजमद्गिरा ॥ ५०
मूकश्च तत्र सर्वेत्र दत्तश्शापो मयाऽत्रवै । इयञ्च लक्ष्मीस्त्वत्पार्श्वेस्थिता मृगवदत्रवै ॥ ५१
मच्छापाच्च मृगी भूयादुपेन्द्रोऽप्ययमीदृशः । कैराती योनिमासाद्य काननेष्वसतां चिरम् ॥ ५२
तव भक्ताश्च लोकेऽस्मिन् सन्तु ते शिवनिन्दकाः । भस्मरुद्राक्षनिन्दाञ्च कुर्वन्तु मतिमोहिताः ॥ ५३
इति शप्त्वा गते तस्मिन् कण्वे निजमथाश्रमम् । विष्णुश्शापभयात्सद्यः कमलालयमेत्य च ॥ ५४
तत्राराध्य महादेवमप्रीणयद्वनन्यधीः । ततः प्रीतो महादेवः कण्वमाहूय तापसम् ॥ ५५
एकजन्मानुभोक्तारं चक्रे शापस्य माधवम् । महालक्ष्मीं मृगाकारामेकजन्मैव शङ्करः ॥ ५६
उपेन्द्रस्यापि जन्मैकं कैरातमकरोच्छिवः । तेन विष्णुश्शिवमुनिस्सञ्जातः कण्वशापतः ॥ ५७
लक्ष्मीश्चापि मृगी जाताकानने मुनिशापतः । उपेन्द्राद्याश्च कैरातीं योनिमापेदिरे तदा ॥ ५८
मृगी तं सा मुनिं मूकं दृष्ट्वा गर्भवती ह्यभूत् । सूत्वा सा कनकां हृद्यां मृगीत्यक्त्वा पलायत ॥ ५९
किरातोऽसौ वने कन्यामादायायाश्च पक्कणम् । कुमाराय ददौ कन्यां शबरीवल्लिनामकाम् ॥ ६०
ततश्शापाद्विनिर्मुक्तास्सर्वे जग्मुर्यथागतम् । कदाचित्कलहे वृत्ते सङ्ग्रामात्क्षुपदधीचयोः ॥ ६१
क्षुपस्यैव तु साहाय्यं कर्तुकामो जनार्दनः । दधीचाश्रममासाद्य ब्राह्मणच्छद्मसंवृतः ॥ ६२
ययाचे ब्राह्मणाच्छ्रेष्ठः क्षत्रियो मुनिसत्तमः । वदैवमेकदा विद्वन्महावाक्येन मतस्तव ॥ ६३
इति श्रुत्वा दधीचोऽपि सांत्वपूर्वं हरेर्वचः । नाहं वक्ताऽस्म्यसत्यस्य जाने त्वाञ्च जनार्दन ॥ ६४
न बिभेमि विशेषेण क्षत्रियादहमच्युत । ततः क्रुद्धो भुजाभ्यामस्तत्तस्मिन्नस्त्राण्यथासृजत् ॥ ६५
तत्सर्वं भक्षयामास त्रिशूलं दर्भसंभवम् । ततः क्रुद्धो महाविष्णुर्विश्वरूपमदर्शयत् ॥ ६६
तद्विश्वरूपं स मुनिस्स्वंस्तम्भ्याऽऽत्मन्यदर्शयत् । ततश्चक्रं ससर्जास्मै विष्णुः कोपादमर्षितः ॥ ६७
चक्रं तदस्थिसंघट्टे कुण्ठितारं बभूव ह । देवानामपि सर्वेषां विष्णुसाहाय्यकारिणाम् ॥ ६८
आसन्निषकुण्ठिताभीषि तस्मिन्नेव मुनीश्वरे । एतस्मिन्नन्तरे ब्रह्मा विष्णुं देवांश्च सायुधान् ॥ ६९
न्यवारयत्ततो युद्धादसांप्रतमिति ब्रुवन् । तस्मिन्नुपरते युद्धे शशाप मुनिरच्युतम् ॥ ७०
देवांश्च सर्वे एवैते यूयं वीरेण मर्दिताः । रुद्रकोपसमुत्थेन विष्णुना सह माचिरम् ॥ ७१
विष्णुभक्ताश्च ये भूयो सन्तु पाषण्डमाश्रिताः । शिवनिन्दापरा नित्यं पतन्तु नराधमाः ॥ ७२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चषष्टितमोऽध्यायः ॥

---

॥ अथ षट्षष्टितमोऽध्यायः ॥

शिवपूजामहिमानु वर्णनम् ॥

सूतः —

ततो विष्णुर्भयाविष्टः स्वात्मानं निन्दयन् हृदा । कथं किमर्थमेतेन कलहस्समपद्यत ॥ १
फलं वाऽत्र मयाऽऽप्तं किं शापस्त्वाप्तोऽनिवारितः । तद्दोषपरिहाराय शरणं यामि शङ्करम् ॥ २
इति सञ्चिन्त्य मनसा चिदंबरमथासदत् । तत्राराध्य महादेवं श्रीमदभ्रसभाङ्गणे ॥ ३
तत्प्रसादेन निर्मुक्तपापस्सद्योऽभ्यवर्तत । गन्धमादनमासाद्य कदाचिद्विष्णुरव्ययम् ॥ ४
समाराध्य महादेवं वरद्वयमयाचत । मामङ्गीकुरु देवेश वाहनत्वशरत्वयोः ॥ ५
अस्मित्वयुक्त्याऽथ तं चक्रे दाहेतु तिसृणां पुराम् । वाहनत्वे शरत्वेच कल्पयामास माधवम् ॥ ६
वृषेन्द्रो भगवान्विष्णुस्तत्प्रसादादारभ्य हेतिराट् । मैनाके च पुरा शैले विष्णुराराध्य शङ्करम् ॥ ७
प्रसन्नं प्रार्थयामास वरं वरसहस्रदम् । कृताञ्जलिपुटो भूत्वा प्रणम्य विनयान्वितः ॥ ८
उवाच देवदेवेशं नरकाख्यो महासुरः । तपसाऽऽराध्य लोकेशं वरं वव्रेऽसुराग्रणीः ॥ ९
यच्छिवाख्यं वस्तु परमवाङ्मनसगोचरम् । मायामयेन देवेन सहैकीभूय संयुगे ॥ १०
मया युद्धं यद्येतस्यादस्तु तत्र वधो मम । जित्वा देवानहं सर्वलोकाध्यक्षो जगत्पते ॥ ११
भूयासमिति लब्ध्वैवं नरको भूमिसंभवः । त्रैलोक्यमनुभुङ्क्तेऽथ देवान् सर्वान् विजित्य सः ॥ १२
अहं तेन विभो युद्धे नरकेन पराजितः । शम्भो बलेन महता वाराणामेकविंशतिम् ॥ १३
मन्येऽप्येवं द्वारकायां वसतिः क्रियते मया । तद्भीत्या पुत्रमित्राद्यैस्त्यक्त्वा तु मधुरां पुरीम् ॥ १४
स ममान्वेष्यति सदा पर्वतानां गुहासु च । त्वं देवदेव सर्वेषामवाङ्मनसगोचरः ॥ १५
मयि स्थिरवैक्यभावेन माहेयं संहरासुरं । इति प्रणम्य देवेशं साञ्जलिः पुरतः स्थितः ॥ १६
प्रार्थितस्त्वेवमीशानः प्राह भूयो जनार्दनम् । अहं ते दक्षिणे पार्श्वे स्थास्यामि मधुसूदन ॥ १७
देवानामुपकाराय वीर्यं दास्यामि तेऽनघ । इति लब्ध्वा वरं शंभोः विष्णुः कृष्णवपुर्धरः ॥ १८
बलेन महता युक्तो युद्धाय नरकासुरम् । आजुहाव महाबाहुरावनेयमरिन्दमः ॥ १९
ततोऽभूद्युद्धमतुलमुभयोरपि सेनयोः । ततस्सर्वेश्वरो विष्णावाविवेशासुरान्तकः ॥ २०
दक्षिणस्यापि तत्पार्श्वमास्थितः परमेश्वरः । चक्रेणैव ततो विष्णुश्चिच्छेदास्य शिरस्तदा ॥ २१
सोऽपि देवेन महता विष्णुनिघ्नेन संहृतः । तत्प्रसादादवाप मुक्तिं वै तद्देहेच लयं गतः ॥ २२
गाणपत्यमसौ लेभे स्वान्ते दृष्ट्वा सदाशिवम् । सर्वेऽपि विस्मिता भूत्वा तस्थुर्मुदितदिक्षयः ॥ २३
ईश्वरोऽपि च कैलासं विष्णुं स्वकमवाप भूधरम् । कृष्णोऽपि तं प्रणम्येशं द्वारकामाप हृष्टधीः ॥ २४
भूत्वा सुरा निर्भयाश्च देवलोकमगुर्मुदा । पुनः कदाचिच्छ्रीकान्तो ह्यमोपयन ईश्वरम् ॥ २५
आराध्यासादरं धर्मे प्रसन्नात्पार्वतीपतेः । त्वया रन्तुमपेक्षेशाधुना भूत्वा स्त्र्यप्यहम् ॥ २६
देयो वरो ममाधीश प्रसन्नो यदि शङ्कर । इत्येवमीश्वरस्तस्मै वरमन्तर्धिमाययौ ॥ २७
ततस्तु कारणादेवममृतं क्षीरसागरात् । गृहीतमसुरैर्विष्णुर्मोहिन्याकारमास्थितः ॥ २८
तेनासुरान्मोहयित्वा पाययित्वामृतं सुरान् । ऊर्ध्वरेतसमीशानमपि मोहमुपानयत् ॥ २९
रममाणो महेशेन मोहिन्याकारमास्थितः । लेभेच पुत्रं शास्तारं कामदातेरपीश्वरात् ॥ ३०
कल्पान्तरे पुनः कस्मिन् पद्मपुरस्ते हरिः । परान्तकाले स्त्रीभूत्वा विष्णुरीशं वशं नयत् ॥ ३१

अत्रैव ततो ब्रह्मा विष्णावुद्भवत्पुरा । तद्विष्णुश्शिवपूजायामाहात्म्यात्किल शूलिनः ॥ ३२
दयितेति श्रुतो लोके पूजा सर्वस्य कामधुक् । केदारमेकदाऽभ्येत्य दुर्वासा मुनिसत्तमः ॥ ३३
शिवपूजापरो भूत्वा तत्रोवास महातपाः । तदानीमीश्वरं द्रष्टुं केदारस्थाननायकम् ॥ ३४
संप्रापारुह्य गरुडं वैकुण्ठाद्विष्टरश्रवाः । तत्राराध्य महादेवं प्रीत्या तथोदकं हरिः ॥ ३५
पिपासुः स्वं पुनर्लोकमारुह्य विनतासुतम् । तत्र पूजापरं दृष्ट्वा दूरे दुर्वाससं मुनिम् ॥ ३६
समीपं तस्य संप्राप समालोक्य च पूजनम् । जगाम च पुनर्लोकं नमस्कृत्य तु तं तदा ॥ ३७
अर्च्यमानश्च देवेशमनमन् प्रययौ हरिः । स्वं लोकञ्च समासाद्य स्थिते तस्मिन्मधुद्विषि ॥ ३८
समाप्य पूजां दुर्वासास्समीपं प्राप चक्रिणः । अशपच्च महाविष्णुमतिमन्युर्मुनीश्वरः ॥ ३९
यन्मयार्चितमीशानं लिङ्गमूर्तिं जनार्दन । अप्रणम्य गतोऽसि त्वं केदारे स्मयदूषितः ॥ ४०
ततस्तस्यास्य पापस्य गरुडो वाहनं तव । गतजीवो भवत्वद्य श्रीश्च तेऽस्तु समुद्रगा ॥ ४१
तवाङ्गजश्च रुधिरं भैरवेण हृतं भवेत् । शूलाग्रेण च निर्भिन्ने ललाटे मधुसूदन ॥ ४२
भक्ताश्च ते शिवद्रोहपरा भूयासुरन्वहम् । इति शप्त्वा गते तस्मिन्दुर्वाससि मुनीश्वरः ॥ ४३
श्रीकालहस्तिमासाद्य शिवमानर्च केशवः । तस्मै प्रसन्नो भगवानुमया सह शङ्करः ॥ ४४
तच्छापस्य प्रतीकारं प्राह देवः पिनाकधृक् । हत्वा तु भैरवो रक्तं स्वां पुनर्जीवयत्वयम् ॥ ४५
लक्ष्मीश्च मथनेऽम्भोधेरुत्पत्स्यति तथानघ । गरुडोऽपि च संभूय पुनश्चामृतमाहरन् ॥ ४६
नियुध्यच्च चिरं युद्धे भूयात्कुयोऽपि वाहनम् । तथैव भैरवो विष्णुरक्तमादाय शूलतः ॥ ४७
पुनरुज्जीवयामास भक्तं भक्तार्तिभञ्जनः । लक्ष्मीश्चाम्भोधिसंभूता गरुडः काश्यपात्पुनः ॥ ४८
लक्ष्मीर्विष्णुं पुनः प्राप नियुध्य गरुडोऽपि तम् । विष्णोः पूजाबलेनैव शापमुक्तिर्नचान्यथा ॥ ४९
तस्मात्पूजासमं भोगमोक्षदं नैव विद्यते । एकदा च सुरास्सर्वे पूर्वदेवैरुपद्रुताः ॥ ५०
विष्णुं शरणमभ्येत्य भीतभीता व्यजिज्ञपन् । भगवन्नसुराक्रान्तमाधिपत्यञ्च वैबुधम् ॥ ५१
त्वञ्चेश्वरेण चास्माकं रक्षणे विनियोजितः । दुष्टानां शिक्षणे शिष्टरक्षणे च विशेषतः ॥ ५२
अतस्त्वं शाधि देवानामवनायासुराधमान् । इति श्रुत्वा हरिस्तेषां पुनः प्राहावलोक्य तान् ॥ ५३
मया युद्धेन हन्तव्या असुरा आयुधञ्च नः । चक्रं दधीचिवज्रास्थिकुण्ठितारं बभूव तत् ॥ ५४
तमूचुरमरा भूयश्चक्रमीशेन निर्मितम् । जलन्धरवधार्थं यत्तदर्थं भव यत्नवान् ॥ ५५
विष्णुस्तमाशु मन्वानः काञ्चीमासाद्य वाञ्छितम् । लब्धुकामोऽर्चयामास कमलैरन्वहं शिवम् ॥ ५६
सहस्रैस्तत्र चैकोने कदाचिन्नेत्रमात्मनः । पद्मप्रतिनिधिं चक्रे विष्णोस्तुष्टोऽस्य शङ्करः ॥ ५७
चक्रं सुदर्शनं प्रादात्सहस्रादित्यसन्निभम् । पुनश्च तं वरेणेशश्छन्दयामास तुष्टितः ॥ ५८
सोऽपि वव्रे वरं पद्मसदृशं नेत्रमात्मनः । पद्माक्ष इति विख्यातिः स्तुवताञ्च तथा च माम् ॥ ५९
त्वमेव सकलानिष्टान् प्रयच्छ परमेश्वर । इति सर्वेश्वरादिष्टानवाप्य पुरुषोत्तमः ॥ ६०
संहृत्य दितिजान् सर्वांश्चक्रेणारक्षदच्युतः । भूयोऽसुरार्दितान् देवानखिलञ्च जगत्त्रयम् ॥ ६१
तदाप्रभृति पद्माक्षं विदुस्सर्वे मुनीश्वराः । श्रीवाञ्छपे च पुरा विष्णुः कदाचित्पुत्रवाञ्छया ॥ ६२
समाराध्य भावेन शंभुमेकमनन्यधीः । दत्ते शिवेन पुत्रेऽस्मै कुपिताऽनर्चिता शिवा ॥ ६३
तव पुत्रो हरे रुद्रकोपाद्दग्धो भवेत् क्षणात् । मां विनेदं यदभ्यर्च्य लब्धवानसि पुत्रकम् ॥ ६४
शप्तो विष्णुरुमादेव्या पुनश्शंभुं सहोमया । स्कन्देन सहितं भक्त्या समाराध्याप्यतोषयत् ॥ ६५
उमा प्रसन्ना प्राहेदमीशानाश्रिवचोदिता । वरेण लप्स्यते पुत्रो नष्टदग्धोऽपि वै मम ॥ ६६

पुनश्चेशाज्ञया तेऽस्तु लब्धदेहान्तरोऽच्युत । इत्येवं परमीशेन देवी चान्तर्धिमाययौ ॥ ६७
तथाच विष्णुः प्राप्तो वै पुत्रं कामं रतिप्रियम् । निर्दग्धश्च पुनः कामदिशावालीकाक्षिवह्निना ॥ ६८
उत्पादितस्तु देवेन देवानाञ्च प्रियेच्छया । तस्मात्पूजा पुत्रलाभहेतुश्चैवं समीरिता ॥
सर्वाभीष्टप्रदाचैव सत्यमुक्तं न संशयः ॥ ६९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्षष्टितमोऽध्यायः ॥

---

॥ अथ सप्तषष्टितमोऽध्यायः ॥

श्रीशिवंप्रति श्रीविष्णुना स्वीय अवतार लिङ्गधारण प्रार्थना ॥

सूतः – पुनः कदाचित्पद्माक्षो मायापुर्यां महेश्वरम् । संपूज्य निर्जितो दैत्यैरतिमायाविशारदैः ॥ १
प्रसन्नमीश्वरं तत्र प्रोवाच मधुसूदनः । कालनेमिमुखा देव दैत्या मायाविनो भृशम् ॥ २
तानशक्तोऽस्मि समरे विजेतुमतिमायिनः । तेषां माया महेशान मायया निर्जिता भवेत् ॥ ३
प्रसीद तादृशं देहि वरं वरसहस्रद । इति लब्ध्वा वरं विष्णुर्मायी जातस्तदादि सः ॥ ४
बलञ्चात्यन्तमसुरावलेपक्षममात्मनः । सञ्जहारासुरान् सद्यो मुरारिरमरारिहा ॥ ५
एकदा च पुरा काश्यां कमलापतिरीश्वरम् । प्रीतश्चकेऽर्चयाऽत्यर्थं ययाचे वरमुत्तमम् ॥ ६
मदीयान्यङ्गजानीश धृतानि भवताऽङ्गके । ममाहङ्कारशान्त्यर्थं ब्रह्मादीनामपीश्वर ॥ ७
तथापि चाधिकारोत्थमदेन मम मानसम् । अहङ्कारसमाविष्टं कदाचिद्भवतीश्वर ॥ ८
(तथापि चाधिकारोत्थमदेन मम मादृशाम् । अहङ्कारसमावेशः कदाचिद्भवतीश्वरेत्यपि पाठः ॥)
इतः परं प्रसन्नोऽसि यस्य कस्यापि चेत् प्रभो । ममाङ्गास्थीनि संभाव्य भूषणत्वेन सन्ततम् ॥ ९
प्रसन्नो भव सर्वेषां गवेशाग्ल्यै जगद्गुरो । नामानीमानि ते सन्तु विष्णुकन्धरपातनः ॥ १०
मत्स्याक्षिभृच्च कूर्मास्थिसमलंकृतविग्रहः । क्रोडश्रृङ्गधरो नारसिंहचर्माम्बरोऽपि च ॥ ११
त्रिविक्रमास्थिदण्डी च भव भूतपतेऽधुना । एभिर्नामभिरीश त्वां ये स्तुवन्ति नरोत्तमाः ॥ १२
तेषामिष्टप्रदो भूया भव मय्यनुकंपया । इति दत्त्वा वरं शंभुस्तत्रान्तर्हितोऽभवत् ॥ १३
तदादि च महादेवमेभिर्नामभिरीश्वरम् । स्तुवन्तोऽभीष्टमासाद्य मुक्तिभाजो भवन्ति ते ॥ १४
विष्णोरपि प्रियास्तेतु देवानामपि वल्लभाः । विष्णुश्च मुक्ताहङ्कारोऽभवद्भक्तेषु चास्य वै ॥ १५
भक्तियुक्तोऽधिकं लोके बभूवानन्दनिर्भरः । हरीश्वरे हरं विष्णुः कदाप्याराध्य भूसुराः ॥ १६
वरं लब्ध्वा महेशानात् प्रसादाघटनेऽस्यतु । परदं महलं सत्यस्वादयित्वाप निर्वृतिम् ॥ १७
एकदा च पुरा विष्णुः श्वेतारण्येऽर्चयच्छिवम् । वरं वव्रे प्रभुं सांबं प्रणम्य परया मुदा ॥ १८
यया देव चितोद्धार्थं सृज्यते निखिलं जगत् । बहूनि मे व्यतीतानि जन्मानि परमेश्वर ॥ १९
इतः परं ममापीश भूयान्मुक्तिः परा त्वयि । ततः प्रोवाच तं विष्णुं प्रसन्नः परमेश्वरः ॥ २०
प्रवृत्ते सर्वसंहारे प्राणिनां मधुसूदन । परान्तकाले संप्राप्ते त्वाञ्च संहृत्य लीलया ॥ २१
तवास्थिभस्मचर्मादिभूषितो मुक्तिदोऽस्म्यहम् । परानन्दश्च भूषश्च हाया ते परया मुदा ॥ २२

सोढ्वा सर्वापराधांस्ते प्राप्ते सृष्ट्यन्तरे पुनः । सारूप्यं ते प्रदास्यामि ततस्सायुज्यमुत्तमम् ॥ २३
वरं दत्त्वैवमीशोऽस्मै प्रसन्नोऽन्तरधीयत । तथैवाद्यास्थिभस्माद्यैरलंकृततनुर्हरिः ॥ २४
सर्वांश्चैवानुगृह्णाति सायुज्यमपि विष्णवे । तस्माल्लोके महेशस्य पूजया पुरुषोत्तमः ॥ २५
रक्षिताऽभूत्समृद्धात्मा मायावी पुत्रवान् हरिः । बली च सर्वदेवेभ्यस्तस्मादधिकोऽपि सः ॥ २६
शापमुक्तिश्च तस्यैव पूजया परमेशितुः । एवं विष्णुकृतास्त्वीशपूजासु कतिचित् क्वचित् ॥ २७
प्रोक्ता मयाऽद्य सर्वत्र क ईष्टे वर्णितुं भुवि । शृण्वतामपि चैतासां सर्वामीप्सितसिद्धयः ॥ २८
ब्रह्मणाच कृतास्त्वीशपूजासु कतिचिद्ब्रुवे । शृण्वन्तु मुनयस्सर्वे सावधानेन चेतसा ॥ २९
इति सूतस्समालोक्य महर्षीन् प्राह हर्षधीः ॥ ३०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तषष्टितमोऽध्यायः ॥

---

॥ अथ अष्टषष्टितमोऽध्यायः ॥

ब्रह्मणा श्रीमहेश्वरमाराध्य तस्मात्बहुविध वरप्राप्तिः ॥

सूतः — श्रीकाशानगरे पूर्वं ब्रह्मा देवं त्रियंबकम् । तोषयामास तपसा तीव्रेण परमेश्वरम् ॥ १
पूजया च प्रसन्नोऽस्य शङ्करश्चन्द्रशेखरः । वरं वरय भद्रं ते प्रयच्छामि तवेप्सितम् ॥ २
इति शंभोर्वचः श्रुत्वा धाता प्रश्रयणान्वितः । स्वामिन्नमशिवः पूर्वं भैरवेण महात्मना ॥ ३
महद्धास्यचित्तस्य शिरश्छिन्नं करजेन वै । महत्यथापि मां भीतिस्तत एव सदाप्रभो ॥ ४
नितरां चपलं चित्तं सर्वतः परिधावति । न शक्यते मया स्रष्टुं जगत्सर्वं यथापुरम् ॥ ५
प्रयच्छ तां महादेव शक्तिं स्रष्टौ जगत्प्रभो । इति धातुर्वचश्श्रुत्वा तथा दत्वा वरं प्रभुः ॥ ६
अन्तर्दधे महादेवस्तत्रैवांबिकया सह । लब्ध्वा वरममुं धाता भयं त्यक्त्वाऽतिदुस्तरम् ॥ ७
स्थैर्यञ्च प्राप्य मनसा महादेवमनुस्मरन् । ससर्ज सकलं विश्वं यथापूर्वं निरन्तरम् ॥ ८
तुष्ट्या परमया युक्तस्तदा प्रभृति विश्वसृक् । एवं स्थिते विधिः पश्चात्ससर्जाप्सरसां गणान् ॥ ९
तिलोत्तमां विशालाक्षीं सर्वावयवपेशलाम् । सृष्ट्वाऽस्यां नितरां सक्तो बभूवाज्ञानमोहितः ॥ १०
तत्संभोगरतिस्तां च प्रार्थयामास भूरिशः । तदा सा त्वं पिता ब्रह्मन् जगतो मे विशेषतः ॥ ११
नयुक्ता तद्रतिस्स्वामिन्मया तव जगत्प्रभो । इत्युच्चैर्वचसा दूरं दुद्रावैषा भयान्विता ॥ १२
दृष्ट्वैनं शंभुगणपा द्रावयन्तं विधिं तदा । स्वयं तं द्रावयामासुः पलायन्तं सुदूरतः ॥ १३
तदा प्राप गिरिं वेधास्सुपार्श्वाख्यं मनोहरम् । तत्रगूढं चकारायं शिवपूजां मनोरमाम् ॥ १४
पूजया तस्य देवेशः प्रादुरासीन्महेश्वरः । तं दृष्ट्वा देवमीशानं प्रणनाम पुनःपुनः ॥ १५
सोऽब्रवीदुच्यतां वेधः कांक्षितं मनसि स्थितम् । इति शंभोर्वचः श्रुत्वा विधिः प्राह पुनश्शिवम् ॥ १६
त्वन्मायामोहितश्शंभो कामबाणेन पीडितः । तिलोत्तमामहं दृष्ट्वा तत्संभोगोत्सुको भृशम् ॥ १७
मद्द्रवं दूरतो दृष्ट्वा शिवदूतान्महौजसः । द्रुतगत्या गुहामस्य प्राप्तवानस्मि शंकर ॥ १८
तद्भुत्या भीतिरधुना वर्तते नितरां मयि । यदि प्रसन्नो भगवान्मह्यं प्रकाम भोः पितः ॥ १९
यदि देयो वरस्त्वं स्त्रीमायैषा अहत्वलम् । विश्वाधिकोऽसि भगवन्नूर्ध्वरेता इति श्रुतः ॥ २०

ऊर्ध्वरेत विरूपाक्ष भगवन्तमुमापतिम् । भजन्ति ये महात्मान कामस्तान्नहि बाधते ॥ २१
तस्मादित पर शम्भो मायैषा मा जहात्वलम् । सावित्री याच गायत्री याचान्यापि सरस्वती ॥ २२
तिस्र एव स्त्रियो नित्य ताभिरस्तु रतिर्मम । तदन्यासु प्रभो मास्तु प्रीतिर्मे त्वत्कृपाबलात् ॥ २३
तिलोत्तमाभिद्रवणजन्यपाप विनश्यतु । इति ब्रह्मवच श्रुत्वा तथेत्याह महेश्वर ॥ २४
अन्तर्दधेच देवेशस्तत्रैवाविकया सह । इति लब्ध्वा वर शम्भोर्ब्रह्मा प्राप निज पदम् । २५
तत्रावसज्जगत्सृष्ट्या क्रीडयस्ताभिरप्यलम् । त्यक्तान्यनारीमायोऽसौ शिवमेव हृदिस्मरन् ॥ २६
मुक्ताखिलाघसंघश्च शिवध्यानप्रभावत । स कदाचित्सरस्वत्या क्रीडयन् बहुकालत ॥ २७
ससर्ज दैत्यान् पापिष्ठान् जगद्द्रोहरतान् भृशम् । जघानतान् स्वय कोपादात्मजातानपि प्रभु ॥ २८
तद्दोषस्य विनाशाय पूजयामास शङ्करम् । श्रीकाळहस्तिनगरे सर्वपापनिकृन्तने ॥ २९
त्यक्त्वा तत स्वक दोष सरस्वत्या समन्वित । विशुद्धात्मा ययौ प्रीत्या ब्रह्मलोक सनातनम् ॥ ३०
स कदाचित्पुनश्शम्भु प्रणम्य रजताचले । ब्रह्मलोकाभिगमने ययौ बद्धाञ्जलिर्विधि । ३१
क्रीडन्त पुरत स्कन्द कुमार पुष्करस्रजम् । जानन्नपि ययौ तूष्णीमजानन्निव गर्वत ॥ ३२
त दृष्ट्वा तादृश स्कन्दस्समाहूय विधि तदा । पप्रच्छ प्रणवस्यार्थ कोवेत्ति निजलीलया ॥ ३३
वदन्तमर्थ त कोपादन्यथा स विधि तदा । मुष्ट्या सन्ताड्य शिरसि कारावेश्मन्यपातयत् । ३४
स्वय ससर्ज निखिल जगत्पूर्ववदेव स । विधातुस्त्वथ वृत्तान्त श्रुत्वा शम्भु स्वयंगिर ॥ ३५
मोचयामास त स्कन्द प्रीणयित्वा महेश्वर । तत प्रणम्य स पुन स्कन्द साक्षाच्छिवप्रियम् ॥ ३६
विमुक्तस्तेन परया प्रीत्या काञ्चीपुरी शुभाम् । संप्राप्य तत्र चैकाम्रनाथ साक्षात्कपार्वतम् ॥ ३७
सपूज्य तत्र लिङ्गञ्च स्वनाम्ना स्थाप्य भक्तिमान् । मुक्तवान् स्वकृत दोष तत्प्रभावात्तदाऽब्जभू ॥ ३८
चकार स्वाधिकारञ्च यथापूर्व पदे स्थित । पुनर्विचिन्तयन् किञ्चित्पूजयामास शङ्करम् ॥ ३९
नीलाद्रिं समनुप्राप्य भक्त्या परमया विधि । तत्राविरासीद्भगवांस्तस्मै प्रीतस्तदा शिव ॥ ४०
वर वरय भद्र ते यत्ते मनसि वर्तते । इति शम्भोर्वच श्रुत्वा धाता बद्धाञ्जलि पुर ॥ ४१
भवन्नृत्तावलोकाय विष्णुनाऽऽराधित पुरा । प्रसन्नो प्रददौ तस्मै पटहित्व निजान्तिके ॥ ४२
भवास्तदद्य भगवन्मा तु नृत्ताभिकाङ्क्षिणम् । रक्ष नृत्तावलोकाय ताळित्व परिकल्पय ॥ ४३
अन्यथा तावक नृत्त न शक्तोऽह निरीक्षितुम् । गणेभ्यो यत्तदक्तेभ्यो भय भवति मे महत् ॥ ४४
इति धातुर्वचश्श्रुत्वा तथेति जगदीश्वर । दत्वाऽस्य ताळ सुमहत्तत्रैवान्तर्दधे स्वयम् ॥ ४५
तदाप्रभृति वेधाश्च वादयस्ताळवाद्यकम् । दृष्ट्वा नृत्त नटेशस्य तस्थे प्रीत्या समन्वित ॥ ४६
तथा ब्रह्मा ब्रह्मलोकें पूजयामास शङ्करम् । तस्मै प्रसन्नो भगवान् गिरमूचे स्मितानन ॥ ४७
तवेप्सित प्रदास्यामि वद ब्रह्मन्निहाधुना । रथाधिरूढ देवेश भगवन्तमुमासखम् ॥ ४८
सेवितु मम भो शम्भो वाञ्छाच हृदि वर्तते । नशक्यते च संबाधे सेवितु त्वा महेश्वर ॥ ४९
ताडयन्ति च नन्दीशप्रमुखा वेत्रपाणय । सान्निध्य तव देवेश रथस्य परिकल्पय ॥ ५०
इति ब्रह्मवच श्रुत्वा पर दत्वा महेश्वर । अन्तर्दधे क्षणादेव तत्रैव परमेश्वर ॥ ५१
तदाप्रभृति धाताऽपि रथसान्निध्यमाप्तवान् । चोदयामास वेधाश्च न् प्रस्थानसमये प्रभो ॥ ५२
पुरा कैलासशिखरे पूजयित्वा महेश्वरम् । प्रसन्ने च महादेव प्रार्थयामास वै विधि ॥ ५३
दिव्यु लोकाश्च सर्वशास्त्व प्रसादान्महेश्वर । विलेखुमस्य मे शक्तिर्यमर्तुमुरदेऽपि च ॥ ५४

पुनश्चापानमार्गेण तथा निस्सारणाय च । इति प्रार्थ्य महादेवं प्राप्य तद्वरमुत्तमम् ॥ ५५
विरोध्य विष्णुं लोकैस्तं विलेढ्यानुपुरा विधिः । ततस्तत्प्रार्थितो लोकैर्मुमोचापानमार्गतः ॥ ५६
विष्णुं लोकान्यथापूर्वं ससर्जाच्युतशासनात् । ऊर्ध्वभागं महेशस्य महालिङ्गस्वरूपिणः ॥ ५७
इत्थमनहमर्होति यथोक्तं विष्णवे पुरा । तद्दोषपरिहाराय विधिर्विश्वेश्वरं शिवम् ॥ ५८
पुष्पेऽञ्जनाचले पूर्वं पूजयामास भक्तितः । पूतात्मा पूजया शंभोस्तस्मात्पापाद्भयानकात् ॥ ५९
जगत्ससर्जनिखिलं यथापूर्वमतन्द्रितः । श्रीपर्वते पुरा धाता शिवपूजां चकार हि ॥ ६०
तदा प्रसन्नं देवेशं शिवं परमकारणम् । प्रार्थयामास च विधिः प्रणम्य भुवि दण्डवत् ॥ ६१
स्वामिन्महासनं पद्मं वाहनं हंसमेव च । हंसयागे पुरा दग्धा यद्यौ भवति तापकाः ॥ ६२
गणास्ताण्डवेन बुभुजुर्दग्धेनाग्नौ महेश्वर । तन्मह्यमासनं पद्मं हंसं वाहनमीश्वर ॥ ६३
परिकल्पय विश्वेश प्रणतोऽस्मि तवाधुना । तथेति तद्वरं शंभुस्तस्मै दत्वा स्वयम्भुवे ॥ ६४
अन्तर्हितोऽभवत् क्षिप्रं विधिरप्यगमत्सुखी । ब्रह्मलोकमनुप्राप्य देवैस्सह पितामहः ॥ ६५
पुनश्च विधिराराध्य देवमव्ययमीश्वरम् । श्रुतिपूर्वां ततो लब्ध्वा वेदान् साक्षान्महेश्वरात् ॥ ६६
तदुक्तं धर्मं संभाव्य ससर्जैव चराचरम् । पुरा कदाचित्सपुनर्ब्रह्मा लोकपितामहः ॥ ६७
हेमकूटमनुप्राप्य तत्र लिङ्गे महेश्वरम् । अर्चयामास विधिवद्देविकापतिमव्ययम् ॥ ६८
ब्रह्मा प्रसन्नमालोक्य पितरं ब्रह्मणस्पतिम् । यये वरमिमं ब्रह्मा जन्ममृत्युभयार्दितः ॥ ६९
परान्तकाले भगवन् जगदेतच्चराचरम् । संहृत्य विष्णुना सार्धं विष्णौ दग्धा दयाधिक ॥ ७०
तद्देहास्थिभस्मानि कपालानि कचानपि । धृत्वा विभूषणत्वेन करोषि किल ताण्डवम् ॥ ७१
तद्वन्ममापीश पराब्दे समुपस्थिते । देहं परममेनं त्वं संहृत्य पुरुलीलया ॥ ७२
मद्देहमास्थिभस्मानि कपालानि कचानपि । धृत्वैवाभरणं शंभो नृत्तं कुरु दयानिधे ॥ ७३
तेनैव च कृतार्थोऽस्मि न पुनर्जन्म मे ततः । महादहनमभ्येत्य भवल्लोचनवह्निजम् ॥ ७४
कस्य भूयोऽस्ति जन्मेश त्वद्गात्राम्बरभस्मनः । त्वज्जटास्पर्शलब्धायां गङ्गायामस्थि भस्मया ॥ ७५
यस्य कस्यापि वा मुक्तिः किमस्ति तव देहगम् । विज्ञप्तिमयमस्यैवं तथास्त्विति तिरोदधे ॥ ७६
सन्तुष्टमानसो ब्रह्मा स्थितः कालं समीक्ष्य च । तथैव तस्य वै शंभुः पराब्दे समुपस्थिते ॥ ७७
विधिं संहृत्य हरिणा तदस्थिकृतभूषणः । अनन्तं परमं भावं स्वात्मन्यक्षात्मनः स्मरन् ॥ ७८
अनुगृह्यैवमीशानो ब्रह्माणं तं व्यमोचयत् । एवं ब्रह्मा समाराध्य प्राप्तवान्वरान् शिवात् ॥
महत्त्वमेषाञ्च को वेत्ति मया यत्किञ्चिदीरितम् ॥ ७९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टषष्टितमोऽध्यायः ॥

---

## ॥ अथ एकोनसप्ततितमोऽध्यायः ॥

### इन्द्रसूर्यचन्द्राणां श्रीमहेश्वराराधनेन पापनिवृत्तिद्वारा बहुविध अनुग्रह प्राप्तिः ॥

सूतः — अतः परं महेन्द्रेण शिवपूजा यथा यदा । कृता स्वामीदमुद्दिश्य वर्ण्यन्ते ताश्च काश्चन ॥ १
बलं निहन्तुकामस्तु पुरा शक्रः प्रतापवान् । कालहस्तीशमाराध्य संप्राप्य वरमुत्तमम् ॥ २
संहत्यच बलं दैत्यं युद्धे तद्दोषशान्तये । समाराध्य पुनस्तत्र कृतार्थोऽभूच्छचीपतिः ॥ ३
पुनः कदाचिच्छापेन दुर्वाससस्यैव वज्रिणः । ऐरावते हयश्रेष्ठे चिन्तितार्थप्रदे मणौ ॥ ४
कल्पवृक्षेषु सर्वेषु सुरभ्याश्च च्युतेषु च । स्वर्गादंभोधिमध्ये तु भीतभीतश्शचीपतिः ॥ ५
दारिद्र्यदुःखसन्तप्तः श्रीमद्वृद्धाचलेश्वरम् । समाराध्य ततः प्राप्य कृपया तस्य पूर्ववत् ॥ ६
पुनश्चैरावतञ्चाश्वमुच्चैःश्रवसमंबुधेः । कल्पकानपि वृक्षांश्च कामधेनुञ्च सर्वदा ॥ ७
चिन्तामणिं तथा देवभिषं पूर्ववदाप सः । पुनः कदाचिदिन्द्रस्य गौतमस्यैव शापतः ॥ ८
सहस्रयोन्याञ्जातायां सर्वाङ्गेष्वपि लज्जया । काश्यां विश्वेशमाराध्य सहस्राक्षो बभूव सः ॥ ९
एकदा तु महेन्द्रस्य पादस्पर्शं मुनीश्वराः । अशपन् केचनामुं ते देहोऽस्यान्यो भवेदिति ॥ १०
तेन शापेन सोऽप्यन्यदेही भूत्वाऽतिदुःखितः । नीत्वाऽनेकं ततः कालं केदारे परमेश्वरम् ॥ ११
समाराध्य ततः प्राप्य पौर्विकं देहमात्मनः । स्वर्गाधिपत्यमपि तच्च्युतं शंभोरनुग्रहात् ॥ १२
पुत्रार्थञ्च पुरा शम्भुं काञ्च्यामाराध्य वृत्रहा । जयन्तं प्राप्य तनयं पुत्री ह्यमनाह्यभूत् ॥ १३
कमलालयमभ्येत्य कदाचिन्मघवान् पुनः । समाराध्याप देवेशं मेघं वाहनमात्मनः ॥ १४
उच्चैःश्रवसमश्वञ्च कृपया परमेशितुः । पुण्डरीकपुरे पुण्ये पूजयित्वा महेश्वरम् ॥ १५
पुरा शतक्रतुः प्राप गाणापत्यमनुत्तमम् । श्रीमत्कैलासमन्तेऽपि प्रासयाच्छङ्करप्रियः ॥ १६
तथा मरुत्वानपरः पूजयित्वा पुरद्रुहम् । पुण्येऽरुणाचलक्षेत्रे शचीमाप प्रियाम् पराम् ॥ १७
रंभादिदेवगणिकाक्रीडामाप मनोरमाम् । एवं संपूज्य देवेशं फलं बहु शतक्रतु. ॥ १८
प्राप्तवांस्तत्र कतिचिदीरिता न मयाऽखिलम् । एवं सुरैः कृतां पूजां वक्ष्येऽन्यैरपि शूलिनः ॥ १९
पुराऽर्कः कश्चिदीशानं शिवक्षेत्रेषु पूजयन् । अशरं स्वशरीरस्य वपत्रं कुत्सितमप्यलम् ॥ २०
त्यक्त्वा प्राप परं रूपं दिव्यमीश्वरवल्लभः । प्रापान्यो भानुमाक्षेत्रे भद्रेणोत्पाटिते पुरा ॥ २१
वृद्धाचले महादेवं पूजयित्वा पुरुप्लुतम् । तथाऽत्र यागे भग्नांश्च दन्तान् प्राप परो रविः ॥ २२
तत्याज दोषमपरस्सविता पूजयञ्छिवम् । रतिजन्तुपिपल्याश्च ज्ञानभावेन वै पुरा ॥ २३
छायाद्विभोगजाद्दोषान्मोक्षमापापरो रविः । आदित्या एवमपरे स्वस्वदोषान्व्यपोह्य च ॥ २४
प्रापिरेच निजं कामं रूपञ्च वपुषस्तथा । चन्द्रोऽपि सांबमीशानं समाराध्य पुरातनम् ॥ २५
दक्षस्य शापान्मोक्षञ्च संप्राप्य तदनन्तरम् । वीरभद्रपदाघातशरीरस्य रुजं जहौ ॥ २६
एवं बहूनि चन्द्रोऽपि दुरितानि जहौ मुदा । संप्राप ससुखं सर्वं पूजया शङ्करस्य वै ॥ २७
दिशामधीशास्सर्वेऽपि पूजया परमेशितुः । संप्राप्य पुत्रानैश्वर्यं वाञ्छितं सकलं तथा ॥ २८
संप्रापुस्त्यक्तदुरितास्सर्वेश्वरकृपाबलात् । तथाष्टौ वसवः पूजां देवदेवस्य शूलिनः ॥ २९

इत्वा ख स्वमवापुस्ते वाञ्छितं त्यक्तकिल्बिषाः । तथैव चाश्विनौ देवौ पूजयन्तौ महेश्वरम् ॥ ३०
विशुद्धौ सर्वपापेभ्यः प्रापतुर्निजमीप्सितम् । रुद्राश्चैकादश तथा महात्मानो महेश्वरम् ॥ ३१
पूजयन्तोऽखिलं प्रापुर्वाञ्छितं त्यक्तकिल्बिषाः । कश्यपस्सप्तसङ्ख्याकारसमभ्यर्च्य महेश्वरम् ॥
संप्रापुस्सकलं कामं विशुद्धा वीतकिल्बिषाः ॥ ३२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनसप्ततितमोऽध्यायः ॥

---

॥ अथ सप्ततितमोऽध्यायः ॥

त्रिपुरासुरतपश्चरणं विष्णुनारदाभ्यां बुद्धवेषग्रहणञ्च ॥

सूतः — उत्तानपादसंभूतो ध्रुवो नाम नृपात्मजः । ग्रहाश्च नव सूर्याद्यास्सप्तविंशतितारकाः ॥ १
मेषाद्या राशयो योगा विष्कम्भाद्याश्च भूसुराः । करणानि च सप्तापि शकुनादिस्थिराण्यपि ॥ २
विद्याधराश्च गन्धर्वा गरुडोरगराक्षसाः । यक्षास्सिद्धा गुह्यकाश्च तथा किंपुरुषादयः ॥ ३
किन्नराश्च पिशाचाश्च दैत्याः प्रह्लादपूर्वकाः । मनुष्याः पशवश्चैव पक्षिणो वृक्षपूर्वकाः ॥ ४
स्थावरा जङ्गमाश्चान्ये येचान्ये जीवजन्तवः । पर्वताश्च समुद्राश्च गङ्गाद्यास्सरितस्तथा ॥ ५
ब्रह्मर्षयो वसिष्ठाद्या नारदाद्यास्सुरर्षयः । ब्रह्माण्डानि च सर्वाणि सर्वैरावरणैस्सह ॥ ६
अभ्यर्च्य देवदेवेशं लिङ्गमूर्तिं सनातनम् । स्वं स्व पदञ्च संप्राप्य स्वसामीप्यमवाप्य च ॥ ७
दुरितानि च निर्धूय परां निर्वृतिमापिरे । प्रत्येकं देवमाराध्य भ्रातामीश मयेरिताः ॥ ८
अतः परं प्रवक्ष्यामि संभूयाभ्यर्च्य शङ्करम् । येऽनिष्टानि च निर्धूय सामीप्यानि च लेभिरे ॥ ९
तानहं संप्रवक्ष्यामि श्रूयतामवधानतः । पुरा पुराणि त्रीण्यासन्नयोरजतकाञ्चनैः ॥ १०
तानि भूमौ नभोमध्ये निवसन्ति त्रिविष्टपे । तेषु तारकसंभूतास्त्रयश्श्रेष्ठा महासुराः ॥ ११
विद्युन्माली तारकाक्षः कमलाक्षश्च वीर्यवान् । षट्षष्टिकोटिसङ्ख्याकैरसुरैर्निवसन्ति ते ॥ १२
बाधयन्तश्च लोकांस्त्रीन् सुरान्निर्जित्य लीलया । तपश्चकुश्च ते पूर्वमुद्दिश्य चतुराननम् ॥ १३
आस्थाय घोरमत्युग्रमात्मनित्यत्वकाङ्क्षया । तपसैवाञ्च निर्दग्धं त्रैलोक्यं सचराचरम् ॥ १४
ततः प्रादुरभूद् ब्रह्मा तेषामग्रे सनातनः । हंसारूढोऽमरेन्द्राद्यैः परिवारितसन्निधिः ॥ १५
अर्चयित्वा तु तं देवमसुरा वव्रिरे वरम् । अस्माकममराधीश देहि नित्यत्वमञ्जसा ॥ १६
कृपया देवदेव त्वं चतुर्मुख नमस्तव । तानुवाच ततो ब्रह्मा यदि नित्यत्वमस्ति नः ॥ १७
ततो दातुं वयं शक्ता असुरेन्द्रसुतोत्तमाः । नाविद्यमानं शक्तोऽस्मि दातुं दातापि दानवाः ॥ १८
अहञ्च नैव नित्योऽस्मि विष्णुश्चान्येऽपि सत्तमाः । अनित्या एव ये के च विबुधाश्च विना शिवम् ॥ १९
नित्य एको जगत्यस्मिन्मृत्युञ्जय उदाहृतः । तस्मादन्यं वरं यूयं वृणुध्वं मत्सुरेतराः ॥ २०
इति वाक्यं विधेः श्रुत्वा संमन्त्र्य च परस्परम् । वव्रिरे प्रणिपत्यैनं नित्यत्वसदृशं वरम् ॥ २१
अस्माकं त्रीणि देवेश भ्रातॄणां नगराणि च । भूम्यन्तरिक्षस्वर्गेषु स्वर्णदुर्वर्णलोहकैः ॥ २२
तान्येवाब्दसहस्रान्ते संयोगं प्राप्नुवन्तु च । क्षणमात्रं तदानीं यो न द्वितीयः श्रुतौ श्रुतः ॥ २३
तेनैकेन शरेणैव संहृतं स्यात्पुरत्रयम् । ततो मृत्युरजास्माकं परमस्त्वथ देहि नः ॥ २४
ऐश्वर्यञ्चाशिमहद्वीर्यञ्चासदृशं पुनः । असुराणाञ्च सर्वेषामावासास्सन्तु नः पुरीः ॥ २५

स्वेच्छानुरूपसञ्चारा पुराणा सन्तु न प्रभो । इति दत्त्वा तु तत्सर्वं ब्रह्मलोकं गते विधौ ॥ २६
यत्र यत्रासुरा लीना देवभीत्या रत क्षणात् । सर्वे ते श्रुतवृत्तान्तास्तारकेयान् समीहिरे ॥ २७
ददुस्तेभ्यश्च कन्या स्वा नानोपायनपाणय । स्वदु खञ्च निवेद्यैभ्यस्सुखमापुस्सुरेतरा ॥ २८
ततस्तु मायानिपुणो मयस्तैस्तु स्मृत क्षणात् । समूय तैश्च समन्त्य सन्तोषेण महीयसा ॥ २९
निर्ममे नगरीस्तेषामयोरजतकाञ्चनै । गृहास्तु नवरत्नाढ्यान् गोपुराणि महान्ति च ॥ ३०
वीथीश्च विविधास्तत्र मणितोरणमण्डिता । ते समालोक्य नगरीस्तिस्रो देवेतरैस्सह ॥ ३१
दाशसुश्च मय भूयस्सन्तोषमतुलं गता । पप्रच्छुरात्मनश्चापि तमेवैते हिताहितम् ॥ ३२
स तानुवाच हृष्टात्मा विद्युन्मालिमुखानयम् । युष्माभिश्च वरो लब्धो नित्यत्वसदृशोऽसुरा ॥ ३३
एक एव सुरश्रेष्ठो बाणेनैकेन मृत्युद । सहस्रवत्सरस्यान्ते इतीदं बुद्धिकौशलम् ॥ ३४
अस्मिन्नर्थेऽत्र शृण्वन्तु मयोक्तं तु सुरेतरा । देवश्रेष्ठ स्मृतो लोके वेदेच परमेश्वर ॥ ३५
क्षिप्रेषु स्थिरधन्वेति सधामाच जगत्पति । मषाढस्सहमानश्च भक्तो भक्तजनेषु स ॥ ३६
तिग्मायुधश्च वेदेषु सर्वत्र परिपठ्यते । तस्य पूजा सदा कार्या नियमेनाखिलात्मभि ॥ ३७
उपसर्गा क्षयं यान्ति शत्रवो व्याधयो ग्रहा । मन प्रसन्नतां याति पूज्यमाने महेश्वरे ॥ ३८
युष्माभिरर्चनीयोऽसौ रुद्रो बन्धुजनैस्सह । लिङ्गमूर्तौ सदाकाल त्र्यम्बक पुष्टिवर्धन ॥ ३९
तस्मिन् सपूज्यमाने तु शङ्करे लोकशङ्करे । युष्माकं हिंसका येऽत्र हिंसितास्स्युश्च तेन ते ॥ ४०
स शिवस्सर्वजन्तूनां भुक्तिमुक्तिफलप्रद । तस्माद्यूय तमेवैनमर्चयित्वा दिनेदिने ॥ ४१
लिङ्गमूर्तौ जगन्नाथ भक्तिभावेन सुव्रता । ऐश्वर्यमसुरा नित्य संप्राप्नुत सपर्यया ॥ ४२
विजयश्च सदाकाल युष्मत्करतले स्थित । तथैव ते प्रतिश्रुत्य वचन तस्य चोमिति ॥ ४३
ययाचिरे च लिङ्गानि मयमैशानि तेऽसुरा । प्रत्येकं स च लिङ्गानि कल्पयामास वै क्षणात् ॥ ४४
गृहे गृहेऽर्चयन्तीशमसुरा भस्मभूषिता । रुद्राक्षाभरणैर्युक्ताश्शान्ता दान्ता जितक्रुध ॥ ४५
इति तस्य वच श्रुत्वा चक्रुर्दैत्या गृहे गृहे । विद्युन्माली तारकाक्ष कमलाक्षश्च ते त्रय ॥ ४६
लिङ्गानि प्रतिगृह्यास्मात् स्वोचितानि मुदा युता । प्रत्येकमर्चयामासुर्महाविभवविस्तरम् ॥ ४७
सर्वे स्वाध्यायनिरतास्तपसा दग्धकिल्बिषा । भस्मरुद्राक्षसंपन्नतनवो विजितेन्द्रिया ॥ ४८
एवमर्चयता तेषामासन्नैश्वर्यवृद्धय । लोके वेदप्रसिद्धाश्च शिवपूजारतात्मनाम् ॥ ४९
तत्र कल्पवृक्षाश्च गृहारामभवाश्च ते । तेषां गोष्ठस्थिता गावो नन्दिन्य कामधेनव ॥ ५०
चिन्तामणिशिलास्तेषां प्राङ्गणेषु प्रतिष्ठिता । एतत्प्रत्यर्थिनामेवमेतेषामर्चता शिवम् ॥ ५१
निधयश्चैव शङ्खाद्यास्सन्निधिं तत्र चक्रिरे । गायन्तश्च हसन्तश्च नृत्यन्तश्चासुरोत्तमा ॥ ५२
नित्योत्सव अभूत्तेषां नित्यश्रीर्नित्यमङ्गलम् । रथनागतुरङ्गाद्यै खेलन्ति स्मासुरेश्वरा ॥ ५३
आरामेषु विचित्रेषु वापीषु च सरस्स्वपि । नदीनदेषु सर्वत्र क्रीडन्तो निन्यिरे समा ॥ ५४
अमृतान्धोभिरनिशमादृतात्मक्रिया भृशम् । रमन्ते स्म सपत्नीकास्सुरबन्दीभिरादृता ॥ ५५
ते पुरैस्सह यथेच्छा तत्र तत्र च रेमिरे । मण्डले च सहस्रांशोश्शीतांशो ग्रहमण्डले ॥ ५६
ब्रह्मलोके विष्णुलोके भूलोके चान्तरिक्षके । सुरेन्द्रलोके दिक्पाललोके सर्वत्र रेमिरे ॥ ५७
य एतेषामधोभागे स्युजनाश्चरता पुन । प्रतिमार्गेच ते सर्वे विनेशुर्भयपीडिता ॥ ५८
स्वकलोकास्तदा विष्णुब्रह्माद्या देवसत्तमा । महामेरुगिरिं प्राप्य मन्त्रयित्वा परस्परम् ॥ ५९
कथमेतेऽत्र वध्यास्स्युरस्माभिर्वरगर्विता । तानुवाच ततो विष्णुस्तेऽर्चयन्त्यसुराश्शिवम् ॥ ६०

लिङ्गार्चनपरालोके न शक्या जेतुमात्मभिः । पतिव्रताश्च वै तेषां स्त्रियश्च पतिदेवताः ॥ ६१
तस्मादजेयतां प्राप्ता असुरा बलवत्तराः । तमूचुरमरास्सर्वे भक्तिहीनास्सुरद्विषः ॥ ६२
भयस्य वचनात्स्वप्नः कुर्वन्त्येते शिवार्चनम् । भक्तिहीनार्चनं शंभोरतिप्रीतिकरं नहि ॥ ६३
वयं देवं समाराध्य सर्वेचापि सदाशिवम् । तवेश्वराज्ञासंभूतैर्जेष्याम इति ताः पुनः ॥ ६४
तानुवाच हरिस्तेषां न जानीध्वे वराव सुराः । एकेनैवेषुणा नाशो नान्यथा पापसंभवैः ॥ ६५
उपसद्भूतभूतैश्च जयध्वे किं वृथा सुराः । समाहुस्तेतु चैवं तद्भूतैर्योगोद्भूतैर्वयम् ॥ ६६
निरुध्य पीडयिष्यामः पुरेषु यदि शाम्यथान् । स्वेषु स्वेषु च लोकेषु वयं स्थातुं क्षमास्ततः ॥ ६७
इति संमन्त्र्य ते सर्वे देवा विष्णुपुरोगमाः । वेदान् सर्वान् समाहूय देवैस्सार्धं जनार्दनः ॥ ६८
उपसद्भिस्तदाऽस्यौपीत् ध्यायन्नीशं जगन्मदम् । तदा भूतानि चोत्पस्युर्महान्ति बलवन्ति च ॥ ६९
तानि चाज्ञापयामासुस्संभक्षयत ताः पुरः । असुरैस्सह भूतानि गच्छतेति तदा मुदा ॥ ७०
तानि संप्रेत्य भूतानि पुरेषु पुरवासिनः । भूतिरुद्राक्षदीप्ताङ्गान् शिवपूजापरायणान् ॥ ७१
असुरानखिलान्दृष्ट्वा नासक्षेतुं क्षमाण्यहो । केवलं पुनरुद्यानमभ्येत्य कपिसङ्घवत् ॥ ७२
फलानि भक्षयामासुः पनसाम्रभवानि ते । असुरास्तानि दृष्ट्वा ते जघ्नुर्लोष्टैश्च दण्डकैः ॥ ७३
ततश्चान्योन्यमभवद्युद्धं भूतसुरद्विषाम् । बिभेदुस्तानि भूतानि महान्त्यपि शिवाज्ञया ॥ ७४
असुरास्ते पुनर्ज्ञात्वा देवचेष्टामिमीदृशीम् । संप्राप्य देवलोकेषु लुण्ठनञ्चक्रिरे भृशम् ॥ ७५
तत्र तत्र स्थितान् देवान् समाजघ्नुर्बलाधिकाः । ततस्ते तत्र ये देवाः प्रहृता असुरैर्भृशम् ॥ ७६
शीघ्रं मेरुं समासाद्य चावसन्युर्देवसन्निधौ । ततश्च भृशदुःखार्ता विबुधा मेरुगह्वरे ॥ ७७
तस्थुरन्येऽसुराः प्रीत्या पुरेषु न्यवसंस्तदा । पुनश्च देवा वृत्तान्तं ब्रह्मविष्णुपुरोगमाः ॥ ७८
विज्ञापनं महेशाय कर्तुं कैलासमाययुः । प्रणम्य द्वारि देवस्य द्वारपालान् जनार्दनः ॥ ७९
अपृच्छद्विबुधैस्सार्धं देवावसरमादरात् । नायं योऽवसरो देवा गच्छतेतिच ते गणाः ॥ ८०
तद्वचश्श्रुत्य विबुधा नास्माकं गतिरन्यथा । स्थास्यामोऽवसरं यावत्तावदत्रैव सन्निधौ ॥ ८१
मन्त्रयित्वेति चाप्योच्चमुच्चैर्हर हर प्रभो । शङ्करेश महेशान शिवेति परमेश्वर ॥ ८२
शुश्रुवुस्ते तदोद्यम्य बाहू दीनस्वराक्षरम् । क्रोशतस्तान् हरिब्रह्मप्रमुखान् गणपुङ्गवाः ॥ ८३
अताडयन भृशं दण्डैर्हसन्तो द्वाःस्थसंमताः । ते ताड्यमानास्त्रिदशा विलीनास्समर्पतो दिशम् ॥ ८४
शनैस्सरस्समासेदुर्मानसं महदम्बुकम् । तत्र देवा हरिं प्रोचुः कथं कार्यं भविष्यति ॥ ८५
कथं विज्ञापनं कर्तुं शक्याःस्मो देवसन्निधौ । स्थातुं नो न सहन्तेऽत्र द्वारपाला महौजसः ॥ ८६
तानुवाच हरिर्ब्रह्मप्रमुखानाकुलान् भृशम् । अस्मानत्र समासीनांस्तूष्णीं न प्रहरन्ति ते ॥ ८७
आक्रोशतोऽस्मानालोक्य प्रहरन्त्येव तादृशाः । आक्रोशतः प्रभुद्वारि द्वाःस्था नैव सहिष्णवः ॥ ८८
एतद्वचस्तु ते देवास्सत्यं संभाव्य वैष्णवम् । आसंस्तदाऽन्योन्यं प्रपच्छुश्च पुनर्हरिम् ॥ ८९
अतः परं कथं वा स्याद्वोऽस्माकं मतिं वद । तानुवाच हरिर्यूयमेव सर्वे विचक्षणाः ॥ ९०
मन बुद्धिं न चेदानीं मम किञ्चन रोचते । ततश्चिरं ते प्रत्येकं स्वं स्वं संयोजिरे मतम् ॥ ९१
निश्चित्य च पुनः प्रोचुस्सर्वस्याच्युतमाशु ते । असुराश्शिवपूजायां निरता भूतिभूषणाः ॥ ९२
रुद्राक्षमालाभरणा लिङ्गार्चनपरायणाः । स्वाध्यायनिरतास्सर्वे वैतानाग्निसमिन्धकाः ॥ ९३
पतिव्रताः स्त्रियस्तेषां विशेषेण जनार्दन । नैव शक्या निहन्तुं ते येषां भार्याः पतिव्रताः ॥ ९४

शिवशक्तौ च ये लोके भूतिरुद्राक्षभूषणाः । किन्तु विष्णो त्वया शक्त्या मायया दितिसंभवाः ॥ ९५
त्यक्तलिङ्गार्चनाश्चेत्स्युश्शिवस्तान् संहरिष्यति । नोचेत्तेष्वसुराऽस्माकं घाताय भवति ध्रुवम् ॥ ९६
इति श्रुत्वा तु देवेषु तानुवाच पुनर्हरिः । अहं यतिष्ये त्रिदशास्तद्युयुक्तमिदं मम ॥ ९७
यूयञ्च भजत देवं यजध्वं तपसा शिवम् । संहरिष्यति तान् देवस्सर्वथा परमेश्वरः ॥ ९८
इति नारदमाहूय मायी त्रिपुरमाप सः । तत्र बुद्धः स्वयं जज्ञे विष्णुश्शिष्योऽस्य नारदः ॥ ९९
मोहयामासतुश्चोभावसुराणां कुलं क्षणात् । मायामयेन शास्त्रेण वाचा मधुरया च तौ ॥ १००
वेषेण च विचित्रेण भोजनाद्यैश्च तादृशैः । पतिव्रतानां स्त्रीणाञ्च नानामायाविचक्षणौ ॥ १०१
दर्शयित्वा च रत्नानि दिव्यान्याभरणानि च । पातिव्रत्यञ्च तासां तौ नाशयामासतुर्गिरा ॥ १०२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्ततितमोऽध्यायः ॥

---

॥ अथ एकसप्ततितमोऽध्यायः ॥

बुद्धवेषधारिभ्यां विष्णुनारदाभ्यां असुराणां प्रलोभः ॥

सूतः — तौ दृष्ट्वा तादृशौ पूर्वदेवा मायाविमोहिताः । तयोरत्यन्तसंप्रीता बभूवुर्गतचेतनाः ॥ १
अन्तेवासिनमस्यैते नारदं सुरशत्रवः । रहः पप्रच्छुराहूय कोऽसौ कस्मादिहागतः ॥ २
अस्मद्भाग्यवशादत्र किमागमनकारणम् । स तानुवाच दृष्टोऽयं (स्वयं) लोकालोकोऽस्य (लोकस्य) वासभूः ३
भुवनालोकनप्रीत्या सञ्चरत्येकदा इति । यत्र स्वचित्तं रमते तत्र तिष्ठत्ययं वशी ॥ ४
तत्र स्थित्वात्मविद्याया माहात्म्यं दर्शयत्यसौ । उपदिष्टास्तु येऽनेन ते सर्वेऽभीष्टमाप्नुः ॥ ५
श्रुत्वा केचन तद्वाक्यं परिवार्योपतस्थिरे । तेषामभीष्टजातञ्च मायी दत्वा व्यमोहयत् ॥ ६
विचित्रवस्त्राभरणधनधान्यवराङ्गनाः । तन्माहात्म्यसमुद्भूता वसून्यादाय गच्छतः ॥ ७
दृष्ट्वा दृष्ट्वा जनानन्ये स्वपश्चावृत्य तस्थिरे । तेषामपि मनोऽभीष्टं बुद्धाचार्यो ददौ मुदा ॥ ८
पुनश्च नारदं दैत्या रहस्याहूय सादरम् । एतस्य शिष्यभूतानामेषं किं सिद्धयोऽद्भुताः ॥ ९
भवन्ति वा न वाप्येवमिति पृच्छत्सु तेष्वसौ । नारदः प्रत्युवाचैनानहं शिष्येषु मूढधीः ॥ १०
ममापि सिद्धयस्सन्ति यास्ताः पश्यत तत्क्षणम् । कमण्डलोर्गृहीत्वांभस्ससार मनसा वशी ॥ ११
तत्र ब्रह्मा च विष्णुश्च सर्वेऽपि च स्थितास्सुराः । संबभूवुस्तदाऽऽचार्यं प्रणेमुस्ते च सादरम् ॥ १२
ब्रह्मादीन् क्षणमात्रेण कृत्वा चान्तर्हितान् सुरान् । असुरेभ्योऽमृतं भूरि ददौ स्वमहिमागतम् ॥ १३
पुनश्च यन्मनोऽभीष्टं ददौ शिष्योऽस्य नारदः । पुनश्च बुद्धिं दैत्यानां मोहयामास मायया ॥ १४
अप्रार्थयंस्तदा चास्य शिष्यभावं दितेस्सुताः । नारदस्स तु तत्सर्वं विज्ञाप्य गुरवे मुदा ॥ १५
शिष्यांस्तान् कारयामास बहुशः प्रार्थयन् गुरुम् । दीक्षयामास तानेतान् बुद्धस्त्यक्तशिवार्चनान् ॥ १६
तेषामुपदिदेशासौ मामेव भजतासुराः । अहं बुद्धोऽस्मि वै नाम्ना मन्नाम्ना तु जपोऽस्तु वः ॥ १७
मदर्चनैव युष्माकमभीष्टफलसिद्धिदा । इह लोके यत् दृष्टं तदेवामुत्र वा मृषा ॥ १८
शिवपूजा न वै कार्या न धार्यास्तु विभूतयः । न च रुद्राक्षबीजानि मिथ्या वेदगिरोऽखिलाः ॥ १९

…सर्वं परित्यक्तं यैस्ते शिष्या न चेतरे । तेषां नैवतु सिध्यन्ति सिद्धपरस्तथैवैहिकाः ॥ २०
… तस्य गिरा सर्वे परित्यक्तशिवार्चनाः । तथा सन्त्यक्तरुद्राक्षविभूतिशिवशासनाः ॥ २१
…यतः स्त्रियस्ताश्च नारदेन विमोहिताः । बभूवुस्सततं मोहाज्जारासक्ता यथासुखम् ॥ २२
… मायासमुद्भूतवस्त्राभरणभूषणाः । ताश्च त्यक्तशिवाचारा गृहस्थस्यानुपासकाः ॥ २३
…जैन्यर्चनानिष्ठाः पुंश्चल्योऽथ दिवानिशम् । तदानीं नारदं बुद्धरूपो विष्णुरपृच्छत ॥ २४
…राणां कुलं कृत्स्नमस्मन्मायावशं नु किम् । नार्यश्च जारासक्ता नु मायया मोहितान्तराः ॥ २५
… पृष्टस्तथा प्राह नारदः प्रणिपत्य तम् । मायया मोहिताः स्वामिन्सर्वेऽमत्सुराधमाः ॥ २६
…वेषु नैकैकं विनाऽद्य मधुसूदन । एकः परमयोगन्यस्तथैकदशीलपरः स्मृतः ॥ २७
…काश्यपश्च योग्यन्यस्तपः पाशुपतोत्तमाः । उपमन्योर्भृगोश्चापि दधीचादपि च तेऽधिकाः ॥ २८
…त्यादपि ते भेषाशिवभक्तिपरायणाः । त्रयश्चैते महात्मानशिवाग्रानुमहमागिनः ॥ २९
…माणा न बध्नाति विपतन्तुरिव द्विपम् । नारदोक्तवचः श्रुत्वाऽमरहत्य हरिर्द्रुतम् ॥ ३०
…पस्तानपरान्माह न संभाव्याश्चयोऽप्यमी । युष्माभिर्मद्विरा शिष्यैर्मद्विधैर्भूतिकांक्षिभिः ॥ ३१
…साकं कलहो मास्तु शिवपूजारतैस्त्रिभिः । इति सर्वान्महाविष्णुर्मोहयित्वा स्वमायया ॥ ३२
…शामन्यं प्रतिष्ठाप्य बुद्धं बुद्धिविमोहकम् । नारदश्च समाहूय निर्जगाम पुरत्रयात् ॥ ३३
…ः कैलासमचलमासदसुरसमीपगः । न शशाक स देवर्षिर्दुष्प्रापमहतात्मभिः ॥ ३४
…रोढुं तं गिरिभिन्नमानसो गरुडध्वजः । मत्सामिस्सुरकार्यार्थमसुरास्सुरसंमताः ॥ ३५
…हीना भस्मरुद्राक्षशिवार्चाभिः कृता इमे । तेन दोषस्तु सुमहान् मञ्जातोऽत्र न संशयः ॥ ३६
…दोषैरेव शक्यश्चोकैलासः स्मर्तुमात्मभिः । इति तद्दोषशान्त्यर्थमीशमुद्दिश्य केशवः ॥ ३७
…दैनातपस्तीव्रं तपोऽध्यायन् हृदीश्वरम् । ततः प्रसन्नो भगवाञ्छङ्करो लोकशङ्करः ॥ ३८
…ष्णुं सनारदं प्राह मेघगंभीरया गिरा । अहो धिग्धिग्युवां मूढौ सुरकार्यार्थमव्ययम् ॥ ३९
…द्भक्तैर्मोचितो मार्गो भवद्भ्यामविशङ्कया । तस्मात्कैलासमारोढुं भवद्भ्यां नैव शक्यते ॥ ४०
…नसर्पं सर मासाद्य मानसं विबुधैस्सह । कुरु कार्यं सुरेन्द्राणां सुघमन्तर्हितश्शिवः ॥ ४१
…वेति तौ समासाद्य विबुधैस्सहितौ भृशम् । कृतवन्तस्सर्ववृत्तान्तमसुराणां सुरप्रिये ॥ ४२
…वकल्पतशिवाचारमसुरा मायायाऽनयोः । मत्साकमनुकूलेन विधिना मयमार्गयोः ॥ ४३
…परा कलहमन्योन्यं कृतशापौ शिवाज्ञया । तच्छ्रुत्वा ईशमुद्दिश्य कर्तुकामौ महत्तपः ॥ ४४
…हिमगतं गिरिं प्राप्य कुरुतस्सुरसत्तमाः । तस्मान्मम महामायाजालबद्धास्सुरेतराः ॥ ४५
…तदिदानीं यूयं सर्वे संभूय भद्रयाश्र ये । प्रसादयामो देवेशं पार्वतीश्वरमव्ययम् ॥ ४६
…इति सर्वाननुश्राव्य ब्रह्मादीन् गरुडध्वजः । निमग्नस्सलिले तस्मिन् सरसो मानसस्य सः ॥ ४७
…जजाप च महारौद्रमन्त्रानन्तर्जले स्थितः । ब्रह्माद्योऽपि विबुधाः परिघार्य मधुद्विषम् ॥ ४८
…तपस्तेपुर्महत्तीव्रमूर्ध्वहस्ता जलान्तरे । ततः प्रसन्नो भगवान्ब्रह्मण्डशिरोमणिः ॥ ४९
…प्रादुर्भूय देवानां सहदेव्या गणेश्वरैः । तुष्टुवुश्च महादेवं सर्वे दृष्टानुपदाः ॥ ५०
…मानालोक्य सुरश्रेष्ठानाह मुग्धेन्दुशेखरः । यूयं मां तपसा प्रीतं यच्छध्वं देवतास्सुराः ॥ ५१
…रतः परं पाशुपतव्रतं चरत मा चिरम् । अचिराद्वो मनोऽभीष्टं भविष्यति न संशयः ॥ ५२
…इति ब्रुवति देवेशे ब्रह्माण्डशिरोमणौ । अकस्मादद्भुतासीनदशाजन्मा ननर्तह ॥ ५३
…तदानीं जगतां माता देवदेवं त्रियंबकम् । नीलांशुकेन समाश्लिष्य मुखे देयस्य संस्थिता ॥ ५४

कुमारं नृत्यमानं तं पश्य पुत्रवतां वर । इति देवीगिराऽऽरोप्य नृत्यमानमुरः स्वकम् ॥ ५५
करतालरतश्शंभुर्नृत्य बालेत्युवाच ह । ततो लीलालयो बालो ननर्तोरसि शूलिनः ॥ ५६
नृत्येति सर्वाधिपतेर्गिरा सर्वं ननर्त तत् । जगज्जगत्पतेराज्ञा केन लङ्घ्या जगत्त्रये ॥ ५७
देवाश्च विष्णुप्रमुखा नृत्यन्तिस्मायदान्तराः । तोषितौ पितरौ पुत्रं समालिङ्ग्य परस्परम् ॥ ५८
आघ्राय मूर्ध्नि हस्ताभ्यामादायात्मोरसा शिवः । पुत्रमन्तःपुरं देव्या विवेश परया मुदा ॥ ५९
ततस्सब्रह्मका देवास्सनारायणकास्तथा । शिशाः परस्परं प्रोचुरधुना छलितोऽसुराः ॥ ६०
दृष्ट्वापि सर्वलोकेशो नः कार्यं न समापितम् । यच व्रतं पाशुपतं देवप्रोक्तञ्च कुर्महे ॥ ६१
इति चक्रुस्समाराध्य शिवं पाशुपतं व्रतम् । श्रद्धया परया देवा विरजाभस्मभूषिताः ॥ ६२
ततश्चित्तेऽध्यायैतत्परात्मा व्रततोषितः । नन्दिनं गणपश्रेष्ठमादिदेश जगद्गुरुः ॥ ६३
तिस्रः पुरोऽस्य संहर्तुं साधनं नैव विद्यते । देवेभ्यः कथयाशु त्वं रथं सशरकार्मुकम् ॥ ६४
संग्रामसाधनं यद्यत्सर्वं संपादयन्त्विति । तथेति निर्गतो नन्दी सर्वं शंभुवचोऽब्रवीत् ॥ ६५
सुरानाह्लादयन्वाचा पुनश्शुद्धान्तमासदत् । शैलादौ निर्गते देवाश्शंभोस्संग्राम साधनम् ॥ ६६
रथञ्च सारथिञ्चाश्वान् सशरञ्च धनुर्महत् । ध्यात्वा तु सुचिरं तत्र संमन्त्र्यैव परस्परम् ॥ ६७
ईश्वरार्हो महांश्चापो मेरुरेवात्र काञ्चनः । सर्पराजोऽत्र मौर्वीत्वे बाणाग्निशशिकेशवान् ॥ ६८
पञ्चानीकफलाग्राणि चक्रुर्देवा महत्तरान् । अधिष्ठानञ्च विन्ध्याद्रिमाश्रयं केसराचलम् ॥ ६९
भूलोकमासनं तस्य रथस्य सुमहीयसः । आकाशोऽस्यावकाशोऽभूच्चक्रे च शशिभास्करौ ॥ ७०
रथ्या वेदा ऋग्यजुस्सामाथर्वादयोऽमलाः । वसिष्ठाद्या मुनिश्रेष्ठाः स्वस्तिवाचनतत्पराः ॥ ७१
वन्दिनः किन्नरा यक्षास्सिद्धाः किंपुरुषाः परे । गन्धर्वा गरुडाश्चान्ये चारणाद्याः कवीश्वराः ॥ ७२
शैला अष्टौ महानागास्समुद्रा मेघपङ्क्तयः । वितानञ्चापि रत्नानि भूषणान्यस्य तेऽभवन् ॥ ७३
मन्त्राः कला वेनवश्च निचयस्संपदोऽस्य तु । यज्ञाः कर्माणि धर्माश्च कालाः कल्पाश्च कीलकाः ॥ ७४
दिनानि मासत्वयना योगाश्च करणानि च । क्षणाः मुहूर्ताः काष्ठाश्च रथकीला महत्तराः ॥ ७५
निर्मितस्स्यन्दनस्त्वेवं तस्याभूत्सारथिर्विधिः । प्रणवोऽस्य कशा कलसा रथवेदाश्वतोदका ॥ ७६
क्षीराब्धिनिलयो विष्णुश्शरस्यैव तु तेजनम् । वैकुण्ठनिलयश्शार्ङ्गी शिवस्यानुचरो महान् ॥ ७७
मेरौ मनोधृती ब्रह्मा सारथिः प्रणवः कशा । सत्यलोकाधिपो ब्रह्मा शिवस्य परिचारकः ॥ ७८
देवाश्च सैनिकास्सर्वे शक्राद्याः पृतनाधिपाः । तपस्विनो योगिनश्च बभूवुः स्वस्तिवाचकाः ॥ ७९
तदा विष्णुरथासाद्य कैलासं नन्दिनोऽन्तिकम् । व्यजिज्ञपच्च वृत्तान्तमिममस्मै प्रणम्य च ॥ ८०
नन्दी च समये देवं प्रणम्योवाच साञ्जलिः । श्रुतविज्ञप्तिरीशोऽथ देव्या सह दयानिधिः ॥ ८१
वृषभारुह्य सुश्वेतं रथान्तिकमुपासदत् । दृष्ट्वा स्तुवंस्तदा सर्वे देवा विष्णुपुरोगमाः ॥ ८२
संस्तोत्रमुदितो देवो वृषादुत्तीर्य सागजः । आदाय सशरञ्चापं स्यन्दने निदधे पदम् ॥ ८३
तस्मिन् कुर्वति देवेशे पदं लोकमयो रथः । भारासहः पपाताथ तदा पटपटध्वनिः ॥ ८४
बिभ्युस्सब्रह्मका देवास्सनारायणकास्तदा । नारायणो महायोगी वृषो भूत्वा दधौ रथम् ॥ ८५
सोऽतिभारभराक्रान्तश्छिन्ननेत्रः पपात ह । वमन्रुधिरमास्येन शिवं भीतोऽस्तुवद्धरिः ॥ ८६
ब्रह्मादयोऽपि देवेशमस्तुवन्नूर्ध्वबाहवः । ततः कृपानिधिश्शम्भुर्वाताद्विष्णोर्बलं ददौ ॥ ८७
क्षणेन ककुदा देवरथं दध्रे वृषो महान् । यथापूर्वं रथस्त्वासीदाज्ञया परमेशितुः ॥ ८८

तस्थौ देव्या महादेवस्यन्दने विश्वसंभवे । तदा नारायणोऽस्तौषीदग्रे स्थित्वा सुरैस्समम् ॥ ८९
प्रीतः प्रोवाच तं विष्णुं शिवश्शीतांशुभूषणः । इत्याश्रृणु महाविष्णो मत्प्रसन्नाद्धृदि स्थितान् ॥ ९०
शीघ्रञ्च निर्विशङ्कोऽद्य ददाम्येव मदाज्ञया । महान्यशो महाविष्णो मदर्थेऽनुष्ठितस्त्वया ॥ ९१
घ्नन्तमेवमीशानं वरमप्रार्थयद्धरिः । शक्तौ तु विद्यमानायां मूलशक्तिरहं यथा ॥ ९२
तथैव वृषभे देव वृषभस्त्वाज्ञगत्पते । अयमेव वरः श्लाघ्यो मम नान्यो जगद्गुरो ॥ ९३
भक्तिस्त्वयि सदाशालं भक्तवत्सल मेऽस्तु सा । ददौ तदा वृषत्वञ्च सभक्ति हरये शिवः ॥ ९४
तदालोक्य सुरास्सर्वे प्रहर्षमतुलं ययुः । अन्तरायोद्यतं देवास्तदाऽऽनर्चुर्गजाननम् ॥ ९५
भक्ष्यभोज्यफलैरन्यैरीश्वरोऽप्यात्मनन्दनम् । ब्रह्माणं सारथिं देवश्चोदयाश्वानितीश्वरः ॥ ९६
प्रोवाचाश्वाज्ञया ब्रह्मा चोदयामास वाजिनः । अताडयन् गणाध्यक्षा भेरीपटहडिण्डिमान् ॥
गोमुखान्छङ्खशृङ्गाणि तिमिलान् पणवादिकान् (तिमिलाकुणपादिकान्) ॥ ९७
काहलानि मनोज्ञानि चिह्नानि विविधानि च । प्रास्थानिको महानादो वाद्यान्यकृतार्णवः ॥ ९८
ककुभो बधिरीकुर्वञ्जृम्भे दिव्यनिर्गलः । देवो देवान् गणेन्द्रांश्च प्रमथान् पादचारिणः ॥ ९९
आज्ञापयन्मुदास्मीयवाहनारोहणाय तान् । आज्ञया ते हरिब्रह्ममुखा वाहनमाश्रयन् ॥ १००
गरुडं कैटभारातिरारुह्यानुचरैस्सह । सिषेवे हंसमारुह्य वेधा नागं शचीपतिः ॥ १०१
सिषेविरे दिशामीशाः स्वस्ववाहनमाश्रिताः । विघ्नेश्वरमहासेनौ विविधैर्गणपैस्सह ॥ १०२
मयूरमूषिकारूढौ दक्षिणोत्तरपार्श्वयोः । अग्रे नन्दीश्वरः श्रीमान्वेत्रमादाय काञ्चनम् ॥ १०३
सर्वोनुत्सारयामास सन्निधौ मार्गरोधिनः । ययौ प्रीतमना देवस्स्यन्दनेनांबया सह ॥ १०४
पुराणि हन्तुं दैत्यानामुद्दिश्य त्रीणि शङ्करः । देवाश्च मुनयश्चान्ये सिद्धविद्याधरादयः ॥ १०५
रथारूढं प्रभुं सांबं रथमण्डनमण्डितम् । दृष्ट्वा पुर्जन्म साफल्यं चक्षुष्मत्ताफलं महत् ॥ १०६
यदमेते कृतार्थास्मोमहीत्यगतं शिवम् । द्रष्टुं देव्याऽर्जितं पुण्यं पुरा किं वेति चोचिरे ॥ १०७
शृण्वन् कथयतामीशो वाचः श्रोत्रसुखा ययौ । पुराणि त्रीण्यरातीनां हन्तुं नाकसदां प्रभुः ॥ १०८
देवं तदा देवमुनीन्द्रयोगिनो गणेश्वरास्तुंबुरुनारदादयः ।
पद्मपाश्च तेषां परिकर्मलालसाः स्वस्तिब्रुवाणाश्च जगुश्च मङ्गलम् ॥ १०९

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकसप्ततितमोऽध्यायः ॥

---

॥ अथ द्विसप्ततितमोऽध्यायः ॥

श्री महेश्वरेण त्रिपुर संहारः ॥

अथ दैत्या महाविष्णुमायया मोहिता भृशम् । स्वकार्या विभूतिरुद्राक्षशिवपूजाद्यविस्मृतीः ॥ १
दुराचाररता नित्यं दृष्टप्रत्ययकांक्षिणः । स्त्रियो दृष्टफलार्थिन्यो धर्मेभ्यो मायदोक्तिभिः ॥ २
एवमेतेषु सर्वेषु सस्त्रीकेषु पुरत्रये । बभूवुर्दुर्निमित्तानि तेषाञ्चैव गृहे गृहे ॥ ३
वेणुदन्दुरभयश्चित्तात्मभयः पदस्मूर्द्धः । संयोगसमयश्चैषां महद्वाप्राप्तसंभयः ॥ ४
समभूत् समये शंभौ प्रीते त्रियाय दुष्करम् । तासां पुरं समायोगं दृष्ट्वा विष्णुमुखास्सुराः ॥ ५

सन्तुष्टमनसश्शीघ्रं शरमोक्षं तदाऽर्थयन् । आलोक्य तेषामाह्लादमाकुलत्वञ्च शूलभृत् ॥ ६
स्मितभीषणकाराशु विलोक्य गिरिजामुखम् । आन्दोलयन्महाविष्णुप्रमुखामरसायकम् ॥ ७
निष्ठु मेरुधनुष्कोटिसङ्गतवाणिरनादर । पुष्पेषु तदा मेघश्यामपाणैर्व्यलोकयत् ॥ ८
त च दृष्टासमूतश्शानुश्रणतेजसि । पतत्क्षात्तु पुरो हासमेघश्यामाविव मन्मथ ॥ ९
तदा देवकरान्दोळशालितासुरपुङ्गवा । वाम्बमिश्राशिगोविन्दा मनसा सुरयोधित ॥ १०
स्मितश्लाघा पुरो दृष्ट्वा प्रार्थयन् सायममोक्षणम् । तथेति मेरुकोदण्डं सज्यं कृत्वा त्वनादरम् ॥ ११
नादयञ्चामहिमयीमङ्गुल्यग्रेण चामृशत् । शरासनेऽपामारोप्य शरमास्त सुरान्तकम् ॥ १२
तच्छराग्नि स्मिताग्निश्चादहता त्रिपुरं क्षणात् । स्मिताग्निकणसन्दग्धवपुषस्त्रिदशारय ॥ १३
पूर्वं बुद्धगिरस्तत्तु शिवपूजापरा यत । गाणापत्यात्मयोगित्व प्रापिरे सर्व एव ते ॥ १४
शम्भो पार्श्वे तदा तिष्ठन् प्रमथैश्चाभिनन्दिता । ये मोह नैव संप्रापुस्त्रयस्तेऽसुरसत्तमा ॥ १५
अपरित्यक्तरुद्राक्षविभूतिशिवपूजना । पुरेषु दह्यमानेषु सगृहैरपि ते यथा (सदा) ॥ १६
अग्निमध्येऽपि तस्यान्तरङ्गुष्ठसत्त ईश्वरम् । वय भाग्यवशाच्चाप बुद्धमायाविमोहिता ॥ १७
यदि स्यामो यथैवैते भविष्यामो न सशय । त काल निन्यिरे शम्भो शिवेति परिकीर्त्य ते ॥ १८
ततस्तु शिवमभ्येत्य त्रय प्राञ्जलयोऽस्तुवन् । सर्वेश्वरं नमन्तश्च सर्वे हृष्टतनूरुहा ॥ १९
रथस्थश्शङ्करो भक्तास्तानुवाच स्मयन् प्रभु । अतीव यूय मद्भक्ता आयुष्मन्तो यशस्विन ॥ २०
असुरा किमु घोऽभीष्ट ब्रूत दाताऽस्म्यहञ्च तत् । वव्रिरे सुवतीशे ते एव वरमनुत्तमम् ॥ २१
यथ कैलासशिखरे भवद्द्वारि दयानिधे । द्वारपाला भविष्यामस्तुद्रान्तस्यादिनायक (शुद्धान्ते स्वान्तनायक)
एव प्रार्थयतस्तांस्तु ह्यस्त्वातीशश्चकार ह । स दुर्लभस्त्वीदृशो हि वरो लोकेऽखिलात्मनाम् ॥ २३
दत्वानाथ द वैष्मीशे त्वन्तर्हिते पुन । तेच विष्णुमुखा देवास्समयञ्चक्रिरे तदा ॥ २४
अद्यप्रभृति लोकेस्मिन् सदेवासुरमानुषा । लिङ्गार्चन न कुर्वन्ति ये देवा मुनयोऽपिवा ॥ २५
मनुजास्त्विच्छनन्धर्मा ये वा के वा नराधमा । भस्मरुद्राक्षरहिता प एवहसरणि गता ॥ २६
असम्भाष्याश्च तेऽस्माभिरपि धर्मरता भृशम् । संभाषणाच सम्बन्ध श्रौतस्मार्तादि कर्मवा ॥ २७
एतैस्साक प्रकुर्वन्ति सेषा नैवतु निष्कृति । सत्यमेव मृषा नैतदिति शप्त्वा तदा सुरा । २८
तत्रैव सुचिर काल स्थित्वा लिङ्गार्चन परम् । कृत्वा पुनश्शपन्तस्ते सर्वे जग्मुर्यथागतम् ॥ २९
स्व स्व लोक समागम्य चार्चयामासुरीश्वरम् । पूजयन्तोऽसुरा एव शिवश्चाबुद्धिपूर्वकम् ॥ ३०
अन्यथाश्च चिरं काल पश्चात्तत्रकशिवार्चना । शिवेनैव हताश्चात्यै गाणापत्यमथ प्रापन् । ३१
अत्यक्तशिवमार्गा ये भूयस्ते द्वारपालका । शङ्करस्यालये साक्षात्कैलासे तेऽभवन् द्विजा ॥ ३२
एव सम्भूय विबुधैर्विजयाय सुरद्विषाम् । अभ्यर्च्य विष्णुप्रमुखैररयो निजिताहि तै ॥
तस्मात्सर्वप्रयत्नेन पूजा कार्या शिवस्य तु ॥ ३३

इत्थ सम्भूय देवै परमशिवपदाभ्यर्चनाल्लब्धसौख्यैर्वीय सौदर्य जय भीर्विविधमपि वरं भोगमोक्षौ च लब्धौ ।
तस्मान्मर्त्यैरमर्त्यैरसुरमुनिगणैस्सिद्धगन्धर्वमुख्यैर्भक्त्या लिङ्गशिवार्चा विधिवदनुदिन श्रद्धयानैर्विधेया ॥ ३४

इति श्री स्कान्दे महापुराणे शकरसहिताया शिवरहस्यखण्डे
उपदेशकाण्डे द्विसप्ततितमोऽध्याय ॥

॥ अथ त्रिसप्ततितमोऽध्यायः ॥

अन्धकासुर भयात् देवानां स्त्रीवेष धारणम् ॥

सूतः — पुनश्चाहं प्रवक्ष्यामि संभूयाश्चर्यशूलिनम् । देवैस्त्वमीष्टं संप्राप्तं यच्चत्कथयामि वः ॥ १
पुराऽभूदन्धको नाम्ना दैतेयो लोककण्टकः । तपसा महता प्राप्तबलवीर्यपराक्रमः ॥ २
त्रिजगत्पीडितं तेन विजिताश्च सुरा युधि । निर्जिता विबुधा ब्रह्मविष्ण्वाद्या रणमूर्धनि ॥ ३
स्त्रीवेषधारिणस्तेऽथ न तु पुंरूपमास्थिताः । धृतस्त्रीवेषमायाश्च चेरुर्देवा दिशोदश ॥ ४
पुरुषाकारविबुधानहन्काराग्रहान्तरे । पुनश्च वनिताकृपान् स हलेत न चासुरः ॥ ५
ते पीड्यमाना दैत्येन स्त्रीवेषा अपिसन्ततम् । मन्दरं प्राप्य ते सर्वे महादेवमियं गिरिम् ॥ ६
तत्र देवं नमस्कृत्य हरिब्रह्मादयस्सुराः । तदाज्ञया भवं देवीसखीनां परिचारकाः ॥ ७
तत्राप्यनुपदं देवानन्धको गिरिमासदत् । तं मन्दरगतं देवाः स्त्रीवेषा विष्णुपूर्वकाः ॥ ८
दृष्ट्वाजिज्ञपन्महेशाय दौरात्म्यञ्चास्य कृत्स्नशः । ततो देवो महादेवः करुणामृतवारिधिः ॥ ९
देवानां रक्षणार्थं तो भैरवेशमचोदयत् । विनिग्रहाय दैत्यानां गणपो निर्जगाम सः ॥ १०
तयोर्युद्धमभूत्तत्र सेनयो रुद्रदैत्ययोः । विनादानपमद्दैत्यसेना भैरवसेनया ॥ ११
ये ये दैत्या हता रौद्रैस्तांस्तान् भृगुसुतस्तदा । मृत्युञ्जयेन मन्त्रेण जप्तेन च पुनः पुनः ॥ १२
पुनरुज्जीवयामास तदद्भुतमिवाभवत् । शुक्रमाकृष्य सहसा भक्षयामास शङ्करः ॥ १३
ततो हताऽऽसुरी सेना गणपैर्भैरवैः क्षणात् । भैरवोऽपि ततः क्रुद्धस्तमन्धकमहासुरम् ॥ १४
शूलप्रोतं विधायाशु शिवसन्निधिमभ्यगात् । शिवेनालोकितो दैत्यश्शूलप्रोतोऽपि तत्क्षणम् ॥ १५
निवृत्तमस्य सकलं कर्मजातं तदाऽऽसुरम् । लब्धमानस्स शूलाग्रे देवं तुष्टाव हर्षधीः ॥ १६
तास्तोत्रमुदितो देवस्तं वरेण समायुजत् । वव्रे सोऽपि वरं दैत्यो गाणापत्यमनुत्तमम् ॥ १७
ततो देवोऽपि दैत्याय गाणपत्यं प्रसन्नधीः । शुक्रश्च प्रसन्नमीशोऽन्तर्जठरसञ्जोदरान्तरात् ॥ १८
शुक्रोऽप्यथर्व्यं तदेशानं स्वमण्डलमथाविशत् । ततोविष्णुमुखा देवास्समाराध्यांबया शिवम् ॥ १९
स्त्रीरूपं संपरित्यज्य ययुः स्वं स्वं तदास्पदम् । असुरोऽप्यन्धकः पापी विलोक्यान्ते त्रिशूलिनम् ॥
गाणापत्यममर्त्यानामपि दुर्लभमाप सः ॥ २०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्रिसप्ततितमोऽध्यायः ॥

---

॥ अथ चतुस्सप्ततितमोऽध्यायः ॥

श्री शिवेन मर्दसंहारार्थाः देव्या मन्दासुर वधश्च ॥

सूतः — एकदा पुनरीशानः प्रियया गिरिकन्यया । मन्दरस्थगये न्द्रेश्च शृङ्गरवनमाश्रितः ॥ १
तत्र श्रृङ्गारविपिने देव्या दत्तकरस्थितः । गुल्मान् लताद्रुमांश्चागपान् फुल्लपल्लवशोभिनः ॥ २
सार्धं ददर्श तान् देव्या शनैस्तद्दर्शिसुचितान् । मध्ये तत्र वटं दृष्ट्वा महाविटपमद्भुतम् ॥ ३
तन्मूलवेदिकामध्यमाससाद सहोमया । मध्यासीमासनुत्तम दिव्यास्तरणमासनम् ॥ ४

देवीत्यप्रबोधमालोक्य देवदेवश्च सस्मिता । प्राह वृक्षो महानेवं न दृष्टो यत्र कुत्रचित् ॥ ५
तामाह यद्वीमेवमितोऽप्येष युगान्तिमे । ब्रह्मणः प्रळये प्राप्ते महानेतच्छताधिकः ॥ ६
भविष्यति तथा पर्णमेकमस्यार्णवांभसि । पतिष्यति महाविष्णुस्तत्र शेतेऽर्भकाकृतिः ॥ ७
ब्रह्मोत्पत्तिनिमित्तं मां स्मरिष्यति जनार्दनः । हिरण्यगर्भं तेनाहं जनयिष्यामि तन्मुखात् ॥ ८
अजस्य नाभावप्येकं समर्पितमिति श्रुतिः । जगत्सृष्टिरियं पश्चाद्यथापूर्वं प्रवर्तते ॥ ९
उद्यानपालकान् देवः स्त्रीभिस्सन्निहितान् सह । आहूय वापिकामध्यादानयिष्यथ पक्षिणौ ॥ १०
कौचिदित्याह मुग्धेन्दुशेखरस्तानुमासखः । ते हंसं शुकमेकञ्च गृहीत्वा जग्मुरञ्जसा ॥ ११
तौ पक्षिणौ प्रणम्येशं समातस्थतुरग्रतः । आलोक्य तौ तु विश्वात्मा पप्रच्छ प्रियया सह ॥ १२
कतिधन्तौ द्विजौ कालं किं किं कृत्वा विनेष्यथः । सांबे पृच्छति तत्रैवं शुकः प्रोवाच हृष्टधीः ॥ १३
कृतमालतरोस्सेवां कुर्वता स्थीयते मया । अत्रैव भवदुद्याने सततं भाग्यशालिना ॥ १४
हंसोऽपि पुनराहेशं प्रणम्य स कृताञ्जलिः । ब्रह्मविष्ण्वोश्च लोकेषु दिक्पालानाञ्च सञ्चरन् ॥ १५
भूरिपुण्यवशाद्देव तवोद्यानमिहागतः । वापीमध्येऽत्र पीयूषसमम्भः पिबन् सदा ॥ १६
पद्मयास्तत्र जटाजूटनिलयायाश्च सांप्रतम् । प्रांसर्धंभसो नित्यं माहात्म्यं निवसाम्यहम् ॥ १७
ब्रुवन्तमिति तं हंसं शुकञ्च जगतां पिता । गच्छतामिति चोक्त्वा तौ विससर्ज तदासपन् ॥ १८
ततो देवी भृशं क्रुद्धा समुत्थाय तदासनात् । ईशमुक्त्वा तवश्रीति हंसस्य वचनात्कथम् ॥ १९
प्रीतिस्तव मुखे हासरसाधु साध्विति निर्गता । गत्वा दूरं क्वचिल्लीना भूमौ पांसून् समूह्य सा ॥ २०
चकार पुत्तळिं साथ सजीवा पुनरुत्थिता । तदन्तरे महादेवः कुपिताञ्जगदम्बिकाम् ॥ २१
सान्त्वयित्वा समानीय जगामान्तःपुरं प्रभुः । यैः पांसुभिरुमादेव्या कृता पुत्तळिका तदा ॥ २२
ते मन्मथस्य दग्धस्य देहभस्मचयास्ततः । दुर्गुणः पुरुषाकारो कैलासस्य समीपगः ॥ २३
तं गणेन्द्रास्समुद्वीक्ष्य त्वं भण्डो (पण्डो) नामतोऽसुरः । गच्छदुष्ट त्वया नात्र स्थातव्यं सुरशत्रुणा ॥ २४
निरासुरिति कोपेन स भण्डो निर्गतोऽसुरः । भण्डासुरस्तपस्तेपे प्रीतं कुर्वन् पशोःपतिम् ॥ २५
सुघोरमतिवैराग्यं वर्षाणामयुतायुतम् । शत्रवो मम देवेन्द्रहरिब्रह्मादयस्सुराः ॥ २६
संहरिष्ये ततस्तेषां वीर्याणि कृपयेशितुः । विन्देरंस्ते न मां वीर्यं भक्षयन्तं हृदिस्थितम् ॥ २७
ययाचे वरमित्थेवं देवदेवं त्रियंबकम् । प्रीतस्तत्तपसा देवस्तथा सर्वं ददौ वरम् ॥ २८
भण्डासुरो लब्धवरो भक्षयन्वीर्यमात्मनाम् । ब्रह्मविष्ण्विन्द्रमुख्यानां देवानामपि सर्वशः ॥ २९
नष्टवीर्यास्सुरास्सेन्द्राः स्वस्वपत्न्यां विरागिणः । किमेतदिति निर्विण्णा जज्ञिरे न तु तं सुराः ॥ ३०
इच्छन्तोऽस्य प्रतीकारमीशार्चानिरता भृशम् । ब्रह्मा हरिर्हरिश्चान्ये हरितामधिपाश्च ते ॥ ३१
लिङ्गे षोडशभिर्देवमुपचारैरुपाचरन् । कैलासगिरिमभ्येत्य पश्चादभ्यर्थयञ्छिवम् ॥ ३२
निर्वीर्या देव सञ्जाता न जानीमोऽस्य कारणम् । ईश्वरः — तानुवाच हरिब्रह्मप्रमुखानिति भाषिणः ३३
एवं भण्डासुरो युष्मद्वीर्यमादाच्छरीरगः । तदर्थं सर्वसंहारयागः कार्यो मया यदि ॥ ३४
अमराणामनुमतिस्त्वन्यथा नैव शक्यते । मदनुष्ठितयागाग्नौ हुतेष्वखिलदेहिषु ॥ ३५
आज्ञयाऽनन्तरं शक्तिर्मामिकाऽपि जनिष्यति । भण्डासुरञ्च संहत्य युष्मांश्च जनयिष्यति ॥ ३६
यथापूर्वं क्षणेनैव सत्यमुक्तं सुरा मया । तदोमिति वचः प्रोचुः श्रुतदेवगिरस्सुराः ॥ ३७
निश्शक्तिहस्तपादास्ते नितरां विमुखाः स्त्रियाम् । इतीश्वरो विसृष्टेषु गतेषु विबुधेष्वथ ॥ ३८
स्वस्मिन्नेव महायज्ञे जुहाव सविधस्सुरान् । मुनीन् पितृगणानन्यान् गन्धर्वोरगराक्षसान् ॥ ३९

मनुष्यान् पक्षिणोगांश्च जगत्स्थावरजङ्गमम् । महाप्राज्ञो प्रसास्त्राग्नौ दीक्षितः स्वयमेवया ॥ ४०
हुते निश्शेषमखिले स्थावरेऽपिच जङ्गमे । तस्मिन्नग्नौ समुत्तस्थौ शक्तिर्देवैस्त्रिभिस्सह ॥ ४१
बिभ्राणा पुष्पविशिखानिक्षुचापं सृणिं स्रजम् । प्रणनाम महादेवं शक्तिस्संप्राप्य पादयोः ॥ ४२
ध्वजिश्वपच्च किं कार्यं शाधि मां सर्वेमृप । तामाह प्रणतामेवं शक्तिमान् गिरिजापतिः ॥ ४३
भण्डासुरं महाघोरं भक्षकं शुक्रमात्मनाम् । संहरस्तु महाशक्ते रक्षार्थमखिलात्मनाम् ॥ ४४
विससर्ज तदा साऽपि तस्मिन्छरमथैककम् । विमुञ्चन्ती सञ्जहार प्राणांस्तस्य तदाज्ञया ॥ ४५
बाणेनैकेन सहसा हते भण्डासुरे तथा । अनन्तरं दयासिन्धुश्शक्तिं तामादिदेश ह ॥ ४६
भण्डत्रये त्वया सृष्टे ब्रह्मविष्णुमहेश्वरान् । महालक्ष्मीमम्बिकांच वाचां देवीं सरस्वतीम् ॥ ४७
तांस्तैस्संयोज्य तत्पत्नीस्सृष्टिरक्षालयान् क्रमात् । कारयेति शिवाज्ञां तां वहन्ती शिरसेश्वरी ॥ ४८
तथैव श्रीन् समुत्पाद्य तच्छक्तीरपि तादृशीः । सृष्टिरक्षालयगुणान् कारयामास तैस्त्रिभिः ॥ ४९
देवदेवं समाराध्य सस्वाहङ्कारचोदिताः । सृष्ट्यादि सर्वकर्माणि कुर्वन्ति स्वाज्ञयैव ते ॥ ५०
रुद्रमूर्तेश्च तन्नाम तच्चिह्नं तस्य चेष्टितम् । सदाशिवस्य यन्नाम नानयोर्विद्यते भिदा ॥ ५१
अन्येषां तामधिष्ठाय ददातीष्टं स्वयं शिवः । आज्ञापयति चेशानस्सर्वानालोक्य सादरम् ॥ ५२
अहमेव हरस्सोऽहं नावयोर्विद्यते भिदा । अनुशास्येति देवस्तानन्तर्धानं ययौ शिवः ॥ ५३
तेऽपि तत्पूजया लब्धमहाभोगास्त्रयस्सुराः । कुर्वन्ति सततं सृष्टिस्थितिनाशान् पृथक् पृथक् ॥ ५४
तदादि शिवपूजाया महिम्ना संभृतश्रियः । भुञ्जन्तो विपुलान् भोगान् ब्राह्मानपि च वैष्णवान् ॥ ५५
रौद्रांश्च पदसंभूतानीश्वराज्ञासमुद्भवान् । शैवञ्च परमानन्दमन्यमूर्धपदञ्च ते ॥ ५६
भण्डासुरशिरावस्थाग्ने निहतशिरायया पुनः । प्राप्य रुद्रगणेन्द्रत्वं दुष्प्रापममरैरपि ॥ ५७
आस्तेऽद्यापि गणैस्सार्धं सन्निधौ परमेशयोः । अग्निकुण्डसमुद्भूता येयमंशांशसंभवा ॥ ५८
त्रिपुरेति समाख्याता पुष्पबाणेक्षुकार्मुका । सेयमीशं समाराध्य शिवया सह सङ्गता ॥ ५९

इत्थं भण्डासुरार्थं जगदिदमखिलं ब्रह्मविष्ण्विन्द्रपूर्वान्
रौद्रे यागे शिवोऽयं समिध इव च तान् स्वांशदौ च हुत्वा ।
शक्त्या भण्डासुरेन्द्रं त्रिपुरवनितया घातयित्वा महत्या
विश्वं दैव्या तयान्यान् सकलमपि सुरान् कारयामासभूयः ॥ ६०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुस्सप्ततितमोऽध्यायः ॥

---

॥ अथ पञ्चसप्ततितमोऽध्यायः ॥

श्री केदारेश्वर प्रसादेन श्रीदुर्गया महिषासुर वधः ।

पुरा सुरा हरिब्रह्म प्रमुखा अधिपा दिशाम् । महिषेणासुरेन्द्रेण तथा श्यामासुरेण च ॥ १
चिरं विप्रकृतास्स्वकस्वलोकात्समेत्य ते । केदारे देवमीशानं पूजयामासुरञ्जसा ॥ २

ततः प्रसन्नो भगवांस्तेषामाविरभूच्छिव । नमस्कृत्य तदा तस्मै प्रोवाच मधुसूदन ॥ ३
शिरस्यञ्जलिमाधाय विनयेन समन्वित । मम देव रजोमोहाद्ब्रह्मणश्च पुराऽऽवयो ॥ ४
कलहेन महद्युद्धमभूद्वै रोमहर्षणम् । ब्रह्मा क्रोधान्मदुपरि ससर्ज महिषासुरम् ॥ ५
अहं व्याघ्रासुरं तस्मिन्नसृज क्रोधमूर्छितः । आवाभ्या च तपस्तप्तं त्वत्प्रीतिजनकं महत् ॥ ६
तेन पुण्येन महता तौ सृष्टौ यद्वरौ । तौ नियुध्य चिरं कालमन्योन्याशक्यनिग्रहौ ॥ ७
व्याघ्रोऽप्यबाधद्ब्रह्माण महिषो मा महेश्वर । ततश्च विबुधान् सर्वानसुरौ च न्यबाधताम् ॥ ८
इदानीमधिकं ताभ्या पीड्यते जगता त्रयम् । वय देव तयोरग्रे स्थातुमेव न शक्नुम ॥ ९
तौ निगृह्यासुरौ दुष्टौ रक्षरक्ष दयानिधे । इति विज्ञापितो देवस्सर्वेशो मधुविद्विषा ॥ १०
सस्मित गिरिजावक्त्रमवलोक्य जगत्पति । दुर्गामुत्पाद्य सहसा स्वाज्ञया परमेश्वर ॥ ११
सिंह तस्यै ददौ यानमतिभीमपराक्रमम् । आयुधानि शितान्यस्यै अष्टादश ददौ मुदा ॥ १२
अनुगृह्य च तामाशु कृपापूर्णेन चक्षुषा । आज्ञापयत्तयोरीशो निग्रहाय सुरद्रुहो ॥ १३
साऽऽरूढा सिंहमतुल सर्वायुधविशारदा । व्याघ्र संहृत्य सहसा जगतामवनाय सा ॥ १४
महिषस्य शिरश्छेद चकार विशिखै पुन । तच्छिर पुरतस्तस्या पुन पुनरयुध्यत ॥ १५
तदाक्रम्य पदैकेन शूलाग्रेण जघान च । तत्पदस्पर्शमात्रेण ज्ञानी स महिषासुर ॥ १६
तामस्तुवन्महामाया महिषासुरमर्दनीम् । प्रीताऽस्मै सा ददौ क्षिप्र गाणपत्य सुरद्रुहे ॥ १७
सन्निधौ परमेशस्य वासञ्च महिषाय सा । पुनश्च सन्निधि प्राप्य शिवयोरघुर्तादिनी ॥ १८
तावाराध्य तदा लिङ्गे तयोरग्रेऽवसन्मुदा । दयाश्रिते निरातङ्का देव दर्वी प्रणम्य च ॥
दुर्गाञ्चख्यमचिरादापुस्सर्वे तदास्पदम् ॥ १९

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चसप्ततितमोऽध्याय ॥

---

॥ अथ षट्सप्ततितमोऽध्याय ॥

दुर्गया रक्तबीजादि वध शिवेन काल्या सह नर्तनञ्च ॥

सूत — स्वर्गे कदाचिद्देवेन्द्रो भोगान् भुञ्जन्निषेविषान् । त द्रष्टु सप्तर्षयस्सम्प्रापुस्संशितव्रता ॥ १
तानागतान् स सत्कृत्य महेन्द्रो मुनिसत्तमान । अह धन्योऽस्मि मुनयो यूयमत्र यदागता ॥ २
आप्तकामो विशेषेण युष्मात्तत्प्रार्थये वरान् । देवा मनुष्या पितरस्ते वय सख्यमाश्रिता ॥ ३
असुरा राक्षसाश्चैव पिशाचाश्च तपोधना । सत्वायस्सनिवृत्तास्तदस्माक रिपवोऽसुरा ॥ ४
अस्मद्बाधारता नित्य यूय तच्छान्तये स्थिता । तस्माद्दिक्ष्वमरावत्या यूय प्रत्येकमास्थिता ॥ ५
अग्निं निधाय कुण्डेषु रक्षोघ्नैर्मखेन वै । यजध्व प्रत्यह देव नियमेन निरन्तरम् ॥ ६
मत्प्रीत्यर्थं मुनिश्रेष्ठास्सप्त यूय महत्तरा । ब्रुवन्तमेव देवेन्द्र प्रयूचुस्सप्त ते द्विजा ॥ ७
वय स्वकर्मानुष्ठान स्वकृत्याश्चैव निरन्तरम् । कथ वत्स्यामहे देव मघवन्निति तेऽब्रुवन् ॥ ८
ब्रुवतस्तानितीन्द्रोऽपि प्रणिपत्य कृताञ्जलि । मदर्थं यूयमत्रैव यजध्व ऋषिसत्तमा ॥ ९
युष्माक ज्ञानिना किं वानुष्ठान भूत सत्तमा । इत्यर्थित महेन्द्रस्याशक्नुवन्तो निरासितुम् ॥ १०
चक्रुस्तथा ते दिक्ष्वग्नि प्रतिष्ठाप्य यथाविधि । राक्षोघ्न यज्ञमतला महेन्द्रप्रीतिमिच्छव ॥ ११

तात्पर्यं प्रीतमनसो यद्दिसम्तोषलाञ्छनाः । कुर्वन्तु यज्ञं रक्षोघ्नं तेषु सन्तु योगिषु ॥ १२
समुत्तस्थुर्महाघोरा महासुरास्सप्त सन्तु । एकासुरोऽत्र प्रथमो रक्तबीजाख्यकोऽपरः ॥ १३
अन्ये तु पञ्चविश्वाता पञ्चरावणसंज्ञया । एते सप्त विनिर्गत्य कुण्डेभ्यो ऋषिसत्तमान् ॥ १४
दृष्ट्वाऽऽत्मनो धावमानानन्वधावन्महासुराः । पलायतस्तान् सन्त्यज्य सर्वान् सप्त चासुराः ॥ १५
इन्द्रलोकमनुप्राप्य चेन्द्रादीनपि धावतः । प्रसह्य जगृहिरे मूर्ध्नि लुण्ठयाञ्चक्रिरे पुरम् ॥ १६
ब्रह्मलोकमनुप्राप्य विष्णुलोकञ्च तेऽसुराः । तांस्तान् प्रहृत्य सहसाऽपजह्रुस्तत्पुराणि च ॥ १७
हिंसितुं समनुक्रान्ताः प्राणिनो निखिलानपि । सत्वयो महेन्द्राद्या ब्रह्मा विष्णुश्च लोकपाः ॥ १८
अपूजयन् महादेवं तेषां शान्तिमभीप्सवः । ततः कैलासशिखरं संप्राप्य जगदीश्वरम् ॥ १९
व्यजिज्ञपन् संप्रणम्य चेष्टितं तं निशाचरिपाम् । तानाह च महादेवः सर्वथैव दयानिधिः ॥ २०
इन्द्रः स्वात्मोपभोगार्थं महर्षीन्मुदुपासकान् । यज्ञात्कारेण रक्षोघ्नं यज्ञं कर्तुं न्ययुङ्क्त हि ॥ २१
विपरीतस्ततः यज्ञस्तुग्रसमपद्यत । उपद्रुताय महेन्द्रविश्वादीनामजायत ॥ २२
इति ब्रुवन्महादेवो जहास सकलप्रभुः । ततो देवीसमीपस्था दुर्गादेव्युग्ररादिनी ॥ २३
तामाह महिषस्याप्रघातिनीं जगतां पिता । अयि रंकासुरं दुर्गे रक्तबीजाख्यमेव च ॥ २४
पञ्चापि रावणान् सद्य जहि शीघ्रं मदाज्ञया । इति कुण्डोदरश्चापि पञ्चरावणनिग्रहे ॥ २५
न्ययुङ्क्त तौ विनिर्गत्य दुर्गाकुण्डोदरावुभौ । प्रधाने समरे रंकं रक्तबीजाख्यमर्दिका ॥ २६
कालीमुत्पाद्य तज्जिह्वासमराङ्गणमास्थिता । रंकासुरञ्च संहृत्य रक्तबीजमेव च ॥ २७
सपो रुधिरसंसिक्तपांसवोऽपि महत्तराः । समुत्तिष्ठेयुरेतस्मात्कारणात्कालिजिह्वया ॥ २८
रक्तानि संहृतान्येवमसुरौ संहृतौ तथा । ततः कालीच तद्रक्तपानादेव मदाकुला ॥ २९
सर्वसंहरणे यत्ता चुकुशुः प्राणिनोऽखिलाः । ततः प्राप्युपकाराय तद्दर्पशमनाय च ॥ ३०
तथा ननर्त देवेशस्तद्द्भुतमिवाभवत् । निर्जिता ताण्डवे काली देवेन विगतस्मया ॥ ३१
निर्जिता दुर्गया साकमाश्रिता सर्वमङ्गला । कुण्डोदरोऽपि पञ्चापि रावणान्महतोऽसुरान् ॥ ३२
निर्जित्य भक्षयित्वा तान् सांबमीशं समाश्रितः । ब्रह्मा च विष्णुर्देवेन्द्रस्सापि ऋषयस्सुराः ॥ ३३
देवदेवाज्ञया प्राप्य स्वं लोकं मोदमाप्नुवन् । एवमेवासुराक्रान्तास्त्रिदशास्ते यदा यदा ॥ ३४
तदा तदेशमाराध्य संपूज्य सुखिनोऽभवन् । पृथक् पृथक्समाराध्य पदज्ञातिः पुरोदिता ॥ ३५
संपूज्य चेशमाराध्य सिद्धिः प्रोक्ता मयाऽधुना । इतीदं सर्वमाख्यातं पूजामाहात्म्यमुत्तमम् ॥ ३६
य इदं शृणुयुर्नित्यं श्रावयन्ति पठन्ति च । विलिख्य पुस्तके नित्यमर्चयन्ति च सादरम् ॥ ३७
तेऽभीष्टमैहिकं सर्वमासाद्य विगतापदः । पुत्रपौत्रस्नुषाप्राप्तिमाद्यद्यदर्गौः ॥ ३८
जामातृदुहितृः पुत्रपुत्रगौश्च सन्ततम् । दृष्ट्वा दृश्यानि सर्वाणि चाचरिया मुदान्विताः ॥
तथैवाचरणीयानि चान्ते निर्वृतिमाप्नुयुः ॥ ३९
सकलमेतदिदं परमेशितुश्चरणपद्मजयोः परिचर्यया ।
हरिपितामहचन्द्रिप्रदातयो मुनिवराः प्रभवन्ति समृद्धयः ॥ ४०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षट्सप्ततितमोऽध्यायः ॥

॥ अथ सप्तसप्ततितमोऽध्यायः ॥

व्यासस्यापि शिवोत्कर्षपरिज्ञानं व्यासस्य विष्ण्वादिभिः शिवमहिम प्रबोधनम् ॥

पुरा ब्रह्मात्मजाः पुण्यास्सनकश्च सनन्दनः । सनातनश्च भगवान् सनत्पूर्वकुमारकः ॥ १
चत्वारो ऋषयश्शंभोः पूजां पुण्यां विधाय ते । प्रसन्नेन ततो वेदान् शिवेनाध्यापिताः खलु ॥ २
आगमांश्च पुराणानि सेतिहासानि सुव्रताः । शिवार्चनपरा नित्यं शिवयोगेन पावनाः ॥ ३
शिवज्ञानाग्निना दग्धमहापातकसञ्चयाः । जीवन्मुक्ता बभूवुस्ते परमानन्दनिर्भराः ॥ ४
व्यासः पुरा महादेवं विश्वरक्षाकरं परम् । पूजयित्वा ततो वेदान् पुराणानि मुनीश्वराः (चतुर्दश) ॥ ५
ज्ञात्वा सम्यग्जगादैनान् शिष्याणां च तपस्विनाम् । परतत्वं महादेवं ज्ञातवांस्तत्वतो बुधः ॥ ६
ऐश्वर्यमदमोहेन विद्यागर्वेण मायया । ईश्वरस्य तदा शिष्यानृषीनपि च वीक्ष्य सः ॥ ७
नारायणं परं तत्वं परं ब्रह्म सनातनम् । जगादाविद्यया शंभोर्मोहितः परमेशितुः ॥ ८
तदोचुस्तापसास्सर्वे शिष्यास्तस्य विचारिताः । इयन्तं कालमीशानं परं ब्रह्म सनातनम् ॥ ९
उक्तवानपि विप्रेन्द्र तद्विरुद्धमिहोच्यते । वेदान्तानां पुराणानां विरुद्धार्थं ब्रवीषि किम् ॥ १०
इति पृष्टोऽपि तैर्व्यासः पुनः प्राह द्विजानिमान् । विष्णुरेव परं ब्रह्म नान्यः कश्चन विद्यते ॥ ११
तूष्णीमुक्तं मया पूर्वं यत्किञ्चित्तत्तदा द्विजाः । तदिदानीं परं ब्रह्म ज्ञातुमर्हथ माधवम् ॥ १२
इति तस्य वचः श्रुत्वा विरुद्धार्थं द्विजोत्तमाः । संशयाविष्टमनसः पुनः प्रोचुस्तपोधनम् ॥ १३
वेदैः पुराणैर्विश्वेशो देव एको महेश्वरः । इत्युक्तं भवता पूर्वममोहेनैव भूरिशः ॥ १४
तद्विरुद्धं वदस्यद्य मोहितो माययेशितुः । न प्रमाणमिदं तस्माद्वचनं तव सत्यतः ॥ १५
इति तेषां वचः शृण्वन् पुनर्व्यासस्तपोधनः । सत्यं ब्रवीमि विप्रेन्द्रा युष्माकं सन्निधावहम् ॥ १६
विष्णुरेव परं तत्वं परं ब्रह्म सनातनम् । ततस्ते ऋषयश्शिष्याः शृण्वन्तोऽस्य गिरं तदा ॥ १७
यदि सत्यं ब्रवीष्यद्य तर्हि काशीं परां पुरीम् । गत्वाऽत्र सत्यतो ब्रूहि भुजमुद्धृत्य तापस ॥ १८
तदा प्रमाणं वचनं भवेत्तव न संशयः । इति तेषां वचः श्रुत्वा तथेत्युक्त्वा स तापसः ॥ १९
काशीं प्राप्य महापापप्रशोधनपटीयसीम् । तत्र विश्वेशसविधे भुजमुद्धृत्य निर्भयः ॥ २०
नारायणः परंब्रह्म परमात्मा परात्परः । परं तत्वं परञ्ज्योतिरुद्धृत्य भुजमुक्तवते ॥ २१
सत्यं सत्यं पुनस्सत्यं सत्यमत्रोच्यतेऽधुना । इति ब्रुवति मोहेन व्यासे तस्मिञ्छिवान्तिके ॥ २२
स्तब्धौ भुजौ तदा व्यासि न च जिह्वा चचाल ह । केवलं दारुवत्तस्थे निश्चेष्टस्सच तापसः ॥ २३
तद्दृष्ट्वा ऋषयस्सर्वे तच्छिष्याश्च भयान्विताः । अहो मोहस्य माहात्म्यं यदयं वदतां वरः ॥ २४
व्यस्तवान् सकलान् वेदान् पुराणानि च सर्वदा । तथाऽपि विपरीतार्थं वदत्यत्र भयं विना ॥ २५
तदस्य स्तंभितौ बाहू वाग्बन्धोऽपि बभूवहा । असत्यवादी व्यासोऽपि शिवमायाविमोहितः ॥ २६
तदस्य शिक्षा देवेन कृता खलु दुरत्यया । इति सर्वेऽपि तच्छिष्या ऋषयो भयकंपिताः ॥ २७
चक्रुः स्तोत्रं महेशस्य बद्धाञ्जलिकराः पुनः । तत्राविरासीद्भगवांस्तत्रैव मधुसूदनः ॥ २८
व्यासं स्तब्धकरं वीक्ष्य विस्मयाकुलितान्तरः । अहो तव मतिः कुत्र गता व्यासाधुना ऋषे ॥ २९
शिवं विश्वाधिकं शान्तं सच्चिदानन्दरूपिणम् । योगिध्येयमुमाकान्तं मम वार्ताऽप्यव्ययम् ॥ ३०
सर्ववेदान्तसर्वस्वं सर्वाधिकमनुत्तमम् । मुक्त्वा मां मायया तस्य प्रोक्तवानधिकं यत ॥ ३१
ततो न तव मात्रं हि द्रोहः किन्तु ममापि हि । सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ॥ ३२

शिव एव परं तत्त्वं विश्वस्मादधिकः परः । अहं सर्वजगत्कर्ता मम कर्ता महेश्वरः ॥ ३३
तस्य देवादिदेवस्य कर्ता कोऽपि न विद्यते । न पर सकलानीशश्शास्ति सर्वेश्वरेश्वरः ॥ ३४
तत्प्रसादाद्विनिर्मोक्षस्सर्वेषां सम्प्रतेर्ध्रुवम् । इत्युक्त्वा ऋषिभिस्साकं तुष्टाव परमेश्वरम् ॥ ३५
अथ शम्भो महादेव सच्चिदानन्दविग्रह । नमस्तेऽस्तु महादेव परात्परतराय च ॥ ३६
विश्वाधिकाय भवते नमो यज्ञेश्वराय ते । नमस्ते सर्वकर्त्रेऽस्तु पुनर्भूयो नमोनमः ॥ ३७
एवं स्तुवति देवेशं हरिं साकमृषीश्वरैः । गतमोहस्तदा व्यासो भयाकुलितमानसः ॥ ३८
विश्वाधिको महादेव परतः परात्परः । सर्वेषामपि लोकानां शास्ता सद्गुरुरव्ययः ॥ ३९
तदाज्ञया जगत्सर्वं सृजते पूर्ववद्विधिः । नारायणोऽपि भगवानाज्ञया पालयत्यतः ॥ ४०
यस्य पूजाप्रभावेन ब्रह्मा ब्रह्मत्वमाप्तवान् । विष्णुश्च स्वपदं प्राप पूजया यस्य शूलिनः ॥ ४१
नमस्तस्मै महेशाय मायातीताय शम्भवे । इति तुष्टाव देवेशं व्यासश्शम्भुं तपोधन ॥ ४२
यदा प्रादुरभूत्तस्य सापराधगण ईश्वरः । तदानीं वीक्ष्य तं नन्दी व्यासं शङ्करवल्लभः ॥ ४३
त्वया कृतं महामोहात् परब्रह्मणि शङ्करे । नीलग्रीवे विरूपाक्षे सच्चिदानन्दविग्रहे ॥ ४४
विश्वाधिके विश्वरूपे महाप्रासे महात्मनि । स्तुवति ब्रह्मविष्ण्वादिदेवतैरभिवन्दिते ॥ ४५
पूर्वैव मम दुर्बुद्धे विष्णुरस्तीति भाषता । उत्थापितौ यतो बाहू निकृन्तयौ त्वया ततः ॥ ४६
पश्य शम्भुं विरूपाक्षं प्रसन्नं तव चाग्रतः । अनेकब्रह्मविष्ण्वादिदिक्पालालङ्कृताकृतिम् ॥ ४७
अप्रतर्क्यमनिर्देश्यमनन्तमहिमास्पदम् । दृष्ट्वा व्यासद्विजाय सासाश्रुपुलकान्वितान् ॥ ४८
प्रणम्य दण्डवद्भूमौ समुत्थाय कृताञ्जलिः । अनन्तव्यो मेऽपराधोऽयमज्ञानेन विजृम्भितः ॥ ४९
महादेव महादेव महादेव दयानिधे । भवानेव भवानेव भवानेव गतिर्मम ॥ ५०
एवं स्तुवति देवेशं व्यासे तस्मिन् कृताञ्जलौ । सवैरान्तरधाच्छम्भुस्सर्वैश्च गणनायकैः ॥ ५१
ततो दृष्ट्वा महादेवं विष्णुस्सर्वेऽपि तापसाः । व्यासादिकाश्च ते सर्वे हर्षकण्टकिताश्च ॥ ५२
व्यासं तं वीक्ष्य नितरां भयकम्पितविग्रहम् । इतः परं न कर्तव्यमीदृग्वाक्यं त्वयाऽनघ ॥ ५३
शिवमेवपरं तत्त्वं ब्रूहि नित्यं विना मदम् । इत्युक्त्वाऽन्तर्दधे विष्णुर्बुद्धिं व्यासाय भूसुर ॥ ५४
ऋषयश्च तपस्सर्वे स्वस्वमाश्रममाविशे । विचिन्त्य मनसा पश्चान्निर्ह्रातिं स च तापसः ॥ ५५
काशीं प्राप सरित्पर्णैश्च कलिदोषविवर्जिताम् । तत्र सम्पूज्य विधिना प्रतिष्ठाप्य महेश्वरम् ॥ ५६
मुक्त्वाऽशेषञ्च दुरितं मोहं शम्भो कृपाबलात् । निर्मलं प्राप सन्तोषं शिवज्ञानसमाश्रयः ॥ ५७

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्तसप्ततितमोऽध्यायः ॥

---

॥ अथ अष्टसप्ततितमोऽध्यायः ॥

उपमन्युप्रभृतीनां शिवाभिषेकानामनुग्रहः ॥

पुरा वसिष्ठ पुत्राणां पुत्रमित्रा पुरन्दरम् । महर्षभमिवाप्याय गाञ्च कामप्रदायिनीम् ॥ १
सर्वविद्यापरिज्ञान प्राप्यानन्दसमस्तुषी । समर्पिण्यपि वैकस्य प्रायान् पूजया प्रभोः ॥ २
पयावारकृताञ्जुतो परित्यज्य च पौरव । शिवपूजारतो नित्यं दिने कस्मिन् समागतम् ॥ ३

विधवां वीक्ष्य दुःखेन पप्रच्छ पितरं तदा । मातः पिता मम गतः कुत्रेति रहसि स्वयम् ॥ ४
तस्य तद्वचनं श्रुत्वा तन्माता दुःखितान्तरा । निहतस्ते पिता पुत्र राक्षसेन दुरात्मना ॥ ५
तत एव हि संप्राप्तं वैधव्यमधुना मम । तदत्र निष्कृतिः कार्या त्वया यत्नेन पुत्रक ॥ ६
इति तस्या वचः श्रुत्वा दुःखाकुलितमानसः । राक्षसं हन्तुकामोऽयं शिवपूजाञ्चकार हि ॥ ७
ततः प्रसन्नो भगवान् पूजया तुष्टमानसः । तस्मै वरांश्च दत्वाऽशु तत्रैवान्तर्दधे प्रभुः ॥ ८
ततो ददर्श पितरं मृतमन्यस्य वाञ्छया । चकार च ततो यागं विनाशाय च रक्षसाम् ॥ ९
ततश्शिवाज्ञया पेतुः वह्निकुण्डेऽत्र राक्षसाः । भग्नाः केचन दग्धाश्च शिवमन्त्रप्रभावतः ॥ १०
दृष्ट्वैतत्तापसास्सर्वे वसिष्ठश्च महामतिः । शक्तिं संप्रीणयामासुस्तत्कोपप्रशमाय वै ॥ ११
मुक्त्वा कोपं ततश्शक्तिर्वेदांश्चैवागमानपि । पुराणानि च सर्वाणि ज्ञात्वाऽयं तत्वतो द्विजाः ॥ १२
शास्त्रञ्च कल्पयित्वाऽयं किञ्चित्सन्तोषसंयुतः । नित्यत्वं प्राप कृपया शंभोस्सोऽयं महीसुराः ॥ १३
पूजयित्वा पुरा शम्भुं विश्वामित्रोऽपि तापसः । सृष्टिञ्चकार मतिमांस्त्रिशङ्कुञ्च ररक्ष हि ॥ १४
लब्ध्वा वरान् महादेवात्सप्तर्षिष्वेकतामगात् । व्याघ्रपादोऽपि पुण्यात्मा महर्षिरथमीश्वरम् ॥ १५
पूजयित्वा पुरारातिं तत्प्रसादात्सुतं परम् । लब्धवान् देवदेवस्य ददर्श नटनं महत् ॥ १६
नित्यत्वं प्राप देवेशकृपया स मुनीश्वरः । व्याघ्रपादात्मजः पूर्वमुपमन्युर्महामतिः ॥ १७
क्षीरं ययाचे बाल्येऽसौ मातरं स्वगृहे स्थिताम् । सा ददौ कृत्रिमं क्षीरं पिष्टमिश्रजलेन वै ॥ १८
तत्पीत्वा चिरसत्वाच्च रुरोद भृशदुःखितः । नेदं क्षीरं जलं मातरित्युक्त्वा वाचयन्मुहुः ॥ १९
ततस्सा दुःखदुःखेन रुदन्तं वीक्ष्य चात्मजम् । नास्ति पुत्र गृहेऽस्माकं क्षीरं स्वादु मनोहरम् ॥ २०
वसिष्ठस्तव पुण्यात्मा मातुलश्शङ्करप्रियः । शिवपूजारतो नित्यं वेदवेदान्तपारगः ॥ २१
लब्धवान् पूजया शंभोः कामधेनुं पयस्विनीम् । पीत्वा त्वं तद्गृहे क्षीरं कामधेनुसमुद्भवम् ॥ २२
वाञ्छस्यत्रापि बालत्वात्क्षीरं व्यर्थतयाऽऽत्मज । अप्रसन्ने विरूपाक्षे कुतः क्षीरेण भोजनम् ॥ २३
विशेषेण दरिद्रस्य तव क्षीरं कुतो भवेत् । तदत्र पूजा कर्तव्या त्वया क्षीरार्थिनाऽऽत्मज ॥ २४
विश्वाधिकस्य सततं योगिध्येयस्य शूलिनः । पूजया लभ्यते सर्वं वाञ्छितं मनुजैः प्रभोः ॥ २५
इति मातृवचश्श्रुत्वा तथेति मुनिपोतकः । किञ्चिद्दूरमयं गत्वा रहःस्थानं सुशोभनम् ॥ २६
भूतिभूषितसर्वाङ्गो रुद्राक्षवरभूषणः । ध्यायन्नेकमनाश्शंभुं कृतिनिश्चितमानसः ॥ २७
पूजयामास देवेशं पुराणं पुरुषं प्रभुम् । ततः प्रसन्नो भगवानस्मै मघवदाकृतिः ॥ २८
तं दृष्ट्वा मघवन्तं स कोपाकुलितमानसः । त्वं गच्छ पुरतो मेऽद्य यत्र कुत्रापि वृत्रहन् ॥ २९
न सत्यंते भवानद्य मया पूजारतेन वै । पूजाविघ्नं यदि भवेन्महादेवस्य शूलिनः ॥ ३०
शापेऽहं त्वामिति तदा चुकोप शपितुं सुरम् । तस्य तद्वीक्ष्य चित्तस्य स्थैर्यं शक्तिमपीश्वरः ॥ ३१
प्रादुरासीत्क्षणेनैव वृषोपरि सहोमया । तं दृष्ट्वा सांबमीशानं प्रणम्य भुवि दण्डवत् ॥ ३२
उत्थाय सहसा भक्त्या ननर्तानन्दनिर्भरः । मान्योऽस्म्यनुगृहीतोऽस्मि चाहमद्य महेश्वर ॥ ३३
त्वद्दर्शनेन देवेश काङ्क्षितं फलितं मम । इति तस्य वचः श्रुत्वा महेशस्तापसप्रियः ॥ ३४
क्षीरार्थिने ददौ तस्मै क्षीरसागरमीश्वरः । सर्ववेदान्तविज्ञानं पुराणानां तथैव च ॥ ३५
शास्त्राणामपि सर्वेषां तव तत्वं स्फुरत्वलम् । अविनश्वरता भूयात्तव तापसपुत्रक ॥ ३६
इति दत्वा वरानन्यानीश्वरोऽन्तरदधात्क्षणात् । लब्ध्वा वरं तथा शंभोरुपमन्युश्शिवप्रियः ॥ ३७

पूजयित्वा महादेवं गौतमोऽपि महामुनिः । शिवव्रतानि सर्वाणि चरञ्छङ्करवल्लभः ॥ ३८
सर्वविद्यापरिज्ञानं सम्यक्प्राप्य प्रभोर्वशी । नित्यत्वं प्राप्य परया प्रीत्या तस्थे शिवप्रियः ॥ ३९
सदा (शाता) नन्दोऽपि योगीन्द्रस्सच्चिदानन्दविग्रहम् । संपूज्य परया भक्त्या साक्षात्साम्बं महेश्वरम् ॥ ४०
सञ्चरन् सर्वलोकेषु भुवनेष्वपि सन्ततम् । तत्र तत्र च वृत्तान्तं सम्यग्ज्ञात्वा तपोधनः ॥ ४१
शंभवेऽनुदिनं सर्वं विज्ञाप्य (सपर्यां) परया मुदा । कैलासवासिने कृत्वा प्रणामञ्च यथाविधि ॥ ४२
परमानन्दकल्लोलपारावारो बभूव सः । मृकण्डुरपि संपूज्य महादेवं महामुनिः ॥ ४३
सर्वविद्यासु निपुणं मार्कण्डेयमवाप्तवान् । प्रसिद्धिं तेन नितरां संपाद्य भुवनेष्वपि ॥ ४४
सत्यलोके निवसति सदा परमया मुदा । मृकण्डोश्च सुतो धीमान्मार्कण्डेयो महामुनिः ॥ ४५
मृकण्डुनायं देवेशाद्यदा लब्धो महातपाः । तदा षोडशवर्षोऽयं कल्पितश्शंभुना मुनिः ॥ ४६
तस्य षोडशवर्षाणि व्यतीयुरनुपूर्वशः । दिनद्वयावशिष्टानि मार्कण्डेयस्य भूसुराः ॥ ४७
पितरौ मृत्युमालोक्य तदा रुरुदतुर्भृशम् । श्रुत्वा तयोश्च वचनं सनिमित्तं मृकण्डुजः ॥ ४८
मृत्युञ्जयं विरूपाक्षं कपर्दीशं पिनाकिनम् । पूजयामास पुण्यात्मा तदैकाग्रमना भृशम् ॥ ४९
तदाभीमन्तकश्शीघ्रं तत्रागत्य मृकण्डुजम् । आजुहाव प्रियैर्वाक्यैर्निजलोकाय भूसुराः ॥ ५०
शिवपूजासक्तस्थे नागणय्य यमं यदा । तदा तं स महाटोपाद्दीपयन् भीषणाकृतिः ॥ ५१
आश्लिष्य भीत्या देवेशं लिङ्गरूपस्थितं मुनिः । आचकर्षैव पाशेन बध्वा वैवस्वतो यदा ॥ ५२
तदाविरासीद्भगवांस्तस्माल्लिङ्गान्महेश्वरः । ददर्श च महादेवं कालकालं पिनाकिनम् ॥ ५३
नीलकण्ठं विरूपाक्षं जटामकुटमण्डितम् । तुष्टाव परया प्रीत्या मार्कण्डेयो महामुनिः ॥ ५४
नमस्ते कालकालाय विरूपाक्षाय शूलिने । विश्वाधिकाय विश्वाय परात्परतराय ते ॥ ५५
कपर्दिने करालाय काळीनृत्तप्रियाय ते । उग्राय सर्वभक्षाय भीमाय महते नमः ॥ ५६
क्षिप्रेषवे नमस्तुभ्यं कपर्दीशाय ते नमः । इति स्तुतिं महादेवस्स्तुत्वा तस्य महात्मनः ॥ ५७
प्रसन्नः प्राह विश्वात्मा मार्कण्डेयं महामुनिम् । पूजया ते प्रसन्नोऽहं मार्कण्डेय महामुने ॥ ५८
भूयासुस्तव वर्षाणि षोडशैव सदा मुने । काङ्क्षितान्यपि सर्वाणि तव सिध्यन्ति माचिरम् ॥ ५९
इति दत्वा वरं तस्मै तत्रैवान्तरधात्प्रभुः । सोऽपि संप्राप्य नित्यत्वं मार्कण्डेयो महामुनिः ॥ ६०
स्वगृहं प्राप्य परया प्रीत्या पित्रोस्सकाशेऽवसत् । अनन्यसदृशो लोके शिवशास्त्रविशारदः ॥
शिवागमार्थविज्ञानसंपन्नोऽद्यापि वर्तते ॥ ६१

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टसप्ततितमोऽध्यायः ॥

---

॥ अथ एकोनाशीतितमोऽध्यायः ॥

क्षुपराजप्रति दधीचिमहर्षिणा शिवोत्कर्षप्रदर्शनम् ॥

अगस्त्यः पूजया शम्भोस्तापसानामधीश्वरः । जहार दर्पं विन्ध्यस्य महाद्रेस्तापसेश्वरः ॥ १
प्राशयामास चाम्भोधिं महदूर्मिसमाकुलम् । तथा चेल्वलवातापी दुरात्मानावशिक्षयत् ॥ २
द्राविडाख्यां तथा भाषां निर्ममे कृपया प्रभोः । सर्वशास्त्रपरिज्ञानं सम्यक्प्राप तपोधनः ॥ ३
ताण्डवं देवदेवस्य ददर्श परमं द्विजाः । ददर्श शंभोः कल्याणं पार्वत्या सह पावनम् ॥ ४

सर्वलोकाभिगमन स्वेच्छया प्राप दुष्करम् । शिवयोगं तदा स्कन्दादुपदेशमवाप्तवान् ॥ ५
सर्वलोकसुपूज्यत्वं जगत्ख्यातिमवाप्तवान् । दधीचिरपि पुण्यात्मा क्षुपेन सह भूभुजा ॥ ६
तेन सख्यमवाप्यायं वाल्य एव तपोधनः । कदाचिदेतौ कलहश्चक्रतुर्विप्रभूभुजौ ॥ ७
राजा राजबलं श्रेष्ठमाह विप्रः स्वकं बलम् । एवं बहुप्रकारेण प्राप्ते वादे तयोर्द्विजाः ॥ ८
ताडयामास राजानमधिक्षिप्यादितं क्रुधा । तदानीं स महीपालो वज्रमादाय भीषणम् ॥ ९
जघान विप्रं कोपेन दुष्टात्मा दुष्टचेतनः । तदा तत्याज स प्राणान्वज्रघातेन तापसः ॥ १०
हाहाकारो महानासीत्तत्रस्थानां भयावहः । तदा समागतश्शीघ्रं शुक्रस्तस्य पितामहः ॥ ११
तच्छरीरं द्विधाभूतमेकीकृत्य स भार्गवः । जीवयामास मतिमान्विद्यया स्वस्य भूसुराः ॥ १२
तं वीक्ष्य जीवितं शुक्रः पौत्रं प्राह हितं वचः । अद्यप्रभृति पूजा च त्वया कार्या महेशितुः ॥ १३
पूजया देवदेवस्य तव सर्वं भविष्यति । पूजा पुण्यप्रदा पुंसां पूजा मोक्षप्रदा प्रभोः ॥ १४
पूजया स्वपदं प्राप ब्रह्मा विष्णुश्च वैष्णवम् । इन्द्रो यमस्तथेशानः कुबेराद्याः सुरेश्वराः ॥ १५
तदर्चय महेशानं मृत्युञ्जयमुमासखम् । उपसर्गाः क्षयं यान्ति शत्रवो व्याधयो ग्रहाः ॥ १६
मनः प्रसन्नतां याति पूज्यमाने महेश्वरे । इत्युक्त्वा भार्गवस्तस्मा उपदिश्य बहून्मनून् ॥ १७
निर्ययौ स्वेच्छया शीघ्रं ब्राह्मणानामधीश्वराः । ततो दधीचिः पुण्यात्मा पूजयञ्छङ्करं शिवम् ॥ १८
वज्रास्थित्वमवध्यत्वमौदार्यंमभयं तथा । प्रसन्नाद्देवदेवेशादवाप मुनिपुङ्गवः ॥ १९
पुनरभ्यागतान् लब्ध्वा क्षुपस्यान्तिकमेत्य सः । ताडयामास पादेन क्षुपं तं दुष्टचेतनम् ॥ २०
तदा कोपाकुलो राजा वज्रमादाय भीषणम् । वक्षोमध्ये जघानास्य दधीचेश्च महाबलः ॥ २१
धूळीबभूव तत्क्षिप्रं तत्रैव पतनाद्द्विजाः । विहस्य तं क्षुपं प्राह दधीचिस्सुमहातपाः ॥ २२
न बिभेमि महीपाल तव वज्रायुधादपि । गणयामि न चेशानं त्वत्कर्तारमप्यलम् ॥ २३
दधीचेर्वचनं श्रुत्वा पुनः कोपाकुलो भृशम् । विष्णुमुद्दिश्य सुमहत्तपश्चक्रे दुरासदम् ॥ २४
तस्य चैवं तपस्तीव्रं प्रादुरासीद्धरिस्स्वयम् । तं प्रणम्याशु वृत्तान्तं तस्मै प्रोवाच भूमिपः ॥ २५
तच्छ्रुत्वा स हरिस्तेन दधीचेराश्रमं ययौ । तत्र दृष्ट्वा ऋषिवरं संप्राप्य परया मुदा ॥ २६
मदर्थं तापसश्रेष्ठ राज्ञां बलमनुत्तमम् । एवं ब्रूह्यत्र यो दोषस्सञ्जायेत ममास्तु सः ॥ २७
इत्युक्तिं माधवस्यापं नाङ्गीचक्रे यदा तदा । हरिः कोपाकुलस्तस्मिंश्चक्रं तत्याज भीषणम् ॥ २८
तस्मिन्निपातनाच्चक्रं क्षणाद्धूळी बभूव ह । तस्मिन्मायी हरिश्चक्रे मायिमायामनेकधा ॥ २९
दूरीचकार तां सर्वां मायया स्वस्य भूसुराः । पुनश्च मायामेतस्मिन् सोऽपि चक्रे ऋषीश्वरे ॥ ३०
पुनर्दर्भं समादाय तस्मिंश्च प्रैरयद्दधिः । तत्क्षणान्मारयामास सेनास्तस्य मधुद्विषः ॥ ३१
एकाकी स स्वयं तस्थे तदानीं हरिरव्ययो । तदा समाययौ तत्र ब्रह्मा ब्रह्मविदां वरः ॥ ३२
दधीचिं तपसां श्रेष्ठं तुष्टाव परया मुदा । दधीचिरपि कोपेन विष्णुं वीक्ष्य पुरःस्थितम् ॥ ३३
छिन्द्यात्तव शिरो विष्णो वीरभद्रो महाबलः । भक्तास्तव महामौर्ख्याच्छिवमेश्वरादृषकाः ॥ ३४
पतन्तु निरये घोरे पाखण्डावलंबिनः । शपत्येवं मुनौ विष्णु ब्रह्मा प्रोवाच मन्युमान् ॥ ३५
भक्तैश्शिवस्य कलहः पतिष्यत्यात्मनोपरि । विजयश्च न ते भूयादपराधी परं हरे ॥ ३६
तमाहूयेति सहसा परमेष्ठी जनार्दनम् । प्रणम्य व्याघनिं ब्रह्मा सान्त्वयित्वा जगाम ह ॥ ३७
गतवत्यब्जजे लोकं सनारायणके तदा । क्षुपस्तदा तदालोक्य दधीचस्यास्य विस्मितः ॥ ३८
तमेव शरणं प्राप क्षमस्वेति पुनः पुनः । सखा त्वं ब्राह्मणश्रेष्ठ पूर्वमद्य पिता मम ॥ ३९

माता च महितो भ्राता त्वं सर्वमसि भो द्विज । अपराधं क्षमस्वेति याचमानमुवाच सः ॥ ५०
क्षान्तं मयाऽधुना राजन् क्षमासारा हि साधवः । कोपस्य मादृशानां हि प्रणिपातः प्रतिक्रिया ॥ ५१
ब्राह्मणा बलिनो राजन्यदस्माकं कुलप्रभुः । महाब्राह्मण ईशानो विष्णुः क्षत्राधिपः स्मृतः ॥ ५२
विशामधिपतिर्ब्रह्मा तस्मात् त्रीन् ब्राह्मणादयः । यजन्ते यद्यतिक्रम्य पापिनः पतिताश्च ते ॥ ५३
आराधय हरिं तस्माद्भव त्वं ब्रह्मवत्सलः । ब्रह्मतेजोबलं राजन्क्षात्रं वैश्यधर्ममयम् ॥ ५४
सर्वेषामधिको यस्माद्गुणवान् ब्राह्मणदैवतः । स यस्य देवता सोऽपि ब्राह्मणो महतो महान् ॥ ५५
तस्माद्दिवेदिवे कुर्याद्ब्राह्मणेभ्यो नमस्सदा । न कीर्तयेत्सदा तेषामश्लीलं यदि बुद्धिमान् ॥ ५६
न्यायेन पृथिवीं शाधि ध्रुवत्वं राजसत्तम । अनुशास्य दधीचिस्तमित्येवं पृथिवीपतिम् ॥ ५७
पुनश्च शिवपूजायां निरतो विस्मयं गतः । ध्यायन्नेव महादेवं निनायानेहसां शतम् ॥ ५८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकोनाशीतितमोऽध्यायः ॥

---

॥ अथ अशीतितमोऽध्यायः ॥

बाणासुरस्य पूर्वजन्म कथनम् ॥

सुदर्शनः पुरा विप्रशिवपूजाबलेन वै । आतिथ्येनाजयन्मृत्युं नित्यत्वमपि लब्धवान् ॥ १
कैलासे चान्यलोकेषु कामचारोऽस्य वै मुनेः । भृगुश्चापि ऋषिः पूर्वं दुर्वासाः कण्व एव च ॥ २
आपस्तंबो जैमिनिश्च सौभरिस्तपतां वरः । तृणबिन्दुर्वामदेवो ऋषभो योगिसत्तमः ॥ ३
शुकोऽत्रिश्च पुलस्त्यश्च बहवोऽन्येऽपि तापसाः । समाराध्य महादेवं लिङ्गमूर्तिं सनातनम् ॥ ४
भक्त्या परमया युक्ता मृत्युं निर्जित्य कालजम् । नित्यत्वमपि संप्राप्य बभूवुः कामचारिणः ॥ ५
तत्र तत्र च लोकेषु सत्कृताश्च तदीश्वरैः । भुञ्जानास्तैर्महाभोगानमृतत्वञ्च लेभिरे ॥ ६
स्वेच्छयैवाप्तकामास्ते सुरासुरनमस्कृताः । विहरन्ति यथाकामं विरिञ्च्यादिपदेषु ते ॥ ७
मनुष्येष्वप्यनेके हि महादेवार्चनापराः । संप्राप्य महदैश्वर्यं सिद्धीरपि च सर्वशः ॥ ८
अवाप्ताखिलकामास्ते कामचारा जगत्त्रये । अनन्तरञ्च ते मुक्तिमाप्नुवन्महितौजसः ॥ ९
पिपीलिकादिहस्त्यन्तजीवेष्वपि सहस्रशः । तिर्यक्ष्वपि शिवं सांबमभ्यर्च्य बहवो भुवि ॥ १०
सद्गतिं प्रापिरे पूर्वमिति सर्वत्र विश्रुतम् । तस्माद्विवेकिनामेतद्धकार्यं पृथिवीभुजाम् । ११
ब्राह्मणानां विशेषेण लिङ्गभाजां विशेषतः । सूतः — इतीदं सर्वमाख्यातं भक्त्या सम्पूज्य शङ्करम् ॥ १२
संप्राप्तसिद्धयो ये वै मया ते वर्णिता द्विजाः । अबुद्धिपूर्वमभ्यर्च्य शिवं त्रिदशनायकम् ॥ १३
पैरातं - कल्पमेतेषु पर्यन्ते केवलाधुना । देशोऽस्ति मागधे विप्रा माघवाख्यं पुरं महत् ॥ १४
तत्र चक्राङ्कितो नाम ब्राह्मणो विषयोन्मुखः । तस्याभूद्रूपतारुण्यस्तनयो विनयोज्झितः ॥ १५
स तु वेश्यापरो नित्यं ब्रह्मबन्धुरहर्निशम् । मद्यविक्रयिणीसक्तः कदाचिद्धनुत्सवः ॥ १६
तया सह दिवारात्रं रेमे मधुपहृद्य (हृद्य) या । कदाचित्स तया सार्धं गतः शृङ्गारकानने ॥ १७
अवचित्य सुपुष्पाणि दधौ मूर्ध्नि तया सह । इत्येवं प्रत्यहं मूर्खश्रेण्येण सुमनो हरन् ॥ १८
उद्यानपालकैर्दृष्टः प्रहृतश्च तदा स तैः । अतःपरं नादरिष्य इति चोक्त्वा निरासितः ॥ १९

पुनश्चैवैकदा रात्रौ रेमे तत्र तया सह । अचूचुरत्स पुष्पाणि मद्यभाण्डे निधाय च ॥ २०
रेमे रात्रौ तया साकं पुष्पारण्ये द्विजाधमः । निद्रालिप्त तया तत्र रात्र्यन्ते रतिलालसः ॥ २१
रतिश्रमवशात्ताभ्यां विवशाभ्यां वनान्तरे । प्रभातमपि न ज्ञातमुदितेऽपि विवस्वति ॥ २२
तदानीं तत्र राजापि प्रापोद्यानदिदृक्षया । उद्यानपालकाश्चापि पूर्वमेव समागताः ॥ २३
ददृशुस्तं द्विजं धूर्तं निद्रापरवशं तथा । मद्यभाण्डगतान्यत्र पुष्पाणि सुरभीणि च ॥ २४
राजानमागतं ज्ञात्वा भीत्या ते सुमनोभरम् । तौ च निद्रावशौ बध्वा हस्तपादौ बहिर्वनम् ॥ २५
विक्षिप्य सविधं राज्ञः प्रापुस्तेऽरण्यरक्षकाः । राजा सर्वं समालोक्य शृङ्गारवनमात्मनः ॥ २६
दृष्ट्वा लिङ्गञ्च पप्रच्छ पुष्पच्छन्नं समृण्मयम् । किमिदं केन वै चलतं सुमनांस्यपचिन्वता ॥ २७
अरण्यमेतत्सर्वत्र हृतपुष्पं विलोकितम् । तदिदं सर्वमत्रैव निक्षिप्तं केन सांप्रतम् ॥ २८
इति कोपेन पृच्छन्तं प्रोचुरुद्यानपालकाः । अस्मदन्यस्य कस्यापि न प्रवेशोऽस्ति वै वने ॥ २९
मनुष्यस्य निशामध्ये न वयं विद्म चेष्टितम् । केनापि दैवतांशेन पुष्पाणि परिचिन्वता ॥ ३०
आराधितश्शिवोलिङ्गे न वयं देव विद्महे । राजा प्रोवाच तानित्थं प्रत्यहं वाच एवया ॥ ३१
सत्यं वदत नोचेद्वश्छेत्स्यामि चरणौ करौ । त ऊचुरद्य दृष्टोऽयं न कदाचिदपीदृशः ॥ ३२
शापामहे परे देव विस्मयोऽयं महत्तरः । तदानीं सविधे राज्ञो ये केचन महत्तराः ॥ ३३
त ऊचुर्योगिनो यत्र सुपुष्पाणि महीतले । तत्र ते स्वैरगतयः कुर्वन्ति शिवपूजनम् ॥ ३४
तस्मादस्माकमेवेदं श्रेयो लिङ्गार्चनं महत् । इति तेषां वचः श्रुत्वा जगाम पृथिवीपतिः ॥ ३५
तेचापि चाद्य ज्ञाताःस इति मत्वा वनं गताः । तदानीमेव तौ धूर्तावन्योन्यं मुक्तबन्धनौ ॥ ३६
स्वगृहं प्राप्य भूयोऽपि पीत्वा मद्य तदाकलम् । मदेन जग्मतुर्मूढौ वनं पुनरनर्गलम् ॥ ३७
अचिन्वतांश्च पुष्पाणि तौ दृष्ट्वोद्यानपालकाः । बध्वा दृढतरं कोपात्तौ निन्यू राजसन्निधिम् ॥ ३८
कोपेन महता राजा तयोर्वै धूर्तवर्ययोः । हस्तपादौ तदैकस्य चान्यस्या नासिकाकुचौ ॥ ३९
सञ्छेद्य प्रेषयामास निर्विशङ्कं महीपतिः । पर्यटित्वा ततश्चैतौ कालेन निधनं गतौ ॥ ४०
शिवलिङ्गे यदेताभ्यां मृण्मयेऽभ्युद्धृतानि वै । अर्चितानि सुपुष्पाणि मद्यभाण्डस्थितान्यपि ॥ ४१
निष्पापौ तेन सञ्जातौ सोऽयं बाणासुरोऽभवत् । तत्पत्नी सैव सञ्जाता सुमतीका मनोरमा ॥ ४२
प्रत्यहं नर्मदातीरे पूर्ववासनयाऽसुरः । शिवपूजां चकारायं शिवलिङ्गानि साधयन् ॥ ४३
सद्यस्ततः प्रसन्नोऽसौ शिवश्शीतांशुभूषणः । ददावधिकमैश्वर्यं बल राज्यं तदाऽसुरम् ॥ ४४
स पुनः प्रत्यहं गत्वा कैलासे शिवमन्दिरम् । तत्र देवं समाराध्य स्वगृहं याति नित्यशः ॥ ४५
कदाचिदसुरो बाणो न दृष्ट्वाऽवसरं विभोः । प्रविवेश ततो द्वाःस्थः कोपेन महताऽन्वितः ॥ ४६
उत्थाय भूतवद्गौग्रं तमुद्धृत्यच लीलया । चिक्षेप चक्रवाळान्ते पपातच महासुरः ॥ ४७
पुनश्चोत्थाय मूर्छान्ते स्वगृहं प्राप्य विस्मितः । शिवमभ्यर्च्य विधिवत् प्रार्थयामास सर्वदम् ॥ ४८
प्रादुर्भूतश्च तं प्राह भगवान् किमपेक्षसे । वरं वरय तत्सर्वं ददामीत्यवदच्छिवः ॥ ४९
सोऽपि वव्रे वरं देवं मया हर हरीश्वर । तव सेवा सदा कार्या सकुटुंबस्य विश्वप ॥ ५०
प्रवेशसमये द्वाःस्था न सहन्ते महाबलाः । तस्मान्मम महादेव द्वारि सांबसपुत्रकः ॥ ५१
सगणो निवसेरित्थं शक्यते सेवितुं मया । अयमेव वरो देव देहीमं जगतां पितः ॥ ५२
ददावितीदृशमपि वरं देवः स्वयंशिव । सोऽपि लब्धवरो द्वारि निर्माय भवनं महत् ॥ ५३

देवस्यापि च देव्याश्च सुतयोरपि चोभयोः । तत्र सांब सहसुतं संस्थाप्य श्रद्धया सह ॥ ५४
अस्वहं परिचर्यायां निरतोऽसुरसत्तमः । निर्जित्य विबुधान् सेन्द्रान् सनारायणकान् बली ॥ ५५
त्रैलोक्यं वशमानिन्ये निरप्रतिरथो बली । कदाचिदुद्वहन् बाहू रणकण्डूपरौ बली ॥ ५६
शिवं प्रणम्य प्रोवाच भगवन्नमथा युधि । योद्धुमस्ति बली विष्णुस्त्रिशद्वार विनिर्जितः ॥ ५७
परिवारं महेन्द्रोऽपि न कोऽपि युधि मत्समः । रणकण्डूपरवशौ बाहू मे त्रिपुरान्तक ॥ ५८
तस्माद्युध्यस्व देवेश पाण्डवेन यथा पुरा । मया सह महादेव तेन हृतिश्च नान्यथा ॥ ५९
इति श्रुत्वाऽस्य विज्ञप्तिं विहस्योवाच चेश्वरः । अवतीर्णो हरिर्वृष्णिकुले मद्भक्तिभावितः ॥ ६०
स तु दर्पं तवैवाशु हरिष्यति न संशयः । यदर्थेव शिवे प्राह स तु बाणासुरो मदी ॥ ६१
सोऽयं वृष्णिवरोपीश जितोऽष्टादशधा युधि । न वायुरपि मेऽनेन सोढुं शक्यो महेश्वर ॥ ६२
तमाह पूर्ववच्चैव जेतुं शक्यस्त्वयाऽसुर । इदानीं मम भक्ताद्दशादुपमन्योर्महात्मनः ॥ ६३
शिवदीक्षाऽस्य निर्वृत्ता शिवागमविशारदात् । भस्मधारी च सततं वीर्यवान् भस्मसंयुतः ॥ ६४
अतोऽचिरात्तवमदं हरिष्यति न संशयः । इतीश्वरवचश्श्रुत्वा तूष्णीमास्त महासुरः ॥ ६५
ततः कदाचित्कृष्णस्य पौत्रं बाणासुरात्मजा । अनिरुद्धमुषा निन्ये स्वप्नदृष्टं स्वमन्दिरम् ॥ ६६
अन्विष्यता स कृष्णेन प्रापि बाणपुरी शुभा । अग्निप्राकारसंवीता मनसाऽपि सुदुर्गमा ॥ ६७
तस्मिन्नासेदुषि पुरीं ससैन्ये दैत्यभूभुजः । विघ्नेशो युद्धसन्नद्धो भक्ष्यभोज्यैस्सुपूजितः ॥ ६८
षण्मुखश्च देवी च कृष्णेनाक्लिष्टकर्मणा । निवृत्तयुद्धसन्नाहाः कृतास्ते सहसासत ॥ ६९
ईशे युद्धसमायत्ते तच्चानर्च जनार्दनः । तमाह स्वार्चनायत्त बाणदौवारिकश्शिवः ॥ ७०
मया युध्यस्व वार्ष्णेय बाणद्वाःस्थेन साम्प्रतम् । इति ब्रुवन्तमीशानं प्रत्युवाच यदूद्वहः ॥ ७१
त्वं पतिर्जगतामीश जगदस्म्यहमव्यय । विश्व विश्वाधिकस्त्वं हि यतोऽहं यतराडसि ॥ ७२
मायी भवानहं माया क्षणद्वीरोऽसि च श्रुतः । अहं धनुश्च सशरं त्रिमर्पोद् जगत्प्रभो ॥ ७३
योजीयास्त्वच्चैत्रास्ति सर्वभूतविमर्दकात् । योत्स्यमानस्त्वया युद्धे भस्मैवस्यां यथा स्मरः ॥ ७४
मयि ते नानुकम्पाऽस्ति यदित्थैव (यदस्येव) गणेश माम् । पुनस्तमाह भूतेशो मयाऽनुज्ञात एव हि ॥ ७५
युध्यस्व निर्विशङ्कस्त्वं नारायण नरोपमा । मया नियुध्य मत्तोत्या लब्धपाशुपतो यथा ॥ ७६
त्वमपीह मम प्रीत्यै युधि क्रीडस्व माधव । इत्युक्त्वा धनुस्सज्यं पिनाकं प्रमथाधिपः ॥ ७७
नाक्यज्ज्यां महावीरो विव्याध निशितैश्शरैः । ईशाज्ञयाच यदुराडपि शार्ङ्गं धनुः स्वकम् ॥ ७८
सज्यं कृत्वा हरेरीश धनुर्पं समराङ्गणे । तत्कार्मुकसमुत्सृष्टाः पुष्पिताभाश्शराश्शिवाः ॥ ७९
पेतुः पादाम्बुजद्वन्द्वे परमेशस्य तत्क्षणम् । युध्यतोरिति चान्योऽन्यं विश्वविश्वेशयोस्सतोः ॥ ८०
बाणासुरस्य सैन्यो प्राग्यदुसैन्यममारयत् । कृष्णोऽपीशं नमस्कृत्य तदा बाणमयोधयत् ॥ ८१
तयोस्समभवद्युद्धं तुमुलं रोमहर्षणम् । ततो बाणं विनिर्जित्य कृष्णो वृष्णिकुलोद्भवः ॥ ८२
तस्य बाहुसहस्रञ्च कदलीकाण्डलाघवम् । चिच्छेद चक्रमादाय तदद्भुतमभूत्किल ॥ ८३
तदन्तरे वृषारूढो महादेवस्सहोमया । प्रादुरासीत्समोमध्ये तयोः कलहशान्तये ॥ ८४
आलोक्य चेममीशानो मुञ्च बाहुचतुष्टयम् । त्वमिवात्मावपि मम परिचर्यारतोऽप्ययम् ॥ ८५
तस्मादवध्यमनेनास्तु तव कृष्ण महीपते । बाणञ्च परमेशानः प्रहसन्नाह विश्वपः ॥ ८६
तथाऽसुर करे कण्डूस्त्वधुना विनिवारिता । समूलमपि बाहूनां सहस्रमपि छेदितुम् ॥ ८७
चत्वारि दोंषि मुक्तानि महाबलेन मुरारिणा । ईश्वरस्यैव वचसा पुत्रीं पौत्राय च क्षणात् ॥ ८८

प्रावादुद्वाणस्य तारकस्य कल्याणमकरोन्महत् । उद्वाह्य पुत्रीं पौत्राय कृष्णो बाणस्य सेनया ॥ ८९
पौत्रेणच तदा प्रीत्या प्रस्थितो द्वारकां प्रति । बाणासुरः परिभवं महान्तमपि तं तदा ॥ ९०
सापराधभयं ज्ञात्वा मन्दाक्षानतकन्धरः । पुनश्च नर्मदामेत्य पूजयामास शूलिनम् ॥ ९१
पूजया तस्य सन्तुष्टः पुनश्शीतांशुभूषणः । वरेण च्छन्दयामास वव्रे सोऽपि महद्वरम् ॥ ९२
अहमेको गणेन्द्राणां मध्ये भूत्वा गणः प्रभो । नृत्तारंभे जगन्नाथ मड्डुवादनतत्परः ॥ ९३
द्रष्टुमिच्छामि देवेश दहीमं वरमुत्तमम् । लिङ्गानि नर्मदानद्यां यानि संपूजितानि च ॥ ९४
ममैव नाम्ना लोके स्युर्बाणलिङ्गानि भो विभो । बाणलिङ्गार्चकानां तु नैवचास्तु पुनर्भवः ॥ ९५
तेषां त्वं देव सर्वेच सर्वामीष्टप्रदो भव । तथैवास्त्विति तं देवस्तत्रैवान्तरधीयत ॥ ९६
बाणासुरो घटरवं कुर्वन्भृत्यस्य शूलिनः । गाणापत्यपदं प्राप्य सशरीरः प्रमोदते ॥ ९७

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अशीतितमोऽध्यायः ॥

---

॥ अथ एकाशीतितमोऽध्यायः ॥

शिवाराधनेन मन्मथस्य प्राप्तिः ॥

पुरा पर्वरथे देशे विप्रो भगवतीपुरे । सुपर्णस्तस्य पुत्रोऽभूदचित्तो नाम नामतः ॥ १
स तु दुर्मार्गनिरतस्सर्वस्त्रीरतिलालसः । यत्र यत्र च वै जाता या या रूपगुणान्विता ॥ २
तां तां रेमे धनं दत्वा तस्यै तस्यै यथेप्सितम् । चौर्येणापि दुरात्माऽसौ संपादयति वै धनम् ॥ ३
कदाचित्तार्किकपुरे गृहे सङ्कर्षणस्य सः । प्रचूचुरद्धनं रात्रौ तं वै सङ्कर्षणो द्विजः ॥ ४
पप्रच्छ च गृहीत्वा तं किमेवं कृतवानसि । पृच्छन्तमिति तं प्राह सङ्कर्षणमचित्तकः ॥ ५
मयैवं धनमासाद्य या या लोके वराङ्गना । तस्यै दत्वा धनं सर्वं रम्यते द्विज सन्ततम् ॥ ६
इति तस्य वचः श्रुत्वा सत्यं सङ्कर्षणो द्विजः । प्रोवाच चैवं किमिति भ्रष्टो भवसि दुर्मते ॥ ७
हतोऽसि किं महापापी ब्राह्मणोऽसि सुदुर्मते । ब्राह्मण्यमीदृशो भूयः कुतस्ते पापिनो भवेत् ॥ ८
आराधय महादेवं सर्वपापनिवृत्तये । तस्मिन् संपूजिते कामः क्रोधो मोहश्च ते ध्रुवम् ॥ ९
एतादृशरतौ वाञ्छा विलयं याति ते क्षणात् । तेनाह शिक्षितस्त्वेवं क्व शिवः क्वाहमीदृशः ॥ १०
यद्यपि वै ममेशार्चा सास्तु जन्मनि जन्मनि । साचेदुक्ता त्वया भोऽपि तथैवोपदिश द्विज ॥ ११
श्रुत्वा विप्रस्य तद्वाक्यं तदा सङ्कर्षणो द्विजः । तथाकुरु तदानीं त्वं तासां कुचयुगं त्यज ॥ १२
अचिन्तार्चेव लिङ्गं तत्संभाव्य समये हृदा । शिवश्च ध्यायमानस्त्वमुक्तवेति विससर्ज तम् ॥ १३
तथेति तद्विसृष्टोऽसौ तस्यां रात्र्यां द्विजाधमः । एकां विप्रस्त्रियं लेभे कुलटां स्वैरिणीमसौ ॥ १४
रममाणस्स तां रात्र्यां तस्याः पीनौ पयोधरौ । दृष्ट्वा हृष्टमना भूत्वा सङ्कर्षणवचः स्मरन् ॥ १५
संभाव्य शिवलिङ्गं तौ समये रमयंश्च ताम् । रत्यर्थं संभृतेनैव चन्दनेन विलिप्य तौ ॥ १६
सुमनांसि च सर्वाणि तयोश्चिक्षेप लीलया । भक्ष्याणिच सभोज्यानि फलानि विविधानि च ॥ १७
नैवेद्यं कल्पयामास स्तनयोर्लिङ्गरूपिणोः । संभोगसमये तस्मिन् मूर्ध्नि कृत्वाऽञ्जलिं मुदा ॥ १८
प्रार्थयामास धूर्तोऽयं महादेव स्तनेश्वर । प्रत्यहं रमणी रम्या रूपलावण्यपेशला ॥ १९

लेभे तस्याः स्तनौ च स्वामर्दयामि दिनेदिने । संप्रार्थ्येव तया सोऽयं भक्षयामास तानपि ॥ २०
भक्ष्याणि च फलान्याशु यथक्षेव द्विजाधमः । तांबूलानि च साऽपृच्छद्दिसिता स्वैरिणी च तम् ॥ २१
रे रे धूर्त दुराचार किमिदं तव चेष्टितम् । लिङ्गं कृत्वा स्तनौ मेऽद्य समभ्यर्च्य च सादरम् ॥ २२
प्रार्थसे प्रत्यहं स्वेयमथवाऽथेति वा वद । कुर्वन्तीमिति तामाह धूर्तोऽसौ शृणु सुन्दरि ॥ २३
इमावत्यन्तपीनौ ते स्तनौ वृत्तौ समुन्नतौ । एतादृशावहरहर्लभेयमिति वाञ्छया ॥ २४
शिवमर्चितवानस्मि भुक्तिमुक्तिफलप्रदम् । ब्रुवतोरिति चान्योऽन्य रमतोः क्षणदा क्षणात् ॥ २५
ययौ समुदितस्सूर्यो जग्मतुस्तौ यथासुखम् । स पुनर्विपिनं प्राप पान्थानां धनमाहरन् ॥ २६
दयाविनाच संवीतो ममार च वनान्तरे । स्तनलिङ्गार्चनेनास्य सर्वपापं विनाशितम् ॥ २७
पुण्यराशिश्च संपन्नस्तेन पुण्येन स द्विजः । विष्णोश्चित्ते समुत्पन्नश्चित्तजस्तेन विश्रुतः ॥ २८
विष्णुनाथाऽभ्यनुज्ञातः पूर्ववासनयाऽपि च । शिवपूजामसौ कर्तुं काशीमाशु जगाम सः ॥ २९
तत्र लिङ्गं प्रतिष्ठाप्य स्वनाम्ना चित्तजोमहत् । श्रद्धयाऽऽराध्य देवेशं प्रार्थयामास शूलिनम् ॥ ३०
ततः प्रसन्नो भगवान् प्रादुर्भूय दयानिधिः । स तं मदनराजाख्यमभिषिच्य चकार सः ॥ ३१
शुकमध्वाक्षकारास्य दक्षिणं मारुतं रथम् । चन्द्रं छत्रं वरं शंभुरदात्तस्मै राजपरिच्छदम् ॥ ३२
कान्तिमप्यतुलं रूपं रतीमपि सुमध्यमाम् । पक्षीश्चापिच चार्वङ्गीः कार्मुकञ्चेक्षुसंभवम् ॥ ३३
पुष्पाणि पञ्चबाणांश्च संभाव्यैवं दयानिधिः । अन्तर्धानं ययौ शंभुरद्भुतं पश्यत द्विजाः ॥ ३४
एवं लब्धवरः कामराजोऽसौ रतिसंयुतः । भूम्यन्तरिक्षस्वर्गेषु चचार बहुलीलया ॥ ३५
मोहयामास सकलान् जन्तून् लोकमनोहरः । त्रैलोक्यं निर्जितं तेन पुष्पैः पञ्चभिराशुगैः ॥ ३६
अहो पश्यतु विप्रेन्द्राः शिवपूजाफलं महत् । अनादरेण विधिनाप्याराध्यैवमवाप सः ॥ ३७
कामराजपदं लोके किं पुनर्विधिनार्चताम् । स कामराजो देवेशं देवसङ्घप्रचोदितः ॥ ३८
सुरेतरसमं पश्यञ्छूलपाणिं त्रिलोचनम् । युयोध कुसुमैर्बाणै रत्या सह महेश्वरम् ॥ ३९
निरीक्षितश्च देवेन भस्मसादभवत्क्षणात् । रतिर्बहुविलप्याथ समाराध्यच शङ्करम् ॥ ४०
लेभे पतिं तमेवेह पूर्ववत् द्विजसत्तमाः । इदानीमपि ये लोके देवदेवं त्रियंबकम् ॥ ४१
मन्यन्तिश्चित्तसामान्यं पश्यन्ति मनसा सकृत् । तेऽपि नश्यन्ति सहसा यथा रतिपतिस्तथा ॥ ४२

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे एकाशीतितमोऽध्यायः ॥

---

॥ अथ द्व्यशीतितमोऽध्यायः ॥

चोरस्य शिवार्पणोच्चारणेन कैलासप्राप्तिः ॥

सूतः — अस्ति मालवदेशेषु वैणवं पुरमाख्यया । कलुरूपाह्वयः कश्चित् ब्राह्मणश्शीलवर्जितः ॥ १
दुरात्मा सर्वभक्षोऽसौ सर्वस्त्रीरतिलालसः । पत्तनेषु च कस्मिंश्चिच्चण्डालीरतिलालसः ॥ २
स तया सह चण्डाल्या दिवारात्रमविभ्रमम् । वर्तते निर्भयो नित्यं चौर्यार्जितधनाशनः ॥ ३
एकदा स तु वै रात्रौ कुसुमं पुष्पाहृतम् । जहार पेटिकान्तस्थं तया पेटिकया सह ॥ ४
गृहस्य पुष्पं रात्रौ मलयग्धुर्यन्ती तथा । आदाय पुष्पं चण्डाल्या तस्मा प्रासरान् गृहम् ॥ ५
मध्येमार्गं पेटिकायाः पतितं भूतले क्वचित् । आलोक्य पुष्पमेकं तच्छिवायेति गिरा वदन् ॥ ६

स तया रमयामास पुष्पालंकृतकेशया । तदेतन्नृपतिश्श्रुत्वा क्रुध्यादतिकोपनः ॥ ७
भटैरानीय बध्वा तं पतितं ब्राह्मणाधमम् । प्रहृत्य काराभवने निगळाढ्यं न्यवेशयत् ॥ ८
स तु तत्रैव कालेन गतासुर्ब्राह्मणाधमः । यमदूता महाघोरा निन्युरेनं यमान्तिकम् ॥ ९
तदन्तरे गणाधीशा यमदूतान् प्रहृत्य च । विमानमेनमारोप्य निन्युश्शिवपुरं महत् ॥ १०
यमदूतास्समभ्येत्य यमायास्य न्यवेदयन् । वृत्तान्तमेतदखिलं यमोऽपि परया रुषा ॥ ११
चित्रगुप्तं सभामध्ये पप्रच्छास्यैव कारणम् । जगाद चित्रगुप्तोऽपि सभामध्ये विमृश्य सः ॥ १२
अनेन च कृतं पापं मया वक्तुं न शक्यते । ब्रह्मणा विष्णुना चापि वर्षकोटिशतैरपि ॥ १३
किं त्वनेनैकदा पुष्पं राजभृत्यात्सपेटिकम् । गृहीत्वा धावतोऽत्रैकं पतितं भूमिदूषितम् ॥ १४
शिवायार्पितमित्येवं प्राप्य चाशु वदन् गतः । तदस्ति पुण्यं सुमहदस्य मूर्खस्य भो विभो ॥ १५
तेनास्य सुकृतेनैव नाशितो पापसञ्चयः । नीतश्च गणपैरेवं शैवं लोकमनामयम् ॥ १६
सर्वैस्संपूज्यमानोऽसौ यत्र गत्वा न शोचति । श्रुत्वेति धर्मराजोऽयं चित्रगुप्तं पुनः पुनः ॥ १७
प्रशशंस मुदा तस्मिन् सभामध्ये प्रसन्नधीः । ईशपूजा जगत्यस्मिन् दुःखहन्त्री न कस्य वा ॥ १८
शिवपूजां प्रकुर्वन्ति ये नरा भुवनत्रये । तेषां महात्मनां केन महिमा वर्णितुं क्षमः ॥ १९
बहुधैवं गिरा शंसन् दूतान् प्रोवाच तान्पुनः । दृष्ट्वा शिवार्चकान्यूयं तेषामपि सखीनपि ॥ २०
तेषां शुश्रूषणपरानपि दूरे प्रणम्य च । गच्छताशु ततो दूता यद्यस्माकं सुखार्थिनः ॥ २१
सूतः — तस्मात्पूजा सदा कार्या शंभोर्मोक्षफलप्रदा । भोगप्रदा च सर्वेषां पुरुषार्थसुधानिधिः ॥ २२
देव्याश्चापि मुनिश्रेष्ठा या सर्वार्तिहरा विभोः । सवेदिकेऽर्चिते लिङ्गे तावुभौ सम्यगर्चितौ ॥ २३
देवी साऽपि सदाकालं करोति शिवपूजनम् । तत्सुतौ स्कन्दविघ्नेशौ शिवपूजापरौ सदा ॥ २४
भैरवोऽपि महाशास्ता महाकालोऽपि तत्सुतः । शिवपूजापरास्तेऽपि सदाकालमतन्द्रिताः ॥ २५
नन्दीश्वरोऽपि शैलादिस्सोमनन्दी शिवप्रियः । गणनाथाश्च ते सर्वे शिवपूजापरायणाः ॥ २६
वीरभद्रो महातेजास्सर्वे रुद्रगणा अपि । अर्चयन्ति सदाकालं लिङ्गमूर्तिं सनातनम् ॥ २७
तस्मात्सर्वैरनुष्ठेया शिवपूजाऽखिलैस्सदा । शिवपूजा हि पापानां निष्कृतिः परमा मता ॥ २८
ब्रह्महत्यासहस्राणि भ्रूणहत्यायुतान्यपि । नाशमायान्ति सर्वाणि पापानि सुबहून्यपि ॥ २९
अभीष्टानां च सर्वेषां पूजा हेतुर्महत्तरा । सुपुत्रकामा ये मर्त्याः पत्नीपशुधनेच्छवः ॥ ३०
तेऽर्चयन्तु सदाकालं लिङ्गमूर्तिं महेश्वरम् । पूजया भुक्तिमाप्नोति पूजया मुक्तिमाप्नुयात् ॥ ३१
पूजया योगसिद्धिश्च पूजया सकलं द्विजाः । पूजा ज्ञानप्रदा शैवी पूजा सर्वप्रदा मता ॥ ३२
पूजाया महिमास्माभिर्नैव शक्यस्तु वर्णितुम् । इति सूते वदत्यत्र ऋषयश्शौनकादयः ॥ ३३
अपृच्छन्मुनयस्सूतं विनयेन च सादरम् । येन संपूजितो देवश्शीघ्रमेव प्रसीदति ॥ ३४
तद्वदाद्य महाभाग सर्वज्ञोऽसि मतश्च नः । इति पृष्टश्चिरं ध्यात्वा सूतः प्रोवाच हृष्टधीः ॥ ३५
आराधितश्शिवो नाम्नां सहस्रेण मुनीश्वराः । शीघ्रमेवातिसंतुष्टो ददाति फलमीप्सितम् । ३६
श्रुत्वेति ते तमवदंस्तानि नामानि नो वद । यैरर्चितो महादेवश्शीघ्रमेव प्रसीदति ॥ ३७

इति मुनिगणमध्ये सूतपुत्रोऽभिनन्द्य त्रिपुररिपुपदाब्जं सादरं संप्रणम्य ।
स्वगुरुमपि मुनीन्द्रं सत्यवत्यास्तनूजं हृदि शिवमभिचिन्त्य प्राह नाम्नां सहस्रम् ॥ ३८

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे द्व्यशीतितमोऽध्यायः ॥

॥ अथ त्र्यशीतितमोऽध्यायः ॥

त्र्यशीतितमाध्यायमारभ्य षडशीतितमाध्यायपर्यन्तं चतुर्णामध्यायानां एकस्मिन्नेव पुस्तके दर्शनात् पुस्तकान्तरेष्वनुपलंभात् यथामतिपरिशोध्य मुद्रितत्वेऽपि विशेषतोऽस्य सर्वसारसहस्रनामाध्यायस्य अपपाठभूयिष्ठत्वेन दुरूहतया साकल्येन अपभ्रंशमपनेतुमशक्नुवन्तो महद्भिः परिशीलनीयमिति प्रार्थयामहे ॥

हरश्शम्भुर्महादेवो नीलकण्ठस्सदाशिवः । भर्तावरः पाण्डराङ्ग आनन्दश्शान्तविग्रहः ॥ १

एकोऽनन्तो मृगधरश्शूलपाणिर्भवश्शिवः । अक्षिमध्यनटो मुक्तः स्वयंमूर्तिर्दिशान्तनः ॥ २

नन्दी परशुपाणिश्च ज्योतिर्भस्माङ्गरागभृत् । गजोत्पाटीकपालीच नित्यशुद्धोऽग्निधारकः ॥ ३

शंकरो भूधो मेरुचापो वृषभवाहनः । उत्पत्तिशून्यो भूतेशो नागाभरणधारणः ॥ ४

उमार्धदेही हिमवज्जामाता भर्ग उत्तमः । उमापतिर्वह्निपाणिर्दक्षेच्छा प्रलयनिर्भयः ॥ ५

एकरुद्रः पार्थबाणदो रुद्रोऽतिवीर्यवान् । रविचक्रधरस्तद्वत्सोमचक्रधरः स्मृतः ॥ ६

दिगम्बरस्सर्पनेता विष्णुमत्स्यनिबर्हकः । मत्स्यनेत्रापहारीच मत्स्यनेत्रविभूषणः ॥ ७

मत्स्यपूजितपादश्च तथैव कमलासनः । वेदवेद्यः स्मृतस्तद्वद्वेदाश्वरथ ईरितः ॥ ८

वेदश्च वेदकौपीनो वेदनूपुरकस्तथा । वेदवाद्यो वेदमूर्तिर्वेदान्तो वेदपूजितः ॥ ९

सर्वेश्वरो नादवाद्यो ब्रह्ममूर्धनिकृन्तनः । ताण्डवश्चामृतस्तद्वद्रूपैस्ताण्डवपण्डितः ॥ १०

आनन्दश्चण्ड आनन्दताण्डवः पूषदन्तभित् । भगनेत्रहरस्तद्वद्गजचर्माम्बरप्रियः ॥ ११

कामान्तको व्याघ्रभेदी मृगी चैकाङ्गकस्तथा । निर्विकारः पशुपतिस्सर्वमार्गगोचरस्तथा ॥ १२

अग्निनेत्रो भानुनेत्रश्चन्द्रनेत्रोऽपिकथ्यते । कूर्मनिग्राहकः कूर्मकपालहारकस्तथा ॥ १३

कूर्मपूज्यस्तथा कूर्मकपालाभरणस्तथा । व्याघ्रचर्माम्बरः स्वामी तथा पाशविमोचकः ॥ १४

ओङ्कारमेनत्वद्ब्रह्ममन्त्रकल्याणमूर्तयः । विष्णुप्राणो गणपतिः पूतोऽनन्तु पुरातनः ॥ १५

भूतनुश्च कृपामूर्तिः विष्णुपादकपादवान् । सुब्रह्मण्यपिता ब्रह्मपिता स्थाणुश्च स्मृतः ॥ १६

बालक्षीरजलधिप्रदो पोत्रिविभेदकः । पोत्रिदन्तापहारीच पोत्रिदन्तविभूषणः ॥ १७

पोत्रिपूजितपादश्च चन्द्रपुष्पेषुकस्तथा । सर्वोपादानकस्तद्वद्दम्भोऽग्निसमाकृतिः ॥ १८

मातापितृविहीनश्च धर्माधर्मावुभावपि । नियुक्तात्माच्युतब्रह्मपूजितपादवान् ॥ १९

एकपिङ्गलो विष्णुरूपो भानुदीपवान् । भूतसेनो महायोगी योगी काळीपनर्तनः ॥ २०

गीतप्रियो नारसिंहनिग्रहीताऽपि कथ्यते । नारसिंहशिरोभूषो नारसिंहत्वगम्बरः । २१

नारसिंहत्वगुत्पाटी नारसिंहसुपूजितः । अणुरूपी महारूपी अतिसुन्दरविग्रहः ॥ २२

आचार्यश्च पुष्पगिरीशनाथोऽपिच कथ्यते । शिवामर्दनगोळान्तो गिरिशानाथ ईरितः ॥ २३

तथैवाष्टमहासिद्धिरतकान्तश्च ईरितः । घोरस्तथैव गिरिशः रुण्डमालविभूषणः ॥ २४

वृषभाङ्को डमरुकधरो विश्वग्रहविधारकः । रक्ताङ्गश्च प्रलयकृद्विद्याकामरूपवान् ॥ २५

विष्णुरथस्तद्वदैश्वर्यसमन्वितः । तथैवाष्टगुणैश्वर्यो वाहनारूढेश्वरः ॥ २६

यज्ञास्यश्च हतांग यज्ञमथनोऽपि सः । तथा मन्मथनाथोऽपि बाहुवीर्यगुणप्रदः ॥ २७

महामनोऽचलनिलयः स्वकदैवत ईरितः । महामणी विषमालाधारीशानुपनः स्मृतः ॥ २८

त्रिपादाश्च पाशुपोतिश्रीमहास्रद्विजो महान् । त्रिविक्रमनिरस्ताख्य त्रिविक्रमसुपूजितः ॥ २९

त्रिविक्रमाख्यगुत्पाटी तथा तथमैव शुकः । त्रिविक्रमास्थिदण्डीच सर्वो मायावरोऽपि सः ॥ ३०

वटमूलो वेणिजटस्तथा विष्णवस्थिभूषणः । विकृतो विजयश्चैव तथा भक्तकृपाकरः ॥ ३१
स्तोत्रपूजाप्रियो रामवरदो हृदयांबुजः । तथा परशुरामेणोद्धारकस्तेन पूजितः ॥ ३२
रुद्राक्षमाली भोगीच महाभोगीच संस्मृतः । भोगातीतश्च सर्वेशो योगातीतो हरिप्रियः ॥ ३३
वेदवेदान्तकर्ताच श्रियकमनोहरौ । विनायको वितरणो विचित्रो मत इत्यपि ॥ ३४
परमेशो विरूपाक्षो देवदेवस्त्रिलोचनः । वैणिको विटस्थोऽयं तथा क्षीरसमाकृतिः । ३५
आरणः काठकश्चैव सुमुखोऽमृतवागपि । धुस्तूरपुष्पधारीच ऋग्यजुर्वेदिनावुभौ ॥ ३६
सामवेदी तथाऽथर्ववेदी कामिककारणौ । विमलो मकुटश्चैव वातुलोऽचिन्त्ययोगजौ ॥ ३७
दीप्तस्सूक्ष्मस्तथैवायं वीरश्च किरणोऽपि च । अजितश्च सहस्रश्च अंशुमान् सुप्रभेदकः ॥ ३८
तथा विजयनिश्वासौ नाम्ना स्वायम्भुवोऽप्ययम् । अनलो रौरवश्चन्द्रज्ञानो बिंब उदीरितः ॥ ३९
प्रोद्गीतो ललितस्सिद्धस्तथा सन्ताननामवान् । शार्वोत्तरस्तथाचायं पारमेश्वर ईरितः ॥ ४०
उपागमसमाख्योऽपि तथा शिवपुराणकः । भविष्यश्च तथैवायं मार्कण्डेयोऽपि लैङ्गकः ॥ ४१
स्कान्दो वराहोऽपि तथा वामनो मात्स्यकूर्मकौ । ब्रह्माण्डो ब्राह्मपाद्मौ च गारुडो विष्णुनारदौ ॥ ४२
तथा भागवताग्नेयौ ब्रह्मकैवर्तकोऽप्ययम् । तथैवोपपुराणोऽपि रामस्यास्त्रप्रदोऽपि सः ॥ ४३
रामस्य चापहारी च रामपूजितपादवान् । मायी च शुद्धमायी च वैखरी मध्यमा परा ॥ ४४
पश्यन्ती च तथा सूक्ष्मा तथा प्रणवचापवान् । ज्ञानास्त्रस्सकलश्चैव निष्कलस्सकलश्च वै ॥ ४५
विष्णोः पतिरयं तद्वद्बलभद्रबलप्रदः । बलचापापहर्ताच बलपूजितपादवान् ॥ ४६
दण्डायुधो वाङ्मनसोरगोचरसुगन्धिनौ । श्रीकण्ठोऽप्ययमाचार्यः खट्वाङ्गः पाशभृत्तथा ॥ ४७
सर्परूपी स्वर्णवीर्यस्सकलात्माऽधिपः स्मृतः । प्रळयः कालनाथोऽपि विज्ञानं कालतापकः ॥ ४८
पिनाकपाणिस्सुकृतो चिष्कारो विष्णुरूपः । विष्णोः श्वारकास्तद्वत्कृष्णज्ञानप्रदोहि सः ॥ ४९
कृष्णाय पुत्रदः कृष्णायुद्धदः कृष्णपापहा । कृष्णपूजितपादश्च कल्किविष्णवश्वभञ्जनः ॥ ५०
कल्किपूजितपादश्च वह्निजिह्वातिकृन्तनः । भारतीनासिकाच्छेत्ता पापनाशो जितेन्द्रियः ॥ ५१
शिष्टो विशिष्टः कर्ताच मीमेश्योपिच चोच्यते । शिवतत्वं तथा विद्यातत्वं पञ्चाक्षरोऽपि सः ॥ ५२
पञ्चवक्त्रः सितशिरोधारी महास्थिभूषणः । आत्मतत्वं तथा हृदयसहायो रसवीर्यवान् ॥ ५३
महत्पदवी मेनायाजामातोग्रध्वजवान् । तथा दक्षशिरच्छेत्ता तत्पुरुषो ब्राह्मणादिशाखी ॥ ५४
अष्टमूर्तिश्चाष्टभुजश्चपञ्चाक्षरसमाह्वयः । पञ्चकृत्यः पञ्चधेनुः पञ्चवृक्षोऽग्निकश्चिवान् ॥ ५५
शङ्खवर्णस्सर्पकारिस्सूक्ष्मोऽहङ्कार ईरितः । स्वाहाकारः स्वधाकारः फट्कारस्त्रिगुणः स्मृतः ॥ ५६
दीनान्धककृपालुश्च वामदेवोपि कथ्यते । धीरः कल्पो युगो वर्षमासावृतुसमाह्वयः ॥ ५७
राशिवासरनक्षत्रयोगाः करण ईरितः । घटी काष्ठा विनाडीच प्राणो गुरुनिमेषकौ ॥ ५८
श्रवणर्क्षौ मेषवाहो ब्रह्माण्डस्तगुदीरितः । जाग्रत्स्वप्नसुषुप्तिश्च तुर्योपमतितुर्यवान् ॥ ५९
तथैव केवलावस्थस्सकलावस्थ इत्यपि । शुद्धावस्थोसमाख्यौ च सृष्टिरक्षाविधायिनौ ॥ ६०
संहर्ताच तिरोभूः अनुग्रहकारस्तथा । स्वतन्त्रः परतन्त्रश्च षण्मुखः काल ईरितः ॥ ६१
अकालश्च तथा पाशुपतास्त्रकर ईश्वरः । अघोरक्षुरिकाख्यौ च मत्यहास्त्रोऽपि कथ्यते ॥ ६२
पादोत्थष्टमहायक्षो विष्णुदेवयाभुजङ्गकः । नागयज्ञोपवीती च पञ्चवर्णोऽपि मोक्षदः ॥ ६३
वाग्वागीशौ सर्पकण्ठः पञ्चमूर्तिश्च भोगदः । तथा विष्णुशिरच्छेत्ता शेषजयो बिन्दुनादकः ॥ ६४
सर्वेशो विष्णुनिगळमोक्षको बीजवर्धकः । बिल्वपत्रधरो बिन्दुनादपीठस्तु शाकिदः ॥ ६५

तथा रावणनिष्पेष्टा भैरवोत्पादकोऽव्ययम् । दक्षयज्ञविनाशीच त्रिपुरत्रयशिक्षकः ॥ ६६
सिन्दूरपत्रधारीच मन्दारस्रगलंकृतः । निर्वीर्यो भावनातीतस्तथा भूतगणेश्वरः ॥ ६७
विष्णुभ्रमध्यपादीच सर्वोपादानकारणम् । निमित्तकारणं सर्वसहकार्यपि कथ्यते ॥ ६८
तत्सद्यासकरच्छेत्ता शूलप्रोतहरिस्तथा । भेदाभेदौ वेदवल्लीकण्ठच्छेत्तादि कथ्यते ॥ ६९
पञ्चब्रह्मस्वरूपीच भेदाभेदोभयात्मवान् । अच्छस्फटिकसंकाशो ब्रह्मभस्मावलेपनः ॥ ७०
निर्दग्धविष्णुभस्माङ्गरागो पिङ्गजटाधरः । चण्डार्पितप्रमादश्च धाता धातृविवर्जितः ॥ ७१
कल्पातीतः कल्पभस्म चागस्त्यकुसुमप्रियः । अनुकल्पोपकल्पौ च संकल्पश्छेददुन्दुभिः ॥ ७२
विकल्पो विष्णुदुर्जयपादो मृत्युञ्जयः स्मृतः । विष्णुश्मशाननटनो विष्णुकेशोपवीतवान् ॥ ७३
ब्रह्मश्मशाननटनः पञ्चरावणघातकः । सर्पाधीशान्तरस्तद्वदनलासुरघातकः ॥ ७४
महिषासुरसंहर्ता नाळीदूर्वावतंसकः । देवर्षिनरदैत्येशो राक्षसेशो धनेश्वरः ॥ ७५
चराचरेशोऽनुपदो मूर्तिच्छन्दस्वरूपिणौ । एकद्वित्रिचतुःपञ्चजानिनो विक्रमाश्रमः ॥ ७६
ब्रह्मविष्णुकपालास्रजयकिंकिणिकांघ्रिकः । संहारकाट्टहासोऽपि सर्वसंहारकः स्मृतः ॥ ७७
सर्वसंहारनेत्राग्निप्लुष्टिकद्रास्मनोयुतः । संहारकृत् त्रिशूलोऽपि रक्षाकृत्पाणिपादवान् ॥ ७८
भृङ्गिनाट्यप्रियश्शङ्खपद्मनिध्योरधीश्वरः । सर्वाम्बरो भक्तचिन्तितार्थदो भक्तवत्सलः ॥ ७९
भक्तापराधसोढाच विकीर्णजट ईरितः । जटामकुटधारीच दिगम्बरोऽपि कथ्यते ॥ ८०
अपस्मारीकृताविद्यापृष्ठांघ्रिः स्थौल्यवर्जितः । युवा नित्ययुवा वृद्धो नित्यवृद्धोऽपि कथ्यते ॥ ८१
शक्त्युत्पादी शक्तियुक्तस्सत्यात्सत्योऽपि कथ्यते । विष्णूत्पादक अहङ्कारमत्यासत्यश्च ईरितः ॥ ८२
मूलाधारस्तथा स्वाधिष्ठानश्च मणिपूरकः । अनाहतो विशुद्ध्याज्ञा तथा ब्रह्मबिल स्मृतः ॥ ८३
परामयकारकशास्तृपिता तारकमारकः । सालोक्यदश्च सामीप्यदायी सारूप्यदः स्मृतः ॥ ८४
सायुज्यमुक्तिदस्तद्वद्हरिकन्धरपादुकः । निकृत्तब्रह्ममूर्धाच शाकिनीडाकिनीश्वरः ॥ ८५
योगिनीमोहिनीनाथो दुर्गानाथोऽपि कथ्यते । यक्षा यक्षेश्वरो यज्ञहविर्भुग्यज्वनां प्रियः ॥ ८६
विष्णुशापापहर्ताच चन्द्रशापापहारकः । इन्द्रशापापहर्ताच वेदागमपुराणकृत् ॥ ८७
विष्णुब्रह्मोपदेष्टाच स्कन्दोमादेशिकोऽव्ययम् । विघ्नेशस्योपदेष्टाच नन्दिकेशगुरुस्तथा ॥ ८८
तथा ऋषिगुरुस्सर्वगुरुर्दशदिगीश्वरः । दशायुधदशाक्षौच ज्ञानयज्ञोपवीतवान् ॥ ८९
ब्रह्मविष्णुशिरोमुण्डकन्तुकः परमेश्वरः । ज्ञानक्रियायोगचर्यानिस्तोरगकुण्डलौ ॥ ९०
महाताळप्रियो विष्णुपट्टप्रीतिरव्ययम् । मण्डासुरापहर्ताच कङ्कपत्रधरोऽव्ययम् ॥ ९१
तन्त्रचापरतस्तद्वद्र्कपुष्पप्रियोऽव्ययम् । विश्वप्रासमुक्तवीर्योऽपि देवप्रकृतताण्डवः ॥ ९२
ज्ञानांबरो ज्ञानभूषो विष्णुशङ्खप्रियाऽव्ययम् । विष्णूदरविमुक्तात्मवीर्यश्चैव परात्परः ॥ ९३
महेश्वरश्चेश्वरोऽपि लिङ्गोद्भवसुखासनौ । उमासहश्चन्द्रचूडश्चार्धनारीश्वरः स्मृतः ॥ ९४
सोमास्कन्दस्तथा चक्रप्रसादीच त्रिमूर्तिकः । अर्धाङ्गविष्णुश्च तथा दक्षिणामूर्तिरव्ययः ॥ ९५
भिक्षाटनश्च कङ्काळः कामारिः कालशासनः । जलन्धरारित्रिपुरहन्ताच विषभक्षणः ॥ ९६
कल्याणसुन्दरशरभमूर्तीच त्रिपादपि । एकपादो भैरवश्च वृषारूढस्सवानटः ॥ ९७
गङ्गाधरश्चषण्णवतितत्त्वमव्ययमीरितः । तथा साष्टशत भेदमूर्तिरष्टशताद्वयः ॥ ९८
अष्टोत्तरशत ताळरागनृत्तैकपण्डितः । सहस्राक्ष्यसहस्राक्षसहस्रभुज ईरितः ॥ ९९
सहस्रपादुस्तन्मूर्तिरनन्तमुख ईरितः । अनन्तनामापि तथा चानन्तभुजिरव्ययम् ॥ १००

अनन्तनयनस्तद्वदनन्तप्राणमण्डितः । अनन्तरूपश्च तद्वदनन्तैश्वर्यवान् स्मृतः ॥ १०१
अनन्तशक्तिकृत्याधानतन्तज्ञानवानयम् । अनन्तानन्दसन्दोह अनन्तौदार्यवानयम् ॥ १०२
तथैव पृथिवीमूर्तिः पृथिवीशोऽपि कथ्यते । पृथिवीधारकस्तद्वत्पृथिव्यान्तर ईरितः ॥ १०३
पृथिव्यतीतश्च तथा पार्थिवाण्डाभिमान्ययम् । तदण्डपुरुषहृदयकमलोऽपि निगद्यते ॥ १०४
तदण्डभुवनेशानः तच्छक्तिधरणात्मकः । आधारशक्त्यधिष्ठानानन्तः कालाग्निरप्ययम् ॥ १०५
कालाग्निरुद्रभुवनपतिरप्ययमीरितः । अनन्तश्च तथेशश्च शङ्करः पद्मपिङ्गलौ ॥ १०६
कालश्च जलजश्चैव क्रोधोऽतिबल ईरितः । धनदश्चातिकूश्माण्डभुवनेशोऽपि कथ्यते ॥ १०७
कूश्माण्डरसतपातालनायकोऽपि निगद्यते । पातालान्तोऽपि चेशानो बलातिबलनायुभौ ॥ १०८
बलविकरणश्चायं बलेशोऽपि बलेश्वरः । बलाध्यक्षश्च बलवान्हाटकेशोऽपि कथ्यते ॥ १०९
तथा तद्भुवनेशानस्तथैवाष्टगजेश्वरः । अष्टनागेश्वरस्तद्वद्भूलोकेशोऽपि कथ्यते ॥ ११०
मेर्वीशो मेरुशिखरराजोऽयनिपतिस्तथा । त्रिपथकश्चाष्टकुलपर्वतेशोऽपि कथ्यते ॥ १११
मानसोत्तरगिरिस्तद्वद्द्विभ्येशोऽपि निगद्यते । स्वर्णलोकश्चक्रवालगिरिश्चासविरामकः ॥ ११२
धर्मो विविधधामाच शङ्खपालश्च कथ्यते । तथा कनकरोमाच पर्जन्यः केतुमानपि ॥ ११३
विरोचनो हरिच्छायो रक्तच्छायश्च कथ्यते । महान्धकारनाथोऽपि अण्डभित्तीश्वरोऽप्ययम् ॥ ११४
प्राचीवज्रीश्वरौ दक्षिणप्राचीशोऽपि गद्यते । अग्नीश्वरो दक्षिणश्च दिगीशो यमराडपि ॥ ११५
दक्षिणाशापतिस्तद्वन्निर्ऋतीशोऽपि कथ्यते । पश्चिमाशापतिस्तद्वद्वरुणेशोऽपि कथ्यते ॥ ११६
तथोदक्पश्चिमेशोऽपि वाय्वीशोऽपि तथोच्यते । तथैवोत्तरदिङ्नाथः कुबेरेशोऽपि चोच्यते ॥ ११७
तथैवोत्तरपूर्वेश ईशानेशोऽपि कथ्यते । कैलासशिखरीनाथः श्रीकण्ठपरमेश्वरः ॥ ११८
महाकैलासनाथोऽपि महासदाशिवः स्मृतः । भुवर्लोकेश शंभूश्चासूर्यमण्डलनायकः ॥ ११९
प्रकाशरुद्रो यश्चन्द्रमण्डलेशोऽपि कथ्यते । तथा चन्द्रमहादेवो नक्षत्राणामधीश्वरः ॥ १२०
ग्रहलोकेश गन्धर्वगान्धर्वेशावुभावपि । सिद्धविद्याधरेशोऽय किन्नरेशोऽपि कथ्यते ॥ १२१
यक्षचारणनाथोऽपि स्वर्लोकेशोऽपि स स्मृतः । भीमश्चैव महर्लोकनाथश्चैव महाभवः ॥ १२२
जनलोकेश्वरो ज्ञानपादो जननवर्जितः । अतिपिङ्गल आश्चर्यो भौतिकश्च श्रुतोऽप्ययम् ॥ १२३
तपोलोकेश्वरस्तस्तो महादेवोऽपि स स्मृतः । सत्यलोकेश्वरस्तद्वत् ब्रह्मेशानोऽपि चोच्यते ॥ १२४
विष्णुलोकेशविष्ण्वीशौ शिवलोकः परशिवः । अण्डान्तेशो दण्डपाणिरण्डपृष्ठेश्वरोऽप्ययम् ॥ १२५
श्वेतश्च वायुवेगोऽपि सुपात्रश्च स्मृतोऽप्ययम् । विद्याह्वपामकस्तद्वत्कालाग्निश्च स्मृतोऽप्ययम् ॥ १२६
महासहारकस्तद्वन्महाकालोऽपि कथ्यते । महानिर्ऋतिरप्येव महावरुण इत्यपि ॥ १२७
वीरभद्रो महांस्तद्वच्छतभद्रोऽपि कथ्यते । भद्रकालीवीरभद्रौ कमण्डलुधरोऽप्ययम् ॥ १२८
अम्भुवनेशोऽपि तथा लक्ष्मीनाथोऽपि कथ्यते । सरस्वतीशो देवेशः प्रभावेशोऽपि कथ्यते ॥ १२९
तथैव डिण्डीवल्मीकनाथौ पुष्करनायकः । मण्डीशभारभूतेशौ विकालकमहेश्वरः ॥ १३०
तेजोमण्डलनाथोऽपि तेजोमण्डलमूर्तिपः । तेजोमण्डलविश्वेशशिखाग्निरपि कथ्यते ॥ १३१
वायुमण्डलमूर्तिश्च वायुमण्डलधारकः । वायुमण्डलनाथश्च वायुमण्डलरक्षकः ॥ १३२
महावायुसुवेगोऽयमाकाशमण्डलेश्वरः । आकाशमण्डलधरस्तन्मूर्तिरपि संस्मृतः ॥ १३३
आकाशमण्डलातीतस्तन्मण्डलभुवानपः । महारुद्रश्च तन्मात्रमण्डलेशश्च संस्मृतः ॥ १३४
तन्मात्रमण्डलपतिर्महाशर्वमहाभवौ । महापशुपतिश्चापि महाभीमो महाहरः ॥ १३५

कर्मेन्द्रियमण्डलेशस्तन्मण्डलभुव पति । क्रियासरस्वतीनाथ क्रिया (धिया) लक्ष्मीपतिस्तथा ॥ १३६
निवेन्द्रिय क्रियामिश्र क्रियाब्रह्मपतिः पतौ । ज्ञानेन्द्रियमण्डलेशो तन्मण्डलभुवानप ॥ १३७
भूमिदेवदिगीशेशश्च वरुणोऽपि च वह्निप । वातेशो विविधाधिपमण्डलेशाभुमावपि ॥ १३८
विषयमण्डलभुवनेशो गन्धर्वेशादिविषेश्वरः । प्रासादबलभद्रश्च सूक्ष्मेशो मानवेश्वर ॥ १३९
अन्त करणमण्डलेशो बुद्धिचित्तमन पतिः । अहङ्कारेश्वरश्चापि गुणमण्डलनायक ॥ १४०
सत्वतस्तामसगुणपतिस्तद्भुवनाधिप । एकवीर कृतान्तश्च सन्यासी सर्वशङ्करः ॥ १४१
पुरुषगुणानुमहदरससाक्षीकगुणाधिप । कालिकश्च भुवनेश कृतश्च कृतभैरवः ॥ १४२
ब्रह्मा श्रीकण्ठदेवोऽस्य सराजसगुणेश्वर । राजसगुणभुवनेशो वलाध्यक्षश्च कथ्यते ॥ १४३
गुणाध्यक्षो महाशान्तो महाविपुरघातकः । सर्वरूपी निमेषश्च उन्मेष इति कथ्यत ॥ १४४
प्रकृतीमण्डलेशोऽस्य तन्मण्डलभुवानप । शुभरामशुभर्मीमशुद्धोप्रशुद्धमधशुद्धशर्वशुद्धैकवीरः ॥ १४५
प्रचण्डपुरुषशुभगन्धजनिरहितहरीशनागमण्डलेशा । नागमण्डलभुवनेश अप्रतिष्ठप्रतिष्ठक ॥ १४६
रूपाक्षमनोन्मनमहावीरस्वरूपका । कल्याणबहुधीरश्च बलमेघादिचेतन ॥ १४७
दक्षो नियतिमण्डलेशो नियतिमण्डलभुवानपः । वासुदेवश्च वशीच विधाताप्रमणि स्मृत ॥ १४८
बलविकरणश्चैव बलविकरणस्तथा । बलप्रमथनश्चैव सर्वभूतदमश्च स ॥ १४९
विद्यामण्डलेशो विद्यामण्डलभुवनप । महादेवो महाज्योतिर्महादेवेश इत्यपि ॥ १५०
कलामण्डलेशश्च कलामण्डलभुवनप । विशुद्धश्च प्रबुद्धश्च शुद्धश्चैव स्मृतश्च स ॥ १५१
शुचिवर्णप्रकाशश्च महोक्षोक्षाच कीर्तित । मायातत्त्वीश्वरो मायाभुवनेशस्तुशक्तिमान् ॥ १५२
विद्यातनो विश्ववीजो ज्योतीरूपश्च गोपति । त्रिकालप्रभवतांच मनन्तेशश्च संस्मृत ॥ १५३
शुद्धविद्येशशुद्धश्च विद्याभुवननायक । वामेशसर्वज्येष्ठेशौ रौद्रीकालेश्वराबुभौ ॥ १५४
कलविकरणीकश्च बलविकरणीश्वर ।' बलप्रमथिनीशोऽपि सर्वभूतदमेश्वरः ॥ १५५
मनोन्मनेशास्तत्वेशास्तथैव भुवनेश्वरः । महामहेश्वरसदाशिवतत्वेश्वराबुभौ ॥ १५६
सदाशिवभुवनेशो ज्ञानवैराग्यनायकः । ऐश्वर्येशश्च धर्मेशःसदाशिव इति स्मृतः ॥ १५७
अणुसदाशिवोऽप्येव अष्टविद्येश्वरोऽव्ययम् । शक्तितत्वेश्वरशक्तिभुवनेशोऽपि कथ्यते ॥ १५८
बिन्दुमूर्तिरनन्तकोटिमहामन्त्रेश्वरोऽव्ययम् । निवृत्तीश प्रतिष्ठेशो विद्येशश्शान्तिनायक ॥ १५९
शान्त्यतीतेश्वरस्तद्वत्पञ्चमन्त्रेश्वरोऽव्ययम् । सुशान्तीशश्च तथा शिवाध्वमनाश्रयः ॥ १६०
योजनीयश्च तथा योजनातीतनायक । सुषुम्नेद्दिरोधीशौ इन्धनीरोधकेश्वर ॥ १६१
रौद्रीशाबानपोधेशौ तमोपद इति स्मृत । नादतत्वेश्वरस्तद्वन्नादाख्यभुवनेश्वरः ॥ १६२
इन्धिकेशो दीपिकेशो मोचिकेशश्च संस्मृतः । ऊर्ध्वगामिनीशोऽपि इशानाख्योऽपि कथ्यते ॥ १६३
सुषुम्नेश पिङ्गलेशो ब्रह्मरन्ध्रेश्वरोऽव्ययम् । ब्रह्मरन्ध्रस्वरूपीशः पञ्चबीजेश्वरोऽव्ययम् ॥ १६४
अमृतेशश्च शशीशारकुम्भेशश्च सुषुम्नवः । सूतेशस्य मृतेशोऽपि व्यापिनीशोऽपि कथ्यते ॥ १६५
परनाथेश्वरो व्योम व्योमरूपीच कथ्यते । मनाश्रितोऽप्यनन्तश्च अनाश्रय मुनीश्वरः ॥ १६६
अनन्तीशो अनन्तमूर्तिमन्त्रेशो मन्त्रपालक । मन्त्रातीत पदामूर्ति पदेशः पदपालकः ॥ १६७
पदातीतोऽक्षरानाथ अक्षरेशोऽक्षराधिपः । अक्षरातीतश्च तथा ओङ्कारनाथ कथ्यते ॥ १६८
ओङ्कारेशश्च तथा ओङ्कारात्मक ईरितः । परशक्तिपतिस्तद्वदादिशक्तिपतिश्च च ॥ १६९
इच्छाशक्तिपतिश्चैव ज्ञानशक्तिपतिश्च च । क्रियाशक्तिपतिस्तद्वत्कुण्डलिन्याश्च ईरितः ॥ १७०

अमूर्तिसादाख्यश्चैव मूर्तिसादाख्य ईरितः । कर्तृसादाख्यश्च तथा कर्मसादाख्य ईरितः ॥ १७१
सर्वस्रष्टा सर्वरक्षाकारकस्सर्वसंहारकः । तिरोभावकृदप्येष सर्वानुग्राहकस्तथा ॥ १७२
निरञ्जनो चञ्चलश्च विमलोनल ईरितः । सच्चिदानन्दरूपीच विष्णुचक्रप्रदायकः ॥ १७३
सर्वव्यापी तथाद्वैतविशिष्टाद्वैतकावुभौ । परिपूर्णो लिङ्गरूपी महालिङ्गस्वरूपवान् ॥ १७४
श्रीसूतः — एवमाख्यातमधुना युष्माकं ब्राह्मणोत्तमाः । अष्टोत्तरसहस्राणि नामानि गिरिजापतेः ॥ १७५
यः पठेच्छंभुनामानि पवित्राणि महामतिः । शृणुयाद्वापि भक्त्या स रुद्र एव न संशयः ॥ १७६
सधन्यस्सकुलीनश्च सपूज्यस्स महेश्वरः । तस्यैवच महालक्ष्मीस्तस्यैवच सरस्वती ॥ १७७
स शत्रूनपि संग्रामे विभीषयति रुद्रवत् । पुत्रार्थी पुत्रमाप्नोति धनार्थीच महद्धनम् ॥ १७८
आरोग्यकामस्त्वारोग्यमव्याधिश्चगामताम । शिखायां धारयेद्योऽसौ लिखित्वा पुस्तकेसदा ॥ १७९
राजद्वारेच सदसि स वशीकुरुते जनान् । नच हिंसन्ति सर्पाद्या राक्षसा न पिशाचकाः ॥
किंपुनर्ब्राह्मणश्रेष्ठास्सर्वान्कामान् लभेद्ध्रुवम् ॥ १८०

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे त्र्यशीतितमोऽध्यायः ॥

---

॥ अथ चतुरशीतितमोऽध्यायः ॥

विष्ण्वादि देवानामपि शिव सहस्रनामार्चनेन बहुविध फलप्राप्तिः ॥

सहस्रनामभिर्देवं समाराध्याम्बिकापतिम् । सद्यः प्राप्तफलानांतु मध्ये कांश्चिद्वदामिवः ॥ १
पुरा नारायणस्साक्षात् श्रीभूमिरमणोऽच्युतः । वृन्दायां मोहितोऽत्यर्थं पत्न्यां कामशरार्दितः ॥ २
जलन्धरासुरस्यासौ जारमार्गेण तां चिरम् । भस्मश्चासुरस्तस्मिन् काले देवेन शूलिना ॥ ३
निहतश्च तदा तस्यां प्रविष्टायां हुताशनम् । दुःखेन महताऽत्यर्थं सभ्रान्त हृदयो हरिः ॥ ४
तद्भस्मधूसरोऽत्यर्थं नितरां चिरमास्थितः । उत्पन्ना तत्र तुलसी ललनारूपधारिणी ॥ ५
तांश्चैव रमयामास तद्बुध्याऽधोक्षजोऽनिशम् । तदानीं वैष्णवे लोके शुद्धान्तनिलये शुभे ॥ ६
श्रीभूमिदयिते तस्य कोपमूहतुरञ्जसा । ऊचतुश्च जगद्योनिमाद्यौ देव्यौ विहायच ॥ ७
पत्नीसक्तहृदयः कथमासीत्परःपुमान् । अथवाऽस्य स्वभावोऽयमतीव रतिलालसः ॥ ८
द्वापरान्तावतारेऽस्यावाभीरवनितारतः । चतुर्दशसहस्रेषु राजस्त्रीणाञ्च सत्स्वपि ॥ ९
पुनश्च स्त्रियमन्यां तुळसीं रमतेऽधुना । एतया सह सपत्नसमीपञ्चावयोरयम् ॥ १०
इत्यन्तःपुरमुत्सृज्य कमलालयमापतु । सहस्रनामभिश्शंभु सहस्रकमलैरुभे ॥ ११
प्रार्थयामासतुः प्रीतमर्चनाभिरनकशः । ततः प्रसन्नो भगवांस्तयोः प्रादुरभूत्पुरः ॥ १२
वृण्वाथाञ्च वरं भद्रं युवामस्तु भूमिपौ । श्रुत्वेति गिरमीशस्य बभाते ते महीरमे ॥ १३
विष्णुर्वृन्दागतप्राणस्तुळसीसङ्गमप्रियः । आवयोरेतु सन्निधममरारिनिषूदन ॥ १४
इति प्रणम्य ते देव्यौ स्तुत्वा तस्थतुरग्रतः । तथेति ते समादिश्य सोमोऽन्तर्धानमाप स. ॥ १५

तयोरेकाऽऽप दुग्धाब्धिमन्या कल्याणभूधरम् । लक्ष्मीं स्वपितरं प्राप्य तत्रैवास गृहान्तरे ॥ १६
भूधरे भूर्महामेरौ गृहान्तरगृहान्तरे । सेव्यमाने परिजनैस्ते नारायणवल्लभे ॥ १७
महद्गृहान्तःपुरे ते द्राग् ज्ञात्वा सर्वज्ञ केशवः । एतयोस्सविधं प्राप्य सविधं स्वप्रधानकम् ॥ १८
सान्त्वयन् बहुधा पत्न्यौ चाटुवाक्यविशारदः । तथापि ते वशं नास्य प्राप्ते प्रणयविग्रहात् ॥ १९
प्रत्याख्यानञ्च चक्राते प्रार्थितस्य मधुद्विषः । एवं व्यवसितं धां चेन्मानिन्यौ युवयोरहम् ॥ २०
नैव मोक्ष्यामि सविधमिति काशीमथागमत् । तत्राराध्य महादेव सहस्रैरेव नामभिः ॥ २१
लेभे वरं ततः प्रीतान्मेरुक्षीरार्णवान्तरे । उभयत्रात्मनो वस्तुं पुरद्वयमरिन्दमः ॥ २२
तयोरात्मनि चात्यन्तः प्रीतिरस्तु रमाभुवोः । इति लब्धवरो लक्ष्म्यास्सविधे कृतपट्टणः ॥ २३
तया चिरसुचिरवाऽब्धौ रमया मुक्तकोपया । ततस्सुरालयस्यैव शृङ्गे वैकुण्ठमित्ययम् ॥ २४
पुरं विधाय भूदेव्या सह प्रीतिमवाप्य सः । श्रीभूमिचक्रिणामेवं सहस्राख्यार्चनाबलात् ॥ २५
क्षीरार्णवे महामेरौ पुरद्वयमभून्महत् । वैकुण्ठाख्ये मेरुशृङ्गे विष्णुलोके महत्तरे ॥ २६
श्वेतद्वीपे क्षीरसिन्धौ त्रिधात्मानं विधाय सः । श्रीभूमिसहितः श्रीमानुवास परया मुदा ॥ २७
पुनः कदाचिद्वैकुण्ठे चक्रार्थी चन्द्रशेखरम् । सहस्रनामभिर्देवं संपूज्य कमलैर्हरम् ॥ २८
सहस्रादित्यसंकाशं चक्रमाप सुदुर्लभम् । मधुञ्च कैटभं पूर्वं स्वकर्णविवरोद्भवौ ॥ २९
नियुध्य कैतवेनैतौ निहन्तिस्मात्मसंभवौ । तद्दोषपरिहारार्थं सहस्रैर्नामभिश्शिवम् ॥ ३०
काञ्चीसमीपे संपूज्य सद्यो मुक्ताघसञ्चयः । तत्र तीर्थञ्च संभाव्य तत्तीरे शेषगाप्यभूत् ॥ ३१

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे चतुरशीतितमोऽध्यायः ॥

---

॥ अथ पञ्चाशीतितमोऽध्यायः ॥

स्वयम्भु प्रभृतिलिङ्ग चतुष्टयानां महिमानु वर्णनम् ॥

गोकर्णे चार्णवाभ्याशे पुरा पद्मसमुद्भवः । सहस्रनामार्चनया सारूप्यं प्राप शूलिनः ॥ १
सहस्राक्षः पुरा देवं सहस्रकमलैर्हरम् । सहस्रनामभिश्शंभुं समाराध्य शचीसखः ॥ २
सर्वां मघवतीं प्राप संपदं स्वपदञ्च सः । एवमन्ये समाराध्य सहस्रैर्नामभिश्शिवम् ॥ ३
शीघ्रमिष्टं समासाद्य सुखिनश्च सदाऽभवन् । तस्मादष्टसहस्रेण नाम्नामष्टशतेन वा ॥ ४
चतुर्विंशतिभिर्नाम्ना तथा द्वादशभिस्तुवा । पत्रैरपि च पुष्पैर्वा तण्डुलैः परमेश्वरम् ॥ ५
श्रद्धाभक्तियुतैः पुंभिस्समाराध्योऽर्ध्यदः प्रभुः । प्रयच्छति च सर्वेषां सर्वाभीष्टं दयानिधिः ॥ ६
अन्तर्यागस्तथापि कार्यो यागो महत्तरः । आवश्यको बहिर्यागो धर्मकामार्थमुक्तये ॥ ७
बाह्यपूजोपकरणं यथा देवस्य चादितम् । तथैव मनसा सर्वं कल्पयानान्तकर्मणि ॥ ८
इच्छाविहारनैवेद्यमिच्छालिङ्गे समर्पितम् । इच्छया साधितञ्चापि शिवमिष्टं प्रयच्छति ॥ ९
सर्वथापि च पूजेयं मानसी फलदा मता । न कालनियमस्तत्र न देशस्य स्थलस्य वा ॥ १०
स्वचित्तकामना यत्र तत्रान्तर्यजनं भवेत् । एवमाराध्य देवेशं स्वान्तरेऽखिलकया शिवम् ॥ ११
पञ्चरत्नादिमासाद्य विमुक्ता भवबन्धनात् । एवं देवा जगत्यस्मिन् पूजितान्यलिङ्गात्मभिः ॥ १२

लिङ्गानि बहुधा लोके सन्ति शम्भोर्जगद्गुरो । स्वयम्भूतानि लिङ्गानि देवतास्थापितानि च ॥ १३
प्रतिष्ठितानि मुनिभिर्मनुष्यैरपि सत्तमे । दैत्यैरपि महाभागैर्गन्धर्वोरगराक्षसैः ॥ १४
पर्वताग्रे नदीतीरे काननेषु सरित्स्वपि । समुद्रतीरे लिङ्गानि सन्ति पूर्वस्य धूर्जटे ॥ १५
तेषु लिङ्गेषु सान्निध्य विशेषोऽस्ति जगद्गुरो । स्वयमेव समुद्भूत स्वायम्भुवमुदाहृतम् ॥ १६
दिव्यानि विष्णुब्रह्मादिदेववृन्दार्चितानि च । ब्रह्मर्षिभिर्वसिष्ठाद्यैर्नारदाद्यैस्सुरर्षिभि ॥ १७
मार्षाणि चार्चितानीह लिङ्गानि गुरुयोगिभि । मनुष्यस्थापितानि स्युर्मानुषाणि चतुर्ष्वपि ॥ १८
देव्या सह महादेवस्सान्निध्य कुरुते सदा । ईशो वृक्ष इव स्थाणुर्दिवि तिष्ठति यद्यपि ॥ १९
तेन पूर्णमिद सर्वं पुरुषेण महात्मना । तथापि लिङ्गभेदेषु सान्निध्यश्च विशेषत ॥ २०
विभोर्विलाससञ्चारो मनुष्यस्थापितेष्वपि । आर्षेष्वपि च लिङ्गेषु यदृच्छया तिष्ठति लीलया ॥ २१
आसीन इव लिङ्गेषु देवतास्थापितेषु च । स्वायम्भुवेषु लिङ्गेषु शयान इव शङ्कर ॥ २२
अन्येष्वपि च लिङ्गेषु यथेच्छ क्रीडति प्रभु । चतुर्ष्वपि च लिङ्गेषु शम्भु स्वायम्भुवादिषु ॥ २३
इत्थम्प्रकार देवेश क्रीडतीचोपलक्ष्यते । शेत आस्ते तिष्ठतीशस्सञ्चरत्यपि लीलया ॥ २४
यदुक्तमिह तस्यैवमुपमान ब्रवीमि च । यत्र राजा स्वभवने कुत्रचित्सञ्चरञ्जनान् ॥ २५
काश्चित्तत्सत्करोतीह विनिगृह्णाति काश्चन । पुनश्च तिष्ठन् सैवेह कुत्रचित्क्षणान्तरे ॥ २६
संभावयति काश्चिदेह नसम्भावयतीह स । आसीन कुत्रचित्स्थाने स एव जगतीपति ॥ २७
इष्टानिष्टानि केषाञ्चित्करोति विकरोति च । शयान कुत्रचिद्वापि राजा सञ्चारभूमय ॥ २८
मलङ्कृता विराजन्त ततोऽपि समलङ्कृता । यत्र तिष्ठति पादाभ्यामासीनो यत्र वा पुन ॥ २९
ततोऽप्यलङ्कृता भान्ति यत्र शेते ततोऽधिकम् । एवमेवास्य लिङ्गेषु शम्भो स्वायम्भुवादिषु ॥ ३०
अलङ्कारविशेषोऽस्ति साम्निध्यन्तु विशेषत । सदा स्वायम्भुवे लिङ्गे सर्वानुग्रह आत्मनाम् ॥ ३१
सर्वेष्वपि च लिङ्गेषु तारतम्यक्रमेण च । एकेन राजदृष्टान्तमुक्तमस्माभिरीश्वरे ॥ ३२
नन्दीश्वरस्य शयनमासनञ्च स्थितिर्गति । औपचारिकमेवास्य कल्प्यते लिङ्गभेदत ॥ ३३
भक्त्या तस्मान्महादेव यस्मिन् कस्मिंश्च शाङ्करे । स्वायम्भुवेच दैवेच मौनीन्द्रे मानुषेऽपि वा ॥ ३४
पुष्पैर्वाप्यथवा पत्रै पूजयेदिष्टसिद्धये । भक्त्या यत् श्रद्धया साक यजतामीश्वरेश्वरम् ॥ ३५
प्रयच्छत्यखिलानिष्टानेतत्सम्यङ्मयेरितम् । वेदागमोक्तविधिना गुर्वनुग्रहचोदनात् ॥ ३६
अर्चनीयश्शिवो लिङ्गे स्वात्मनो हितमिच्छता । इति ब्रुवन्त मुनयस्सूत पप्रच्छुरञ्जसा । ३७
गुरुरेव हरिर्ब्रह्मा गुरुरेव हरश्च स । गुरुरेव पिता माता भ्राता च गुरुरीश्वर ॥ ३८
इति ब्रुवन्ति वै सर्वे त्वञ्चेदानीं ब्रवीष्यहो । आज्ञयाच गुरो कार्या शिवपूजागमाहृता ॥ ३९
गुरव के समाख्यातास्तान् ब्रूहीमान् हितान् गुरून् । केषा चिद्गुरवस्सन्ति ते के गुरुसमुद्भवा ॥ ४०

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे पञ्चाशीतितमोऽध्याय ॥

॥ अथ षडशीतितमोऽध्यायः ॥

श्रीशिवेन आचार्य चतुष्टय रूपग्रहणम् ॥

हन्त वः कथयिष्यामि गुरून् भुवनपावनान् । देवानां गुरवस्सन्ति गन्धर्वोरगरक्षसाम् ॥ १
महात्मनां गणेन्द्राणां वीराणामपि योगिनाम् । मनुष्याणां विशेषेण ऋषीणाञ्च महात्मनाम् ॥ २
ब्राह्मणानां विशेषेण क्षत्रियाणां विशामपि । शूद्राणामपि सर्वेषां संकराणांच सर्वशः ॥ ३
तस्माल्लब्ध्वा गुरोरेषां पूजा कार्याऽम्बिकापतेः । पुरा देवं समासीनं कैलासे पर्वतोत्तमे ॥ ४
देवी गिरीन्द्रजा नन्दी ब्रह्मा च भगवान् हरिः । ऋषयश्च महात्मानः सत्यव्रत परायणाः ॥
प्रणम्य परया भक्त्या प्रार्थयन्तिस्म सादरम् ॥ ५
प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् । उपदेष्टा त्वमेवेश कालावच्छेदवर्तिनाम् ॥ ६
कालावच्छेदयुक्तानां गुरूणां त्वं गुरुश्शिवः । आगमार्थानिहास्माकमुपदेष्टुं त्वमर्हसि ॥ ७
भवामः कृपया देव कृतार्था जगतीपते । इति संप्रार्थितश्शम्भुरुमानन्दीशपूर्वकैः ॥ ८
उत्थाय च तदा शंभुरासनात्तत्र पर्वते । पुष्पगिर्याख्यशृङ्गेऽस्ति गृहं सर्वमनोहरम् ॥ ९
तत्रास्थाय वपुश्शंभुराचार्यस्यातिपेशलम् । देवीब्रह्माच्युतस्कन्दशास्त्रभैरवभूतपान् ॥ १०
वीरभद्रादिगणपान् वेदागमशिरांसि च । अध्यापयामास विभुः परमाचार्यमूर्तिमान् ॥ ११
आमर्दनगिरिरिति शृङ्गमन्यन्महत्तरम् । तत्राचार्यवपुर्धृत्वा नन्दिकेश्वरपूर्वकान् ॥ १२
महाकालं तथा सोमनन्दिनं प्रमथान् गणान् । वेदागमार्थानखिलान्विभुराचार्यमूर्तिमान् ॥ १३
अन्यच्छृङ्गं महद्गोळगिरिनामच विश्रुतम् । आश्रित्य गौरवीं मूर्तिं हरिब्रह्मसुरेश्वरान् ॥ १४
अध्यापयामास विभुश्चागमार्थाननेकशः । भिक्षाचार्यकेशृङ्गे श्रुत आचार्यविग्रहः ॥ १५
सनकादिमुनीन्द्रेभ्यो वेदान्तार्थागमानदात् । चतुर्ष्वपि च शृङ्गेषु चतस्रो मूर्तयः शुभाः ॥ १६
ताभ्यः पश्चान्मुनिश्रेष्ठा बहवोनुचकल्पिरे । पुनः कालेषु गच्छत्सु द्वापरान्तेषु च क्वचित् ॥ १७
उत्सन्नेष्वागमार्थेषु वैदिकेष्वपि कृत्स्नशः । शिवानुमत्या शिष्यास्ते चतुर्गिरिनिवासिनः ॥ १८
आचार्यस्याथ वश्शिष्यः पुष्पगिर्याश्रयस्यच । आमर्दनगिरेश्शिष्यस्तथा गोळगिरिप्रभोः ॥ १९
भिक्षाचार्याश्रयस्यान्तेवासीन सह शिष्यकैः । अवतीर्य भुवं सर्वे तत्तत्सन्तानसंज्ञिताः ॥ २०
सदात्मनोऽनुगृह्णन्ति कांश्च यांश्च (येन) श्रयैव ते । संस्कृत्य दीक्षया तांश्च वेदागमसमर्थया ॥ २१
चर्या क्रिया योगज्ञानैरनुगृह्यात्मनोखिलान् । उत्पाद्य तत्तान्सन्तानगुरून् स्वांशैरनेकशः ॥ २२
सम्यग्वेदागमार्थज्ञान् कृत्वा स्वात्मसमानिमान् । आचार्यश्वेऽभिषिच्यैतांस्तत्तत्सन्ताननामतः ॥ २३
पुनः कैलासमचलं गन्तारस्तेच देशिकाः । तासन्ततीया गुरवः पारंपर्यक्रमेण ते ॥ २४
अस्मिन् लोकेऽनुगृह्णन्ति सर्वान् पक्वात्मनः । तस्माद्गुरुश्शिवो ज्ञेयो मूर्तिमानागमार्थवित् ॥ २५
तदनुग्रहतः पूजा शंभोस्सद्य.फलप्रदा । तदनुग्रहतो विद्यास्सर्वास्सिद्ध्यन्ति नान्यथा ॥ २६
तदनुग्रहहीनानां विद्यास्सर्वा विनिष्फलाः । अध्येतव्या गुरोरेव सर्वविद्याश्च सर्वशः ॥ २७
पुरा शेषो विनाऽऽचार्यं विद्यासु कुशलोऽभवत् । भवद्भिर्गुणुना आर्यमत्यन्तकुशलो मुदा ॥ २८
तत्रस्था मुनयो वैयाकरणंमुरुशोपभोगिनम् । आगत्यस्त्वत्र तदाऽभ्येत्य प्राह विष्णुं समागते ॥ २९
अयं गुरुमुखादेव विद्याः प्राप भुजङ्गमः । अयं नैवतु संभाव्यो विद्यायोग्ये महात्मभिः ॥ ३०
पुनश्च शेषमालोक्य प्राहागस्त्यो मुनीश्वरः । भवानधीतेन गुरोर्विद्याचोरोऽसिपुङ्गव ॥ ३१
सर्वमाप्तो हि विदुषां समुज्झितगुरुर्जनः । विद्याच फलदा न स्यात्तस्य नास्ति गुरोर्गुरुः ॥ ३२

उक्त्वेति शेषमाहेत्थं पुनश्चागस्त्य आत्मवान् । असौ तेऽस्तु गुरुर्विष्णुर्जगत्त्रयगुरुर्महान् ॥ ३३
अस्माल्लब्धोपदेशस्त्वमत ऊर्ध्वं कृती भव । ततस्त्वं गुरुणाऽनेन प्रसङ्गं कुरु नान्यथा ॥ ३४
अगस्त्यवचनं श्रुत्वा समाह भुजगोत्तमः । स्पर्धमानस्त्वहं येन स्यां शिष्यस्तस्य वै कथम् ॥ ३५
परिहास्यं मुनेर्वाक्यमिदं तव न संशयः । मम मास्तु गुरुर्लोके विद्याहेतोर्मुनीश्वर ॥ ३६
यत्त्वयं लब्धविद्योऽहं पूर्वमासनया मुने । ब्रुवन्तमेवं शेषाहिं पुनराह मुनीश्वरः ॥ ३७
महाक्लिष्टमिदं वाक्यं ब्रूषे शेष महामते । तस्मात्त्वमस्यै विष्णोर्भव त्वं शयनासनम् ॥ ३८
त्वया याऽधिगता विद्या सा न रोचतु तेऽधुना । वदन्तमेवं तं मुनिं भीतभीतः प्रणम्य तम् ॥ ३९
प्राञ्जलिः प्रश्रयेणामुं प्रार्थयामास भूरिशः । मयाऽज्ञानकृतं सर्वं सोढुमर्हसि वै मुने ॥ ४०
माभून्मम च शापोऽयं तव कोपसमुद्भवः । शापमुक्तिं ममाशुत्वं कुम्भयोने वदाधुना ॥ ४१
वदेति भाषमाणं तं पुनराह मुनीश्वरः । त्वमस्य विष्णोश्शेषाहे शयानस्य कटाक्षताम् ॥ ४२
चिरं प्राप्यैवमेव त्वं ध्यायमानो दिवानिशम् । अस्माल्लब्धोपदेशस्त्वं प्रसादाद्गरुडध्वजात् ॥ ४३
समाराध्य महादेवं सुप्रसन्नं विधाय तम् । पश्चात् हेयानि सर्वाणि काद्रवेय गमिष्यसि ॥ ४४
तस्माद्गुरुकटाक्षेण श्रेयस्सर्वात्मनां ध्रुवम् । पूजया शूलिनस्सिध्येन्नान्यथा मुनिसत्तमाः ॥ ४५
एतद्धि शिवपूजाया माहात्म्यमपि वर्णितम् । यथाशक्ति यथाचोक्तं व्यासेन गुरुणा मम ॥ ४६
इयत्तया परिच्छेत्तुं ब्रह्मणापि न शक्यते । अतःपरन्तु योगस्य स्वरूपमनुवर्ण्यते ॥ ४७
ज्ञानस्य च मया सम्यक् शृणुध्वं श्रद्धया सह । इतीशपूजामाहात्म्यं भक्त्या यश्शृणुते नरः ॥ ४८
न पीड्यते महापापैरुपपापैरनेकशः । ब्रह्महा गुरुहा चैव स्तेयी च गुरुतल्पगः ॥ ४९
दुष्टः पापसमाचारो मातृहा पितृहाऽपि वा । माहात्म्यश्रवणादेव मुच्यते नात्र संशयः ॥ ५०
विद्याकामो लभेद्विद्यां धनकामो लभेद्धनम् । पुत्रकामो लभेत्पुत्रान् पशुकामः पशून् बहून् ॥ ५१
स्त्रीकामः स्त्रियमाप्नोति भूकामो भुवमुत्तमाम् । तस्मात्सर्वप्रयत्नेन श्रोतव्यमिदमादरात् ॥ ५२

इत्थं मुनीन्द्राः परमेश्वरस्य लिङ्गानि पूजां गुरुदक्षिणाञ्च ।
विद्यास्वरूपं कथितं च भक्त्या श्रुतं च युष्माभिरहीनभाग्याः ॥ ५३

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे षडशीतितमोऽध्यायः ॥

---

॥ अथ सप्ताशीतितमोऽध्यायः ॥

अष्टाङ्गयोग निरूपणम् ॥

अतः परं प्रवक्ष्यामि शिवयोगमनुत्तमम् । अनुष्ठितायाश्चर्यायां क्रियायां विधिना द्विजाः ॥ १
चर्यां तु प्रातरुत्थाय शौचाचमनपूर्वकम् । स्नात्वा विभूतिरुद्राक्षं धृत्वा चैवानुपीनपि ॥ २
सन्तर्प्य पुष्पाण्यारामात्समानीयातिनिर्मलः । अभिषेकं जलं तद्वदनुलेपन पूर्वकम् ॥ ३
आनीय तत्तत्कृत्यानि निर्वृत्य च यथाक्रमात् । दीपैर्देवालयं सर्वमलङ्कुर्याद्विचक्षणः ॥ ४
शिवभक्तवचश्शृण्वन् शिवसेवापरायणः । आचरेदेवमनिशं चर्यां पापप्रणाशिनीम् ॥ ५
इयञ्चर्येति विख्याता क्रियान्तु समनन्तरा । पञ्चशुद्धिं विधायाग्रे न्यासतर्जनपूर्वकम् । ६

शिवञ्च पूजयेत्पश्चादग्निकार्यं समापयेत् । क्रियामप्येवमखिलां निर्वर्त्यैव यथाक्रमम् ॥ ७
योगे युञ्ज्यात्ततः पश्चाच्छैवे सकलपापहे । अष्टाङ्गानि चैतस्य कथितानि महात्मभिः ॥ ८
प्रथमस्तु यमः प्रोक्तो नियमस्तदनन्तरः । आसनञ्च ततः पश्चात् प्राणायामोऽपि कीर्तितः ॥ ९
प्रत्याहारो धारणा च ध्यानञ्चैव समाधिना । अहिंसासत्यमस्तेयं परद्रव्यानपेक्षता ॥ १०
ब्रह्मचर्यममात्सर्यं यमः प्रोक्तो मनीषिभिः । अक्रोधो लब्धसन्तुष्टिः स्नानतर्पणमेव च ॥ ११
आचार्यशिवभक्तानां वाक्यश्रवणमादरात् । शिवपूजासहायश्च दया च नियमः स्मृतः ॥ १२
कृष्णाजिनं वा वैयाघ्रमजिनं वा विशेषतः । अधिष्ठायासनं पद्मं कृत्वाऽन्यद्वा यथेच्छया ॥ १३
स्वशरीरानुकूल्येन प्रागास्यो यो दृढासनः । समचित्तेन मतिमान्योगसिद्धिं विचारयन् ॥ १४
पूरयेद्वायुमिड(ळ)या मात्रा षोडशिकं द्विजाः । कुंभयेच्च चतुष्षष्टिमात्राकालं विशेषतः ॥ १५
मात्रा द्वात्रिंशता वायुं दक्षिणेन विरेचयेत् । एवं दक्षिणमार्गेण पूरयन् कुम्भयेत्तथा ॥ १६
वामतो निस्सरेद्वायुं क्रमेण विधिपूर्वकम् । प्राणायामोऽयमुद्दिष्टस्स द्विधा भिद्यते द्विजाः ॥ १७
सगर्भः प्रथमः ख्यातस्तथाऽगर्भोऽपि चापरः । जपध्यानसमायुक्तस्सगर्भ इति कथ्यते ॥ १८
अगर्भः केवलः ख्यातः प्राणायामो महीसुराः । जप्या पञ्चाक्षरी ब्रह्मक्षत्रविड्भिस्सतारका ॥ १९
शूद्रैः प्रणवनिर्मुक्ता जप्या खलु महीसुराः । तिक्ताम्लमधुरद्रव्याण्यलाबूकमपि त्यजेत् ॥ २०
भुञ्जीयान्मितमेवान्नं क्षीरपक्वं यथाविधि । पिबाञ्च पिबेद्वारि सोष्णं किञ्चिद्यथासुखम् ॥ २१
पञ्चेन्द्रियाणां विजयं प्रत्याहारं वदन्ति हि । धारणा शिवपादाब्जयुगळे चित्तधारणम् ॥ २२
ध्यानं शिवैकविज्ञानं द्विजा हृत्कमले सदा । समाधिर्दार्ढ्यरे सम्यक्सत्यानन्दस्वरूपिणि ॥ २३
साधारणमाधनं त्यक्त्वा विस्मृत्य विषयान् बहून् । महाक्लिष्टं योगमेवमभ्यसेद्यस्तु पण्डितः ॥ २४
सिध्यन्ति सिद्धयस्तस्य चाष्टावपि महात्मनः । अरूपिणमपीशानं सूर्यकोटिसमप्रभम् ॥ २५
हृन्मध्ये पश्यति क्षिप्रं सर्वालङ्कारसंयुतम् । मूर्तानेतान्महेशस्य पञ्चविंशतिकानपि ॥ २६
महाशिवश्च हृदये साक्षात्पश्यति भूसुराः । स्मितहास्याननश्च तथा सञ्जलासमन्वितः ॥ २७
सर्वदा सर्वकार्येषु शिवमेव हृदि स्मरन् । प्रपश्यन्ति ये योगं शिवस्य परमात्मनः ॥ २८
ते [illegible] । निर्दग्धसकलपापौघादङ्कुरविधाः । लभन्ते वाञ्छितं सर्वं देहान्तेच शिवाज्ञया ॥ २९
सारूप्यं यान्ति देवस्य परमानन्दनिर्भरम् । एवं वः कथितं सद्योगमार्गो मया द्विजाः ॥ ३०

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे सप्ताशीतितमोऽध्यायः ॥

---

॥ अथ अष्टाशीतितमोऽध्यायः ॥

पशुपाशपतीनां निरूपणम् ॥

सूतः — अथातस्संप्रवक्ष्यामि शिवज्ञानमनुत्तमम् । यच्छ्रुत्वा मुच्यते पापाद्घोरसंसारसंभयात् ॥ १
ऋषयः — किं तद् ज्ञानमिति प्रोक्तं शिवज्ञानेन किं वद । ज्ञाता वा किं फलं तस्य भवेत्सूत महामते ॥ २
सूतः — पशुपाशपतिज्ञानं यत्तद् ज्ञानमितीरितम् । यदेव मुनिश्रेष्ठैस्तज्ज्ञानमेवेन वर्ण्यते ॥ ३
अज्ञानसंभवं दुःखं ज्ञानेनैव निवर्तते । ज्ञानं शिवपरिच्छित्तिरेव च त्रिविधं मतम् ॥ ४

अजडश्च जडश्चैव नियन्ता च तयोर्द्वयोः । पशुः पाशः पतिश्चेमे वर्ण्यन्ते ब्रह्मवादिभिः ॥ ५
अजडो यः पशुः प्रोक्तस्तेऽक्षरः परिकीर्तितः । पाशः प्रोक्तो जडो योऽयं स क्षरः परिकीर्तितः ॥ ६
क्षराक्षरपरश्शंभुस्त्रयोऽप्येतेह्यनादयः । योऽक्षरः पशुरित्युक्तः स एव पुरुषः स्मृतः ॥ ७
क्षरात्मकस्तु यः पाशः प्रकृतिस्सा निगद्यते । क्षराक्षरपरो यस्तु तयोः प्रेरकईश्वरः ॥ ८
मुनयः — एतांश्चैव वयं विद्मः पृथक्पृथगसङ्करम् । ब्रूहि सूत महाबुद्धे यथैतान्विद्महे वयम् ॥ ९
स्वरूपञ्चापि चैतेषां क्रियाश्च वद तत्त्वतः । सूतः — माया प्रकृतिरुद्दिष्टा शक्तिर्माहेश्वरी जडा ॥ १०
नवित्सापरमाकाशे विलसन्ती शिवाश्रया । पुरुषस्त्वावृतो जीवो मायया जडरूपया ॥ ११
स्वरूपावरणं प्रोक्तं मलशब्देन सूरिभिः । आवृतोऽसौ मलेनैव भुङ्क्ते कर्मफलं स्वकम् ॥ १२
कर्मैव हेतुर्भोगार्थं निवृत्तिस्तु मलक्षयात् । पुण्यपापात्मकं कर्म सुखदुःखफलञ्च तत् ॥ १३
तदीयानुभवो भोगश्शरीरं भोगसाधनम् । बाह्यान्तः करणद्वारा भोक्ता पशुरुदाहृतः ॥ १४
नैवास्य भविता कश्चिन्नासौ भवति कस्यचित् । पथिसङ्गम एवायं दारैः पुत्रैश्च बन्धुभिः ॥ १५
छादितश्च वियुक्तश्च शरीरैरेव लक्ष्यते । चन्द्रबिम्बवदाकाशे तरलैरभ्रसञ्चयैः ॥ १६
अनागता अतीताश्च तनवोऽस्य सहस्रशः । यथा वासांसि जीर्णानि विहाय दधते जनाः ॥ १७
एवं शरीराण्यप्यात्मा चादत्ते नूतनं पुनः । आमोक्षं संसरत्येव मत्स्यः कूलद्वयं यथा ॥ १८
स्वर्गपातालभूलोकेष्वात्मकर्मवशादसौ । असौ बद्धः पशुः पाशैस्सुखदुःखाशनः पशुः ॥ १९
ईशलीलाविनोदार्थमिति शास्त्रस्य निर्णयः । पिपीलिकान्ता ब्रह्माद्याः पशवः परिकीर्तिताः ॥ २०
पशूनामेव सर्वेषां प्रोक्तमेतन्निदर्शनम् । ऋषयः — या सा प्रकृतिरुद्दिष्टा त्वया मायेति चाधुना ॥ २१
तस्या वद स्वरूपं नस्तत्कार्यञ्च महामते । सूतः — यैषा प्रकृतिराख्याता सा महेशाश्रया पुनः ॥ २२
पशूनामपि सर्वेषां मायाशब्देन शब्द्यते । साऽव्यक्तं प्रकृतिर्माया प्रधानमिति नामभिः ॥ २३
कथिता सा ह्युपादानं कारणञ्चाखिलात्मनाम् । कालतस्त्वभिव्यक्तमनभिव्यक्तलक्षणम् ॥ २४
सुखदुःखविमोहात्मा भिद्यतेव गुणस्त्रिधा । सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥ २५
तन्मात्रपञ्चकञ्चैव भूतपञ्चकमेव च । ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ॥ २६
मनोबुद्धिरहङ्कारश्चित्तञ्चेति चतुष्टयम् । समासादेवमव्यक्तं सविकारमुदाहृतम् ॥ २७
तत्कारणदशापन्नमव्यक्तमिति कथ्यते । व्यक्तं कार्यदशापन्नं शरीरादि घटादिव ॥ २८
व्यक्तमेतच्छरीरादि नाव्यक्तादतिरिच्यते । तस्मादव्यक्तमेवैकं कारणं करणानि च ॥ २९
शरीरञ्च तदाधारं तद्भोग्यञ्चापि नेतरत् । एभिरावृतमात्मानं मायया मोहिता बुधाः ॥ ३०
एतान्येव प्रशंसन्ति पशून् ब्रह्मादिकानपि । ब्रह्माऽहं ब्राह्मणश्चाहं काणश्च बधिरः कविः ॥ ३१
श्यामोऽहमपि रक्तोऽहं कृशोऽहं मूक एव च । एभ्यो विलक्षणो ह्यात्मा पश्यन्नेतान् स्वलीलया ॥ ३२
अस्मदीयं शरीरं हि शरीरं नाहमित्यपि । अज्ञान्येतानि सर्वाणि न पश्यन्ति शरीरिणाम् ॥ ३३
तच्च तानिव देवेशः पश्यत्येव न तं पुनः । तानि जीवोऽपि सर्वत्र परिपूर्णमपीश्वरम् ॥ ३४
यदा पश्यति देवेशं नियन्तारं हिरण्मयम् । विधूय पुण्यं पापञ्च तदैवैति तदैक्यताम् ॥ ३५

इति श्री स्कान्दे महापुराणे शंकरसंहितायां शिवरहस्यखण्डे
उपदेशकाण्डे अष्टाशीतितमोऽध्यायः ॥

---

## ॥ अथ एकोननवतितमोऽध्यायः ॥

### श्रीपरमेश्वरस्य पतित्वनिरूपणम् ॥

सूतः —

य एव जीव आख्यातः परतन्त्रः पशुः स्मृतः । स तु देहे स्थितो देही शिवेन समधिष्ठितः ॥ १
अवस्थापञ्चकं तस्य कथितं वेदवादिभिः । अनन्तावैत आत्मानस्संसारवशवर्तिनः ॥ २
केवलावस्थास्ततः केचित्सकलाश्शुद्धसंज्ञिताः । तेषु स्यात्परमेशोऽयमुज्जिहीर्षुः कृपावशात् ॥ ३
तस्मिञ्छक्तिर्निपतति साधुकर्म करोति सः । तद्वशात्सतु निष्ठावाञ्छिववशाल्लोकवर्त्मसु ॥ ४
तन्निष्ठस्तत्परो भूत्वा शिवे लीनमनास्सदा । मध्ये मध्ये यदा चित्तं शिवात्पृथगसौ तदा ॥ ५
शिवालयदिदृक्षार्थं विहरत्येव नैष्ठिकः । करोतिच महेशस्य कैङ्कर्यादिकमप्यसौ ॥ ६
लिङ्गार्चामपि देवस्य करोति बहुविस्तराम् । शिवभक्तान् संयतात्मा तर्पयत्येव भूरिशः ॥ ७
सततं भस्मरुद्राक्षमालालङ्कृतविग्रहः । पञ्चाक्षरीजपासक्तस्सर्वप्राण्यभयप्रदः ॥ ८
विहरत्येव निष्ठावाञ्जीवन्मुक्तस्स ईरितः । एष ज्ञानी विरक्तश्च मतिमान् लोकपूजितः ॥ ९
नानेन सदृशः कश्चित् त्रिषु लोकेषु विद्यते । एतस्य पूजनादेव पूजितः परमेश्वरः ॥ १०
अस्याज्ञा शिवाज्ञा सत्यमेव न संशयः । अस्य जिह्वाप्रमास्थाय भुङ्क्ते देवः स्वयं शिवः ॥ ११
अस्य दृष्टिं गतास्सर्वे मुक्तपाप्मान एव ते । तस्मात् ज्ञानेन वै मुक्तिरित्यलं सत्यं मुनीश्वराः ॥ १२
त्रिलोक्यां ज्ञाननिष्ठस्य दुर्लभञ्च न विद्यते । ऋषयः — पशुपाशौ श्रुतौ विद्वन् पतिं नो वद सांप्रतम् ॥ १३
यत् ज्ञात्वा न पुनर्जन्म लभते मानवो भुवि । सूतः — हन्त वस्संप्रवक्ष्यामि देवदेवस्य वैभवम् ॥ १४
यस्य श्रवणमात्रेण कृतार्थः पुरुषो भवेत् । अस्ति कश्चिन्मुनिश्रेष्ठा भुवि विश्वाधिकश्शिवः ॥ १५
अनन्तमहिमाधारः कल्याणगुणसागरः । संसृज्य विश्वमादौ तल्लोकान्ते सञ्चुकोच सः ॥ १६
विश्वतश्चक्षुरेवायमुतायं विश्वतोमुखः । तथैव विश्वतो हस्तो विश्वतः पादसंयुतः ॥ १७
सर्वज्ञः सर्वकर्ताच सच्चिदानन्दविग्रहः । परिपूर्णः परञ्ज्योतिः पशुपाशविमोचकः ॥ १८
अनादिमलनिर्मुक्तो विभुर्व्यापी सनातनः । निष्कलस्सकलश्चायं सकलङ्क इतीरितः ॥ १९
स क्रियोपाधिभेदेन भिद्यतेऽनेकधा विभुः । शिवोऽमूर्तिश्च मूर्तिश्च कर्ताकर्माश्रयोऽपरः ॥ २०
त इमे पञ्चसादाख्याः परमेश्वरसंभवाः । स पुनर्विद्यते पञ्चब्रह्मणामाच षडङ्गवान् ॥ २१
सदाशिवोऽयमपरो महानपि सदाशिवः । पञ्चविंशति सङ्ख्याका मूर्तयोऽस्य प्रकीर्तिताः ॥ २२
करोति पञ्चकृत्यानि सर्वदाऽयं महेश्वरः । सृष्ट्याख्यं प्रथमं कृत्यं द्वितीयं तस्य रक्षणम् ॥ २३
तृतीयं तथा संहारस्तिरोभावश्चतुर्थकः । पञ्चमोऽनुग्रहः प्रोक्तः पञ्चकृत्यानि धूर्जटेः ॥ २४
स एवैकः परं ब्रह्म तदन्ये पशवः स्मृताः । बध्या सर्वानिमान् पाशैः शरीरकरणादिभिः ॥ २५
क्रीडत्येव सदा शंभुस्सर्वज्ञत्वादिशक्तिमान् । लीलासाधनभूतास्ते ब्रह्माद्याः पशवः प्रभोः ॥ २६
सर्वेशोऽयमतश्शंभुस्तदनुग्रहवाञ्छिति च । इतो यतस्सदादेवस्सर्वानुग्राहकः स्मृतः ॥ २७
योघोऽनादिः परोऽस्येति मोहकस्सकलात्मनाम् । स्वतन्त्रशक्तिर्देवेशः पशून्मोचयति प्रभुः ॥ २८
अलुप्तशक्तिमान्यस्मात्पञ्चकृत्यपरस्सदा । अनन्तादाकयोश्चेति निमित्तमखिलात्मनाम् ॥ २९
एवं षडङ्गवान् पञ्चब्रह्मरूपी सदाशिवः । ज्ञेयः पशुपतिः सर्वैः पशुपाशविलक्षणः ॥ ३०
अस्य ज्ञानेन सर्वेषां पन्थमुक्तिर्नचान्यथा । अमुं ज्ञात्वा शिवं शान्तिमेति शोकं तरत्यपि ॥ ३१

